# GRIHYA-SÛTRA

BY

## PÂRASKAR

WITH FIVE COMMENTARIES OF KARKA UPÂDHYÂYA, JAYARÂM, HARIHAR, GADÂDHAR AND VISHVANÂTH

AS WELL AS APPENDICES CALLED VÂPYÂDI-PRATISHTHÂ KANDIKÂ WITH KÂMDEVA BHÂSHYA, SHOWCHA SÛTRA, SNÂNA SÛTRA WITH HARIHAR BHÂSHYA, AND SHRÂDHA SÛTRA WITH THREE COMMENTARIES BY KARKA, GADÂDHARA AND SHRÂDHA KÂSHIKA BY KRISHNAMISHRA AND BHOJANA SÛTRA

EDITED BY

MAHÂDEVA GANGÂDHAR BÂKRE

Printed and published by Manilal Itcharam Desai at
THE GUJARATI PRINTING PRESS,
SASSOON BUILDINGS, CIRCLE, FORT,
BOMBAY

1917





# पारस्करगृह्यसूत्रम्

श्रीकर्कोपाध्याय-जयराम-हरिहर-गदाधर-विश्वनाथ-
प्रणीत-भाष्यपञ्चकसमलंकृतम्

कामदेवभाष्यसहितवाप्यादिप्रतिष्ठाकण्डिका-शौचसूत्र-हरिहरभाष्योपेत-
स्नानसूत्र-कर्क-गदाधरकृतभाष्य-कृष्णमिश्रकृतश्राद्धकाशिकोपेत-
श्राद्धसूत्र-भोजनसूत्ररूपपरिशिष्टसहितं च

बाक्रे इत्युपाह्वगङ्गाधरभट्टसुतमहादेवशर्मणा संस्कृतम्


मुंबय्यां

'गुजराती' मुद्रणालयाधिपतिना मणिलाल इच्छाराम देशाई इत्यनेन
स्वीये मुद्रणालये मुद्रयित्वा प्रकाशितम्

विक्रमाब्द. १९७३ | खिस्ताब्दः १९१७

REVISED PRICE
સુધારેલી કિંમત

मूल्यं सार्धरूप्यकपञ्चकम्






ॐनमः श्रीसद्गुरुचरणारविन्दाभ्याम् ।

## नमोभगवते कात्यायनाय

अथ पारस्करगृह्यसूत्रं भाष्यपञ्चकसमेतं मुद्रयित्वा प्रकाश्यते ।

यद्यपि गृह्यसूत्रमिति समाख्यया गृह्याग्निमात्रसाध्यकर्मप्रतिपादकत्वमस्य ग्रन्थस्य प्रतीयते ापि प्राणभृन्न्यायेन गृह्यपदस्यात्र त्रेताग्निसाध्यसंस्कारातिरिक्तसंस्कारपरतया तादृशकर्मप्रतिपाद- ्मवसेयम् । पारस्कर इति भगवतः कात्यायनस्यैवाभिधानान्तरम् ।

अस्य सूत्रस्य सन्ति भूयांसि भाष्याणीति शृणुमः । तत्र कर्क–जयराम–हरिहर–गदाधर– ानि भाष्याणि पूर्वं मुद्रितान्यपि संप्रति चिक्रीषद्भिर्दुरवापाणीति तन्मुद्रणं समीहमानैरस्माभि- श्वनाथभाष्यमप्यधिकं संपाद्य तेन सहैव तानि मुद्रितानि ।

अत्र कर्काचार्यकृतभाष्यमुपजीव्यैव जयरामादयो व्याचख्युरिदं सूत्रमधिकविवक्षया । तत्रापि ्रामः—मन्त्रान्व्यवृणोत् । हरिहरः—पद्धतिं तदपेक्षितं चान्यदप्युक्तवान् । गदाधरस्तु—मन्त्रा- ्याचष्ट, पद्धतिमदर्शयत्, प्रसङ्गाज्ज्योतिःशास्त्रानुसारेण तत्तत्कर्मणि शुभाशुभविहितप्रतिषिद्धादि- ानवर्णयत्, ग्रन्थान्तरेषूक्तानि नैमित्तिकानि कर्माणि यथाप्रसङ्गं न्यवभ्नात्, यथा—विवाह- ्ङ्गेनार्कविवाहं, चतुर्थीकर्मप्रसंगेन रजोदर्शनशान्त्यादिकं, सोष्यन्तीकर्मप्रसंगेन यमलजनन–त्रिक- व–मूलजननशान्त्यादिकं प्रथममूर्ध्वदन्तजननशान्त्यादिकं चेत्यादि । विश्वनाथश्च—प्रायो योपन्यासेन व्याचक्षाणः परमतं निराकरोत्, यत्र च विशेषमैच्छत्तत्र प्रयोगमपि दर्शयतिस्म । ।गः पद्धतिः पदार्थक्रमश्चेत्यनर्थान्तरम् ।

अत्र परिशिष्टेषु श्राद्धसूत्रे पूर्वममुद्रितां काशिकाख्यां विवृतिमतिविस्तृतामूहापोहविपुलाम- ां न्यवेशयम् । अस्या एकस्यैवाशुद्धिप्रचुरस्य कोशस्य लाभादशुद्धिसमवस्थितिरपरिहार्याऽभूत् । ीयमुद्रणावसरे विद्वद्भिः पुस्तकदानेन कृतसाहाय्यः शोधयिष्य इत्याशासे ।

अस्य पुस्तकस्य मुद्रणावसरे विश्वनाथभाष्यं प्रथमकाण्डस्य द्वादश्यां कण्डिकायां मुद्र्यमाणायां हरभाष्यं चाल्पावशिष्टमुद्रणे तृतीयकाण्डे–नडियादपुरे श्रीमन्मनःसुखरामस्थापित–श्रीडाह्री- ीपुस्तकालयस्थ–भाइलालशास्त्रिसमर्पितहस्तलिखितपुस्तककोशादानीय तव्द्यवस्थापकेन तनसुख- र्मणा दत्तमिति तदुपकारान्मुहुर्मुहुः स्मरामीति निवेदयति—

गुजरातीमुद्रणालयाधिपतिना संस्कृतपुस्तकमुद्रणे नियुक्तः

**बाक्रे इत्युपाह्वो गंगाधरभट्टसुतो महादेवशर्मा ।**

॥ श्री ॥

# पारस्करगृह्यसूत्रस्थविषयाणामनुक्रमणिका.

इति गृह्यसूत्रस्थविषयाणामनुक्रमणिका ॥ ३ ॥

## परिशिष्टानुक्रमणिका.

॥ श्रीः ॥

# पारस्करगृह्यसूत्रम् ।

कर्कोपाध्याय–जयराम–हरिहर–गदाधर–विश्वनाथप्रणीतभाष्य-
पञ्चकसमलंकृतम् ।

॥ श्रीगणेशाय नमः ॥

अथातो गृह्यस्थालीपाकानां कर्म ॥१॥ परिसमुह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य प्रणीय परिस्तीर्यार्थवदासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्यार्थवत्प्रोक्ष्य निरुप्याज्यमधिश्रित्य पर्यग्नि कुर्यात् ॥ २ ॥ स्रुवं प्रतप्य सम्मृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात् ॥ ३ ॥ आज्यमुद्वास्योत्पूयावेक्ष्य प्रोक्षणीश्च पूर्ववदुपयमनान्कुशानादाय समिधोऽभ्याधाय पर्युक्ष्य जुहुयात् ॥ ४ ॥ एष एव विधिर्यत्र क्वचिद्धोमः ॥ ५ ॥ ॥ १ ॥

## ( १ ) कर्कोपाध्यायप्रणीतपारस्करकृतस्मार्तसूत्रव्याख्या ।

पारस्करकृतस्मार्तसूत्रव्याख्या गुरूक्तितः ।
कर्कोपाध्यायकेनेयं तेने नत्वा जगद्गुरुम् ॥ १ ॥

श्रौतान्याधानादीनि कर्माण्युक्तानि तदनन्तरं स्मार्तान्यनुविधीयन्ते तत्रैतदादिमं सूत्रम्—'अथातो गृह्यस्थालीपाकानां कर्मेति' व्याख्यास्यत इति सूत्रशेषः । तत्रायमथशब्द आनन्तर्ये द्रष्टव्यः श्रौतानुविधानानन्तरं स्मार्तान्यनुविधीयन्त इति, आनन्तर्यप्रज्ञप्तिप्रयोजनं श्रौतेष्वधिकाराद्युपस्पृशेदप इत्येवमन्तं सर्वकर्मसाधारणं यत्तस्यात्रापि प्रवृत्तिर्यथा स्यादिति । पूर्वं प्रवृत्तं श्रौतानामुपनिबन्धनमित्येतत्सूत्रकारप्रवृत्त्या ज्ञायते—प्रोष्येत्य गृहानुपतिष्ठते पूर्ववदिति । श्रौतेषु गृहोपस्थानं विहितं तत्पूर्ववदित्यनेनातिदिश्यते, तथा प्रोक्षणीश्च पूर्ववदिति । अतःशब्दो हेत्वर्थः । यस्माच्छ्रौतान्यभिहितानि स्मार्तान्येवानुशिष्यन्ते अतस्तानि वक्तव्यानीति । ननु च पूर्वं स्मार्तानां गर्भाधानादीनामनुष्ठानं पश्चाच्छ्रौतानामित्यतोऽनुष्ठानक्रमेण स्मार्तान्येव पूर्वमभिधेयानीति । अत्रोच्यते, नैतदेवम् प्रत्यक्षश्रुतित्वात् । प्रत्यक्षा हि श्रुतयः श्रौतेषु, स्मार्तेषु च पुनः कर्तृसामान्यादनुमेयाः श्रुतयः । स्मार्तानामपि हि वेदमूलत्वमुक्तं तस्मात्प्रत्यक्षश्रवणात्तान्येव पूर्वमभिधीयन्ते न गर्भाधानादीनि । अपरे त्वन्यथा वर्णयन्ति, स्मरणादेव स्मृतीनां प्रामाण्यम् अव्यवच्छिन्नं हि स्मरणमष्टकादीनामष्टकाः कर्तव्या इति । अनादिरयं संसारः । स्मरणमप्येषामनाद्येवेति । ननु चोक्तमापस्तम्बेन तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्त इत्यतो वेदमूलकत्वम् । नैतदेवम् । शाखानां सतीनामुत्सादो भवति नासतीनाम्, तत्रायं दोषः स्यात्—य एव कश्चित्काञ्चिच्छाखां न पठति तस्यैतद्विहितं स्मार्तं स्यात्, यस्तु पुनः

पठेत्तस्य श्रौतमिति । तत्र पुरुषापेक्षया तदेव श्रौतं स्मार्तं चेत्ययुक्तरूपता स्यात् । स्मरणात्स्मृतिरिति चान्वर्थिकी संज्ञा, युक्तकर्मानुष्ठानं स्मरणं मनुगौतमवसिष्ठापस्तम्बादिभिर्ग्रन्थेनोपनिबद्धम् । तस्मात्कर्तृसामान्यादनुष्ठेयोऽयमर्थ इत्यनुमीयते । तथाच लिङ्गम् । नैमित्तिकं व्याहृतिहोमं प्रकृत्यामनन्ति, यद्यृक्तो भूरिति चतुर्गृहीतमाज्यं गृहीत्वा गार्हपत्ये जुहवथ, यदि यजुष्टो भुव इत्याग्नीध्रीये अन्वाहार्यपचने वा हविर्यज्ञे, यदि सामतः स्वरित्याहवनीय इति प्रकृत्याह यद्यविज्ञातं तत्सर्वाण्यनुद्रुत्याहवनीये जुहवथेति । अविज्ञातं च यत्र विज्ञायते किमार्ग्वेदिकं याजुर्वेदिकं सामवेदिकं वेति विनष्टं कर्म तत्स्मार्तमविज्ञातमित्युच्यते । वेदमूलत्वे ह्यवश्यमेवान्विष्यमाणं ज्ञायेत तत्किंमूलमिति, तस्मात्स्मृतिप्रवाहादेवायमर्थोऽनुष्ठेय इति गम्यते । 'गृह्यस्थालीपाकानां कर्मेति' गृह्यः शालाग्निः आवसथ्य औपासन इत्यनर्थान्तरं, तत्र ये स्थालीपाकाः ते गृह्यस्थालीपाकाः, स्थालीपाकग्रहणं चाज्यपुरोडाशधानासक्त्वाद्युपलक्षणार्थम् । कथं ज्ञायते । येन स्थालीपाकमुपक्रम्याज्यमुपसंहरति निरुप्याज्यमधिश्रित्येत्येवमादि । आज्यग्रहणमपि स्थालीपाकाद्युपलक्षणार्थमेव । सर्वेषामेवेदं साधारणं कर्मोच्यते । नह्यत्र प्रकृतिविकारभाव इति । विध्यादिविध्यन्तवती प्रकृतिरित्युच्यते, यत्र पुनर्विध्यादिमात्रं विध्यन्तो नास्ति सा विकृतिरिति । न चात्र विध्यादिविध्यन्तस्वरूपता, सर्वाण्येव स्थालीपाकादीनि प्रकृत्य धर्मविधानम् । 'परिसमुह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधायेत्येवमादि पर्यग्निकुर्यादित्येवमन्तं सूत्रम्' परिसमूहनादयः पञ्च पदार्था भूमिशुद्ध्यर्था इति केचित् । तदयुक्तम् । नह्यशुद्धे देशेऽग्नेः स्थापनप्रवृत्तिर्युक्तेति, तस्मादग्न्यर्था एव । यत्र यत्राग्नेः स्थापनं तत्र तत्रैते कर्तव्या इति । न च गृह्यस्थालीपाकादिकर्मान्तर्भाव एषाम्, येनैष एव विधिर्यत्र क्वचिद्धोम इत्यभिहितेऽपि पुनरभिधीयते उपलिप्त उद्धतावोक्षितेऽग्निमुपसमाधायेति । नूनमनेनाप्रवृत्तिस्तत्रेति । तस्मादग्न्यर्था एवैत इति । तथाच लिङ्गम् । उद्धते वा अवोक्षितेऽग्निमादधातीति । प्रयोजन स्वस्थानस्थित एवाग्नौ क्रियमाणे स्थालीपाकादौ न क्रियन्ते । 'दक्षिणतो ब्रह्मासनमास्तीर्य' इत्यासनमात्रं स्यात् न ब्रह्मा, आस्तरणमात्रोपदेशात् क्वचिन्नोपवेशनविधानाद्दक्षिणतो ब्रह्माणमुपवेश्येति । नैतत्, अदृष्टप्रसङ्गात्—नह्यदृष्टाय कश्चिदासनप्रकल्पनं कुर्यात्—ब्रह्मासनव्यपदेशानुपपत्तेश्च, तस्मादुपवेशनार्थमास्तरणम् । यत्तूक्तं दक्षिणतो ब्रह्माणमुपवेश्येति तदुदपात्रावसरविवित्सया प्रस्तुतब्रह्मोपवेशनज्ञापकम्, ब्रह्मासनं चास्तीर्य कर्तव्यम् । 'प्रणीय' अपः, अपां हि प्रणयनं सर्वार्थं दृष्टम्, इहापि तद्वत्सर्वार्थानामपां प्रणयनम् । 'परिस्तीर्य' अग्निम् । 'अर्थवदासाद्येति' प्रयोजनवत्पात्रजातमासादयतीत्यर्थः । तच्च कार्यक्रमेण मुख्यक्रमानुग्रहात् । 'पवित्रे कृत्वा' यथा प्रदेशान्तरे कृते इति । 'प्रोक्षणीः संस्कृत्य' उत्पवनोदिङ्गनादिना । 'अर्थवत्प्रोक्ष्य' कार्यवतः प्रोक्षणम् । 'निरुप्याज्यमधिश्रित्य' आज्यनिर्वाप औपचिकत्य पृथक्क्रिया । अधिश्रित्य अग्नौ । 'पर्यग्नि कुर्यात्' आज्यं स्थालीपाकं चेति । उपलक्षणार्थत्वादाज्यस्य । 'स्रुवं प्रतप्य' तापयित्वा । तमेव दर्भैः 'सम्मृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात् । आज्यमुद्वास्य' अग्नेः सकाशात् । 'उत्पूय' पवित्राभ्यां तदेवाज्यम् । 'अवेक्ष्य प्रोक्षणीश्च पूर्ववत्' चशब्दादाज्यं पूर्ववदेव, अत. पवित्राभ्यामित्युक्तम् । प्रोक्षणीसंस्कारश्च पर्युक्षणार्थः । स्रुवस्यापि संस्कारो होमार्थः तत्संस्कारस्यादृष्टार्थता माभूदिति । 'उपयमनान्कुशानादाय समिधोऽभ्याधायेति' उपयमना उपग्रहार्थीया दर्भाः । 'पर्युक्ष्य जुहुयात्' पर्युक्षणं प्रोक्षणीभिरित्युक्तम् । 'एष एव विधिर्यत्र क्वचिद्धोम इति ।' एष विधिरेव न मन्त्राः समाम्नायाभावात् । यत्र कचिद्धोमः शान्तिकपौष्टिकादिष्वपीति, क्वचिच्छब्दश्च गृह्याग्निव्यतिरेकेणापि यथाऽयं विधिः स्यादिति । यथा दावाग्निमुपसमाधाय घृताक्तानि कुशेण्ड्वानि जुहुयादिति ॥ १ ॥

## (२) जयरामकृतं सज्जनवल्लभाख्यं गृह्यविवरणम् ।

श्रीमत्केशववाग्गणाधिपपदद्वन्द्वप्रभाभासुर-
स्वान्तोत्साहविजृम्भितामलमतिप्राह्ये च गृह्ये कृतेः ।
दृष्ट्वा कर्कमुखैः कृतानि बहुशो भाष्याणि गृह्याणि तद्वे-
शार्थे स्वमतेरिदं जयपरो रामो लिखत्यादरात् ॥ १ ॥
कतिसूनुपदाम्भोजपरागोद्धूसरालकः ।
जयरामश्च मेवाडो भारद्वाजसगोत्रकः ॥ २ ॥
श्रीमन्मान्त्रिकमाधवः श्रुतिसुधासिन्धोर्विगाह्यामृत-
द्वेषस्तत्कृपयाऽभवद् द्विजवरः श्रीकेशवस्तादृशः ।
तत्पादद्वयकस्पृशा कृतमिदं कातीयगृह्यस्य स-
द्भाष्यं सज्जनवल्लभं सुविदुषां प्रेष्ठं शिवप्रीतये ॥ ३ ॥
आचार्योपरनामधेय इति यो दामोदरोऽभूद् द्विजो
भारद्वाजसगोत्र आत्मरतिरस्याप्यात्मजस्तादृशः ।
नाम्ना श्रीबलभद्र आत्तसुयशास्तत्सूनुनैतत्कृतं
भाष्यं सज्जनवल्लभं जययुजा रामेण मत्याप्तये ॥ ४ ॥
पाठे योऽभूद्विसंवादो गृह्यसूत्रे समन्त्रके ।
उपेक्षितः स विदुषां मतमाज्ञाय युक्तितः ॥ ५ ॥
प्रयुक्ता अन्यथा मन्त्रा न भवन्त्यर्थसाधकाः ।
संसाधयन्ति सर्वार्थान्यथावत्पठिता यदि ॥ ६ ॥
नानाशाखीयमन्त्राणां पाठशुद्धौ स्वपाठकाः ।
व्याख्यातारः प्रमाणं स्युरित्येतच्छिष्टनिश्चयः ॥ ७ ॥
अतस्तत्तत्स्वशाखीयमन्त्राणामध्यपाठकात् ।
पृष्ट्वा सुबोधं गृह्यस्य भाष्यं वै लिख्यते स्फुटम् ॥ ८ ॥
तत्क्षन्तव्यं सुनिपुणैः स्वबालचापलं यथा ।
मया च स्वीयबोधाय क्रियते न तु तद्विदाम् ॥ ९ ॥

आदौ तावत्सूत्रकृता श्रौतान्याधानादिकर्माण्युक्तानि स्मार्तानि चाभिधीयन्ते । तत्रैतदादिमं सूत्रम्—'अथातो गृह्यस्थालीपाकानां कर्मेति' वक्ष्यत इति सूत्रशेषः । तत्रायमथशब्द आनन्तर्ये । श्रौतानुविधानानन्तरं स्मार्तान्यनुविधीयन्त इति ॥ आनन्तर्यप्रज्ञप्तिप्रयोजनञ्च श्रौतेष्वधिकाराद्युप-स्पृशेदप इत्येवमन्तं सर्वकर्मसाधारणं यत्तस्यात्रापि प्रवृत्तिर्यथा स्यादिति ॥ पूर्वं श्रौतानामुपनिबन्धनं प्रवृत्तमित्येतत्सूत्रकारप्रवृत्त्या ज्ञायते—प्रोष्येत्य गृहानुपतिष्ठते पूर्ववदिति । श्रौतेषु गृहोपस्थान-मुक्तं तत्पूर्ववदित्यनेनात्रातिदिश्यते, तथा प्रोक्षणीश्च पूर्ववदिति । अतःशब्दो हेत्वर्थः ॥ यस्माच्छ्रौ-तान्युक्तानि स्मार्तान्येवावशिष्यन्ते, अतस्तानि वक्तव्यानीति । ननु पूर्वं स्मार्तानां गर्भाधाना-दीनामनुष्ठानं पश्चाच्छ्रौतानामित्यतोऽनुष्ठानक्रमेण स्मार्तान्यादौ वक्तव्यानि । तन्न, प्रत्यक्षश्रुति-त्वात् । प्रत्यक्षा हि श्रुतयोऽनुमेयाभ्यो बलीयस्य इति । श्रौतेषु च प्रत्यक्षाः श्रुतयः, स्मार्तेषु तु कर्तृसामान्यादनुमेया इति । स्मार्तानामपि वेदमूलकत्वमुक्तं भट्टैः । तस्मात्प्रत्यक्षश्रवणाच्छ्रौतान्येव पूर्वमेवानुविहितानीति । केचित्पुनरन्यथा वर्णयन्ति स्मरणादेव स्मृतीनां प्रामाण्यम्, अन्यत्रच्छिन्नं

हि स्मरणमष्टकादीनामष्टकाः कर्तव्या इति । अनादिरयं संसारः स्मरणमप्येषामनाद्येवेति । ननु चोक्तमापस्तम्बेन तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्त इति तस्माद्वेदमूलकत्वम् । नैतदेवम् । शाखानामुत्सादस्तु सतीनामेव भवति नासतीनाम् । तत्र चायं दोषः स्यात् य एव कश्चित्काश्चिच्छाखां न पठति तस्यैतद्विहितं स्मार्तं स्यात् यस्तु पठेत्तस्य श्रौतमिति । तत्र पुरुषापेक्षया तदेव श्रौतं स्मार्तं चेत्ययुक्तरूपता स्यात्, स्मरणात्स्मृतिरिति संज्ञा चान्वर्थिकी, युक्तकर्मानुष्ठानञ्च स्मरणं मनुगौतमवसिष्ठापस्तम्बादिभिर्ग्रन्थेनोपनिबद्धम्, तस्मात्कर्तृसामान्यादनुष्ठेयोऽयमर्थ इत्यनुमीयते । तथा च लिङ्गम्, नैमित्तिकं व्याहृतिहोमं प्रकृत्यामनन्ति, यदृक्तो भूरिति चतुर्गृहीतमाज्यं गृहीत्वा गार्हपत्ये जुहवथ, यदि यजुष्टो भुव इत्याग्नीध्रीये अन्वाहार्यपचने वा हविर्यज्ञे यदि सामतः स्वरित्याहवनीय इति प्रकृत्याह—यद्यविज्ञातमसत्सर्वाणि अनुद्रुत्याहवनीये जुहवथेति । अविज्ञातं च यन्न ज्ञायते किमार्ग्वेदिकम् किंवा याजुर्वेदिकम् सामवेदिकं वेति विनष्टञ्च यत्तत् स्मार्तमविज्ञातमित्युच्यते । वेदमूलकत्वे ह्यवश्यमेवान्विष्यमाणं ज्ञायेत तत्किम्मूलमिति, तस्मात्स्मृतिप्रवाहादेवायमर्थोऽनुष्ठेय इति गम्यते इति । श्रौतस्मार्तत्वचिन्ताप्रयोजनं नित्यत्वादिज्ञापनार्थम्, श्रौतन्नित्यङ्काम्यं स्मार्तञ्च नित्यमिति । 'गृह्यस्थालीपाकानामिति' गृह्यः शालाग्निः आवसथ्याग्निः औपासन इति नार्थान्तरम् । तत्र ये स्थालीपाकाः स्थालीपाकग्रहणञ्चाज्यपुरोडाशधानासक्त्वाद्युपलक्षणार्थम् । यतः स्थालीपाकमुपक्रम्याज्यमुपसंहरति 'निरुप्याज्यमधिश्रित्य' इति । एवमाज्यग्रहणमपि स्थालीपाकाद्युपलक्षणम्, यतः सर्वेषामेवेदं साधारणङ्कर्मोच्यते नह्यत्र प्रकृतिविकृतिभाव इति । विध्यादिविध्यन्तवती प्रकृतिः । यत्र पुनर्विध्यादिमात्रं विध्यन्तस्तु नास्ति सा विकृतिरिति । न चात्र विध्यादिविध्यन्तस्वरूपता, यतः सर्वाण्येव स्थालीपाकादीनि प्रकृत्य धर्मविधानम् । 'परिसमुह्य' इत्यादि सूत्रम् । तत्र परिसमूहनादयः पञ्च पदार्था भूमिशुद्ध्यर्था इति केचित् । तदयुक्तम् । नह्यशुद्धे देशेऽग्निस्थापनप्रवृत्तिर्युक्तेति तस्मादग्न्यर्था एवेत्यपरे । अतो यत्र यत्राग्नेः स्थापनन्तत्र तत्रैते कर्तव्याः न च गृह्यस्थालीपाकादिकर्मान्तर्भाव एषाम्, 'यत एष एव विधिर्यत्र क्वचिद्धोम' इत्यभिहिते पुनरभिधीयते—उपलिप्तेउद्धतावोक्षितेऽग्निमुपसमाधायेति । नूनमनेनाप्रवृत्तिस्तत्रैषाम् तस्मादग्न्यर्था एवैत इति । तथा च लिङ्गम्—उद्धते वा अवोक्षितेऽग्निमादधातीति । तत्प्रयोजनञ्च स्वस्थानस्थित एवाग्नौ क्रियमाणे स्थालीपाकादौ नैते क्रियन्त इति । 'दक्षिणतो ब्रह्मासनमास्तीर्य' इत्यासनमात्रं स्यात् न ब्रह्मोपवेशनम्, आस्तरणमात्रोपदेशात् कचिच्चोपवेशनविधानाद्दक्षिणतो ब्रह्माणमुपवेश्येति । तन्न । अदृष्टप्रसङ्गात्,—नह्यदृष्टार्थं कश्चिदासनप्रकल्पनङ्कुर्यात्—ब्रह्मासनव्यपदेशानुपपत्तेश्च, तस्माद्ब्रह्मोपवेशनार्थमास्तरणम् । यत्तूक्तम् दक्षिणतो ब्रह्माणमुपवेश्येति तदुदपात्रस्थापनावसरविधित्सया । प्रस्तुतब्रह्मोपवेशनञ्चास्य ज्ञापकम् ब्रह्मासनमास्तीर्य कर्तव्यम् । 'प्रणीय' किम् अपः । अपां हि प्रणयनं सर्वार्थं दृष्टम् तद्वदिहापि सर्वार्थानामपां प्रणयनम् । 'परिस्तीर्य' किम् अग्निम् । 'अर्थवदासाद्येति' प्रयोजनवत्पात्रजातमासाद्येत्यर्थः । प्रयोजनञ्च कार्यक्रमेण मुख्यक्रमानुरोधात् । 'पवित्रे कृत्वा' यथा प्रदेशान्तरे कृते तथैवेति । 'प्रोक्षणीः संस्कृत्य' उत्पवनोदिङ्गनादिना । 'अर्थवत्प्रोक्ष्य' इत्यनेन कार्यवताम्प्रोक्षणम् ॥ 'निरुप्याज्यमधिश्रित्य' इत्याज्यस्य निर्वाप औपयिकस्य पृथक्क्रिया । 'अधिश्रित्य' अग्नौ । 'पर्यग्नि कुर्यात्' आज्यं स्थालीपाकादि च, उपलक्षणत्वादाज्यस्य । स्रुवं प्रतप्य अधोमुखं तापयित्वा पुष्करतः । तमेव दर्भैः 'संमृज्याभ्युक्ष्य' च पुनः प्रतप्य तथैव निदध्याद्दक्षिणतः । 'आज्यमुद्वास्य' अग्नेः सकाशाच्चरोः पूर्वेण अग्नेरुत्तरतोऽवस्थाप्य तदुत्तरतः स्थालीपाकमपि । तदेवाज्यमुत्पूय पवित्राभ्याम् । अवेक्ष्य अपद्रव्यमपाकर्तुम् । 'प्रोक्षणीश्च' पूर्ववदुत्पूय । चशब्दादाज्यं च पूर्ववत् अतः पवित्राभ्यामित्युक्तम् प्रोक्षणीसंस्कारश्च पर्युक्षणार्थः;

स्रुवसंस्कारश्च होमार्थः, तत्संस्कारस्यादृष्टार्थता माभूदिति । उपयमना उपग्रहणार्थां ये दर्भाः । पर्युक्षणं च प्रोक्षणीभिरित्युक्तम् । 'एष एव विधिरिति' यत्र होमस्तत्रैष विधिरेव न तु मन्त्राः समाम्नायाभावात् । 'यत्र क्वचिद्धोम' इति शान्तिकपौष्टिकादिष्वपि । क्वचिद्ग्रहणञ्च गृह्याग्निव्यतिरेकेणापि यथायं विधिः स्यादिति । यथा दावाग्निमुपसमाधाय घृताक्तानि कुशेण्ड्वानि जुहुयादिति ॥ १ ॥

## ( ३ ) हरिहरविरचितं पारस्करगृह्यसूत्रव्याख्यानम् ।

इष्टापूर्तक्रियासिद्धिहेतुं यज्ञभुजां मुखम् ।
अग्निं त्रयीवचःसारं वन्दे वागधिदैवतम् ॥ १ ॥
पारस्करकृते गृह्यसूत्रे व्याख्यानपूर्विकाम् ।
प्रयोगपद्धतिं कुर्वे वासुदेवादिसंमताम् ॥ २ ॥

'अथातो गृह्यस्थालीपाकानां कर्म' अथ श्रौतकर्मविधानानन्तरम्, यतः श्रौतानि कर्माणि विहितानि स्मार्तानि तु विधेयानि अतो हेतोर्गृह्ये आवसथ्येऽग्नौ ये स्थालीपाकाः गृह्यस्थालीपाकाः तेषां गृह्यस्थालीपाकानां कर्म क्रियाऽनुष्ठानमिति यावत् । वक्ष्यत इति सूत्रशेषः । तत्रादावाधानादिसर्वकर्मणां साधारणो विधिः प्रथमकण्डिकयोच्यते । तत्र गृह्येष्वावसथ्याधानादिषु सर्वकर्मसु यजमान एव कर्ता नान्य ऋत्विक् तस्यानुक्तत्वात् । अथ यजमानः सुस्नातः सुप्रक्षालितपाणिपादः स्वाचान्तः कर्मस्थानमागत्य वारणादियज्ञियवृक्षोद्भवासने प्रागग्रानुदगग्रान्वा त्रीन्कुशान्दत्त्वा प्राङ्मुख उपविश्य वाग्यतः शुद्धायां भूमौ सप्तविंशत्यङ्गुलं मण्डलं परिलिख्य तत्र । 'परिसमुह्य' त्रिभिर्दर्भैः पांसूनपसार्य 'उपलिप्य' गोमयोदकेन त्रिः । 'उल्लिख्य' त्रिः खादिरेण हस्तमात्रेण खड्गाकृतिना स्फ्येन प्रागग्रा उदक्संस्थाः स्थण्डिलपरिमाणास्तिस्रो रेखाः कृत्वा । 'उद्धृत्य' अनामिकाङ्गुष्ठाभ्यां यथोल्लिखिताभ्यो लेखाभ्यः पांसूनुद्धृत्य । 'अभ्युक्ष्य' मणिकाद्भिरभ्युक्ष्याभिषिच्य । 'अग्निमुपसमाधाय' कर्मसाधनभूतं लौकिकं स्मार्तं श्रौतं वाऽग्निम् आत्माभिमुखं स्थापयित्वा । 'दक्षिणतो ब्रह्मासनमास्तीर्य' तस्याग्नेर्दक्षिणस्यां दिशि ब्रह्मणे आसनं वारणादियज्ञियदारुनिर्मितं पीठमास्तीर्य कुशैः स्तीर्त्वा तत्र वरणाभरणाभ्यां पूर्वसम्पादितं कर्मसु तत्त्वज्ञं ब्रह्माणं तदभावे पञ्चाशत्कुशनिर्मितम् अग्नेरुत्तरतः प्राङ्मुखमासीनं स्वयमुदङ्मुख आसीनोऽनुलेपनपुष्पमाल्यवस्त्रालङ्करादिभिः सम्पूज्य अमुककर्माहं करिष्ये तत्र मे त्वममुकगोत्रामुकप्रवरामुकशर्मन् ब्राह्मण त्वं ब्रह्मा भवेति वृत्वा भवामीत्युक्तवन्तमुपवेश्य । 'प्रणीय' अप इति शेषः । तद्यथा अग्नेरुत्तरतः प्रागग्रं कुशैरासनद्वयङ्कल्पयित्वा वारणं द्वादशाङ्गुलदीर्घं चतुरङ्गुलविस्तारं चतुरङ्गुलखातं चमसं सव्यहस्ते कृत्वा दक्षिणहस्तोद्धृतपात्रस्थोदकेन पूरयित्वा पश्चिमासने निधायालभ्य पूर्वासने स्थापयित्वा । 'परिस्तीर्य' अग्निम्, बर्हिर्मुष्टिमादाय ईशानादिप्रागग्रैर्बर्हिर्भिरुदक्संस्थमग्नेः परिस्तरणं कृत्वा । 'अर्थवदासाद्य' यावद्भिः पदार्थैरर्थः प्रयोजनं तावतः पदार्थान् द्वन्द्वं प्राक्संस्थान् उदगग्रानग्नेरुत्तरतः पश्चाद्वा आसाद्य । तद्यथा पवित्रच्छेदनानि त्रीणि कुशतरुणानि पवित्रे साग्रे अनन्तर्गर्भे द्वे कुशतरुणे, प्रोक्षणीपात्रं वारणं द्वादशाङ्गुलदीर्घं करतलमितखातं पद्मपत्राकृति कमलमुकुलाकृति वा, आज्यस्थाली तैजसी मृन्मयी वा द्वादशाङ्गुलविशाला प्रादेशोच्चा, तथैव चरुस्थाली, संमार्गकुशास्त्रयः, उपयमनकुशास्त्रिप्रभृतयः, समिधस्तिस्रः पालाश्यः प्रादेशमात्र्यः, स्रुवः खादिरो हस्तमात्रः अङ्गुष्ठपर्वमात्रखातपरिणाहवर्तुलपुष्करः । आज्यं गव्यम् । चरुश्चेद्व्रीहितण्डुलाः, षट्पञ्चाशदधिकमुष्टिशतद्वयपरिमितं परार्घ्यं बहुभोक्तृपुरुषाहारपरिमितमपरार्घ्यं तण्डुलाद्यन्नं, पूर्णपात्रं दक्षिणा वरो वा यथाशक्ति हिरण्यादिद्रव्यम् । 'पवित्रे कृत्वा' प्रथमं त्रिभिः

कुशतरुणैरग्रतः प्रादेशमात्रं विहाय द्वे कुशतरुणे प्रच्छिद्य । 'प्रोक्षणीः संस्कृत्य' प्रोक्षणीपात्रं प्रणीतासन्निधौ निधाय तत्र पात्रान्तरेण हस्तेन वा प्रणीतोदकमासिच्य पवित्राभ्यामुत्पूय पवित्रे प्रोक्षणीषु निधाय दक्षिणेन हस्तेन प्रोक्षणीपात्रमुत्थाप्य सव्ये कृत्वा तदुदकं दक्षिणेनोच्छाल्य प्रणीतोदकेन प्रोक्ष्य । 'अर्थवत्प्रोक्ष्य' अर्थवन्ति प्रयोजनवन्ति आज्यस्थाल्यादीनि पूर्णपात्रपर्यन्तानि प्रोक्षणीभिरद्भिरासादनक्रमेणैकैकशः प्रोक्ष्य असञ्चरे प्रणीताग्न्योरन्तराले प्रोक्षणीपात्रन्निधाय । 'निरुप्याज्यम्' आसादितमाज्यमाज्यस्थाल्यां पश्चादग्नेर्निहितायाम्प्रक्षिप्य, चरुश्चेच्चरुस्थाल्याम्प्रणीतोदकमासिच्य आसादितांस्तण्डुलान्प्रक्षिप्य । 'अधिश्रित्य' तत्राज्यं ब्रह्माधिश्रयति तदुत्तरतः स्वयं चरुमेवं युगपदग्नावारोप्य । 'पर्यग्नि कुर्यात्' ज्वलदुल्मुकं प्रदक्षिणमाज्यचर्वोः समन्ताद्भ्रामयेत् अर्द्धश्रृते चरौ । 'स्रुवं प्रतप्य, दक्षिणेन हस्तेन स्रुवमादाय प्राञ्चमधोमुखमग्नौ तापयित्वा । सव्ये पाणौ कृत्वा दक्षिणेन सम्मार्गाग्रैर्मूलतोऽग्रपर्यन्तम् 'सम्मृज्य' मूलैरग्रमारभ्य अधस्तान्मूलपर्यन्तम् । 'अभ्युक्ष्य' प्रणीतोदकेनाभिषिच्य । 'पुनः प्रतप्य निदध्यात्' पुनः पूर्ववत्प्रतप्य दक्षिणतो निदध्यात् । 'आज्यमुद्वास्य' आज्यमुत्थाप्य चरोः पूर्वेण नीत्वाऽग्नेरुत्तरतः स्थापयित्वा चरुमुत्थाप्य आज्यस्य पश्चिमतो नीत्वा आज्यस्योत्तरतः स्थापयित्वा आज्यमग्नेः पश्चादानीय चरुञ्चानीय आज्यस्योत्तरतो निधाय, एवं त्रिचतुरादीन्यन्यान्यपि हवींष्युद्वासयेत् । अधिश्रृतानाम्पूर्वेणोद्वासितानाम्पश्चिमतो हविष उद्वास्यानयनमिति याज्ञिकसम्प्रदायात् । 'उत्पूय' ऊर्ध्वं पूर्ववत् पवित्राभ्याम् । 'अवेक्ष्य' अवलोक्याज्यं तस्मादपद्रव्यनिरसनम् । 'प्रोक्षणीश्च पूर्ववत्' पवित्राभ्यामुत्पूय पूर्ववत् । 'उपयमनान् कुशानादाय' दक्षिणपाणिना गृहीत्वा सव्ये निधाय । 'समिधोऽभ्याधाय' तिष्ठन्समिधः प्रक्षिप्य । 'पर्युक्ष्य जुहुयात्' प्रोक्षण्युदकेन सर्वेण सपवित्रेण दक्षिणचुलुकेन गृहीतेन अग्निमीशानादि उदगपवर्गम्परिषिच्य जुहुयात् आघारादीन् । संस्रवधारणार्थं पात्रं प्रणीताग्न्योर्मध्ये निदध्यात् । 'एष एव विधिर्यत्र क्वचिद्धोमः' एषः परिसमुहनादिपर्युक्षणपर्यन्तो विधिरेव न मन्त्राः क्वचित् यत्र क्वचन लौकिके स्मार्ते वाऽग्नौ होममात्रं तत्र वेदितव्यः ॥ १ ॥

## ( ४ ) गदाधरकृतं गृह्यसूत्रभाष्यम् ।

आविर्भूतश्चतुर्द्धा यः कपिभिः परिवारितः ।
हतवान् राक्षसानीकं रामं दाशरथिं भजे ॥ १ ॥
स्वाभिप्रायेण हि मया न किञ्चिदिह लिख्यते ।
किन्तु वाचनिकं सर्वमतो ग्राह्यञ्च निर्भयैः ॥ २ ॥

अथातोऽधिकार इत्यादिना श्रौतानि कर्माण्युक्तानि तदनन्तरं स्मार्तानि विधीयन्ते । तत्रैतत्प्रथमं सूत्रम्—'अथातो गृह्यस्थालीपाकानाङ्कर्म' उच्यत इति सूत्रशेषः ॥ श्रौतानन्तर्यप्रज्ञस्यर्थोऽयमथशब्दः । आनन्तर्यप्रज्ञापनन्तु अथातोऽधिकार इत्यादि यत्साधारणन्तस्य प्रवृत्त्यर्थम् । श्रौतानामुपनिबन्धनम्पूर्वमिति प्रोच्येत्य गृह्यानुपतिष्ठते पूर्ववदित्येतत्सूत्रप्रवृत्त्या ज्ञायते । अत इति हेतुः । यतः श्रौतान्युक्तानि स्मार्तान्येवावशिष्यन्तेऽतस्तान्युच्यन्ते । ननु पूर्वम् गर्भाधानादीनामनुष्ठानात्पूर्वमनुष्ठानक्रमेण स्मार्तान्येव वक्तव्यानीति चेत् मैवम् । श्रौतेषु हि प्रत्यक्षपठिताः श्रुतयः स्मार्तेषु च पुनः कर्तृसामान्यादनुमेयाः श्रुतयः । स्मार्तानामपि हि वेदमूलत्वमुक्तं भट्टैः । तस्मात्प्रत्यक्षश्रुतित्वाच्छ्रौतानामेव पूर्वमभिधानम् । स्मरणादेव स्मृतीनां प्रामाण्यमिति कर्कोपाध्यायैरुपन्यस्तम् । गृह्यः शालाग्निः तत्र ये स्थालीपाकास्ते गृह्यस्थालीपाकाः तेषां गृह्य-

स्थालीपाकानां कर्म क्रियेति । स्थालीपाकशब्द आज्यपुरोडाशाद्युपलक्षणार्थः । कथं ज्ञायते, येन स्थालीपाकमुपक्रम्याज्यमुपसंहरति निरुप्याज्यमित्यादि । एवमाज्यग्रहणमपि चर्वाद्युपलक्षणार्थम् यतः सर्वसाधारणमेवेदं कर्म नह्यस्य कर्मणः कुतश्चित्प्रकृतेः कस्याश्चिद्विकृतावतिदेशोऽस्ति । यत्प्रधानविधिरङ्गविध्यन्वितः पठ्यते सा प्रकृतिः । यथा दर्शपूर्णमासौ । यत्प्रधानविधिरङ्गविधिरहितः पठ्यते सा विकृतिः । यथा सौर्यः । न च दर्शपूर्णमासविधौ प्रयाजविधेरिव एतत्कर्मविधेः कस्मिंश्चित्प्रधानविधौ शेषभावोऽस्ति यतः सर्वाण्येव कर्माणि प्रकृत्य धर्मविधानम् । सर्वसाधारणं कर्माह 'परि० धाय' दर्भैः परिसमुह्य गोमयेनोपलिप्य वज्रेणोल्लिख्यानामिकाङ्गुष्ठेनोद्धृत्योदकेनाभ्युक्ष्य तस्मिन्नग्निं स्थापयेत् । त्रिरुल्लेखनम् त्रिरुद्धरणमिति हरिहरः । परिसमूहनादि पञ्चापि त्रिस्त्रिरित्यन्ये । कर्कोपाध्यायैरपि 'विपर्यस्य पित्र्येषु सकृद्दक्षिणा च' इत्येतत्सूत्रव्याख्यानावसरे यदभ्यस्तं रूपं दैवे स्मर्यते तत्पित्र्ये सकृत्कर्तव्यम् । यथा परिसमुह्योपलिप्योल्लेखनमिति लेखनेनैव तावद्दर्शितम्, दैवे परिसमूहनादि त्रिस्त्रिः पित्र्ये सकृत्सकृत् इति । एते पंच भूसंस्कारा इति भर्तृयज्ञभाष्ये । अग्न्यर्था इति कर्कोपाध्यायाः । तेन यत्र यत्राग्नेः स्थापनं तत्र तत्रैते कर्तव्याः अतः श्रौताग्निस्थापनेऽपि कर्तव्याः । न चैतेषां स्थालीपाकविधावन्तर्भावः । येन एव एव विधिर्यत्र क्वचिद्धोम इत्यभिहितेऽपि पुनरभिधीयते–उद्धृतावोक्षितेऽग्निमुपसमाधायेति । नूनमनेनाप्रवृत्तिः । अग्निसाध्यानि स्मार्तानि सर्वाण्यावसथ्याग्नौ कार्याणि । तथा च स्मृतिः । कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही । दायकालाहृते वापि श्रौतं वैतानिकाग्निष्विति । तस्मिन्गृह्याणीत्यापस्तम्बस्मरणाच्च । गृहाय हितं गृह्यं गृहशब्दश्च दम्पत्योर्वर्तते तस्मिन्नित्यावसथ्ये । अतश्च यत्किंचिद्दम्पत्योर्हितं कर्म शान्तिकपौष्टिकव्रताङ्गहोमादिकं स्मार्तं तत्सर्वमावसथ्येऽग्नौ भवतीति । अत एवाह कात्यायनः—न स्वेऽग्नावन्यहोमः स्यान्मुक्त्वैकां समिदाहुतिम् । स्वगर्भसत्क्रियार्थांश्च यावन्नासौ प्रजायते ॥ अग्निस्तु नामधेयादौ होमे सर्वत्र लौकिकः । नहि पित्रा समानीतः पुत्रस्य भवति क्वचित् ॥ अतश्च सीमन्तोन्नयनमपि स्मार्ताग्नावेव कार्यमिति देवभाष्ये परिभाषायाम् । स्फ्येनोल्लेखनमिति गर्गहरिहरौ । काष्ठेन कुशमूलेन वेति केचित् । अत्रैतद्विचार्यते–किमावसथ्याधानादिषु वक्ष्यमाणेषु सर्वकर्मसु अध्वर्योः कर्तृत्वम् उत यजमानस्येति । अध्वर्युः कर्मसु वेदयोगादिति परिभाषणात्, पूर्णपात्रो दक्षिणा वरो वेति दक्षिणाम्नानादध्वर्योः कर्तृत्वमिति चेत् उच्यते—न स्मार्तेषु कर्मसु अध्वर्योः कर्तृत्वं वेदयोगाभावात् । समाख्यया हि अध्वर्योः कर्मसु योगः, समाख्या हि वेदयोगात् नच स्मार्ते वेदयोगोऽस्ति नहि ज्ञायते अमुकवेदोक्तं स्मार्तमिति । तथाच श्रुतिः—सहोवाच यद्यृक्तोभूरिति चतुर्गृहीतमाज्यं गृहीत्वा गार्हपत्ये जुहवथ, यदि यजुष्टो भुव इति चतुर्गृहीतमाज्यं गृहीत्वाऽऽग्नीध्रीये जुहवथान्वाहार्यपचने वा हविर्यज्ञे, यदि सामतः स्वरिति चतुर्गृहीतमाज्यं गृहीत्वाऽऽहवनीये जुहवथ, यद्यु अविज्ञातमसत्सर्वाण्यनुद्रुत्याहवनीये जुहवथेति । अविज्ञातं स्मार्तं यत्र ज्ञायते किमार्ग्वैदिकं किं याजुर्वैदिकं कि वा सामवेदिकमिति । नापि दक्षिणान्यथानुपपत्त्यान्यस्य कर्तृत्वम् । अस्ति ह्यत्रान्योऽपि ब्रह्माख्यः कृताकृतावेक्षकत्वेन कर्ता तदर्थः परिक्रयोऽयमिति दक्षिणार्थापत्तिः । तस्मात्स्वस्यैव कर्तृत्वम् । 'दक्षिणतो ब्रह्मासनमास्तीर्य' स्थापितस्याग्नेर्दक्षिणस्यां दिशि ब्रह्मण उपवेशनार्थं दर्भान्निधाय ब्रह्मोपवेशनं कुर्यात् । ननु दक्षिणतो ब्रह्मयजमानयोरासने इति परिभाषातो दक्षिणत आसनं प्राप्तं किमर्थं पुनर्दक्षिणग्रहणम् । सत्यम् पुनर्दक्षिणग्रहणं यजमानस्य तत्रासनं मा भूदित्येतदर्थमित्यदोषः । एवं च यजमानासनं वचनाभावे सर्वत्राग्नेरुत्तरतः स्यात्, उत्तरत उपचार इति परिभाषणात् । तत्र पुनर्वचनं यथा पश्चादग्नेस्तेजनीकूर्चं वा दक्षिणपादेन प्रवृत्योपविशतीति तत्र तत्रैवोपवेशनम् । यद्वा दर्शपूर्णमासविषया परिभाषेयम् वेदिस्पृगिति सूत्रे तस्माद्दक्षिणं वेद्यन्तमधिस्पृश्यैवासीतेति श्रुतौ चोक्तत्वात् । तेनात्राप्राप्तिर्वेद्यभावाद्दक्षिणग्रहणमपूर्वविधानार्थम् । अतोऽपि

यजमानोपवेशनमुत्तरत एव । अत्र चास्तरणमात्रोपदेशात्, चतुर्थीकर्मणि दक्षिणतो ब्रह्माणमुपवेश्येत्युपवेशनविधानाच्च न ब्रह्मोपवेशनम् । मैवम् । अदृष्टार्थप्रसङ्गात् । नह्यदृष्टार्थं कश्चिदासनप्रकल्पनं कुर्यात् ब्रह्मासनव्यपदेशानुपपत्तेश्च तस्माद्ब्रह्मोपवेशनार्थमेवास्तरणम् । यच्च चतुर्थीकर्मण्युपवेशनमुक्तम् तदुदपात्रस्थापनावसरविधानार्थम् । तस्माद्ब्रह्मोपवेशनं भवत्येव । यदा ब्रह्मा न भवति तदा कौशः कार्य इति हरिहरः तन्मूलं छन्दोगगृह्येऽस्ति । 'प्रणीय' प्रणयनञ्चापां सर्वार्थं प्रदेशान्तरे दृष्टन्तद्वदत्रापि कार्यम् । 'परिस्तीर्य' अग्नेर्दर्भैः प्रदक्षिणम्परिस्तरणं कृत्वा । 'अर्थवदासाद्य' अर्थः प्रयोजनम् अग्नेरुत्तरतः पश्चाद्वा द्वन्द्वम्प्रयोजनवतां म्पात्राणामासादनङ्कार्यक्रमेण मुख्यक्रमानुग्रहात्, पश्चाच्चेत्प्राक्संस्थानामुदगग्राणां प्रागग्राणां वा आसादनम् । उत्तरत उदक्संस्थानां प्रागग्राणामुदगग्राणां वाऽऽसादनं कारिकायाम् । पश्चादुत्तरतो वा स्यात्पात्रासादनमग्नितः । उत्तरेचेदुदक्संस्थं प्राक्संस्थं पश्चिमे भवेत् ॥ एतच्च विपुलस्थानसम्भवे । असंभवे तु कात्यायनेनोक्तम्—प्राञ्चम्प्राञ्चमुदगग्नेरुदगग्रं समीपत इति देवयाज्ञिकाः । 'पवित्रे कृत्वा' कौशे समे अप्रशीर्णाग्रे प्रादेशमात्रे अनन्तर्गर्भे कुशैश्छिन्द्यादित्यर्थः । 'प्रोक्षणीः संस्कृत्य' प्रादेशमात्रे वारणे पात्रे प्रणीतोदकमासिच्य पवित्राभ्यामुत्पूय सव्यहस्ते तत्पात्रं कृत्वा दक्षिणेनोर्ध्वनयनं कृत्वा प्रणीतोदकेन तत्प्रोक्षणं कुर्यात् ततस्तस्मिन्पवित्रनिधानम् । 'अर्थवत्प्रोक्ष्य' तज्जलेन यथासादितानाम्पात्राणां प्रत्येकम्प्रोक्षणम् । 'निरुप्याज्यम्' औपयिकासादिताज्यस्य स्थाल्यां प्रक्षेपः । चरुश्चेदत्र तण्डुलानां स्वस्थाल्यामावापः । 'अधिश्रित्य' तदाज्यमग्नौ स्थापयेत् चरुश्चेदत्रावसरे आज्यादुत्तरतोऽग्नावधिश्रयणम् । 'पर्यग्नि कुर्यात्' अग्नेरुल्मुकं गृहीत्वा आज्यस्य परितो भ्रामयेत् चरुश्चेत्तमपि पर्यग्नि कुर्यात् उपलक्षणार्थत्वादाज्यस्य । 'स्रुवं प्रतप्य संमृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात्' अग्नौ स्रुवं तापयित्वा दर्भैः संमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनस्तापयित्वा निदध्यात् स्रुवस्यायं संस्कारो होमार्थः । एवञ्च दृष्टार्थता तत्संस्कारस्य । अतः संस्कारविस्मरणे प्रायश्चित्तपूर्वकं प्रागन्त्यहोमात्कार्यः । ऊर्ध्वन्तु प्रायश्चित्तमात्रम् । प्रोक्षण्युदकेनाभ्युक्षणमिति गर्गः । 'आज्यमुद्वास्योत्पूयावेक्ष्य' अग्नेः सकाशादाज्यमुत्तरत उद्वास्य पवित्राभ्यामुत्पूय तदाज्यमवलोक्य । चरुश्चेदाज्योद्वासनोत्तरं तस्योद्वासनम् । तत्रैवम् अग्नेः सकाशादाज्यं गृहीत्वा चरोः पूर्वेण नीत्वा अग्नेरुत्तरतो निधानम् । ततश्चरुमादायाज्यपश्चिमतो नीत्वा आज्यादुत्तरतो निधानं, हविषाञ्च यथापूर्वमित्युक्तेः । 'प्रोक्षणीश्च पूर्ववत्' पूर्ववदिति पवित्राभ्याम्प्रोक्षणीरुत्पूय तास्वेव पवित्रनिधानम् । चशब्दादाज्यमपि पूर्ववदेव अतः पवित्राभ्यां स्यात् । प्रोक्षणीसंस्कारोऽयम्पर्युक्षणार्थः । 'उप०यात्' उपयमनान्कुशान् गृहीत्वा उपतिष्ठन् तिस्रः समिधोऽग्नावभ्याधाय प्रक्षिप्य प्रोक्षण्युदकेनाग्निम्प्रदक्षिणम्परिषिच्य स्रुवेण वक्ष्यमाणं होमं कुर्यात् । तिष्ठन् समिधः सर्वत्रेत्युक्तेरत्र तिष्ठता समिदाधानम् । समिल्लक्षणञ्च स्मृत्यर्थसारे । पलाशखदिराश्वत्थशम्युदुम्बरजा समित् । अपामार्गार्कदूर्वाश्च कुशाश्चेत्यपरे विदुः ॥ सत्वचः समिधः कार्या ऋज्वःश्लक्ष्णाः समास्तथा । शस्ता दशाङ्गुलास्तास्तु द्वादशाङ्गुलिकास्तु वा ॥ आर्द्राः पक्वाः समच्छेदास्तर्जन्यङ्गुलिवर्तुलाः । अपाटिताश्चाद्विशाखाः कृमिदोषविवर्जिताः । ईदृशा होमयेद्यस्तु प्राप्नोति विपुलां श्रियमिति । यद्वा । समित्पवित्रं वेदश्च त्रयः प्रादेशसम्मिताः । इध्मस्तु द्विगुणः कार्यस्त्रिगुणः परिधिः स्मृतः । 'एष एव विधिर्यत्र क्वचिद्धोमः' यत्र क्वचिद्धोमः शान्तिकर्मोष्टिकादिष्वपि एष एव विधिः स्यात् । एवकारो मन्त्रप्रतिषेधार्थः । गृह्याभिव्यतिरेकेणापि यथायं विधिः स्यादित्येतमर्थः कश्चिच्छन्दः । यथा दावाग्निमुपसमाधाय घृताक्तानि कुशेण्ड्वानि जुहुयादित्यादौ ॥ १ ॥

## ( ५ ) विश्वनाथकृता गृह्यसूत्रप्रकाशिका ।

गर्गसिद्धान्तपद्मानां प्रकाशोदयहेतवे ।
मार्तण्डाय नृसिंहाय पित्रे श्रीगुरवे नमः ॥ १ ॥
गङ्गादेवीमहं वन्दे ज्ञानदां मातृरूपिणीम् ।
जातं यस्याः पयःपानात्सरस्वत्यवगाहनम् ॥ २ ॥
पारं शास्त्रसमुद्रस्य लब्ध्वैतल्लिख्यते यतः ।
स्वकल्पितत्वशङ्काऽत्र न कार्या विबुधैरितः ॥ ३ ॥
तर्कशास्त्रं च मीमांसा यद्रक्षायै प्रयोजिते ।
तातैस्तमपि वन्देऽत्र गर्गं वेदार्थवित्तमम् ॥ ४ ॥
अधीत्य सकलं शास्त्रं श्रीनृसिंहाज्जगद्गुरोः ।
तन्यते विश्वनाथेन गृह्यसूत्रप्रकाशिका ॥ ५ ॥

अथैतद्भाष्यं नारब्धव्यं विषयाभावात् । तथाहि । तत्किं सूत्रार्थप्रकाशकं वा सूत्रादनधिगतार्थबोधकं वा सूत्राविविक्तविवेचकं वा सूत्रापेक्षितपूरकं वा । न तावत्प्रथमः कल्पः । आवसथ्याधानं दारकाल इत्यादिसूत्राणां स्पष्टार्थत्वात् । न द्वितीयः । शाब्दो ह्यनवबोधः शब्दानुपादानमूलस्तथा च येनार्थस्य प्रकारान्तरलभ्यतामधिगत्य ग्रन्थगौरवाद्वा स्वल्पं सूत्रितं तेन भाष्यपूरितापेक्षयाऽधिकं न त्यक्तमित्येवं कः समाश्वसेत् । कथं वाऽतीतानागतद्रष्टा आचार्यः सूक्ष्मदर्शी मांसलधीसापेक्षं वदेत् । नचाऽज्ञ एव स इति वाच्यं, वैपरीत्यस्यैव सुवचत्वात् । प्रत्यक्षीकृतधर्ममूलकत्वेन सूत्रस्यानादीनवत्वेन न तदुपायस्यानादीनवत्वं पौरुषेयत्वेनादीनवत्वात् । नापि तृतीयः । नहि किंचित्सूत्रं स्वरूपत एव गूढम् । अपि तु बुद्ध्यधीनं तत् । तथा च दोषाविच्छेदादनवस्थैव पर्यवस्येत् । नापि तुर्यः । अधिकारिणां स्मृत्यर्थानुष्ठानाय प्रवृत्तः कथं भाष्यसापेक्षं वदेत् । वदन्वा पूर्वोक्तप्रसक्तिरेव कथं न ग्रासीकुर्यादिति प्राप्ते ब्रूमः । सूचनात्सूत्रं लिङ्गोपन्यासादिति पञ्चम्यन्तार्थः । तदुक्तं । सूचनात्सूत्रमत्रोक्तं सूचनं लिंगभापणम् । तन्मात्रं साधकं न स्याद्विना साध्यप्रयोगतामिति । तथाच तत्सूचितार्थद्योतकेन भाष्येण भाव्यमिति । यच्चोक्तं स्पष्टार्थत्वादिति तदपि न । सर्वेषां नह्याहरणारणेयपक्षयोर्न्यायधौरेयमन्तरेण सिद्धान्तकोटिरधिगंतुं शक्या । तथाच न्यायगर्भागर्भसकलसूत्रार्थद्योतकेनावश्यं भाष्येण भाव्यमिति । नच वक्तव्यं न्यायाधीनकर्तव्यताबोधकत्वान्न्यूनत्वं । सूचनत्वलक्षणसूत्रत्वव्याकोपादिति । केचित्तु श्रुतिस्वभावत्वात्सूत्रेष्वपि विध्यर्थवादविवेकार्थं न्यायापेक्षेति । तन्न अर्थवादोपरक्तत्वे श्रुत्यभेदापत्तेः । नचेष्टापत्तिः । संज्ञाभेदानुपपत्तेरिति । यच्चोक्तं द्वितीयपक्षे दुष्टमूलकस्य दुष्टत्वापत्तिरिति । तन्न आर्षेयत्वेनाकरस्यादुष्टत्वादिति । तद्गर्भन्यायनिरूपणाच्च न तदुपायोऽपि दुष्ट इति नाप्रामाणिकत्वम् । एतेन विपक्षोऽपि निरस्तः । तृतीयपक्षे नाप्यनवस्था । न्यायादर्थाधिगमनं व्युत्पन्नस्याकाङ्क्षानुदयात् । अत एव न तुर्योऽपि । सूत्रस्योपायापेक्षायाः व्युत्पादितत्वादिति । नन्वस्तु तावद्भाष्यापेक्षा तथापि हरिहरादिभाष्यादिभिरेव तदर्थसिद्धेः किमर्थमिदमारभ्यत इति चेत् । तत्किमेकस्मिन्सत्यपरं व्यर्थमिति यदि ब्रूषे तदा साधु समर्थितं हरिहरस्य प्रामाण्यम् । कर्कादिना तस्यापि तथा वक्तुं शक्यत्वात् । अथ विशेषाप्रतिपादकत्वे तथात्वं प्रोच्यते । हरिहरादेस्तु विशेषप्रतिपादकत्वान्न व्यर्थतेति चेत् । न । प्रकृतेऽपि विशेषाप्रतिपादकत्वस्य दुर्वचत्वादित्यलमतिविस्तरेण । तथाच प्रकृतेऽप्यारम्भसामग्र्याः विद्यमानत्वादारभ्यते भाष्यम् । 'अथातो गृह्यस्थालीपाकानां कर्म' प्रोच्यत इति सूत्रशेषः । अत्रायमथशब्दः आनन्तर्यं मङ्गलं च बोधयति । नच सकृदुच्चरितस्य सकृदर्थगमकत्वमिति विरोधः । गत्यानन्तर्यमात्रं बोधयति । श्रवणान्मङ्गलमिति संप्रदायः ।

नवीनास्तु नानार्था (ध्य) वसायार्थं सकृदुच्चरितमपि पदमनेकार्थप्रत्यायकं भवत्येव । तात्पर्यज्ञानस्य शाब्दबोधहेतुत्वादित्याहुः । यत्तु प्रश्नार्थोऽयमथशब्द इति । तन्न । संदेहजिज्ञासामूलकत्वात्प्रश्नस्य । प्रकृते च संदेहाभावात् । अनध्यवसायमूलकः प्रश्नश्चेत् । न । अतःशब्दानन्वयापत्तेः । केचित्तु क्रमतात्पर्यकतामाहुः । तदपि न । प्रधानफलफलकत्वेनाऽङ्गानां फलोत्पत्तौ प्रधानमुपकर्तुं प्रवृत्तानां युगपदनुष्ठानाशक्यत्वेन क्रमाकाङ्क्षायामथैनाविसादिनोपात्तोऽथशब्दः वस्त्रपरिधानाद्यानन्तर्यमञ्जनादेर्बोधयितुं समर्थो भवेत् । तच्च न । पूर्वोपक्रान्तपदार्थाभावात् । नन्वेत्रमानन्तर्यार्थतां वर्णयत. का गतिः । किंच क्रमतात्पर्यकतायां तत्कालजातकर्माद्यकरणदोषः । व्यवधानेऽपि क्रमभङ्गाभावात्क्रमार्थतैव युक्तेति चेत् । न । अव्यवधानार्थमेवानन्तर्यार्थसमाश्रयणात् । विवाहानन्तरमावसथ्यमिति । अन्यथा आधाने कालबाधेऽपि दोपाभावेन प्रायश्चित्तादिकर्तव्यतावोधकविधेरप्रामाण्यप्रसङ्गः । अतःशब्दो हेत्वर्थः । अधिकारिणा आधानाद्यविलम्बेन कर्तव्यमिति यतः प्रतिपादितमतस्तस्याधानादिसकलकर्मानुष्ठानाय गृह्यस्थालीपाकानां कर्म मया प्रोच्यत इत्यन्वयः । मशकनिवृत्त्यर्थं धूमार्थिनो हेतुत्वेन वह्न्युपादानवत् फलार्थं स्मृत्यर्थाद्यनुष्ठानार्थिनो हेतुत्वेन ग्रन्थोपादानम् । धूमे वह्निवत्तदर्थानुष्ठाने सूत्रस्यापि हेतुत्वमतःशब्दार्थः । केचित्तु यतः श्रौतान्युक्तान्यतस्तत्राधिकार(पशुन्यायेना?शून्यस्य)धिकारसंपादकतया स्मार्तानि वक्तव्यानि।अतो हेतोर्गृह्यस्थालीत्याद्यन्यथा हेत्वर्थतामतःशब्दस्य वर्णयन्ति । गृहं गृहिण्यन्वितम् । तत्र भवो गृह्यः । स्थाल्यां ताम्रादिनिर्मितायां तण्डुलादेः पाकः स्थालीपाक. । गृह्यश्चासौ स्थालीपाकः तेपामित्यर्थः । अत्र व्याख्यास्यत इत्यध्याहारं वर्णयन्तः हरिहरादयः प्रष्टव्यास्तावदेषा कस्य प्रतिज्ञा । सूत्रकर्तुर्वा तेषां वा । न तावदाद्यः । आचार्येण कस्याप्यख्यानात् । न द्वितीयः । अनभ्युपगमात् । अध्याहारानुपपत्तेश्चेति दिक् । एवं च गृह्यस्थालीपाकानां यत्कर्म तत्कथमनुष्ठेयमित्याकाङ्क्षायामावसथ्यादिसकलकर्मसाधारणीं परिभाषामाह । 'परिसमुह्य' जलैरिति शेषः । 'उपलिप्य' गोमयेनेति शेषः । 'उल्लिख्य' स्फ्येनेति शेषः । 'उद्धृत्य' अनामिकाङ्गुष्ठाभ्यामिति शेषः । 'अभ्युक्ष्य' पवित्रोदकेनेति शेषः । एते च स्थालीपाकाद्यङ्गम् । 'अग्निमुपसमाधाय' आवसथ्याग्निहोत्राद्यग्निमिति शेषः । कथमेतत्सामान्ये प्रमाणपक्षपात इति न्यायादिति चेत् । न लौकिकविषये पञ्चसु बहिःशालायामित्यारभ्य उपलिप्त उद्धतावोक्षितेऽग्निमुपसमाधायेत्यस्यापवादस्याचार्येण सूत्रणादुपलिप्त उद्धतावोक्षितेऽग्निमुपसमाधायेत्ययमपवादः परिसमुह्येत्याद्युत्सर्गविधिं बाधते । यद्वा मास्तु प्रकृते सामान्यविशेषभावः तथापि विवाहप्रकरणे त्रयाणामेव संस्काराणामुपादानादेते पञ्च संस्कारा अग्निहोत्रादिविषया एवेति ज्ञायते । अन्यथोपलिप्त इत्यादीनां संभारवदाधिक्यापत्तिरिति ध्येयम् । 'दक्षिणतो ब्रह्मासनमास्तीर्य' अग्नेर्दक्षिणतः ब्रह्मणा उपलक्षितं आसनं तत्र आस्तरणं वस्त्रादि ब्रह्मासनास्तरणं तत्कृत्वेत्यर्थः । यद्वा पञ्चाशद्भिः कुशैर्ब्रह्मेत्युक्तत्वात्पञ्चाशत्संख्याककुशबटुं वा स्थापयित्वेत्यर्थः । ननु साक्षाद्ब्रह्मणः उपवेशनम्, दक्षिणतो ब्रह्माणमुपवेश्येति चतुर्थीकर्मणि सूत्रणात् । कारिकाकारोऽपि । अचेतने ब्रह्मशब्दः कुशमुष्टौ च वेदवत् । कुशानां संनिधे(?) युक्तः समास्तीर्येति लिङ्गतः । कर्काचार्यास्तु सर्वत्र साक्षादेव ब्रह्मणः उपवेशनं, नच दक्षिणतो ब्रह्माणमुपवेश्येत्यनेन पौनरुक्त्यं, तस्यावसरज्ञापनार्थत्वादित्याहुः । तदपरे दूषयन्ति । स्थालीपाकश्रपणपूर्वकालता ह्यवसरः, स चोत्तरत उदपात्रं प्रतिष्ठाप्य स्थालीपाकं श्रपयित्वेत्यनेनैव लभ्यते, पूर्वकालतायाः समानकर्तृकयोः क्त्वावाच्यत्वात् । क्त्वाप्रत्ययार्थो ह्युत्तरकालता । तथाच उदपात्रं प्रतिष्ठाप्य स्थालीपाकं श्रपयित्वेत्यनेन स्थालीपाकश्रपणस्योदपात्रस्थापनोत्तरकालता बोध्यते । तेन स्थालीपाककरणप्राक्कालतायाः क्त्वाप्रत्ययादेव लाभाद्व्यर्थं तदर्थं दक्षिणतो ब्रह्माणमुपवेश्येत्येतत्सूत्रं स्यादत एवं ज्ञायते—चतुर्थीकर्मादौ यत्र साक्षाद्ब्रह्मोपवेशनमुक्तं तत्रैव प्रत्यक्षब्रह्मोपवेशनं नान्यत्रेति वदन्ति । 'प्रणीय' अप इति शेषः । अग्नेरुत्तरतः कौशं पूर्वापरमासनद्वयं प्रकल्प्यापरासने उदपूर्णं चतुष्कोणं चमसं निधायालभ्य

ब्रह्मासनमीक्ष्य पूर्वासने निदध्यादित्यर्थः । एतच्च प्रणीताप्रणयनं दृष्टफलं सर्वार्थं चेति कर्काचार्याः । दृष्टार्थतायामपि संयवनार्थमिदमिति केचित् । उदककृत्यं सर्वं प्रणीताजलेन चेत्क्रियते तदा स्वकाले कर्मानुष्ठानं कृत्स्नेनैव निर्वाहश्च । उक्तं च—'लभ्यमाने तु दृष्टेर्थे नादृष्टस्य प्रकल्पना' इति । तस्मात्सर्वार्थाः प्रणीता इति । प्रणीताभिः संयौतीति श्रवणात्संयवनार्था इत्यन्ये । यदि हि सर्वार्थं प्रणीताप्रणयनं भवेत्तदा प्रणयनसंस्कृतनीरसंसर्गः प्रतीयेत । तस्य च संयवनेनैव प्रतीयमानत्वात्संयवनार्थतैवेति । तदेतत्तुच्छम् । पक्षाद्यादिषु संयवनाभावेऽपि प्रणीतादर्शनात् । अथ नियोगसाधनीभूतद्रव्ये अपः-संयवनं तदर्थः लक्षणापत्तेः । अथ प्रणयनादेः संस्कारस्य श्रुतित एव लाभाच्छ्रुतौ च संयवनार्थतैव दृष्टेति चेत् । प्रणीतायाः संयवनार्थत्वे उपसदि संयवनव्यतिरेकात्प्रणीताया अपि व्यतिरेकः प्रसज्येत । तथाच प्रसंजितव्यतिरेकप्रतियोग्युल्लेखं सूत्रकृत्न कुर्यात्कृतवांश्च तदुल्लेखं प्रणीताद्युपसदिति सूत्रकृत् । किंच सविधे पशौ प्रणीताव्यतिरेकेपि क्रतुनिर्वाहसंदर्शनात्संयवनरूपदृष्टार्थताऽदृष्टसाधारणार्थता वेत्येतदविचाररमणीयम् । किं चापः प्रणयतीत्युपक्रम्य ततो देवा एतं वज्रं ददृशुर्यदप इत्याद्यर्थवादपर्यालोचनया विघ्ननिवर्तकत्वं प्रणीतायाः प्रतिपाद्यत इति प्रतीयते । तच्च साक्षान्न संभवतीत्यदृष्टमेव व्यापार इति सिद्धं शतपथश्रुतित एव प्रणीतायाः अदृष्टार्थत्वम् । 'परिस्तीर्य' प्रागग्रैरुदगग्रैश्च तृणैरग्नेः परिस्तरणं कृत्वेत्यर्थः । प्राच्यां प्रथममुदगग्रैः प्रक्षेपः । दक्षिणतः प्रागग्रैः । ततः प्रतीच्यामुदगग्रैः । तत उदीच्यां प्रागग्रैः । 'अर्थवदासाद्य' अर्थः प्रयोजनं तद्वत्पात्रसमुदायमासाद्य स्थापयित्वा प्रारब्धक्रियास्तोमनिष्पादकनिःशेषसामग्रीनिष्पादनं कुर्यादित्यर्थः । तद्यथा पवित्रच्छेदनानि त्रीणि, पवित्रे द्वे, प्रोक्षणीपात्रं, चर्वादिमिति चरुस्थाली, संमार्गकुशाः, उपयमनकुशाः, समिधः, स्रुवः, आज्यं, तण्डुलाः, बर्हिः, पूर्णपात्रं, वरो वा । दर्विहोमेषु पाकयज्ञेषु पक्षादिप्रभृतिषु पौर्णमासधर्माणां कात्यायनचरणैरतिदिष्टत्वात्प्रकृते च पाकयज्ञानां परिभाषासूत्रार्थस्य पर्यालोच्यमानत्वादतिदेशप्राप्ताः ग्रहणासादनप्रोक्षणादयः पौर्णमासधर्मा अपि लिख्यन्ते । नन्वेत एव कथं स्थालीपाकेषु ग्रहणासादनप्रोक्षणानि मंत्रदेवताभ्य इति शाङ्खायनोक्तेः । तेन स्फ्योपहितमोषधीकरणम् । ततः चर्वादिग्रहणम् अमुष्मै देवतायै जुष्टं गृह्णामीत्येवं मुष्टित्रयम् । चतुर्थसंख्यापूरणीं मुष्टिं विनैव मन्त्रं गृह्णीयात् । यथादैवतमन्यत् । चर्वादेस्त्रिस्त्रिः क्षालनं ततः वाग्यमनम् । 'पवित्रे कृत्वा' कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ कुशैः छित्त्वेत्यर्थः । न नखैः, शाखान्तरे निषिद्धत्वात् । 'प्रोक्षणीः संस्कृत्य' प्रोक्षणीरिति जलवाचिपदम् । ताः संस्कृत्येत्यर्थः । प्रोक्षणीसंस्कारश्चैवम् । आदौ प्रोक्षणीपात्रे नीरप्रक्षेपः, ततः पूर्वसंपादितपवित्राभ्यामुत्पवनं, पात्रस्य ततः सव्यहस्ते निधानं, दक्षिणेनोदिङ्गनं, ताभिरेव तासां प्रोक्षणमिति । 'अर्थवत्प्रोक्ष्य' अर्थः प्रयोजनं तद्वत् । स्मृतिबोधितप्रारब्धक्रियासंपादकं चर्वादि घृतादिकं पात्रादिकं च सर्वं प्रोक्षणीनामधेयाभिरभिषिच्येत्यर्थः । तथाच दक्षिणहस्तोपात्तप्रोक्षणीभिः समग्रं पात्रसमुदायं सकृदेव प्रोक्षणीयमित्यर्थः । श्रुतौ शुन्धध्वमिति मंत्रलिङ्गात् । अत्राह कर्कः—प्रोक्षणस्य पात्रोद्देशेन विधानात्पात्राणां च संस्कार्यत्वात्प्रतिसंस्कार्यं संस्कारावृत्तेर्न्याय्यत्वात्प्रतिपात्रं प्रोक्षणमिति । श्रुतावुद्देश्यगतं बहुत्वं न विवक्षितमिति । नैतदपि विचारसहं, तथाहि—क्रमावेदकमानापेक्षा तत्रैव यत्राशक्यानुष्ठानमनेकविषयमेकं कर्म । नचैतत्प्रकृते । सकृदेव सर्वेषां प्रोक्षणस्य शक्तिगोचरत्वात् । अथासादनकालीनक्रमरूपविशेषाश्रयादेकत्वप्रतीतिरिति चेत्तर्हि शब्दबुद्धिकर्मणां विरम्य व्यापाराभावादेकस्यैव प्रोक्षणं भवेत् । अथ सर्वेषां संस्कार्यत्वादावृत्तिराश्रयणीयेति चेत, तर्हि किमर्थमुक्तमुद्देश्यगतमनेकत्वं न विवक्षितमिति । तदा हि फलवत्त्यविवक्षा स्यात् यदैकत्वद्वित्वान्यतरसंख्यावच्छिन्नस्य सामर्थ्यात्प्राप्तौ सत्यां बहुत्वसंख्यावच्छिन्नस्य शब्दबोध्यस्याविवक्षामाश्रित्य सामर्थ्याक्षेपाद्यथा प्राप्तेषु सर्वग्रहेषु संमार्गोऽङ्गीक्रियते ।

किंच विवक्षितमविवक्षितं वेति जिज्ञासाऽपि तत्रैव यत्र कर्तृकालदेशफलसंस्कार्याणां विधिबोधिता भिन्ना संख्या, भिन्ना च सामर्थ्याक्षिप्ता । नचैवं प्रकृते । तस्मान्मन्त्रात्मकवेदगतं बहुत्वं न विवक्षितमित्येतद्रिक्तं वचः । अथासादनक्रमदर्शनसंजातः प्रोक्षणेऽपि क्रमसंशयो विना प्रमाणं कथमपनेय इति चेत् । तर्हि युगपदनेकप्रोक्षणस्य लाघवात्प्राप्तौ क्रमे किं प्रमाणमिति विपरीता प्रमाणापेक्षा । अथ शुद्धभावेन पृच्छामि विना प्रमाणं कथं संशयोऽपनेय इति । सर्वपात्राणां युगपत्प्रोक्षणे शक्यानुष्ठाने किं सकृदेव कर्तव्यं किंवा आसादने क्रमदर्शनात्क्रम आश्रयणीय इति । शब्दावगम्येऽर्थे शब्द एव प्रमाणं नान्यदिति मन्त्रलिङ्गमेव प्रमाणं, शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यत इति न्यायादिति । एतेन प्रोक्षणकर्तव्यताबोधकवेदविनियुक्तमन्त्रस्मारितबहुत्वस्य कथमुद्देश्यगतत्वं साक्षादुद्देश्यगतस्य पूजार्थतां नोपपादयाम इत्यपास्तम् । क्रियाहेत्वर्थस्मारकमन्त्रगतबहुत्वस्याप्युद्देश्यगतबहुत्वतात्पर्यकत्वात् । यत्परः शब्दः स शब्दार्थ इति न्यायात् । तथापि प्रतिसंस्कार्यं न्यायाकृष्टा संस्कारावृत्तिः कथमपहस्तयितुं शक्येति चेत् । न । व्रीहीन्प्रोक्षतीत्यत्र व्रीहीणामपि संस्कार्यत्वात्प्रतिव्रीहिप्रोक्षणापत्तेः । ननु चरुपुरोडाशाद्यनेकहविषां सकृदेव प्रोक्षणं कुतो नेति चेत् । यद्यस्यै देवतायै हविर्भवति तस्यै मेध्यं करोतीति देवतोद्देश्यकहविःसंबन्धेन प्रोक्षणसंबन्धं दर्शयन्ती श्रुतिरेवात्र प्रमाणमित्युत्तरदानं यथा, तथा यज्ञपात्राणि प्रोक्षति दैव्याय कर्मणे शुन्धध्वमित्येवमाकारा सकृत्प्रोक्षणादेः श्रुतिरेवात्र प्रमाणमिति किं पुनर्भवतोऽमुना विकत्थविक्षोभमात्रेण । अपरे तु—पात्राणि प्रोक्षति व्रीहीन्प्रोक्षतीत्यादौ पात्रव्रीह्यादेः संस्कार्यतामेव नाङ्गीकुर्मः । तथाच कथं प्रतिसंस्कार्यं संस्कारावृत्तिः । तत्र परेषामयमाशयः—व्रीहीन्प्रोक्षतीत्यादौ व्रीह्यादेस्तावत्प्रोक्षणादिकर्मता प्रतीयते । सा च तत्फलाधारत्वव्यतिरेकेणानुपपद्यमाना व्रीह्यादेस्तत्फलाधारतां बोधयति । कथमन्यथा प्रोक्षितानामेवावघातादावुपयोगः । प्रोक्षणस्य चिरध्वस्तत्वात् । नच प्रोक्षणमुपलक्षणं तद्ध्वंसो वा व्यापार इति वक्तुं शक्यम् । यागादौ तथाभावप्रसंगेनापूर्वकल्पनाया अभावप्रसङ्गात् । चेतनस्य संस्कार्यत्वे व्रीहेः कर्मता न स्यादित्युक्तम् । तथाच पात्रव्रीह्यादिषु कर्मत्वान्यथानुपपत्तिप्रसूतार्थापत्त्या पात्रादेः संस्कार्यतायामावेदितायां प्रतिसंस्कार्यं संस्कारावृत्तिरपि न्यायसमर्पितैवेति तेषां निगर्वः । अत्र वदन्ति । प्रोक्षणादिजन्योऽतिशयः यागजन्यातिशयसमानाधिकरण एव कल्प्यते लाघवात् । नच चेतनस्य संस्कार्यत्वे व्रीहेः कर्मत्वानुपपत्तिः । प्रोक्षणजन्यसंयोगरूपफलभागित्वेनैव तदुपपत्तेः । नच संयोगावच्छिन्नक्रियाविशेषस्यैव प्रोक्षणपदार्थतेति वाच्यम् । ग्रामं गच्छतीत्यादौ ग्रामादेस्तादृशक्रियानाधारत्वेन कर्मत्वानुपपत्तिप्रसङ्गात् । तस्माद्यथा क्रियाविशेषणीभूतसंयोगाधारतया ग्रामादेः कर्मत्वं तथा प्रकृतेऽपीति । कथमन्यथा सक्तून्प्रोक्षतीत्यादौ लौकिकप्रोक्षणे सक्तूनां कर्मता । किंच व्रीहीन्प्रोक्षतीत्यत्र व्रीहेः प्रोक्षणजन्यसंस्काराश्रयत्वे कल्प्यमाने किं प्रतिव्रीहिव्यक्ति आवृत्तयो भिन्नाः व्रीहिसमसंख्याः संस्काराः कल्प्यन्ते, यद्वा यावद्व्रीहिव्यक्तिवृत्त्येक एव वा । न तावदाद्यः गौरवात् । न द्वितीयः किंचिद्व्रीहिनाशात्तन्नाशे अवशिष्टव्रीहेरुत्तरत्रोपयोगोऽवघातादौ न स्यात् । नच यावदाश्रयनाशः प्रयोजक इति वाच्यं, गौरवात् । तस्माच्चेतन एव संस्कार्यः । एवं च चेतनसमवेतसंस्कारेण स्वरूपसंबन्धाद्वा व्रीहेः कर्मत्वमिति न किंचिदनुपपन्नमित्याहुः । 'निरुप्याज्यं' । कुशैरसत्त्वितिकात्यायनोक्तेः कुशोपग्रहः सन् आज्यस्थाल्यामाज्यं प्रक्षिपेदित्यर्थः । 'अधिश्रित्य' अग्नेरुपरीति शेषः । प्राक्सूत्रादाज्यपदानुवृत्तिः । उपलक्षणमेतत् । तथाच चर्वाद्यविनाभूतक्रियायां चर्वादिकमप्यधिश्रित्येत्यर्थः । 'पर्यग्नि कुर्यात्' अधिश्रितघृतचर्वादेः परित एकं ज्वलदुल्मुकं प्रादक्षिण्येन भ्रामयित्वाऽप्रदक्षिणं कर्मानयेदित्यर्थः । ततः श्रपणम् । स्रुवं प्रतप्य । अर्धशृते चर्वादौ स्फ्योपग्रहः । 'स्रुवं प्रतप्य' खादिरोऽरत्निमात्रः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करः । स्फ्योऽस्याकृतिः । कात्यायनप्रणयनात् । 'संमृज्य' कुशैरिति शेषः । ते च त्रयः पञ्च सप्त वा आचारात् । 'अभ्युक्ष्य' प्रोक्षणीनां

क्लृप्तत्वात्तज्जलेनेति शेषः । 'पुनः प्रतप्य' पुनःपदोपादानात्स्रुवमिति शेषः । 'निदध्यात्' स्थापनीयचर्वादेर्दक्षिणत इत्यर्थः । 'आज्यमुद्वास्य' कुशोपग्रहः घृतमुदीच्यामवतारयेत्यर्थः । ततः प्रोक्षण्यपरेण निधानम् । 'उत्पूय' पवित्राभ्यामिति शेषः । 'अवेक्ष्य' आज्यमिति शेषः । 'प्रोक्षणीश्च पूर्ववत्' पवित्राभ्यामुत्पूयेत्यर्थः । प्रोक्षण्यादानं समिद्विस्रंसनं पक्षाद्यादिष्वष्टादश अन्यत्र त्रिंशतिः । समित्प्रोक्षणं, वेदिप्रोक्षणम् । अग्नेरपरस्यामुदगग्रस्य बर्हिषः प्रोक्षणम् । सशेषो मूलावसेकः । प्रोक्षणीपात्रनिधानं, बर्हिर्वन्धनमास्तीर्य कुशैरवच्छादनम् । त्रिवृत्स्तरणं बर्हिषः । शृतस्य चर्वादेरभिघारः । उद्वासनं शृतानां तु पूर्वेण उद्वासितानां तु पृष्ठतः । आज्याद्युत्तरस्यां क्रमेण निधानम् । क्रमेण चर्वादौ प्राणदानम् । वेद्यां बर्हिषि आज्यादिक्रमेण निधानम् । 'उपयमनान्कुशानादाय' उपयमनसंज्ञकान्कुशान् दक्षिणहस्तेन गृहीत्वा सव्ये कृत्वा । 'समिधोऽभ्याधाय' तिष्ठन्सप्तदशसमिधः विकृतौ प्रकृतौ पक्षादिषु पञ्चदश समिधः । अग्नौ प्रक्षिप्य सर्वेषु कर्मप्रतिश्रुतादिषु प्रादेशमात्रीः पालाशीः समिधः सप्तदश हुत्वा पश्चात्स्रुवग्रहणं, पूर्णमासयोः पञ्चदशेति शाङ्खायनसूत्रात् । 'पर्युक्ष्य' दक्षिणहस्तोपात्तेन सपवित्रेण प्रोक्षणीजलेन अग्निमिति शेषः । प्रोक्षणीपात्रं च संस्रवधारणार्थं प्रणीताग्न्योरन्तरा स्थाप्यम् । 'जुहुयात्' आघाराज्यभागादिनामधेयाः आहुतीरिति शेषः । 'एष एव विधिर्यत्र क्वचिद्धोमः' एषः परिसमूहनादिपर्युक्षणान्तो विधिः क्रियाकलापः । एवकारस्तु प्रणयनादिक्रियाकलापे कस्त्वेत्यादिमन्त्रजन्यार्थस्मृतेः करणत्वव्यवच्छेदार्थः । इयं परिभाषा ॥ १ ॥

आवसथ्याधानं दारकाले ॥ १ ॥ दायाद्यकाल एकेषाम् ॥ २ ॥ वैश्यस्य बहुपशोर्गृहादग्निमाहृत्य ॥ ३ ॥ चातुष्प्राश्यपचनवत्सर्वम् ॥ ४ ॥ अरणिप्रदानमेके ॥ ५ ॥ पञ्चमहायज्ञा इति श्रुतेः ॥ ६ ॥ अग्न्याधेयदेवताभ्यः स्थालीपाकꣳश्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति ॥ ७ ॥ त्वन्नोऽअग्ने सत्वन्नोऽअग्ने इमम्मेवरुण तत्त्वायामि ये ते शतमयाश्चाग्न उदुत्तमं भवतन्न इत्यष्टौ पुरस्तात् ॥ ८ ॥ एवमुपरिष्टात्स्थालीपाकस्याग्न्याधेयदेवताभ्यो हुत्वा जुहोति ॥ ९ ॥ स्विष्टकृते च ॥ १० ॥ अयास्यग्नेर्वषट् कृतं यत्कर्मणात्यरीरिचं देवागातु विद इति ॥ ११ ॥ बर्हिर्हुत्वा प्राश्नाति ॥ १२ ॥ ततो ब्राह्मणभोजनम् ॥ १३ ॥ ॥ २ ॥

( कर्कः )—गृह्यस्थालीपाकानाङ्कर्म प्रक्रान्तमतो गृह्यस्यैवोत्पत्त्यर्थमिदमाह । 'आवसथ्याधानं दारकाले' इति आवसथ्यो गृह्यः शालाग्निरित्यनर्थान्तरं तस्याधानं स्थापनमात्मसात्करणमिति यावत् तद्दारकाले भवति । दारशब्देन पाणिग्रहणादिसंस्कारसंस्कृतं स्त्रीद्रव्यमभिधीयते । तस्याहरणकालो दारकालस्तत्र । केचित्तु पाणिग्रहणात्प्रागिच्छन्ति गृह्यकारान्तरवचनात् । एवं हि तेनोक्तम् । जायायाः पाणिञ्जिघृक्षन्नादधीतेति तत्पुनर्नातीव युक्तरूपम् । येनाद्याप्यसंस्कृतमेव स्त्रीद्रव्यम्, नचासंस्कृतं तत्सहायतां प्रतिपद्यते, ससहायस्य च कर्मस्वधिकारः । मध्यगं हि दम्पत्योर्द्रव्यन्नैकः शक्नोति परित्यक्तुम् । पत्न्यपि च तेन विनाऽनधिकृतैव, तस्मात्ससहायस्याधिकारः । तथाच लिङ्गम् । असर्वो हि तावद्भवति यावज्जायान्न विन्दत इति, अतः संस्काराभिनिर्वृत्त्युत्तरकालं दारकालः । अपि च स्मरन्ति तमेव दारकालम्प्रकृत्य धर्मे चार्थे च कामे च तया सह नातिचरितव्यमिति । पूर्वञ्च

क्रियमाणे आधाने एकाकिनाऽग्निराहितो भवति, तथा सत्यतिचारः स्यादिति । तस्माच्चतुर्थ्युत्त-रकालन्दारकाल इति सम्प्रदायः । यत्पुनरुक्तम् । वैवाहिकेऽग्नौ कुर्वीत गार्ह्यं कर्म यथाविधि । पञ्चयज्ञविधानञ्च पक्तिञ्चान्वाहिकीं गृहीति, तद्विवाहसम्बन्धादुत्तरकालमपि क्रियमाणोऽसौ वैवाहिको भवत्येव । 'दायाद्यकाल एकेषाम्' एकेषामाचार्याणाम्मते दायाद्यकाले कर्तव्यम् । दायाद्यकालश्च भ्रातृणान्धनविभागकालः, तस्मिन्हि काले स्वेन द्रव्येण कर्मानुष्ठानसमर्थो भवति । साधारणद्रव्यस्य हि परित्यागासामर्थ्यादनधिकार एव, अतोऽयं व्यवस्थितविकल्पः । अभ्रातृकस्य दारकाले भ्रातृमतो दायाद्यकाल इति । 'वैश्यस्य······स्सर्वम्' हुतोच्छिष्टोऽग्निरत्र गृह्यते असंस्कृतो वा अविरोधात् । 'अरणिप्रदानमेके' एके आचार्या अरणिसम्बन्धमिच्छन्ति, अरणिः प्रसिद्धा, प्रशब्द उपशब्दार्थे उपादाने च वर्तते । अरण्युपादानमेकेऽग्निमिच्छन्ति, एके वैश्यस्य कुलादित्युभयोर्विकल्पेन स्मरणम् । तत्र चातुष्प्राश्यपचनवत्सर्वङ्कर्म कर्तव्यम् । चातुष्प्राश्यपचनं यस्मिन्कर्मणि विद्यते तदि-हापि सर्वम्भवति । कुत एतत् । 'पञ्चमहायज्ञा इति श्रुतेः' पञ्च महायज्ञा हि श्रुतौ पठ्यन्ते त-त्साधनभूतश्चायमग्निः । श्रौतकर्मसाधनभूते चाग्नौ चातुष्प्राश्यपचनवतीतिकर्तव्यता दृष्टा । अयमपि श्रौतकर्मसाधनभूत एवेत्यभिप्रायः । तस्माच्चातुष्प्राश्यपचनवतीतिकर्तव्यताप्रवृत्तिरत्रापि । अपिचा-धाने सेतिकर्तव्यता दृष्टा इदमपि चाधानमेव । एवं हि श्रूयते एतदेव प्रकृत्य अथैनं वयन्त्वेव धा-स्यामह इति । तेनाधानसामान्यादिहापि प्रवर्तत एवेति । एवं स्थित उच्यते, एके आचार्या नेच्छन्त्यत्र चातुष्प्राश्यपचनवतीतिकर्तव्यताम् । यत्कारणम् । उपदेशेन वा धर्मः प्रवर्तते अतिदेशेन वा । न चात्रोपदेशो न चातिदेशः । तस्मान्नैव प्रवर्तते । कथन्तर्हीदमुक्तम् । यस्य नाम श्रौतकर्मसाधनभा-वेनाधानसामान्याद्वा प्रवृत्तिबुद्धिस्तन्निवर्तयितुमित्यदोषः । गृह्यकारान्तरैश्चानयैव भ्रान्त्या इयमिति कर्तव्यतोपदिष्टा तन्निराकरणायेह पूर्वपक्ष उपन्यस्तः । 'अग्न्या–इत्यष्टौ' स्थालीपाकं श्रपयित्वा इत्यु-च्यते माभूत्तद्भूतोपादानम् । अग्न्याधेयदेवताभ्य इति च वक्तुमशक्यम्, वक्ष्यत्यग्न्याधेयदेवताभ्यो हुत्वा जुहोतीति । उक्तञ्च तत्किमर्थम्, बहुत्वविशिष्टानामत्र देवतात्वं यथा स्यादिति । किञ्च स्यात् द्वे अप्यग्न्याधेयदेवते स्त एव, तयोरेव देवतात्वम्माभूदिति पुनर्ग्रहणाच्च बह्वीनान्देवतात्वम् । आज्य-भागाविष्ट्वाज्याहुतीर्जुहोतीति किमर्थमिदमुच्यते । आघारादीनाञ्चतुर्दशाज्याहुतीनाङ्क्रम उक्तः तत्राष्टा-ज्याहुतीनामवसरविधानार्थमाज्यभागग्रहणम् । अष्टग्रहणञ्च मन्त्रप्रतीकसंशयव्युदासार्थम् । अष्टौ पुर-स्तादाज्याहुतीर्जुहोत्यग्न्याधेयदेवताहोमस्य । 'एवमु–रिति' स्थालीपाकस्येत्यवयवलक्षणा षष्ठी । अग्न्याधेयदेवताभ्यो हुत्वा एवमुपरिष्टादष्टावेव आज्याहुतीर्जुहोति । हविरन्तरे सति प्राङ्महाव्या-हृतिभ्यः स्विष्टकृद्धोमो विहितः तस्मै हुत्वा, चशब्दादाज्याहुतिञ्जुहोति अयास्यग्नेरित्यनेन मन्त्रेण । 'बर्हिर्हुत्वा प्राश्नाति' बर्हिर्होमश्चात्रैव विधानसामर्थ्यादिहैव वचनान्नान्यत्र । 'ततो ब्रा-ह्मणभोजनम्' एकद्विबहुषु समासस्य तुल्यत्वादेकस्मिन्नपि चार्थस्य कृतत्वादेकस्यैव भोजनमिति ॥२॥

( जयरामः )—गृह्यस्थालीपाकानां कर्म प्रक्रान्तम् अतो गृह्यस्यैवार्थमिदमाह । 'आवस-थ्याधानमिति' आवसथ्यो गृह्यः शालाग्निरिति पर्यायाः । तस्याधानं स्थापनम् आत्मसात्करणमिति यावत् । तत्कदा भवतीत्यपेक्षायामाह । 'दारकाल इति' दारशब्देन पाणिग्रहणादिसंस्कारसंस्कृतं स्त्रीद्रव्यमभिधीयते, तस्याहरणकालो दारकालः । तत्र केचित्तु पाणिग्रहणात्प्रागिच्छन्ति । गृह्यका-रान्तरवचनात् । एवं हि तेनोक्तम् । जायायाः पाणिं जिघृक्षन्नादधीतेति । तत्पुनर्नातीव युक्तरूपम् । यतस्तदाऽसंस्कृतमेव स्त्रीद्रव्यं, न चासंस्कृतं तत्सहायतां प्रतिपद्यते, ससहायस्य च कर्मस्वधिकारः, उभयस्वामिकं हि दम्पत्योर्द्रव्यन्नैकः शक्नोति परित्यक्तुम् । पत्न्यपि तेन विनाऽनधिकृतैव, तस्मात्स-सहायस्याधिकारः । तथाच लिङ्गम् । असर्वो हि तावद्भवति यावज्जायान्न विन्दते । अतः संस्काराभि-

व्रीहितण्डुलपात्राणि मिमीते । तं चातुष्प्राश्यं पचत्युद्वास्यासेचनं मध्ये कृत्वा सर्पिरासिच्याश्वत्थी-स्तिस्रः समिधो घृताक्ता आदधाति समिधाग्निमिति प्रत्यृचमुपत्वेति जपति द्वितीयां वाऽध्वर्युः । चत्वारो ब्राह्मणाः प्राश्नन्ति चतुर्थोऽध्वर्युस्ततोऽध्वर्यू राद्धस्ते ब्रह्मौदन इत्याह । ततो यजमानश्चातुष्प्राश्यभो-क्तृभ्यो वरं ददाति । ततो यजमानश्छन्दांस्यनेन प्रीणीम इत्याह । एवमावसथ्याधानदिवसात्प्राग-व्यवहितसंवत्सरपरिपूर्तिपर्यंतं प्रत्यहं चातुष्प्राश्यं पक्त्वाऽध्वर्युप्रभृतिभ्यश्चतुर्भ्यो भोजयित्वा वरं च दत्त्वा तावच्चातुष्प्राश्यसंस्कृतेऽग्नौ पूर्णाहुतिहोममावसथ्यहोमं च कृत्वा आधेयदेवताभ्यः स्थालीपाकं श्रपयित्वेत्यादिवक्ष्यमाणमाधानाङ्गं चरुं श्रपयेत् । पूर्णाहुतिहोमो वक्ष्यते । अयं च सर्वोऽप्यर्थश्चातुष्प्रा-श्यपचनवत्सर्वमेतत्सूत्रातिदिष्टाऽग्निहोत्राधानधर्मलाभाल्लभ्यते । केचित्तु वैश्यादिकुलादग्निमाहृत्य चातु-ष्प्राश्यं पक्त्वा चतुर्भ्यो दत्त्वा वरं च दत्त्वा तत्कालमेवाग्न्याधेयदेवताभ्यः स्थालीपाकादीच्छन्ति । अप-रे तु पञ्चसंस्कारान्कृत्वा अग्निप्रतिष्ठाप्य चातुष्प्राश्यं पक्त्वा ब्राह्मणेभ्यो दत्त्वाग्न्याधेयदेवताभ्यः स्था-लीपाकादीच्छन्ति । अत्रापि स्थालीपाकादौ विशेषः अग्रे लेखनीयः । एवमाहरणपक्षमुक्त्वा इदानी-मारणेयपक्षमाह—'अरणिप्रदानमेके' यजमानायाऽध्वर्युः करोतीति शेषः । अरण्योः शास्त्रोक्तलक्ष-णयोः अधरोत्तरयोः प्रदानं प्रकर्षेण दानमाधानप्राग्दिने दिने दिवाशनदेवाः पितर इत्यादिजपानंतरं पूर्वद्वाराऽगारं प्रविश्याग्नेर्जघनभागे पत्न्युत्तरेणोपविष्टायाशनप्राक्कालकृताभ्युदयिकाय यजमानाय शा-स्त्रोक्तविधिना दानं प्रकर्षः । दानमित्यत्र द्वितीयान्तकर्माकृष्टमध्वयुरित्येतत्कर्तृपदं कर्मणः कर्त्र-धीनत्वात् । धात्वर्थाकृष्टं च यजमानायेत्येतत्संप्रदानवाचिपदं दानस्य संप्रदानाधीनत्वात् । ननु तथापि कर्तृसंप्रदानयोरर्थाध्याहार एव घटते न पदाध्याहार इति चेन् न । पदाध्याहारस्यापि सकलतान्त्रि-कैकवाक्यतापन्नत्वात् । विस्तरभयान्न लिख्यते । एके श्रौतस्मार्ताद्याचारे आचार्या इत्यर्थः । तथा-चोद्भटपण्डावतामयमेव सिद्धान्तपक्ष इत्यभिप्रायः । अत्र हेतुमाह—पञ्च महायज्ञा इति श्रुतेः । अथा-रणी पाणौ कृत्वेत्याद्यग्निष्टोमे अरण्योः पाणिकरणं श्रुत्या प्रतिपाद्यते तच्चारणिसाध्यम् । एवं चासा-द्य हवींष्यग्निमधरारणिं निदधातीत्यादिश्रुत्या मन्थनक्रियापीष्टाङ्गतया प्रतिपाद्यते । साप्यरणि-साध्या । एवं चासाद्य हवींष्यग्निमन्थनादि श्रूयते । एवं च वेदबोधितकर्तव्यतास्तोमस्यारणि-साध्याग्निसाध्यत्वेन पञ्चमहायज्ञानामपि वेदबोधितकर्तव्यताकत्वात्तेषां चावसथ्याग्निसाध्यत्वादा-वसथ्याग्नेरप्यारणेयतैव सिद्धान्तः । तदिदमुक्तं पञ्चमहायज्ञा इति श्रुतेरिति । अत्राप्ययं पदार्थ-क्रमः । आदौ देहशुद्धिः । कालानतिक्रमश्चेत्तत्कालमेवाधानम् । कालातिक्रमे यावन्त्यब्दान्यतीतानि निरग्नेर्विप्रजन्मनः । तावन्ति कृच्छ्राणि चरेद्धौम्यं दद्याद्यथाविधि इत्यादिस्मृतिबोधितं प्रायश्चित्ता-चरणं कृत्वाऽऽवसथ्यं कुर्यात् । एतच्च आहरणपक्षोपपादनप्रस्तावे उपपादितं तत्रैवानुसंधेयम् । ततः आधानपूर्वदिने पूर्वाह्णे देशकालौ संकीर्त्यावसथ्याग्निमहमाधास्य इति संकल्प्य मातृपूजाभ्युदयिके विधा-याऽध्वर्युं वृणीते पूर्ववत्संकल्प्य ततस्तं गन्धपुष्पादिभिरभ्यर्च्य मधुपर्केण वा पूजयित्वा स्वस्य माङ्ग-ल्याशीर्ग्रहणं च (ब्राह्मणानां च अर्थात्) । ततोऽन्यगारकरणमध्वर्योः । पौर्णमासवद्वपनं यजमानस्य । उपलब्धक्षौमसमर्पणमध्वर्योः । दम्पत्योर्यजमानयोर्मन्त्रेण परिधानम् । तत आचमनम् । ततोऽध्वर्युः खरे पञ्चसंस्कारान् करोति । आहरणपक्षोक्तयोनेराहरणं, खरे स्थापनं, यजमानो भुङ्क्ते । सूर्यास्तस-मीपेऽन्यगारप्राग्द्वाराग्रे दर्भास्तृतायां भूमौ पत्न्युत्तरत उपविश्य तिष्ठतो वा यजमानस्य देवाः पितर इति जपः । पूर्वद्वारेण प्रविशति यजमानो दक्षिणेन पत्नी । पश्चादग्नेरुपविशतः दक्षिणतः पत्नी । ततोऽध्वर्युः अश्वत्थशमीगर्भारणी शास्त्रोक्तलक्षणे आचारादहतवस्त्राच्छादिते यजमानाय समर्पयति । यजमानः अङ्के स्थापयति । पत्न्यपि अधरारणिं यजमानाङ्काद्गृहीत्वा स्वाङ्के स्थापयति । आवसथ्याग्निसाधनभूते इमे अरणी आवाभ्यां परिगृहीत इत्यङ्गीकारं कुरुतः । इमानि पात्राणि

परिगृहीतानीति पात्राणि परिगृहीतः । ततः पीठादौ स्थापिते अरणी चन्दनादिभिः पूजयतः । द्विजाशीः प्रतिगृह्य देवब्राह्मणान्नमस्यतः । ततोऽस्तमिते सवितरि आवसथ्यागारेऽजं वध्नाति न वा । तत आहरणपक्षवच्चातुष्प्राश्यपाको वरदानान्तः । एके अध्वर्यवे वरदानमिच्छन्ति न सर्वेभ्यः । प्रतिग्रहकर्तुरभीष्टदातुर्दानशक्यं द्रव्यमुच्यते वरः । समर्थश्चेत्तदा चतुःकार्षापणो वरः । ततः स्थापितस्याग्नेः रात्रौ जागरणधारणे काष्ठैर्गोमयपिण्डैर्वा न समुक्षितैः । ततः प्रातः प्रत्यूषे स्नात्वा त एव वस्त्रे पुनः प्रक्षाल्य शोषयित्वा पत्नीयजमानौ परिधीयाताम् । अध्वर्युरपि प्रातः स्नात्वा तमग्निमुपशमय्य वाचं यच्छापूर्णाहुतेरिति यजमानं प्रेष्यति । तत आपूर्णाहुति वाग्यतो भवति यजमानः । ततोऽध्वर्युरावसथ्यखरे पञ्चसंस्कारान् कृत्वा पुनरुल्लिख्याभ्युक्ष्याऽन्वारब्धे हिरण्यं निधायोपाखूत्करनिवपनान्तमाहरणपक्षवत्करोति । हिरण्यमुपर्येके । तत आचाराद्रक्षेण खरमाच्छाद्योदिते सूर्येऽनुदिते वा मन्थनं कुर्यात् । तत्र पूर्वमन्वमानयेति प्रैषो यजमानपुरुषं प्रति । अग्नेरपरभागे दर्भास्तृतायां भुवि उत्तराग्रामधरारणिं निधायोत्तरारणेरीशानदिक्स्थं प्रमन्थं छित्त्वा श्लक्ष्णं कृत्वा चात्रबुध्नगतगर्तमध्ये प्रोतयेत् । ततोऽधरारणेर्मूलादष्टाङ्गुलं त्यक्त्वाऽग्राच्च द्वादशाङ्गुलम् । अन्तरं देवयोनिः स्यात्तत्र मथ्यो हुताशन इत्यनेन देवयोनौ प्रमन्थनं कुर्यात् । यजमानस्य यन्त्रधारणम् । पत्न्याः मन्थनम् । तयोरशक्तावन्ये यन्त्रं धारयन्ति मथ्नन्ति च । जातेऽग्नावध्वर्यवे वरदानम् । मनसैके । ततः शरावादिनाऽग्निं धृत्वा धूप्यमानेऽग्नौ श्वासप्रक्षेपः । प्राणममृते दध इति । तत उच्छ्वासोऽमृतं प्राण आदध इति । ततो दारुभिर्ज्वलन्तमग्निं भूर्भुवः आदित्यानां त्वेत्यादिमन्त्रेणाहरणपक्षवत् खरे स्थापयति । अश्वस्योत्सर्गः । अजस्य च । ततः पूर्णाहुतिहोमः । आज्यनिर्वापः, अधिश्रयणं, स्रुक्स्रुवयोः संमार्गः, आज्योद्वासनं, पवित्राभ्यामुत्पवनमवेक्षणं, चतुर्गृहीतग्रहणं, चतुर्थेऽन्यस्रुवेण स्रुचं पूरयेत् । परिस्तरणं तिष्ठन्त्समिदाधानमुपविश्य अग्निं ध्यात्वा यजमानान्वारब्धो जुहोति । वरं ददामीति वाग्विसर्जनम् । इदमग्नय इति त्यागो वरदानं ततस्तूष्णीमावसथ्यहोमः । तिष्ठन्त्समित्प्रक्षेपः । उपविश्य पर्युक्षणम् । प्रथमामाहुतिमग्निं ध्यात्वा हुत्वाग्नेयं त्यक्त्वा द्वितीयां च पात्रान्तरे प्रक्षिप्य तृतीयां सूर्यं ध्यात्वा जुहोति । इदं सूर्यायेतित्यागः । चतुर्थीं गृहीत्वा द्वितीयया सह प्रजापतिं ध्यात्वा जुहोति । इदं प्रजापतये इति त्यागः । अपरे पुनः सद्यस्कालतामावसथ्याधानस्येच्छन्ति । अग्न्याधेयं न केवलं होमान्तमावसथ्यं किन्त्वन्यदप्यस्तीत्याह—'अग्न्याधेयेति' अग्नयो गार्हपत्यादय आधीयन्ते निष्पाद्यन्ते यस्मिन्तदग्न्याधेयमग्निहोत्रमित्यर्थः । तस्मिंस्तस्य वा देवता अग्न्याधेयदेवताः, अग्निः पवमानोऽग्निः पावकोऽग्निः शुचिरदितिस्ताभ्यः, स्थाल्यां पाकः स्थालीपाकः, तमग्निहोत्राधानदेवतोद्देश्यकं स्थालीपाकमित्यर्थः । श्रपयित्वा परिभाषाशास्त्रोक्तविधिना पक्त्वाऽऽज्यभागान्तं कृत्वा । तथा च,—आघारान्तं हुत्वा दक्षिणतो ब्रह्मासनमास्तीर्येत्यारभ्य पर्युक्षणान्तां परिभाषां निर्वर्त्य स्रुवेणाज्यमादाय प्रजापतये स्वाहा इन्द्राय स्वाहेत्याघारसंज्ञके आहुती हुत्वाग्नये स्वाहा, सोमाय स्वाहेत्याज्यभागान्तं कृत्वेत्यर्थः । तत्र विशेषः—अग्नये पवमानायाग्नये पावकायाग्नये शुचयेऽदित्यै त्वा जुष्टं गृह्णामि । एवं त्रिः । तूष्णीं चतुर्थम् । प्रोक्षणे अग्नये पवमानायाग्नये पावकायाग्नये शुचयेऽदित्यै त्वा जुष्टं प्रोक्षामि । शेषं प्रकृतिवत् । आज्यभागान्ते आज्याहुतीर्जुहोति । आज्येनाहुतय आज्याहुतयस्ताः त्वन्नोऽअग्ने, स त्वन्नो अग्ने, इमं मे वरुण, तत्त्वा यामि, ये ते शतम्, अयाश्चाग्ने, उदुत्तमं, भवतन्नः इत्यष्टौ प्रतिमन्त्रमाज्याहुतीर्जुहोतीत्यन्वयः । तथा चाष्टमन्त्राथ[illegible] [illegible] । आज्यभागादिस्विष्टकृदन्तमाहुतीनाम[illegible] मन्त्रवर्णानुसारेण [illegible] १ । [illegible] २ । इदं वरुणाय ४ । [illegible] ५ । इदमग्नये [illegible] ६ । इदं

वरुणायादितये ७। इदं जातवेदोभ्याम् ८ 'पुरस्तात्। एवमुपरिष्टात्स्थालीपाकस्याग्न्याधेयदेवताभ्यो हुत्वा जुहोति' प्रागुक्ताभ्यः अग्निहोत्रदेवताभ्यः स्विष्टकृत्सहिताभ्यः स्थालीपाकं हुत्वा पुरस्ताद्यथाऽष्टर्चहोमः कृतः एवमुपरिष्टात्स्थालीपाकहोमानन्तरमष्टर्चं जुहुयादित्यर्थः। ननु पुरस्तादित्येतत्पदं व्यर्थमाज्यभागाविष्ट्वाज्याहुतीरित्यनेनैव स्थालीपाकहोमात्प्राक्तस्य लब्धत्वादिति चेत्। न। उत्तरसूत्रातिदेशप्राप्त्यर्थत्वात्। स्विष्टकृते·····गातुविद इति। अत्र चशब्दोऽप्यर्थः। अपिश्च समुच्चयार्थः पुरस्तादेवमुपरिष्टादित्येतत्सूत्रांशं समुच्चिनोति। स्विष्टकृद्धोमेऽप्ययास्यग्नेरित्यारभ्य विदः स्वाहेत्यन्तामाज्याहुतिं पुरस्तादेवमुपरिष्टाज्जुहोतीत्यन्वयः। तथाच स्थालीपाकेन प्रधानाश्चतस्र आहुतीर्हुत्वा अयास्यग्नेरित्याज्याहुतिं हुत्वा स्थालीपाकेन स्विष्टकृद्धोमं कृत्वा पुनरयास्यग्न इत्याज्याहुतिं जुहुयादित्यर्थः। ततः स्थालीपाकहोमोत्तरकालीनोऽष्टर्चहोमः। ततो महाव्याहृत्यादिप्राजापत्यान्ता नित्या वक्ष्यमाणा नवाहुतयः। 'बर्हिर्हुत्वा प्राश्नाति' पाकयज्ञेष्ववत्तस्यासर्वहोमो हुत्वा शेषप्राशनमित्यस्यानुवादोऽयं प्राश्नातीति। एतच्च कदा कर्तव्यमित्याकाङ्क्षायामुक्तं बर्हिर्हुत्वेति। प्राश्नातीत्यनेन श्रुतौ दृष्टानि प्रतिपत्तिकर्माणि लक्ष्यन्ते। तथाहि। मार्जनं पवित्रयोः स्मार्तेऽग्नौ प्रक्षेपः, ततः पूर्णपात्रवरयोरन्यतरदावसथ्याधानस्य साङ्गतासिद्ध्यर्थं पूर्णपात्रं वरं वा दक्षिणां चतुर्मुखप्रीतये संप्रददे इति संकल्प्य कस्मैचिद्विप्राय दद्यात्। चतुर्थीकर्मादौ उपविष्टाय ब्रह्मणे दद्यात्। ततः सर्वप्रायश्चित्तहोमः। व्यस्ताः समस्ताश्चतस्रो महाव्याहृतयः, त्वन्नः, सत्वन्नः, अयाश्चाग्ने, येतेशतं, उदुत्तमम्, एतदाहुतिनवकं सर्वप्रायश्चित्तसंज्ञकं, ततः प्रणीताविमोकः, तत एकस्मै वक्ष्यमाणलक्षणाय ब्राह्मणाय भोजनं दद्यात्। कर्मापवर्गे समित्प्रक्षेपोऽग्नौ। उत्सर्जनं ब्रह्मणः उपयमनकुशानामग्नौ प्रक्षेपः। अयं च पदार्थक्रमः प्राश्नातीत्येतत्सूत्रलक्षितो लभ्यते। 'ततो ब्राह्मणभोजनम्, आवसथ्ये त्रयस्त्रिंशदिति परिशिष्टात्त्रयस्त्रिंशत्संख्याकेभ्यो ब्राह्मणेभ्यो भोजनदानम्। केचित्तु त्रयोविंशतिमिति पाठमाहुस्तन्मते त्रयोविंशतिसंकख्याकेभ्य एव भोजनदानम्। ते चाध्ययनशीलास्तपस्विनो ज्ञेयाः। शाङ्खायनगृह्यकारोऽपि। कर्मापवर्गे ब्राह्मणभोजनं वाग्रूपवयःश्रुतशीलवृत्तानि गुणाः श्रुतं तु सर्वानत्येति न श्रुतमतीयात्। मन्त्राश्च ब्राह्मणं चैव श्रुतमित्यभिधीयते। अधिदैवतमध्यात्ममधियज्ञमिति त्रयम्। क्रियावन्तमधीयानं श्रुतवृद्धं तपस्विनम्। भोजयेत्तं सकृद्यस्तु न तं भूयः···दश्नुते(?) यां तितर्पयिषेत्कांचिद्देवतां सर्वकर्मसु। तस्या उद्दिश्य मनसा दद्यादेवंविधाय वै। नैवंविधे हविर्न्यस्तं न गच्छेद्देवतां क्वचित्। निधिरेष मनुष्याणां देवानां पात्रमुच्यते इति। तथा चैवंविधानां ब्राह्मणानां त्रयस्त्रिंशत्संख्याकानां त्रयोविंशतिसंख्याकानां वा भोजनमिति षष्ठीतत्पुरुषः। प्रयोगश्चैवम्—देशकालौ संकीर्त्य कृतैतदावसथ्याधानकर्मणः साङ्गतासिद्ध्यर्थं यथासंपन्नेनान्नेनातृप्तिपर्याप्तेन त्रयस्त्रिंशत्संख्याकान् त्रयोविंशतिसंख्याकान्वा ब्राह्मणानहं तर्पयिष्ये इति। एतेन लाघवादेकमेव ब्राह्मणमावसथ्ये भोजयेदित्येवं वर्णयन्तो हरिहरादयः प्रत्युक्ता वेदितव्याः। ततः सुप्रोक्षितादि कृत्वा आत्मवाससी पत्नीवाससी च अध्वर्यो तुभ्यमहं संप्रदद इत्यात्मपत्नीपरिहितवस्त्रदानमध्वर्यवे, बृहस्पतये त्वेति प्रतिग्रहः। ततो यजमानस्य माङ्गल्याद्याशीर्वादांश्च द्विजाः पठेयुः। इत्यावसथ्याधानम्।

प्रसङ्गात्किंचिल्लिख्यते—। अधिकारे सत्यालस्याद्वर्षमाधानाकरणे चान्द्रायणम्। मासातिक्रमे त्वेकमुपोषणम्। तदुक्तं—कृतदारो गृहे ज्येष्ठो यो नादध्याद्धुताशनम्। चान्द्रायणं चरेद्वर्षं प्रतिमासमहोऽपि वा। अथ कृताधान आलस्याच्चेदग्निं त्यजति मासद्वयं स प्राजापत्यं चरेत्। मासचतुष्टयं चेदतिकृच्छ्रम्। मासषट्कं चेत्पाराकः। संवत्सरं चेत्पयोव्रतम्। तदाह व्याघ्रपादः—मासद्वयं तु यो वह्निं त्यजेदेतत्समाचरेत्। नास्तिक्यात्कृच्छ्रमेकं तु होमद्रव्यं ददाति चेत्। तथा योऽग्निं त्यजति नास्तिक्यात्प्राजापत्यं चरेद्द्विजः। अन्यत्र पुनराधानमुपदिष्टं मनीषिभिः। तथा। चतुष्टये तु संपूर्णे

मासानां तु हुताशनम्। त्यक्त्वातिकृच्छ्रं कुर्वीत ततः पापात्प्रमुच्यते। तथा। षण्मासास्त्यजते योऽग्निं पाराकं स समाचरेत्। ऊर्ध्वं पयोव्रतं कुर्यान्मासमेकं समाहितः। इति। संवत्सराधिककालातिक्रमे पयोव्रतं कृत्वा द्वैमासिकादि समाचरेत्। तदुक्तं स्कंदपुराणे—ऊर्ध्वं संवत्सरादग्निं यस्त्यजेत्स पयोव्रतम्। द्वैमासिकं ततः कृत्वा त्रैमासिकमथापि वा। एवमधिकोनकालीनाग्निपरित्यागे प्रायश्चित्ताधिक्यं न्यूनत्वं च परिकल्पनीयम्। त्यागकालीनहौम्यं च विप्रेभ्यो देयम्। तदुक्तं भारद्वाजगृह्ये—, यावत्कालमहोमी स्यात्तावद्द्रव्यमशेषतः। तद्दानं चैव विप्रेभ्यो यथा होमस्तथैव तदिति। एवं प्रायश्चित्ताचरणं कृत्वा हौम्यं च दत्त्वा पुनराधानं कुर्यात्। एतच्च नास्तिक्यादग्निपरित्यागे। विपत्तौ तु शरीरशुद्धिं संपाद्य हौम्यं दत्त्वा पुनराधानं कुर्यात्। प्रसङ्गात्पुनराधाननिमित्तान्युच्यन्ते—अग्नावनुगते यस्य होमकालद्वयं व्रजेत्। उभयोर्विप्रवासे वा लौकिकाग्निर्विधीयते ॥ १ ॥ एवं, विहायाग्निं सभार्यश्चेत्सीमामुल्लङ्घ्य गच्छति। होमकालात्यये तस्य पुनराधानमिष्यते ॥ २ ॥ अग्नौ विना समारूढ ऊर्द्ध्वं शम्यापरासनात्। हुतोऽग्निर्लौकिको ज्ञेयः श्रुतौ सर्वत्र दर्शनात् ॥ ३ ॥ कुरुक्षेत्रादितीर्थानां गमने देशविप्लवे। समारोपं विनैवाग्निं नोद्वहेद्बुधो विपश्चितः ॥ ४ ॥ आरोप्याऽग्नीनरण्योः स्वानुद्वसयेत्सहाग्निभिः। मथ्यमानस्य दृष्टस्य नाशे, प्रत्यक्षस्य सीमान्तरनयने होमं विना वर्षातिक्रमे, उदकेनोपगमे, शिक्येनोद्वहनेऽग्निं विना शतयोजनपर्याप्तमार्गातिक्रमे, अन्त्यजादिनाग्नेरुपघाते प्रसिद्धक्रियालोपे प्रवासादिनाऽग्नेरुपेक्षायां, प्रमादादधारणे, यजमानयोः प्रवासे होमसमयेऽनागतयोरेकपत्नीके पत्यौ प्रवसिते पत्न्याः अग्निं विना समुद्रगनदीसंतरणे भयेन च विनाऽग्निना सहापि तादृग्नदीसंतरणे पत्न्याः सीमातिक्रमणे पत्यावनागते एके, एवं पत्न्या रजोदोषे सूतके मृतके वा होमकाले वा पर्वणि वा यजमानस्य प्रवासे धूपदीपादिकरणे, स्वेदादिकरणे प्रत्यहीग्रपाकाकरणे, अव्यवधानं पक्षत्रयसमारोपेऽनुपहताभ्यां पूर्वारणिभ्यां पुनराधानं कुर्यात्। अनुपहतेति पूर्वारणी मन्थनादिना मन्थनायोग्ये चेत्तदाऽन्ये शास्त्रोक्तलक्षणे नूतने ग्राह्ये। अनुपहते अयोग्ये शकलीकृत्य दाह्ये। उपहते तु अप्सु निक्षेप्तव्ये। नष्टायामप्यरणौ अग्निश्चेद्वेश्मनि तिष्ठेत्तदाग्निस्थितिपर्यन्तं होमादि सर्वं कुर्यात्। उपशान्ते तस्मिन्पुनराधानं कुर्यात्। पुनराधानमप्याधानवद्भवति। प्रवसिते भर्तरि आधानं पुनराधानं च न भवति। काम्यनित्यनैमित्तिकानुष्ठानं भवति। साग्निकस्य धनार्थमेव प्रवास इति केचित्। अपरे तु सहाग्निः सपत्नीकस्तीर्थानि व्रजेदित्याहुः। वचनसद्भावादुभयं समूलम्। यस्तु नास्तिक्यादग्निं परित्यज्य पुनराधानादि न कुर्यात् स पतितवद्बहिः कार्यः। पुनश्चेच्चिरकालेन व्यवहर्तुमिच्छति तदा द्वादशाब्दं कारयित्वा व्यवहर्तव्यम्। तदुक्तं—स्वकर्महानौ नास्तिक्यान्मासेन पतनं स्मृतम्। द्वादशाब्दव्रतेनैव शुद्धिस्तस्य तु नान्यथा। नास्तिक्यं तु वेदप्रामाण्यानभ्युपगमः। अन्यथा क्रियाबाहुल्यपरित्यागे स्वल्पप्रायश्चित्तानुपदेशप्रसङ्ग इति पश्यामः ॥ २ ॥

षडर्घ्या भवन्त्याचार्य ऋत्विग्वैवाह्यो राजा प्रियः स्नातक इति ॥ १ ॥ प्रतिसंवत्सरानर्हयेयुः ॥ २ ॥ यक्ष्यमाणास्त्वृत्विजः ॥ ३ ॥ आसनमाहार्याह साधु भवानास्तामर्चयिष्यामो भवन्तमिति ॥ ४ ॥ आहरन्ति विष्टरं पद्यं पादार्थमुदकमर्घमाचमनीयं मधुपर्कं दधिमधुघृतमपिहितं काᳵस्ये काᳵस्येन ॥ ५ ॥ अन्यस्त्रिस्त्रिः प्राह विष्टरादीनि ॥ ६ ॥ विष्टरं प्रतिगृह्णाति ॥ ७ ॥ वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः। इमं तमभितिष्ठामि

यो मा कश्चाभिदासतीत्येनमभ्युपविशति ॥ ८ ॥ पादयोरन्यं विष्टर आसीनाय ॥ ९ ॥ सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति ॥ १० ॥ ब्राह्मणश्चेद्दक्षिणं प्रथमम् ॥ ११ ॥ विराजो दोहोऽसि विराजो दोहमशीय मयि पाद्यायै विराजो दोह इति ॥ १२ ॥ अर्घं प्रतिगृह्णात्यापः स्थ युष्माभिः सर्वान्कामानवाप्नवानीति ॥ १३ ॥ निनयन्नभिमन्त्रयते, समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत । अरिष्टा अस्माकं वीरा मा परासेचिमत्पय इति ॥ १४ ॥ आचामत्यामागन्यशसा सꣳसृज वर्चसा । तं मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनामिति ॥ १५ ॥ मित्रस्य त्वेति मधुपर्कं प्रतीक्षते ॥ १६ ॥ देवस्य त्वेति प्रतिगृह्णाति ॥ १७ ॥ सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया त्रिः प्रयौति नमः श्यावास्यायान्नशने यत्त आविद्धं तत्ते निष्कृन्तामीति ॥ १८ ॥ अनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयति ॥ १९ ॥ तस्य त्रिः प्राश्नाति यन्मधुनो मधव्यं परमꣳ रूपमन्नाद्यम् । तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानीति ॥ २० ॥ मधुमतीभिर्वा प्रत्यृचम् ॥ २१ ॥ पुत्रायान्तेवासिने वोत्तरत आसीनायोच्छिष्टं दद्यात् ॥ २२ ॥ सर्वं वा प्राश्नीयात् ॥ २३ ॥ प्राग्वाऽसञ्चरे निनयेत् ॥ २४ ॥ आचम्य प्राणान्त्संमृशति वाङ्म आस्ये नसोः प्राणोऽक्ष्णोश्चक्षुः कर्णयोः श्रोत्रं बाह्वोर्बलमूर्वोरोजोऽरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सहेति ॥ २५ ॥ आचान्तोदकाय शासमादाय गौरिति त्रिः प्राह ॥ २६ ॥ प्रत्याह । माता रुद्राणां दुहिता वसूनाꣳस्वसादित्यानाममृतस्य नाभिः । प्रनुवोचञ्चिकितुषे जनाय मागामनागामदितिं वधिष्ट । मम चामुष्य च पाप्मानꣳ हनोमीति यद्यालभेत ॥ २७ ॥ अथ यद्युत्सिसृक्षेन्मम चामुष्य च पाप्मा हत ओमुत्सृजत तृणान्यत्त्विति ब्रूयात् ॥ २८ ॥ न त्वेवामाꣳसोऽर्घः स्यात् ॥ २९ ॥ अधियज्ञमधिविवाहं कुरुतेत्येव ब्रूयात् ॥ ३० ॥ यद्यप्यसकृत्संवत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्या इति श्रुतेः ॥ ३१ ॥ ❀ ॥ ३ ॥

( कर्कः )—आवसथ्याधानं दारकाल इत्युक्तम् । दाराहरणमेव कथं क्रियत इति तदभिधीयते । तत्र च वैवाहिकस्यार्घदानं स्मर्यते । तत्प्रसङ्गेन यावन्तोऽर्घ्यास्ते सर्व एवाभिधीयन्ते । षड-

र्घ्या भवन्तीति' षडर्घार्हा भवन्तीत्यर्थः। तानाह 'आचार्यः...स्नातकः इति'। प्रियस्नातकयोः पृथक्त्वज्ञापनार्थं पड्ग्रहणम्। उपनयनपूर्वकं यो वेदमध्यापयति स आचार्यः। ऋत्विक् प्रसिद्धः। वैवाह्यो जामाता। राजा च प्रियश्च प्रसिद्धौ। वेदमधीत्य यः स्नातस्तस्याचार्योऽर्घदानं करोति। एवं हि स्मरन्ति—तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः। स्रग्विणं तल्प आसीनमर्हयेत्प्रथमं गवेति। आचार्यस्यायमुपदेशः। 'प्रतिसंवत्सरानर्हयेयुः' आचार्यादीनपि। नत्वर्वाक् संवत्सरादागतान्। यक्ष्यमाणास्त्वृत्विजः'। ऋत्विजः पुनर्यक्ष्यमाणा एवार्घ्याः न ततोऽन्यत्र। 'आसनमा...भवन्तमिति'। अर्घ्यं प्रत्यर्घ्येपणमेतत्। आहार्येत्यानाय्येत्युच्यते। 'आहरन्ति...कार्त्स्न्येन' विष्टरः उपवेशनार्थं विष्टरिका। पद्यं च विष्टरम्। पादार्थमुदकं सुखोष्णम्। अर्घम् अर्घशब्देन च उदपात्रमेवोच्यते। तथाच लिङ्गम्—यथा राज्ञ आगतायोदकमाहरेदेवमेतदिति सोमस्योदपात्रनिनयनं विधाय एतदुक्तम्। आचमनीयमुदकमेव। तथा मधुपर्कं दधिमधुघृतं कांस्यपात्रे स्थितं कांस्येनैवापिहितम्। 'एतान्याहरन्ति' बहुवचननिर्देशादर्घयितुः संबन्धिनः पुरुषाः। उच्चारणार्थं वा बहुवचनम्। 'अन्यस्त्रिस्त्रिः प्राह विष्टरादीनि' अर्घयितुर्व्यतिरिक्तोऽन्यो विष्टरादीनि त्रिस्त्रिः प्राह विष्टरो विष्टरो विष्टरः प्रतिगृह्यतामित्येवम्। 'विष्टरं प्रतिगृह्णाति' तूष्णीमेव। वर्ष्मोऽस्मि समानानामित्यनेन मन्त्रेण विष्टरं एवाभ्युपविशति। ग्रहणोपवेशनयोर्मध्ये मन्त्रः पठितः स लिङ्गादुपवेशने विनियुज्यते, लिङ्गं हि भवति इमं तमभितिष्ठामीति। पादयोरन्यं द्वितीयं विष्टरं ददातीति वाक्यशेषः। स चायमुपदेशः प्रक्षाल्य हि पादौ विष्टरे क्रियेते, तस्मात्पाद्योत्तरकालं द्वितीयं विष्टरं ददातीति पाठोऽर्थेन बाध्यते। तथाचोत्तरं सूत्रम्। विष्टर आ...प्रक्षालयतीति। एकस्मिन्नेव विष्टरे आसीनस्य पादप्रक्षालनम्। ततो द्वितीयो विष्टर इति। 'ब्राह्मण...दोहोऽसीति' यदि ब्राह्मणोऽर्घ्यस्तदा दक्षिणं प्रथमं प्रक्षालयेत्। विराजो दोहोऽसीत्यनेन मन्त्रेण। पादार्थमुदकं गृहीत्वा प्रक्षालयत्यर्घ्य एव। 'अर्घं प्रति...ष्माभिः' इत्यनेन मन्त्रेणार्घ्य एव। लिङ्गादेवावगम्यते आप एवार्घ इति। 'निनयन्नभिमन्त्रयते समुद्रं वः प्रहिणोमीति' न मन्त्रान्ते निनयनम्। 'आचामत्यामागन्यशसा' इत्यनेन मन्त्रेण। 'मित्रस्य त्वेति मधुपर्कं प्रतीक्षते' अर्घ्यः। सर्वेषु चैतेषु त्रिस्त्रिरेतानि द्रव्याण्यभिधाय प्रतिगृह्यतामित्यर्घ्यमाहान्यः 'देवस्यत्वेति प्रतिगृह्णाति' मधुपर्कम्। 'सव्ये पाणौ......स्यायान्' इत्यनेन मन्त्रेण सव्ये पाणौ स्थितं तमेव मधुपर्कं दक्षिणस्यानामिकया त्रिः प्रयौति। अनामि...रुक्षयति' दक्षिणस्यैव, चशब्दात्प्रयौति च। अतश्च प्रतिप्रयवणं निरुक्षणम्। एवं च त्रिर्निरुक्षणं व्यवधानात्प्रतिप्रयवणं मन्त्राभ्यासः। 'तस्य त्रिः प्राश्नाति यन्मधुनो मधव्यमिति' अनेन मन्त्रेण। 'मधुमतीभिर्वा प्रत्यृचं' प्राश्नाति। उच्छिष्टस्यैव मन्त्रोच्चारणम्। एवं हि स्मरन्ति—मधुपर्के च सोमे च नोच्छिष्टो भवति इति। 'पुत्रायोच्छिष्टं दद्यात्' यदवशिष्टं मधुपर्कस्य। 'सर्वं वा प्राश्नीयात्' प्राग्वाऽसञ्चरे निनयेत्' इति विकल्पः। 'आचम्य प्राणान्संमृशति' 'वाङ्म आस्य' इत्येवमादिभिर्मन्त्रैः प्रतिमन्त्रम्। अनाचान्तस्यैव प्राणायतनसंमर्शनं माभूदित्याचम्येति ग्रहणम्। साकाङ्क्षत्वादस्त्वित्यध्याहारः। मे इत्यस्य च सर्वत्रानुषङ्गः। अरिष्टानि मेऽङ्गानि तनूरित्यत्र सन्त्वित्यध्याहारः। 'आचान्तोदकाय शासमादाय गौरिति त्रिः प्राहेति' आचान्तोदकग्रहणं पुनराचमनमिति केचित्। अपरे त्वाहुः—आचान्तमुदकं येनासावाचान्तोदकः तदर्थं शासादानमिति। तादर्थ्ये च पश्वालम्भनस्य तदर्थत्वात्। गौरिति त्रिः प्राहार्घयिता। 'प्रत्याह माता रुद्राणामिति' प्रत्याहार्घ्यो मातारुद्राणामित्यमुं मन्त्रम्। तदन्ते च मम चामुष्य च पाप्मानꣳ हनोमीति प्रयोगः। अमुष्येति चार्घयितुर्नामग्रहणम्। यद्यालभेत पाप्मानꣳ हनोमीति प्रयोगः। 'अथ यद्युत्सृ......ब्रूयात्' अत्राप्यमुष्येत्यर्घयितुर्नामादेशः। ॐ उत्सृजत तृणान्यत्त्वित्येतदुच्चैर्ब्रूयात् निरादो ह्ययमिति। शेषमुपाश्वेव। नत्वेवामाꣳसोऽर्घः स्यादधिय-

ज्ञमधिविवाहं कुरुतेत्येव ब्रूयात् । यज्ञमधिकृत्य विवाहं चाधिकृत्य कुरुतेत्येवं वक्तव्यम् । पाप्मा-नञ्हनोमि कुरुतेत्येवम्, यस्माद्यज्ञविवाहयोरमांसोऽर्घो न भवतीति स्मरणम् । यज्ञविवाहवर्जमन्यत्र पशोरालम्भविकल्पः । 'यद्यप्यसकृत्संवत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्या इति श्रुतेः' परिगतसंवत्सरा अर्घ्या भवन्तीत्युक्तं तदपवादोऽयम् । अत एवावगम्यते सोमेन यक्ष्यमाणा एवर्त्विजोऽर्घ्या नेतरैर्यागैरिति ॥ ३ ॥ * ॥

( जयरामः )—आवसथ्याधानं दारकाल इत्युक्तं तदाराहरणमेव कथं क्रियते इति तदभिधी-यते । तत्र च वैवाहिकस्यार्घदानं स्मर्यते । तत्प्रसङ्गेन यावन्तोऽर्घ्यास्तानाह 'षट् अर्घ्या' अर्घार्हा भवन्तीति । तान्विभजते । 'आचार्यः' उपनयनपूर्वकं वेदाध्यापकः । 'ऋत्विक्' प्रसिद्धः । 'वैवाह्यो' जामाता । राजा च प्रियोऽपि । स्नातकः वेदमधीत्य यः स्नातस्तस्याचार्योऽर्घदानं करोत्यादौ । 'तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः। स्रग्विणं तल्प आसीनमर्हयेत्प्रथमं गवा' इत्याचार्यस्योपदेशात् । प्रिय-स्नातकयोः पृथक्त्वज्ञापनार्थं षड्ग्रहणम् । 'प्रतिसंवत्सरान्' प्रतिरत्रात्यर्थः अतिसंवत्सरानित्यर्थः, तेन संवत्सरोपर्यागतानाचार्यादीनप्यर्हयेयुः अर्घदानेन पूजयेयुः नत्वर्वाक्संवत्सरादागतान् । यक्ष्यमा-णास्तु यागं करिष्यन्त एवर्त्विजोऽर्हयेयुः । संवत्सरोपर्यागतानपि न ततोऽन्यत्रेत्यर्थः । कथमित्यपे-क्षायामाह 'आसनमिति' आसनं पीठादि आहार्य स्वपुरुषैरानाय्याहार्घयिता 'साधु भवानास्ता-मिति' । अर्घ्यं प्रत्यङ्गेषणमेतत् । 'आहरन्तीति' स्वपुरुषा एव विष्टरमुपवेशनार्थं पञ्चविंशच्छ-लाकारचितं कुशपुलकं पद्यं च विष्टरमेव तादृशम् । पादार्थमुदकं सुखोष्णम् । अर्घशब्देनोदपात्रमुच्यते । तथा च लिङ्गम्—यथा राज्ञ आगतायोदकमाहरेदेवमेतदिति सोऽस्योदपात्रनिनयनं विधार्थैतदुक्तम् । आचमनीयमुदकमेव, तथा मधुपर्के तस्यैव प्रपञ्चः दधिमधुघृतं, कांस्यभाजने स्थितं कांस्यभाजनेनैवापि-हितमाच्छादितम् । अन्यः अर्घयितुर्व्यतिरिक्तः कश्चिद्विष्टरादीनि त्रिस्त्रिः प्राह विष्टरो विष्टरो विष्टर इत्ये-वम् । ततोऽर्घयित्राऽर्पितमुभाभ्यां हस्ताभ्यामर्घ्यो गृह्णाति तूष्णीं, ग्रहणमात्रोपदेशात् । वर्ष्मोऽस्मीति मन्त्रेणैनं विष्टरमेवाभ्युपविशति । ग्रहणोपवेशनयोर्मध्ये पठितोऽपि मन्त्रो लिङ्गादुपवेशने विनि-युज्यते । लिङ्गं च—'इमं तमभितिष्ठामि' इति । अथ मन्त्रार्थः—तत्र अथर्वणोऽनुष्टुप् विष्टरो देवता उपवेशने । आत्मानमर्घ्यत्वायार्घ्यः स्तौति कुलज्ञानाचारवपुर्वयोगुणैरहं समानानां सजातीयानां मध्ये वर्ष्मः श्रेष्ठः ज्येष्ठ इति यावत् । अस्मि भवामि । उद्यतां उदयं प्रकाशं कुर्वतां ग्रहनक्षत्रादीनां मध्ये सूर्य इव, किंच इमं विष्टरं तं पुरुषमुद्दिश्य विष्टरवद्बुद्धम् अभिलक्ष्यीकृत्य अभिभूय वा तिष्ठामि अधः कृत्वा उपर्युपविशामि, यः कश्चन मा माम् अभिदासति उपक्षीणं कर्तुमिच्छति । दसु उपक्षये । पादयोरन्यं द्वितीयं विष्टरं ददातीति वाक्यशेषः । स चायमुपदेशो नानुक्रमः प्रक्षाल्य हि पादौ विष्टरे क्रियेते इति, तस्मात्पाद्योत्तरकालं द्वितीयं विष्टरं ददातीति पाठोऽर्थेन बाध्यते । तथा चोत्तर-सूत्रं—'विष्टर आसीनायेति' तेनैकस्मिन्विष्टरे आसीनस्य पादप्रक्षालनं ततो द्वितीयविष्टरदान-मिति । अर्घ्यश्च पूर्ववत्तूष्णीं प्रतिगृह्य पुनर्वर्ष्मोऽस्मीति मन्त्रेण निदधाति प्रक्षालितपादयोरध-स्तात् । प्रक्षालनं चाञ्जलिना विराजोदोहोऽसीति मन्त्रेण स्वयमेव । यदि ब्राह्मणोऽर्घ्यस्तदा दक्षिणं प्रथमं प्रक्षालयेन्नान्यः । अनेन मन्त्रावृत्तिरवगम्यते । तत्र मन्त्रः । 'विराजो दोहोऽसीति' अस्यार्थः—तत्र प्रजापतिर्यजुरापः पादयोर्जलप्रक्षेपे । प्राणधारणादिगुणैः सकलसौहित्येन विविधतया राजत इति विराडन्नं तस्य विराजो दोहः परिणामसारो रसः स त्वम् असि भवसि । हे उदक तं त्वां विराजो दोहम् अशीय अश्नुवै । छान्दसो विकरणलोपः । किंच मयि विषये या पाद्या पादयोः साध्वी सपर्या तस्यै तदर्थं विराजोदोहः मन्त्रसंस्कृतं जलं भवेति शेषः । अर्घोऽर्घोऽर्घः प्रतिगृह्यतामि-त्यन्येनोक्ते अर्घ्योऽर्घं प्रतिगृह्णाति आपः स्थेति मन्त्रेण । अर्घ्यतेऽनेनेत्यर्घः आप एव मन्त्रलिङ्गात् ।

अथ मन्त्रार्थः—तत्र प्रजापतिर्यजुराप: अपामादाने । हे आपः यतो यूयमापः आप्तिहेतवः स्थ भवथ तस्माद्युष्माभिः कृत्वा सर्वानशेषान्कामान् अभीष्टार्थान् अहम् अवाप्नवानि लभेयम् । ततोऽर्घ्योऽर्घ गृहीत्वा उपमौलिमानीय निनयन नामयन् अभिमन्त्रयते समुद्रं व इति मन्त्रेण, न तु मन्त्रान्ते । अस्यार्थः—तत्र अथर्वणोऽनुष्टुप् आपोऽर्घप्रतिक्षेपे । हे आपः साधितार्था वो युष्मान् समुद्रं प्रहिणोमि गमयामि, अतः स्वां योनि स्वकारणभूतं समुद्रमभिलक्ष्यीकृत्य गच्छत व्रजत । किंच युष्मत्प्रसादाच्चास्माकं वीराः पुत्रा भ्रातरश्चारिष्टा अनुपहताः सन्तु, मत् मत्तः पयः अर्घादिमङ्गलं जलं मापरासेचि अपगतं मास्तु, सदैवाहमर्घ्यो भवानीत्यर्थः । ततोऽर्घ्य आचामति आमागन् यशसेति मन्त्रेण सकृद् । द्विस्तूष्णीम् । अस्यार्थः—तत्र परमेष्ठी बृहती आचमने । हे जलेश वरुण त्वमेवंरूपेण त्वामाश्रितं मा मां यशसा आमा सह सहभावं सामीप्यं वा अगन् आगमय । तथा वर्चसा ब्रह्मवर्चसेन संसृज संसृष्टं कुरु । किंच प्रजानां श्रेष्ठजनानां प्रियं श्रेष्ठं प्रीतं वा पशूना गवाश्वादीनामधिपतिं स्वामिनं च तथा तनूनां देहावयवानां शरीरिणां वा अरिष्टम् अहिंसकं सुखजनकं वा कुरु । हिंसा च अनभ्यासेन वेदानामित्यादिना दर्शिता । ततो 'मित्रस्यत्वेति' मन्त्रेणार्घ्यो मधुपर्कं प्रतीक्षते पश्यति, तत्र प्रजापतिः पङ्क्तिर्मित्रो दर्शने । सर्वेषु चैषु त्रिस्त्रिरेतानि द्रव्याणि अभिधाय प्रतिगृह्यतामित्याहान्योऽर्घ्यम् । 'देवस्यत्वेति' मन्त्रेणार्घ्यः प्रतिगृह्णाति मधुपर्कम् । अस्य परमेष्ठी गायत्री सूर्यो ग्रहणे । सव्ये पाणौ स्थितं मधुपर्कं दक्षिणहस्तस्यानामिकया त्रिः प्रयौति प्रदक्षिणमालोडयति 'नमः श्यावास्यायेति' मन्त्रेण । अस्यार्थः—तत्र प्रजापतिर्यजुः सविता निरुक्षणे । हे अन्न ते तुभ्यं नमः किंभूताय श्यावास्याय कपिशमुखाय ते तव अन्नशने अन्नाशने अद्यते इत्यन्नं तस्याशने । ह्रस्वश्छान्दसः । आविद्धं संश्लिष्टम् अनदनीयं यत् तन्निष्क्रन्तामि निरस्यामि अतः शुद्धमन्नं गृहाणेत्यर्थः । तमेव दक्षिणहस्तस्यानामिकाङ्गुष्ठाभ्यां त्रिर्निरुक्षयति अपसारयति चशब्दात्प्रयौति च अतश्च प्रतिप्रयवणमेव निरुक्षणम्, एवं प्रयवणनिरुक्षणयोर्युगपद्भाव. मन्त्रलिङ्गाच्च । एवं च निरुक्षणव्यवधानात्प्रतिप्रयवणं मन्त्राभ्यासः । तस्य त्रिःप्राश्नाति 'यन्मधुन इति' मन्त्रेण । तस्येत्यवयवलक्षणा षष्ठी । त्रिशब्दानुवृत्तौ पुनस्त्रिर्ग्रहणम् एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रवचनशङ्काव्युदासार्थम् । मधुमतीभिर्वा मधुव्वाता इति तिसृभिर्ऋग्भिर्वा प्रत्यृचं प्राश्नात्यनामिकाङ्गुष्ठाभ्यामेव । उच्छिष्टस्यैवापरं वारद्वयं मन्त्रोच्चारणम् । मधुपर्के च सोमे च नोच्छिष्टो भवति द्विज इति स्मरणात् । अथ मन्त्रार्थः । 'यन्मधुन इति' कुत्सो जगती मधुपर्को मधुपर्कप्राशने । हे देवाः मधुनः मकरन्दस्य यन्मधव्यं मधुनि साधु परममुत्कृष्टं रूपयति प्रकाशयति देहसंघातमिति रूपमन्नाद्यं व्रीह्यादिवत्प्राणधारकमन्नोपादानकं वा अन्नादिरसकदम्बं वा तेन सर्वरूपापन्नेन रसेन उक्तविशेषणविशिष्टेन अहं परमः सर्वेभ्यो गुणाधिको मधव्य. मधुपर्कार्हः अन्नादः सदन्नभोक्ता च असानि भवानि । मधुव्वातात्रयस्य गौतमो गायत्री विश्वेदेवा मधुपर्कप्राशने । मधुपर्कशेषप्रतिपत्तिमाह 'पुत्रायेति' सुताय उत्तरत आसीनायोपविष्टाय अन्तेवासिने शिष्याय वोच्छिष्टं दद्यात् स्वयं वा सर्वं प्राश्नीयादिति व्यवस्थाविकल्पः । व्यवस्था ( ? त्र च ) नियमितस्य नियमनम् । तेन आचार्यः शिष्याय ऋत्विक्प्रियौ पुत्राय वरस्नातौ सर्वं प्राश्नीयाताम् । राजा असंचरे जनसंचाररहिते देशे पूर्वस्यां दिशि निनयेदित्यपरं । सर्वेषां वा सर्वे पक्षा इत्यन्ये । आचम्य 'प्राणान्' इन्द्रियस्थानानि संमृशति 'वाङ्म आस्ये' इत्येवमादिभिर्मन्त्रैर्यथालिङ्गं संमर्शनं जलेन स्पर्शनम् । अनाचान्तस्य प्राणायतनस्पर्शनं मा भूदिति आचम्येति ग्रहणम् । अस्त्वित्यध्याहारः साकाङ्क्षत्वात्, म इत्यस्य च सर्वत्रानुषङ्गः । अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह इत्यत्र सन्त्वित्यध्याहारः । अथ मन्त्रार्थः, मम वाङ् वागिन्द्रियमास्येऽस्तु नसोर्नासिकयोः प्राण. प्राणवायुः अक्ष्योः अक्ष्णोर्नेत्रगोलकयोरिति यावत्, चक्षुः चक्षु-

रिन्द्रियम् अक्षीशब्दोऽपि अक्षिवाचकोऽस्ति तद्रूपमिदम् । श्रोत्रं श्रवणेन्द्रियं बलं शक्तिः ओजः पाटवं मे मम तनूर्देहः तन्वा देहस्याङ्गानि च सह युगपत् अरिष्टानि मे अनुपहतानि सन्तु । आचान्तोदकग्रहणात्पुनराचमनमित्येके । अपरे त्वाहुः आचान्तमुदकं येन स आचान्तोदकस्तदर्थं शासं शस्त्रमादाय तादर्थ्यं च पश्वालम्भस्य तदर्थत्वात्, ततो गौर्गौर्गौरिति त्रिः प्राहार्घयिता अर्घ्यस्तु प्रत्याह 'मातारुद्राणाम्' इत्यमुं मन्त्रम् । अस्यार्थः—तत्र ब्रह्मा त्रिष्टुप् गौः अभिमन्त्रणे । मातेत्यादि, निगदः अमृतस्य क्षीरस्य नाभिराश्रयः नु वितर्के 'छन्दसि व्यवहिताश्च' इति प्रवोचं ब्रवीमि । चिकितुषे चेतनावते जनाय पुम्मात्राय मह्यं मां तोष्टुं यूयमिमां गां मा वधिष्ट मा व्रत किंतु गोपशुं विधातुं व्रतेति तात्पर्यार्थः । किंभूतामनागामनागसमदितिमखण्डनीयां देवमातरं वा पयोदानात् । तदन्ते च ममेत्यादि हनोमीति प्रयोगः कार्यः । आलम्भनपक्षे अहं च मम अमुष्यार्घयितुश्च पाप्मानं गोस्थाने हनोमि हन्मीति । अथेति पक्षान्तरे । उत्सर्गपक्षे तु मम चामुष्य च पाप्मा हत ॐउत्सृजत तृणान्यत्त्विति ब्रूयादुच्चैः । मन्त्रपाठादिशेषमुपांश्वेव । नत्वेति, यस्माद्यज्ञविवाहयोरमांसोऽर्घो न भवतीति स्मरणं तस्माद्यज्ञमधिकृत्य विवाहं चाधिकृत्य च पाप्मानं हनोमीत्येव वक्तव्यम् । यज्ञविवाहवर्जमन्यत्र पश्वालम्भविकल्प इति कर्काचार्याः । अपरेत्वाहुः—यज्ञविवाहयोरालम्भस्यावश्यकत्वेन विधानात् कलौ च गवालम्भस्यैव प्रतिषेधाद्गोप्रतिनिधित्वेन पश्वन्तरं स्मार्तपशुः पायसं वा भवतीति । वक्ष्यमाणास्त्वृत्विज इत्युक्तम् । तन्नियममाह—'यद्यपीति' यदि संवत्सरस्य मध्ये पुनः पुनः सोमेन यजेत तदा कृतार्घ्या एव ऋत्विजस्तं याजयेयुर्न यागान्तरेणेति गम्यते । अतः प्रतिसंवत्सरानिति संवत्सरोपर्येव यजद्भिर्ऋत्विजोऽर्घ्या इति यदुक्तं तदपवादोऽपि जातः ॥ ३ ॥

(हरिहरः)—'षडर्घ्या भवन्ति' । षट् पुरुषा अर्घ्या भवन्ति अर्घार्हा भवन्तीति शेषः । के ते । 'आचार्य......तक इति । आचार्य उपनयनपूर्वकं वेदाध्यापकः । ऋत्विक् श्रौतस्मार्तादिकर्मार्थं वृतो ब्रह्मादिः वैवाह्यो वरः । राजा अभिषेकादिगुणवान् प्रजापालनेऽधिकृतः क्षत्रियः । प्रियः उत्कृष्टजातिः समानजातिर्वा सखा । स्नातकः ब्रह्मचर्यात्समावृत्तः आचार्यस्यार्घ्यो नान्यस्य । तथा च मनुः—'तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः । स्रग्विणं तल्प आसीनमर्चयेत्प्रथमं गवा ।' इति इत्येते । 'प्रतिसंवत्सरानर्हयेयुः' । प्रतिसंवत्सरमागतानेतानाचार्यादीनर्घेण पूजयेयुर्नार्वाक् । 'यक्ष्यमाणास्त्वृत्विजः' । यक्ष्यमाणाः यज्ञं करिष्यन्तो यजमानाः 'ऋत्विजः' याजकान् तु पुनः अर्हयेयुरित्यनुषङ्गः, न प्रतिसंवत्सरनियमः । कथमर्हयेयुरित्यपेक्षायामाह—'आसन...भवन्तमिति । आसनं वारणादिदारुमयं पीठादि आहार्य अनुचरैरानाय्य आह ब्रवीति अर्चकः किमिति एवं कथं भवान्पूज्यः साधु सुखं यथा भवति तथा आस्तां तिष्ठतु । अर्चयिष्यामः पूजयिष्यामो भवन्तमर्चनीयं यावत् । अर्चयिष्याम इति बहुवचनं भार्यापुत्रादिसर्वगृह्यापेक्षम् । तथा च श्रुतिः यत्र वा अर्हन्नागच्छति सर्वगृह्या इव वै तत्र चेष्टयन्तीति । 'आहरन्ति......कांस्येन' । आहरन्ति आनयन्ति यजमानपुरुषाः विष्टरादिमधुपर्कपर्यन्ताभ्यर्हणोपकरणानि । तत्र विष्टरं पञ्चविंशतिदर्भतरुणमयं कूर्चम् । पञ्चविंशतिदर्भाणां वेण्यग्रे ग्रन्थिभूषिता । विष्टरे सर्वयज्ञेषु लक्षणं परिकीर्ति-

---

१ वरशाखया मधुपर्कदानमिति गृह्यपरिशिष्टे "वरस्य या भवेच्छाखा तच्छाखागृह्यचोदित- । मधुपर्कः प्रदातव्यो नान्यशाखेऽपि दातरीति" ॥ अत्र ऋत्विगाद्युपलक्षणार्थं वरदातृशब्दौ तदुक्तमर्घ्यशाखया मधुपर्क इति ।

२ विष्टरलक्षणं परिशिष्टे—पञ्चाशता भवेद्ब्रह्मा तदर्द्धेन तु विष्टरः । ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः ॥ दक्षिणावर्तब्रह्मा च वामावर्तस्तु विष्टरः । यद्वा, पञ्चविंशतिदर्भाणां वेण्यग्रे ग्रन्थिभूषिता ॥ विष्टरेत्यादि ॥

तम् ॥ १ ॥ विष्टरास्त्रिवृतो दर्भकूर्चेदा इति । पद्यं पद्भ्यामाक्रमणीयमुक्तलक्षणं द्वितीयं विष्टरम् । पादार्थमुदकं पादप्रक्षालनार्थं ताम्रादिपात्रस्थं जलं सुखोष्णम् । अर्घं गन्धपुष्पाक्षतकुशतिलशुभ्रसर्षपदधिदूर्वान्वितं सुवर्णादिपात्रस्थमुदकम् । आचमनीयम् आचमनार्थं कमण्डलुसंभृतं जलम्। मधुपर्कं कांस्यपात्रस्थं दधिमधुघृतं कांस्यपात्रेणाच्छादितम् । 'अन्यस्त्रिस्त्रिः प्राह विष्टरादीनि' अन्यः अर्चकादपरः विष्टरो विष्टरो विष्टर. इत्येवमेकैकं त्रिस्त्रिः त्रींस्त्रीन्वारान् ब्रूयात् विष्टरादीनि विष्टरप्रभृतीन्पद्यपादार्थोदकार्घाचमनीयमधुपर्कान् । 'विष्टरं प्रतिगृह्णाति '। प्रत्यङ्मुखेन यजमानेन तिष्ठता दत्तमासनात्पश्चिमे प्राङ्मुखस्तिष्ठन्नर्घ्यः पूर्वोक्तलक्षणं विष्टरं तूष्णीं पाणिभ्यामुदगग्रमादत्ते—वर्ष्मोऽस्मि''''''भ्युपविशति'। वर्ष्मोऽस्मीति मन्त्रान्ते एनं विष्टरमुदगग्रमासने निधायाभ्युपविशति । 'पादयोरन्यं विष्टर आसीनाय ' विष्टरे आसीनायार्घ्यायान्यं विष्टरं यजमानः पूर्ववद्ददाति स च तं पूर्ववत्प्रतिगृह्य प्रक्षालितयोः पादयोरधस्ताद्वर्ष्मोऽस्मीत्यनेन मन्त्रेण निदधाति। 'सव्यं पा''''''प्रथमम् '। ततोऽन्येन पाद्यमिति त्रिरुक्ते यजमानार्पितं पाद्योदकमादाय वामं चरणं प्रक्षाल्य इतरं प्रक्षालयति क्षत्रियादिरर्घ्यः । यदि ब्राह्मणोऽर्घ्यः स्यात्तदा प्रथमं दक्षिणं प्रक्षाल्य वामं प्रक्षालयति 'विराजो''''''दोह इति' विराजो दोहोऽसीत्यावृत्तेन मन्त्रेण । 'अर्घं प्रतिगृह्णाति' ततोऽर्घ इत्येतत्त्रिरुक्ते यजमानदत्तमर्घम्—'आपः स्थ''''''वानीति' आपः स्थ युष्माभिरित्यनेन मन्त्रेण प्रतिगृह्णाति । 'निनयन्नभि''''''त्यय इति' प्रतिगृहीतमर्घं शिरसाऽभिवन्द्य निनयन् भूमौ प्रवाहयन् अभिमन्त्रयते समुद्रंव इति मन्त्रेण । 'आचाम'''''न्तनूनामिति' तत आचमनीयमिति त्रिरन्योक्ते यजमानदत्तमाचमनीयं प्रतिगृह्य—आमागन्यशसेत्यनेन मन्त्रेणाचामति सकृत्प्राश्नाति जलम् । ततः स्मार्तमाचमनं करोति एवं सर्वत्र । 'मित्रस्यत्वेति मधुपर्कं प्रतीक्षते' ततो मधुपर्क इति त्रिरन्येनोक्ते यजमानहस्तगतमुद्घाटितं मधुपर्कं मित्रस्यत्वेति मन्त्रेणार्घ्यः प्रतीक्षते पश्यति । 'देवस्य त्वेति प्रतिगृह्णाति' देवस्यत्वेति मन्त्रेण यजमानदत्तं मधुपर्कं दक्षिणहस्तेन प्रतिगृह्णाति । 'सव्ये पाणौ''''''ष्क्रन्तामीति' तं मधुपर्कं वामहस्ते निधाय दक्षिणस्य पाणेरनामिकाङ्गुल्या त्रिवारमालोडयति नमः श्यावास्येति मन्त्रेण । 'अनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयति' अनामिका च अङ्गुष्ठश्च अनयोः समाहार अनामिकाङ्गुष्ठं तेन त्रिवारं निरुक्षयति पात्राद्बहिर्निर्गमयति चकारात्प्रतिसंयवनं निरुक्षणम् । 'तस्य त्रिः'''''श्नादोऽसानीति' तस्य मधुपर्कस्यैकदेशमादाय यन्मधुनो मधव्यमित्यादिना मन्त्रेण सकृत्प्राश्य पुनरनेनैव मन्त्रेण उच्छिष्ट एव द्वितीयं प्राश्य तथैव तृतीयं प्राश्नाति । 'मधुमतीभिर्वा प्रत्यृचम्' मधुव्वाता इति तिसृभिर्ऋग्भिः प्रत्यृचं प्रतिमन्त्रं वा पूर्ववत्त्रिः प्राश्नाति । 'पुत्राया''''''निनयेत्' मधुपर्कस्य शेषप्रतिपत्तिमाह—पुत्राय सूनवे अन्तेवासिने उपनयनप्रभृतिविद्यार्थित्वेन आचार्यकुलवासिने शिष्याय वा , कथंभूताय उत्तरत आसीनाय उच्छिष्टं प्राशितशेषं मधुपर्कं प्रयच्छेत् । अथवा सर्वं भक्षयेत्। यद्वा प्राक् पूर्वस्यां दिशि असंचरे जनसंचारवर्जितदेशे त्यजेत् । अत्र पूर्वपूर्वासंभवे उत्तरोत्तरां प्रतिपत्तिं कुर्यात् । 'आचम्य''''''सहेति' आचम्य प्राणान्संमृशति वाङ्म इत्यादिभिर्मन्त्रैः । तद्यथा । आचमनं सकृन्मन्त्रेण । ततस्त्रिराचम्य एवं सर्वत्र स्मार्तमाचमनं कृत्वा प्राणानिन्द्रियाणि संमृशति सजलमालभते । तद्यथा । वाङ्म आस्येऽस्त्विति मुखं, कराग्रेण नसोर्मे प्राणोऽस्त्विति तर्जन्यङ्गुष्ठाभ्यां युगपद्दक्षिणादिनासारन्ध्रे, अक्ष्णोर्मे चक्षुरस्त्विति अनामिकाङ्गुष्ठाभ्यां युगपच्चक्षुषी, कर्णयोर्मे श्रोत्रमस्त्विति मन्त्रावृत्त्या दक्षिणोत्तरौ कर्णौ, बाह्वोर्मे बलमस्त्विति कर्णवद्बाहू, ऊर्वोर्मे ओजोऽस्त्विति युगपद्धस्तेनोरू, अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्त्विति शिरःप्रभृतीनि पादान्तानि सर्वाण्यङ्गान्युभाभ्यां हस्ताभ्यामालभते । 'आचान्तो''''''प्रत्याह' आचान्तमुदकं येन स आचान्तोदकस्तस्मै अर्घ्याय शासं

खड्गं गृहीत्वा यजमानः गौर्गौर्गौरालभ्यतामिति प्राह ब्रवीति । ततोऽर्ध्यः प्रत्याह । 'माता रुद्रा······लभेत'। ततोऽर्ध्यः, माता रुद्राणामित्यादि वधिष्टेत्यन्तं मन्त्रं पठित्वा मम चामुकशर्मणो यजमानस्य च पाप्मानं हनोमीति पठति यदि गामालभेत पाप्मानं हनोमीति प्रयोगः। 'अथ यद्यु······ब्रूयात्।' अथ यद्युत्सिसृक्षेत् अथवा अर्घ्यो यदि गामुत्स्रष्टुमिच्छेत्तदा मम चामुकशर्मणो यजमानस्य च पाप्मा हत. ॐ उत्सृजत तृणान्यत्त्विति ब्रूयात्। ओमित्यन्तमुपांशु पठित्वा उत्सृजत तृणान्यत्त्विति ब्रूयादित्यन्तमुच्चैः पठेत्। 'नत्वेवामांसो ऽर्घः स्यात्' तुशब्दः पक्षव्यावृत्तौ। अर्घः अमांसः पश्वालम्भवर्जितो नैव भवेत्। अत्र यद्यालभेत यद्युत्सिसृक्षेदित्यनेन सूत्रेण गवालम्भस्य विकल्पं विधाय नत्वेवामांसः इत्यनेन गवालम्भनमर्घमात्रे नियमेन विवत्ते। तथा च सति द्वयोः स्मृत्योर्विरोधेन अप्रमाण्ये प्राप्ते व्यवस्थामाह। 'अधियज्ञं······ब्रूयात्' अधियज्ञं यज्ञे अधिविवाहं विवाहं कुरुत विदधत गवालम्भं पाप्मानं हनोमीत्यस्यान्ते इत्येवं वदेत्। अन्यत्र पाप्मा हत इति पाप्मानं हनोमीति वा विकल्पः (नान्यत्र?) इति भावः। यद्यप्येवं मधुपर्के गवालम्भ आचार्येणोक्तः तथापि अस्वर्ग्यत्वाल्लोकविद्विष्टत्वाच्च कलौ न विधेयः। अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न त्विति याज्ञवल्क्यादिस्मृतिषु निषेधदर्शनात्। 'यद्यप्यस······र्नोक्तनार्घ्यो इति श्रुतेः।' यद्यप्यसकृत्संवत्सरस्य संवत्सरे असकृत्पुनः पुनः सोमेन ज्योतिष्टोमादिना यजेत तदा तदापि एनं सोमयाजिनं कृतोऽर्घो येषां ते कृतार्घ्या एव सन्तः याजयेयुर्यज्ञं कारयेयुर्नाकृतार्घ्या याजयेयुरिति श्रुतिवचनात्। सोमेन यजेतेत्यनेन सोमयागार्थमेव वृता ऋत्विजः अर्घ्या इति गम्यते न यागान्तरार्थम्॥ ३॥ इति तृतीया कण्डिका॥ ३॥ ॥

(गदाधरः)—आवसथ्याधानं दारकाल इत्युक्तं दारग्रहणं कथं क्रियते तदुच्यते। तत्र वरस्यार्घदानं स्मर्यते तत्प्रसङ्गेन यावन्तोऽर्घ्यास्ते कथ्यन्ते। 'षडर्घ्या भवन्ति' अर्हपूजायामिति धातोर्भावे घञ् प्रत्ययः। न्यङ्क्वादित्वात्कुत्वं ततो दण्डादिभ्यो यदिति यत्प्रत्ययः। अर्घमर्हन्तीत्यर्घ्याः। षट् पुरुषा अर्घार्हा भवन्तीत्यर्थः। तानाह 'आचार्य······स्नातक इति' उपनयनपूर्वकं कृत्स्नवेदाध्यापयिता आचार्यः। ऋत्विक् यो दक्षिणापरिक्रीतः कर्माणि करोति, वैवाह्यो जामाता. राजा दण्डपूर्वकं परिपालनकर्ता, प्रियो य इष्ट उत्कृष्टजातिः समानजातिर्वा, स्नातको ब्रह्मचर्यात्समावृत्तस्तस्य चार्हणमाचार्यकर्तृकं स्मृतम्। 'तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः। स्रग्विणं तल्प आसीनमर्चयेत्प्रथमं गवा' इति। पूर्वसूत्रे पद्ग्रहणं प्रियस्नातकयोः पृथक्त्वज्ञापनार्थम्। 'प्रतिसंवत्सरानर्हयेयुः' प्रतिसंवत्सरं गृहे आगतानाचार्यादीनर्घेणार्चयेयुः न संवत्सरादर्वाक्। प्रतिसंवत्सरानर्हयेयुरित्यविशेषेणोक्तत्वादृत्विजोऽपि संवत्सरान्तेऽर्हयितव्या इति प्राप्ते आह 'यक्ष्यमाणास्त्वृत्विजः' ऋत्विजस्तु यक्ष्यमाणा यागकाल एव पूजनीयाः न ततोऽन्यत्र। इदं सूत्रं हरिहरेणान्यथा व्याख्यातम्। यज्ञं करिष्यन्तो यजमानाः ऋत्विजो याजकानिति। पूजनीया उक्ताः कालश्च। इदानीमर्हणप्रकारमाह 'आसनमा······भवन्तमिति'। अर्घ्यायासनं पीठादि आसनमाहरेति प्रैषपूर्वकमनुचरद्वाराऽऽनाय्य साधुभवानित्यर्घयिता अर्घ्यं प्रति वदति अर्घ्यं प्रत्यन्वेषणमेतत्। 'आहरन्ति······कात्स्न्येन। बहुवचनादर्घयितुः पुरुषाः विष्टरादीनि आहरन्ति। तत्र विष्टरस्त्रिवृदरत्निमात्रः कौशो रज्जुविशेष इति भर्तृयज्ञ। प्रादेशमात्रं त्रिवृतं कौशं वा काशनिर्मितमिति रेणुकः। पञ्चविंशतिदर्भतरुणमयं कूर्चमिति हरिहरः। पञ्चाशद्भिर्भवेद्ब्रह्मा तदर्धेन तु विष्टर इति परिशिष्टात्। पाद्योरन्यमिति वचना(दन्यत्र? दत्र)द्वयोराहरणमिति भर्तृयज्ञः। पद्यं पादयोरधस्तान्निधानार्थं विष्टरम्। भर्तृयज्ञमते मते तु—पादप्रक्षालनार्थमुदकं पद्यशब्देन पादार्थमुदकं सुखोष्णम्। अर्घशब्देनोदपात्रमेवोच्यते। तद्धैक उदपात्रमुपनिनयन्ति यथा राज्ञ आगतायोदकमाहरेदेवं तदिति लिङ्गात् उदकान्यपुष्पाण्यक्ष-

तबदराणीति भर्तृयज्ञः । गन्धपुष्पाक्षतकुशतिलशुभ्रसर्षपदूर्वादध्यन्वितं सुवर्णादिपात्रस्थमुदकमिति हरिहरः । आचमनीयमाचमनार्थमुदकमेव । दधिमधुघृतमेकस्मिन्कांस्यपात्रे कृतमपरेण कांस्यपात्रेणापिहितं मधुपर्कशब्देनोच्यते । मधुपर्के दध्यलाभे पयो जलं वा प्रतिनिधिः । मध्वलाभे घृतं गुडो वेत्याश्वलायनः । 'अन्यस्त्रिस्त्रिः प्राह विष्टरादीनि ' अर्घयितुर्व्यतिरिक्तोऽन्यो विष्टरादीनि द्रव्याणि त्रिस्त्रिर्वारत्रयं वदति विष्टरो विष्टरो विष्टरः प्रतिगृह्यतामित्येवम् । 'विष्टरं······पविशति । ततोऽर्घ्योऽर्घयितुः सकाशाद्विष्टरं तूष्णीमेव प्रतिगृह्य तं विष्टरमासने निधाय वर्ष्मोऽस्मीति मन्त्रेणोपविशति । ग्रहणोपवेशनयोर्मध्ये पठितोऽपि मन्त्र इम तमभितिष्ठामीति लिङ्गादुपवेशने विनियुज्यते । पाणिभ्यां विष्टरप्रतिग्रह इति हरिहरः । तदतीव मन्दं प्रमाणाभावात् । मन्त्रस्यायमर्थः—अर्घ्य आत्मानं स्तौति अर्घ्यत्वाय । कुलज्ञानाचारवपुर्वयोगुणैरहं समानानां सजातीयानां मध्ये वर्ष्मः श्रेष्ठः ज्येष्ठः अस्मि भवामि उद्यतामुदयं प्रकाशं कुर्वतां ग्रहनक्षत्रादीनां मध्ये सूर्य इव । किंच इमं विष्टरं तं पुरुषमुद्दिश्य विष्टरवत् बद्धमभिलक्ष्यीकृत्य तिष्ठामि अधः कृत्वोपर्युपविशामि । यः कश्चन मा मामभिदासति उपक्षीणं कर्तुमिच्छति । दसु उपक्षये । 'पादयोरन्यं विष्टर आसीनाय' विष्टरे आसीनायोपविष्टायार्घ्याय पादयोरधस्तान्निधानार्थमन्यं विष्टरं ददाति । एतच्च पादप्रक्षालनोत्तरं द्रष्टव्यम् । तथा सति दृष्टार्थता स्यात् । प्रक्षाल्य हि पादौ विष्टरे क्रियेते इति । तेनात्रार्थेन पाठबाधः । तदुक्तं विरोधेऽर्थस्तत्परत्वादिति । 'सव्यं पाद······दोह इति' ततः पाद्यं प्रतिगृह्य विराजोदोहोऽसीति मन्त्रेण सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति क्षत्रियादिरर्घ्यश्चेत् , ब्राह्मणोऽर्घ्यः स्यात्तदा दक्षिणं पादं प्रथमं प्रक्षाल्य ततः सव्यं प्रक्षालयति । मन्त्रार्थः—प्राणधारणादिगुणैः सकलसौहित्येन विविधतया राजत इति विराडन्नं तस्य विराजो दोहः परिणामसारो रसः स त्वमसि भवसि । हे उदक तं त्वां विराजो दोहमशीय अश्नुवै व्याप्नुयाम् । किंच मयि विषये या पाद्या पादयोः साध्वी सपर्या तस्यै तदर्थं विराजो दोहः मन्त्रसंस्कृतं जलं भवेति शेषः । ' अर्घप्रति····· वाप्नवानीति ' अर्घ्यः समर्पितमर्घं प्रतिगृह्णात्यापःस्थ युष्माभिरिति मन्त्रेण । मन्त्रार्थः हे आपः यूयमापः स्थ आप्तिहेतवो भवथ । युष्माभिः कृत्वा सर्वान्कामानभीष्टार्थान् अवाप्नवानि लभेयम् । 'निनयन्न······मत्पय इति' तमर्घं भूमौ निनयन्प्रापयन्नभिमन्त्रयते समुद्रं व इति मन्त्रेण नतु मन्त्रान्ते । अर्घं शिरसाऽभिवन्द्य प्रागुदग्वा निनयनमिति वासुदेवः । मन्त्रार्थः । हे आपः वो युष्मान् समुद्रं प्रहिणोमि गमयामि । अतः स्वां योनिं स्वकारणभूतं समुद्रं अभिलक्ष्यीकृत्य गच्छत व्रजत । किंच युष्मत्प्रसादाच्चास्माकं वीराः पुत्रा भ्रातरः अरिष्टा अनुपहताः सन्तु । मत् मत्तः पयः अर्घादिमङ्गलं जलं मापरासेचि अपगतं मास्तु सदैवाहमर्घ्यो भवानीत्यर्थः । 'आचाम····· न्तनूनामिति । ततो दत्तमाचमनीयं प्रतिगृह्य—आमागन्नित्याचामति सकृद्भक्षयति । ततः स्मार्ताचमनम् । मन्त्रार्थः । हे वरुण जलेश तमेवंरूपेण त्वामाश्रितं मा मां यशसा सहभावं सामीप्यं वा अगन् आगमय । आङुपसर्गः अगन्निति क्रियापदेन संबध्यते । तथा वर्चसा ब्रह्मवर्चसेन संसृज संसृष्टं कुरु । किंच प्रजानां पुत्रपौत्रादीनां प्रियं पशूनां गवाश्वादीनामधिपतिं स्वामिनं च तथा तनूनां देहावयवानां शरीराणां वा अरिष्टिमहिंसकं कुरु । हिंसाऽत्र अनभ्यासेन वेदानामाचारस्य च लङ्घनात् । आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसतीत्यादिदर्शिता । 'मित्रस्य त्वेति मधुपर्कं प्रतीक्षते' ततोऽर्घ्योऽर्घयितुर्हस्तस्थितमुद्घाटितं मधुपर्कं मित्रस्य त्वेति प्रागित्रमन्त्रेण प्रतीक्षते पश्यतीत्यर्थः । देवस्य त्वेति प्रतिगृह्णाति । ततो देवस्य त्वेति प्रागित्रप्रतिग्रहणमन्त्रेण मधुपर्कं प्रतिगृह्णाति । 'सव्ये पाणौ······क्रन्तामीति' तं मधुपर्कं सव्यहस्ते कृत्वा दक्षिणस्य हस्तस्यानामिकयाऽङ्गुल्या प्रदक्षिणं त्रिरालोडयति नमः श्यावास्यायान्निति मन्त्रेण । अत्र सव्यहस्तस्थितस्यैव दक्षिणस्यानामिकया त्रिरालोडनं यथा स्यादित्येतदर्थं दक्षिणग्रह-

णम् । मन्त्रार्थः—हे अग्ने ते तुभ्यं नमः । किं भूताय श्यावास्याय कपिशमुखाय । ते तव अन्नशने अन्नाशने अद्यत इत्यन्नं तस्याशने अदनीये मधुपर्के । ह्रस्वश्छान्दसः । यद्द्रव्यमाविद्धं संश्लिष्टमनदनीयं तं निष्क्रन्तामि निरस्यामि । 'अनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयति' अनामिका चाङ्गुष्ठश्चेत्यनामिकाङ्गुष्ठं तेनानामिकाङ्गुष्ठेन वारत्रयं निरुक्षयति मधुपर्कैकदेशं पात्राद्बहिः प्रक्षिपति । चशब्दात्प्रतिसंयवनं निरुक्षणम् । एवं च निरुक्षणव्यवधानात्प्रतिसंयवनं मन्त्रावृत्तिः । 'तस्य त्रिः······साનीति । तस्येत्यवयवलक्षणा षष्ठी । तस्य मधुपर्कस्य त्रिः प्राश्नीयाद्यन्मधुनो मधव्यमिति अनेन मन्त्रेण प्राशनत्रयेऽपि हविर्ग्रहणन्यायेन मन्त्रावृत्तिः । उच्छिष्टस्यैव मन्त्रोच्चारणम् । एवं हि स्मरन्ति । ताम्बूलेक्षुफले चैव भुक्तस्नेहानुलेपने । मधुपर्के च सोमे च नोच्छिष्टं मनुरब्रवीत् इति । मन्त्रार्थः हे देवाः मधुनो मकरन्दस्य यन्मधव्यं मधुनि साधु परममुत्कृष्टं रूपयति प्रकाशयति देहसंघातमिति रूपम् । अन्नाद्यं व्रीह्यादिवत्प्राणधारकमन्नोपादानकं च तेन सर्वरूपोपपन्नेन रसेनोक्तविशेषणविशिष्टेनाहं परमः सर्वेभ्यो गुणाधिकः मधव्यो मधुपर्कार्हः अन्नादः सदन्नभोक्ता च असानि भवानि । 'मधुमतीभिर्वा प्रत्यृचम्' वा विकल्पेन मधुव्वाताऋतायते इत्येताभिर्ऋग्भिः प्रत्यृचं प्राश्नाति । ततश्चैवम् । मधुव्वाता इति प्रथमम् । मधुनक्तमिति द्वितीयम् । मधुमान्न इति तृतीयम् । 'पुत्राया······दद्यात् । अवशिष्टं मधुपर्कस्य उच्छिष्टं पुत्राय अन्तेवासिने शिष्याय वोत्तरत उपविष्टाय दद्यात् । 'सर्वं वा प्राश्नीयात्' अथवा सर्वं स्वयं प्राश्नाति । 'प्राग्वाऽसंचरे निनयेत्' प्राक् प्राच्यां यत्र जना न संचरन्ति तस्मिन्नसंचरे मधुपर्कशेषं प्रक्षिपेत् । 'आचम्य······मेसहेति' । आचम्य वाङ्म आस्य इत्येतैर्मन्त्रैः प्रतिमन्त्रं यथालिङ्गं प्राणायतनानि संमृशति हस्तेन स्पृशति । सर्वत्र साकाङ्क्षत्वादस्त्वित्यध्याहारः । अरिष्टानि मेऽङ्गानि तनूरित्यत्र तु सन्त्वित्यध्याहारः । मेपदस्य सर्वत्रानुषङ्गः । नन्वध्याहारानुषङ्गयोः को विशेषः । उच्यते । अनुषङ्गः श्रुतपदानयनम् । अध्याहारः अश्रुतपदस्य लौकिकस्यानयनं वाक्यनैराकाङ्क्ष्यार्थम् । प्रयोजनं चाध्याहृतपदस्य संहितावत्प्रयोगो न भवति । सावसानं प्रयोग इत्यर्थः । अयमर्थः कर्कोपाध्यायैरपि पशुसमञ्जनप्रकरणे प्रदर्शितः । अत्रैवं वाङ्म आस्ये अस्त्विति मुखम् । नसोर्मे प्राणोऽस्त्विति नासिकाछिद्रद्वयं युगपत् । अक्ष्णोर्मे चक्षुरस्त्वित्यक्षिद्वयं युगपत् । कर्णयोर्मे श्रोत्रमस्त्विति दक्षिणं कर्णमभिमृश्य ततो वाममनेनैव मन्त्रेण । बाह्वोर्मे बलमस्त्विति दक्षिणं बाहुं ततो वाममनेनैव मन्त्रेण । ऊर्वोर्मे ओजोऽस्त्वित्यूरुद्वयं युगपदेव । अरिष्टानि० सहसन्त्विति शिरःप्रभृतिसर्वाङ्गानां युपगत् । हरिहरेण प्राणायतनस्पर्शः सजलहस्तेन कर्तव्य इत्युक्तं तदतीव मन्दम् । नह्यत्र सूत्रे जलग्रहणमस्ति । सर्वाङ्गालम्भे उभाभ्यां हस्ताभ्यामालम्भ उक्तः सोऽपि न युक्तः । आचम्येति ग्रहणमाचान्तोदकायेति वक्ष्यमाणत्वादनाचान्तस्यैव प्राणायतनसंमर्शनं मा भूदित्येतदर्थम् । मन्त्रार्थः—मे मम वागिन्द्रियमास्येऽस्तु । नसोर्नासिकयोः प्राणः प्राणवायुः । अक्ष्णोर्नेत्रगोलकयोरिति यावत् चक्षुश्चक्षुरिन्द्रियम् । श्रोत्रं श्रवणेन्द्रियम् । बलं शक्तिः । ओजस्तेजः । मे मम तनूः देहः । तन्वा देहस्याङ्गानि च सह युगपत् अरिष्टानि अनुपहतानि सन्तु । 'आचान्तो······प्राह' आचान्तमुदकं येनासौ आचान्तोदकः तदर्थं शासमसिमादाय गामानीय गौरित्यर्घयिता त्रिः प्राह । आलभ्यतामित्यध्याहारः । आचान्तोदकग्रहणात्पुनराचमनमिति केचित् । आचान्तोदकायेति तादर्थ्ये चतुर्थी । शासादानस्य तादर्थ्यं तु तदर्थपश्वालम्भनद्वारकम् । 'प्रत्याह······यद्यालभेत' अर्घ्यो यजमानं प्रत्याह मातेत्यमुं मन्त्रम् । यदि गामालभेत तदा मम चामुष्य च पाप्मानꣳ हनोमीति तदन्ते प्रयोगः । अत्रामुष्यशब्दमुद्धृत्यार्घयितुर्नामग्रहणं कार्यम् । मन्त्रार्थः—अमृतस्य क्षीरस्य नाभिराश्रयः नु वितर्के, छन्दसि व्यवहिताश्चेत्युक्तेरुपसर्गस्य वोचमित्यत्रान्वयः । प्रवोचं ब्रवीमि चिकितुषे चेतनावते

जनाय यूयं इमां गां मा वधिष्ट मा हत किंतु गोपशुं विधातुं हतेति तात्पर्यार्थः । किंभूता- मनागामनपराधाम् । अदितिं देवमातरं पयोदानात्। अहं ममामुष्याघयितुश्च पाप्मानं गोश्रानं हनोमि हन्मीति। 'अथ यद्युत्सि''''''ब्रूयात्' यद्यर्घ्यो गामुत्स्रष्टुमिच्छेत्तदैवं प्रयोगः । माता- रुद्राणामित्युक्त्वा मम चामुष्य च पाप्मा हतः ॐ उत्सृजत तृणान्यत्तु । अत्राप्यमुष्यस्थाने अर्व- यितुर्नामग्रहणम् । ॐ उत्सृजत तृणान्यत्त्विति उच्चैर्ब्रूयात् शेषमुपांशु । एवं गवालम्भस्य सर्वत्र विकल्पे प्राप्ते कचिन्नियममाह 'नत्वेवा'''''''''तेत्येव ब्रूयात्' यज्ञविवाहयोरमांसोऽर्घो न भवति। यज्ञमधिकृत्य विवाहमधिकृत्य कुरुतेत्येवं प्रयोगः । अतश्चालम्भनियमो यज्ञविवाहयोः। गोरालम्भश्च कलिवर्जिते काले भवति 'यज्ञाधानं गवालम्भं संन्यासं पलपैतृकम्। देवराच्च सुतो- त्पत्तिः कलौ पञ्च विवर्जयेत्' इति पराशरस्मृतेः। अतश्च गवालम्भस्य कलौ निषिद्धत्वादुत्सर्गस्य च यज्ञविवाहयोरप्राप्तत्वाद्गौरित्युच्चारणादि यज्ञविवाहयोः कलौ न प्रवर्तते। यज्ञविवाहयोरन्यत्र तूत्सर्गपक्ष एव कलौ । कलौ गोपशोर्निषेधात्तत्स्थाने अजालम्भः पायसं वेति जयरामः। परिगतसंवत्सरा अर्घ्या भवन्तीत्युक्तं तदपवादमाह—'यद्यप्यस''''''इति श्रुतेः' यद्यपि संवत्सरस्य मध्ये असकृत्पुनः पुनः सोमेन यजेत तथाप्येनं यजमानं कृतार्घ्या एव ऋत्विजो याजयेयुः नाकृतार्घ्याः कुतः श्रुतेः। एतत्सूत्रादेवं ज्ञायते सोमयागार्थमेव वृता ऋत्विजोऽर्घ्या नेतरयागार्थमिति। यक्ष्यमाणास्त्वृत्विज इत्यनेनैव गतार्थत्वात्सोमेन यक्ष्यमाणा एवार्घ्या इति नियमविधानार्थं पृथगारम्भः। ननु वसन्ते वसन्ते ज्योतिषा यजेतेत्येकस्मिन्संवत्सरे एक एव सोमयागः प्राप्तस्तत्कथमुच्यते असकृत्संवत्सरस्य सोमेन यजेतेति। सत्यम्, उच्यते। यद्यपि नित्यः सोमयागः सकृदेवानुष्ठातव्यस्तथापि कामनाया चोदिताया पुनः पुनरनुष्ठानं संभवत्येव द्वादशाहादीनाम्। यद्वा नित्यो वाजपेयस्तस्यानुष्ठाने तदङ्गभूतानां परियज्ञानामनुष्ठानं भवति । तस्मात्साधूक्तमसकृत्संवत्सरस्य सोमेन यजेतेति। वर- शाखया मधुपर्कदानं गृह्यपरिशिष्टे—वरस्य या भवेच्छाखा तच्छाखा गृह्यचोदितः। मधुपर्कः प्रदातव्यो नान्यशाखेऽपि दातरि' इति। अत्र ऋत्विगाद्युपलक्षणार्थं वरदातृशब्दौ। तदुक्तम्—अर्च्यशाखया मधुपर्क इति। याज्ञिकास्तु अर्च्यस्य यच्छाखीयं कर्म तच्छाखीयो मधुपर्क इति वदन्ति। तथा जगन्ना- थकारिकायाम्। तत्तद्गृह्योक्तविधिना विष्टराद्यर्हणं तत इति। सर्वत्र यजमानशाखयैव मधुपर्क इति जयन्तः, तत्तु कैरपि नादृतम् ॥ ३ ॥ * ॥

( विश्व० )—आवसथ्याधानं दारकाल इत्युक्तं दारक्रिया च विना विवाहं न निष्पद्यत इत्युपोद्घा- तसंगत्या विवाहं सूत्रयन्प्रसङ्गादर्घ्यानाह—'षडर्घ्या भवन्ति'। आचार्यत्वादयः षट्संख्याकाः उपाधयः सन्ति तैरवच्छिन्नाः, सर्वेऽपि अर्घ्याः अर्घयोग्या भवन्तीत्यर्थः। ननु आचार्यत्वादयो धर्माः जातय एव किं न स्युः । न स्युः। जातिसंकरप्रसंगात् । तथाहि–आचार्यत्वपरिहारेणान्यत्र ऋत्विक्त्वम्, ऋत्विक्त्वपरिहारेणान्यत्राचार्यत्वम्। एकत्रोभयं संकीर्णं तस्मादुपाधय एते। उपधेयाः क इत्यपेक्षा- यामाह—'आचार्य ऋत्विग्विवाह्यो राजा प्रियः स्नातक इति' उपनयनपूर्वकवेदाध्यापकत्वमाचार्यत्वं तस्याधारः आचार्यः। एवं श्रौतस्मार्तादिक्रियोद्देशेन वृतत्वमृत्विक्त्वं, तदाश्रय ऋत्विक्। कुकुदकर्तृ- ककन्याप्रदानसंप्रदानत्वं वैवाह्यत्वम्, तदाश्रयो वरः । राजसूयान्तर्गताभिषेकाभिषिक्तत्वे सति प्रजापालनाधिकृतत्वाश्रयो राजा। मैत्र्याश्रयः प्रियः स्वानपकृष्टजात्यवच्छिन्नः। विद्याव्रतोभयस्ना- तकत्वाद्यन्यतमोपाध्यवच्छिन्नः स्नातकः । इतिशब्दः षडुपाध्युपधेयसमाप्तिद्योतकः। कस्मिन्काल इत्य- पेक्षायामाह–प्रतिसंवत्सरानर्हयेयुः। निमित्तमन्तरा समागतानिति शेषः । संवत्सरं संवत्सरं प्रत्या- गताः प्रतिसंवत्सराः तान् आचार्यादीनर्हयेयुः मधुपर्केण पूजयेयुः । अर्चकानामृत्विगर्चने विशेष- माह—'यक्ष्यमाणास्त्वृत्विजः' यज्ञारम्भं करिष्यन्तः। तुशब्दः प्रतिसंवत्सरानित्यादिनोक्तं व्यवच्छि-

न्ति । ऋत्विजः याजकानर्चयेयुरित्यर्थः । एतेन ऋत्वारम्भप्रवृत्तेनैवारम्भकाले ऋत्विगर्चनं विधेयं नान्यदेत्यर्थः । तथाच ऋत्विक्त्वप्रयोज्यं नान्यदार्चनमिति ध्येयम् । कथमर्हयेयुरित्यपेक्षायामाह—'आसनमाहार्याह साधु भवानास्तामर्चयिष्यामो भवन्तमिति ' आसनं यज्ञियदारुनिर्मितं पीठादि आहार्य आनाय्य आह ब्रवीति अर्चक इति शेषः । किमित्यत उक्तं, साधु भवानित्यादि भवन्तमित्यन्तम् । विवाहे तु वरसमानशाखाध्यायिनाऽऽचार्येण प्राङ्मुखोपविष्टेन मध्येचतुरिकमुपलिप्त उद्धतावोक्षितेऽग्नावाहिते साधु भवानास्तामित्याद्यर्चकः श्वशुरादिर्ब्रूयादिति विशेषमाहुः । अग्निमुपसमाधायेत्यादि कुमार्याः पाणिं गृह्णीयादित्यन्तसूत्रे साङ्गपाणिग्रहणविधेरग्निस्थापनोत्तरकालीनत्वस्य क्त्वाप्रत्ययवललभ्यत्वेन मधुपर्ककरणकार्चनस्यापि विवाहाङ्गत्वादग्निस्थापनोत्तरकालतेत्याशयादेवमाहुः। 'आहरन्ति विष्टरं पाद्यं पादार्थमुदकमर्घमाचमनीयं मधुपर्कं दधिमधुघृतमपिहितं कांस्ये कांस्येन ' आहरन्ति अर्चकपुरुषाः । विष्टरौ पादार्थमुदकमष्टाङ्गमर्घमाचमनीयपात्रं, मधुपर्कमित्येतस्यैव विवरणं दधिमधुघृतं कांस्येनापिहितम् । पुनः कीदृशं कांस्ये स्थितम् । अन्यस्त्रिः त्रिः प्राह विष्टरादीनि । अर्च्यार्चकाभ्यामन्यः अर्चकपुरुषः विष्टरादीनि त्रिस्त्रिः प्राह विष्टरः आदिर्येषां तानि त्रिस्त्रिः त्रींस्त्रीन् वारान् एकैकं प्राह अनुब्रूयात् । प्रयोगश्चैवं, विष्टराविति वारत्रयमाहान्यः । प्रतिगृह्यतामित्याहार्चकः । प्रतिगृह्णामीत्यर्च्यः प्रतिगृह्णातीत्यर्थः । किमित्यत उक्तं विष्टरमिति । 'वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः । इमं तमभितिष्ठामि योमाकश्चाभिदासतीत्येनमभ्युपविशति ' निगदव्याख्यातम् । पादयोरन्यं विष्टर आसीनाय, अन्यं द्वितीयं पादयोरधः विष्टरं स्थापयेदर्च्य इत्यर्थः । कथंभूतः विष्टर आसीनः चतुर्थ्यत्र न विवक्षितेत्याहुः । केचित्तु चतुर्थीवलात्क्रमिकं दानमाहुः । 'सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति ब्राह्मणश्चेद्दक्षिणं प्रथमं ' ततोऽन्येन पादार्थमुदकमिति त्रिरुक्तेऽर्चकेन प्रतिगृह्यतामित्युक्ते प्रतिगृह्णामीति प्रतिगृह्यार्च्य इति शेषः । मन्त्रेण वा तूष्णीं वेत्यत आह—' विराजो······'दोह इति ' दोह इत्यन्तेन मन्त्रेण पादौ प्रक्षालयेदर्च्य इत्यर्थः । ' अर्घं प्रतिगृह्णाति ' ततोऽर्घमापःस्थ अर्घमित्यन्येन त्रिरुक्ते प्रतिगृह्यतामित्यर्चकेनोक्ते आपःस्थ इत्यमुं मन्त्रं पठित्वा प्रतिगृह्णामीति । अर्घं प्रतिगृह्णामीत्यर्थः । मन्त्रमाह—'आपः स्थ···वानि' इति । निनयन्नभिमन्त्रयते, ' समुद्रं वः······'मत्पयः इति ' शिरसाभिवन्द्य संमुखं निनयन्समुद्रं व इत्यभिमन्त्रयत इत्यर्थः । ' आचामस्यामाग······'तनूनामिति ' आचमनीयमित्यन्येन त्रिरुक्ते प्रतिगृह्यतामित्यर्चकेनोक्ते प्रतिगृह्णामीति गृहीत्वा आमागन्नित्याचामतीत्यर्थः । ततः स्मार्ताचमनम् । ' मित्रस्य त्वेति मधुपर्कं प्रतीक्षते ' मधुपर्क इत्यन्येन त्रिरुक्ते प्रतिगृह्यतामित्यर्चकेनोक्ते मित्रस्यत्वेति अर्चकहस्तस्थं मधुपर्कमीक्षते उद्घाटितं पूर्वं कातीयसूत्रे उक्तत्वादिह मन्त्रो नोक्तः संहितायामविद्यमानोऽप्ययाश्चात्र इतिवत् । देवस्यत्वेति प्रतिगृह्णाति प्रतिगृह्णामीत्यन्तेन देवस्यत्वेति मन्त्रेण यजमानहस्ताद्गृह्णातीत्यर्थः । ' सव्ये पाणौ······तत्तेनिष्कृन्तामीति ' मधुपर्कं वामहस्ते निधाय दक्षिणहस्तस्यानामिकयाङ्गुल्या त्रिवारमालोडयति नमः श्यावेतिमन्त्रेण । ' अनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयति ' दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां त्रिवारं निरुक्षयति बहिःप्रक्षिपतीत्यर्थः । चकारः समुच्चयार्थः । तस्य त्रिः प्राश्ना······दोऽसानीति ' यन्मधुन इति मन्त्रेण त्रिवारं मधुपर्कं प्राश्नातीत्यर्थः । उच्छिष्टोऽपि मन्त्रानुचरेत् । ' मधुमतीभिर्वा प्रत्यृचं ' मधुवाता इतितृचेन वा प्रत्यृचं प्राश्नाति । ' पुत्राया······निनयेत् ' असंचरे जनसंचारवर्जिते देशे । शेषं सुगमम् । इयं च प्रतिपत्तिः पूर्वाभावे उत्तरा ज्ञेया । ' आचम्य प्राणान्संमृशति ' आचमनं कृत्वा वक्ष्यमाणान् प्राणान् स्पृशतीत्यर्थः । ' वाङ्म आस्ये ' अनेनास्यं स्पृशति, ' नसोर्मे प्राणः ' अनेन नासारन्ध्रे सहैव स्पृशति, ' अक्ष्णोर्मे चक्षुः ' अनेन चक्षुषी, ' कर्णयोर्मे श्रोत्रम् ' अनेन कर्णौ मन्त्रावृत्तिः दक्षिणोत्तरे, ' बाह्वोर्मे बलम् ' अनेन बाहू मन्त्रावृत्त्या स्पृशति,

'ऊर्वोर्मे ओजः' अनेन ऊरू । अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सहइत्यनेन शिरःप्रभृतीनि पादान्तानि सर्वाण्यङ्गान्युभाभ्यां हस्ताभ्यामालभते । 'आचान्तोदकाय शासमादाय गौरिति त्रिः प्राह प्रत्याह' आचान्तमुदकं येन स आचान्तोदकः तस्मै अर्घ्याय सन्निहिते कन्यादानकाले शासं खड्गमादाय गौरिति त्रिवारमाहार्चकः । तमर्चकं प्रत्याहार्च्यः । किमित्यत आह—'माता रु'''न्यस्त्विति ब्रूयात्' वधिष्टेत्यन्तं मन्त्रमुच्चार्य आत्मनोऽर्चकस्य च षष्ठ्यन्ते नामनी गृहीत्वोभयोः पाप्मा हत ओमुत्सृज तृणान्यत्त्वित्युत्सर्गपक्षे । आलंभपक्षे तु पूर्ववन्नामनी गृहीत्वा उभयोः पाप्मान९ हनोमीत्युक्त्वा ॐ कुरुतेति ब्रूयादित्यर्थः । उत्सर्गपक्षे गवे तृणदानम्, आलम्भपक्षे तु पालाशीं शाखां निखाय द्विगुणरशनयेत्यारभ्य प्रजापतये जुष्टं नियुनज्मीति शाखायां नियोजनं मारणान्तम् । तस्मिन्पक्षे मांसेनार्घदानम्, कर्तव्यताविशेषं गोयज्ञे वक्ष्यति । अस्यैवोपोद्गलकमाह । 'नत्वेवामांसोऽर्घः स्यात्' तुशब्दः पक्षव्यावृत्तौ । अमांसः मांसवर्जितः अर्घो नैव भवेत् । पूर्वं षोडशीग्रहणवद्विकल्पमभिधाया-द्यार्थकत्वेन चानुष्ठानपक्षं संस्तूयेदानीं विवाहे क्रतौ च तस्यावश्यकतामाह—'अधिय'''ब्रूयात्' क्रतौ विवाहे च कुरुतेत्येव ब्रूयात् । प्रयोगस्तु प्राग्दर्शितः । आलम्भस्तु कलौ निषिद्धत्वान्नादरणीयः । 'यद्यप्य''''''इति श्रुतेः । असकृत्पुनःपुनः संवत्सरस्य संवत्सरसंबन्धिना सोमेन यजेत, यद्वा संवत्सरस्य मध्ये असकृत्पुनः पुनः सोमेन यजेत तदा कृतार्घ्या एवैनं यजमानं याजयेयुः नाकृतमधुपर्का इत्यर्थः । श्रुतिप्रमाणं तु सोमादन्यत्र मधुपर्कस्याऽनावश्यकताप्रदर्शनार्थम् । अपरे तु—सोम एव ऋत्विजां मधुपर्कमाहुः । ततः पुण्याहवाचनं यथाशक्त्यलंकृतां सितवस्त्रयुग्मवेष्टितां चन्दनविलेपिताङ्गीं पुष्पाद्यलंकृतां ब्राह्मणेषु पुण्याहं पठत्सु कुमारीं पुण्याहस्थाने समानीय तस्याः दक्षिणं हस्तं गृहीत्वा पिता ददाति । पित्रभावे पितामहादिः । सर्वेषामभावे कन्या कुर्यात्स्वयंवरम् । तत्र विधिः । चतुरिकोत्तरतः वरं प्राङ्मुखं कुशास्तीर्णे आसने उपविष्टं वराद्दक्षिणतः कन्यामुपवेश्य ततः प्रागुदङ्मुखः प्रदः कन्यायाः आसने उपविशेत् । दक्षिणतः पत्नी तिष्ठेत् । तत्र पूर्वं देशकालौ स्मृत्वा कन्यादानमहं करिष्य इति संकल्प्य कन्यादाननिमित्तं वराय पाद्यार्घौ दत्त्वा तस्यैव पादौ प्रक्षाल्य स्वपादावपि प्रक्षाल्याचम्य प्राणानायम्य पुनराचम्य स्वस्तिन इन्द्र इत्यादि पठित्वोदकं पात्रे प्रक्षिप्यापवित्र इत्यनेन पुण्डरीकाक्षं संस्मृत्यात्मानं मार्जयित्वा सप्तव्याधेत्यादि पठित्वा कन्यादानोपहाराणामित्युपहारं प्रोक्ष्य पुनः स्वस्ति न इति पठित्वा चंदनपुष्पागुरुधूपारार्तिकादिभिर्वरं संपूज्य इमानि अर्चितानि ज्योतींषीत्युक्त्वाऽर्चनविधेः पूर्णतास्त्वित्युक्त्वा यवान्प्रकीर्य पुण्याहं दीर्घमायुरस्त्वित्यादिनात्मानं संप्रोक्ष्य सोदकान्दर्भाक्षतान्गृहीत्वा देशकालौ संकीर्त्य शास्त्रोक्तफलावाप्त्यर्थममुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्रायैवं पितामहपित्रोर्नामनी संकीर्त्य पौत्राय पुत्रायेत्युक्त्वामुकगोत्रायामुकशर्मणे वराय तुभ्यमित्युक्त्वाऽमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्रीमेवं पौत्रीं तथा; पुत्रीमित्युक्त्वामुकगोत्रीममुकनाम्नीमनुपहतसर्वेन्द्रियां वस्त्रयुग्माच्छादितां सोपानत्कां यथाशक्ति सुवर्णरजताद्यलंकृताम्, प्रजापतिदैवतां एवं त्रिः प्रयोगः । अमुकगोत्रोऽहं मार्तण्डोपरागादिकालीन'''कुरुक्षेत्राद्यधिकरणकानवद्यविद्यावते ब्राह्मणाय सुवर्णभारसहस्रदानजन्यफलोपमशास्त्रबोधितफलावाप्तिकामः संप्रदद इत्युक्त्वा कन्यादक्षिणहस्तं वरदक्षिणहस्ते दद्यात् । वरश्चो३मिति प्रतिगृह्य स्वस्तीत्याशिषं दत्त्वा कोऽदादिति कामस्तुतिं पठेत् । ततः कन्यादानप्रतिष्ठार्थमिति संकल्प्य हिरण्यं वराय दद्यात् । ततः पयस्विनीं गां कन्यादानसमृद्ध्यै यथोपपन्नोपस्करसहितां दद्यात् । ततो दक्षिणाः पान्त्वित्याद्याशीः प्रार्थना । ततः कृतैतत्कन्यादानकर्मणो यन्न्यूनं यदतिरिक्तं तत्सर्वं परिपूर्णमस्त्विति संप्रार्थ्य द्विजान्प्रणमेत् । कौतुकगृहप्रवेशादि कुर्यात् । इति तृतीया कण्डिका ॥ ३ ॥

चत्वारः पाकयज्ञा हुतोऽहुतः प्रहुतः प्राशित इति ॥ १ ॥ पञ्चसु बहिः-शालायां विवाहे चूडाकरण उपनयने केशान्ते सीमन्तोन्नयन इति ॥ २ ॥ उपलिप्त उद्धतावोक्षितेऽग्निमुपसमाधाय ॥ ३ ॥ निर्मन्थ्यमेके विवाहे ॥ ४ ॥ उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृह्णीयात् ॥ ५ ॥ त्रिषु त्रिषूत्तरादिषु ॥ ६ ॥ स्वातौ मृगशिरसि रोहिण्यां वा ॥ ७ ॥ तिस्रो ब्राह्म-णस्य वर्णानुपूर्व्येण ॥ ८ ॥ द्वे राजन्यस्य ॥ ९ ॥ एका वैश्यस्य ॥ १० ॥ सर्वेषाꣳशूद्रामप्येके मन्त्रवर्जम् ॥ ११ ॥ अथैनां वासः परिधापयति जरां गच्छ परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपावा । शतं च जीव शरदः सुवर्च्चा रयिं च पुत्राननुसंव्ययस्वायुष्मतीदं परिधत्स्व वास इति ॥ १२ ॥ अथो-त्तरीयम् । या अकृन्तन्नवयं या अतन्वत । याश्च देवीस्तन्तूनभितो ततन्थ । तास्त्वा देवीर्जरसे संव्ययस्वायुष्मतीदं परिधत्स्व वास इति ॥ १३ ॥ अथैनौ समञ्जयति । समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ । संमातरिश्वा संधाता समुदेष्ट्री दधातु नाविति ॥ १४ ॥ पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति । यदैषि मनसा दूरं दिशोऽनु पवमानो वा । हिरण्यपर्णो वैकर्णः स त्वा मन्म-नसां करोत्वित्यसाविति ॥ १५ ॥ अथैनौ समीक्षयति । अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्च्चाः । वीरसूर्देवकामास्योनाशन्नो भव द्विपदे शं च-तुष्पदे । सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयोऽग्निष्टे पति-स्तुरीयस्ते मनुष्यजाः । सोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये । रयिं च पुत्रा-श्चादादग्निर्मह्यमथो इमाम् । सा नः पूषा शिवतमामैरय सा न ऊरू उशती विहर । यस्यामुशन्तः प्रहराम शेपं यस्यामु कामा बहवो निविष्टया इति ॥ १६ ॥ ॥ ४ ॥ ❀ ॥

( कर्कः )—‘ चत्वारः पाकयज्ञाः ’ कोऽस्याभिसंबन्धः विवाहः प्रक्रान्तः, तत्र च बहिः-शालायां कर्मेष्यते, तेनान्यत्रापि यत्र यत्र बहिःशाला तदर्थमभिधीयते । चतुष्प्रकाराः पाकयज्ञाः भवन्तीति शेषः । तानाह ‘ हुतोऽहुतः प्रहुतः प्राशित इति ’ यत्र होम एव भवति स हुत उच्यते यथा अक्षतहोमः । अहुतश्च यत्र होमो नास्ति यथा स्रस्तरारोहणम् । प्रहुतो यत्र होमो बलिहरणं च यथा पक्षादिषु । प्राशितो यत्र प्राशनमेव न होमो न च बलिहरणम् । यथा सर्वासां पयसि पायसꣳ श्रपयित्वा ब्राह्मणान्भोजयेदिति । ‘ पञ्चसु बहिःशालायाम् ’ कर्म भवति । ‘ विवाहे······न्तो-

त्र्ययन इति' एतेषु बहिःशाला कार्या । 'उपलिप्त······समाधायेति' उपलेपनादि शक्यमेवावक्तुं परिसमूहनादेरुक्तत्वादतः परिसमूहनव्युदासार्थमिति केचित् । अपरे तु—गृह्यस्थालीपाककर्मणि परिसमूहनाद्युक्तम् अगृह्यार्थोऽयमारम्भः । विवाहादयश्चागृह्याग्निविषयाः, येनैवाहितोऽग्निस्तदीयमेव हि कर्म तत्रेष्यते उपग्रहविशेषात् । तस्मादगृह्यार्थमुद्धतावोक्षितग्रहणमिति । तदेतदपि नोपपद्यते । यत्र कचिद्धोम इत्यनेनात्रापि प्राप्तत्वात् । कथं तर्ह्येतत् । अयमभिप्रायः सूत्रकारस्य । यत्र कचिद्धोम इत्यनेनाप्राप्तिः परिसमूहनादीनाम्, अग्न्यर्थत्वात्तेषां यत्र यत्राग्नेः स्थापनं तत्र तत्रैते कर्तव्या इति स्मृतिः । तथा च लिङ्गम्, उद्धते अवोक्षितेऽग्निमादधाति । एष एव विधिर्यत्र कचिद्धोम इत्यनेन स्थालीपाकादिषु परिसमूहनादेरप्राप्तिप्रज्ञप्त्यर्थमिदमुद्धतावोक्षितग्रहणम् । 'निर्मन्थ्यमेके विवाहे' निर्मन्थ्योऽचिरनिर्मथित उच्यते । सर्व एव ह्यग्निर्मन्थनाज्जायते । यथा नवनीतेन भुङ्क्ष्व इत्यचिरदग्धेनेति गम्यते । एके लौकिकमेवाग्निमिच्छन्ति । 'उदगयन······पुण्याहे' दैवानि कुर्वीतेति वाक्यशेषः । देवानां चोदगयनमिष्यते । तद्धि देवानामिति । स यत्रोदङ्ङावर्तते देवेषु तर्हि भवतीति देवानामुदगयनम् । नच देवा उदगयने न किंचित्कुर्वन्ति । तस्माद्दैवं कर्म तत्रोचितमिति गम्यते । आपूर्यमाणपक्षो गृहीतः सोऽपि देवानामेव य एवापूर्यतेऽर्द्धमासः स देवानामित्यनेन । पुण्याहस्तु स्मरणात् । सर्वं दैवविषयमेतदभिधीयते । 'कुमार्याः······पूत्तरादिषु' नक्षत्रेषु । कुमारीग्रहणं विंशतिप्रसूताव्युदासार्थम् । स्मर्यते हि विंशतिप्रसूतायाः पुनर्विवाहः । 'स्वातौ···वा' इति विकल्पः ' 'तिस्रो ···पूर्व्येण' भार्या भवन्ति । वर्णानुपूर्व्यग्रहणाच्च न व्युत्क्रमेणेति । 'द्वे राजन्यस्य' वर्णानुपूर्व्येणेति वर्तते । 'एका वैश्यस्य' 'सर्वेषाᳫं·········वर्जम्' । सर्वेषां वर्णानामेवैके शूद्रामिच्छन्ति । एके नेच्छन्ति नह्यस्या धर्मकार्येष्वधिकार इति । तथाच यास्काचार्याः—रामा रमणायोपेयते न धर्मायेति । एके तु रमणार्थतयेच्छन्ति । तथाचाह—अग्निं प्रथमं चित्वा न रामामुपेयादिति । प्राप्तिपूर्वको हि प्रतिषेधो भवति तस्माद्विकल्प एवायमिति । 'अथैनां·········धत्स्वेति' अनेन मन्त्रेण । मन्त्रश्च कारितार्थे । परिधापयिता चात्र वर एव । अपरे त्वध्वर्युमत्र कर्तारमिच्छन्ति परिभाषितं ह्येतदध्वर्युः कर्मसु वेदयोगादिति । नैतदित्यपरे । नहि स्मार्तेष्वध्वर्योः कर्तृत्वं, समाख्यया हि श्रौतेष्वध्वर्योः कर्तृत्वमिष्यते न चात्र समाख्याऽस्ति वेदयोगाभावात् । स्मरणादेव हि स्मृतीनां प्रामाण्यमुक्तम् । अतः समाख्याऽभावात्स्वयमेव कर्तृत्वम् । ननु च पाकयज्ञेषु दक्षिणा श्रूयते पूर्णपात्रो दक्षिणा वरो वेति । दक्षिणाशब्दश्च परिक्रयार्थे द्रव्ये वर्तते । न च परिक्रेयमन्तरेण परिक्रयो भवति । तस्मादन्यस्य कर्तृत्वमिति । नैतदेवम् । अस्ति ह्यत्रान्योऽपि ब्रह्माख्यः कर्ता परिक्रेतव्यस्तदर्थः परिक्रयोऽयमिति क्षीणार्थापत्तिः । अपि च परकीये कर्मणि परो नैव प्रवर्तते वचनमन्तरेण श्रौतेषु च समाख्ययाऽन्यस्य कर्तृत्वमिति । नचेह समाख्याऽस्तीत्युक्तम् । वेदमूलत्वेऽपि हि स्मृतीनां समाख्याऽपरिज्ञानादकर्तृनियमः । श्रौतेषु तु परिक्रयाऽऽम्नानादन्यस्य कर्तृत्वमिति तदुक्तम् । अपि च परकर्तृत्वे सा मामनुव्रता भवेत्येवमादीनि मन्त्रलिङ्गानि विरुध्यन्ते । 'अथोत्तरीयम् या अकृन्तन्न वयम्' इत्यनेन मन्त्रेण परिधापयतीत्यनुवर्तते । 'अथैनौ समञ्जयति' समञ्जन्तु विश्वेदेवा इत्यनेन मन्त्रेण । सत्यपि कारितार्थत्वे वरस्यैव मन्त्रपाठो मन्त्रलिङ्गात् कारयितृत्वं च सन्निधानात्कन्यापितुः । सन्निहितोऽह्यसौ प्रदातृत्वात् । 'पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति यदैषि मनसा' इत्यनेन मन्त्रेण । आदाय गृहीत्वेति चोभयं न वक्तव्यम् । उच्यते च किमर्थं तत् ? अप्रतिग्रहस्यापि प्रतिग्रहविधिना दानं यथा स्यादिति । असाविति कन्यानामग्रहणं मन्त्रान्ते । 'अथैनौ···ध्येधीति' समीक्षणक्रियां कारयति । कारिते चाप्येषणा परस्परं समीक्षेथामिति । कारयितृत्वं कन्यादातुः संनिधानात् । मन्त्रस्तु वरस्यैव मन्त्रलिङ्गात् ॥ ४ ॥ ॥ * ॥

( जयरामः )—' चत्वा...यज्ञाः ' भवन्तीति शेषः । कोऽस्याभिसंधिः । उच्यते विवाह उपक्रान्तस्तत्र बहिःशालायां कर्मेष्यते तत्प्रसंगेनान्यत्रापि यत्र यत्र बहिःशाला तदर्थमभिधीयते, चतुष्प्रकाराः पाकयज्ञाः । तदाह । ' हुत इति ' यत्र होम एव स हुतः यथाऽक्षतहोमः । अहुतश्च यत्र न होमः यथा स्रस्तरारोहणम् । प्रहुतो यत्र होमो बलिहरणं च यथा पक्षादिः । प्राशितो यत्र प्राशनमात्रं न होमादिः यथा सर्वासां पयसि पायसछं श्रपयित्वा ब्राह्मणान्भोजयेदिति । ' पञ्चस्विति ' विवाहादिषु पञ्चसु बहिःशालायां कर्म भवति । एषु बहिःशाला कार्येत्यर्थः । बहिःशालाशब्दसामर्थ्यान् अग्निरत्र लौकिक एव । ' उपलिप्त उद्धतावोक्षित इति ' शक्यमेवावक्तुं परिसमूहनादेरुक्तत्वात्, अतः परिसमूहनादिव्युदासार्थमित्येके । अपरे तु—गृह्यस्थालीपाकानां कर्मणि परिसमूहनाद्युक्तम् । अतोऽगृह्यार्थोऽयमारम्भः विवाहादयश्चागृह्याग्निविषयाः येनैवाहितोऽग्निस्तदीयमेव कर्म तत्रेष्यते । उपग्रहविशेषात्, तस्मादगृह्यार्थमुद्धतावोक्षितग्रहणमिति तदपि न, यत्र कचिद्धोम इत्यनेन प्राप्तत्वात् । कथं तर्हीदमुक्तम् ? श्रूयताम्, अयमभिप्रायः सूत्रकृतः । यत्र कचिद्धोम इत्यनेन परिसमूहनादीनामप्राप्तिः अग्न्यर्थत्वात्तेषां यत्र यत्राग्नेः स्थापनं तत्र तत्रैते कर्तव्या इति । तथा च लिङ्गम् । उद्धते वा अवोक्षितेऽग्निमादधतीति । तस्मादेष एव विधिर्यत्र कचिद्धोम इत्यनेन स्थालीपाकादिषु परिसमूहनादेरप्राप्तिप्रज्ञस्त्यर्थमिदमुद्धतावोक्षितग्रहणम् । ' निर्मन्थ्यमेके विवाहे ' निर्मन्थ्यः अचिरनिर्मथितो गृह्यते सर्वोऽप्यग्निर्मन्थनाज्जायत इति । यथा नवनीतेन भुङ्क्ष इत्यचिराद्धृतेनेति गम्यते । एके लौकिकाग्निमेवात्रेच्छन्ति अतो विकल्पः । उदगयनादौ दैवानि कुर्वीतेति शेषः । तद्धि देवानामिति । स यत्रोदङ्मुखो वर्तते देवेषु तर्हि भवति । देवानामुदगयनं तस्माद्दैवं कर्म तत्रोचितमिति गम्यते । आपूर्यमाणपक्षोऽपि देवानामेव य एवापूर्यतेऽर्द्धमासः स देवा नामित्यनेन । पुण्याहस्तु स्मरणात् । सर्वं दैवविषयमेव तदवगम्यते । कुमार्याग्रहणं विंशतिप्रसूताव्युदासार्थम् । स्मर्यते हि—विंशतिप्रसूतायाः पुनर्विवाह इति । त्रिषु त्रिषु नक्षत्रेषूत्तरादिषु उत्तरासहितेषु तेषु त्रिष्वित्यर्थः । स्वात्यादिषु वेति विकल्पः । ' तिस्रो ब्राह्मणस्येति ' वर्णानुपूर्व्यग्रहणाच्च व्युत्क्रमेण भार्या भवन्ति । वर्णानुपूर्व्येणेति राजन्यवैश्ययोरप्यनुवर्तते । सर्वेषां वर्णानां शूद्रामिच्छन्त्येके विना मन्त्रम् । एके न । नह्यस्या धर्मकार्येष्वधिकार इति । तथाच यास्कः रामा रमणायोपेयते न धर्मायेति । एके तु रमणार्थतयेच्छन्ति । तथा चाह अग्निं चित्वा प्रथमं रामामुपेयादिति । प्राप्तिपूर्वको हि निषेधः अतोऽयं विकल्पः । अथैनां वधूं वर एव वासः परिधापयति जरां गच्छेति मन्त्रेण मन्त्रस्य कारितार्थत्वात् । अपरे त्वध्वर्युमत्र कर्तारं मन्यन्ते, परिभाषितं ह्येतत् अध्वर्युः कर्मसु वेदयोगादिति । नैतदित्यन्ये । नहि स्मार्तेष्वध्वर्योः कर्तृत्वम्, समाख्यया हि श्रौतेष्वध्वर्योः कर्तृत्वमिष्यते । न चात्र समाख्याऽस्ति वेदयोगाभावात् स्मरणादेव स्मृतीनां प्रामाण्यमुक्तम् । अतः समाख्याया अभावात्तस्यैव कर्तृत्वम् । ननु पाकयज्ञेषु दक्षिणा श्रूयते पूर्णपात्रो दक्षिणा वरो वेति, दक्षिणाशब्दश्च परिक्रयार्थे द्रव्ये वर्तते नच परिक्रेतव्यमन्तरेण परिक्रयो भवति, ततोऽन्यस्य कर्तृत्वमिति । नैवम् । अस्ति ह्यत्रान्योऽपि ब्रह्माख्यः परिक्रेतव्यस्तदर्थः परिक्रयोऽयमिति क्षीणाऽर्थापत्तिः । अपिच परकीये कर्मणि परो नैव प्रवर्तते वचनं विना, श्रौतेषु च समाख्ययाऽन्यस्य कर्तृत्वम् । न चेह समाख्याऽस्तीति उक्तम् । वेदमूलकत्वेऽपि स्मृतीनां समाख्याऽपरिज्ञानादकर्तृनियमः । श्रौतेषु तु परिक्रयाऽऽम्नानादन्यस्य कर्तृत्वमिति युक्तम् । अपिच परकर्तृत्वे 'सा मामनुव्रता भव' इत्येवमादीनि मन्त्रलिङ्गानि विरुध्यन्ते । तत्र मन्त्रमाह । ' जराङ्गच्छेति ' अस्यार्थः—तत्र प्रजापतिस्त्रिष्टुप् तन्तुदेव्यः परिधापने । हे कन्ये त्वं जरां निर्दुष्टं वृद्धत्वं मया सह गच्छ प्राप्नुहि । वासश्च मया संपादितं परिधत्स्व परिधेहि, अभिशस्तिरभिशापः शंसु प्रमादे तस्मात्पातीत्यभिशस्तिपावा भव । आक्रुष्यन्ते कामादिभिरित्याक्रु-

ष्टयो मनुष्याः तेषां मध्ये शतं च शरदो वर्षाणि जीव प्राणिहि। सुवर्चाः पातिव्रत्यतेजोयुक्ता भूत्वा रयिं च धनं पुत्रांश्च अनु संव्ययस्व उत्पाद्य राशीकुरु। हे आयुष्मति इदं वासः परिधत्स्वेत्यनुवादः। 'अथोत्तरीयं' वासः या अकृन्तन्निति मन्त्रेण परिधापयतीत्यनुवर्तते। अस्यार्थः—तत्र प्रजापतिर्गायत्री विधात्र्यो वस्त्रधारणे। या देवीः देव्यः इदं वासः अकृन्तन् कर्तितवत्यः तत्तत्सामर्थ्यवाहाः या अवयन् वीतवत्यः तन्तुसंतानं कृतवत्यः ओतवत्य इत्यर्थः, यास्तन्तून्सूत्राणि अतन्वत प्रोतवत्यः तिर्यक्तन्तून् विस्तारितवत्य इत्यर्थः। चकारात् या ओतान् प्रोतांश्च तन्तूनभित उभयपार्श्वयोरपि ततन्थ तेनुः तुरीवेमादिव्यापारेण ग्रथितवत्य इत्यर्थः। ताः तत्तत्सामर्थ्यदात्र्यो देव्यः स्वकार्यं रूपवदिदं वासः त्वा त्वां जरसे दीर्घकालनिर्दुष्टजीवनाय संव्ययस्व परिधापयंतु। पुरुषादिव्यत्ययश्छान्दसः। अतो हे आयुष्मति इदमेतादृशं वासः परिधत्स्व उत्तरीयत्वेन वृणीष्व। 'अथैनौ' वधूवरौ कन्यापिता समञ्जयति परस्परं संमुखीकरोति 'समञ्जन्तु विश्वेदेवा' इति मन्त्रेण। समञ्जनं च युवां परस्परं समञ्जेथामिति प्रेषितयोः परस्परं संमुखीकरणं सत्यपि कारितत्वे वरस्यैव मन्त्रपाठो मन्त्रलिङ्गात्। कारयितृत्वं च सन्निधानात्कन्यापितुरेव। संनिहितो ह्यसौ प्रदातृत्वात्। मन्त्रपाठश्च कन्यासंमुखमेव। अथ मन्त्रार्थः—तत्र अथर्वणोऽनुष्टुप् लिङ्गोक्ता मैत्रीकरणे। हे कन्ये नौ आवयोः हृदयादीनि मनांसि तद्धर्मान् वा संकल्पादीन् विश्वे सर्वे देवाः तथा सम्यग्भूता आपः समञ्जन्तु गुणातिशयाऽऽधानेन संस्कुर्वन्तु। तथा सम्यग्भूतो मातरिश्वा अनुकूलो वायुः, तथा संधाता कनुकूलः प्रजापतिः, उ अप्यर्थे, देष्ट्री धर्माद्युपदेशकर्त्री वाक्संदधातु सुस्थितानि करोतु। पित्रा प्रत्तामित्यत्राऽऽदाय गृहीत्वेति उभयग्रहणम् अप्रतिग्रहस्यापि प्रतिग्रहविधिना दानं यथा स्यादिति। अप्रतिग्रहश्च क्षत्रियादिः। तत्र मन्त्रः 'यदैपीति' अस्यार्थः—तत्राथर्वणोऽनुष्टुप् पवमानो निष्क्रमणे। हे कन्ये यद्यतस्त्वं पितृगृहाद्दूरमेपि आगच्छसि मनसा अनुकूलया मनोवृत्त्या दिशः प्राच्याद्या अनु पवमानो वायुरिव। वाशब्द उपमार्थे। अतः स वायुः त्वा त्वां मन्मनसां मदेकनिष्ठचित्तां करोतु, किंभूतः हिरण्यम् ऊर्जस्वत्पर्णं पतनं यस्य, विशिष्टः कर्ण आश्रयो यस्य सः। वायोरपि स्वकारणगुणसंबन्धात् कर्णाश्रयत्वम्। विकर्ण एव वैकर्णः स्वार्थे अण्। असाविति कन्यानामग्रहणं वरेणैव मन्त्रान्ते हे अमुकीत्येवम्। अथैनौ वधूवरौ समीक्षणक्रियां कारयति अघोर चक्षुरिति मन्त्रेण। कारितार्थे चाध्येपणा, युवां परस्परं समीक्ष्येथामिति। मन्त्रपाठस्तु मन्त्रलिङ्गाद्वरस्यैव। अथ मन्त्रार्थः। तत्र चतुर्णां प्रजापतिर्द्वितीयस्यानुष्टुप् शेपाणां त्रिष्टुप् कुमारी समीक्षणे। हे कन्ये त्वं अघोरचक्षुः सौम्यदृष्टिः अपापदृष्टिर्वा एधि भव। तथा अपतिघ्नी अकार्यकरणेन पत्यर्थघातिनी तथा मा भव एतस्मात्संस्कारात्तथा पशुभ्यः पशुवदाश्रितेभ्यः शिवा हितैपिणी च भव सुमनाः सुप्रसन्नचित्ता सुवर्चाः सुप्रभावयुक्ता वीरसूः सुपुत्रजननी देवकामा देवान् अग्न्यादीन् कामयते सेवार्थमीहते यद्वा देवं देवनं क्रीडां कामयते। स्योना सुखवती नोऽस्माकं शं सुखहेतुः द्विपदे मनुष्यवर्गाय मनुष्यवर्गमुपाकर्तुम् तथा चतुष्पदे पशुवर्गाय पशुवर्गमुपाकर्तुं च शं सुखहेतुर्भव। हे कन्ये ते त्वां सोमश्चन्द्रस्ते तव प्रथमः आद्यः पतिः विविदे जन्मदिने लब्धवान्॥ विद्लृ लाभे धातु। ततः सार्द्धवर्षद्वयानन्तरं गन्धर्वः सूर्यो विविदे। अत उत्तरः तव द्वितीयोऽयं पतिः। ततोऽग्निरपि तावत्कालेन विविदे। अतोऽयं तव तृतीयः पतिः। यथाहुः पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववह्निभिरिति। तथा ते तव तुरीयश्चतुर्थश्चिरकालभोगाय पतिर्मनुष्यजाः मानुषः अहमेवेत्यर्थः। किमिदानीं चतुर्णामपि इयं पत्नी नेत्याह सोमोऽददिति मन्त्रार्थं ख्यापयन्। अस्यार्थः। सोमश्चन्द्रस्त्रिंशन्मासान्भुक्त्वा गन्धर्वः सूर्यस्तस्मै अददत् ददौ सोऽपि तावत्कालं भुक्त्वाऽग्नयेऽददत् स चाग्निर्मह्यमिमामदात् दत्तवान्। न केवलमिमां किं तु पुत्रान् सुतान् रयिं धनं च चकाराद्धर्म-

दि चाद्यादिति संबन्धः । या जगच्चक्षुः पूषा देवता सा इमां शिवतमां कल्याणगुणशीलां कृत्वा नोऽस्मान्प्रत्यैरय ईरयतु । आटो दर्शनं विभक्तेरदर्शनं च छान्दसम् । अस्मास्वनुरक्तां करोत्वित्यर्थः । सा चास्मत्तः सुखं पुत्रांश्च कामयमाना ऊरू सक्थिनी विहर विवृणोतु प्रसारयत्वित्यर्थः । मध्यमपुरुषश्छान्दसः । प्रयोजनमाह यस्यां स्त्रीयोनौ उशन्तः पुत्रान् सुखं चेच्छन्तः शेपम् शिश्नं प्रहराम प्रवेशयाम वयं यस्यां च कन्यायाम् उ एवार्थे यस्यामेव बहवः कामाः धर्मपुत्ररतिसुखरूपाः सन्ति सन्तु वा । किमर्थं, निविष्टै अग्निहोत्राद्युपासनयाऽन्तःकरणशुद्धिद्वारा सायुज्यमुक्तये ॥ ४ ॥ ॥ * ॥

( हरिहरः )—' चत्वारः पाकयज्ञाः ' पच्यते श्रप्यते ओदनादिकमस्मिन्निति पाको गृह्याग्निस्तस्मिन्पाके नान्यत्रेति भावः । पाके यज्ञाः पाकयज्ञाः । यतः, वैवाहिकेऽग्नौ कुर्वीत गार्ह्यं कर्म यथाविधि । पञ्चयज्ञविधानं च पक्तिं चान्वाहिकीं गृहीति मनुना दैनंदिनपाको गृह्येऽग्नौ स्मर्यते । ते चत्वारः चतुर्विधा भवन्ति, कथम्, ' हुतोऽहुतः प्रहुतः प्राशित इति ' तत्र हुतो होममात्रं यथा सायंप्रातर्होमः । अहुतः होमबलिरहितं कर्म यथा स्रस्तरारोहणम् । प्रहुतो यत्र होमो बलिकर्म भक्षणं च यथा पक्षादिकर्म । प्राशितो यत्र प्राशनमात्रं न होमो न बलिः यथा सर्वासां गवां पयसि पायसश्रपणानन्तरं ब्राह्मणभोजनम्, इत्थं चतुर्विधः । ' पञ्चसु······न्नयन इति ' पञ्चसु संस्कारकर्मसु बहिःशालायां गृहाद्बहिः शाला बहिःशाला मण्डप इति यावत् । तस्यां कर्म भवति । यथा विवाहे परिणयने चूडाकरणे क्षौरकर्मणि उपनयने मेखलाबन्धे केशान्ते गोदानकर्मणि सीमन्तोन्नयने गर्भसंस्कारे । एतेषु पञ्चसु बहिःशालायामनुष्ठानम् । अन्यत्र गृहाभ्यन्तरे मुख्यशालायामेव । ' उपलि···धाय ' उपलिप्ते गोमयोदकेन उद्धते स्फ्येनोल्लिखितेनेति तिसृभी रेखाभिः अवोक्षिते उदकेनाभ्युक्षिते बहिःशालागृहयोः अन्यतरस्मिन्प्रदेशे अग्निमुपसमाधाय अग्निं लौकिकमावसथ्यं वा उपसमाधाय स्थापयित्वा । अयं च लेपनादिविधिर्नापूर्वः । अपि तु परिसमुह्येत्यादिपूर्वोक्तस्यैवानुवादः, ततश्चात्रानुक्तमपि परिसमूहनमुद्धरणं च सर्वत्र भवति, एष एव विधिर्यत्र क्वचिद्धोम इति वचनात् । ' निर्म···वाहे ' एके आचार्याः विवाहे पाणिग्रहे निर्मन्थ्यमारणेयमग्निं वैवाहिकहोमाधिकरणमिच्छन्ति । अथ विवाहाख्यं कर्माह । ' उदग···हीयात् ' उदगयने मकरादिराशिषट्कस्थिते रवौ आपूर्यमाणपक्षे शुक्लपक्षे पुण्याहे ज्योतिःशास्त्रोक्तविष्ट्यादिदोषरहिते कुमार्याः अनन्यपूर्विकायाः कन्यायाः । अनेन विंशतिप्रसूतायाः स्मृत्यन्तरविहितस्य पुनर्विवाहस्यानियमः इच्छा चेत्करोति । पाणिं गृह्णीयात् पाणिं हस्तं स्वगृह्योक्तविधिना गृह्णीयात् । अस्मिन् अयनपक्षदिनानि नियम्य नक्षत्रनियममाह—' त्रिषु······हिण्यां वा । उत्तरा आदिर्येषां तान्युत्तरादीनि तेषु कतिषु त्रिषु त्रिषु, तथाहि उत्तराफल्गुनी हस्तः चित्रा इति त्रीणि, उत्तराषाढा श्रवणं धनिष्ठा इति त्रीणि, तथा उत्तराभाद्रपदारेवत्यश्विन्य इति त्रीणि । स्वातौ मृगशिरसि रोहिण्यां वा । एतेषां नक्षत्राणामन्यतमे इत्यर्थः । कुमार्याः पाणिं गृह्णीयादिति सामान्येनोक्तं तत्र विशेषमाह—तिस्रो···श्यस्य । ब्राह्मणस्य द्विजाभ्यस्य वर्णानुपूर्व्येण वर्णक्रमेण तिस्रो ब्राह्मणीक्षत्रियावैश्या विवाह्या भवन्ति । द्वे क्षत्रियावैश्ये राजन्यस्य विवाह्ये भवतः । एका वैश्यैव वैश्यस्य विवाह्या भवति । वर्णानुपूर्व्यग्रहणात् व्युत्क्रमो निषिद्धः । ' सर्वे···वर्जम् ' सर्वेषां ब्राह्मणक्षत्रियविशां शूद्रामप्येके विवाह्यां मन्यन्ते तत्र विशेषः । मन्त्रवर्जं मन्त्ररहितं यथा भवति तथा । अत्र द्विजातीनामपि शूद्रापरिणयने आचार्येण मन्त्रवत्क्रियानिषेधात् । अतः शूद्रस्य शूद्रापरिणयने मन्त्रवत्क्रिया नास्ति किंतु मन्त्ररहितं क्रियामात्रमिति गम्यते । ततश्च शूद्रस्य शूद्रापरिणयने मन्त्रवद्धोमादि कर्म कुर्वन्ति तदशास्त्रीयम् । एके न मन्यन्ते शूद्राविवाहम्, कुतः शूद्रायाः धर्मकार्येष्वनधिकारात् । कुतो नाधिकार इति चेत्, रामा रमणायोपेयते न धर्माय कृष्णजातीयेति निरुक्तकारयास्काचार्यवचनात् । अतो रमणार्थं शूद्रापरिणयनं पक्षे । एवं

सति षण्मासदीक्षाद्यनन्तरमग्निं चित्वा प्रथमं न रामामुपेयादिति निषेध उपपद्यते प्राप्तं हि प्रतिषेधस्य विषयः यदि रामोढा न स्यात्तदा अग्निचितः कथं तत्प्रथमगमनं प्रतिषिध्येत । तस्माच्छूद्रापरिणयनमुपभोगार्थमिच्छया कुर्वतो न शास्त्रातिक्रमः धर्मप्रजारत्यर्थो हि विवाहः । प्रासङ्गिकमभिधायेदानीं प्रकृतमाह । तत्र पुण्येऽहनि । 'अथैनां······वास इति ' अथाग्निस्थापनानन्तरमेनां कुमारीं वासः अहतं सदृशं वस्त्रं परिधापयति परिहितं कारयति वरो जरां गच्छेति मन्त्रं पठित्वा । कुमारी च स्वयं परिधत्ते । 'अथोत्तरी······वत्स्व वास इति ' अथोत्तरीयं वस्त्रपरिधानानन्तरमुत्तरीयं वासः परिधापयति वरो या अकृन्तन्निति मन्त्रमुक्त्वा अत्र परिधापयतीति णिजन्तस्य कारितार्थत्वात्परिधत्स्व वास इति मन्त्रस्यापि तदर्थत्वात्परिधापयिताऽन्य इत्यवगम्यते स किं वरः अध्वर्युर्वा इति संशयः । तत्राध्वर्युः कर्मसु वेदयोगादिति परिभाषावलात् अध्वर्युः परिधापयितेति चेत्तन्न, स्मार्तेषु कर्मसु अध्वर्योः कर्तृत्वयोगाभावात् । समाख्यया हि अध्वर्योः कर्मसु योगः समाख्या च वेदयोगात्, न च स्मृतिर्वेदः स्मरणादेव स्मृतीनां प्रामाण्यान्न पुनर्वेदमूलत्वेन । अतः समाख्याया अभावात्स्वयंकर्तृत्वं पाकयज्ञेषु, अतो वर एव परिधापयिता । ननु पूर्णपात्रो दक्षिणा वरो वेति पाकयज्ञेषु परिक्रयार्थो दक्षिणा श्रूयते सा च दक्षिणा परिक्रेतव्याभावे नोपपद्यते । अतस्तदन्यथानुपपत्त्या अन्यस्य कर्तृत्वं कल्प्यताम् । नैतदेवम् । अन्यस्य ब्रह्मणः परिक्रेतव्यस्य कर्तुर्विद्यमानत्वात् परिक्रयार्थदक्षिणाश्रवणस्योपपत्तेः । किंच वचनाभावे परः परस्य कर्म कर्तुं न प्रवर्तते नात्र वचनमस्ति पाकयज्ञेषु स्वतोऽन्यकर्तृत्वविधायकम् । श्रौतवत्समाख्यापि नास्ति । ननु स्मृतीनां वेदमूलत्वात् यद्वेदमूलं स्मार्तं कर्म तद्वेदसमाख्यया अन्यस्य कर्तृत्वं कल्प्यताम् । मैवम् । यतः स्मृतयोऽनिश्चितवेदमूलाः अतो न ज्ञायते किंवेदमूलमिदं कर्म, यद्वेदसमाख्यया अन्यः कर्ता कल्प्यते । मन्त्रलिङ्गविरोधोऽपि परकर्तृत्वे, कथं—सा मामनुव्रता भव, प्रजापतिष्ट्वा नियुनक्तु मह्यम्, अमोहमस्मीत्यादि सा नः पूषा शिवतमेत्यादयो वैवाहिकमन्त्राः आत्मलिङ्गास्ते च परकर्तृत्वे विरुद्ध्यन्ते तस्मात्पाकयज्ञेषु स्वयं यजमानस्यैव कर्तृत्वमिति सिद्धम् । अत्र वरोऽपि वाससी परिधत्ते परिधास्यै यशसामेति मन्त्राभ्याम् । 'अथैनौ······नाविति ' अथ वस्त्रपरिधानानन्तरं परस्परं समञ्जेथामिति प्रैषेण कन्यापिता एनौ वधूवरौ समञ्जयति संमुखौ वरकुमार्यौ करोति । अत्र विशेषमाह ऋष्यशृङ्गः "वरगोत्रं समुच्चार्य प्रपितामहपूर्वकम् । नाम संकीर्तयेद्विद्वान्कन्यायाश्चैवमेव हि" तत्र वरः—समञ्जन्तु विश्वेदेवा इत्यादिकं मन्त्रं कन्यासंमुखीभूतः पठति । अत्र कन्यादानप्रयोगो लिख्यते, उत्तरत्र पित्रा प्रत्तामिति सूत्रस्मरणात् । तद्यथा असुकगोत्रस्यासुकप्रवरस्यासुकशर्मणः प्रपौत्राय असुकगोत्रस्यासुकप्रवरस्यासुकशर्मणः पौत्राय असुकगोत्रस्यासुकप्रवरस्यासुकशर्मणः पुत्राय इति वरपक्षे असुकगोत्रस्यासुकप्रवरस्यासुकशर्मणः प्रपौत्रीम्, असुकगोत्रस्यासुकप्रवरस्यासुकशर्मणः पौत्रीम्, असुकगोत्रस्यासुकप्रवरस्यासुकशर्मणः पुत्रीम्, इति कन्यापक्षे । एवमेव पुनर्वारद्वयमुच्चार्यासुकगोत्रायासुकप्रवरायासुकशर्मणे ब्राह्मणाय इति ब्राह्मणवरपक्षे । इतरवरपक्षे वर्मणे असुकगोत्रगुप्ताय असुकदासायेति विशेषः । असुकगोत्रामसुकप्रवरामसुकनाम्नीमिमां कन्यां प्रजापतिदैवतां यथाशक्त्यलंकृतां पुराणोक्तकन्यादानफलकामो भार्यात्वेन तुभ्यमहं संप्रददे इति सकुशेन जलेन कन्याहस्तं वरस्य हस्ते दद्यात् । वरश्च—द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णात्विति मन्त्रेण प्रतिगृह्णीयात् । ततः कोऽदादिति कामस्तुतिं पठेत् । ततः कन्यापिता कृतैतत्कन्यादानप्रतिष्ठासिद्ध्यर्थं सुवर्णं गोमिथुनं च दक्षिणां दद्यात् । अत्राचारादन्यदपि यौतकत्वेन[1] सुवर्णरजतताम्रगोमहिष्यश्वग्रामादि कन्यापिता यथासंभवं ददाति

---

१ यौतकादि तु यद्देयं सुदायो हरणं च यत् । इत्यमरः । युतकं योनिसम्बन्धस्तत्र भव तत्र भव इत्यण् । युतयोर्वरवध्वोर्वा इदं तस्येदमित्यण् । आदिना व्रतभिक्षादि ।

अन्येऽपि बान्धवादयो यथासंभवं यौतकं प्रयच्छन्ति । केचन यौतकं होमान्ते प्रयच्छन्ति । अत्र देशाचारतो व्यवस्था । 'पित्राप्र······यदैपीति' पित्रा जनकेन प्रत्तां संकल्प्य दत्तामादाय प्रतिग्रहविधिना प्रतिगृह्य गृहीत्वा हस्ते धृत्वा निष्कामति गृहमध्यात् मण्डपाद्वा । अग्निसमीपं गन्तुम् । यदैपि मनसेत्यादिना मन्त्रेण करोत्यमुकदेवि इत्यन्तेन । अत्र पित्रेत्युपलक्षणं पिता पितामहो भ्राता सकुल्यो जननी तथा । कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः । इति याज्ञवल्क्येन अन्येषामपि कन्यादाने अधिकारस्मरणात् । 'अथैनौ समीक्षयति' अथ निष्क्रमणानन्तरमेनौ वधूवरौ परस्परं समीक्षेथामिति प्रैषेण कन्यापिता समीक्षयति समीक्षणं कारयति । तत्र समीक्षमाणो वरः । 'अघोर······निविक्षा इति' अघोरचक्षुरित्यादीन् निविक्षा इत्यन्तान्मन्त्रान्पठति वरः । इति हरिहरभाष्ये चतुर्थी कण्डिका ॥ ४ ॥ ॥

(गदाधरः)—'चत्वारः पाकयज्ञाः' पाकयज्ञा इति कर्मणां नामधेयानि । चतुष्प्रकारा भवन्ति । के ते 'हुतो······शित इति' हुतो होममात्रं यथा सायंप्रातर्होमः । अहुतो यत्र न हूयते यथा स्स्तरारोहणम् । प्रहुतो यत्र हूयते बलिहरणं च यथा पक्षादिः । प्राशितो यत्र प्राश्यत एव न होमो न बलिहरणं यथा सर्वासां पयसि पायसꣳ श्रपयित्वा ब्राह्मणान्भोजयेदिति । ननूपदिश्यमाना एवैते चत्वारो भवन्ति । प्रकारकथनं प्रवृत्तिविशेषकरत्वाभावादनर्थकमिति चेत्, नानर्थकं प्रकारान्तरसूचनार्थत्वात् । चत्वारः प्रकारा उपदिष्टाः । अस्ति हि पञ्चमः प्रकारः स नोपदिष्टः तत्सूचनार्थमेवैतत्सूत्रम् । कश्चासौ ? ब्रह्मयज्ञ इति, तस्य विधेर्ब्राह्मणोपदिष्टत्वात् । एतावता तदवश्यमहरहरध्येतव्यमिति भर्तृयज्ञाः । 'पञ्चसु······त्रयन इति' विवाहादिषु पञ्चसु कर्मसु गृहाद्बहिः शालायां कर्म भवति । अन्यत्रान्तःशालायां बहिःशालायां वा भवति । विवाहे तु मण्डपो वसिष्ठेनोक्तः । षोडशारत्निकं कुर्यात् चतुर्द्वारोपशोभितम् । मण्डपं तोरणैर्युक्तं तत्र वेदिं प्रकल्पयेत् । अष्टहस्तं तु रचयेन्मण्डपं वा द्विषट्करम् । वेदीकरणं नारदोक्तम् । हस्तोच्छ्रितां चतुर्हस्तैश्चतुर्हस्तां समन्ततः । स्तम्भैश्चतुर्भिः सुश्लक्ष्णां वामभागे तु सद्मनः । समां तथा चतुर्दिक्षु सोपानैरतिशोभिताम् । प्रागुदक्प्रवणां रम्भास्तम्भहंसशुकादिभिः । एवं विधामारुरुक्षेन्मिथुनं साग्निवेदिकामिति । सप्तर्षिमते च । मङ्गलेषु च सर्वेषु मण्डपो गृहवामतः । कार्यः षोडशहस्तो वा न्यूनहस्तो दशावधिः । स्तम्भैश्चतुर्भिरेवात्र वेदी मध्ये प्रतिष्ठितेति । कारिकायामपि विवाहे मण्डपवेदीकरणमुक्तम् । 'उपलि······धाय' यत्राग्नेः स्थापनं तत्रोपलिप्ते उद्धते अवोक्षिते उदकेनाभ्युक्षिते देशेऽग्निस्थापनम् । अत्रानेन पञ्चाग्निसंस्कारा लक्ष्यन्ते । ननु परिसमूहनादेरुक्तत्वात्किमर्थमुपलेपनादिकमुच्यते । सत्यम् । उच्यते—यत्र क्वचिद्धोम इत्यनेनाप्राप्तिः परिसमूहनादेरग्न्यर्थत्वाद्यत्र यत्राग्नेः स्थापनं तत्र तत्रैते भवन्ति । तथा च लिङ्गम्—उद्धते वा अवोक्षितेऽग्निमादधातीति । एष एव विधिर्यत्र क्वचिद्धोम इत्यनेन च होमार्थमग्निस्थापने स्युः । अन्यत्र गृहान्तरेऽग्निनिधाने अग्निगमने मथित्वाऽग्निस्थापने च न स्युः । किं च एष एवेत्यनेन यत्र स्वस्थानस्थितेऽग्नौ स्थालीपाकादिकं क्रियते तत्रापि पञ्चैते स्युः, तन्मा भूदित्यनेन सूत्रेण ज्ञाप्यते । उपलिप्त उद्धतावोक्षिते देशेऽग्निमुपसमाधाय विवाहो भवतीति भर्तृयज्ञैः सूत्रं योजितम् । परिसमूहनपरिसंख्या च तेषां मते । 'निर्मन्थ्यमेके विवाहे' विवाह इति कर्मणो नामधेयम् । एके विवाहकर्मणि निर्मन्थ्यमग्निमिच्छन्ति अन्ये लौकिकमिच्छन्ति । निर्मन्थ्योऽचिरनिर्मथितो ग्राह्यः । सर्व एव ह्यग्निर्मन्थनाज्जायते यथा नवनीतेन भुङ्क्ते इत्युक्ते अचिरदग्धेनेति ज्ञायते । अत्र या काचिदरणिर्ग्राह्या । 'उदग······पुण्याहे' उदगयने उत्तरायणे आपूर्यमाणपक्षे शुक्लपक्षे पुण्याहे शोभने विष्ट्यादिरहितकाले दैवानि कर्माणि कुर्यात् । एवं हि श्रूयते । स यत्रोदङ्ङावर्तते देवेषु तर्हि भवतीति तस्मात्तत्र देवकर्मोचितम् । आपूर्यमाणः सोऽपि देवानामेव । तथा

य एवापूर्यतेऽर्धमासः स देवाह्नामिति श्रुतेः । पुण्याहेऽपि । उदगयनादीनां समुच्चयः, तेन सर्वं देवकर्मोदगयन आपूर्यमाणपक्षे पुण्याहे कार्यम् । इदं चानुक्तकालविषयं सूत्रम् । यत्र नियतः कालो यथा सायं जुहोति प्रातर्जुहोतिः पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्यया यजेतेत्यादौ तत्तत्काले कार्यम् । नहि शुक्लपक्षे पुण्याहादावग्निहोत्राद्यनुष्ठानमिष्टमहरहरनुष्ठातव्यत्वात् । अत उपनयनचूडाकरणादीनि उदगयनादौ कार्याणि । अन्यानि तु येषु न समुच्चयः संभवति तानि यथासंभवमेतेषु कर्तव्यानि । यथा सर्पबलिरनाहिताग्न्याग्रयणमित्यादीनीति तत्ररत्ने । एवं पित्र्याणि दक्षिणायनेऽपराह्णे च । 'कुमार्याः पाणिं गृह्णीयात्' कुमार्या अक्षतयोन्याः पाणिं गृह्णीयात् वक्ष्यमाणेन विधिना विवाहं कुर्यात् । विंशतिप्रसूताव्युदासार्थं कुमारीग्रहणम् । स्मर्यते हि तस्याः पुनर्विवाहः । 'त्रिषु त्रिषूत्तरादिषु' उत्तरा आदिर्येषां तान्युत्तरादीनि तेषु तेषु त्रिषु । अयमर्थः । उत्तराफल्गुन्यां हस्ते चित्रायां च । एव मुत्तराषाढायां श्रवणे धनिष्ठायां च । एवमुत्तराप्रोष्ठपदि रेवत्यामश्विन्यां च । 'स्वातौ···हिण्यां वा' एतेषामन्यतमे वा नक्षत्रे विवाहो भवतीत्यर्थः । उदगयन आपूर्यमाणपक्षे पुण्याहे इत्युक्तत्वात्कालप्रसंगाच्च स्मृत्यन्तरोक्तसंवत्सरादिकन्याविवाहकालोऽत्र निरूप्यते । तत्र ज्योतिर्निबन्धे । षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः । सोमो भुङ्क्ते ततस्तद्वद्गन्धर्वश्च तथाऽनलः । तथा यमः । सप्तसंवत्सरादूर्ध्वं विवाहः सार्ववर्णिकः । कन्यायाः शस्यते राजन्नन्यथा धर्मगर्हितः । राजमार्तण्डे । अयुग्मे दुर्भगा नारी युग्मे तु विधवा भवेत् । तस्माद्गर्भान्विते युग्मे विवाहे सा पतिव्रता । मासत्रयादूर्ध्वमयुग्मवर्षे युग्मेऽपि मासत्रयमेव यावत् । विवाहशुद्धिं प्रवदन्ति सन्तो वात्स्यादयः स्त्रीजनिजन्यमासात्(?) । स्मृत्यन्तरे तु—जन्मतो गर्भाधानाद्वा पञ्चमाब्दात्परं शुभम् । कुमारीवरणं दानं मेखलाबन्धनं तथेत्युक्तम् । सर्वसंग्रहवाक्यानि कारिकायाम् । अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी । दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला । दशमे नग्निका वा स्याद् द्वादशे वृषली स्मृता । अपरा वृषली ज्ञेया कुमारी या रजस्वला । प्राप्ते तु द्वादशे वर्षे यः कन्या न प्रयच्छति । मासि मासि रजस्तस्याः पिता पिबति शोणितम् । एतच्च प्रायिकं ज्ञेयं न रजोदर्शनं भवेत् । स्त्रीणां कासांचिद्वर्षेऽस्मिन्नाभाणि मनुनाऽपि तत् । उद्वहेत्त्रिंशद्वर्षस्तु कन्यां द्वादशवार्षिकीम् । त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः । एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् । वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुणः स्वयम् । त्रिंशद्वर्षो दशाब्दां च भार्यां विंदति नग्निकाम् । तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् । प्रदानं प्रागृतोस्तस्या ऊर्ध्वं कुर्वन्स दोषभाक् । ज्येष्ठो भ्राता पिता माता दृष्ट्वा कन्यां रजस्वलाम् । त्रयस्ते नरकं यान्ति स्वयमित्यब्रवीद्यमः । यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः । असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः । वृषलीसंग्रहीता यो ब्राह्मणो मदमोहितः । सततं सूतकं तस्य ब्रह्महत्या दिने दिने । पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता । भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता । दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणीम् । अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलामिति । अथ मासः । व्यासः । माघफाल्गुनवैशाखे यदूढा मार्गशीर्षके । ज्येष्ठे चाषाढके चैव सुभगा वित्तसंयुता । श्रावणेऽपि च पौषे वा कन्या भाद्रपदे तथा । चैत्राश्वयुक्कार्तिकेषु याति वैधव्यतां लघु । नारदः । माघफाल्गुनवैशाखज्येष्ठमासाः शुभावहाः । कार्तिको मार्गशीर्षश्च मध्यमौ निन्दिताः परे । पौषेऽपि कुर्यान्मकरस्थितेऽर्के चैत्रे भवेन्मेषगतो यदा स्यात् । प्रशस्तमाषाढकृतं विवाहं वदन्ति गर्गा मिथुने स्थितेऽर्के । मार्गे मासि तथा ज्येष्ठे क्षौरं परिणयं व्रतम् । ज्येष्ठपुत्रदुहित्रोस्तु यत्नेन परिवर्जयेत् । कृत्तिकास्थं रविं त्यक्त्वा ज्येष्ठपुत्रस्य कारयेत् । उत्सवादिषु कार्येषु दिनानि दश वर्जयेत् । तथा रत्नकोशे । जन्मर्क्षे जन्मदिवसे जन्ममासे शुभं त्यजेत् । ज्येष्ठे मास्यादिगर्भस्य शुभं वर्ज्यं स्त्रिया अपि । राजमार्तण्डे । जातं दिनं दूषयते

वसिष्ठो ह्यष्टौ च गर्गो नियतं दशात्रिः । जातस्य पक्षं किल भागुरिश्च शेषाः प्रशस्ताः खलु जन्ममासि । जन्ममासे तिथौ भे च विपरीतदले सति । कार्यं मङ्गलमित्याहुर्गर्गभार्गवशौनकाः । जन्ममासे निषेधेऽपि दिनानि दश वर्जयेत् । आरभ्य जन्मदिवसाच्छुभाः स्युस्तिथयोऽपरे । पराशरस्मृतौ विशेषः । अज्येष्ठा कन्यका यत्र ज्येष्ठपुत्रो वरो यदि । व्यत्ययोर्वा तयोस्तत्र ज्येष्ठो मासः शुभप्रदः । ज्येष्ठस्य ज्येष्ठकन्याया विवाहो न प्रशस्यते । तयोरन्यतरे ज्येष्ठे ज्येष्ठो मासः प्रशस्यते । तथा । द्वौ ज्येष्ठौ मध्यमौ प्रोक्तावेकज्येष्ठं शुभावहम् । ज्येष्ठत्रयं न कुर्वीत विवाहे सर्वसंमतम् । यत्तु सार्वकालमेके विवाह इति वदन्ति तत्प्रौढायां कन्यायां वेदितव्यम् । तथा च राजमार्तण्डे । राहुग्रस्ते तथा युद्धे पितॄणां प्राणसंशये । अतिप्रौढा च या कन्या चन्द्रलग्नबलेन तु । यद्वा तदासुरादिविवाहविषयम् । तथा च गृह्यपरिशिष्टम् । धर्म्येषु विवाहेषु कालपरीक्षणं नाधर्म्येष्विति । अथ गुर्वादिबलम् । तत्र गर्गः । स्त्रीणां गुरुबलं श्रेष्ठं पुरुषाणां रवेर्बलम् । तयोश्चन्द्रबलं श्रेष्ठमिति गर्गेण भाषितम् । देवलः । नष्टात्मजा धनवती विधवा कुशीला पुत्रान्विता हृतधवा सुभगा विपुत्रा । स्वामिप्रिया विगतपुत्रधवा धनाढ्या वन्ध्या भवेत्सुरगुरौ क्रमशोऽभिजन्म । गर्गः । जन्मत्रिदशमारिस्थः पूजया शुभदो गुरुः । विवाहेऽथ चतुर्थाष्टद्वादशस्थो मृतिप्रदः । अस्यापवादः । सर्वत्रापि शुभं दद्याद्द्वादशाब्दात्परं गुरुः । पञ्चषष्ठाब्दयोरेव शुभगोचरता मता । सप्तमात्पञ्चवर्षेषु स्वोच्चस्वर्क्षगतो यदि । अशुभोऽपि शुभं दद्याच्छुभदर्क्षेषु किं पुनः । रजस्वलाया कन्याया गुरुशुद्धिं न चिन्तयेत् । अष्टमेऽपि प्रकर्तव्यो विवाहस्त्रिगुणार्चनात् । अर्कगुर्वोर्बलं गौर्या रोहिण्यर्कबला स्मृता । कन्या चन्द्रबला प्रोक्ता वृषली लग्नतो बला । अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी । दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला । बृहस्पतिः । झषचापकुलीरस्थो जीवोऽप्यशुभगोचरः । अतिशोभनतां दद्याद्विवाहोपनयादिषु । शौनकः । गुर्वादित्ये व्यतीपाते वक्रातीचारगे गुरौ । नष्टे शशिनि शुक्रे वा बाले वृद्धेऽथवा गुरौ । पौषे चैत्रेऽथ वर्षासु शरद्यधिकमासके । केतूद्गमे निरंशेऽर्के सिंहस्थेऽमरमन्त्रिणि । विवाहव्रतयात्रादि पुनर्हर्म्यगृहादिकम् । क्षौरं विद्योपविद्यां च यत्नतः परिवर्जयेत् । तथा । सिंहस्थं मकरस्थं च गुरुं यत्नेन वर्जयेत् । लल्लः । अतिचारगतो जीवस्तं राशिं नैति चेत्पुनः । लुप्तसंवत्सरो ज्ञेयः सर्वकर्मबहिष्कृतः । सिंहस्थगुरोरपवादो वसिष्ठेनोक्तः । विवाहो दक्षिणे कूले गौतम्या नेतरत्र तु । भागीरथ्युत्तरे कूले गौतम्या दक्षिणे तथा । विवाहो व्रतबन्धश्च सिंहस्थेज्ये न दुष्यति । पराशरोऽपि । गोदाभागीरथीमध्ये नोद्वाहः सिंहगे गुरौ । मघास्थे सर्वदेशेषु तथा मीनगते रवौ । सर्वत्र गुरुबलालाभे शौनकोक्ता शान्तिः कार्या । सा चास्माभिः प्रयोगे लेखनीया । अतिचारगे गुरौ तु वसिष्ठः । अतिचारगते जीवे वर्जयेत्तदनन्तरम् । विवाहादिषु कार्येषु अष्टाविंशतिवासरान् । रत्नमालायाम् । एकपञ्चनवयुग्मषड्दशत्रीणिसप्तचतुरष्टलाभदः । द्वादशाजवृषभादिराशितो घातचन्द्र इति कीर्तितो बुधैः । नारदः । भूबाणनवद्व्यस्ताश्च रसो दिग्वह्निशैलजाः । वेदा वसुशिवादित्या घातचन्द्रा यथाक्रमम् । यात्रायां शुभकार्येषु घातचन्द्रं विवर्जयेत् । विवाहे सर्वमाङ्गल्ये चौलादौ व्रतबन्धने । घातचन्द्रो नैव चिन्त्य इति पाराशरोऽब्रवीत् । ज्योतिर्निबन्धेऽप्युक्तम् । विवाहचौलव्रतबन्धयज्ञे महाभिषेके च तथैव राज्ञाम् । सीमन्तयात्रासु तथैव जाते नो चिन्तनीयः खलु घातचन्द्रः । अकालवृष्टौ नारदः । अकालजा भवेयुश्चेद् विद्युन्नीहारवृष्टयः । प्रत्यर्कपरिवेषेन्द्रचापाभ्रध्वनयो यदि । दोषाय मङ्गले नूनमदोषायैव कालजाः । अकालवृष्टिस्वरूपं च लल्लेनोक्तम् । पौषादिचतुरो मासान्प्रोक्ता वृष्टिरकालजेति । निर्घाते क्षितिचलने ग्रहयुद्धे राहुदर्शने चैव । आपञ्चदिनात्कन्या परिणीता नाशमुपयाति । उल्कापातेन्द्रचापप्रबलघनरजोधूमनिर्घातविद्युद्वृष्टिप्रत्यर्कदोषादिषु सकलबुधैस्त्याज्यमेवैकरात्रम् । दुःस्वप्ने दुर्निमित्ते ह्यशुभतरदशे दुर्मनोद्भ्रान्तबुद्धौ

चौले मौञ्जीनिबन्धे परिणयनविधौ सर्वदा त्याज्यमेव। ज्योतिःप्रकाशे । अर्वाक् षोडशनाड्यः संक्रान्तेः पुण्यदाः परतः। उपनयनव्रतयात्रापरिणयनादौ विवर्ज्यास्ताः। गर्गः। दिग्दाहे दिनमेकं च ग्रहे सप्तदिनानि तु। भूकम्पे च समुत्पन्ने त्र्यहमेव तु वर्जयेत्। उल्कापाते त्रिदिवसं धूमे पञ्च दिनानि च। वज्रपाते चैकदिनं वर्जयेत्सर्वकर्मसु। दर्शनादर्शनाद्राहुकेत्वोः सप्तदिनं त्यजेत्। यावत्केतूद्गमस्तावदशुभः समयो भवेत् । अद्भुतसागरेऽस्यापवादः—अथ यदि दिवसत्रयमध्ये मृदुपानीयं यदा भवति। उत्पातदोषशमनं तैदव शं प्राहुराचार्याः। संबन्धतत्त्वे च—भूकम्पादेर्न दोषोऽस्ति वृद्धिश्राद्धे कृते सति। अथ प्रतिकूलादिः। मेधातिथिः। वधूवरार्थं घटिते सुनिश्चिते वरस्य गेहेऽप्यथ कन्यकायाः। मृत्युर्यदि स्यान्मनुजस्य कस्यचित्तदा न कार्यं खलु मङ्गलं बुधैः। मङ्गलं विवाहः। तथा गर्गः—कृते तु निश्चये पश्चान्मृत्युर्भवति कस्यचित्। तदा न मङ्गलं कुर्यात्कृते वैधव्यमाप्नुयात्। स्मृतिचन्द्रिकायाम्—कृते वाङ्नियमे पश्चान्मृत्युर्मर्त्यस्य गोत्रिणः। तदा न मङ्गलं कार्यं नारीवैधव्यदं ध्रुवम्। भृगुः। वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः। तदोद्वाहो नैव कार्यः स्ववंशक्षयदो यतः। शौनकः। वरवध्वोः पिता माता पितृव्यश्च सहोदरः। एतेषां प्रतिकूलं हि महाविघ्नप्रदं भवेत्। पिता पितामहश्चैव माता चैव पितामही। पितृव्यः स्त्री सुतो भ्राता भगिनी चाविवाहिता। एभिरत्र विपन्नैश्च प्रतिकूलं बुधैः स्मृतम्। अन्यैरपि विपन्नैस्तु केचिदूचुर्न तद्भवेत्। संकटे मेधातिथिराह। वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः। तदा संवत्सरादूर्ध्वं विवाहः शुभदो भवेत्। स्मृतिरत्नावल्याम् । पितुरब्दमशौचं स्यात्तदर्द्धं मातुरेव च। मासत्रयं तु भार्यायास्तदर्द्धं भ्रातृपुत्रयोः । अन्येषां तु सपिण्डानामाशौचं मासमीरितम्। तदन्ते शान्तिकं कृत्वा ततो लग्नं विधीयते। ज्योतिःप्रकाशे। प्रतिकूलेऽपि कर्तव्यो विवाहो मासतः परः । शान्तिं विधाय गां दत्त्वा वाग्दानादि चरेत्पुनः। शान्तिरत्ने विनायकशान्तिः। तथा च मेधातिथिः। संकटे समनुप्राप्ते याज्ञवल्क्येन योगिना। शान्तिरुक्ता गणेशस्य कृत्वा तां शुभमाचरेत्। स्मृत्यन्तरे। प्रतिकूले न कर्तव्यो गच्छेद्यावदृतुत्रयम् । प्रतिकूलेऽपि कर्तव्यमित्याहुर्बहुविप्लवे। प्रतिकूले सपिण्डस्य मासमेकं विवर्जयेत्। ज्योतिःसागरेऽपि । दुर्भिक्षे राष्ट्रभङ्गे च पित्रोर्वा प्राणसंशये। प्रौढायामपि कन्यायां नानुकूल्यं प्रतीक्ष्यते। मेधातिथिः। पुरुषत्रयपर्यन्तं प्रतिकूलं स्वगोत्रिणाम्। प्रवेशनिर्गमस्तद्वत्तथा मुण्डनमण्डने। प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम्। आचतुर्थं ततः पुंसि पञ्चमे शुभदं भवेत्। मासिकविषये शाट्यायनिः। प्रेतश्राद्धानि सर्वाणि सपिण्डीकरणं तथा। अपकृष्यापि कुर्वीत कर्तुं नान्दीमुखं द्विजः। वृद्ध्यभावे अपकर्षे दोषमाहोशनाः। वृद्धिश्राद्धविहीनस्तु प्रेतश्राद्धानि यश्चरेत्। स श्राद्धी नरके घोरे पितृभिः सह मज्जति इति। स्मृत्यन्तरे। सपिण्डीकरणादर्वागपकृष्य कृतान्यपि। पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात्। विवाहदिनादारभ्य चतुर्थीपर्यन्तं मध्ये श्राद्धदिनं दर्शदिनं च नायाति तादृशः कालो ग्राह्यः। तदुक्तं ज्योतिर्निबन्धे। विवाहमारभ्य चतुर्थिमध्ये श्राद्धदिनं दर्शदिनं यदि स्यात्। वैधव्यमाप्नोति तदाशु कन्या जीवेत्पतिश्चेदनपत्यता स्यात्। तथा—विवाहमध्ये यदि चेत्क्षयाहस्तत्र स्वमुख्याः(?)पितरो न यान्ति। वृत्ते विवाहे परतस्तु कुर्याच्छ्राद्धं स्वधाभिर्न तु दूषयेत्तम् । श्रुतावपि। ये वै भद्रं दूषयन्ति स्वधाभिरिति। 'तिस्रो......पूर्व्येण' ब्राह्मणस्य वर्णानुपूर्व्येण वर्णक्रमेण ब्राह्मणी क्षत्रिया वैश्येति तिस्रो भार्या भवन्ति। वर्णानुपूर्व्यग्रहणात् न व्युत्क्रमेण विवाहः। प्रथमा ब्राह्मणी। तत इतरे वर्णक्रमेण। 'द्वे राजन्यस्य' वर्णानुपूर्व्येण क्षत्रिया वैश्या चेति राजन्यस्य भार्ये भवतः। 'एका वैश्यस्य' सवर्णा एका वैश्यस्य भार्या भवति। 'सर्वेषाᳪं......मन्त्रवर्जम्' सर्वेषां ब्राह्मणादीनां शूद्रामप्येके भार्यामिच्छन्ति तस्यास्तु मन्त्रवर्जं विवाहकर्म भवति। एके पुनः शूद्रापरिणयनं नेच्छन्ति। न शूद्राया

धर्मकार्येष्वधिकार इति । तथा च यास्कः । रामा रमणाय विन्दते न धर्मायेति । अतः शूद्रापरिणयनं नेच्छन्ति रमणार्थमेव । 'अथैनां……त्स्ववासः' अथ वरो जरां गच्छेति मन्त्रेणैनां वधूं वासः परिधापयति । भर्तृयज्ञमते तु आचार्यकर्तृकं परिधापनम् । अत्राचारादहतं वासो ग्राह्यम् । अहतलक्षणं कश्यपेनोक्तम् । अहतं यन्त्रनिर्मुक्तं वासः प्रोक्तं स्वयं भुवा । शस्तं तन्मङ्गले नूनं तावत्कालं न सर्वदेति । मन्त्रार्थः । हे कन्ये त्वं जरां निर्दुष्टवृद्धत्वं मया सह गच्छ प्राप्नुहि वासश्च मया संपादितं परिधेहि । आक्रुश्यन्ति कामादिभिरित्याकृष्टयो मनुष्याः तेषां मध्ये अभिशस्तिरभिशापः शत्रु प्रमादे तस्मात्पातीत्यभिशस्तिपावा भव । शतं च शरदो वर्षाणि जीव प्राणिहि । सुवर्चाः तेजस्विनी रयिं च धनं पुत्रांश्च अनु पश्चात् संव्ययस्व अतिसुसंवृणीष्व उत्पाद्य राशिं कुरु । हे आयुष्मति इदं वासः परिधत्स्वेत्यनुवादः । मन्त्र एवात्र कारिताय । 'अथोत्त……वासः' । या अकृन्तन्नित्यनेन मन्त्रेणोत्तरीयं परिधापयति वर एव तदप्यहतमेव । अत्रापि कारितार्थे मन्त्रः । मन्त्रार्थः—या देवीः देव्यः इदं वासः अकृन्तन् कर्तितवत्यः या अवयन् वीतवत्यः । वेञ् तन्तुसंताने । ओतवत्य इत्यर्थः । यास्तन्तून् सूत्राणि अतन्वत प्रोतवत्यः तिर्यक् तन्तुसंताने ओतवत्य इत्यर्थः । चकाराद्या ओतान्प्रोताँश्च तन्तूनभित उभयपार्श्वयोरपि ततन्थ तेनुः तुरीवेमादिव्यापारेण ग्रथितवत्यः । ताः तत्तत्सामर्थ्यदाव्यो देव्यः स्वकार्यरूपवदिदं वासः त्वा त्वां जरसे दीर्घकालनिर्दुष्टजीवनाय संव्ययस्व परिधापयन्तु । पुरुषादिव्यत्ययश्छान्दसः अतो हेतोः आयुष्मति इदं एतादृशं वासः परिधत्स्व उत्तरीयत्वेन वृणीष्व । 'अथैनौ……धातु नौ' कन्यापिता परस्परं समञ्जेथामिति अध्येषणेनैनौ वधूवरौ समञ्जयति । समञ्जनं नाम संमुखीकरणं, परस्परं गात्रविश्लेष इति भर्तृयज्ञः । परस्परानुलेपनमिति केचित् । सत्यपि कारितत्वे वरस्यैव मन्त्रो मन्त्रलिङ्गात् । कारयितृत्वं च संनिधानात् कन्यापितुः, संनिहितो ह्यसौ प्रदातृत्वात् । उभयोर्मन्त्रपाठ इति भर्तृयज्ञः । मन्त्रार्थः । हे कन्यके नौ आवयोः हृदयानि मनांसि तन्निष्ठव्यापारान् संकल्पविकल्पात्मकान् विश्वेदेवाः आपश्च समञ्जन्तु गुणातिशयाधानेन संस्कुर्वन्तु । तथा सम्यग्भूतो मातरिश्वा अनुकूलो वायुः तथा अनुकूलः प्रजापतिः देष्ट्री धर्मोपदेष्ट्री देवता आवयोर्हृदयानि संदधातु । उ अप्यर्थे । 'पित्रा प्रत्ता……त्यसाविति' समञ्जनोत्तरं कन्यायाः । पित्रा दत्तां कन्यामादाय वरः प्रतिग्रहविधिना प्रतिगृह्य वस्त्रान्ते गृहीत्वा यदैषि मनसा दूरमित्यनेन मन्त्रेण निष्क्रामति गृहमध्याद्बहिःशालायां स्थापितमग्निं प्रति गच्छति । असावित्यत्र संबुद्ध्यन्तं कन्यानामग्रहणम् । अत्र कर्कभाष्यम् । आदाय गृहीत्वेति चोभयं न वक्तव्यम् । उच्यते च तत्किमर्थमप्रतिग्रहस्यापि प्रतिग्रहविधिना दानं यथा स्यादिति । अयमर्थः । अप्रतिग्रहस्यापि कन्याद्रव्यस्य प्रतिग्रहविधिना आदानं प्रतिग्रहो यथा स्यादित्येतदर्थमुभयग्रहणम् । ननु कन्यां दद्यात्कन्यां प्रतिगृह्णोति स्मरणात् कथमप्रतिग्रहयोग्यं कन्याद्रव्यमित्युच्यते । सत्यम् । उच्यते—स्वत्वत्यागपूर्वकं हि परस्वत्वापादनं दानम् । नच कन्या कथंचिदप्यस्वकन्या कर्तुं शक्यते नापि परस्य कन्या भवति विवाहोत्तरमपि ममेयं कन्येत्यभिधानादत्र गौणो ददातिः । यत्तु स्मृतिषु पुत्रदानं चोद्यते तत्रापि गौणो ददातिः । पितुरिव परस्यापि पिण्डदानं रिक्थभाक्त्वं च भवतीत्यर्थः । षष्ठाध्यायस्य सप्तमे पादे आद्याधिकरणे अयमर्थस्तन्त्ररत्ने । यद्वा । अप्रतिग्रहयोग्यस्य प्रतिग्रहविधानतः । क्षत्रियादेर्यथादानं स्यादादायेति सूत्रितमिति रेणुः । मन्त्रार्थः । हे कन्यके यत् एषि गच्छसि मनसा चित्तेन दूरं दूरदेशं दिशः ककुभः अनुलक्ष्यीकृत्य पवमान इव वायुवत् चित्तस्य वायुवच्चञ्चलत्वात् । ततः पवमानो वायुः हिरण्यपर्णः सुवर्णपक्षः विकर्णापत्यं गरुत्मान् त्वा त्वां मन्मनसां मद्गतचित्तां करोतु । ममायत्तां मय्यनुरागिणीं विदधातु । दातृक्रममाह याज्ञवल्क्यः । पिता पितामहो भ्राता सकुल्यो जननी तथा । कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः । अप्रयच्छन्समाप्नोति भ्रूणहत्यामृता-

वृतौ । गम्यं त्वभावे दातृणां कन्या कुर्यात्स्वयंवरमिति । सकुल्यः प्रत्यासत्तिक्रमेणादौ पितृकुलस्थस्तदभावे मातामहकुलस्थः सर्वाभावे जननी इति प्रयोगरत्ने । प्रकृतिस्थ उन्माददोपरहितः । गम्यं गमनार्हं लावण्यादिगुणयुक्तम् । नारदोऽपि । पिता दद्यात्स्वयं कन्यां भ्राता वाऽनुमते पितुः । मातामहो मातुलश्च सकुल्यो बान्धवास्तथा । माता त्वभावे सर्वेषां प्रकृतौ यदि वर्तते । तस्यामप्रकृतिस्थायां कन्यां दद्युः स्वजातयः । यदा तु नैव कश्चित्स्यात्कन्या राजानमाव्रजेत् । अत्र प्रकृतिस्थग्रहणादप्रकृतिस्थेन यत्कृतं तदकृतमेव । तथाचापरार्के नारदवचनम् । स्वतन्त्रो यदि तत्कार्थं कुर्यादप्रकृतिं गतः । तदप्यकृतमेव स्यादस्वातन्त्र्यस्य हेतुत इति । यदि तु सप्तपदीविवाहहोमादि प्रधानं जातं तदाऽङ्गवैकल्येऽपि नावृत्तिर्विवाहस्येति दाक्षिणात्यगौडग्रन्थेषु । विवाहश्च कन्यास्वीकारोऽन्यदङ्गमिति स्मृत्यर्थसारे । 'अथैनौ.....निविष्टया इति' अथ निष्क्रमणोत्तरं कारितोपदेशात् कन्यापिता परस्परं समञ्जेथामित्यध्येषणेन समीक्षणं कारयति । ततस्तौ वधूवरौ परस्परसमीक्षणं कुरुतः । लिङ्गाद्वरः समीक्षमाणां कन्यां समीक्षमाण अघोरचक्षुरित्येतांश्चतुरो मन्त्रान्पठति । मन्त्रार्थः । हे कन्ये त्वम् अघोरचक्षुः सौम्यदृष्टिरपापदृष्टिर्वा एधि भव । तथा अपतिघ्नी अकार्यकरणेन पत्यर्थघातिनी तथा मा भव । तथा पशुभ्यः पशुवदाश्रितेभ्यः शिवा हितैषिणी च भव सुमनाः प्रसन्नचित्ता सुवर्चाः सुप्रभावयुक्ता वीरसूः सत्पुत्रजननी देवकामा देवानग्न्यादीन् कामयते स्योना सुखवती नोऽस्माकं शं सुखहेतुः द्विपदे मनुष्यवर्गाय चतुष्पदे पशुवर्गाय शं सुखहेतुर्भव ॥ १ ॥ हे कन्ये ते त्वां सोमश्चन्द्रः ते तव प्रथम आद्यः पतिः विविदे जन्मदिने लब्धवान् । विद्लृ लाभे । ततः सार्द्धवर्षद्वयानन्तरं गन्धर्वः सूर्यो विविदे उत्तरः तद्वद् द्वितीयोऽयं पतिः । ततोऽग्निरपि तावता कालेन विविदे । अतोऽयं तव तृतीयः पतिः । यथाऽऽहुः । पूर्वं स्त्रियः स्युर्भुक्ताश्च सोमगन्धर्ववह्निभिरिति । तथा ते तव तुरीयश्चतुर्थः मनुष्यजाः मानुषः अहमेवेत्यर्थः ॥ २ ॥ किमिदानीं चतुर्णामपीयं पत्नी नेत्याह । सोमश्चन्द्रस्त्रिंशन्मासान्भुक्त्वा गन्धर्वः सूर्यस्तस्मै अददद्दौ सोऽपि तावत्कालं भुक्त्वा अग्नयेऽददत् स चाग्निर्मह्यमिमामदात् दत्तवान् । न केवलमिमां किंतु पुत्रान् सुतान् रयिं धनं च । चकाराद्धर्मादि च, अदादिति संबन्धः । या सर्वलोकसाक्षिणी पूषा देवता सा इमां शिवतमां कल्याणगुणशीलां कृत्वा नोऽस्मान्प्रति ऐरय ईरयतु । आटो दर्शनं विभक्तेरदर्शनं च छान्दसम् । अस्मास्वनुरक्तां करोत्वित्यर्थः । साचास्मत्तः सुखं पुत्रांश्च कामयमाना ऊरू सक्थिनी जानुनोरूर्ध्वभागदण्डौ विहरताम् विवृणोतु प्रसारयत्वित्यर्थः । मध्यमपुरुषश्छान्दसः । प्रयोजनमाह । यस्यां स्त्रीयोनौ उशन्तः सुखमिच्छन्तः शेपं शिश्नं प्रहराम प्रवेशयाम वयम्, यस्यां कन्यायाम् उ एवार्थे । यस्यामेव बहवः कामाः धर्मपुत्ररतिसुखरूपाः सन्तु वा । किमर्थम्, निविष्टै अग्निहोत्राद्युपासनयाऽन्तःकरणशुद्धिद्वारा सायुज्यमुक्तये ॥ चतुर्थी कण्डिका ॥ ४ ॥ * ॥

( विश्व० )—पाकयज्ञानाह—'चत्वारः पाकयज्ञाः' चत्वारः चतुर्विधाः । पाकः अग्निस्तद्वन्तो यज्ञाः । तथाच साग्नेश्चतुःप्रकाराः पाकयज्ञा भवन्तीत्यर्थः । तान्प्रकारानाह । 'हुतो.....इति' हुतः सायंप्रातःक्रियमाणोऽक्षतहोमः होममात्रात्मकः । अहुतः स्वस्तरारोहणादि होमवलिप्राशनैर्वर्जितः । प्रहुतः पक्षाद्यादिः, होमवलिप्राशनान्वितः । प्राशितः । सर्वासां पयसि पायसं श्रपयित्वा ब्राह्मणान्भोजयेदित्यादिः केवलं प्राशनात्मकः । अपरे तु प्रत्यहमभ्यस्यमानान् ब्रह्मयज्ञव्यतिरिक्तान्महायज्ञानेव पाकयज्ञानाहुः । सूत्रार्थस्तु हुत इत्यादिसूत्राच्चतुःसंख्यालाभेऽपि सायंप्रातरभ्यासादिना द्विगुणसंख्याप्रसक्तिमपवदितुं चत्वार इति पदम् । तथाच चत्वारः पाकयज्ञा इति सिद्धे हुतइत्यादिसूत्रं पक्षाद्यादिसंग्रहार्थम् । तथाच कारिकायां—चत्वारः पाकयज्ञाः स्युर्ब्रह्मयज्ञश्च पञ्चमः । एते पञ्चमहायज्ञाः प्रत्यहं सूतकादृते । जनादियादा(?)त्सिद्धेपि चत्वार इति सूत्रितम् । चतुर्णां सायमभ्यास आद्ये

श्राद्धं च तत्सकृत् । अभ्यासा वैश्वदेवे च पूर्वस्यैव हि कर्मणः । अतश्चत्वार एवैते नाष्टौ स्युः कालभेदतः । 'पञ्चसु वहिःशालायां विवाहे चूडाकरण उपनयने केशान्ते सीमतोन्नयने' पञ्चसु संस्कारकर्मसु वहिःशालायां शालायाः वहिः मण्डप इति यावत् । तथा च विवाहादिकर्मपञ्चकं मण्डपे भवतीत्यर्थः । पूर्वं परिभाषासूत्रे पञ्चसंस्कारा भुवः उक्ताः । अधुना लौकिकाग्निसाध्ये विवाहादौ तेषामपवादमाह—'उपलि...माधाय' लौकिकाग्निसाध्यं विवाहादिक्रियाकलापं कुर्यादिति शेषः । 'निर्मन्थ्यमेके विवाहे' एके आचार्या विवाहे निर्मन्थ्यमारणेयमग्निमिच्छन्ति । एतच्च कृताधानस्य भार्यायां विद्यमानायां द्वितीयापरिणयनविषयम् । तदुक्तं—भार्यायां विद्यमानायां द्वितीयामुद्वहेद्यदि । तदा वैवाहिकं कर्म कुर्यादावसथ्येऽग्निमान् । अन्ये तु विवाहमात्रविषयमेतदाहुः । विवाहकालमाह—'उदग......गृह्णीयात् । उत्तरायणे शुक्लपक्षे पुण्याहे कुमार्याः अनन्यपूर्विकायाः पाणिं गृह्णीयादित्यर्थः । स्वगृह्योक्तविधिनेति शेषः । नक्षत्रविशेषानाह—'त्रिषु...हिण्यां वा' उत्तरा आदिर्येषां तानि उत्तरादीनि तेषु । एकं त्रित्वमुत्तरायामन्वेति । अपरं त्रित्वं तदादिषु । तथाचोत्तरात्रयं येषां नक्षत्राणामादिभूतं तन्निकं ग्राह्यमित्यर्थः । तथाहि । उत्तराहस्तचित्राः, उत्तराश्रवणधनिष्ठाः, उत्तरारेवत्यश्विन्यः । 'स्वातौ......हिण्यां वा । वाशब्दोऽवधारणे । एष्वन्यतमस्मिन्विवाहं कुर्यादित्यर्थः । यद्वा वाशब्दः चकारार्थः । चशब्दश्च ज्योतिःशास्त्राद्युपात्तनक्षत्रसमुच्चयार्थः । वैवाह्याः स्त्रीराह—'तिस्रो......श्यस्य' वर्णानुपूर्व्येण वर्णक्रमेण ब्राह्मणस्य तिस्रः ब्राह्मणी क्षत्रिया वैश्या च भार्या भवन्ति । एवं द्वे राजन्यस्य, क्षत्रिया वैश्या च । एका वैश्या समानवर्णैव वैश्यस्य । 'सर्वेषाᳬ......वर्जं' चतुर्णामपि वर्णानामेके शूद्रापरिणयनमिच्छन्ति । अपरे नेच्छन्ति । अन्यवर्णासमुच्चयार्थोऽपिशब्दः । इदानीं प्रकृतमाह—'अथैनां......वास इति' अत्रायमथशब्दः कौतुकागारप्रवेशाद्यानन्तर्यवाचकः । एनां कुमारीं वासः परिधापयति परिहितं कारयति । केन मन्त्रेणेत्यत उक्तं 'जरां गच्छ' इत्यादि । इतिशब्दो मन्त्रसमाप्तिद्योतकः । 'अथोत्तरी......वास इति' अथ अन्तरीयपरिधानानन्तरमुत्तरीयं परिधापयति । या अकृन्तन्निति मन्त्रेणेत्यर्थः । अत्र परिधापयिता वर एव । 'अथैनौ......धातु नाविति' । अथ वस्त्रपरिधानानन्तरं एनौ कन्यावरौ आचार्यः समञ्जयति परस्परं समञ्जाथामिति प्रैषपूर्वम् । तत्र मन्त्रमाह समञ्जन्त्वित्यादि । इतिशब्दः मन्त्रसमाप्त्यर्थे । ततः कङ्कणवन्धनं परस्परम् । 'पित्रा प्रत्ता......त्यसाविति' नाम गृह्णाति । पित्रा जनकेन, उपलक्षणमेतत् । पितुरभावे पितामहादिस्मृत्युक्तदानाधिकारिणा प्रत्तां कन्यादानकाले दत्ताम् । केचिदमुमेव कन्यादानावसरमाहुः । आदाय प्रतिगृह्य गृहीत्वा वरः स्वदक्षिणहस्तेन कन्यादक्षिणहस्तं गृहीत्वा निष्क्रामति चतुरिकायां गन्तुं कौतुकागारान्निर्गच्छति । केन मन्त्रेणेत्यत उक्तं यदैषीत्यादि । असौस्थाने कन्यानामग्रहणम् । अमुकि देविदेत्येवं प्रयोगः । 'अथैनो......निविष्टा इति' अथ निष्क्रमणानन्तरमेनौ कन्यावरौ आचार्यः समीक्षयति समीक्षणं कारयति परस्परं समीक्षेथामिति प्रैषपूर्वम् । केनेत्यत उक्तम् अघोरचक्षुरिति । तथा चाघोरचक्षुरित्यारभ्य यस्यामु कामा वहवो निविष्टा इत्यन्तेन सौत्रमन्त्रसमुदायेन वरः कन्यामीक्षत इत्यर्थः ॥ इति चतुर्थकण्डिका ॥ ४ ॥ * ॥

प्रदक्षिणमग्निं पर्याणीयैके ॥ १ ॥ पश्चादग्नेस्तेजनीं कटं वा दक्षिणपादेन प्रवृत्त्योपविशति ॥ २ ॥ अन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यᳬस्विष्टकृच्च ॥ ३ ॥ एतन्नित्यᳬ सर्वत्र ॥ ४ ॥ प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविः ॥ ५ ॥ सर्वप्राय-

श्चित्तंप्राजापत्यान्तरमेतदावापस्थानं विवाहे ॥ ६ ॥ राष्ट्रभृत इच्छञ्जयाभ्यातानाँश्च जानन् ॥ ७ ॥ येन कर्मणेर्च्छेदितिवचनात् ॥ ८ ॥ चित्तंच चित्तिश्चाकूतं चाकूतिश्च विज्ञातं च विज्ञातिश्च मनश्च शक्करीश्च दर्शश्च पौर्णमासं च बृहच्च रथन्तरं च । प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतना जयेषु । तस्मै विशः समनमन्त सर्वाः स उग्रः स इहव्यो बभूव स्वाहेति ॥ ९ ॥ अग्निर्भूतानामधिपतिः समावत्विन्द्रो ज्येष्ठानां यमः पृथिव्या वायुरन्तरिक्षस्य सूर्यो दिवश्चन्द्रमा नक्षत्राणां बृहस्पतिर्ब्रह्मणो मित्रः सत्यानां वरुणोऽपाꣳ समुद्रः स्रोत्यानामन्नꣳसाम्राज्यानामधिपति तन्मावतु सोम ओषधीनाꣳसविता प्रसवानाꣳ रुद्रः पशूनां त्वष्टा रूपाणां विष्णुः पर्वतानां मरुतो गणानामधिपतयस्ते मावन्तु पितरः पितामहाः परेवरे ततास्ततामहाः । इह मावन्त्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्याꣳ स्वाहेति सर्वत्रानुषजति ॥ १० ॥ अग्निरैतु प्रथमो देवतानाꣳ सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयꣳ राजा वरुणोऽनुमन्यतां यथेयꣳ स्त्री पौत्रमघन्नरोदात्स्वाहा । इमामग्निस्त्रायताङ्गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः । अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुध्यतामियꣳ स्वाहा । स्वस्तिनो अग्ने दिव आपृथिव्या विश्वानिधेह्ययथा यजत्र । यदस्यां महिदिवि जातं प्रशस्तं तदस्मासु द्रविणं धेहि चित्रꣳ स्वाहा । सुँगन्नु पन्थां प्रदिशन्न एहि ज्योतिष्मध्ये ह्यजरन्न आयुः । अपैतु मृत्युरमृतन्न आगाद्वैवस्वतो नो अभयं कृणोतु स्वाहेति ॥ ११ ॥ परं मृत्यविति चैके प्राशनान्ते ॥ १२ ॥ ॥ ५ ॥ ॥ ॐ ॥

( कर्कः )—'प्रदक्षिणमग्निं पर्याणीयैके' एके आचार्याः प्रदक्षिणमग्निमानीय कन्यावासःपरिधानादि कुर्वन्ति । एवमपि हि स्मरणमिति । अतश्च विकल्पः । 'पश्चाद्......विशति' कटः प्रसिद्ध एव । तेजनी तृणपुलकः । तयोरन्यतरं दक्षिणपादेन परिक्रम्योपविशति । अत्रोपकल्पनीयानि—शमीपलाशमिश्रा लाजाः रोहितानडुहं चर्म दृषदुपलश्च उदकुम्भः शूर्पं च । 'अन्वार...सर्वत्र' आघारौ पूर्व उत्तरश्च । उत्तराघारे प्रतिनिगद्य होमत्वम् । नह्यत्र मन्त्रोऽस्ति । आज्यभागौ एक आग्नेयः अपरः सौम्यः । भूर्भुवः स्वरित्येता महाव्याहृतयः । त्वन्नोऽग्ने इति चैवमादि सर्वप्रायश्चित्तम् । प्राजापत्यं प्रजापतिदेवत्यो होमः । स्विष्टकृत् । अग्नये स्विष्टकृते स्वाहेति वक्ष्यत्युप-

---

१ सर्वप्रायश्चित्तम् पा० । २ कर्मणेर्त्सेदिति कर्मणेच्छेदिति च पाठान्तरम् । ३ सुगन्न. । २ म्म—इति पाठान्तरम् ।

रिष्टात् । एतच्चतुर्दशाहुतिकं नित्यं सर्वकर्मसु भवति यत्र यत्र होमोऽस्ति । यथा घृताक्तानि कुशेण्ड्वानि जुहुयादिति । यत्र पुनर्होम एव नास्ति यथा स्स्तरारोहणे लाङ्गलयोजने च तत्रैतन्न भवति । 'प्राङ्महा……ज्याद्धविः' यत्राज्यव्यतिरिक्तमन्यदपि हविर्भवति तत्र महाव्याहृतिहोमात्प्राक् स्विष्टकृद्धोमः यथा पक्षादाविति । 'सर्वप्रा……विवाहे' आगन्तुकत्वादन्ते निवेशो माभूदिति सूत्रमारब्धम् । 'राष्ट्रभृत इच्छन्' विवाह एव जुहोति । 'जया……जानन्' चित्तं च चित्तिश्चेत्येवमादि–प्रजापतिर्जयानिन्द्रायेत्येवमन्ता जयाः मन्त्रलिङ्गात् । शेषा अभ्याताना मन्त्राः । एतांश्च इच्छन्नेव जुहोति । जानञ्छब्दो विकल्पार्थः । चशब्दो राष्ट्रभृद्भिः संनियोगार्थः । चित्तं च चित्तिश्चेत्यत्र केचिच्चतुर्थ्यन्तेन प्रयोगमिच्छन्ति । तदयुक्तम् । नह्येतानि देवतापदानि किं तर्हि मन्त्रा एव, मन्त्राणां च यथाऽऽम्नातानामेव प्रयोग इष्यते इति । जयाभ्यातानांश्चेच्छया जुहोतीति कुत एतत् । 'येन कर्मणेर्त्सेदिति वचनात्' येन कर्मणा ऋद्धिमिच्छेत्तत्र जयान् जुहोतीति वचनं भवति । अतश्चान्यत्रापि ऋद्धिमिच्छता जयाहोमः कर्तव्य इति गम्यते । अग्निर्भूतानामित्येवमादिष्वधिपतिः समावत्विति सर्वत्रानुषङ्गः । एवमेव स्मर्यते इति । एवञ्च सति अन्नद्रः साम्राज्यानां मरुतो गणानामिति च विशेषणैव पाठः, पितरः पितामहा इत्येवमादि परं मृत्यविति चैक इति यावत्सूत्रम् । एतैश्च मन्त्रैर्होमः कर्तव्य इति । एके प्राशनान्ते परं मृत्यविति जुह्वति । एवमपि हि स्मर्यत इति ॥ ५ ॥ ॥ * ॥

( जयरामः )—'प्रदक्षिणमग्निम्' अग्निं प्रदक्षिणं कृत्वाऽऽनीय कन्यां वासःपरिधापनादि कुर्वन्त्येक आचार्याः एके नेति विकल्पः । अग्नेः पश्चात्तेजनी तृणपूलकं कटं वा प्रसिद्धं तयोरन्यतरं दक्षिणपादेन प्रवृत्य आक्रम्य तदुपरि पादं कृत्वेति यावत्, उपविशति वरः अन्वारब्धो ब्रह्मणा संस्पृष्टः । आघारौ पूर्वोत्तरौ उत्तराघारे प्रतिनिगद्य होमत्वम्, नह्यत्र मन्त्रोऽस्ति । आज्यभागौ आग्नेयसौम्यौ महाव्याहृतयस्तिस्रो भूर्भुवः स्वरिति । त्वन्नो अग्न इत्यादिमन्त्रपञ्चकं सर्वप्रायश्चित्तं, प्राजापत्यं प्रजापतिदेवत्यो होमः, स्विष्टकृत् अग्नये स्विष्टकृते स्वाहेत्युपरिष्टाद्वक्ष्यति । एतच्चतुर्दशाहुतिकं नित्यं सर्वकर्मसु भवति यत्र यत्र होमोऽस्ति , यथा घृताक्तानि कुशेण्ड्वानि जुहुयादिति । यत्र पुनः स्स्तरारोहणलाङ्गलयोजनादौ होमो नास्ति तत्रैतन्न भवति । 'प्राङ्महाव्याहृतिभ्य इति' यत्राज्यव्यतिरिक्तमन्यद्धविर्भवति पक्षादाविव तत्र महाव्याहृतिहोमात्प्राक् स्विष्टकृद्धोमः अन्यत्र सर्वाहुत्यन्ते । सर्वप्रायश्चित्तेतिसूत्रारम्भो राष्ट्रभृदादीनामागन्तुकत्वादन्ते निवेशो मा भूदिति । तेन सर्वप्रायश्चित्तं त्वन्नो अग्ने इत्यादिमन्त्रपञ्चकं प्राजापत्यं तद्देवत्यो होमः तयोरन्तरं मध्यं वक्ष्यमाणहोमस्य स्थानं विवाहे एव दर्शितम् । राष्ट्रभृतः ऋताषाडित्यादिद्वादशमन्त्रानिच्छन्नपि विवाहे एव जुहोति । 'जयाभ्यातानांश्च' मन्त्रलिङ्गाच्चित्तं च चित्तिश्चेत्यादि—प्रजापतिर्जयानिन्द्रायेत्येवमन्ता जयामन्त्राः, शेषा अग्निर्भूतानामित्यादयोऽभ्यातानसंज्ञाः, ते च ते च तांश्चेच्छन्नपि विवाहे एव जुहोति । जानञ्छब्दो विकल्पार्थः । चशब्दो राष्ट्रभृद्भिः संनियोगार्थः । जयाभ्यातानान् स्वेच्छया जुहोतीति कुतः ? येन कर्मणा ईर्त्सेत् ऋद्धिमिच्छेत्तत्र जयान् जुहुयादिति वचनमस्ति । ततश्चान्यत्रापि ऋद्धिमिच्छता जयाहोमः कार्य इति गम्यते । 'चित्तंचेति' अत्र केचिच्चतुर्थ्यन्तेन प्रयोगमिच्छन्ति तदयुक्तं, नह्येतानि देवतापदानि किंतु मन्त्रा एव मन्त्राणां च यथाम्नातानामेव प्रयोग इष्यते इति । स्वाहाकारस्त्वन्ते भवत्येव । स्वाहाकारप्रदाना इति श्रुतेः । त्यागे तु भवत्येव चतुर्थ्यन्तम् अमन्त्रत्वात्त्यागस्य । अथ मन्त्रार्थः । चित्तमित्यादिद्वादशमन्त्राणां परमेष्ठी० यजुः० लिङ्गोक्ता जयाहोमे । चित्तं चेति प्रजापतिर्यथेन्द्राय जयान् प्रायच्छत् चकारोऽप्यर्थः, तथा चित्तादि च मह्यमपि प्रयच्छत्विति क्रियां विपरिणमय्योत्तरत्र संबन्धः । तस्मै च सुहुतमस्तु । तत्र चित्तं

ज्ञानाधारं हृदयम्, चित्तिस्तत्रत्या चेतना, आकूतं चाभिमतम्, आकूतिश्चाभिमानः । यद्वा चित्तं ज्ञानेन्द्रियं जातावेकवचनं चित्तिस्तद्देवता आकूतं कर्मेन्द्रियम् आकूतिस्तद्देवता । विज्ञातं शिल्पादिज्ञानम् विज्ञातिमपरोक्षम् । मनः प्रसिद्धं, शकरीः शक्यः तच्छक्तयः । दर्शपूर्णमासौ तद्देवते । बृहद्रथन्तरे सामनी तद्देवते वा । प्रथममन्त्रोक्तवाक्यार्थः सर्वत्र संबध्यते । 'प्रजापतिरिरिति परमेष्ठी० त्रिष्टुप्० इन्द्रो० जयाहोमे० । प्रजापतिः परमेश्वरः । जयन्ति शत्रूनिति जयान् मन्त्रानिन्द्राय प्रायच्छद्ददौ किमर्थम् वृष्णे अभिमतार्थवर्षणाय । इन्द्रविशेषणं वा । ततः स इन्द्रः पृतनाजयेषु सेनाविजयाख्यकर्मसु उग्रः प्रचण्डो बभूव । किं च ततस्तस्मै इन्द्राय सर्वाविशः प्रजाः समनमन्त सम्यक्नेमुः । स इ इश्चार्थे सचेन्द्रो हव्यः हवनीय इज्य इति यावत् बभूव स्वाहा तस्मै सुहुतमस्तु । तथा च तैत्तिरीया श्रुतिः । स इन्द्रः प्रजापतिमुपाधावत्स तस्मा एताञ्जयान्प्रायच्छत् तान् अजुहोत् । ततो देवा असुरानजयन्त यदजयंस्तज्जयानां जयात्वमिति । 'अग्निर्भूतानामिति' एवमादिष्वधिपतिः समावत्विति सर्वत्रानुषङ्गः अस्मिन्ब्रह्मन्नित्यादेश्च । एवमेव स्मर्यत इति । एवं च सत्यन्नर्ठः साम्राज्यानामधिपति मरुतो गणानामधिपतय इति च विशेषेणैव पाठः । अग्निर्भूतानामित्यष्टादश मन्त्रा अभ्यातानसंज्ञाः । तथा च श्रुतिः—यद्देवा अभ्यातानैरसुरान् अभ्यातन्वत तदभ्यातानानामभ्यातानत्वमिति । अभ्यातन्वत आयुधानि प्राहिण्वत । अथ मन्त्रार्थः । तत्राग्निरित्यष्टादशानां प्रजापतिः पङ्क्तिर्लिङ्गोक्ता अभ्यातानहोमे । अग्निः प्रजापतिः भूतानास्थावरादीनामधिपतिरीशः स मा माम् अवतु पातु क अस्मिन् ब्रह्मन् ब्रह्मणि लुप्तसप्तम्यन्तं ह्येतत् । अस्मिन्ब्रह्मकर्मणि होमादौ पुनरस्मिन्क्षत्रे क्षत्रकर्मणि प्रजापालनादौ पुनरस्यामाशिषि ब्राह्मणैः संपादितेष्टाशंसने, पुत्रादिसुखकामनायां वा कुत्र अस्यां कन्यायां, किंभूतायां ? पुरोधायां पुरःस्थितायाम् । अस्मिन्कर्मणि विवाहे अस्यां देवहूत्याम् देवताह्वाने देवतोद्देशेन होमे वा स्वाहा सुहुतमस्तु । अयं च वाक्यार्थ उपरिष्टादपि सप्तदशसु संबध्यते शिष्टं स्पष्टम् । ततो अग्निरैत्वित्यादि परं मृत्यावित्यन्तैश्च मन्त्रैर्होमः कार्यः । अथ मन्त्रार्थः । तत्र चतुर्णां प्रजापतिस्त्रिष्टुप् लिङ्गोक्ता आज्यहोमे । अग्निः ऐतु आ एतु आगच्छतु । किं भूतः देवतानां यज्ञभुजां प्रथम आद्यः प्रधानत्वात् । सचाग्निः अस्यै अस्याः कन्यायाः प्रजां भाविपुत्रादिरूपां मुञ्चतु मोचयतु कुतः मृत्युपाशात् यद्वा मृत्युपाशान् अत्ति भस्मीकरोतीति मृत्युपाशात् । अस्यै कन्यायै प्रजां मुञ्चतु ददातु । तच्च प्रजामोचनं राजा वरुणोऽनुमन्यतामनुजानातु । यथा येनानुज्ञानेन प्रकारेण च इयं कन्या पौत्रं पुत्रभवम् अघं दुःखं नरोदात् नरोदिदिति । अस्यै अस्याः प्रजाः दीर्घमायुः निर्दुष्टबहुकालजीवनं नयतु प्रापयतु । इयं च अशून्योपस्था सफलप्रसवा अवन्ध्यात्वायेति यावत् अवन्ध्योत्सङ्गा वा अस्तु भवतु । जीवतामेव दीर्घायुषां माता चास्तु जीवपुत्रा भवत्वित्यर्थः । किं च पौत्रं पुत्रसंबन्धजम् आनन्दं सुखसंदोहम् अभि अधिगम्य आभिमुख्येन सर्वभावेन वा प्राप्य विविधं बुध्यतां जानातु सर्वज्ञाऽस्त्वित्यर्थः । यद्वा पौत्रमानन्दं प्राप्य विशिष्टतया बुध्यतां निद्रासुखापेक्षां त्यक्त्वा जागर्त्विति । हे अग्ने यजन्तं त्रायत इति हे यजत्र । यस्मात्त्वं सर्वप्रत्यक् अतो नोऽस्माकं विश्वानि सर्वाणि कर्माणि अयथा अन्यथा वा कृतानि प्रतिषिद्धत्वेन प्रतिकूलानि वा तानि स्वस्ति यथा स्यात्तथा धेहि अनुकूलानि कृत्वा स्थापय । किंच दिव आ स्वर्गमभिव्याप्य आ पृथिव्याः पृथिवीमभिव्याप्य च यन्महि महिमा तमस्मासु धेहि स्थापय । किंच अस्यां [illegible]थिव्यां जातं यत् द्रविणं वसु चित्रं नानारूपं स्वर्णरत्नादिभेदेन प्रशस्तं पवित्रं यच्च दिवि स्वर्गे [illegible]मृतादि तदप्यस्मासु धेहि । हे अग्ने नोऽस्मान् एहि आगच्छ अस्मद्गृहानागत्य नोऽस्माकं सु[illegible] सर्वेषां पन्थानम् अर्चिरादिमार्ग प्रदिशन् उपदिशन् संपादयन्निति यावत्, आयुः निर्दुष्टं नः [illegible] देहि । किंभूतम् अजरम् जरारोगादिपराभवरहितम् । अजरमित्यग्निविशेषणं

वा आयुः पुष्यन्नित्यर्थः। पुनः किंभूतम् ज्योतिष्मत् प्रकाशकम् ऊर्जस्करमित्यर्थः । तत्प्रतिब-न्धको मृत्युरपि नोऽस्माकं भवत्प्रसादादपैतु अपगच्छतु । अमृतम् आनन्दं च नोऽस्मान् आगात् आगच्छतु। वैवस्वतो यमश्च नोऽस्माकमभयं त्वत्संबन्धेन पापाभावाद्दुःखहेतुभयाभावं कृणोतु करोतु। परं मृत्यविति च जुहोति । एके परं मृत्यविति प्राशनान्ते जुह्वति तेन विकल्पः । तत्र संकसुकस्त्रिष्टुप् मृत्युराज्यहोमे विनियोगः ॥ ५ ॥ ॥ * ॥

( हरिहरः )—'प्रदक्षि······णीयैके' एके आचार्या: अग्नेः प्रदक्षिणं कारयित्वा वासः-परिधानं समञ्जनं समीक्षणं च मन्यन्ते एके न मन्यन्ते ततो विकल्पः । 'पश्चाद्···त्योप-विशति'। समीक्षणानन्तरमग्निं प्रदक्षिणीकृत्याग्नेः पश्चिमतः प्राङ्मुख उपविशति दक्षिणतो वरस्य वधूः । किं कृत्वा दक्षिणपादेन तेजनी तृणपूलिकां कटं वा तृणमयं स्रस्तरं प्रवृत्य प्रक्रम्य उल्लङ्घ्ये-त्यर्थः। दक्षिणपादेनोल्लङ्घयन् चलन् चलित्वा उभयोः संस्कार्यत्वात्सवधूकः । 'अन्वार······सर्वत्र' अत्र वैवाहिकहोमप्रसङ्गेन सर्वकर्मसाधारणीं परिभाषां करोत्याचार्यः । तद्यथा ब्रह्मणा दक्षिणबाहौ दक्षिणहस्तेन अन्वारब्धे कर्तरि आघारसंज्ञके आज्याहुती यथा मनसा प्रजापतये स्वाहा इदं प्रजापतये मनसा त्यागमपि, इन्द्राय स्वाहा इदमिन्द्राय । आज्यभागौ आज्यभागसंज्ञकौ होमौ यथा अग्नये स्वाहा इदमग्नये सोमाय स्वाहा इदं सोमाय । महाव्याहृतयः भूराद्यास्तिस्रः यथा ॐ भूः स्वाहा इदमग्न० इदं भूरितिवा त्यागः। तथैव ॐ भुवः स्वाहा इदं वाय० इदं भुव इति वा । ॐ स्वः स्वाहा इदं सूर्याय इदं स्वरिति वा । सर्वप्रायश्चित्तसंज्ञकाः पञ्चाहुतयः । यथा त्वन्नो अग्न इत्यादि प्रमुमुग्ध्यस्मत्स्वाहा । सत्वन्नो अग्ने० सुहवो न एधि स्वाहा इदमग्नीवरुणाभ्यां० । द्वाभ्यां त्यागः । अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्वमया असि । अयानोयज्ञं वहास्ययानोधेहि भेषजꣳ स्वाहा इदमग्नये अयसे० । ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नो अद्य सवितो-ऽतविष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम । उदुत्तममित्यादि अदितये स्याम स्वाहा इदं वरुणाय० । प्राजापत्यं प्रजापति-देवताको होमः यथा प्रजापतये स्वाहा इदं प्रजापतये० । स्विष्टकृच्च स्विष्टकृद्धोमः यथा अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृ० चकारः सर्वसमुच्चयार्थः । 'एतन्नित्यर्ठं सर्वत्र' एतदाघारादिस्विष्ट-कृदवसानं सर्वत्र सर्वेषु होमात्मकेषु कर्मसु नित्यं, यत्र होमाभावस्तत्र नास्ति । यथा स्रस्तरारोहणला-ङ्गल्योजनपायसब्राह्मणभोजनेषु । अन्ते विहितस्य स्विष्टकृद्धोमस्य कर्मविशेषे स्थानान्तरमाह 'प्रा-ङ्मह्ा······ज्याद्धविः'। महाव्याहृतिभ्यः प्राक् पूर्वं स्विष्टकृद्धोमो भवति चेद्यदि आज्यात्सकाशा-दन्यदपि चरुप्रभृति हविर्भवति । केवलाज्ययागे सर्वाहुतिशेषे भवति । 'सर्वप्रा······वाहे' सर्वप्रा-यश्चित्तं त्वन्नो अग्न इत्यारभ्य उदुत्तममित्यन्तमाहुतिपञ्चकम् । प्राजापत्यः प्राजापत्याहुतिः सर्व-प्रायश्चित्तं च प्राजापत्यश्च सर्वप्रायश्चित्तप्राजापत्यौ तयोरन्तरम् सर्वप्रायश्चित्तप्राजापत्यान्तरम् एत-दावापस्थानं कस्मिन्कर्मणि विवाहे । आवापस्थानम् आवापश्चान्यत्र विहितस्य होमजपादेः कर्मणः कर्मान्तरे प्रक्षेपः । आवापस्य आगन्तुकत्वेन अन्ते निवेशो युक्तः न्यायात् तन्निवृत्त्यर्थं तमेवाह । 'राष्ट्रभृत इच्छन्' विवाहे वैवाहिके होमकर्मणि राष्ट्रभृतः राष्ट्रभृत्संज्ञकाः आहुतीः आवपेदित्यध्या-हारः । 'जयाभ्यातानाँश्च' जयाश्च अभ्यातानाश्च जयाभ्यातानाः तान् जयाभ्यातानाँश्च आवपेत् । किंकुर्वन् इच्छन् राष्ट्रभृज्जयाभ्यातानानां होमफलं कामयन् । किं प्रमाणमितिचेत् 'जानन्ये-न······वचनात्' येन कर्मणा अस्मिन्कर्मणि ओप्य तेन यत्फलं भवतीति जानन् विदन् त-त्कर्मफलमिच्छंस्तस्मिन् कर्मणि तत्कर्म आवपेदिति वचनात् श्रुतेरित्यर्थः । तत्र राष्ट्रभृतो यथा । ऋताषाड् ऋतधामाग्निर्गन्धर्व इत्यादिका द्वादश मन्त्रा राष्ट्रभृत्संज्ञकाः । 'चित्तं च···बभूव स्वाहा'

चित्तं चेत्येवमादीनां पदानां चतुर्थ्यन्तानां केचिदिच्छन्ति तदसांप्रतम् । कुतः नह्येतानि देवतापदानि किंतु मन्त्रा एवैते, मन्त्राश्च यथाऽऽम्नाता एव प्रयुज्यन्ते । 'अग्निर्भूता'········वहूत्याᳫं स्वाहेति । अभ्यातानसंज्ञका ह्येते अष्टादश मन्त्राः । 'सर्वत्रानुषजति' अग्निर्भूतानामित्यादिषु पितरः पितामहा इत्यन्तेष्वष्टादशसु मन्त्रेषु प्रतिमन्त्रं यथालिङ्गं यथावचनं समावदित्यादि देवहूत्याᳫं स्वाहेत्यन्तं वाक्यैकदेशमनुषजति संयुनक्ति । 'अग्निरैत्वित्यादि परंमृत्यविति चैके प्राशनान्ते' अग्निरैत्वित्यादिकाः परंमृत्यवित्यन्ताः पञ्च मन्त्राः । परं मृत्यविति च जुहुयात् । एके आचार्याः परं मृत्यवित्येतामाहुतिं प्राशनान्ते संस्रवप्राशनान्ते जुहुयादितीच्छन्ति । उदकस्पर्शः । इति हरिहरभाष्ये प्रथमकाण्डे पञ्चमी कण्डिका ॥ ५ ॥ ॥ * ॥

( गदाधरः )—'प्रदक्षिण······णीयैके' एके आचार्या अग्नेः प्रदक्षिणं कारयित्वा कन्यायाः वासःपरिधानादि कर्तव्यमिति वदन्ति । अपरे तु समीक्षणान्ते अग्नेः प्रदक्षिणकरणं वदन्ति अतश्च विकल्पः । 'पश्चाद्······विशति' ततो वरोऽग्नेः पश्चात्स्थापितां तेजनीं कटं वा दक्षिणपादेन प्रवृत्य आक्रम्य उल्लङ्घ्याग्नेः पश्चादुपविशति । तेजनी तृणपूलिकोच्यते, कटः प्रसिद्धः । अत्र पश्चादुपवेशनं वचनात्, वचनाभावे तु सर्वत्रोत्तरत उपचारो यज्ञ इत्यनेन उपवेशनम् । स्मृत्यन्तराद्वरस्य दक्षिणतः कन्या उपविशति । तेजनीं कटमिति द्वितीयानिर्देशादेतयोः संस्कारः । ननूपयुक्तमुपयोक्ष्यमाणं वा द्रव्यं संस्कार्यं नचानयोरन्यतर उपयुक्तमुपयोक्ष्यमाणं वा भवति, ततश्च कथं संस्कारः ? सत्यम् । यद्यप्यत्र शब्देनोपयोगो नोक्तस्तथाप्यासने द्रव्याकाङ्क्षत्वादेतस्य च प्रयोजनाकाङ्क्षत्वादेवं कल्प्यते उपवेशनार्थोऽयं संस्कार इति तेन तेजन्युपरि कटस्योपरि वोपवेशनम्, एवं च दृष्टार्थतालाभः । आक्रमणं च तया सह कर्तव्यमिति भर्तृयज्ञहरिहरौ । 'अन्वार·········ष्टकृच' आघारौ आज्यभागौ च विधीयेते । आघारः पूर्व उत्तरश्च तत्र तूष्णीं पूर्वः । हरिहरेण प्रजापतये स्वाहेति पूर्वाघारो दर्शितः तदतीवाशुद्धम् । नह्यत्र मन्त्रोऽस्ति दर्शपूर्णमासयोः परिभाषात. प्राप्तः स्वाहाकारोऽपि प्रतिषिध्यते । न स्वाहेति च नानिरुक्तᳫं हि मनो निरुक्तᳫं ह्येतद्यत्तूष्णीमिति । ननु आघारादिपृष्ठभावेन वेद्यादिकं कुतो नायाति, उच्यते—गृह्यस्थालीपाकानां कर्मेत्युपक्रम्य एष एव विधिर्यत्र क्वचिद्धोम इत्यनेनैवं ज्ञायते—यावन्तोऽत्र पदार्था उक्तास्तावन्त एव भवन्ति नान्ये । उत्तराघारे प्रतिनिगद्य होमत्वं नह्यत्र मन्त्रोऽस्ति । एवमाज्यभागयोरपि । महाव्याहृतयो महाव्याहृतिका मन्त्रास्त्रयः, भूर्भुवःस्वरितस्रो महाव्याहृतय इत्युक्तत्वात् । सर्वप्रायश्चित्तं च त्वन्नो अग्न इत्यादिमन्त्रैः पञ्चाहुतयो हूयन्ते तासां संज्ञा । प्राजापत्यं प्रजापतिदेवताको होमः । स्विष्टकृत्स्विष्टकृद्धोमः । यजमानो ब्रह्मणा अन्वारब्ध आघारादिस्विष्टकृदन्तं करोति अन्वारम्भश्च कुशेन निगमपरिशिष्टात् । 'एतन्नित्यᳫं सर्वत्र' एतदाघारादि स्विष्टकृदन्तं कर्म यत्र यत्र होमः तत्र सर्वत्र भवति । यत्र पुनर्होम एव नास्ति यथा स्तरारोहणे लाङ्गलयोजने च तत्रैतन्न भवति । 'प्राङ्महा······व्याद्धविः' चेद्यदि आज्यद्रव्यादन्यद् द्रव्यं चर्वादिकमपि भवति तदा महाव्याहृतिहोमात्प्राक् पूर्वं स्विष्टकृद्धोमो भवति चर्वादिद्रव्यशेषादेव । केवलाज्यहोमे तु सर्वहोमान्ते आज्येनैव स्विष्टकृत् । 'सर्वप्रा······विवाहे' सर्वप्रायश्चित्तं च त्वन्नो अग्न इत्यादिमन्त्रैः पञ्च होमाः प्राजापत्यं प्रजापतिदेवताको होमः एतयोरन्तरं मध्यं सर्वप्रायश्चित्तप्राजापत्यान्तरमेतद्विवाहे विवाहकर्मणि आवापस्थानं वक्ष्यमाणानां राष्ट्रभृदादीनामनुष्ठानकाल इत्यर्थः । 'राष्ट्रभृत इच्छन्' अस्मिन् विवाहकर्मणि इच्छन्निच्छया राष्ट्रभृत्संज्ञका होमाः स्युः । ऋताषाडृतधामाग्निर्गन्धर्व इत्यादिभिर्मन्त्रैः[illegible] द्वादशहोमा राष्ट्रभृतः । 'जयाभ्या·······वचनात्' जयाश्च अभ्यातानाश्च जयाभ्यातानाः [illegible] जयाभ्यातानान् जानन् इच्छञ्जुहोति अतश्च विकल्पः । चशब्दो राष्ट्र-

भृद्धिः सन्नियोगार्थः । इच्छया जुहोतीति कुत इति चेत् 'येन कर्मणेर्त्सेदिति वचनात्' येन कर्मणा ऋद्धिमिच्छेत्तत्र जयाञ्जुहोतीति वचनं भवति । अतश्चान्यत्रापि ऋद्धिमिच्छता जयाहोमः कार्य इति ज्ञायते । जैमिनिस्तु जयादीनामनारभ्याधीतानां येन कर्मणेर्त्सेत्तत्र जयाञ्जुहुयादित्यादिभि-र्वाक्यैरेव सामान्यतो लौकिकवैदिककर्माङ्गत्वे प्राप्ते जयादयस्तु वैदिकास्तेन यत्राहवनीयोऽस्ति तत्रैते स्युरिति सिद्धान्तितवान् । जयाहोमानां मन्त्रानाह 'चित्तञ्च·········बभूवस्वाहेति' । मन्त्रार्थः-चित्तं चेति प्रजापतिर्यथेन्द्राय जयान्प्रायच्छत् तथा चित्तादि च मह्यमपि प्रयच्छत्विति क्रियां विप-रिणम्योत्तरत्र संबन्धः। तस्मै च सुहुतमस्तु । तत्र चित्तं ज्ञानाधारं हृदयं चित्तिस्तत्रत्या चेतना । आ-कूतं चाभिमतमाकूतिश्चाभिमानः । यद्वा चित्तं ज्ञानेन्द्रियं जातावेकवचनम्, चित्तिस्तद्देवता, आकूतं कर्मेन्द्रियम् आकूतिस्तद्देवता, विज्ञातं शिल्पादिज्ञानमपरोक्षं विज्ञातिस्तद्देवता, मनः प्रसिद्धं शक्वरीः शक्वर्यस्तच्छक्तयः, दर्शपौर्णमासौ तद्देवते, बृहद्रथन्तरे सामनी तद्देवते वा । सर्वत्र प्रथममन्त्रोक्तवा-क्यार्थः संबध्यते । प्रजापतिः परमेश्वरः, जयन्ति शत्रूनिति जयाः तान् जयान्मन्त्रानिन्द्राय प्राय-च्छत् ददौ किमर्थम् वृष्णे अभिमतार्थवर्षणाय इन्द्रविशेषणं वा । ततः स इन्द्रः पृतनाजयेषु असुरसे-नाविजयाख्यकर्मसु उग्रः प्रचण्डो बभूव । किंच ततस्तस्मै इन्द्राय विशः प्रजाः समनमन्त सम्यङ् नेमुः । स इ इत्यर्थे स चेन्द्रः हव्यः हवनीयः इज्यः बभूव स्वाहा तस्मै सुहुतमस्तु । तथाच तैत्तिरीया श्रुतिः—'देवासुराः संयत्ता आसन् स इन्द्रः प्रजापतिमुपाधावत्स तस्मा एताञ्जयान्प्रायच्छत्तान-जुहोत्ततो देवा असुरानजयंस्तज्जयानां जयात्वमिति' अत्र प्रजापतिर्जयानित्येकेनापि जयालिङ्गेन छत्रिन्यायेन त्रयोदशमन्त्रा जया इत्युच्यन्ते । इमानि शाखान्तरोपदिष्टानि देवतापदानि एषां प्रयोग-काले संप्रदानलक्षणेन संप्रयोगश्चित्ताय स्वाहेत्यादीति भर्तृयज्ञः नेति कर्कोदयः । नचेमानि देवताप-दानि किं तर्हि मन्त्राश्चैते तेच यथाऽऽम्नाता एव प्रयोक्तव्याः । अभ्यातानसंज्ञकान्मन्त्रानाह—'अ-ग्निर्भू······हूत्याᳬ स्वाहा' । मन्त्रार्थः अग्निः प्रजापतिः भूतानां स्थावरादीनामधिपतिः ईशः स मा मामवतु पातु क्व अस्मिन्ब्रह्मणि अस्मिन्ब्रह्मकर्मणि होमादौ, पुनरस्मिन्क्षत्रे क्षत्रकर्मणि प्रजापालनादौ, पुनरस्यामाशिषि ब्राह्मणैः संपादितेष्टाशंसने, पुत्रादिसुखकामनायां वा कुत्र अस्यां कन्यायां किंभूतायां पुरोधायां पुरःस्थितायामस्मिन्कर्मणि विवाहे अस्यां देवहूत्यां देवताह्वाने देवतोद्देशेन होमे वा स्वाहा सुहुतमस्तु । अयं च वाक्यार्थ उपरिष्टादपि सप्तदशसु संबध्यते शेषं स्पष्टम् । एतेऽष्टादश मन्त्रा अभ्यातानाः । अग्निर्भूतानामित्यादि—सुगन्नुपन्थामित्यन्ता द्वाविंशतिरभ्यातानाा इति कर्ककारिका-कारौ । 'इति सर्वत्रानुषजति' एतेषु मन्त्रेषु प्रतिमन्त्रं यथालिङ्गं यथावचनं समावत्वित्यादि देवहूत्यां स्वाहेत्यन्तं वाक्यैकदेशमनुवक्तव्यम् । तच्चास्माभिः प्रयोगलेखने प्रदर्शयितव्यम् । अग्नि···यं कृणोतु स्वाहेति' अग्निरैतु प्रथम इत्यादिचतुर्भिर्मन्त्रैश्चतस्र आज्याहुतीर्जुहोति । अग्निरैतु प्रथम इति प्रथमा, इमामग्निरिति द्वितीया, स्वस्ति न इति तृतीया, सुगन्नुपन्थामिति चतुर्थी । मन्त्रार्थः । अग्निः ऐतु आगच्छतु किंभूतः देवतानां यज्ञभुजां प्रथमः आद्यः प्रधानत्वात् । स चाग्निः असौ अस्याः कन्यायाः प्रजां भाविपुत्रादिरूपां मुञ्चतु मोचयतु कुतः मृत्युपाशात् । यद्वा मृत्युपाशात्[1] अग्निः अस्यै कन्यायै प्रजां मुञ्चतु ददातु तच्च प्रजामोचनं राजा वरुणोऽनुमन्यताम् अनुजानातु । यथा येनानुज्ञानेन प्रकारेण वा इयं कन्या पौत्रं पुत्रभवं अघं दुःखं नरोदात् शोकं प्राप्य न रोदिष्यति कदाचिदपि अपत्यवियोगो मा भवतु इत्यर्थः ॥ १ ॥ इमां कन्यां गार्हपत्योऽग्निस्त्रायतां रक्षतु गार्हपत्याभिधो भाव्यग्निः पालयतु । इमां पत्नीमग्निहोत्रिणीं कृत्वा रक्षतु । अस्यै अस्याः प्रजां दीर्घमायुः निदुष्ट-बहुकालजीवनं नयतु प्रापयतु । इयं च अशून्योपस्था सफलप्रसवा अवन्ध्यतयेति यावत् । यद्वा नित्यं

१ मृत्युपाशानत्तीति मृत्युपाशात् । अग्नेर्विशेषणं प्रथमान्तम् ।

भर्तृसंगतोत्सङ्गा अस्तु भवतु जीवतामेव दीर्घायुषां माता चास्तु जीवपुत्रा भवत्वित्यर्थः । किंच पौत्रं पुत्रसंबन्धजमानन्दं सुखम् अभि अधिगम्य आभिमुख्येन सर्वभावेन वा प्राप्य विविधं बुध्यतां जानातु सर्वज्ञाऽस्त्वित्यर्थः । यद्वा पौत्रमानन्दं विशिष्टतया बुध्यतां निद्रासुखापेक्षां त्यक्त्वा जागर्त्विति ॥२॥ हे अग्ने यजन्तं त्रायत इति यजत्रः हे यजत्र यस्मात्त्वं सर्वप्रत्यक् अतो नोऽस्माकं विश्वानि सर्वाणि कर्माणि अयथा अन्यथा कृतानि कर्माणि स्वस्ति संपूर्णानि यथा स्यात्तथा धेहि अनुकूलानि कृत्वा स्थापय । किं च दिव आ स्वर्गं लोकमभिव्याप्य आ पृथिव्याः पृथिवीमभिव्याप्य च यत् महि महिमा तमस्मासु धेहि स्थापय । किंच अस्यां पृथिव्यां जातं यद् द्रविणं वसु चित्रं नानारूपं स्वर्णरत्नादिभेदेन प्रशस्तं प्रशस्यं श्रेष्ठं यच्च दिवि स्वर्गे जातं तदप्यस्मासु धेहि ॥ ३ ॥ हे अग्ने नोऽस्मान् एहि आगच्छ अस्मदाह्वानागत्य नोऽस्माकं सुगं सुखगम्यं पन्थां पन्थानमर्चिरादिमार्गं प्रदिशन् उपदिशन् संपादयन्निति यावत् । आयुर्निर्दुष्टंजीवनं धेहि देहि । किंभूतम् अजरं जरारोगादिपराभवरहितमजरमित्यग्निविशेषणं वा विभक्तिव्यत्ययेन । पुनः किंभूतं ज्योतिष्मत्प्रकाशकं तत्प्रतिबन्धको मृत्युरपि नोऽस्माकं भवत्प्रसादादपैतु अपगच्छतु । अमृतमानन्दं च नोऽस्मान् आगच्छतु वैवस्वतो यमश्च नोऽस्माकमभयं त्वत्संबन्धेन पापाभावाद् दुःखहेतुभयाभावं कृणोतु । 'परं मृत्यविति च'। चकारादाहुतिं जुहोति परं मृत्यवित्यनेन मन्त्रेण । मन्त्रस्य पित्र्यत्वादुदकस्पर्शः । 'एके प्राशनान्ते' एके आचार्याः संस्रवप्राशनान्ते इमामाहुतिमिच्छन्ति,तस्मिन्पक्षे परंमृत्यविति होमान्ते पुनरेतस्य संस्रवप्राशनम् । पञ्चमी कण्डिका ॥ ५ ॥ ॥ * ॥

( विश्व० )—'प्रदक्षिणमग्निं पर्याणीयैके' एके आचार्याः कन्यावरौ अग्निं प्रदक्षिणं पर्याणीय वासःपरिधानादि मन्यन्ते । पश्चादग्नेस्तेजनीं कटं वा दक्षिणपादेन प्रवृत्योपविशति । दक्षिणपादेन तेजनीं तृणपूलकं कटं वा प्रवृत्य परिवर्त्य उल्लंघ्येत्यपरे अग्नेः पश्चादुपविशति, वर इति शेषः। दक्षिणतः कन्या वरादुत्तरत आचार्यः । 'अन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यꣳ स्विष्टकृच्चैतन्नित्यꣳ सर्वत्र' दक्षिणतो ब्रह्मासनमास्तीर्येत्यारभ्य पर्युक्ष्य जुहुयादित्यन्ते परिभाषाशास्त्रार्थे कृते । कन्यावराभ्यामन्वारब्ध आचार्यः आघारौ प्रजापतये स्वाहा इन्द्राय स्वाहेत्याज्याहुती, आज्यभागौ अग्नये सोमायेत्याज्याहुती, महाव्याहृतयः भूर्भुवः स्वस्तिस्रो महाव्याहृतयः, सर्वप्रायश्चित्तं त्वन्नो अग्ने, सत्वन्नो अग्ने, अयाश्चाग्ने, ये ते शतं, उदुत्तममित्याहुतिपञ्चकस्य सर्वप्रायश्चित्तसंज्ञा । प्राजापत्यं प्रजापतये स्वाहेति प्रजापतिदेवताकं होमं स्विष्टकृच्च स्विष्टकृद्गुणविशिष्टाग्निदेवताको होमः, नित्यꣳ सर्वत्र सर्वस्मिन्होमे एतदाहुतिचतुर्दशकं नित्यं भवत्येवेत्यर्थः । विशेषविधिं विनेति शेषः । तत् नित्यावसथ्यहोमादौ न भवतीति ध्येयम् । 'महाव्या······ज्याद्धवि.' आज्याद्वेदितव्दनुपहृतं चर्वादि हविः स्यात्तदा महाव्याहृतिहोमात्प्राक् प्रधानहोमानन्तरमेव स्विष्टकृद्धोमो भवतीत्यर्थः । 'सर्वप्रा······वाहे' एतत्सर्वप्रायश्चित्तहोमप्राजापत्यहोमयोर्मध्यं विवाहाख्ये कर्मणि आगन्तुकहोमस्थानमित्यर्थः । 'राष्ट्रभृत इच्छन्' राष्ट्रभृत्संज्ञकांश्चान्तरावपेदित्यर्थ. । प्रयोगश्च—ऋताषाडृतधामाग्निर्गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् । इदमग्नये गन्धर्वायेति त्यागः । तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहा । इदमोषधिभ्योऽप्सरोभ्यः । एवं सर्वत्र त्यागे विशेषः । इदं सूर्याय गन्धर्वाय । इदं मरीचिभ्योऽप्सरोभ्य. । इदं चन्द्रमसे गन्धर्वाय । इदं नक्षत्रेभ्योऽप्सरोभ्यः । इदं वाताय गन्धर्वाय । इदमद्भ्योऽप्सरोभ्यः । इदं यज्ञाय गन्धर्वाय । इदं दक्षिणाभ्योऽप्सरोभ्यः । इदं मनसे गन्धर्वाय । इदमृक्सामभ्योऽप्सरोभ्य. । इच्छन् फलं कामयमानः आहुतीनामिति शेषः । 'जयाभ्यातानांश्च' आवापं कुर्यादिति शेषः । चकारः समुच्चयार्थ. । न केवलं राष्ट्रभृतामेवावाप. । अपि तु जयाभ्यातानानामपीत्यर्थः । अत्र श्रुतिं प्रमाणयति 'जानन्येन कर्मणर्ध-

दिति वचनात्' आवापे येन कर्मणा यत्फलं साधयेत् तत्फलकामः तस्मिन् कर्मणि तत्कर्म आवपेदित्यर्थः । अपरे तु जानन्नित्यमुं शब्दं विकल्पार्थमाहुः । ईर्त्सेदित्यस्यार्थ ऋद्धिमिच्छेदिति । जयाहुतीनां देवताः प्राह—' चित्तं च चित्तिश्चाकूतंचाकूतिश्चेत्यादि स इ हव्यो बभूव स्वाहेत्यन्तं सूत्रम् । प्रयोगश्चैवं—चित्ताय स्वाहा । इदं चित्ताय । चित्यै स्वाहा । इदं चित्यै । एवमन्यत्र । आकूताय स्वाहा । आकूत्यै स्वाहा । विज्ञाताय स्वाहा । विज्ञात्यै स्वाहा । मनसे स्वाहा शक्वर्यै स्वाहा । दर्शाय स्वाहा । पौर्णमासाय स्वाहा । बृहते स्वाहा । रथन्तराय स्वाहा । प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतना जयेषु । तस्मै विशः समनमन्त सर्वाः स उग्रः स इ हव्यो बभूव स्वाहेति । इदं प्रजापतय इति त्यागः । अथाभ्यातानाः—अग्निर्भूतानामधिपतिः स मावत्विन्द्रो ज्येष्ठानामित्यादि देवहूत्याऽ स्वाहेत्यन्तं सूत्रम्। एभिरष्टादशसंख्याकैर्मन्त्रैरभ्यातानसंज्ञका आहुतीर्जुहुयादित्यर्थः । "सर्वत्रानुपजति" अग्निर्भूतानामित्याद्यष्टादशमन्त्रेषु प्रतिमंत्रं यथालिंगं स मावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याऽ स्वाहेत्यनुपङ्गं करोत्यर्थः । प्रयोगश्चैवम्—अग्निर्भूतानामधिपतिः स मावत्वस्मिन्त्र० देवहूत्याऽ स्वाहा इदमग्नये भूतानामधिपतये १ ॥ एवमन्यत्र । त्यागस्तु इदमिन्द्राय ज्येष्ठानामधिपतये २ ॥ इदं यमाय पृथिव्या अधिपतये ३ ॥ इदं वायवेऽन्तरिक्षस्याधिपतये ४ ॥ इदं सूर्याय दिवोऽधिपतये ५ ॥ इदं चन्द्रमसे नक्षत्राणामधिपतये ६ ॥ इदं बृहस्पतये ब्रह्मणोधिपतये ७ ॥ इदं मित्राय सत्यानामधिपतये ८ ॥ इदं वरुणायापामधिपतये ९ ॥ इदं समुद्राय स्रोत्यानामधिपतये १० ॥ अन्नऽ साम्राज्यानामत्रानुपङ्ग विशेषः अधिपति तन्मावत्विति । इदमन्नाय साम्राज्यानाम धिपतये ११ ॥ इदऽ सोमायौषधीनामधिपतये १२ ॥ इदऽ सवित्रे प्रसवानामधिपतये १३ ॥ इदं रुद्राय पशूनामधिपतये १४ ॥ इदं त्वष्ट्रे रूपाणामधिपतये १५ ॥ इदं विष्णवे पर्वतानामधिपतये १६ ॥ मरुतो गणानामत्रापि विशेषः गणानामधिपतयस्ते मावन्त्वस्मिन्निति, इदं मरुद्भ्यो गणानामधिपतिभ्यः १७ ॥ इदं पितृभ्यः १८ ॥ इत्यभ्यातानहोमः । ' अग्निरैत्वित्यारभ्य परं मृत्यविति चैके प्राशनान्त ' इत्यन्तं सूत्रम् । अग्निरैतु, इमामग्निः, स्वास्तिनो अग्ने, सुगन्नुपन्था, परं मृत्यो एभिः पञ्चमन्त्रैः पञ्चाहुतीर्जुहुयादित्यर्थः । त्यागः इदमग्नये ३ इदं वैवस्वताय ४ इदं मृत्यवे ५ एके परं मृत्यविति पञ्चमीमाहुतिं प्राशनान्त इच्छन्ति ॥ इति पञ्चमी कण्डिका ॥ ५ ॥ ॥ * ॥

कुमार्या भ्राता शमीपलाशमिश्राँल्लाजानञ्जलिनाञ्जलावावपति ॥ १ ॥ ताञ्जुहोति सᳪहतेन तिष्ठती अर्यमणं देवं कन्याऽऽग्निमयक्षत । सनो अर्यमा देवः प्रेतो मुञ्चतु मा पतेः स्वाहा । इयं नार्युपब्रूते लाजानावपन्तिका । आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा । इमाँल्लाजानावपास्यग्नौ समृद्धिकरणं तव । मम तुभ्य च संवननं तदग्निरनुमन्यतामियᳪ स्वाहेति ॥ २ ॥ अथास्यै दक्षिणᳪ हस्तं गृह्णाति साङ्गुष्ठं गृभ्णामि ते सौभगत्वाय हस्तं मयापत्या जरदष्टिर्यथा सः । भगोऽऽर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः । अमोऽहमस्मि सा त्वᳪ सा त्वमस्यमोऽहम् । सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वं तावेहि विवहावहै सहरेतो दधावहै प्रजां प्रजनयावहै पुत्रान्विन्द्यावहै बहून् ते सन्तु

जरदष्टयः संप्रियौ रोचिष्णू सुमनस्यमानौ पश्येम शरदः शतं जीवेम शरदः शतठं श्रृणुयाम शरदः शतमिति ॥ ३ ॥ ॐ ॥ ६ ॥

( कर्कः )—' कुमार्या भ्रा······तिष्ठती ' । संहतेनाञ्जलिना तिष्ठती प्रतिमन्त्रं लाजान् जुहोति । अर्यमणं देवमित्येवमादिभिर्मन्त्रैः । तान् जुहोतीति वचनात्तुरीयायां वेलायां सर्वहोमः । अथास्यै······गृभ्णामि त ' इति । अनेन मन्त्रेण । अस्यै इति चतुर्थी षष्ठ्यर्था ॥ ६ ॥ ॥ * ॥

( जयरामः )—' कुमार्या भ्राता इति ' स्वाञ्जलिना कुमार्या अञ्जलौ आवपति प्रक्षिपति । सा च संहतेन मिलितेनाञ्जलिना तिष्ठतीति तिष्ठन्ती तान् लाजान् चतुर्थांशमितान् जुहोति । अर्यमणं देवमित्येवमादिभिर्मन्त्रैः प्रतिमन्त्रं तान् जुहोतीति वचनात् तृतीयवेलायामञ्जलिस्थसर्वहोमः। चतुर्थं शूर्पकुष्ठयेति शूर्पावशिष्टानां सर्वहोमस्य वक्ष्यमाणत्वात् । आवपनं तु सकृदेव आवृत्तेरश्रवणात् । अथ मन्त्रार्थः तत्राथर्वणोऽनुष्टुप् अग्निर्लाजहोमे । एवं त्रयाणामपि ' कन्यायाः पूर्वः प्रथममर्यमणं सूर्यं देवं कान्तमग्निमग्निस्वरूपं वरलाभाय अयच्छत् अयजत् । लिङि छान्दसं रूपम् । स चार्यमा देवस्ताभिरिष्टो इतो नोऽस्मान् इदानीं परिणीता कन्या इतः पितृकुलात् प्रमुञ्चतु प्रमोचयतु मा पतेः पत्युः कुलत्वात्सहचरीत्वाद्वा मा प्रमोचयतु । यद्वा वरो ब्रूते । कन्येयमर्यमणमग्निरूपेणायजत् । सोर्यमा देवः पतेः पत्युः मत्तः सकाशात् इमा नो प्रमुञ्चतु मा प्रमोचयतु । इतः अस्याः कन्यायाः सकाशात् मा मां नो प्रमुञ्चत्विति । अत्रेदं मन्त्रत्रयं कन्यैव वरपाठिता पठति । इयं नारी वधूः उप पत्युःसमीपे ब्रूते । किं कुर्वती लाजान् भ्रष्टव्रीहीन् आवपन्तिका अग्नौ विभागशः प्रक्षिपन्ती स्वार्थे कः । किं ब्रूते तदाह—मे मम पतिरायुष्मान् सकलदीर्घायुरस्तु भवतु मम ज्ञातयो बान्धवा एधन्तां वर्द्धन्तामिति । किं च हे पते इमांल्लाजान् अग्नौ आवपामि प्रक्षिपामि किंभूतान् तव समृद्धिकरणं समृद्धिहेतूनित्यर्थः । अतो मम कन्यायाः तुभ्य च तव च भर्तुः मलोपश्छान्दसः । संवननं वशीकरणमन्योन्यमनुरागः तदयमग्निरर्यमा अनुमन्यताम् अनुमोदनं कुरुताम् । इयं च स्वाहा तत्पत्नी अनुमन्यताम् । अथास्यै अस्याः षष्ठ्यर्थे चतुर्थी । हस्तं साङ्गुष्ठं गृभ्णामीति मन्त्रेण वरो गृह्णाति । अथ मन्त्रार्थः—तत्र याज्ञवल्क्यत्रिष्टुप् लिङ्गोक्ता हस्तग्रहणे । हे कन्ये ते तव साङ्गुष्ठं हस्तं करं गृभ्णामि गृह्णामि हृग्रहोर्भश्छन्दसि इति भत्वम् । यथा येन गृहीतेन हस्तेन मया पत्या सह जरदष्टिः जरच्छरीरा बहुवर्षायुष्मती असः भवसीत्यर्थे निपातः । ग्रहणमेव तावत्कृत्यं तत्राह भगादयस्त्रयो देवास्त्वा त्वां मह्यमदुः दत्तवन्तः । किमर्थं गार्हपत्याय गृहस्वामिनीत्वाय भाविगार्हपत्यं सेवितुं वा । किंच सौभगत्वाय सुभगानां समूहः सौभगं तस्य भावस्तत्वं तस्मै तदर्थं निरतिशयानन्दावाप्तये इत्यर्थः । किंभूता त्वाम् पुरन्धिः पुरन्धिम् द्वितीयार्थे प्रथमा । श्रेष्ठां सुरूपवतीं वा । तथा च श्रुतिः—पुरन्धिर्योषेति योषित्येव रूपं दधातीति । ( भगत्वादिविशेषणैरेव विशिष्टार्थनिष्पादकत्वद्योतनार्थम् ) । अमोहमिति भरद्वाज उष्णिक् विष्णुर्हस्तग्रहणे । हे कन्ये यतः अमो विष्णुरहमस्मि अमति सर्वत्र गच्छति सर्वं जानाति वेति, न मिनोति हिनस्तीति वा अमः, तथा सौति सुवति सूते वा विश्वमिति सा लक्ष्मीस्त्वमसि । किंच सा देवी त्रयीरूपा त्वमसि अमो देवत्रयरूपोऽहमस्मि किंच अहं सामास्मि त्वं च ऋगसि अहं द्यौरस्मि त्वं च पृथिव्यसि तद्गुणाश्रितावावामित्यर्थः । ' ताविति ' अथर्वणोऽनुष्टुप् विष्णुर्हस्तग्रहणे । तावेव आवां विवहावहै विवाहं करवावहै । सह संयुक्तौ भूत्वा रेतः पुत्रदेहरूपं दधावहै धारयाव । ततः प्रजां पुत्रं प्रजनयावहै तत्पुत्रान् पुत्रपौत्रादीन् बहून् विन्द्यावहै लभावहै । ' तं सन्त्विति ' प्रजापतिर्यजुर्विष्णुर्हस्तग्रहणे । ते च पुत्रा जरदष्टयः शतायुषः सन्तु आवामपि संप्रियौ

सम्यक् प्रीतौ परस्परं प्रेमशालिनौ रोचिष्णू सुदीप्तौ शोभमानौ वा सुमनस्यमानौ शोभनमनोवृत्तिं कुर्वाणौ सुमनसो भावः सौमनस्यं सुमनस्यं वा तत्कुर्वाणावित्यर्थः । ( आस्वे ? असावे ) ति संतुक्रियां योज्यम् । इन्द्रियपाटवमाशास्ते त्रयं च । पुत्रादिसहिताः शतं शरदो वत्सरान्पश्येम रूपग्रहणसमर्थाः विपरिणमय्य ( आस्म, ? असाम ) तथा शतं शरदो जीवेम निरुपद्रुतं प्राणान्धारयाम, तथैव शरदः शतं शृणुयाम निर्दुष्टं शब्दग्रहणसमर्थमस्माकं श्रवणेन्द्रियं भवत्वित्यर्थः ॥ ६ ॥ ॥ * ॥

( हरिहरः )—'कुमार्या······तिष्ठती' । कुमार्याः कन्यायाः भ्राता शमीपलाशमिश्रान् शमीपत्रयुक्तान् लाजान् भ्रष्टानि धान्यानि अञ्जलिना कृत्वा वध्वा अञ्जलौ आवपति निक्षिपति तान् जुहोति सा च अञ्जलिस्थान् लाजान् संहतेन मिलितेनाञ्जलिना जुहोति विवाहाग्नौ प्रक्षिपति तिष्ठती ऊर्ध्वा । 'अर्यमणं······स्वाहेति । अर्यमणं देवमिति प्रथमम्, इयन्नार्युपब्रूत इति द्वितीयम्, इमाँ-ल्लाजानावपामीति तृतीयम् । 'अथास्यै······शतमिति' । अथ लाजाहोमानन्तरं अस्यै अस्याः कुमार्या दक्षिणं हस्तं गृह्णाति स्वदक्षिणहस्तेन आदत्ते । कीदृशं हस्तं साङ्गुष्ठं अङ्गुष्ठेन सहितं गृभ्णामि ते सौभगत्वायेत्यादि शृणुयाम शरदः शतमित्यन्तं मन्त्रं पठति वरः । इति हरिहरभाष्ये प्रथमकाण्डे षष्ठी कण्डिका ॥ ६ ॥ ॥ * ॥

( गदाधरः )—'कुमार्या······वपति' । कुमार्याः कन्याया वध्वा भ्राता शमीपत्रैर्मिश्रितान् लाजानञ्जलिना कन्यायाः अञ्जलौ आवपति प्रक्षिपति लाजशब्देन भ्रष्टव्रीहय उच्यन्ते । 'ता-ञ्जुहोति······स्वाहेति' ततः कुमारी तिष्ठती ऊर्ध्वा तांल्लाजान् स्वाञ्जलौ स्थितान् संहतेन अविरलाङ्गुलिना अर्यमणमित्यादित्रिभिर्मन्त्रैर्जुहोति । अविच्छिन्दत्यञ्जलिं स्रुचेव जुहुयादि-त्याश्वलायनः । तत्रैकैकेन मन्त्रेण प्रक्षिप्तलाजानां तृतीयांशं तृतीयांशं जुहोति । एवं च होमत्रयं भवति । अत्र कारिकाकारः 'तिष्ठन्त्यास्तिष्ठता पत्या गृहीताञ्जलिनैव सा । अञ्जलिस्थांस्त्रिधा सर्वान् प्राङ्मुखी प्रतिमन्त्रतः ॥ प्राजापत्येन तीर्थेन दैवेनैवेति बह्वृचाः । अन्यो भ्रातुरभावे स्याद्बान्धवो जा-तिरेव च' इति । भ्राता भ्रातृस्थानो वेत्याश्वलायनगृह्ये । 'भ्रातृस्थाने पितृव्यस्य मातुलस्य च यः सुतः । मातृष्वसुः सुतस्तद्वत्सुतस्तद्वत्पितृष्वसुः' इति बह्वृचकारिकायाम् । द्रव्यत्यागे तु वरस्य कर्तृत्वं प्रधा-नत्वं स्वामी फलयोगादित्युक्तत्वात् । मन्त्रार्थः कन्याः पूर्वाः प्रथमसर्यमणं सूर्यं देवं कान्तम् अभिमभि-स्वरूपं वरलाभाय अयक्षत अयजन् । लिङि छान्दसं रूपम् । स चार्यमा देवस्ताभिरिष्टो यतोऽतो सोऽस्मान्—इदानीं परिणीयमानाः कन्याः, इतः पितृकुलात् प्रमुञ्चतु प्रमोचयतु मा पतेः पत्युः कुलात्सह-चरित्वाद्वा मा प्रमोचयतु । यद्वा वरो ब्रूते कन्याः यम् अर्यमणमग्निरूपेणायजन् सोऽर्यमा देवः पतेः पत्युर्मत्तः सकाशादिमां नो प्रमुञ्चतु मा प्रमोचयतु इत अस्याः कन्यायाः सकाशान्मा मां नो प्रमु-ञ्चतु । अत्रेदं मन्त्रत्रयं कन्यैव वरपाठिता पठति । इयं नारी वधूः उप पत्युःसमीपे ब्रूते । किं कुर्वती लाजान् भ्रष्टव्रीहीन् आवपन्तिका अग्नौ विभागशः प्रक्षिपन्ती स्वार्थे कः । किं ब्रूते तदाह—मे मम पति-रायुष्मान् सकलदीर्घायुरस्तु भवतु । मम ज्ञातयः एधन्तां वर्द्धन्तामिति । किं च हे पते इमानग्नौ आवपामि प्रक्षिपामि । किं भूतान् तव समृद्धिकरणं समृद्धिहेतवे अतो मम कन्यायाः तुभ्य च तव च भर्तुः मलोपश्छान्दसः, संवननं वशीकरणमन्योन्यमनुरागः तदयमग्निर्यमा अनुमन्यतामनुमोदनं कुरुताम् । इयं च स्वाहा तत्पत्नी अनुमन्यताम् । 'अथास्यै······शतमिति' अस्यै इति, चतुर्थी षष्ठ्यर्थे, अस्याः कुमार्याः दक्षिणं साङ्गुष्ठमङ्गुष्ठसहितं हस्तं गृह्णाति वरः स्वहस्तेनादत्ते गृभ्णामि ते इतिमन्त्रेण । अथशब्दोऽत्र स्वस्थाने तिष्ठता कर्तव्यमिति द्योतनार्थः । मन्त्रार्थः—हे कन्ये ते तव हस्तं करं गृभ्णामि गृह्णामि । 'हृग्रहोर्भश्छन्दसि' इति भत्वम् । यथा येन गृहीतहस्तेन मया पत्या भर्त्रा सह जरदष्टिः जरच्छरीरा बहुवर्षायुष्मती आसः भवसीत्यर्थे निपातः । ग्रहणमेव तावत्कृत्यं(?)

तत्राह । भगादयस्त्रयो देवास्त्वा त्वां मह्यमदुः दत्तवन्तः । किमर्थं गार्हपत्याय गृहस्वामिनीत्वाय भावि-गार्हपत्यं सेवितुं वा । किं च सौभगत्वाय सुभगानां समूहः सौभगं तस्य भावः सौभगत्वं तस्मै तद-र्थम् निरतिशयानन्दावाप्तय इत्यर्थः । किम्भूतां त्वां पुरन्धिः पुरंधिं द्वितीयार्थे प्रथमा । श्रेष्ठा सुरूप-वती वा । तथाच श्रुतिः पुरन्धिर्योषेति योषित्येवरूपं दधातीति । हे कन्ये यत अमो विष्णुरुद्र-ब्रह्माऽहमस्मि अमति सर्वत्र गच्छति सर्वं जानाति वेति, न मिनोति हिनस्तीति वा अमः तथा सौति सुवति सूते वा विश्वमिति सा लक्ष्मीस्त्वमसि । किंच सा देवीत्रयीरूपा त्वमसि अमो देवत्रयरूपो-ऽहमस्मि । किच अहं सामास्मि त्वं ऋगसि अहं द्यौरस्मि त्वं पृथिव्यसि तावेवावां विवहावहै विवाहं करवावहै । सह संयुक्तौ भूत्वा रेतः पुत्रदेहरूपं दधावहै धारयाव । ततः प्रजां स्त्रीरूपां संततिं प्रज-नयावहै उत्पादयाव । पुत्रान् पुत्रपौत्रादीन् बहून् विन्द्यावहै लभावहै । ते च पुत्रा जरदष्टयः शता-युषः सन्तु । आवामपि संप्रियौ सम्यक् प्रीतौ परस्परप्रेमशालिनौ रोचिष्णू सुदीप्तौ शोभमानौ वा सुमनस्यमानौ शोभनमनोवृत्तिं कुर्वाणौ सुमनसो भावः सौमनस्यं तत्कुर्वाणावित्यर्थः । सन्निवतिक्रिया विपरिणमय्य योज्यम् । इन्द्रियपाटवमाशास्ते वयं च पुत्रादिसहिताः शतं शरदो वत्सरान्पश्येम रूप-ग्रहणसमर्थाः स्याम । तथा शतं शरदो जीवेम निरुपद्रवं प्राणान्धारयाम । तथैव शरदः शतं शृणुयाम निर्दुष्टं शब्दग्रहणसमर्थमस्माकं श्रवणेन्द्रियं भवत्वित्यर्थः । इति गदाधरकृते गृह्यभाष्ये प्रथमकाण्डे षष्ठी कण्डिका ॥ ६ ॥ ॥ * ॥

( विश्व० )—कुमार्या भ्राता' ' 'स७ं हुतेन तिष्ठतीतिसूत्रम् । शमीपत्रमिश्राणि भ्रष्टानि धान्यानि कन्याभ्राता तिष्ठंत्याः कन्यायाः अञ्जलौ प्रक्षिपति सा च तिष्ठती मिलितेनाञ्जलिना अग्नौ जुहोतीत्यर्थः । केनेत्यत आह ' अर्यमणं देवमित्यारभ्य रनुमन्यतामिय७ं स्वाहेत्यन्तं सूत्रम् । एभिस्त्रिभिर्मन्त्रैराहुति-त्रयं कन्या जुहोत्यञ्जलिनेत्यर्थः । विवाहप्रधानमाह—' अथास्यै दक्षिण७ं हस्तं गृह्णाति साङ्गुष्ठमि-त्यारभ्य शृणुयाम शरदः शतम् ' इत्यन्तं सूत्रम् । अस्यै अस्याः इत्यर्थः । उदगयन इत्याद्युपक्रम्य कुमार्याः पाणिं गृह्णीयादित्यत्र लिङा पाणिग्रहणस्यैव प्राधान्यख्यापनादिह च मन्त्रकरणकपाणिग्रहस्य विधानादय पाणिग्रहः ज्योतिःशास्त्रप्रतिपाद्ये समये कर्तव्यः । अन्यत्सर्वं सूक्ष्मसमयासाध्यत्वेन समयान्तरे स्थूले कर्तव्यम् । शेषं निगदव्याख्यातम् ॥ षष्ठी कण्डिका ॥ ६ ॥ ॥ * ॥

अथैनामश्मानमारोहयत्युत्तरतोऽग्नेर्दक्षिणपादेन आरोहेममश्मानमश्मेव त्वꣳ स्थिरा भव । अभितिष्ठ पृतन्यतोऽवबाधस्व पृतनायत इति ॥ १ ॥ अथ गाथां गायति सरस्वति प्रेदमव सुभगे वाजिनीवती । यां त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः । यस्यां भूतꣳ समभवद्यस्यां विश्वमिदं जगत् । तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यश इति ॥ २ ॥ अथ परिक्रामतः तुभ्यमग्रे पर्यवहन्सूर्यां वहतु ना सह । पुनः पतिभ्यो जायां दाग्ने प्रजया सहेति ॥ ३ ॥ एवं द्विरपरं लाजादि ॥ ४ ॥ चतुर्थꣳ शूर्पकुष्ठया सर्वा-ल्लाजानावपति भगाय स्वाहेति ॥ ५ ॥ त्रिः परिणीतां प्राजापत्यꣳ हुत्वा ॥ ६ ॥ ७ ॥ ॥ * ॥

( कर्कः )—' अथैनामश्मानमिति ' एनां वधूमुत्तरतोऽग्नेर्व्यवस्थितमश्मानमारोहयत्यारोहेममश्मानमित्यनेन मन्त्रेण प्रकृतं कर्तृत्वं चात्र वरस्य मन्त्रश्च । ' अथ गाथां······यशः ' इति वर एव । अथ परिक्रामतस्तुभ्यमग्र इत्यनेन मन्त्रेण वरवध्वौ, मन्त्रश्च लिङ्गाद्वरस्यैव । ' एवं द्विरपरं लाजादि ' कर्म भवति । चतुर्थंᳪ······वपति । अग्रं शूर्पस्य कुष्ठा तया शूर्पकुष्ठया सर्वांल्लाजानावपति कुमार्याः पाणौ, भगाय स्वाहेत्यनेन मन्त्रेण तानेव जुहोति कुमारी । 'त्रिः परिणीतां प्राजापत्यᳪ हुत्वेति ' । त्रिः परिणीतामिति त्रिर्ग्रहणमितरथावृत्तिव्युदासार्थम् । उक्तं हि परिभाषायाम्—विवृत्त्यावृत्य वेतरथा वृत्तिरिति ॥ ७ ॥ ॥ * ॥

( जयरामः )—अथैनां वधूमुत्तरतोऽग्नेरवस्थापितमश्मानमारोहयति दक्षिणपादेन वरः ' आरोहेममश्मानमिति ' मन्त्रेण । प्रकृतं कर्तृत्वं चात्र वरस्य मन्त्रपाठश्च । तस्यार्थः । तत्राथर्वणोऽनुष्टुप् वधूर्देवता अश्मारोहणे । हे कन्ये इमं पुरोवर्तिनमश्मानं प्रस्तरमारोह आरुह अधितिष्ठेति यावत् । आरोहणेन संस्कृता त्वमश्मेव पाषाणवत्स्थिरा दृढाङ्गी भव । किं च अभि अधिकृत्य आक्रम्य तिष्ठ कान् पृतनां संग्राममिच्छन्ति पृतन्यन्ति त एव पृतन्यतः तान्पृतन्यतः कलहकारिण इत्यर्थः । ततश्च पृतनाभिः सेनाभिर्यतन्ते इति पृतनायतः तान्पृतनायतः अव अवाचीनान्कृत्वा बाधस्व भग्नोद्यमान्कुरुष्व । अथ अश्मारूढायां कन्यायां वरो गाथां=गीयते स्तूयते अनयेति, गानं तिष्ठत्यस्यामिति वा गाथा तां गायति । अस्यार्थः । तत्र विश्वावसुरनुष्टुप् सरस्वती गाने । हे सरस्वति वैखरीवाक् सुभगे कल्याणि वाजिनीवति वाजः अन्नं तदस्ति अस्यामिति वाजिनी अन्नशाला यद्वा वाजाः पक्षाः सन्त्यस्या इति वाजिनी हंसी तद्वति, इदं युग्मं कर्म च प्राव प्रकृष्टतया अव रक्ष यां त्वा त्वाम् अस्य विश्वस्य भूतस्य जातस्य पृथिव्यादेर्वा प्रजायां प्रकृष्टां जनित्रीमाहुः मन्त्राः । किंभूतामग्रतः प्रथमां, तदेव प्रपञ्चयति यस्यामिति यस्यां प्रकृतिरूपायां त्वयि इदं सर्वं विश्वं तथा भूतं पृथिव्यादि सर्वं जगत् अस्तं गच्छत् आस प्रलये लीनमित्यर्थः । पुनः सृष्ट्यादौ च यस्याः सकाशात् समभवत् जातं, शेषं स्पष्टम् । अथ वधूवरौ अग्निं परिक्रामत प्रदक्षिणं कुरुतः ' तुभ्यमग्र ' इति मन्त्रेण । मन्त्रश्च लिङ्गाद्वरस्यैव । तस्यार्थः—तत्राथर्वणोऽनुष्टुप् अग्निः तत्प्रादक्षिण्ये । अग्ने तुभ्यं त्वदर्थमेव सोमादयः अग्रे पूर्वं जन्मदिनादारभ्य पर्यवहन् परिगृहीतवन्तः ततः सूर्यां नवोद्गतकान्ति पतिभ्यः सोमादिभ्यः इमां भवान्वहतु प्राप्नोतु । किंभूतः ना पुरुषः परमपुरुषार्थहेतुरित्यर्थः । ऊढ्वा च तां जायां जायात्वेन पुनः पश्चात्स्वभोगानन्तरं प्रजया पुत्रैः सह मह्यं त्वं दाः देहि संधिरार्षः । एवं द्विरपरं लाजादिकर्म भवति । चतुर्थहोमे शूर्पस्य कुष्ठया कोणेन सर्वान् शूर्पावशिष्टांल्लाजान् कुमार्या अञ्जलावावपति भ्राता तांश्च भगाय स्वाहेति कुमारी जुहोति । त्रिः परिणीतामिति त्रिर्ग्रहणमितरथावृत्तिव्युदासार्थम् । इतरथावृत्तिश्चोक्ता परिभाषायाम् ' विवृत्त्यावृत्य वा इतरथावृत्तिरिति ' । परितोऽग्नेर्नीतां परिणीतामितिपदस्य प्राजापत्यं प्रजापतये हुत्वा उदीचीं प्रक्रामयतीत्यन्वयः । प्रक्रामयिता चात्र वर एव प्रस्तुतत्वात् ॥ ७ ॥ ॥ * ॥

( हरिहरः )—' अथैनाम······तनायत इति ' । अथ पाणिग्रहणानन्तरमेनां वधूमश्मानं दृषदमुत्तरतोऽग्नेर्ध्रियमाणं दक्षिणपादेन कृत्वा आरोहयति आरोहेममित्यादिपृतनायत इतिमन्त्रेण । ' अथ गाथां गायति ' अथ अश्मारोहणानन्तरं गाथां गायति । तां गाथामाह ' सरस्वति······यश इति ' । इमं मन्त्रं पठति गाथागाने । ' अथ परिक्रा·····सहेति ' अथ गाथायां समाप्तायामग्निं प्रादक्षिण्येन परिक्रामतो वधूवरौ, तत्र मन्त्रः ' तुभ्यमग्रे पर्यवहन्नित्यादिकस्य प्रजया सहेत्यन्तस्य मन्त्रस्य वरपठितस्यान्ते । अत्र हस्तग्रहणादिपरिक्रमणान्तेषु कर्मसु वर एव मन्त्रान्पठति । ' एवं

द्विरपरँल्लाजादि ' एवमुक्तप्रकारेण द्विः वारद्वयमपरं पुनरपि लाजादि कुमार्या भ्रातेत्यारभ्य परिक्रमणान्तं कर्म भवति । ' चतुर्थेऽ······स्वाहेति ' । ततस्तृतीयपरिक्रमणानन्तरं कुमार्या भ्राता शूर्पकुष्टया शूर्पस्य कोणेन सर्वान् यावच्छूर्पेऽवशिष्टान् लाजान् कुमार्या अञ्जलौ आवपति निक्षिपति । तान् लाजान् तिष्ठती कुमारी भगाय स्वाहेति मन्त्रेण चतुर्थं जुहोति । ततः समाचारात्तूष्णीं चतुर्थं परिक्रमणं वधूवरौ कुरुतः नेतरथावृत्तिम् इतरथावृत्तेः कारणस्य व्यवायस्याभावात् । ब्रह्माग्न्योरन्तरागमनं हि इतरथावृत्तिकारणं, कुत इति चेत् ' हविःपात्रस्वाम्यृत्विजां पूर्वपूर्वमन्तरमृत्विजां च यथापूर्वम् ' इति परिभाषासूत्रात् । तेन परिक्रमणं कुर्वन्तौ वधूवरौ ब्रह्माग्न्योर्मध्ये न गच्छेताम् । ' त्रिः परि······हुत्वा ' । पूर्ववदुपविश्य प्रजापतये स्वाहेति ब्रह्मान्वारब्धो हुत्वा इदं प्रजापतय इति त्यागं विधाय ॥ इति श्रीहरिहरभाष्ये सप्तमी कण्डिका ॥ ७ ॥

( गदाधरः )—' अथैना······नायत इति ' अथ घृतकर एव वर एनां वधूमुत्तरतोऽग्नेः स्थापितमश्मानं पाषाणं दक्षिणपादेन कृत्वा आरोहयत्यारोहेममश्मानमित्यनेन मन्त्रेण मन्त्र एव कारितार्थे । वासुदेवेन कुमार्या दक्षिणपादं हस्तेन गृहीत्वा अश्मानमुपरि वरः करोतीत्युक्तं, कारिकायाम् ' गत्वोभावुत्तरेणाग्निं तस्याः सव्येतरं करम् । सव्येनादाय हस्तेन वधूपादं तु दक्षिणम् । शिलामारोहयेत्प्रागायता दक्षिणपाणिना ' इति । मन्त्रपाठश्च वरस्य न कुमार्याः । मन्त्रार्थः—हे कन्ये इमं पुरोवर्तिनमश्मानं प्रस्तरमारोह आक्रम अधितिष्ठेति यावत् । आरोहणेन संस्कृता त्वमश्मेव पाषाणवत् स्थिरा दृढा भव । किंच अभि अधिकृत्य आक्रम तिष्ठ कान् पृतनां संग्राममिच्छन्ति पृतन्यन्ति त एव पृतन्यतः तान् पृतन्यतः कलहकारिण इत्यर्थः । ततश्च पृतनाभिः सेनाभिर्यतन्त इति पृतनायतः तान्पृतनायतः अव अवाचीनान्कृत्वा बाधस्व भग्नोद्यमान् कुरु । ' अथ गाथां······यश इति ' अथ कन्याया दक्षिणपादे अश्मनि निहित एव वरः सरस्वतिप्रेदमवेति इमां गाथां गायति । मन्त्रार्थः—हे सरस्वति वाग्देवते सुभगे कल्याणि वाजिनीवती वाजः अन्नं तदस्ति अस्यामिति वाजिनीवती अन्नवती, यद्वा वाजाः पक्षाः सन्त्यस्या इति वाजिनी हंसी तद्वतीदं युग्मं कर्म च प्राव प्रकृष्टतया अव रक्ष । त्वा त्वामस्य विश्वस्य भूतस्य जातस्य पृथिव्यादेर्वा प्रजायां प्रकृष्टां जनित्रीमाहुः किंभूतामग्रतः प्रथमां, तदेव प्रपञ्चयति, यस्यां प्रकृतिरूपायां त्वयीदं सर्वं विश्वं तथाभूतं पृथिव्यादि सर्वं जगत् अस्तं गच्छत् आस प्रलये लीनमित्यर्थः । पुनः सृष्ट्यादौ च यस्याः सकाशात्समभवत् जातं तस्याः सरस्वत्याः संबन्धिनी तां गाथां गुणप्रभावस्तुतिप्रकाशिकामद्य गास्यामि या श्रुता सती स्त्रीणामुत्तमं श्रेष्ठं यशः कीर्तिं ददाति । ' अथ परिक्रा······सहेति ' अथ घृतकरावेव वरवध्वौ अग्नेः परिक्रमणं कुरुतस्तुभ्यमग्र इत्यनेन मन्त्रेण । मन्त्रश्च लिङ्गाद्वरस्यैव । मन्त्रार्थः—हे अग्ने तुभ्यं त्वदर्थमेव सोमादयः अग्रे पूर्वं जन्मदिनादारभ्य पर्यवहन् परिगृहीतवन्तः ततः सूर्यां सूर्यसंबन्धिनीं भार्यामिमां भवान्वहतु । किं भूतः ना पुरुषः परमपुरुषार्थहेतुरित्यर्थः । तां जायां जायात्वेन पुनः पश्चात्स्वभोगानन्तरं प्रजया पुत्रैः सह मह्यं दाः देहि । संधिरार्षः । एवमनेन प्रकारेण ' द्विरपरं लाजादि ' कुमार्या भ्रातेत्याद्यारभ्य परिक्रमणान्तं यावत्कर्मोक्तं तावद् द्विः वारद्वयमपरं पुनर्भवति । चतुर्थेऽ······स्वाहेति । तृतीयप्रक्रमे समाप्ते चतुर्थलाजाहोमं जुहुयात् । तत्रायं विशेषः कुमार्या भ्राता शूर्पकुष्ठया शूर्पकोणेन शूर्पे अवशिष्टान् सर्वाल्लाजान् कुमार्या अञ्जलावावपति तान्कुमारी भगाय स्वाहेत्यनेन मन्त्रेण जुहोति । अत्र हरिहरमिश्रैरबुद्ध्वैव पाण्डित्यं कृतमस्ति तत्र तेषां ग्रन्थः—ततः समाचारात्तूष्णीं चतुर्थं परिक्रमणं वधूवरौ कुरुतः नेतरथावृत्तिम् इतरथावृत्तेः कारणस्य व्यवायस्याभावात् । ब्रह्माग्न्योरन्तरागमनं हीतरथावृत्तिकारणं कुत इति चेत् । हविष्पात्रस्वाम्यृत्विजां पूर्वं पूर्वमन्तरमृत्विजां च यथापूर्वमिति परिभाषासूत्रात् तेन परिक्रमणं कुर्वन्तौ

वधूवरौ ब्रह्माग्न्योर्मध्ये न गच्छेताम् इति । सर्वोऽप्ययं ग्रन्थस्तावदशुद्धः । नहीतरथावृत्तिकारणं व्यवायः किं तर्हि वचनादप्रदक्षिणावर्तनं कृत्वा प्रदक्षिणावर्तनं वा कृत्वा इतरथावृत्तिः कार्या । तथा च परिभाषासूत्रम् विवृत्यावृत्यवेतरथावृत्तिरिति । अयमर्थः । विवृत्याप्रदक्षिणमावर्तनं कृत्वा आवृत्य प्रदक्षिणमावर्तनं कृत्वा इतरथावृत्तिः प्रत्यावृत्तिः कर्तव्या । यत्र शास्त्रतः प्रदक्षिणावृत्तिः कृता तत्र तदानीमेवाप्रदक्षिणावृत्तिरविहिताऽपि सर्वत्र कर्तव्या यत्र चाप्रदक्षिणावृत्तिः कृता तत्र तदानीमेव प्रदक्षिणावृत्तिरविहिताऽपि सर्वत्र कर्तव्या, ( यत्र चाप्रदक्षिणावृत्तिः कृता तत्र प्रदक्षिणावृत्तिः ) इति । ब्रह्माग्न्योर्मध्ये वधूवरौ न गच्छेतामित्येतस्य हेतूपन्यासार्थं हविष्पात्रेति सूत्रं दर्शितं तदपि विपरीतं, नह्येतत्सूत्राद्ब्रह्माग्न्योर्मध्ये वधूवरौ न गच्छत इत्यायाति किंत्वेतस्मादेव सूत्रान्मध्ये गमनम् । हविष्पात्रेत्यस्यार्थः—हविर्व्रीह्यादि पात्राणि शूर्पादीनि स्वामी कर्मजन्यफलभोक्ता यजमानः पत्नी च ऋत्विजो ब्रह्माद्याः एतेषामेकत्र समावेशे सति पूर्वं पूर्वमस्मिन्सूत्रे प्रथमं प्रथममुपदिष्टमन्तरमग्निसन्निकृष्टं भवति अर्थात्पश्चात्पश्चादुपदिष्टं तदपेक्षया वहिर्भवति हविरादीनामितस्ततो नयने ऋत्विग्यजमानानां चेतस्ततो गमनागमने कर्मार्थमुपवेशने च सर्वत्राप्ययमन्तर्बहिर्भावो ज्ञेय इत्यर्थः । ऋत्विजां ब्रह्मादीनामेकत्र समावेशने चान्तर्बहिर्भावः । ततश्च वधूवरावग्नेः प्रदक्षिणं कुर्वन्तौ अन्तरङ्गत्वात्तन्मध्य एव गच्छेतामिति । तथाच कारिकायाम्—दम्पत्योर्गच्छतोस्तत्र ब्रह्माग्नी अन्तरा गतिः' इति । 'त्रिःपरि······हुत्वा' त्रिः परिणीतां सती कुमारीं प्राजापत्यं प्रजापतिदेवताकहोमं कृत्वा त्रिर्ग्रहणमितरथावृत्तिव्युदासार्थम् । उक्तं हि परिभाषायां 'विवृत्यावृत्य वेतरथावृत्तिरिति । अत्राचारात्तूर्ष्णीं चतुर्थं परिक्रमणं कुरुत इति वासुदेवगङ्गाधरहरिहररेणुदीक्षिताः ॥ इति प्रथमकाण्डे सप्तमीकण्डिका ॥ ७ ॥

( विश्व० )—अथैनामश्मानमारोहयतीत्यारभ्य पृतनायत इत्यन्तं सूत्रम् । अथ गाथां गायति अथ अश्मारोहणानन्तरम् । तामाह—सरस्वती प्रेद···यश इत्यन्तम् । अथ परिक्रामतस्तुभ्यमग्रे···सहेत्यन्तं सूत्रम् । अथ गानामनन्तरं वधूवरौ अग्निं परिक्रामतस्तुभ्यमित्यारभ्य सहेत्यन्तेन मन्त्रेणेत्यर्थः । 'एवं द्विरपरं लाजादि' कुमार्या भ्रातेत्यारभ्य परिक्रमणान्तं कर्म भवतीत्यर्थः । चतुर्थꣳ शूर्पस्य कुष्टया कोणेन सर्वान् शूर्पावशिष्टान् लाजानावपति कुमार्याः अञ्जलौ भ्राता, तांश्च भगाय स्वाहेति कुमारी मन्त्रावृत्त्या आहुतित्रयं जुहोति इदं भगायेति त्यागः ॥३॥ आचाराद्वधूभ्रातुः वराङ्गुष्ठग्रहणम् । वरस्तु नारिकेरादि तस्मै ददाति । 'परिणीतां प्राजापत्यꣳ हुत्वा' अग्नेः परितो नीतां कन्यामुपवेश्य कन्यावराभ्यामन्वारब्ध आचार्यः प्रजापतये स्वाहेति हुत्वा पदप्रक्रमणाद्युत्तरं यथोक्तं कारयतीत्यर्थः । इदं प्रजापतय इति त्यागः ॥ सप्तमी कण्डिका ॥ ७ ॥ ॥ * ॥

अथैनामुदीचीꣳ सप्तपदानि प्रक्रामयति एकमिषे द्वे ऊर्जे त्रीणि रायस्पोषाय चत्वारि मायोभवाय पञ्च पशुभ्यः षड् ऋतुभ्यः सखे सप्तपदा भव सा मामनुव्रता भव ॥ १ ॥ विष्णुस्त्वानयत्विति सर्वत्रानुषजति ॥ २ ॥ निष्क्रमणप्रभृत्युदकुम्भꣳ स्कन्धे कृत्वा दक्षिणतोऽग्नेर्वाग्यतः स्थितो भवति ॥ ३ ॥ उत्तरत एकेषाम् ॥ ४ ॥ तत एनां मूर्द्धन्यभिषिञ्चति आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजमिति ॥ ५ ॥ आपोहिष्ठेति च तिसृभिः ॥ ६ ॥ अथैनाꣳ सूर्यमुदीक्षयति तच्च-

विद्यत एव । तथा च वक्ष्यति वैश्वदेवादन्नात्पर्युक्ष्य स्वाहाकारैर्जुहुयात् इति । अग्नौ जुहोतीति किमर्थमिदमुक्तम् ? अग्नावेव होमो नान्यत्रेत्यग्निग्रहणम् । जुहोतीति बलिकर्मातो मा भूदिति । 'अग्नये स्विष्टकृते स्वाहेति' प्रयोगोपदर्शनार्थम् । प्राजापत्यं स्विष्टकृच्चेति प्रदेशान्तरे दर्शितत्वात् । तेनेह प्रयोग उपदर्श्यते । अपि च स्थालीपाकेन दर्शपौर्णमासदेवताहोमावसरविधिस्त्वयैतत् । तत्कथम् प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविरिति प्रदेशान्तरे उक्तं, स्विष्टकृद्धोमश्च शेषादेव भवति तेनैव प्राङ्महाव्याहृतिहोमादाज्यभागोत्तरकालं चावसरोऽवगम्यत इति । बाह्यत इत्येतदागन्तुकत्वा-त्प्राशनान्ते भवति । क बाह्यतः शालाया बहिः नमः स्त्रियै इत्यादिभिर्मन्त्रैः प्रतिमन्त्रं स्थालीपाका-त्तत्र स्त्रीभ्यो बलिः स्त्र्यादिभ्यो बलिः स्त्रीबलिः तं हरति स्रुवेण बलिहरणम् । तानाह 'नमः स्त्रिया' इति । अथ मन्त्रार्थः—स्त्रियै सन्तानसुखविघातिन्यै नमः नमस्कारोऽस्तु अतः संतानसुखेच्छवोऽत्र बाह्यबल्यधिकारिणः । तथा पुंसे उक्तस्वरूपाय वा किंभूताय वयसे अवयसे च वृद्धाय बालाय च शुक्लाय बहिः कृष्णदन्ताय असितान्तरङ्गाय अतिमलिनमनस इत्यर्थः । अत एव पापीनां पतये श्रेष्ठाय बालकाय वा दीर्घश्छान्दसः । अत्र बलित्रये पुमानेव विशिष्यते । ये च मे मम प्रजां संतानमुपलो-भयन्ति मोहयन्ति ग्रामे वसन्तः उत अपि वा समुच्चये अरण्ये अप्यरण्ये वा वने वाऽपि तेभ्यो नमः नमस्कारोऽस्तु तेभ्यो बलिं पूजां हरामि समर्पयामि मम नमस्कारबलिभ्यां यूयं संतुष्टा भवत ततो भवतां प्रसादान्मे मम स्वस्ति कल्याणमस्तु भवन्तश्च मे मह्यं प्रजां पुत्रादिसुखजातं ददतु प्रयच्छन्तु । शेषं स्थालीस्थितमवशिष्टं चरुम् अद्भिः प्रणीताशेषाद्भिः प्रप्लाव्य मज्जयित्वा ततो विप्रभोजनं कार्यम् ॥ ❀ ॥ ॥ १२ ॥ ॥ ❀ ॥

( हरिहरः )—'पक्षादिषु······थिवीभ्यामिति' पक्षाणामादयः पक्षादयः तासु पक्षादिषु प्रतिपत्सु । अत्र यद्यपि पक्षादिष्वित्युक्तं तथापि संधिमभितो यजेतेति वचनात् 'पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः । यागकालः स विज्ञेयः प्रातर्युक्तो मनीषिभिः' इति पर्वचतुर्थांशोऽपि यागका-लत्वेनाभिमतः, तथा 'पूर्वाह्णे वाऽथ मध्याह्ने यदि पर्व समाप्यते । स एव यागकालः स्यात्परतश्चे-त्परेऽहनि ।' तत्रापि 'संधिर्यद्यपराह्णे स्यात् यागं प्रातः परेऽहनि । कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दुष्यति ।' इत्यादिभिर्वचनैर्यागकालं निर्णीय पर्वदिवसे कृतौपवसथिकाशनः सपत्नीकः शालायां जघनेनाग्निं रात्रौ जाग्रन्मिश्र इतिहासमिश्रो वा पृथक् शयित्वा प्रातः कृतस्नानसंध्यावन्दनप्रातर्होमः स्वाचान्तोऽग्नेः पश्चात्प्राङ्मुख उपविश्य पूर्वोक्तविधिना चरुं श्रपयित्वाऽऽज्यभागान्ते दर्शे दर्शदेव-ताभ्यः पौर्णमासे पौर्णमासदेवताभ्यः प्रयोगे वक्ष्यमाणाभ्यश्चरुं हुत्वा ब्रह्मप्रजापतिविश्वदेवद्यावापृ-थिवीभ्यश्चरुं जुहोति । 'विश्वेभ्यो······शाय च' बलिहरणं बलिदानं स्थालीपाकदेवताभ्यो विश्वेभ्यो भूतगृह्येभ्यः आकाशाय च । 'वैश्वदेव···ते स्वाहेति' वैश्वदेवस्य विश्वेदेवा देवपितृमनुष्या देवा अस्येति वैश्वदेवः पाकः । पञ्चमहायज्ञार्थं साधितपाक इत्यर्थः । ननु वैश्वदेवस्याग्नौ जुहोतीति विश्वदेवसंबद्धस्य चरोस्तद्भूतोपात्तस्य वा अग्नौ जुहोतीति कथं नोच्यते यथा वृषोत्सर्गे पौष्णस्य जुहोतीति पूषसंबद्धः पृथगेव पिष्टमयः पूर्वसिद्धश्चरुर्गृह्यते, किमिति पञ्चमहायज्ञार्थः, उच्यते—स्थाली-पाकं श्रपयित्वेत्यत्र स्थालीपाकस्यैकवचनान्तत्वात् द्वितीयस्य वैश्वदेवस्य चरोरभावोऽवगम्यते पौष्णवत् । वैश्वदेवस्य पृथक्सिद्धस्य उपादानं तु पञ्चमहायज्ञार्थवैश्वदेवपाकस्य सद्भावान्निवर्तते । पञ्चमहायज्ञार्थस्य वैश्वदेवत्वं कुत इति चेत् वैश्वदेवादन्नात्पर्युक्ष्येतिसूत्रात् । अग्नौ जुहोतीति अग्नि-ग्रहणं बलिकर्मता माभूदिति । अग्नये स्वाहेत्यादि प्रयोगदर्शनार्थं सर्वत्र तस्यैकदेशस्योद्धृत्यासादित-प्रोक्षितस्य अग्नये प्रजापतये विश्वेभ्यो देवेभ्यो हुत्वा स्थालीपाकाद्वैश्वदेवाच्च अग्नये स्विष्टकृते जुहोति ततः शेषसमाप्तिं विधाय । 'बाह्यतः······ऽवयसे नमः' इत्यादिभिर्मन्त्रैः । बाह्यतः शालायाः प्राङ्गणे

स्त्रीबलिं रुयादिभ्यो बलिः स्त्रीबलिस्तं स्त्रीबलिं हरति ददाति । 'शेषमद्भिः प्रप्लाव्य' स्थालीस्थितमवशिष्टं चरुमद्भिर्जलेन प्रप्लाव्य मज्जयित्वा । अत्रापः प्राणीताः तासां सर्वकर्मार्थत्वेन प्रणीतत्वात् । 'ततो ब्राह्मणभोजनम्' व्याख्यातः सूत्रार्थः ॥ १२ ॥

अथ प्रयोगः । अथ पक्षादिकर्मोच्यते । तत्र प्रथमप्रयोगे मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा अमापममांसमक्षारालवणं हविष्यं व्रतागनं विधाय रात्रावग्निसमीपे भूमौ दम्पती पृथक् शयीयाताम् । प्रातः स्नात्वा संध्यावन्दनानन्तरं प्रातर्होमं च निर्वर्त्य उदिते सूर्ये पौर्णमासं स्थालीपाकमारभेत तत्रात्मनः ब्रह्मणः प्रणीतानां चासनचतुष्टयं कुशैर्दत्त्वा पक्षादिकर्मणाऽहं यक्ष्ये । तत्र मे त्वं ब्रह्मा भव । भवामीति तेनोक्ते आसने उपवेश्य, अत्रासादने वैश्वदेवान्नासादनं विशेषः । तत्प्रोक्षणं च । आज्यभागान्तं यथोक्तं कर्म निर्वर्त्य, स्थालीपाकमभिघार्य स्रुवेण चरुमादाय अग्नये स्वाहा इदमग्नये० अग्नीषोमाभ्यां स्वाहा इदमग्नीषोमाभ्या० उपांशु । पुनरग्नीषोमाभ्यां स्वाहा इदमग्नीषोमाभ्यां० उच्चैः । ब्रह्मणे स्वाहा इदं ब्रह्मणे० । प्रजापतये स्वाहा इदं प्रजापतये० । विश्वेभ्यो देवेभ्यः स्वाहा । इदं विश्वेभ्यो देवेभ्यो० । द्यावापृथिवीभ्यां स्वाहा इदं द्यावापृथिवीभ्या० । हुतशेषात्स्रुवेण अग्नेरुत्तरतः प्राक्संस्थं विश्वेभ्यो देवेभ्यो नमः इदं विश्वेभ्यो देवेभ्यो०, भूतगृह्येभ्यो नमः इदं भूतगृह्येभ्यो०. आकाशाय नमः इदमाकाशाय०चेति स्रुवेण बलित्रयं दत्त्वा । अभिघारितवैश्वदेवान्नात्स्रुवेणादाय अग्नये स्वाहा इदमग्नये० प्रजापतये स्वाहा इदं प्रजापतये० विश्वेभ्यो देवेभ्यः स्वाहा इदं विश्वेभ्यो देवेभ्यो० इत्याहुतित्रयमग्नौ हुत्वा स्थालीपाकोत्तरार्द्धाद्वैश्वदेवोत्तरार्द्धाच्च अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते० इति हुत्वा, भूरित्यादिप्राजापत्यान्ता, नवाहुतीर्जुहुयात् । संस्रवप्राशनं, मार्जनं, पवित्रप्रतिपत्तिः, प्रणीताविमोकः, ब्रह्मणे दक्षिणादानान्तं कृत्वा चरुशेषमादाय शालाया बहिरुपलिप्तायां भूमौ प्राङ्मुख उपविश्य स्रुवेण नमः स्त्रियै इदं स्त्रियै० । नमः पुंसे वयसेऽवयसे इदं पुंसे वयसेऽवयसे० । नमः शुक्लाय कृष्णदन्ताय पापीनां पतये इदं शुक्लाय कृष्णदन्ताय पापीनां पतये० । नमो ये मे प्रजामुपलोभयन्ति ग्रामे वसन्त उत वाऽरण्ये तेभ्यः इदं येभ्यइत्यादि । नमोऽस्तु बलिमेभ्यो हरामि स्वस्ति मेऽस्तु प्रजां मे ददतु । इदं स्त्रियै पुंसे वयसेऽवयसे शुक्लाय कृष्णदन्ताय पापीनां पतये ये मे प्रजामुपलोभयन्ति ग्रामेवसन्त उतवाऽरण्ये तेभ्यः, इदमेभ्य इति वा त्यागः । शेषं प्रणीताऽद्भिः प्रप्लाव्याचम्याग्निसमीपमागत्य एकस्मै ब्राह्मणाय भोजनं ददामीति संकल्पयेदिति पक्षादिकर्मविधिः । दर्शे पुनरियान्विशेषः स्थालीपाकेनाग्नये विष्णवे इन्द्राग्निभ्यामिति दर्शदेवताभ्यो होमः, अनुदिते चारम्भः शेषं समानम् । 'सायमादिप्रातरन्तमेकं कर्म प्रचक्षते । पौर्णमासादिदर्शान्तमेकमेव विदुर्बुधाः' इति वचनात् कृष्णपक्षे यदाधानं तदा दर्शमकृत्वैव पौर्णमास्यां पक्षादिकर्मारम्भः । यत्तु छन्दोगपरिशिष्टे वचनम्—ऊर्ध्वं पूर्णाहुतेर्दर्शः पौर्णमासोऽपि चाग्रिमः । य आयाति स होतव्यः स एवादिरिति श्रुतेः तत्पुनराधानविषयं तच्छाखिविषयं वा । इति पक्षादिप्रयोगः ॥

( गदाधरः )—'पक्षादिषु' 'पृथिवीभ्यामिति' पक्षाणामादयः पक्षादयस्तासु पक्षादिषु प्रतिपत्सु बहुवचनोपदेशात्सर्वपक्षादिष्वेतत्कर्म भवति उक्तेन विधिना स्थालीपाकं श्रपयित्वा तेनैव स्थालीपाकेन दर्शपूर्णमासदेवताभ्यो विभागेन होमः पौर्णमासे, पक्षादौ पौर्णमासदेवताभ्यो हुत्वा दर्शकालपक्षादौ दर्शदेवताभ्यो हुत्वा ब्रह्मण इत्येवमादिभ्यश्चतुर्भ्यो जुहोति स्थालीपाकेनैव । दर्शपौर्णमासे च विधिः समान इति कृत्वा ग्रन्थगौरवभयादाचार्येण समस्तोपदेशः कृतः । अतो यादृशस्ताभ्यो होमो विभागेन सिद्धस्तादृश एवेहापीति । एवंच स्मृत्यन्तरैः सहानुगतार्थो भवति । केचित्तु समस्तोपदेशात्सर्वाभ्यो होममिच्छन्ति । सिद्धचरोरुपादानं माभूदिति श्रपयित्वेत्युच्यते । यद्यप्यत्र पक्षादिष्विति सामान्येनोक्तं तथापि स्मृत्यन्तरोक्तो यागकालो ग्राह्यः । वृद्धशातातपः—पर्वणो यश्चतुर्थांश आद्याः

प्रदिपद्ग्रयः । यागकालः स विज्ञेयः प्रातर्युक्तो मनीषिभिः । कारिकायाम्—आवर्तनेऽथवा तत्प्राग्यदि पर्व समाप्यते । तत्र पूर्वाह्ण एव स्यात्सन्धेरूर्ध्वं द्विजाशनम् । आहिताग्नेर्न नियम इष्टेरूर्ध्वं विधानतः । ऊर्ध्वमावर्तनाच्चेत्स्याच्छ्वोभूते प्रातरेव हि । प्रतिपदि वृद्धिगामिन्यां क्षीणायां वा संधिज्ञानोपायमाह लौगाक्षिः–तिथेः परस्या घटिकाश्च याः स्युर्न्यूनास्तथैवाभ्यधिकाश्च तासाम् । अर्द्धं वियोज्यं च तथा प्रयोज्यं ह्रासे च वृद्धौ प्रथमे दिने स्यादिति । प्रतिपद्वृद्धिनाडिका द्विधा विभज्यार्द्धं पर्वणि संयोज्य संधिः कल्पनीयः तथैव प्रतिपत्क्षयनाडिकाश्च द्वेधा विभज्यार्द्धं पर्वणि वियोज्य संधिः कल्पनीयः । आधानानन्तरं शुक्ला कृष्णा वा प्रतिपद्भवति तस्यामारम्भः कार्यः । तदुक्तं कारिकायाम्–अधानानन्तरं शुक्ला कृष्णा वा प्रतिपद्भवेत् । तस्यां पक्षादिकर्मैतत्कार्यं पूर्वाह्ण एव तदिति । हरिहरभाष्ये तु सायमादिप्रातरन्तमेकं कर्म प्रचक्षते । पौर्णमासादिदर्शान्तमेकमेव विदुर्बुधाः । इतिवचनात्कृष्णपक्षे यद्याधानं तदा दर्शमनिष्ट्वैव पौर्णमास्यां पक्षादिकर्मारम्भः । यत्तु छन्दोगपरिशिष्टवचनम्—ऊर्ध्वं पूर्णाहुतेर्दर्शः पूर्णमासोऽपि चाग्रिमः । य आयाति स होतव्यः स एवादिरितिश्रुतेः इत्येतत्पुनराधानविषयं तच्छाखिविषयमित्युक्तम् । अत्रैके वदन्ति—आधानस्य शुक्लपक्षे विहितत्वात्तदुत्तरं पौर्णमासस्थालीपाककालस्य विद्यमानत्वात्पौर्णमासस्थालीपाकारम्भो युक्तः । तच्चिन्त्यम् । अस्माकं सूत्रे दारकाले दायाद्यकाले वेत्यावसथ्याधानस्य काल उक्तः । तत्र यदा दायाद्यकाल आधनं कृतं तदुत्तरं या प्रतिपद्भवति तस्यामारम्भो युक्तः । ननूदगयन आपूर्यमाणपक्षे पुण्याह इत्युक्तत्वाद्विभागोऽपि शुक्लपक्षे स्यात्तदा कृष्णायां प्रतिपद्यारम्भः सिध्येदेव । सत्यम् । विभागस्तावद्रागतः–प्राप्तस्तत्र कालापेक्षाभावादापूर्यमाणादिनियमो न स्यादतो यदैव विभागस्तदैवाधानं ततः प्रतिपद्यारम्भ इतियुक्तम् । नन्वस्तु कृष्णपक्षे शुक्लपक्षे वा विभागः अधानं तु शुक्लपक्षे एव कार्यम् । नैवम् । कालविलम्बे प्रमाणाभावाद्विभागोत्तरं कार्यमेव ततो या प्रतिपदायाति तस्यामारम्भ इति । अत्र बहु वक्तव्यमस्ति ग्रन्थगौरवभयान्नोच्यते । यद्यारम्भकाले सूतकमलमासपौषमासगुरुशुक्रास्तबाल्यवार्धकग्रहणादि भवति तदाऽपि प्रारम्भः कार्यः । यानि तु तत्रारम्भनिषेधकानि—उपरागोऽधिमासश्च यदि प्रथमपर्वणि । तथा मलिम्लुचे पौषे नान्वारम्भणमिष्यते । गुरुभार्गवयोर्मौढ्ये चन्द्रसूर्यग्रहे तथेत्यादीनि संग्रहकारादिवचनानि तानि आलस्यादिना स्वकालानुपक्रान्तस्थालीपाकादिप्रारम्भविषयकाणीति प्रयोगपारिजातकारः प्रयोगरत्नकारश्च । तथाचापरार्केस्थं गर्गवचनमुदाजहार—नामकर्म च दर्शेष्टिं यथाकालं समाचरेत् । अतिपाते सति तयोः प्रशस्ते मासि पुण्यभ इति । देवयाज्ञिकैस्तु—दर्शपूर्णमासानीजान इतिसूत्रव्याख्याने सूतकशुक्रास्तादिनिमित्तवशाद्दर्शपूर्णमासारम्भोत्कर्षे सति आग्रयणकाले आगते तदतिक्रमशङ्कायामयं प्रकार इत्युक्तम् । अतो याज्ञिकानामनभीष्टः शुक्रास्तादावारम्भ इत्याभाति । तथाच त्रिकाण्डमण्डनः—आधानानन्तरं पौर्णमासी चेन्मलमासगा । तस्यामारम्भणीयादीन्न कुर्वीत कदाचनेति । आचारोऽप्येवम् । 'विश्वेभ्यो···काशाय च'। द्रव्यान्तरानुपदेशात्स्थालीपाकादेव विश्वदेवादिभ्यो बलित्रयमग्नेरुदक्प्राक्संस्थं कुर्यात् । बलिहरणवाक्ये च नमःशब्दोऽन्ते कार्यः । उक्तं चैतत्कर्कोपाध्यायैर्बलिहरणे च नमस्कार इति, पितृभ्यः स्वधानम इति दक्षिणत इति सूत्रव्याख्यानावसरे च नमस्कारश्चात्र प्रदर्शित आचार्येण स सर्वबलिहरणेषु प्रत्येतव्य इत्युक्तम् । 'वैश्वदे···कृतेस्वाहेति'। वैश्वदेवस्येत्यवयवलक्षणा षष्ठी । विश्वेदेवा देवता देवपितृमनुष्यादय अस्येति वैश्वदेवः सर्वार्थः प्रत्यहं क्रियमाणः पाकस्तस्य वैश्वदेवस्याग्नये स्वाहेत्यादिभिर्मन्त्रैर्जुहोति । वैश्वदेवस्येति सिद्धवदुपदेशात् द्वितीयः स्थालीपाको वैश्वदेवः समानतन्त्रः पक्षादिषु भवतीति भर्तृयज्ञभाष्ये । कर्कोपाध्यायैस्तु वैश्वदेवं केचित्पृथक्चरुं कुर्वन्ति यथा पौष्णस्य जुहोतीति पौष्णम् । तत्पुनरयुक्तम् । वैश्वदेवशब्देन

विश्वेदेवा देवता अस्येति सर्वार्थः पाकोऽभिधीयते ततो जुहोतीत्युक्तं भवति । यत्तु पौष्णवदिति नहि पौष्णशब्दवाच्योऽन्यः कश्चिच्चरुर्भवति । तेनास्य पृथक्क्रिया । वैश्वदेवस्तु पुनः पाको विद्यत एवेति तथाच वक्ष्यति वैश्वदेवादन्नात्पर्युक्ष्य स्वाहाकारैर्जुहुयादितीत्युक्तम् । अग्नौ होमः प्राप्त एव पुनरग्नौ जुहोतीत्यग्निग्रहणं बलिकर्माग्नौ माभूदिति । अग्नये स्विष्टकृते स्वाहेति प्रयोगोपदर्शनार्थम् । प्राजापत्यश्च स्विष्टकृच्चेति प्रदेशान्तरे उक्तम् इह प्रयोग उपदर्श्यते । अपि च स्थालीपाकेन दर्शपूर्णमासदेवतादीनां होमविधानस्यावसरविधित्सयैतत् । तत्कथम् ? प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविरिति प्रदेशान्तरे उक्तम्, तेन प्राङ्महाव्याहृतिहोमादाज्यभागोत्तरकालं चावसरोऽवगम्यत इति स्विष्टकृद्धोमश्च शेषादेव भवति । स्विष्टकृद्ग्रहणं वक्ष्यमाणस्य बलिहरणस्य प्राधान्यद्योतनार्थमिति भर्तृयज्ञः । परिभाषातः प्राप्तत्वात्स्वाहाकारग्रहणं बलिनिवृत्त्यर्थम् । प्रदानार्थोऽपि स्वाहाकारो न बलिहरणेषु भवति । 'बाह्यतः'''ददत्विति' । ततो बाह्यतः शालायाः बहिःप्रदेशे नमः स्त्रियै इत्यादिमन्त्रैः प्रतिमन्त्रं स्थालीपाकात् स्त्रीबलिं स्त्र्यादिभ्यो बलिः स्त्रीबलिः तं हरति स्रुवेण मन्त्रान्ते भूमौ प्रक्षिपति । एतच्चागन्तुकत्वात्सर्वान्ते भवति । मन्त्रार्थः स्त्रियै संतानसुखविघातिन्यै नमः । नमस्कारोऽस्तु अतः संतानसुखेच्छवोऽत्र बाह्यवत्यधिकारिण इतिजयरामः । तथा पुंसे उक्तस्वरूपायैव । किंभूताय वयसे अवयसे च वृद्धाय बालाय च शुक्लाय बहिः कृष्णदन्ताय असितान्तरङ्गावयवाय अतिमलिनमनसे इत्यर्थः । अत एव पापीनां पतये श्रेष्ठाय दीर्घश्छान्दसः । अत्र बलित्रये पुमानेव विशिष्यते । ये च मे मम प्रजां संतानमुपलाभयन्ति मोहयन्ति ग्रामे वसन्त. उत अपि वा समुच्चये अरण्ये वा वने वाऽपि तेभ्यो नमः नमस्कारोऽस्तु । एभ्यो बलिं पूजां हरामि समर्पयामि मम नमस्कारबलिभ्यां यूयं संतुष्टा भवत ततो भवतां प्रसादान्मम स्वस्ति कल्याणमस्तु । भवन्तश्च मे मह्यं प्रजां पुत्रादिसुखजातं ददतु प्रयच्छन्तु । 'शेषमद्भिः''''''भोजनम्' । बलिहरणानन्तरं शेषं स्थालीपाकस्थितमवशिष्टं चरुमद्भिर्लौकिकोदकेन प्रप्लाव्य मज्जयित्वा ब्राह्मणभोजनं कुर्यात् । प्रणीतोदकेन प्रप्लावनमिति वासुदेवादयः । नेतिकारिकायाम् । इति''''''द्वादशी कण्डिका ॥ १२ ॥

अथ पदार्थक्रमः । आधानानन्तरं प्रथमप्रतिपदि प्रातः स्नात्वा कृतनित्यक्रियो निर्णेजनान्तं वैश्वदेवं कृत्वा मातृपूजापूर्वकमाभ्युदयिकं कुर्यात् । ततः संकल्पः । देशकालौ स्मृत्वा ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं स्थालीपाककर्माहं करिष्ये । अत्रात्मनो ब्रह्मणः प्रणीतानां चासनचतुष्टयं कुशैः कुर्यादिति हरिहरः । तत्र प्रणीतार्थं द्वयम् । ततो ब्रह्मोपवेशनाद्याज्यभागान्तं चरुसहितं कुर्यात् । तत्र विशेषस्तण्डुलानन्तरं वैश्वदेवान्नस्यासादनप्रोक्षणे । तत आज्यभागान्ते स्थालीपाकमभिघार्य स्रुवेण चरोर्होमः अग्नये स्वाहा इदमग्नये न मम, उपांशु अग्नीषोमाभ्यां स्वाहा इदमग्नीषोमाभ्यां० पुनः उच्चैः अग्नीषोमाभ्यां स्वाहा इदमग्नीषोमाभ्यां०, ब्रह्मणे स्वाहा इदं ब्र०, प्रजापतये स्वाहा इदं प्र०, विश्वेभ्यो देवेभ्यः स्वाहा इदं वि०, द्यावापृथिवीभ्यां स्वाहा इदं द्यावा० । ततस्तेनैव चरुणाऽग्नेरुत्तरतः प्राक्संस्थं बलित्रयं कुर्यात् विश्वेभ्यो देवेभ्यो नमः इदं विश्वेभ्यो देवेभ्यो न मम, भूतगृह्येभ्यो नमः इदं भू०, आकाशाय नमः इदमा० । त्रयाणां बलिकर्मणा संस्रवरक्षणं न कार्यमिति गङ्गाधरः । ततो वैश्वदेवान्नमभिघार्य तेन होमः अग्नये स्वाहा इदमग्नये न मम, प्रजापतये स्वाहा इदं प्र०, विश्वेभ्यो देवेभ्यः स्वाहा इदं वि० । चरोर्वैश्वदेवान्नस्य च होमः अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम । तत आज्येन भूराद्या नवाहुतयः प्राशनं मार्जनं पवित्रप्रतिपत्तिः प्रणीताविमोकः दक्षिणादानम् । ततः स्थालीपाकेन शुद्धायां भूमौ बहिः स्रुवेण बलिहरणम् ॐनमः स्त्रियै इदं स्त्रियै नमः । नमः पुꣳसे वयसेऽवयसे इदं पुꣳसे० । नमः शुक्लाय कृष्णदन्ताय पापीनां पतये इदं शु० । नमो ये मे

प्रजामुपलोभयन्ति ग्रामे वसन्त उतवाऽरण्ये तेभ्यः इदं ये मे प्र० । नमोऽस्तु बलिमेभ्यो हरामि स्वस्ति मेऽस्तु प्रजां मे ददतु इदमेभ्य इति त्याग इति हरिहरः । इदं स्त्रियै पुंस्से वयसेऽवयसे शुक्लाय कृष्णदन्ताय पापीनां पतये ये मे प्रजामुपलोभयन्ति ग्रामे वसन्त उत वाऽरण्ये तेभ्यश्च न ममेति गङ्गाधरकारिकाकारौ । शेषमद्भिः प्रप्लाव्यैकब्राह्मणभोजनं कारयेत् । इति पौर्णमासस्थालीपाकः । अथ दर्शे विशेषः—तत्राधानानन्तरं याऽमावास्या आयाति तस्या त्रेधाविभक्तदिनतृतीयांशे परम-क्षये पिण्डपितृयज्ञः कार्यः । तस्मिन् क्षीणे ददातीति श्रुतेः । चन्द्रक्षयश्च यद्यपि कृष्णपक्षे प्रत्यहं भवति तथापि परमक्षयोऽत्र विवक्षितः सचामान्ते शास्त्रोक्त इति दिनद्वयेऽप्यपराह्णैकदेशव्याप्तौ सत्यां परदिनेऽर्धघटिकामात्रपरिमितामालाभेऽपि तत्रैव पिण्डपितृयज्ञानुष्ठानमुचितम् । एकस्मिन्नेव दिनेऽप-राह्णव्याप्तौ तु यस्मिन्नेव दिनेऽपराह्णव्याप्तिस्तत्रैव तदनुष्ठानम् । एवं च पिण्डपितृयज्ञकालस्य वाजसने-यिशाखायामुपदेशाद्यागकालस्यानुपदेशात्पिण्डपितृयज्ञदिनात्परदिने यागः कार्यः, पूर्वेद्युः पितृभ्यो निप्रीय प्रातर्देवेभ्यः प्रतनुत इतिकर्कोदाहृतशाखान्तरीयश्रुतेः पूर्वो वाऽङ्गत्वात्पिण्डपितृयज्ञ इति सूत्राच्च । यद्यपि चन्द्रदर्शने यागनिषेधः स्मर्यते—द्वितीया त्रिमुहूर्ताचेत्प्रतिपच्चापराह्णिकी । अन्वा-धानं चतुर्दश्यां परतः सोमदर्शनादित्यादिना तथाऽप्युक्तन्यायेन वाजसनेयिनां पिण्डपितृयज्ञः परदिन एव चन्द्रदर्शनवत्यपि यागानुष्ठानस्योचितत्वाद्वाजसनेयिव्यतिरिक्तविषयत्वेन पूर्वाह्णमध्याह्नसंधिविष-यत्वेन वा निषेधो नेतव्यः । न चास्य दर्शाङ्गत्वादनाहिताग्नेरेष न भवतीति वाच्यम् । अनाहिता-ग्नेरप्येष इत्युक्तत्वात् । अयं च मृतपितृकस्यैव भवति । अत्र मातृकापूजनपूर्वकमाभ्युदयिकं कार्यमि-त्युक्तं गङ्गाधरेण । अत्र सर्वकर्मापसव्येन दक्षिणामुखेन कार्यम् । अत्रैवं पदार्थक्रमः—प्राचीनावीतिक-रणं, नीविबन्धनं, तच्च कुशतिलसंयुक्तानां वस्त्रदशानां सव्यभागे परिहितवस्त्रेण संवेष्टयावगूहनमिति देवयाज्ञिकाः । नीविं परिहितमध्येऽवगूहितवस्त्रप्रान्तं विस्रंस्येति नीविं विस्रस्येति सूत्रव्याख्याने श्रीअनन्तयाज्ञिकाः । न नीविं कुरुत इत्येतद्व्याख्याने नीविः परिधानदार्ढ्यार्थं प्रदेशान्तरे प्रदेशान्त-रावगूहनमित्युक्तम् श्रीअनन्तैः । नीविं कुरुते सोमस्य नीविरित्यत्र च नीविरपवर्तिकेति कर्कादयः । सर्वसूत्रव्याख्यावलोकने प्रदेशान्तरे प्रदेशान्तरावगूहनमेवायाति । नीविवासोदशान्तेन स्वरक्षार्थं प्रब-न्धयेदित्याश्वलायनः । वेदिश्रोणिसन्नहनावच्छादनवाक्यशेषो दक्षिणत इव ह्रीयंनीविरिति । दक्षिणे कटिदेशे तु तिलैः सह कुशत्रयमिति वृद्धयाज्ञवल्क्यः । नीवी कार्या दशागुप्तिर्वामकुक्षौ कुशैः सहेति यत्कात्यायनवचनं तद्वृद्धिश्राद्धे । पितॄणां दक्षिणे पार्श्वे विपरीता तु दैविक इति स्मृत्यन्तरात् । वामे दक्षिणेवेत्याचाराद्व्यवस्थेति प्रयोगपारिजाते । ततोऽग्नेर्दक्षिणसंस्थमपसव्यं परिस्तरणमग्नेः पश्चादुत्तरतो वा दक्षिणसंस्थं, दक्षिणाग्राणां पात्राणामेकश आसादनम्, न द्विशः, स्रुक् उलूखलं मुसलं शूर्पं चरुस्थाली उदकमाज्यम् मेक्षणं वस्त्रमुदपात्रं सकृदाच्छिन्नानि व्रीहयः सूत्राणि च ऊर्णा वा वस्त्रदशा वा स्थाल्यां ग्रहणपक्षे पूर्वं तस्या आसादनं न स्रुचः । अपरेणाग्निं चरुमपूर्णं स्रुचं वा गृह्णाति ततोऽग्ने-रुत्तरत उलूखले व्रीहीनोप्य तिष्ठतोऽवहननं, शूर्पे न्युप्य निष्पवनं सकृत्फलीकरणमपूर्णस्य चरोः सार-तण्डुलस्य श्रपणम्, अभिघारणं दक्षिणेनोद्वासनमपसव्येनाहरणं, ततो दक्षिणामुख एवाहुतिद्वयं जुहो-ति ॐ अग्नये कव्यवाहनाय स्वाहा इदमग्नये क० सोमाय पितृमते स्वाहा इदं सोमाय पि० अग्नौ मेक्षणप्रासनम् । अग्निमपरेण दक्षिणेन वा अपहता इति स्फ्येन दक्षिणसंस्थां लेखां कुर्यात् । ये रूपाणीति परस्तादुल्मुककरणं, लेखायां पितृप्रभृतित्रिभ्योऽवनेजनं पितः अमुक अवनेनिक्ष्वेति रेखामूले पितामह अवनेनिक्ष्वेति रेखामध्ये अमुक प्रपितामह अवनेनिक्ष्वेति रेखान्ते । सकृदाच्छिन्नानि लेखायां कृत्वा यथाऽवनिक्तं पिण्डदानं पितरमुक एतत्ते अन्नमिति मन्त्रेण रेखामूले पिण्डदानम्, पितामह अमुक एतत्ते अन्नमिति रेखामध्ये, प्रपितामह अमुक एतत्ते अन्नमिति रेखान्ते । अत्र पितर इति जपः । अप-

सव्येनोदङ्ङावर्तनम् आतमनात्तिष्ठेत्। पुनस्तेनैवामीमदन्तेति जपः । पूर्ववदवनेजनं पिण्डानामुपरि नीविविस्रंसनं, नमो व इत्यञ्जलिकरणं, षड्भिः प्रतिमन्त्रं गृहान्न इति जपः। सूत्रादीनामन्यतमस्य प्रदानमेतद्व इति प्रतिपिण्डम्। ऊर्जमिति पिण्डानामुपरि उदकनिषेकः। उखायां पिण्डावधानमवघ्राणं सकृदाच्छिन्नावधानमग्नौ उल्मुकस्य च। पुत्रकामाया ऋतुमत्याः पत्न्या मध्यमपिण्डस्य प्राशनम्। तस्मिन्पक्षे अनवघ्राणं यजमानस्य उदकोपस्पर्शनं ततः पार्वणश्राद्धमिति पदार्थक्रमः। ततः श्वः प्रतिपदि ब्रह्मोपवेशनाद्याज्यभागान्तं कृत्वा स्थालीपाकेनाग्नये स्वाहा, विष्णवे स्वाहा, इन्द्राग्निभ्यां स्वाहेति दर्शदेवताभ्यो हुत्वा ब्रह्मणे स्वाहेति ब्राह्मणतर्पणान्तं पूर्ववत्कुर्यात्। सर्वत्र पूर्वं स्थालीपाकः पश्चाद्वैश्वदेवः। तदुक्तं कारिकायाम्—अकृते वैश्वदेवे तु स्थालीपाकाः प्रकीर्तिताः। अन्यत्र पितृयज्ञात्तु सोऽपराह्णे विधीयते। प्रथमायां प्रतिपदि तु आभ्युदयिकात्पूर्वं कार्यं इति तत्रैवोक्तम्। गर्गमते तु पिण्डपितृयज्ञे चरोरुद्वासनान्ते तिसृणां समिधामग्नौ प्रक्षेपः यज्ञोपवीती भूत्वाऽग्नौ होमः। एतच्चे अन्नमिति नाध्याहार इति विशेषः। अथ गर्गमते स्थालीपाके विशेषः—प्रथमप्रयोगे पौर्णमास्यां मातृपूजाश्राद्धपूर्विकाऽन्वारम्भणीया ब्रह्मासनाद्याज्यभागान्तं पूर्ववत्। ग्रहणे अग्नाविष्णुभ्यां सरस्वत्यै सरस्वते जुष्टं गृह्णामीति ग्रहणम्। प्रोक्षणे त्वाधिकः। आज्यभागान्ते चरुहोमः। अग्नाविष्णुभ्यां स्वाहा सरस्वत्यै स्वा० सरस्वते स्वा० अग्नये स्विष्टकृते स्वा०। महाव्याहृत्यादिब्राह्मणभोजनान्तम्। ततो वैश्वदेवः। ततः श्वोभूते ब्रह्मोपवेशनाद्याज्यभागान्ते विशेषः—चरुस्थालीद्वयं ग्रहण अग्नये अग्नीषोमाभ्यामग्नीषोमाभ्यां ब्रह्मणे प्रजापतये विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यां जुष्टम्। अग्नये प्रजापतये विश्वेभ्यो देवेभ्यो जुष्टमिति द्वितीयचरुग्रहणम्। प्रोक्षणे त्वाधिक.। आज्यभागान्ते पूर्वचरुणा हुत्वा तेनैव वलिहरणम्। ततो वैश्वदेवस्याग्नौ जुहोतीत्यादिवैश्वदेवचरुणा उभयोः स्विष्टकृद्धोमः। ततो बाह्यतः स्त्रीबलिहरणं पञ्चमन्त्रैः द्वितीयचरुशेषेण बलिहरणम्। शेषमद्भिः प्लाव्य महाव्याहृत्यादिप्राजापत्यान्तं संस्रवप्राशनं ब्राह्मणभोजनान्तं तदनन्तरं चरुशेषेणैव वैश्वदेवः। अमावास्यापक्षादिषु कर्मविशेषः—तत्र ग्रहणे प्रोक्षणे होमे चाग्नेरनन्तरं विष्णुः इन्द्राग्नी च शेषं पौर्णमासवत्। कृतसोमस्य यजमानस्याग्नेरनन्तरमग्नीषोमौ इन्द्रश्च भवति इति गर्गमते विशेषः। स्वकाले स्थालीपाकपिण्डपितृयज्ञयोरकरणे विशेष उच्यते। पक्षादिः पिण्डयज्ञादि प्रमादादकृतं यदि। प्रायश्चित्तं ततो हुत्वा कर्तव्यं तद्दिनान्तरे। पिण्डपितृयज्ञस्तु अमादिन एव भवति न दिनान्तरे। अमायामननुष्ठाने प्रायश्चित्तत्वेन वैश्वानरश्चरुरेव न पिण्डपितृयज्ञः। तथाच कात्यायनः—परेणाग्नौ हुते स्वार्थं परस्याग्नौ हुते स्वयम्। पितृयज्ञात्यये चैव वैश्वदेवद्वयस्य च। अनिष्ट्वा नवयज्ञेन नवान्नप्राशने तथा। भोजने पतितान्नस्य चरुर्वैश्वानरो भवेत्। अनाहिताग्नेश्चरुः, आहिताग्नेस्तु इष्टिरेव। कारिकायाम्—मुख्यकाले यदा न स्यात्पौर्णमास. कथंचन। कृत्वाऽनादिष्टमादर्शात्कर्तव्यो यत्र कुत्रचित्। दर्शोत्प्राक्तु नवा चेत्स्यादर्शेन, सह तत्क्रिया। यदि दर्शोऽप्यतिक्रान्तस्तदा पथिकृती भवेत्। अत्रापि चरुरेवानाहिताग्नेः। थ एनाहिताग्नेः पुरोडाशास्ते एवानाहिताग्नेश्चरव इत्युक्तत्वात्। एवं दर्शोऽतिपन्नः प्राक् पौर्णमासान्न चेत्कृतः। पितृयज्ञं विना सोऽपि कर्तव्यो यत्र कुत्रचित्। न पौर्णमासतन्त्रे स्याद्दर्शो भिन्ने प्रयोगतः। पौर्णमासेऽप्यतिक्रान्तेऽतिपत्तिः पथिकृत्तदा॥ १२॥

( विश्व० )—पक्षादिषु······'पृथिवीभ्यामिति '। पक्षाणामादयः पक्षादयः तेषु प्रतिपत्सु। अत्र प्रतिपन्निर्णयस्य पौर्णमास्यमावास्यानिर्णयाधीनत्वेनाऽमावास्यापौर्णमास्यौ निर्णीयेते। तत्र समग्रयोरुपोष्यतायां तदुत्तरदिने पक्षादिकर्तव्यताया न संदेहः। खण्डितयोस्तु मध्या-

१ तदुग्लानादित्यस्य रूपम्।

ह्वात्प्राक्चेत्पर्वप्रतिपत्संधिः तदा पूर्वदिनमुपोष्य संधिदिने पक्षादिः । मध्याह्वोत्तरं यदा संधिस्तदा तद्दिनमुपोष्य तदुत्तरदिने याग इति । तत्र प्रतिपदि प्रातः प्रतिपच्चतुर्थांशो दूषणं साधारणम् । अमावास्यायाः प्रतिपदि तु चन्द्रदर्शनं षण्मुहूर्तादूनो यागकालश्चाधिकं दूषणम् । नच प्रतिपद्यापराह्णिकद्वितीयोपरागोऽपि प्रतिपद्दूषणमिति वाच्यं, तस्य चन्द्रदर्शनाधायकत्वेनैव दूषणत्वात् । अत एवोक्तं परतः सोमदर्शनादिति नतु द्वितीयोपरागादिति । नच द्वितीयासहितं यस्मादित्यादौ द्वितीयोपरागस्यापि दूषकत्वप्रतीतेर्द्वितीयासंबन्धोऽपि दूषकः, अन्यथा चन्द्रदर्शनस्यैव द्वितीयोपरागाधायकत्वेन दूषकत्वस्य सुवचत्वादिति वाच्यम् । चन्द्रदर्शनस्य श्रुतौ सूत्रे च दूषकत्वं निश्चितम्, तथाच तदाधायकत्वेनैव द्वितीयासंबन्धस्यापि दूषकत्वोपपत्तौ किमर्थं साक्षाद् दूषकत्वं कल्प्यम् । किंच द्वितीयासंबन्धस्य प्रतिपद्यापराह्णिकस्य दूषकत्वे नाडीमात्रात्मकद्वितीयासंबन्धोऽपि प्रतिपदं दूषयेत् । वाक्यान्तरमर्यादया त्रिमुहूर्तात्मक इति चेत् तर्हि तन्मर्यादयैवचन्द्रदर्शनाधायकतया दूषक इति निर्व्यूढम् । तथाच यथोपाधिर्व्याप्तिविरहमाधाय सत्प्रतिपक्षं चोत्थाप्याऽनुमानं दूषयति तद्वत्प्रतिपद्यपराह्णाधिकरणकद्वितीयासंबन्धोऽपि प्रतिपदं दूषयतीति युक्तमुत्पश्यामः । अत एव प्रतिपदो यजनीयताप्रतिबन्धिका त्रिदोषीति कालनिर्णयकाराः । एवं च यज्ञकालस्तिथिद्वैध इत्यत्र मुहूर्तं कलापदार्थः कस्य हेतोरिति चेत् । न । उपोष्यताप्रयोजकधर्मावच्छिन्नदर्शकालादिनिर्णायकवाक्यानां स्वतात्पर्यविषयीभूतनिर्णेतव्योपपत्तये पक्षादिकर्तव्यताबोधकशास्त्रैकवाक्यतापन्नशास्त्रसमर्पितचन्द्रदर्शनादिदूषणाक्रान्तं समयं यथासंभवमपवदितुं कलापदार्थो मुहूर्तमिति कालनिर्णयकाराः । नच विवक्षयापि दूषणानपत्राद्गान्नाऽस्येव कलापदार्थ इति वाच्यं, समयावाहया प्रतिपक्षपक्षाणां सावकाशतापत्तेः । विवक्षया च काले कवलिते न सावकाशाः प्रतिपक्षपक्षा इत्येकं विवक्षाफलम् । नन्वेवं विवक्षया चेद्विपक्षा विपक्षा जायन्ते दूषणं चापहस्त्येत तर्हि सार्वकालिकदूषणापहवक्षमविवक्षया तादृशदूषणापवादे का हानिः ? न कापि तर्हि तथैव ( किं ) न क्रियत इति चेत् । न । त्रिमुहूर्ता द्वितीयेत्यादिवाक्यानां तात्पर्यविषयीभूतप्रकृतपदार्थसंसर्गाप्रतिपत्तिहेतुत्वेन प्रामाण्यव्याकोपापत्तेः । तदुक्तं याज्ञिकचरणैः स्वभाष्ये—त्रिमुहूर्ता द्वितीयेत्याद्यनुरोधादिति अत एव षण्मुहूर्तोनयागकालस्य चन्द्रदर्शनाधायकत्वेन दूषकतायामपि स्वतन्त्रदूषणत्वानपवादः । अत एव देवयाज्ञिकैस्तथैव व्याहृतं स्वभाष्ये । तथाचापचीयमानामावास्यायाः दिवसावच्छेदेनावसितायाः प्रतिपदि यदि प्रातः स्वचतुर्थांशाभावः षण्मुहूर्तात्मा यागकालः चन्द्रदर्शनाभावश्चैतत्त्रयं चेत्स्यात् तदा तस्यां यागः । नोचेच्चतुर्दश्यवच्छिन्नायां व्रतं दिवसावच्छेदेनोपरतामावास्यायां याग इति कालनिर्णयकाराः । एवंच चतुर्थीक्षयाऽन्यथानुपपत्त्या चतुर्विंशतिसंख्यनाड्यच्छिन्नामावास्याक्षयमारभ्य चतुर्थीप्रतियोगिकनिःशेषक्षयवशाच्चतुर्थीदिनं पञ्चमी यत्र व्याप्नोति तत्र, पञ्चमी यत्र संपूर्णेत्यादियागकर्तव्यताप्रतिपादकवाक्यानां प्रन्निर्णीतापचीयमानामावास्याविषयत्वमेव । न च चरुरिष्टिरित्यादिना शुद्धायामेव यागकर्तव्यत्वावगमात्किमर्थं प्रतिपत्संबन्धाद्यपेक्षेति वाच्यम्, अर्थापत्तेः सर्वबलाधिकत्वात् । तदुक्तं कालनिर्णयदीपिकायाम्—सायात्प्रागपि पर्वणः प्रतिपदश्चान्ते द्वितीयाप्रभृत्यत्यन्तापचये तिथेर्येजिरमावास्यादिनेऽत्र स्मृत इति । न चात्यन्तापचयादिपदकदम्बप्रतिपाद्यार्थसंसर्गस्य चतुर्दशीचतुर्यामे इत्यादिवाक्यार्थभिन्नविषयतैव । अन्यथा यदा चतुर्दशीत्यादिवाक्यानामर्थैक्यापत्तेरिति वाच्यम् । एकार्थानेकशब्दश्रवणादर्थभेदे पदभेदस्याकारणतेव वाक्यार्थभेदं प्रत्यपि पदार्थभेदस्याहेतुत्वात् । यदा चतुर्दशीत्यादावर्थैक्यं वक्ष्यते । एवं चानेकवाक्यानामप्यन्योन्यसाचिव्यादेकवाक्यतायां संभवन्त्यामनेकार्थाभ्युपगमस्याऽन्याय्यत्वात् । अन्यथा यथाकथंचिदर्थभेदावाप्तौ तदभ्युपगमेऽनन्तामावास्या स्यादिति । तदुक्तचतुर्दशीचतुर्याम इतिवाक्ये श्वोभूते इत्यस्यार्थोऽमावास्यायां चतुर्थ्यामेव (?)

चेत्प्रतिपत्तदा भूते चतुर्दश्यां दिवसावच्छेदेनामयानुपरक्तायामपि कव्यादिकी पिण्डपितृयज्ञाऽन्यन्वाधानादिकीत्यर्थः । ननु यदाचतुर्दशीत्यादिवाक्यैकवाक्यतानुरोधाच्चतुर्दश्यां चतुर्थयामैकदेशावच्छेदेनामावास्यासंसर्गोपपत्तये चतुर्दशीचतुर्याम इत्यत्र न दृश्यत इत्यस्य किंचिदवच्छेदभेदेन दृश्यत इत्यर्थो वाच्यस्तथा चामयोपरक्तायामेव चतुर्दश्यां कव्यादिकी क्रियेति चेत् न, लक्षणापत्तेः । इतरवाक्यैकवाक्यतानुरोधात्तदभ्युपगमे यदाचतुर्दशीत्यस्मिन्नपि तृतीयमनुपूरयन्ती तुरीयमनुपूरयेदित्येवमाकाराध्याहारेणाऽर्धेचतुर्दशीति वाक्यैकवाक्यतालाभात्तस्यापि कर्तव्यतापत्तेः । एककर्तृकानेकवाक्यानामेकार्थत्वेऽन्यतरव्यर्थतापत्तेश्च । नचैतत्पक्षान्तरेऽपि समानमेककर्तृकत्वानभ्युपगमात् । अन्यथा समानार्थसकलवाक्यविलोपापत्तेः । एवं चोपचीयमानामावास्यायां यामत्रयान्यूनसमयगामिन्यामपि व्रताग्न्यन्वाधानादिकं, यदि प्रतिपदि प्रातः प्रतिपच्चतुर्थांशाभावः षण्मुहूर्तात्मा यागकालः चन्द्रदर्शनाभावश्च, नो चेत्तत्रापि चतुर्दश्यामेव व्रतं संधिदिने याग इति । तदुक्तं कालनिर्णयदीपिकायां–प्रतिपदस्त्वन्त्योऽङ्घ्रिरिन्दूीक्षणं स्याच्चेत्तत्र वदादिमेह्नयविहितेप्यंशे यजेत्पर्वणः। पौर्णमासीप्रतिपदि तु त्रिमुहूर्तात्मनोऽपि यागकालस्य लाभे यष्टव्यम् । तथाच तत्र प्रतिपच्चतुर्थांशस्याद्यास्तस्याश्चतुर्थोऽपीत्यादियागीयताबोधकं शास्त्रं सावकाशम् । नचैवं कालनिर्णयकाराणामपि सिद्धान्तः। केवलस्य प्रतिपच्चतुर्थांशस्य यागीयतानिषेधेऽपि तृतीयांशावच्छिन्नस्य तस्य तेषामप्यभ्युपगमात्, अन्यथा विधिनिषेधशास्त्रयोर्विषयभेदमन्तरा प्रवृत्तेरशक्यत्वात् । नहि येन रूपेण यद्विहितं तेनैव रूपेण तन्निषेद्धुं शक्यं, न वा येन रूपेण यन्निषिद्धं तेन रूपेण तद्विधातुं शक्यं, यथाऽपराह्णे विहितं श्राद्धं रात्रौ निषिद्धं पुनश्चन्द्रोपरागे विधीयते तथा प्रकृतेऽपि नयष्टव्यमित्यादिशास्त्रनिषिद्धस्य प्रतिपच्चतुर्थांशस्याद्यास्तस्याश्चतुर्थोपीत्यादिना रूपान्तरमन्तरा विधातुमशक्यतया तृतीयांशावच्छिन्नश्चतुर्थांशोप्युपादेय इत्यवसीयते । यत्र तु प्रातःसमयावच्छिन्नदिवसद्वयेऽपि क्रतुकालः प्रतीयते तत्र पूर्वदिवसस्य समग्रस्यैव यागीयकालावच्छिन्नत्वात्पूर्वदिवसे याग इति । यत्र तु दिनद्वयेऽपि यागकालो न लभ्यते तत्रापि प्रातःसमयाधिकरणकयागकालालाभेऽपि संगवाद्यधिकरणकप्रचुरतरयागकाललाभा(द्) पचयवशादुत्तरदिने च यागकालात्यन्ताभावात्पूर्वदिने यागः एवं चोपचयवशाद्यत्रोत्तरदिने प्रातःसमयावच्छिन्नस्य त(स्या?स्यना)त्यन्ताभावः तत्र तृतीयांशावच्छिन्नस्यचतुर्थांशस्यापि यागीयतया तत्रोत्तरदिने याग इति कालनिर्णयकाराः । तदुक्तं कालनिर्णयदीपिकायां—'प्रातर्यद्यपराह्णसंधिषु यजेः कालो व्यहे स्यात्तथा नैव स्यादुभयत्र पूर्वदिवसे यागस्तदापीष्यते' इति । ननु सामान्यवाचिनां न विशेषपरता सामान्ये प्रमाणपक्षपातादिति चेत् । न । चन्द्रदर्शनस्य तावद्यामावास्येत्याद्युपक्रम्य दूषणत्वावगमाद्दर्शप्रतिपद्दूषकत्वमेव । आपराह्णिकद्वितीयोपरागषट्कलन्यूनयागकालयोरपि चन्द्रदर्शनाबाधकत्वेनैव दूषकत्वोपपादनात्तयोः पौर्णमासप्रतिपदि निरवकाशता । नच पौर्णमासप्रतिपद्यपि चन्द्रदर्शनं दूषणमिति वाच्यम् । एष एव पूर्णमापच्चन्द्रमा एतस्य ह्यनुपूरणं पौर्णमासीत्याचक्षत इत्यादिश्रुत्यर्थपर्यालोचनया चन्द्रपूरणमुपजीव्य पौर्णमासप्रवृत्तेस्तस्यैव तद्दूषकत्वे पौर्णमासस्य नित्यमननुष्ठानापत्तेः । अत एवाद्यकलाक्षयोऽपि न दूषक इति ध्येयम् । एवंच चन्द्रक्षयमुपजीव्य दर्शस्य प्रकृतत्वेऽप्याद्यकलोपचयस्तत्रापि न दूषणं दर्शस्यापि नित्यमननुष्ठानापत्तेः । एवं चन्द्रदर्शनस्यामावास्यायामेव दूषणत्वात्तदाधायकदूषणोपरागो न पौर्णमासक्रतौ । तथाच सामान्यवाचकानामपि बलवद्बाधकाद्विशेषपरतैवेति सर्वं समञ्जसम् । प्रतिपन्निर्णायकवाक्येषु श्रूयमाणापराह्णपदं द्विधाविभक्तदिनोत्तरकालवाचकं कालनिर्णयकारमते । अपि च यत्र निर्णायकवाक्याहितसंशयकोटौ काप्यौत्कट्यं नोपलभ्यते तत्र षोडशमह उपादेयं, तत्र दिनक्षयवशात्प्रतिपच्चतुर्थांशादिदूषितं तदा पञ्चदशमुपादेयम् । एवं वृद्धिवशात्षोडशाहो यागी-

यतानवगमस्तत्र सप्तदशे यागः । तदेतदुक्तं—पञ्चदशेपीत्यनुक्तसमुच्चयार्थेनापिना साधितं च दिन-नाशो यदा भवेदित्यनेन । तथाच सप्तदशेऽपि यष्टव्यं दिनवृद्धिर्यदा भवेदित्यर्थः । एवंच दिनयोर्नाशे चतुर्दशेऽपि यष्टव्यम् । अत एवाधिकरणं मेदयन्निर्णयान्तरं रचयन्नाह वार्तिककारः—'सर्वव्याख्याविकल्पानां द्वयमेव प्रयोजनम् । पूर्वत्रापरितोषो वा विषयव्याप्तिरेव वा' इति । तेन विषयव्याप्त्यर्थमनुक्तसमुच्चयार्थं एवायमपिशब्दः । निन्दार्थवादस्तु मुख्ये लभ्यमाने जघन्यस्याऽनुपादेयतायोजनार्थमिति कालनिर्णयकारः । अन्ये तु चतुर्दश्यवच्छिन्नायां चतुर्दश्यष्टमांशविरहप्रयुक्तचन्द्रदर्शनसंभवेनोत्तरदिने चापराह्णावच्छिन्नामावास्यालाभे तस्यां व्रतम् । उत्तरदिने प्रतिपदि षट्कलस्य ततो न्यूनस्य यागकालस्य संभवे चन्द्रदर्शने सत्यपि याग इति । तन्मते चन्द्रदर्शननिषेधस्य पूर्वाह्णमध्याह्नान्यतरकाले पर्वसंधौ प्रमादाच्चन्द्रदर्शनदिने यागानुष्ठानविषयता । प्रतिपद्यापराह्णिकद्वितीयोपरागश्च पञ्चधाविभक्तस्याह्नश्चतुर्थांशात्मकाऽपराह्णः परभागः । षट्कल इत्यत्र कलापदार्थो घटिका स्वतात्पर्यविशेषवशात् । तदनुरोधाच्चतुर्दशीचतुर्याम इत्यादिवाक्यान्यध्याहारेण योजयन्ति । चन्द्रदर्शनस्य काचित्कीं दूषणतां मन्यन्त इति चिन्त्यम् । चन्द्रप्रतियोगिकनिविडक्षयावच्छिन्नसमयप्रत्यासन्नतरापराह्णायारितथेरुपोष्यत्वमिति हरिस्वामिनः । केचित्तु संशयस्थले उत्तराया एवोपोष्यत्वम् 'उत्तरामुपवसेदनिर्ज्ञायेतिश्रवणात्' इत्याहुः । मध्याह्नात्प्रागपि पर्वप्रतिपत्संधौ सा पौर्णमास्युपोष्येति वाजसनेयिनः । तदुक्तम्—आवर्तनादधः संधिर्यद्यन्वाधाय तद्दिने । परेद्युरिष्टिरित्याहुर्विप्रा वाजसनेयिनः । तथा–संधिश्चेत्संगवादूर्ध्वमर्वागावर्तनाद्भवेत् । सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिरिति । अथ साधारणवाक्यानि पर्वद्व(विष)ये । कालादर्शः—पर्वप्रतिपदोः संधिर्मध्याह्ने पूर्वतोऽपि वा । अन्वाधानं पूर्वदिने तद्दिने याग इष्यते । परतश्चेत्परत्रेष्टिस्तद्दिनेऽन्वाहितिर्भवेत् । गोभिलः—आवर्तने यदा संधिः पर्वप्रतिपदोर्भवेत् । तदहर्याग इष्येत परतश्चेत्परेऽहनि । पर्वप्रतिपदोः संधिरर्वागावर्तनाद्यदि । तस्मिन्नहनि यष्टव्यं पूर्वेद्युः स्यादुपक्रमः । लौगाक्षिः—पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते । उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते । गोभिलः—आवर्तनात्परः संधिर्यदि तस्मिन्नुपक्रमः । परेद्युरिष्टिरित्येष पर्वद्वयविनिर्णयः । लौगाक्षिरपि—अपराह्णेऽथवा सायं यदि पर्व समाप्यते । उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते । अपराह्णेऽथवा रात्राविति क्वचित्पाठः । एतावत्पर्वद्वयसाधारणम् । तथा संकृष्टे च विकृष्टे च यष्टव्यं षोडशेऽहनि । पञ्चदशेऽपि यष्टव्यं दिननाशो यदा भवेदिति । पर्वावसानज्ञानोपायः । लौगाक्षिः—तिथेः परस्या घटिकास्तु या स्युर्न्यूनास्तथैवाभ्यधिकाश्च तासाम् । अर्धं प्रयोज्यं च तथा वियोज्यं ह्रासे च वृद्धौ प्रथमे दिने तदिति । कात्यायनः—परेऽह्नि घटिका न्यूनास्तथैवाभ्यधिकाश्च याः । क्षिप्त्वा तदर्धं पूर्वस्मिन् ह्रासवृद्धी प्रकल्पयेदिति । अथ यागकालः । याज्ञवल्क्यः—पञ्चदश्याः परः पादः पक्षादेः प्रथमास्त्रयः । कालः पार्वणयागे स्यादन्यथा तु न विद्यते । वृद्धशातातपः—पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः । यागकालः स विज्ञेयः प्रातर्युक्तो मनीषिभिरिति । तथा । चतुर्थः पर्वणो योऽशो येंऽशाः प्रतिपदस्त्रयः । आद्यास्तस्याश्चतुर्थोऽपि यागकाल उदाहृत इति । संधिर्यद्यपराह्णे स्याद्यागं प्रातः परेऽहनि । कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दुष्यतीति । निषेधोऽपि, न यष्टव्यं चतुर्थांशे यागैः प्रतिपदः क्वचित् । रक्षांसि तद्विलुम्पन्ति श्रुतिरेषा सनातनीति । उक्त एवन्यायोऽत्रानुसर्तव्योऽन्यथा वस्तुनो द्वैरूप्यापत्तेः । विधिनिषेधाभ्यामतिरात्रे षोडशीवन्नापि विकल्पः । विषयभेदोपपत्तौ तस्यान्याय्यत्वात् । पौर्णमास्यां भाष्यार्थसंग्रहकारः—अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते । उपोष्या तत्र राका स्यात्सा पूर्णोत्सर्पिलक्षणा । पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते । उपोष्याऽनुमतिस्तत्र सा श्वःपूरितलक्षणा । अथाऽमावास्यायां विशेषः—यदा चतुर्दशीयामं तुरीयमनुपूरयेत् ।

अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते । यज्ञपार्श्वः—अर्धे चतुर्दशी यत्र परे पञ्चदशी भवेत्। चतुर्दश्यवसाने तु पितृयज्ञं तु कारयेत्। हारीतः—यस्यां संध्यागतः सोमो मृणालमिव दृश्यते। अपराह्णे क्षयस्तस्यां पिण्डानां करणं स्मृतं। यदैवैष न पुरस्तान्नपश्चाद्ददृशेथैभ्यो ददातीति श्रुतिः। चन्द्रक्षयकालः—अष्टमेंशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः। अमावास्याष्टमांशे च पुनः किल भवेदणुः। यच्चोक्तं दृश्यमानेऽपि तच्चतुर्दश्यपेक्षया। अमावास्यां प्रतीक्षेद्वा तदन्ते वापि निर्वपेत्। इति। वृद्धवसिष्ठः—इन्दौ निरुप्ते हविषि पुरस्तादुदिते विधौ। यद्वैगुण्यं हुते तस्मिन् पश्चादपि हि तद्भवेदिति। तथा। त्रिमुहूर्ता द्वितीया चेत्प्रतिपद्यापराह्णिकी। अन्वाधानं चतुर्दश्यां परतः सोमदर्शनादिति। तथा—पञ्चमी यत्र संपूर्णा द्वितीया क्षयगामिनी। चरुरिष्टिरमावास्यां भूते कव्यादिकी क्रियेति। तथा—चतुर्दशीचतुर्यामे अमा यत्र न दृश्यते। श्वोभूते प्रतिपद्यत्र भूते कव्यादिकी क्रियेति। तथा—यज्ञकालस्तिथिर्द्वैधे षट्कलो यदि लभ्यते। पर्व तत्रोत्तरं कार्यं हीने पूर्वमुपक्रमेदिति। तथा। पर्वणोंशे तृतीयेऽपि कर्तव्येष्टिर्द्विजातिभिः। द्वितीयासहितं यस्माद्रूपयत्याश्वलायनः। पर्वमध्ये इष्टिपक्षादिकरणेऽपि तत्समापनं प्रतिपदि प्रविष्टायामेव कर्तव्यम्। कालनिर्णयदीपिकायां—पर्वणि त्वपि यजौ तत्पूरणं पक्षताविति। अन्यथात्वे तु प्रतिपद्यप्रविष्टायां यदि त्विष्टिः समाप्यते। पुनः प्रणीय कृत्स्नेष्टिः कर्तव्या साग्निकैर्द्विजैरिति। वृद्धौ तु—वर्धमानाममावास्यां लभेचेदपरेऽहनि। यामांस्त्रीनधिकान्वापि पितृयज्ञस्ततो भवेदिति। इति पर्वनिर्णयः॥ ॥ अत्र पूर्वां पौर्णमासीमुत्तरां वेत्यत्र कात्यायनोक्तौ उपपूर्वस्य भुक्त्यर्थस्य वसतेराधारस्य कर्मत्वाद्द्वितीयोपपत्तिः। उत्तरोपवासपक्षाश्रयणे तु व्रत्याशनसायाशनाऽन्यगारशयनानां रागप्राप्तानां स यदेवाशितमनशितं तदश्नीयादारण्यमेव वाश्नीयादधः शयीतेत्यादिना नियमनात्प्रकृते च तदभावात्तेषां बाधः। पूर्वोपवासपक्षाश्रयणे पुनर्यथा चान्द्रायणमुपवसेदित्यत्र शास्त्रपरिगृहीतनियमवतः परिमाणविशेषावच्छिन्नद्रव्याशनमुपपूर्वस्य वसतेरर्थः। तथा प्रकृतेऽपि मैथुनमांसादिवर्जनयुक्तस्य गृहीताग्नेः सत्यवदनव्रतावैगुण्याय व्रत्याशनं लिङर्थः। पुलस्त्यः—सकृत्पर्वणि सर्पिष्मद्धविष्यं लघु भोजनम्। न सायं नोपवासः स्यात्तैलामिषविवर्जितम्। कात्यायनोऽपि—अपराह्णे व्रतोपायनीयमश्नीतः सर्पिषाऽसुहितौ। असुहितावतृप्तौ क्रियाविशेषणमेतत्। एतच्च पौर्णमास्यामेव न त्वमावास्यायाम्। स वै पौर्णमासेनोपवत्स्यन्नसत्रासुहित इव स्यादिति शतपथे श्रुतत्वात्। तच्च देवेभ्यो यन्न दातव्यं स यदेवाशितमित्याद्युपक्रम्य यस्य वै हविर्न गृह्णाति तदश्नीयादिति श्रुतत्वात् घृतोपसिक्ता मुद्गा भुज्यन्त इति संप्रदायः। व्रत्याहवर्ज्यमाह कात्यायनः—शाकं मांसं मसूरं च चणकं कोरदूषकान्। माषान्मधु परान्नं वर्जयेदौपवसथ्यके। लवणं मधु मांसं च क्षारांशो येन हूयते। उपवासे न भुञ्जीत नच रात्रौ न किंचनेति। तथा। तिलमुद्गादृते सैव्यं सस्ये गोधूमकोद्रवौ। चीनकं देवधान्यं च सर्वशाकं तथैक्षवम्। सज्जीक्षारं यवक्षारं टङ्कणक्षारमेव च। व्रतस्थो वर्जयेन्नित्यं सामुद्रं लवणं तथा। इति। सामुद्रलवणस्य प्रतिषिद्धत्वात्सैन्धवादेरुपादानं केचिदिच्छन्ति। एतच्च व्रत्याशनं वपनपक्षे वपनानन्तरं मांसमैथुने संकल्पपूर्वं परित्यज्य केशश्मश्रु वापयित्वा भुञ्जीत व्रत्यम्। अहनि मांसमैथुने वर्जयेत्केशश्मश्रु वपते वाऽशिखमपराह्णे व्रतोपायनीयमश्नीतः सर्पिषाऽसुहिताविति क्रमस्य दृष्टत्वात्। केचित्तु वपनस्यावश्यकतामाहुः। तदनन्तरं सत्यवदनसंकल्पं कृत्वा रात्रावधः शयनं अग्निसमीपे यजमानस्य। एतावद्व्रत्याहकृत्यम्। अमावास्याचेदनाहिताग्नेरप्येष इत्युक्तत्वाद्वैश्वदेवानन्तरमपराह्णे पिण्डपितृयज्ञः। तत्र विधिः—सव्येन परिस्तरणं होमस्य दैवत्वात्। ततोऽपसव्यकरणम्। नीविकरणम्। अग्नेरुत्तरतोऽपरेण वा दक्षिणाग्राणां पात्राणामासादनम्। स्फ्यं, शूर्पमग्निहोत्रहवणी वा, चरुस्थाली, व्रीहयः, कृष्णाजिनमुलूखलं, मुसलं, श्रपणार्थमुदकं, आज्यं, मेक्षणं, तिलाः समिधः, उदपात्रमवनेजनाद्यर्थं

सकृदाच्छिन्नानि सूत्राणि ऊर्णादशा वा वयस्युत्तरे यजमानलोमानि वा। ततोऽग्नेः प्रतीच्यां स्योपहितमोषधीकरणम् । अत्र सर्वं प्राचीनावीतिना दक्षिणामुखेन कर्तव्यम् । पितॄन् ध्यात्वा शूर्पेऽग्निहोत्रहवण्यां पितृतीर्थेन मुष्टिचतुष्टयग्रहणमथवा स्थाल्यामेव ग्रहणं नाग्निहोत्रहवण्याम् । अस्मिन्पक्षेऽग्निहोत्रहवणीं नासादयेत् । ततोऽग्नेरपरेणासादनम् । अग्नेरुत्तरतः कृष्णाजिनास्तरणमुदग्ग्रीवमुत्तरलोमं, सव्याशून्येनोलूखलनिधानं, व्रीहीनोप्य मुसलमादाय दक्षिणाभिमुखस्य तिष्ठतः पितृतीर्थेनावितुषीभावं कण्डनम् ततः शूर्पे न्युप्य निष्पूय तुषान् पृथक्कृत्वा पुनः कण्डनं सकृत्फलीकरणं स्थाल्यां तण्डुलप्रक्षेपः, सकृत्प्रक्षालनं, द्वितीयोदकेनाधिश्रयणम् अपूर्णे श्रपयित्वाभिघार्योद्वास्याग्नेः पश्चिमत आसादनम् तिष्ठन्समित्त्रयमग्नावाधायोपविश्य सव्यं कृत्वा मेक्षणेन होमः । तत्र मन्त्रः—अग्नये कव्यवाहनाय स्वाहा इदमग्नये कव्यवाहनाय सोमाय पितृमते स्वाहा इदं सोमायपितृमते । ततो मेक्षणमग्नौ प्रक्षिप्याऽपसव्यं कृत्वाग्नेर्दक्षिणतः पश्चाद्वा स्फ्येन दक्षिणाग्रां रेखामपहता इत्युल्लिखेत् । उदकस्पर्शः । उल्मुकं पुरस्तात्करोति येरूपाणीति । उदपात्रमादाय सव्यं जान्वाच्य रेखामूलमध्याग्रेषु पित्रादित्रितयायावनेजनं दद्यात् । अमुकसगोत्र पितः अमुकशर्मन् अवनेनिक्ष्वेति पित्रे एवं पितामहप्रपितामहयोः । तत उपमूलं सकृदाच्छिन्नानि लेखायां कृत्वा यथावनिक्तं पिण्डदानम् अमुकसगोत्र पितः अमुकशर्मन्नेतत्ते इति । एवं पितामहप्रपितामहयोः । अत्र पितर इत्युक्त्वोदङ्ङास्त आतमनादावृत्यामीमदन्तेति जपत्यवनेज्य पूर्ववन्नीवीं विस्रस्य नमो व इति षडञ्जलीन्कृत्वा गृहान्न इति जपति । एतद्व इत्युपास्यति सूत्राणि प्रतिपिण्डमूर्णादशा वा वयस्युत्तरे यजमानलोमानि वोर्जमित्युदपात्रस्था अपो निषिञ्चति पिण्डसन्निधौ । स्थाल्यां पिण्डावधानमवघ्राणमुल्मुकसकृदाच्छिन्नानामग्नौ प्रक्षेपः । अध्वर्युकर्तृकत्वे विशेषः । पितृपदात्पूर्वं यजमानस्येति प्रयोगः यजमानस्य पितरित्येवं, त्यागावघ्राणयोरभावः । अन्यत्प्रकृतिवत् । यजमानपत्नी चेत्पुत्रकामा तदाऽधत्त इतिमन्त्रेणानवघ्रातं मध्यमपिण्डं भक्षयति । जीवत्पितृकस्य होमान्तोऽयमनारम्भो वा । केचित्तु पक्षाद्यङ्गतां पिण्डपितृयज्ञस्येच्छन्ति । तन्न अनङ्गहेतोरङ्गहेतुत्वानुपपत्तेः । इति पिण्डपितृयज्ञः ॥ ॥ ततः पिण्डान्वाहार्यकं श्राद्धमग्नौकरणसहितं श्राद्धकल्पोक्तम् । ततः प्रातः स्थालीपाकमित्यादि सौत्रं पक्षादिकर्म । तत्र प्रथमप्रयोगे पौर्णमास्यां मातृपूजनपूर्वकमाभ्युदयिकं, ततोऽन्वारम्भणीयेष्टिदेवताकश्चरुः, दर्विहोमेषु पौर्णमासधर्मातिदेशात् । तत्र ब्रह्मासनाद्याज्यभागान्ते विशेषः—अग्नाविष्णुभ्यां सरस्वत्यै सरस्वते जुष्टं गृह्णामीति ग्रहणे, प्रोक्षणे त्वाशब्दोऽधिकः । तत आज्यभागानन्तरं स्थालीपाकहोमः । अग्नाविष्णुभ्यां स्वाहा इदमग्नाविष्णुभ्याम् । सरस्वत्यै स्वाहा इदं सरस्वत्यै । सरस्वते स्वाहा इदं सरस्वते । अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते । ततो महाव्याहृत्यादिब्राह्मणभोजनान्तं ततो वैश्वदेवः । प्रथमप्रयोगेऽयं विशेषः पौर्णमास्यां, ततः प्रतिपदि प्रातः सौत्रं स्थालीपाकं श्रपयित्वेत्यादि पक्षादिकर्म । तत्र वैश्वदेवस्येत्यादिसौत्रहोमस्य चरुसाध्यत्वात्स्थालीपाकमित्यत्रैकत्वं न विवक्षितमित्याचार्याः । अन्ये तु स्थालीपाकमित्यत्रैकत्वं विवक्षितमेव । वैश्वदेवश्च प्राक् सिद्ध एवासाद्यः वृषोत्सर्गे पौष्णवदित्याहुः । आचार्यमते तु पौष्णश्चरुः पक्षसम एवेति ध्येयम् । तथाच दक्षिणतो ब्रह्मासनेत्यादि प्रातर्होमानन्तरं परिभाषोक्तविधिना स्थालीपाकौ श्रपयित्वा आज्यभागान्तं कुर्यात् । तत्र विशेषः—आसादने चरुस्थालीद्वयं, ग्रहणे अग्नयेऽग्नीषोमाभ्यामग्नीषोमाभ्यां ब्रह्मणे प्रजापतये विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यां जुष्टं गृह्णामि, अग्नये प्रजापतये विश्वेभ्यो देवेभ्यो जुष्टं गृह्णामीति द्वितीयचरोर्ग्रहणं प्रोक्षणं पूर्ववत् । अन्यत्प्रकृतिवदाज्यभागान्तम् । तत आज्यभागानन्तरं दर्शपौर्णमासदेवताभ्यो हुत्वा द्वन्द्वश्चात्र समासः । द्वन्द्वान्ते श्रूयमाणत्वाद्देवतापदस्य प्रत्येकं संबन्धः । अग्निर्विष्णुरिन्द्राग्नी इत्येताः दर्शदेवताः । सान्नाय्ययाजिनस्तु अग्न्यनन्तरं विष्णुस्थानापन्नावग्नीषोमौ इन्द्राग्निप्रतिनिधिश्चेन्द्रः

दर्शे अग्नये विष्णव इन्द्राग्निभ्यां ब्रह्मण इत्यादिग्रहणादौ प्रयोगः । दीक्षितस्य तु अग्नयेऽग्नीषोमाभ्यामिन्द्राय ब्रह्मणे प्रजापतय इत्यादिप्रयोगः अग्निरग्नीषोमावग्नीषोमौ एताः पौर्णमासदेवताः । ताभ्यो हुत्वा ब्रह्मण इत्यादिसूत्रोक्तदेवताभ्यो जुहोतीत्यर्थः । होमश्चायं स्थालीपाकेन । भानोर्मयूखाः यदा तरूणामग्राणि स्पृशन्ति स होमकालः । दर्शपौर्णमासदेवताभ्य उदक्संस्थमाहुतित्रयं हुत्वा प्रथमाहुतिसंलग्नमाहुतिचतुष्टयं प्राक्संस्थं ब्रह्मण इत्यादिकं जुहुयात् । त्यागस्तु इदमग्नये, इदमग्नीषोमाभ्यां, इदं ब्रह्मणे, इदंप्रजापतये, इदं विश्वेभ्योदेवेभ्यः, इदं द्यावापृथिवीभ्यां । दर्शे तु इदमग्नये इदं विष्णवे इदमिन्द्राग्निभ्याम् । दीक्षितस्य तु इदमग्नये इदमग्नीषोमाभ्याम् इदमिन्द्राय । ततः ब्रह्मण इत्याद्याहुतिचतुष्टयम् । विश्वेभ्यो देवेभ्यो बलिहरणं भूतगृह्येभ्य आकाशाय चेति सूत्रम् । हरणं दानं, तच्चैवं—चरोरुत्तरतः प्राक्संस्थमुदक्संस्थं वा विश्वेभ्यो देवेभ्यो नमः इदं विश्वेभ्यो देवेभ्यः । भूतगृह्येभ्यो नमः इदं भूतगृह्येभ्यः । आकाशाय नमः इदमाकाशाय । समुच्चयार्थश्चकारः । वैश्वदेवस्याग्नौ जुहोत्यग्नये स्वाहा प्रजापतये स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा अग्नये स्विष्टकृते स्वाहेति । द्वितीयाहुतिसंलग्नाः प्राक्संस्थास्तिस्रः । उभयोरुत्तरांशात् गृहीत्वोत्तरार्धे स्विष्टकृद्धोमः । होमत्वप्रतिपत्तयेऽग्निपदं, प्रयोग. पूर्ववत् । वाह्यतः स्त्रीबलिं हरति नमः स्त्रियै नमः पुंसे वयसे नमः शुक्लायकृष्णदन्ताय पापीनां पतये नमो ये मे प्रजामुपलोभयन्ति ग्रामे वसन्त उत वारण्ये तेभ्यो नमोऽस्तु बलिमेभ्यो हरामि स्वस्ति मेऽस्तु प्रजां मे ददत्विति सूत्रम् । अभ्यगाराद्वाह्यतः स्त्र्यादिभ्यो बलिः । जात्याख्यायामेकवचनम् । हरति ददाति । नमःपदारम्भाः पञ्चमन्त्रा इत्येके । चत्वार इत्यन्ये । तन्मते आद्याभ्यामेकः । नमःस्थाने इदंपदाध्याहारेण त्यागाः । प्राञ्च्युदञ्चि कर्माणीति कात्यायनोक्तेः प्राक्संस्थता उदकसंस्थता वा ध्येया । 'शेषमद्भिः प्लाव्य ततो ब्राह्मणभोजनम्' ततः शेषसमाप्त्यनन्तरं कर्मापवर्गान्ते ब्राह्मणस्य भोजनमित्यर्थः । शेषसमाप्तिश्चैवं—महाव्याहृत्यादिप्राजापत्यान्ता नवाहुतयः ततः संस्रवप्राशनं, मार्जनं, पवित्रप्रतिपत्तिः, ब्रह्मणे पूर्णपात्रदानं, सर्वप्रायश्चित्तहोमः, वर्हिर्होमः प्रणीताविमोकः कर्मापवर्गसमित्प्रक्षेपः उत्सर्जनं ब्रह्मणः, उपयमनकुशस्याग्नौ प्रक्षेपः ब्राह्मणभोजनमिति । तदनन्तरं वैश्वदेवो द्वितीयचरुणा आद्यस्याप्लुतत्वात् ॥ ॥ आवृत्तियोग्यानि कर्माणि लिख्यन्ते—सायंप्रातर्होमः पञ्चमहायज्ञाः पक्षादिद्वयं पिण्डपितृयज्ञः अनन्तरं पिण्डान्वाहार्यकं श्राद्धं श्राद्धकल्पविधानेन आग्रयणद्वयम् अष्टकाश्चतस्रः उपाकर्म उत्सर्गश्च, एतानि यावज्जीवं यथाकालमावृत्त्या कर्तव्यानि । श्रवणाकर्मादेः सकृदेव प्रयोगः । तेषामप्यावर्तनमित्यन्ये । द्वादशी कण्डिका ॥ १२ ॥

सा यदि गर्भं न दधीत सिᳫंह्याः श्वेतपुष्प्या उपोष्य पुष्येण मूलमुत्थाप्य चतुर्थेऽहनि स्नातायां निशायामुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायामासिञ्चति । इयमोषधी त्रायमाणा सहमाना सरस्वती अस्या अहं बृहत्याः पुत्रः पितुरिव नाम जग्रभमिति ॥ १ ॥ १३ ॥ ❀ ॥

( कर्कः )—'सा यदि······त्रायमाणेति' । सेति शब्देन या सा व्यूढा सोच्यते यद्यसौ गर्भं न धारयति तर्हि सिᳫंह्याः श्वेतपुष्प्याः सिंहीति रिङ्गणिकोच्यते कण्टालिकेति लोकप्रसिद्धा तस्या उपोष्य पुष्येण नक्षत्रेण मूलमुत्थाप्य चतुर्थेऽहनि स्नातायां रात्रावुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायामासिञ्चतीयमोषधी त्रायमाणेत्यनेन मन्त्रेण ॥ १३ ॥ * ॥ * ॥

( जयरामः )—सा व्यूढा गर्भकामा वा । यदि गर्भं नादधीत न धारयति तदोपचारः प्रोच्यते सिंही कण्टकारिकेति यावत् । तस्याः किंभूतायाः श्वेतपुष्प्याः सितकुसुमायाः मूलं पुष्येण नक्षत्रेण उपोष्य किमप्यभक्षयित्वा उत्थाप्योत्पाट्य चतुर्थेऽहनि स्नाता चतुर्थस्नाता तस्यां दक्षिणस्यां नासिकायामासिञ्चति भर्ता इयमोषधीति मन्त्रेण । मन्त्रमाह इयमोषधीरिति । अस्यार्थः । तत्र प्रजापतिर्बृहती ओषधी आसेचने० । ओषति दहति दोषान् धत्ते गुणानित्योषधी इयं त्रायमाणा यथोक्तप्रयोक्तॄन् रक्षन्ती । सहमाना दोषवेगान् सोढ्वाऽपि नाशयन्तीत्यर्थः । सरस्वती सरति कारणतयाऽनुगच्छतीति सरः समुद्रः तद्वती तत्संबद्धा अतः अस्याः बृहत्याः बहुफलायाः बृंहयति पुत्रादिदानेनेति वा तस्याः प्रभावात् । अहं पितुर्जनकस्य नाम अहमस्य पुत्र इति जग्रभं गृहीतवानस्मि । तथाऽयं पुत्रोऽप्युत्पत्स्यमानोऽहमस्य पुत्र इति मम नाम गृह्णात्विति शेषः ॥ १३ ॥ ॥ ॥

( हरिहरः )—'सा यदि गर्भं न दधीत' सा भार्या यदि चेत् गर्भं न धारयेत् 'सिंह्या'''मासिञ्चति' गर्भधारणोपायमाह—सिंह्याः कण्टकारिकायाः कथंभूतायाः श्वेतपुष्प्याः श्वेतानि पुष्पाणि यस्याः सा श्वेतपुष्पी तस्या उपोष्य उपवासं कृत्वा पुष्येण चन्द्रमसा युक्तेन पुष्यनक्षत्रेण मूलं शिफामुत्थाप्य उद्धृत्य रजोदर्शनाच्चतुर्थेऽहनि स्नातायां भार्यायां रात्रौ उदपेषं यथा भवति तथा तन्मूलं उदकेन पिष्ट्वा द्रवीभावमापाद्येत्यर्थः दक्षिणस्यां नासिकायां दक्षिणे नासारन्ध्रे सिञ्चति प्रक्षिपति भर्ता 'इयमोष''''''भम्' इत्यनेन मन्त्रेण ॥ १३ ॥ ॥

( गदाधरः )—'सा यदि''' जग्रभमिति' सा व्यूढा स्त्री गर्भकामा यदि गर्भं न दधीत न धारयति तदा भर्ता सिंह्याः श्वेतपुष्प्याः सिंहीति रिङ्गणी कण्टकारिकापरपर्याया श्वेतानि पुष्पाणि यस्याः सा श्वेतपुष्पी तस्याः उपोष्य पुष्यनक्षत्रदिनात्पूर्वदिने स्वयमुपवासं कृत्वा पुष्येण मूलमुत्थाप्य पुष्यनक्षत्रदिने पूर्वोक्तायाः कण्टकारिकायाः मूलमुत्पाट्य यत्नेन स्थापयित्वा ऋतुयुक्ता यदा भार्या भवति तदा चतुर्थेऽहनि स्नातायां रात्रौ तन्मूलमुदकेन पिष्ट्वा पेषयित्वा दक्षिणनासिकापुटे आसिञ्चति इयमोषधी त्रायमाणेत्यनेन मन्त्रेण भर्तैव । ततो भर्त्रा भोजनं कार्यमिति गर्गपद्धतौ । मन्त्रार्थः— ओषति दहति दोषान् धत्ते गुणानित्योषधी इयं त्रायमाणा यथोक्तप्रयुक्ता रक्षन्ती सहमाना दोषवेगान् सोढ्वाऽपि नाशयन्तीत्यर्थः । सरति कारणतयाऽनुगच्छति इति सरः समुद्रस्तद्वती तत्संबद्धा अतः अस्या बृहत्याः महत्याः बृंहयति पुत्रादिदानेन वा तस्याः प्रभावाच्चाहं पुत्रः पितुरयमित्यहं नाम जग्रभम् गृह्णीयां लभेयं प्राप्नुयां पुत्रस्य पितेति लोकाः कथयन्ति । सुगमत्वादत्र पदार्थक्रमो नोच्यते । त्रयोदशी कण्डिका ॥ १३ ॥

( विश्व० )—भार्या चेद्गर्भं न धारयेत् तत्रोपायमाह 'सिंह्याः'''मासिंचति' सिंह्याः कण्टकारिकाया लोकप्रसिद्धायाः उपोष्य पुष्यचन्द्रमसोर्योगात्पूर्वदिने उपवासं कृत्वा पुष्येण युक्तश्चन्द्रो यस्मिन् दिने तस्मिन्नाप्लाव्येष्टदेवतां स्मृत्वा पुत्रकामः प्राङ्मुख उपविश्य तस्याः मूलमुत्थाप्य स्वगृहे समानीय रक्षयेत् । ततः रजोदर्शनानन्तरं चतुर्थेऽहनि स्नातायां भार्यायां रात्रावुदपेषं यथा भवति तथा पिष्ट्वा तस्याः मूलमुदकेन द्रवीभूतमापाद्य भार्यायाः दक्षिणे नासारन्ध्रे क्षारयति भर्ता । तत्र मन्त्रमाह 'इयमोषधी त्रायमाणा सहमाना सरस्वती । अस्या अहं बृहत्याः पुत्रः पितुरिव नाम जग्रभमिति' ॥ नच पिण्डाशनसाधनावरुद्ध एतत्साधनान्वयो न विकल्पमन्तरा व्रीहियवयोरिव तथा चोभयत्र कथं शास्त्रार्थतेति वाच्यम् । उद्देश्यतया स्वर्गवदेतत्कृत्यसाध्यत्वात् क्रियाभेदाच्च । अत एव पुत्रोत्पत्तिप्रतिबन्धकदुरितनिवृत्तिरेव कारीरीवदेतत्क्रियासाध्या । अत एव प्रचितदुरितशङ्कया हरिवंशश्रवणादेरपि हेतुत्वमिति । न चैवं क्रियाजन्यापूर्वस्यैव विहितप्रधानजन्यापूर्वतया फलसंपादकाशेषसामग्रीसंपादकतया फलावश्यंभा-

वेनेतरा व्यर्थेति वाच्यम् अप्रचितदुरितस्थलीयपुत्रलाभस्य तथात्वेऽपि प्रचुरतरदुरितस्थलीयपुत्रोत्पत्तौ स्वतन्त्रक्रियाकदम्बकस्य हेतुत्वादिति ॥ त्रयोदशी कण्डिका ॥ १३ ॥

अथ पुꣳसवनम् ॥ १ ॥ पुरा स्पन्दत इति मासे द्वितीये तृतीये वा ॥ २ ॥ यदहः पुꣳसा नक्षत्रेण चन्द्रमा युज्येत तदहरुपवास्याप्लाव्याहते वाससी परिधाप्य न्यग्रोधावरोहाञ्छुङ्गाँश्च निशायामुदपेपं पिष्ट्वा पूर्ववदासेचनꣳ हिरण्यगर्भोऽद्भ्यः संभृत इत्येताभ्याम् ॥ ३ ॥ कुशकण्टकꣳ सोमाꣳशु चैके ॥ ४ ॥ कूर्मपित्तं चोपस्थे कृत्वा स यदि कामयेत वीर्यवान्त्स्यादिति विकृत्यैनमभिमन्त्रयते सुपर्णोऽसीति प्राग्विष्णुक्रमेभ्यः ॥ ५ ॥ १४ ॥

( कर्कः )—' अथ पुꣳ······तृतीये वा ' पुꣳसवनमिति गर्भसंस्कारकर्मणो नामधेयं, तच पुरा गर्भस्पन्दनाद्भवति मासे द्वितीये तृतीये वा । ' यदहः···त्येताभ्याम् ' । यस्मिन्नहनि पुंसा नक्षत्रेण पुनर्वसुपुष्यादिना चन्द्रमसो योगो भवति तदहस्ता स्त्रियमुपवास्य स्नापयित्वा चाहते वाससी परिधाप्य न्यग्रोधावरोहान् न्यग्रोधावलम्बिकान् शुङ्गाँस्तदङ्कुरान् रात्रावुदपेपं पिष्ट्वा पूर्ववद्दक्षिणस्यां नासिकायामासिञ्चति हिरण्यगर्भोऽद्भ्यःसंभृत इत्येताभ्यामृग्भ्याम् ' कुशक···क्रमेभ्यः ' कूर्मपित्तशब्देनोदकशरावमुच्यते तदस्याः स्त्रिया उपस्थे कृत्वा स यदि कामयेत वीर्यवान् गर्भः स्यादिति तदा विकृत्यैनमभिमन्त्रयते सुपर्णोऽसीति प्राग्विष्णुक्रमेभ्यः ॥ १४ ॥

( जयरामः )—अथेति गर्भे धृते, पुंसवनमिति गर्भसंस्कारकर्मणो नामधेयम् । तच स्पन्दते पुरा स्पन्दिष्यते यावत्पुरानिपातयोर्लट् इति भविष्यदर्थे वर्तमानप्रयोगः । पुरा गर्भस्पन्दनाद्भवतीति हेतोः शुद्धे द्वितीये वा तृतीये मासे गर्भाधानात् यदहः यस्मिन्नहनि पुंसा पुष्यादिना नक्षत्रेण चन्द्रमा युक्तो भवति तदहस्तां स्त्रियमुपवास्य अनाशयित्वा आप्लाव्य स्नापयित्वा अहते वाससी परिधाप्य च न्यग्रोधो वटः तस्यावरोहान् अव अधः रोहन्तीति तथा तान् शुङ्गान् ऊर्द्ध्वाङ्कुरान् संनिधानाद्वटस्यैव रात्रौ उदपेपम् सलिलं यथा भवत्येवं पिष्ट्वा पूर्ववद्दक्षिणनासिकायामासिञ्चति । हिरण्यगर्भोऽद्भ्यःसंभृत इत्येताभ्यामृग्भ्याम् । तत्राद्यायाः हिरण्यगर्भः प्रजापतिरुभयोस्त्रिष्टुप् अन्त्यायाः पुरुषो नारायण आदित्यः सेके० कुशकण्टकं कुशमूलम् सोमांशुं सोमलताखण्डं च पिष्यमाणेषु प्रक्षिपन्त्येके एके नेति विकल्पः । काम्यमाह—' कूर्मपित्तम् ' इति । कूर्मपित्तशब्देनोदकयुक्तशरावमुच्यते तदस्या उपस्थे भगे कृत्वा निधाय भर्ता विकृत्या विशिष्टया कृत्या कृतिछन्दस्कया सुपर्णोऽसीत्यादिस्व.पतेत्यन्तया एनं गर्भमभिमन्त्रयते तत् स्पृष्ट्वा मन्त्रं जपतीत्यर्थः विशिष्टत्वं चतुरवसानत्वम् तत्र प्रजापतिः कृतिर्गरुत्मान् मन्त्रणे० विष्णुक्रमेभ्यः विष्णुक्रममन्त्रेभ्यः प्राक् पूर्वं यावद्विकृतेः परिमाणमित्यर्थः । ॥ १४ ॥

( हरिहरः )—' अथ पुꣳसवनम् ' अथावसरप्राप्तं पुंसवनाख्यं गर्भसंस्कारकं कर्म व्याख्यास्यते। ' पुरास्पन्दत इति ' पुरा अग्रे स्पन्दते चलिष्यति । यावत्पुरा निपातयोर्लडिति पुरायोगे भविष्यार्थे वर्तमानप्रयोगः । इति हेतोः । ' मासे द्विती···युज्येत ' गर्भधारणकालात् द्वितीये तृतीये वा मासे यस्मिन्नहनि पुꣳसा पुरुषनाम्ना पुष्यादिनक्षत्रेण उडुना शशी युक्तो भवेत् । ' तदह···धाप्य ' तस्मिन्नहनि उपवास्य भोजनमकारयित्वा भार्यामाप्लाव्य स्नापयित्वा अहते नवे सदशे सकृत्प्रक्षालिते वाससी अन्तरीयोत्तरीये द्वे परिधाप्य परिधानं कारयित्वा। ' न्यग्रोधा···सेचनम् ' न्यग्रोधस्य वटस्य अवरोहान् अवाचीनम् अध-

रोहन्ति जायन्ते इत्यवरोहास्तान् शुङ्गान् तदग्रपल्लवान् मुकुलाकारान् सांनिध्याच्चकारोऽवरोहसमुच्चयार्थः ततश्चोभयं रात्रौ पूर्ववत् गर्भधारणार्थोक्तवत् पिष्ट्वा पूर्ववदेव आसेचनं भर्तुः दक्षिणनासारन्ध्रे। मन्त्रविशेषमाह–'हिरण्य''शुश्चैके' एके आचार्याः न्यग्रोधावरोहशुङ्गेषु पिष्यमाणेषु कुशस्य कण्टकं मूलं सोमांशुं सोमलताखण्डं च प्रक्षिपन्ति तत्पक्षे द्रव्यचतुष्टयपेषणम् । 'कूर्मपि'''क्रमेभ्यः अत्र काम्यमाह स भर्ता यदि कामयेत अयं गर्भः वीर्यवान् शक्तिमान् स्यादितीच्छेत् तदा अस्या भार्यायाः उपस्थे उत्सङ्गे कूर्मपित्तं जलपूर्णशरावं कृत्वा निधाय विकृत्या विकृतिच्छन्दस्कया सुपर्णोऽसीत्यनया ऋचा स्वः पतेत्यन्तया एतं गर्भमभिमन्त्रयते हस्तेन गर्भाशयं स्पृष्ट्वा मन्त्रं जपतीत्यर्थः विष्णुक्रमेभ्यो विष्णुक्रममन्त्रेभ्यः प्राक् पूर्वं यावद्विकृतेः परिमाणमिति सूत्रार्थः ॥ ॥ अथ प्रयोगः । तत्र गर्भाधानप्रभृति द्वितीये तृतीये वा मासे यस्मिन्दिने पुन्नक्षत्रयुक्तश्चन्द्रस्तस्मिन्नहनि गर्भिणीमुपवासं कारयित्वा मातृपूजाभ्युदयिकं विधाय तां स्नापयित्वाऽहते वाससी परिधाप्य रात्रौ न्यग्रोधावरोहाञ्छुङ्गांश्च उदकेन पिष्ट्वा पक्षे कुशकण्टकं सोमांशुं च तन्नासिकाया दक्षिणपुटे आसिञ्चति भर्ता हिरण्यगर्भोऽद्भ्यः संभृत इति ऋग्भ्याम् । स यदीच्छेत् वीर्यवान्स्यादयं गर्भस्तदा तस्याः स्त्रियाः उदकपूर्णं शरावमुपस्थे कृत्वा सुपर्णोऽसीत्यनया विष्णोः क्रमोऽसीत्येतत्प्राक्पठितया विकृत्या ऋचाऽन्तर्गर्भमभिमन्त्रयते पिता । इति प्रयोगः ॥ १४ ॥ ॥ * ॥

( गदाधरः )—'अथ पुंऽ''''''तीये वा' पुंसवनमिति गर्भसंस्कारकर्मणो नामधेयम् । तच्च स्पन्दते पुरा स्पन्दिष्यते चलिष्यति यावत्पुरानिपातयोर्लडिति च भविष्यदर्थे वर्तमानवत्प्रयोगः । पुरा गर्भस्पन्दनात् भवतीति हेतोः शुद्धे द्वितीये वा मासे तृतीये वा मासे गर्भाधानाद्भवति प्रथमे मासे वा पूर्णे भवति द्वितीये वा तृतीये वेति भर्तृयज्ञः । तथा हेमाद्रौ यमः—प्रथमे मासि द्वितीये वा तृतीये वा यदा पुन्नक्षत्रेण चन्द्रमा युक्तः स्यादिति । गर्भसंस्कारत्वात्प्रतिगर्भमावर्तनीयमेतत् । तथा कारिकायाम्—गर्भसंस्कार एवायमिति कर्कस्य संमतिः । अतस्तद्गर्भसंस्काराद्गर्भे गर्भे प्रयुज्यत इति । बह्वृचकारिकायामप्येवम् । कालातिक्रमे स्पन्दितेऽपि कार्यमेव । तदुक्तं कारिकायाम्—एतदेव पुरा गर्भचलनादकृतं यदि । सीमन्तात्प्राग्विधातव्यं स्पन्दितेऽपि बृहस्पतिरिति । 'यदह''इत्येताभ्याम्' मासे द्वितीये तृतीये वा यस्मिन्नहनि पुंसा पुन्नामनक्षत्रेण पुष्यादिना नक्षत्रेण चन्द्रमा युक्तो भवति तदहस्तस्मिन्दिने गर्भिणीमुपवास्यानाशयित्वा आप्लाव्य स्नापयित्वा अहते वाससी परिधाप्य च न्यग्रोधो वटस्तस्यावरोहान् अव अधः रोहन्तीति तथा तान् शुङ्गान् ऊर्ध्वाङ्कुरान्संनिधानाद्वटस्यैव, चकारः समुच्चये हिरण्यगर्भोऽद्भ्यः संभृत इत्येताभ्यामृग्भ्याम् । हिरण्यगर्भोऽद्भ्यः संभृत इत्येताभ्यामासिच्यमाने समुच्चिताभ्यामासेचनं प्राप्नोति तन्मा भूदिति यत्नः क्रियते एताभ्यां पृथग्भूताभ्यां प्रत्यृचमासेचनमिति भर्तृयज्ञः । पुन्नक्षत्राणि च रत्नकोशे दर्शितानि—हस्तो मूलं श्रवणः पुनर्वसुर्मृगशिरः पुष्यमिति । अनुराधाऽपि पुन्नक्षत्रम् । अनुराधान्हविषावर्द्धयन्त इति श्रुतेः । ज्योतिःशास्त्रेऽप्येवम् । 'कुशकण्टकऽ' सोमांऽशुंचैके' कुशकण्टकं कुशमूलं सोमांशुं सोमलताखण्डं च पिष्यमाणेषु न्यग्रोधावरोहशुङ्गेषु प्रक्षिपन्त्येके आचार्याः । अस्मिन्पक्षे द्रव्यचतुष्टयस्य पेषणम्, एकग्रहणाद्विकल्पः । काम्यमाह—'कूर्मपि''''''क्रमेभ्यः' स भर्ता यदि कामयेत अयं गर्भो वीर्यवान् शक्तिमान् भवतु तदा अस्याः स्त्रिया उपस्थे उत्सङ्गे अङ्के उदपूर्णं शरावं निधाय मुक्त्वा विकृत्या विकृतिच्छन्दस्कया ऋचा एनं गर्भमभिमन्त्रयते गर्भिण्या उदरं विकृत्या अनामिकाग्रेण स्पृशन् विलोकयित्वा वा मन्त्रं पठतीत्यर्थः । तदुक्तं कात्यायनेन–स्पृशँस्त्वनामिकाग्रेण कचिदालोकयन्नपि । अनुमन्त्रणीयं सर्वत्र सदैवमनुमन्त्रयेदिति । अभिमन्त्रणानुमन्त्रणयोर्न

कश्चिद्विशेषः। विकृतेरप्रसिद्धत्वादाह सुपर्णोऽसीति प्राग्विष्णुक्रमेभ्यः। सुपर्णोऽसि गरुत्मानित्यारभ्य विष्णुक्रममन्त्रेभ्यः प्राक् पूर्वं यावद्विकृतेः परिमाणमित्यर्थः। इति चतुर्दशी कण्डिका ॥ १४ ॥

अथ पदार्थक्रमः। गर्भमासप्रभृतिद्वितीये तृतीये वा मासि अरिक्तादितिथौ पुष्यादिपुन्नक्षत्रे शुक्रसोमबुधगुरुवासरेषु विष्ट्यादिदोषरहिते दैवज्ञोक्ते काले पुंसवनं कुर्यात्। अत्र नियतकालत्वात् गुरुशुक्रास्तबाल्यवार्द्धक्यमलमासादिष्वपि न दोषः दोषरहितकालालाभे। तद्रहितकाललाभे शुक्रास्तादौ न कार्यम्। कालानियमे तु सीमन्तदिने कार्यम्। उक्ते दिवसे स्वस्तिवाचनग्रहयज्ञाभ्युदयिकानि कृत्वा देशकालौ स्मृत्वाऽस्यां भार्यायामुत्पत्स्यमानगर्भस्य बैजिकगार्भिकदोषपरिहारपुरुषताज्ञानोदयप्रतिरोधिपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुंसवनं करिष्ये इति सङ्कल्पः। ततस्तस्मिन्नहनि गर्भिणीमुपवासं कारयित्वा तां स्नापयित्वाऽहते वाससी परिधाप्य रात्रौ न्यग्रोधावरोहशुङ्गानामुदकेन सह पेषणम्। ततो गर्भिणीमुपवेश्य तदुदकं वस्त्रपावितं दक्षिणस्यां नासायामासिञ्चति हिरण्यगर्भ समवर्त्तताग्रे अद्भ्यः सम्भृत इतिमन्त्राभ्याम्। स यदि कामयेत वीर्यवान् स्यादयं गर्भस्तदाऽस्या उत्सङ्गे उदरे शरावं निधाय सुपर्णोऽसीत्यनेन दिवं गच्छस्वःपतेत्यन्तेन तं गर्भमभिमन्त्रयते। इति पदार्थक्रमः। गर्गमते नात्र विशेषः ॥ १४ ॥ ॥ * ॥

( विश्व० )—एवं गर्भे जाते इदानीं तत्संस्कारकं कर्माह—'अथ पुंसवनम्' उच्यत इति शेषः। केचित्तु गर्भिण्या एव संस्कारकं पुंसवनमित्याहुः ॥ पुरा स्पन्दत इति गर्भचलनात्पूर्वमित्यर्थः। भविष्यदर्थे वर्तमानताप्रयोगः। चलनप्राक्त्वस्यानियतत्वादिदानीं नियतं समयमाह 'मासे द्वितीये तृतीये वा यदहः पुंसा नक्षत्रेण चन्द्रमा युज्येत' गर्भोत्पत्त्यवधिकं मासनिष्ठद्वितीयत्वादि। पुरुषनक्षत्रं पुष्यादि। चलनं तु सप्तमे। तथाच यास्कः—सप्तमे चलनसमर्थो भवति अत एव तत्प्राक्त्वमननुगतम्। ज्योतिःशास्त्रोक्तं शुक्लपक्षादिकमपि माह्यम्। तदहरुपवास्याऽऽप्लाव्याहते वाससी परिधाप्य उपवासस्याहोरात्रसाध्यत्वात्तदुत्तरत्वस्य स्नाने प्रतीयमानत्वात्पूर्वेद्युरुपोषणं ततः पुरुषोडुपरक्तचन्द्राभिसरणाहि वैश्वदेवपूर्वकं मातृश्राद्धं कृत्वा उपोषितां भार्यामाप्लाव्याहते वाससी परिधाप्येत्यर्थः। न्यग्रोधावरोहाञ्छुङ्गांश्च निशायामुदपेषं पिष्ट्वा पूर्ववदासेचनम्। न्यग्रोधो वटः अधोरोहन्तीत्यवरोहाः। षष्ठीतत्पुरुषश्च समासः। तान् पूर्ववदिति गर्भाधानप्रतिबन्धकापनयोक्तो विधिरतिदिश्यते। तेन वटावरोहाञ्छुङ्गान् वटपल्लवाग्राणि सूक्ष्माणि। तदुभयं चकारार्थः। निशायामुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायामासिञ्चतीत्यर्थः। आसेचनमन्त्रावाह हिरण्यगर्भोऽद्भ्यः संभृत इत्येताभ्याम्। 'कुशकण्टकं सोमांशुं चैके' अवरोहपल्लवैः सहैतयोरपि पेषणमिच्छन्त्येके इत्यर्थः। वीर्यवत्पुत्रकामिकार्यमाह—'कूर्मपित्तं चोपस्थे कृत्वा स यदि कामयेत वीर्यवान्स्यादिति विकृत्यैनमभिमन्त्रयते सुपर्णोऽसीति प्राग्विष्णुक्रमेभ्यः' कूर्मपृष्ठनिर्मितं पात्रं कूर्मपित्तम्। उदकपूर्णशरावमित्यन्ये। स भर्ता यदि कामयेत अयं गर्भः शक्तिमान्स्यात् तदा भार्यायाः उत्सङ्गे कूर्मपित्तं निधाय विकृतिछन्दस्कया सुपर्णोऽसीत्यनया प्राग्विष्णुक्रमेभ्यः स्वः पतेत्यन्तया उदरस्थं गर्भमभिमन्त्रयते सगर्भमुदरं विलोक्य पठतीत्यर्थः ॥ ॥ चतुर्दशी कण्डिका ॥ १४ ॥ ॥ * ॥

अथ सीमन्तोन्नयनम् ॥ १ ॥ पुꣳसवनवत् ॥ २ ॥ प्रथमगर्भे मासे षष्ठेऽष्टमे वा ॥ ३ ॥ तिलमुद्गमिश्रꣳ स्थालीपाकꣳ श्रपयित्वा प्रजापतेर्हुत्वा पश्चादग्नेर्भद्रपीठ उपविष्टाया युग्मेन सटालुग्रप्सेनौदुम्बरेण त्रिभिश्च दर्भपिञ्जूलैस्त्र्येण्या शलल्या वीरतरशङ्कुना पूर्णचात्रेण च सीमन्तमूर्ध्वं विनयति

भूर्भुवः स्वरिति ॥ ४ ॥ प्रतिमहाव्याहृतिभिर्वा ॥ ५ ॥ त्रिवृतमाबध्नाति । अयमूर्जावतो वृक्ष उर्जीव फलिनी भवेति ॥ ६ ॥ अथाह वीणागाथिनौ राजानꣳ संगायेतां यो वाऽप्यन्यो वीरतर इति ॥ ७ ॥ नियुक्तामप्येके गाथामुपोदाहरन्ति । सोम एव नो राजेमा मानुषीः प्रजाः । अविमुक्तचक्र आसीरंस्तीरे तुभ्यमसाविति यां नदीमुपावसिता भवति तस्या नाम गृह्णाति॥८॥ ततो ब्राह्मणभोजनम् ॥ ९ ॥ १५ ॥ ॥ ❀ ॥

( कर्कः )—' अथ सीमन्तोन्नयनम् ' व्याख्यास्यत इति सूत्रशेषः । सीमन्तोन्नयनमिति संस्कारः स च गर्भस्य तदभावेऽभाव इति अतश्च प्रतिगर्भं क्रिया । ' पुꣳसवनवदिति ' यदहः पुंसा नक्षत्रेण चन्द्रमसो योगस्तदहरुपवासस्याप्लाव्याहृते वाससी परिधाप्येति च भवति न सर्वं लभ्यते । ' प्रथम······ष्टमे वा ' द्वितीयादिषु गर्भेष्वनियमः । अपरे तु वर्णयन्ति सीमन्तोन्नयनं प्रथमगर्भ एवेति । अस्मिन्व्याख्याने द्वितीयादीनां गर्भाणां तत्संस्कारलोपः प्राप्नोति तस्मान्नैतदिष्यते । ' तिलमुद्ग······स्वरिति' एतदन्तं सूत्रम् । तिलमुद्गानां स्थालीपाके मिश्रणमात्रं न तत्प्राधान्यं मिश्रणोपदेशात् । तेनैव स्थालीपाकेन प्राजापत्यो होमः । स चाज्यभागमहाव्याहृत्यन्तराले । तत एव स्विष्टकृत् प्राङ्महाव्याहृतिभ्यः स्विष्टकृदित्युक्तत्वात् । 'पश्चादग्नेर्भद्रपीठ ' इति । पश्चादग्नेर्भद्रपीठ इत्येवमाद्यन्ते भवति आगन्तुकत्वादन्ते निवेशः । भद्रपीठं मृदुपीठं तत्रोपविष्टायाः स्त्रिया युग्मेन सटालुग्रप्सेनौदुम्बरेण फलस्तवकेन त्रिभिश्च दर्भपिञ्जूलैस्त्र्येण्या शलल्या च वीरतरशङ्कुना पूर्णचात्रेण च सीमन्तमूर्ध्वं विनयति भूर्भुवः स्वरित्यनेन मन्त्रेण । विनयामीत्यध्याहारः साकाङ्क्षत्वात् । ' प्रतिमहाव्याहृतिभिर्वा ' विनयनम् । वाशब्दो विकल्पार्थः । ' त्रिवृत······भवेति ' त्रिवृतदेशं प्रतिवेण्याख्यं तस्मिन्नेवान्याबध्नाति अयमूर्जावतो वृक्ष इत्यनेन मन्त्रेण । अथाह ' वीणागा······रतर इति ' ततश्च तौ राजसंबधि सोत्साहौ गायतः यो वाऽयन्यः कश्चिद्वीरतरस्तमिति । विकल्पोऽयम् । ' नियुक्ता····· जेमा इति ' । एके आचार्या एनां गाथामुपोदाहरन्ति एके नेति विकल्पः । असाविति च नामादेशः । ' यां नदीमुपावसिता भवति तस्या नाम गृह्णाति । ततो ब्राह्मणभोजनम् ' ॥ ❀ ॥ १५ ॥ ❀ ॥

( जयरामः )—' अथ सीमन्तोन्नयनं ' व्याख्यास्यत इति सूत्रशेषः । सीमन्तोन्नयनमिति संस्कारः । स च गर्भस्य तद्भावे भवति तदभावे चाभाव इति । अत एव प्रतिगर्भं क्रियत इति केचित् । ' पुंसवनवदिति ' चन्द्रयुक्तपुन्नक्षत्रे उपवासाप्लावनाहतवासःपरिधापनान्येव भवन्ति नतु सर्वम् । तच्च प्रथमगर्भे षष्ठेऽष्टमे वा मासि द्वितीयादिष्वनियमः । अपरे तु प्रथम एव गर्भे इत्याहुः । नैतत् द्वितीयादिगर्भाणां तत्संस्कारलोपापत्तेः । ' तिलेति ' तिलमुद्गयोः स्थालीपाके मिश्रणमात्रं न तत्प्राधान्यम् मिश्रणोपदेशात् तेनैव स्थालीपाकेनाज्यभागमहाव्याहृत्यन्तराले प्राजापत्यस्विष्टकृतौ हुत्वा प्राङ्महाव्याहृतिभ्यः स्विष्टकृदित्युक्तत्वात् । पश्चादग्नेरित्येवमादिसर्वस्यागन्तुत्वात् प्राशनान्ते भवति । भद्रपीठं मृदुपीठं तत्रोपविष्टायाः स्त्रियाः त्र्येण्या त्रिःश्वेता वीरतरशङ्कुः शरेषी पूर्णं सूत्रेण चात्र तर्कुः युग्मेन द्व्यादियुगलसङ्ख्यान्वितेन सटालुग्रप्सेन आमफलैकस्तवकनि-

---

१ आश्वत्थेन शङ्कुना ।

बद्धसर्वसमुदायेन विनयनं भूर्भुवःस्वरिति मन्त्रेण केशविभजनं सकृत् । विनयामीत्यध्याहारः साकाङ्क्षत्वात् । प्रतिमहाव्याहृतिभिर्वा विनयनम् । एवं विकल्पः । अथ मन्त्रार्थः । सर्वत्र प्रजापतिर्गायत्री उष्णिगनुष्टुभः अग्निवायुसूर्या विनयने० । भूरादिलोकान् तत्सुखं च तुभ्यं विनयामि प्रापयामीति । 'त्रिवृतमिति' त्रिभिर्वृत्यते ग्रथ्यते इति त्रिवृत् वेणी तां प्रति तत्रैवेत्यर्थः औदुम्बरादिपुञ्जमाबध्नाति भर्ता अयमूर्जावत इति मन्त्रेण । अस्यार्थः तत्र प्रजापतिर्यजुः फलिनी बन्धने० । हे सीमन्तिनि यतोऽयमूर्जावान् वृक्ष इति शेषः अस्य चोर्जावतो वृक्षस्य ऊर्जीव सफलशाखेव त्वं फलिनी भव अथेति । वेणीबन्धनानन्तरं वीणागाथिनौ वीणां गृहीत्वा गाथागायिनौ प्रति भर्ताऽऽह किं भवन्तौ राजानम् अन्यो वा यः कश्चिद्वीरतरः अतिशूरः तं संप्रगायेतामिति आत्मनेपदमार्षम् । एवं च गेये विकल्पः । 'नियुक्तामिति' एके आचार्या नियुक्तां निगमविहितां गाथां मन्त्रम् उपोदाहरन्ति समीपे गायन्ति एके नेति विकल्पः । अपिः समुच्चयार्थः । ततश्च गाथागानपक्षे द्वयम् । तामाह 'सोम एवेति' अस्यार्थः तत्र प्रजापतिर्गायत्री सोमो गाने० सोमश्चन्द्र एव नोऽस्माकं प्रजानां राजा प्रभुः अत इमाः प्रजाः मानुषीर्मानुष्यः सौम्या. हे गङ्गादिनद्यः तुभ्यं तव सोमरूपायास्तीरे आसीरन् त्वामाश्रित्य स्थिताः । किंभूते तीरे अविमुक्तचक्रे अनुल्लङ्घितशास्त्रे अतो भवद्भ्यां पातव्या इति शेषः 'असाविति' सीमन्तिनी यां नदीमाश्रिता भवति तन्नामादेशः ॥ * ॥ १५ ॥ * ॥

( हरिहरः )—'अथ सीम······वनवत्' । अथ पुंसवनानन्तरं क्रमप्राप्तं सीमन्तोन्नयनं गर्भसंस्कारकं कर्म व्याख्यास्यते । तच्च पुंसवनवत् पुन्नक्षत्रे भवति । 'प्रथम······ऽष्टमे वा' आद्यगर्भे गर्भाधानप्रभृतिषष्ठेऽष्टमे वा मासे नियमेन कुर्यात् । गर्भान्तरेष्वनियम इति कर्कोपाध्यायः । अन्ये तु प्रथमगर्भ एवेति । तथाचाश्वालायनगृह्यपरिशिष्टे प्रथमे गर्भे सीमन्तोन्नयनसंस्कारो गर्भमात्रसंस्कार इति । सकृत्संस्कृतसंस्काराः सीमन्तेन द्विजस्त्रियः । यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेदिति हारीतो देवलश्च सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता । उपवासाप्लावनाहतवासोयुगपरिधापनानि व्रतिना गृह्यन्ते । 'तिलमु······पतेर्हुत्वा' तत्र विशेषमाह तिलैर्मुद्गैर्मिश्रस्तिलमुद्गमिश्रस्तं स्थालीपाकमोदनं चरुं श्रपयित्वा आज्यभागान्ते प्रजापतये स्वाहेत्येकामाहुतिं हुत्वा स्विष्टकृदादि प्राशनान्तं विदध्यात् । 'पश्चाद······ष्टायाम्' । अग्नेः पश्चिमतः भर्तुर्दक्षिणतः मृद्वासने आसीनायां गर्भिण्यां सत्यां 'युग्मेन······व्याहृतिभिर्वा' ततो भर्ता औदुम्बरेण उदुम्बरवृक्षोद्भवेन युग्मेन द्व्यादियुग्मफलवता सटालुग्रप्सेन अपक्वफलैकस्तबकनिबद्धेन त्रिभिश्च दर्भपिञ्जुलैस्त्रिभिर्दर्भपवित्रैश्च त्र्येण्या त्रिषु स्थानेषु श्वेता त्र्येणी तया त्र्येण्या शलल्या शल्यकाख्यपक्षकण्टकेन वीरतरशङ्कुना शरेषीकया आश्वत्थेन वा शङ्कुना पूर्णचात्रेण च सूत्रेण पूर्णं चात्रं सूत्रकर्तनसाधनं तर्कुरिति यावत् । तेन लोहकीलकेन च चकारः सर्वसमुच्चयार्थः । अतश्चौदुम्बरयुग्मादिभिः सर्वैः पुञ्जीकृतैः सीमन्तं स्त्रिया उर्ध्वं विनयति पृथक्करोति ललाटान्तरमारभ्य केशान् द्विधा करोति भूर्भुवः स्वर्विनयामि इत्येतावता मन्त्रेण सकृदेव । पक्षान्तरमाह वा इति । प्रतिमहाव्याहृतिभिः विनयति । ततश्च भूर्विनयामि भुवर्विनयामि स्वर्विनयामि इत्येवं त्रिर्विनयनं भवति अत्र व्याहृतिमन्त्रपदानामाख्यातपदं विना वाक्यस्यासंपूर्णत्वात् आख्यातपदाध्याहारः कर्तव्यः । तत्र विधियुक्तस्य मन्त्रभावः स्यादिति न्यायात् विनयतीति विधिपदं विपरिणम्य विनयामीत्यध्याह्रियते । 'त्रिवृतमाबध्नाति' त्रिवृतं वेणीं प्रति आबध्नाति पुञ्जीकृतमौदुम्बरादिपञ्चकं वेण्यां नियुनक्तीत्यर्थः । 'अयमू······भवेति' अनेन मन्त्रेण । 'अथाह······इति' अथौदुम्बरादिपञ्चकस्य वेणीबन्धनानन्तरमाह ब्रवीति किं हे वीणागाथिनौ राजानं भूपतिं संगायेताम् राजव-

र्णनसंबद्धं ध्रुवादिरूपकं सम्यग्गायेतां युवामथवा योऽन्योऽपि राजव्यतिरिक्तो वीरतरः प्रकृष्टो वीरः शूरस्तं संगायेतामित्यनुषङ्गः इत्याह ब्रवीति । 'नियुक्ता......हरन्ति' एके आचार्याः नियुक्तां गाने विहितां गाथां मन्त्रमुपोदाहरन्ति पठन्ति अपिः समुच्चयार्थः तत्पक्षे राजवीरतरयोरन्यतरगानं गाथागानं च समुच्चितं भवति । पक्षान्तरे राजवीरतरयोरन्यतरगानं गाथागानं वा तां गाथामाह 'सोमए...तुभ्यम्' इत्यन्ताम् । पद्धतिकारपक्षे राजवीरतरगाथानां एकतमस्यैव गानं तत्पक्षे नियुक्तामपीत्यपिशब्दो विवक्षितार्थः स्यात् । 'असावि......गृह्णाति' । ततो गर्भिणी यां नदीमुप समीपे आवसिता स्थिता भवति तस्या नद्या असाविति गङ्गा यमुना इत्येवं प्रथमान्तं नाम गृह्णाति । 'ततोब्राह्मणभोजनम्' इत्युक्तार्थमिति सूत्रव्याख्या ॥ ॥ अथ सीमन्तोन्नयनप्रयोगः । तत्र प्रथमे गर्भे षष्ठेऽष्टमे वा मासि पुन्नक्षत्रे मातृपूजां वृद्धिश्राद्धं च कृत्वा वहिःशालायां पञ्चभूसंस्कारान्कृत्वा लौकिकाग्निमुपसमाधाय ब्रह्मोपवेशनाद्याज्यभागान्तं विदध्यात् । तत्र विशेषः—पात्रासादने आज्यानन्तरं तण्डुलतिलमुद्गानां क्रमेण पृथगासादनम् । उपकल्पनीयानि मृदुपीठं युग्मान्यौदुम्बरफलानि एकस्तवकनिबद्धानि त्रयो दर्भपिञ्जुलाः त्र्येणी शलली वीरतरशङ्कुः शरेषिका आश्वत्थो वा शङ्कुः पूर्णचात्रं वीणागाथिनौ चेति आज्यमधिश्रित्य चरुस्थाल्यां मुद्गान् प्रक्षिप्याधिश्रित्य ईषच्छृतेषु मुद्गेषु तिलतण्डुलप्रक्षेपं कृत्वा पर्यग्निकरणं कुर्यात् । तत आज्यभागान्ते स्थालीपाकेन प्रजापतये स्वाहेति हुत्वा इदं प्रजापतय इति त्यागं विधाय स्थालीपाकेनोत्तरार्द्धात्स्विष्टकृदाहुतिं हुत्वा महाव्याहृत्यादिप्राजापत्यादिप्राजापत्यान्ता नवाहुतीर्हुत्वा संस्रवं प्राश्य पूर्णपात्रवरयोरन्यतरं ब्रह्मणे दत्त्वा पश्चादग्नेर्भद्रपीठं स्थापयित्वा गर्भिण्यां योषिति स्नातायां परिहिताहतवासोयुग्मायां भद्रपीठ उपविष्टायां युग्मेन सटालुग्रप्सेनौदुम्बरेण त्रिभिश्च दर्भपिञ्जुलैस्त्र्येण्या शलल्या वीरतरशङ्कुना पूर्णचात्रेण चेति सर्वैः पुञ्जीकृतैः स्त्रियाः सीमन्तं भूर्भुवस्स्वर्विनयामीति ऊर्ध्वं विनयति मन्त्रेण सकृत् । यद्वा भूर्विनयामि भुवर्विनयामि स्वर्विनयामि इति त्रिर्विनयति ततो विनयनसाधनमौदुम्बरादिपञ्चकं स्त्रिया वेण्यां बध्नाति अयमूर्जावतो वृक्ष उर्जीव फलिनी भवेति मन्त्रेण । अथ- वीणागाथिनौ राजानं संगायेतामिति प्रैषं ददाति, अथवा अमुकं वीरतरं संगायेतामिति ततस्तौ यद्वानाय प्रेषितौ तं गायतः । अथवा वीणागाथिनौ सोमं राजानं संगायेतामिति प्रेषितौ सोम एव नो राजेमामानुषीः प्रजाः अविमुक्तचक्र आसीरंस्तीरे तुभ्यमित्यन्तां गाथां वीणागाथिनौ गायतः । इति विकल्पः पक्षः । समुच्चयपक्षे राजानमन्यं वीरतरं वा सोमं राजानं च संगायेतामिति प्रेषितौ उभयं गायतः असौस्थाने समीपावस्थिताया गङ्गाप्रमुखाया नद्याः संबुद्ध्यन्तं गङ्गेत्यादिनाम गृह्णाति गर्भिण्येव ततो ब्राह्मणभोजनं ददाति । अत्र प्रथमगर्भे इतिवचनात् स्त्रीसंस्कारकर्मत्वाच्च न प्रतिगर्भं सीमन्तोन्नयनं, यतः सकृत्संस्कृतसंस्काराः सीमन्तेन द्विजस्त्रियः । यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत्' इति स्मरणात् न प्रतिगर्भं सीमन्तोन्नयनं, पुंसवनं तु दृष्टार्थत्वाद्भाष्यकारमते प्रतिगर्भं भवति ॥*॥

(गदाधरः)—'अथ सीमन्तोन्नयनम्' व्याख्यास्यत इति सूत्रशेषः । अथ सीमन्तोन्नयनमिति वक्ष्यमाणसंस्कारकर्मणो नामधेयम् । गर्भसद्भावे क्रियमाणत्वात्तदभावे चाभावाद्गर्भसंस्कारोऽयमिति कर्कोपाध्यायाः । अतश्च तेषां मते प्रतिगर्भं क्रिया । तथाच हेमाद्रौ कारिकायां च विष्णुवचनं—सीमन्तोन्नयनं कर्म न स्त्रीसंस्कार इष्यते । कैश्चित्तु गर्भसंस्काराद्गर्भे गर्भे प्रयुज्यत इति । स्त्रीसंस्कार एवायमित्यन्ये । तथाच देवलः—सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृतेति । हारीतोऽपि—सकृत्संस्कृतसंस्काराः सीमन्तेन द्विजस्त्रियः । यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेदिति । 'पुंसवनवत्' अनेन यदहः पुंसा नक्षत्रेण चन्द्रमसो योगस्तदहरुपवास्याप्लाव्याहते वाससी परिधाप्येति लभ्यते नतु सर्वमिति कर्कः । पुंसवनवदिति यदहः पुंसा नक्षत्रेण चन्द्रमा यु-

ज्येत तदहरित्यर्थ इति भर्तृयज्ञः । प्रथमगर्भे आद्यगर्भे भवति । आपस्तम्बः—सीमन्तोन्नयनं प्रथमे गर्भे चतुर्थे मासीति । शाङ्खायनगृह्ये—सप्तमे मासि प्रथमगर्भे सीमन्तोन्नयनमिति । आश्वलायनगृह्यपरिशिष्टे—प्रथमे गर्भे सीमन्तोन्नयनसंस्कारो गर्भमात्रसंस्कार इति । कर्कोपाध्यायैस्तु प्रथमगर्भे मासे षष्ठेऽष्टमे वेति सूत्रं योजयित्वा द्वितीयादिष्वनियम इत्युक्तम् । ननु प्रथमगर्भ एव सीमन्तोन्नयनसंस्कारे क्रियमाणे द्वितीयादिगर्भाणां तत्संस्कारलोपः स्यादिति चेत् मैवम् । यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेदिति हारीतवचनादाद्यगर्भे संस्कारे कृते सर्वगर्भाणां संस्कार इति न संस्कारलोपः अकृतसीमन्तायाः प्रसवे सत्यव्रतोक्तो विशेषः—स्त्री यदाऽकृतसीमन्ता प्रसवेत्तु कथंचन । गृहीतपुत्रा विधिवत्पुनः संस्कारमर्हतीति । 'मासे षष्ठेऽष्टमे वा' सीमन्तोन्नयनं गर्भधारणात् षष्ठे मासि अष्टमे वा भवति । 'तिलमुद्ग···स्वरिति' । तिलमुद्गानां स्थालीपाके मिश्रणमात्रं न तत्प्राधान्यं मिश्रणोपदेशात् । प्रयोजनं चान्तराये उपेक्षैव । त्यागोऽपि तद्व्यतिरिक्तस्यैव तिलैर्मुद्गैर्मिश्रस्तिलमुद्गमिश्रस्तं चरु श्रपयित्वा आज्यभागानन्तरं प्रजापतये स्थालीपाकेनैकामाहुतिं हुत्वा स्थालीपाकेनैव स्विष्टकृदाहुतिं हुत्वा दक्षिणादानान्तं कृत्वा पश्चादग्नेर्भद्रपीठ उपविष्टायामग्नेः पश्चिमतः भर्तुर्दक्षिणतः मृदुपीठे आसीनायां गर्भिण्यां सत्यां युग्मेनौदुम्बरवृक्षोद्भवेन द्व्यादियुग्मफलवता सटालुग्रप्सेन अपक्वफलस्तवकनिबद्धेन सटालुमिति अपक्वफलानामाख्या ग्रप्सः स्तबकसंघातः युग्मानि एकस्तवकबद्धानि औदुम्बरफलानि तेन त्रिभिर्दर्भपवित्रैश्च त्र्येण्या शलल्या त्रिषु स्थानेषु श्वेता त्र्येणी तया त्र्येण्या शलल्या शलल्याख्यपक्षिकण्टकेन वीरतरशङ्कुना आश्वत्थेन शङ्कुना पूर्णचात्रेण च सूत्रकर्तनसाधनभूतो लोहकीलस्तर्कुरपरपर्यायश्चात्रं, तेन सूत्रपूर्णेन च चकार औदुम्बरफलस्तवकादिद्रव्यपञ्चकसमुच्चयार्थः अतो द्रव्यपञ्चकेन स्त्रियाः सीमन्तमूर्ध्वं विनयति केशललाटयोः संधिमारभ्य उर्ध्वं केशान् पृथक्करोति द्विधा करोति भूर्भुवस्स्वरिति मन्त्रेण । सीमन्तशब्दो व्याख्यातोऽभिधानग्रन्थे—सीमन्तः कथ्यते स्त्रीणां केशमध्ये तु पद्धतिरिति । साकाङ्क्षत्वाद्विनयामीत्यध्याहारः पश्चादग्नेर्भद्रपीठ इत्येवमादि कर्मान्ते भवति आगन्तुकत्वात् । भद्रपीठशब्दो गोमयपीठे चतुरस्रे प्रसिद्ध इति भर्तृयज्ञः । वीरतरशङ्कुः शर इति जयरामः । अश्वत्थशङ्कुः शरेषीकावेति हरिहरकारिकाकारौ । अश्वत्थशङ्कुरिति कर्कः खादिरः शङ्कुरित्यपर इति गर्गपद्धतौ । 'प्रतिमहाव्याहृतिभिर्वा' विनयनं सीमन्तस्य कार्यमित्यर्थः । वा शब्दो विकल्पार्थः । अत्रापि चाध्याहारः । तत्रैवम्—भूः विनयामि भुवः विनयामि स्वः विनयामि । त्रिवृत······नी भवेति' त्रिभिर्वर्त्यते ग्रथ्यते इति त्रिवृत् वेणी तां प्रति तत्रैव औदुम्बरादिपुञ्जमाबध्नाति भर्ता अयमूर्जावत इति मन्त्रेण । मन्त्रार्थः—हे सीमन्तिनि यतोऽयमूर्जावान् वृक्ष इति शेषः अस्य चोर्जावतो वृक्षस्योर्जीव सफलशाखेव फलिनी भव । 'अथाह······रतर इति' । अथ वेण्यां बन्धनानन्तरं वीणां गृहीत्वा गाथागायनौ प्रति कर्ता वीणागाथिनौ राजानः संगायेतामिति प्रैषमाह—ततश्च तौ ब्राह्मणावेव वीणागाथिनौ राजसंबन्धि सोत्साहौ गायतः । अन्यो वा यः कश्चिद्वीरतर अतिशूरो नलादिस्तं सम्यग्गायेतामिति । आत्मनेपदमार्षम् । एवं च गेये विकल्पः । नियुक्ताम···विति' एके आचार्या नियुक्तां गाने विहितां गाथां मन्त्रं सोम एव नो राजेति उपोदाहरन्ति समीपे गायन्ति । एके नेति अतश्च विकल्पः । अपिः समुच्चयार्थः । ततो गाथागानपक्षे राजसंबन्धि वीरतरसंबन्धि वा गानं गाथागानं च द्वयं भवति । केषाचिन्मते राजवीरतरयोरन्यतरगानं गाथागानं वा । पद्धतिकारमते राजवीरतरगाथानामन्यतमस्य गानम् । असावित्यत्र नामादेशः गाथागानमपि वीणागाथिनौ कुरुतः । मन्त्रार्थः—सोमश्चन्द्रः नोऽस्माकं प्रजानां राजा प्रभुः अत इमाः प्रजाः मानुषीर्मानुष्यः सौम्याः हे गङ्गादिनदि तुभ्यं तव सोमरूपायास्तीरे आसीरन् त्वामाश्रित्य स्थिताः । किंभूते तीरे अविमुक्तचक्रे अनुल्लङ्घितशासे अतो भवद्भ्यां पातव्या इत्यर्थः । 'यां

नदी······गृह्णाति ' असावित्यत्र च सीमन्तिनी यां नदीमुप समीपे आवसिता स्थिता भवति तस्या नद्याः गाथागानकर्ता गङ्गे यमुने इत्येवं नाम गृह्णाति । ' ततो ब्राह्मणभोजनम् ' व्याख्यातं चैतत् । अत्र भोजने प्रायश्चित्तमुक्तं पाराशरमाधवीये धौम्येन—ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा । जातकर्मनवश्राद्धे भुक्त्वा चान्द्रायणं चरेत् । इदं च कर्माङ्गब्राह्मणभोजनविषयं नत्विष्टकुटुम्ब्यादिभोजनविषयमिति मुरारिमिश्राः । इति पञ्चदशी कण्डिका ॥ १५ ॥ ॥ * ॥

सीमन्तोन्नयने पदार्थक्रमः । तच्च गर्भमासापेक्षया षष्ठेऽष्टमे वा मासि असंभवे यावत्प्रसवं शुक्लपक्षे पुनर्वसुपुष्याभिजिद्धस्तप्रोष्ठपदानुराधाऽश्विनीमूलश्रवणरेवतीरोहिणीमृगशिरःसंज्ञकानां पुन्नक्षत्राणां चतुर्धा विभक्तानां मध्यमपादद्वये षष्ठ्यष्टमीद्वादशीचतुर्थीनवमीचतुर्दश्यमावास्याव्यतिरिक्ततिथौ सोमबुधबृहस्पतिशुक्रवारेषु चन्द्रानुकूल्ये विष्ट्यादिदोषाभावे शुभलग्नादौ कार्यम् । अत्राप्यधिकमासगुरुशुक्रास्तादीनां न दोषः, कालान्तरासंभवे पूर्ववन्नियतकालत्वात् । पुण्याहवाचनग्रहयज्ञाभ्युदयिकानि कृत्वा मङ्गलस्नातां परिहितप्रावृताहतवासोयुगलामलङ्कृतां पत्नीं स्वदक्षिणत उपवेश्य देशकालौ स्मृत्वा तनुरुधिरप्रियालक्ष्मीभूतराक्षसीगणदूरनिरसनक्षमसकलसौभाग्यनिदानभूतमहालक्ष्मीसमावेशनद्वारा प्रतिगर्भं बीजगर्भसमुद्भवैनोनिबर्हणजनकातिशयद्वारा च श्रीपरमेश्वरप्रीत्यर्थं स्त्रीसंस्काररूपं सीमन्तोन्नयनाख्यं कर्म करिष्य इति सङ्कल्पं कुर्यात् । ततो बहिःशालाया पञ्च भूसंस्कारान्कृत्वाऽग्नेः स्थापनम् । वैकल्पिकावधारणम् । प्रतिमहाव्याहृतिभिर्विनयनम् । वीणतरस्य गानम् । ततो ब्रह्मासनाद्याज्यभागान्ते विशेषः । उपकल्पनीयानि । तिलाः मुद्गाः मृदुपीठं युग्मान्यौदुम्बरफलान्येकस्तवकनिबद्धानि । त्रीणि कुशपिञ्जुलानि । त्र्येणी शलली । वीरतरशङ्कुः । पूर्णचात्रम् । वीणागाथिनौ त्रैवर्णिकौ चेति । ब्राह्मणौ वीणागाथिनाविति प्रयोगरत्ने । नियुक्तगाथागानस्य विहितत्वाच्छूद्रस्य च तत्रानधिकारात्त्रैवर्णिकाविति वयम् । अधिश्रयणकाले स्थाल्यां मुद्गान्प्रक्षिप्याधिश्रित्य ईषच्छृतेषु मुद्गेषु तिलतण्डुलप्रक्षेपं कृत्वा पर्यग्निकरणादि कार्यम् । आज्यभागान्ते स्थालीपाकेन प्रजापतये स्वाहेति होमः इदं प्रजाप० । ततः स्थालीपाकेन स्विष्टकृद्धोमः । ततो भूराद्या नवाहुतयः । ततः प्राशनादिदक्षिणान्तम् । ततोऽग्नेः पश्चान्मद्रपीठ उपविष्टाया गर्भिण्या औदुम्बरादिभिः पूर्णचात्रान्तैः फलीकृतैः सीमन्तमूर्ध्वं विनयति भूर्भुवःस्वर्विनयामि प्रतिमहाव्याहृतिभिर्वा विनयनम् । भूः विनयामि । भुवः विनयामि । स्वः विनयामि । ततो भर्ता अयमूर्जावत इति औदुम्बरादिपञ्चकं तस्याः वेण्यां बध्नाति । वीणागाथिनौ राजानः सङ्गायेतामिति प्रैषः । ततस्त्रैवर्णिकौ वीणागाथिनौ राजवर्णनसम्बन्धि गानं कुरुतः । अथवाऽन्यो नलादिस्तस्य गानम् । तस्मिन्पक्षे नलादिकं संगायेतामिति प्रैष इति गर्गपद्धतौ । नियुक्तगाथागानं वा । तत्र सामगानापरिज्ञाने मन्त्रमात्रं पठेतामिति प्रयोगरत्ने । तस्मिन्पक्षे प्रैषाभाव इति गर्गपद्धतौ । नियुक्तगाथागानेऽपि प्रैषः सोमः राजानः संगायेतामिति हरिहरः । नद्या नामग्रहणं गर्भिणीकर्तृकमिति तत्पद्धतौ । ततो ब्राह्मणभोजनम् । इति पदार्थक्रमः ॥ ॥ अथ गर्गमते विशेषः मातृपूजापूर्वकमाभ्युदयिकम् । अग्नेः स्थापनम् । ब्रह्मासनाद्याज्यभागान्ते विशेषः । आसादने तण्डुलानन्तरं तिलाः मुद्गाः । मद्रपीठम् । औदुम्बरादिपञ्चकम् । वीणागाथिनौ चेति । ग्रहणात्प्राक् तण्डुलानां तिलमुद्गाभ्यां मिश्रणम् । ग्रहणे प्रजापतये जुष्टं गृह्णामि । प्रोक्षणे त्वादिकः । आज्यभागान्ते प्रजापतये स्वाहेति स्थालीपाकस्य होमः । ततोऽग्नेः पश्चान्मद्रपीठनिधानम् । ततस्तां गर्भवतीं स्नापयित्वाऽहते वाससी परिधाप्य मद्रपीठ उपवेशयेत् । तत औदुम्बरादिपञ्चद्रव्यैर्गर्भिण्याः सीमन्तविनयनम् । विनयामीत्यध्याहारः । ततः पादाङ्गुष्ठेन सूत्रमाक्रम्य मस्तकं यावत्सूत्रं नीत्वा तन्नवगुणं कृत्वा तस्मिन्सूत्रे औदुम्बरादिपञ्चकं बद्ध्वा तस्यास्तु नाभेरुपरि यथा भवति

तथा कण्ठे प्रतिमुञ्चते अयमूर्जावतो वृक्ष इत्यनेन मन्त्रेण । गानप्रैषः । राज्ञो गानम् । नलादेर्वा गानम् । नलादिकं सङ्गायेतामिति प्रैषः । नियुक्तगाथागानं वा । नास्मिन्पक्षे प्रैषः । असावित्यत्र गङ्गे इत्येवं नाम गृह्णाति स्त्र्येव । ततः स्विष्टकृदादिब्राह्मणभोजनान्तम् । दक्षिणादानान्ते भद्रपीठ उपवेशनादि कार्यमिति वासुदेवः । एतदुभयं समूलमतो यथारुच्यनुष्ठेयमिति गर्गपद्धतौ । इति गर्गमते विशेषः ॥ ॥ अथ गर्भिणीधर्माः । कारिकायाम्—अङ्गारभस्मास्थिकपालचुल्लीशूर्पादिकेपूपविशेन्न नारी । सोलूखलाद्ये दृषदादिके वा यन्त्रे तुषाद्ये न तथोपविष्टा । नो मार्जनीगोमयपिण्डकादौ मूत्रं पुरीषं शयनं च कुर्यात् । नो मुक्तकेशी विवशाऽथवा स्याद्भुङ्क्ते न सन्ध्यावसरे न शेते । नामङ्गलं वाक्यमुदीरयेत्सा शून्यालयं वृक्षतलं न यायात् । प्रयोगपरिजाते—गर्भिणीकुञ्जराश्वादिशैलहर्म्यादिरोहणम् । व्यायामं शीघ्रगमनं शकटारोहणं त्यजेत् । शोकं रक्तविमोक्षं च साध्वसं कुक्कुटासनम् । व्यवसायं दिवा स्वापं रात्रौ जागरणं त्यजेत् । वराहः—सामिषमशनं यत्नात्प्रमदा परिवर्जयेदतः प्रभृति । याज्ञवल्क्यः—दौहृदस्याप्रदानेन गर्भो दोषमवाप्नुयात् । वैरूप्यं मरणं वाऽपि तस्मात्कार्यं प्रियं स्त्रियः । दौहृदं गर्भिणीप्रियम् । मदनरत्ने—हरिद्रां कुङ्कुमं चैव सिन्दूरं कज्जलं तथा । कूर्पासकं च ताम्बूलं माङ्गल्याभरणं शुभम् । केशसंस्कारकवरीकण्ठकर्णविभूषणम् । भर्तुरायुष्यमिच्छन्ती दूरयेद्गर्भिणी न हि । बृहस्पतिः—चतुर्थे मासि षष्ठेवाऽप्यष्टमे गर्भिणी यदा । यात्रा नित्यं विवर्ज्या स्यादाषाढे तु विशेषत. ॥ ॥ अथ गर्भिणीपतिधर्माः । आश्वलायनः—वपनं मैथुनं तीर्थं वर्जयेद्गर्भिणीपतिः । श्राद्धं च सप्तमान्मासादूर्ध्वं चान्यत्र वेदवित् । श्राद्धं तद्भोजनमिति प्रयोगपारिजाते । रत्नसंग्रहे—दहनं वपनं चैव चौलं वै गिरिरोहणम् । नाव आरोहणं चैव वर्जयेद्गर्भिणीपतिः । प्रव्यक्तगर्भापतिरन्धियानं मृतस्य वाहं क्षुरकर्मसङ्गमिति तत्रैवोक्तम् न कुर्यादित्युत्तरार्द्धेनान्वयः । मुहूर्तदीपिकाया—मृक्षौरं तथानुगमनं नखकृन्तनं च युद्धादिवास्तुकरणं त्वतिदूरयानमिति । नो भवेदिति शेषः । इति गर्भिणीपतिधर्माः । इति सीमन्तोन्नयनपदार्थक्रमः ॥ * ॥ ॥ * ॥

( विश्व० )—'अथ सीमं······पुंसवनवत् ' अथ पुंसवनानन्तरं सीमन्तोन्नयनमिति कर्मनामधेयं पुंस्सवनवदित्यनेन पुंनक्षत्राद्यतिदेशः । 'प्रथम······ऽष्टमे वा ' गर्भान्तरे सीमन्तोन्नयननिवृत्त्यर्थं प्रथमपदम् । आद्ये गर्भे नियमः । गर्भान्तरेष्वनियम इति कर्कोपाध्यायाः । ' तिलमुद्ग······हुत्वा ' वैश्वदेवपूर्वं मातृश्राद्धं कृत्वा भार्यायाः स्नानं वस्त्रयोः परिधानं च । ततो भर्ता उपलिप्त उद्धतावोक्षिते लौकिकाग्निं स्थापयेद्बहिःशालायाम् । ततो दक्षिणतो ब्रह्मासनमित्यन्वारभ्य तिलैर्मुद्गैर्मिश्रं स्थालीपाकमोदनं चरुमाज्यभागान्तं परिभाषाशास्त्रविधिना संपाद्य स्थालीपाकेन प्रजापतेर्हुत्वेत्यर्थः । तत्र विशेषः । पात्रासादने तण्डुलानन्तरं तिलमुद्गासादनम् युग्मफलसंबद्धमौदुम्बरं काष्ठम् गोमयनिर्मितं भद्रपीठं चतुरस्रं मृदुवस्त्राद्यन्वितं पीठं वा । दर्भपिञ्जूलत्रयं, त्र्येणी शलली, वीरतरः शङ्कुः आयसः खादिरो वा , पूर्णचात्रं, वीणाद्वयं गाथिनश्च तिलमुद्गमिश्रिततण्डुलग्रहणं, प्रजापतये जुष्टं गृह्णामि, प्रोक्षणे त्वाशब्दोऽधिकः । आज्यभागान्तं प्रकृतिवत् । ततः स्थालीपाकेन प्रजापतेर्हुत्वा इदं प्रजापतय इति त्यागं विदध्यात् पश्चादग्नेर्भद्रपीठ उपविष्टायां युग्मेन सटालुग्रप्सेनौदुम्बरेण त्रिभिश्च दर्भपिञ्जूलैस्त्रेण्या शलल्या वीरतरशङ्कुना पूर्णचात्रेणच सीमन्तमूर्ध्वं विनयति भूर्भुवःस्वरिति प्रतिमहाव्याहृतिभिर्वा । अग्नेः पश्चाद्भर्तुर्दक्षिणतः मृद्वासने आसीनायां व्यादिफलवता अनाप्तपाकफलस्तोमवता औदुम्बरवृक्षोद्भवेन त्रिभिर्दर्भतृणैः चकारः समुच्चयार्थः त्रेण्या शलल्या वीरतरशङ्कुना खादिरेण आयसेन वा पूर्णसूत्रेण चात्रेण कर्तनसाधनविशेषेण सीमन्तमूर्ध्वं विनयति । ललाटमारभ्य शिरःप्रदेशं यावत् । भूर्भुव स्वर्विनयामीत्येवं, भूर्विनयामि भुवर्विनयामि स्वर्विनयामीत्येवं प्रति-

महाव्याहृतिभिर्वा । त्रिवृतमावध्नात्ययमूर्जावतो वृक्ष उर्जीव फलिनी भवेति । पादाङ्गुष्ठमारभ्य ललाटान्तमितं सूत्रं त्रिवृतं नव वै त्रिवृदिति श्रुतत्वान्नववृतं गुम्फितानेकोदुम्बरफलं हाराकृतिना वध्नाति । यथा नाभिमतिक्रामति तथा कण्ठे क्षिपतीत्यर्थः । मन्त्रमाह अयमूर्जावत इति । इतिशब्दः मन्त्रसमाप्तिद्योतकः। अथाह वीणागाथिनौ राजान॰ संगायेतां यो वाप्यन्यो वीरतर इति ततस्तौ यथा-प्रेषितं गानं कुरुतः । अपिः समुच्चये । नियुक्तामप्येके गाथामुपोदाहरन्ति एके आचार्याः नियुक्तां गर्भसंस्कारकसीमन्तकालीनगाने विहितां गाथां मन्त्रमुपोदाहरन्ति तद्गानमिच्छन्ति । पूर्वप्रेषितगान-समुच्चयार्थोऽपिर्विकल्पार्थो वा । अभिलषितगानगोचरां गाथामाह ' सोम एव नो राजेत्यादि तीरेतु-भ्यमित्यन्ताम् । असाविति यां नदीमुपावसिता भवति तस्या नाम गृह्णाति । प्रथमान्तमसाविति गङ्गे यमुने नर्मदेत्येवं यस्याः नद्याः समीपे गर्भिणी स्थिता भवति तस्याः नाम गर्भिण्येव उच्चारय-तीत्यर्थः । ' ततो ब्राह्मणभोजनम् ' स्विष्टकृद्धोमादि ब्राह्मणभोजनान्तम् । ब्राह्मणाश्चात्र दश । गर्भिण्या संस्कार्यत्वान्न प्रतिगर्भं सीमन्तोन्नयनम् गर्भस्यैवसंस्कार्यत्वात्प्रतिगर्भमित्यप्यन्ये । पञ्चदशी कण्डिका ॥ १५ ॥

सोष्यन्तीमद्भिरभ्युक्षति । एजतु दशमास्य इति प्राग्यस्यैत इति ॥१॥ अ-थावरावपतनम् । अवैतु पृश्निशेवलꣳ शुनेजरायवत्तवे । नैवमाꣳसेन पीवरीं न कस्मिंश्चनायत(न)मवजरायुपद्यतामिति ॥२॥ जातस्य कुमारस्याच्छिन्ना-यां नाड्यां मेधाजननायुष्ये करोति ॥ ३ ॥ अनामिकया सुवर्णान्तर्हितया मधुघृते प्राशयति घृतं वा भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भुवः स्वः सर्वं त्वयि दधामीति ॥ ४ ॥ अथास्यायुष्यं करोति ॥ ५ ॥ नाभ्यां दक्षिणे वा कर्णे जपति अग्निरायुष्मान्त्स वनस्पतिभिरायु-ष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि । सोम आयुष्मान्त्स ओषधीभिरायु-ष्माँस्तेनत्वाऽऽयुषाऽऽयुष्मन्तं करोमि । ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वा-ऽऽयुषाऽऽयुष्मन्तं करोमि । देवा आयुष्मन्तस्तेऽमृतेनायुष्मन्तस्तेन त्वा-ऽऽयुषाऽऽयुष्मन्तं करोमि। ऋषय आयुष्मन्तस्ते व्रतैरायुष्मन्तस्तेन त्वाऽऽयुषा-ऽऽयुष्मन्तं करोमि । पितर आयुष्मन्तस्ते स्वधाभिरायुष्मन्तस्तेन त्वाऽऽयुषा-ऽऽयुष्मन्तं करोमि । यज्ञ आयुष्मान्त्स दक्षिणाभिरायुष्माँस्तेन त्वाऽऽयुषा-ऽऽयुष्मन्तं करोमि । समुद्र आयुष्मान्त्स स्रवन्तीभिरायुष्माँस्तेन त्वाऽऽयुषा-ऽऽयुष्मन्तं करोमीति ॥ ६ ॥ त्रिस्त्रिस्त्र्यायुषमिति च ॥ ७ ॥ स यदि काम-येत सर्वमायुरियादिति वात्सप्रेणैनमभिमृशेत् ॥ ८ ॥ दिवस्परीत्येतस्यानु-वाकस्योत्तमामृचं परिशिनष्टि ॥ ९ ॥ प्रतिदिशं पञ्च ब्राह्मणानवस्थाप्य

ब्रूयादिममनुप्राणितेति ॥ १० ॥ पूर्वो ब्रूयात्प्राणेति ॥ ११ ॥ व्यानेति-दक्षिणः ॥ १२ ॥ अपानेत्यपरः ॥ १३ ॥ उदानेत्युत्तरः ॥ १४ ॥ समानेति पञ्चम उपरिष्टादवेक्षमाणो ब्रूयात् ॥ १५ ॥ स्वयं वा कुर्यादनुपरिक्राममविद्यमानेषु ॥ १६ ॥ स यस्मिन्देशे जातो भवति तमभिमन्त्रयते वेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितम्। वेदाहं तन्मां तद्विद्यात्पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतमिति ॥ १७ ॥ अथैनमभिमृशत्यश्मा भव परशुर्भव हिरण्यमस्तुतं भव। आत्मा वै पुत्रनामाऽसि स जीव शरदः शतमिति ॥ १८ ॥ अथास्य मातरमभिमन्त्रयत इडासि मैत्रावरुणी वीरे वीरमजीजनथाः। सा त्वं वीरवती भव याऽस्मान्वीरवतोऽकरदिति ॥ १९ ॥ अथास्यै दक्षिणꣳ स्तनं प्रक्षाल्य प्रयच्छतीमꣳ स्तनमिति ॥ २० ॥ यस्ते स्तन इत्युत्तरमेताभ्याम् ॥ २१ ॥ उदपात्रꣳ शिरस्तो निदधात्यापो देवेषु जाग्रथ यथा देवेषु जाग्रथ ॥ एवमस्याꣳ सूतिकायाꣳसपुत्रिकायां जाग्रथेति ॥ २२ ॥ द्वारदेशे सूतिकाग्निमुपसमाधायोत्थानात्संधिवेलयोः फलीकरणमिश्रान्सर्षपानग्नावावपति शण्डामर्का उपवीरः शौण्डिकेय उलूखलः। मलिम्लुचो द्रोणासश्च्यवनो नश्यतादितः स्वाहा। आलिखन्ननिमिषः किंवदन्त उपश्रुतिर्हर्यक्षः कुम्भी शत्रुः पात्रपाणिर्नृमणिर्हन्त्रीमुखः सर्षपारुणश्च्यवनो नश्यतादितः स्वाहेति ॥ २३ ॥ यदि कुमार उपद्रवेज्जालेन प्रच्छाद्योत्तरीयेण वा पिताऽङ्क आधाय जपति कूर्कुरः सुकूर्कुरः कूर्कुरो बालबन्धनः। चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर तत्सत्यम्। यत्ते देवा वरमददुः स त्वं कुमारमेव वा वृणीथाः। चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर तत्सत्यम्। यत्ते सरमा माता सीसरः पिता श्यामशबलौ भ्रातरौ चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वरेति ॥ २४ ॥ अभिमृशति न नामयति न रुदति न हृष्यति न ग्लायति यत्र वयं वदामो यत्र चाभिमृशामसीति ॥ २५ ॥ १६ ॥

( कर्कः )—'सोष्यन्ती·····इति' षूङ् प्राणिगर्भविमोचने। गर्भं विमुञ्चन्ती विजनयन्तीमित्यर्थः। अद्भिरभ्युक्षति एजतु दशमास्य इत्यनेन मन्त्रेण प्राग्यस्यैत इति चोच्यते। प्रकरणे पाठा-

भावात् परिसमाप्तत्वाच्च वाक्यस्य। 'अथावरावपतनम्' मन्त्रं जपतीत्यध्याहारः । अवरेति जरायुविशेषः अभिधानात् तस्याधःपतने जपः पितुः 'अवैतुपृश्निशेवलम्' इत्यस्य। 'जातस्य......दधामीति' अनेन मन्त्रेण। प्रतिवाक्यमित्यपरे। अच्छिन्ने नाले एतत् क्रियते । कुमारग्रहणाच्च स्त्रिया अतः प्रभृति न क्रियते। 'अथास्या......युष्मानिति' । अधिकरणसप्तम्यभावात्समीपसप्तमीयम्। गङ्गायां गावो यथा। त्रिरेतज्जपति। त्र्यायुषमिति च त्रिरेव । यदि दैवान्मानुषादपचारान्मेधाजननं स्वकाले न कृतं तथाप्यायुष्यकरणं भवत्येव। मेधाजननस्य हि कालः श्रूयते—तस्मात्कुमारं जातं घृतं वै वाऽग्रे प्रतिलेहयन्ति स्तनं वाऽनुधापयन्तीति। 'स यदि......शिनष्टि' । दिवस्परीत्येतस्योत्तमामृचं परिशेषयित्वाऽवशिष्टं वात्सप्रमुच्यते। 'प्रतिदिशं......णितेति' प्रतिदिशमेकैकमेवं ब्राह्मणानामवस्थापनं कुमारस्य। तत्र पूर्वं तान्प्रति ब्रूयात् इममनुप्राणितेति । 'पूर्वो......द्यमानेषु'। अविद्यमानेषु ब्राह्मणेषु स्वयमेव करोत्यनुपरिक्रम्यानुपरिक्रम्य। 'स यस्मिन्देशे जातो भवति तमभिमन्त्रयते वेद ते भूमीत्यनेन मन्त्रेण। 'अथैनमभिमृशत्यश्मा भव परशुर्भवेति अनेन मन्त्रेण। वात्सप्राभिमर्शनाद्येतदभिसर्शनान्तं कालव्यतिक्रमेणापि क्रियते तत्संस्कारत्वात्। अथास्य मातरमभिमन्त्रयते इडासीत्यनेन मन्त्रेण। अथास्यै दक्षिणं स्तनं प्रक्षाल्य प्रयच्छति इमꣳ स्तनमित्यनेन मन्त्रेण। 'यस्ते स्तन इत्युत्तरमेताभ्याम्' ऋग्भ्याम्। द्विवचनोपदेशाच्च इमꣳ स्तनमिति, यस्ते स्तनमिति च द्वितीये। स्तनसमर्पणं च पीतस्तनस्य न भवति। 'उदपात्रꣳ शिरस्तो निदधाति आपो देवेषु जाग्रथेत्यनेन मन्त्रेण । एतच्च प्रागुत्थानाद्भवत्येव । द्वारदेशे सूतिकाग्निमुपसमाधायोत्थानात्संधिवेलयोः फलीकरणमिश्रान्सर्षपानग्नावावपति शण्डामर्का इति प्रतिमन्त्रम्। फलीकरणाः कणाः सर्षपाश्च। आवपनोपदेशाच्च होमेतिकर्तव्यता न भवति। यदि कुमार उपद्रवेज्जालेन प्रच्छाद्योत्तरीयेण वा पिताऽङ्क आधाय जपति। कूर्कुरः सुकूर्कुर इत्यनेन मन्त्रेण। अभिमृशति, न नामयति न रुदति न हृष्यति न ग्लायति यत्र वयं वदामो यत्र चाभिमृशामसीत्यनेन मन्त्रेण। कुमारशब्देन कुमारग्रहोऽभिधीयते ॥ १६ ॥ * ॥

( जयरामः )—सोष्यन्तीं गर्भं मुञ्चन्तीं प्रसवशूलवतीमित्यर्थः । षूङ् प्राणिगर्भविमोचने। 'अद्भिरभ्युक्षति' भर्ता वक्ष्यमाणमन्त्रेण । मन्त्रमाह 'एजतु दशमास्य इति प्राग्यस्यैत इति' प्रकरणे पाठाभावाद्वाक्यस्य च परिसमाप्तत्वादुच्यते । तत्र प्रजापतिर्महापङ्क्तिर्गर्भोभ्युक्षणे०। 'अथावरावपतनम्' मन्त्रं जपतीत्यध्याहारः । अवरो जरायुविशेषः तस्य अव अधः पतनं पतनहेतुं मन्त्रं जपति पिता। तमाह—'अवैत्विति' अस्यार्थः। तत्र प्रजापतिर्बृहती अग्निरवपतने० हे सोष्यन्ती तव जरायु अव अधः एतु आयातु पतत्वित्यर्थः। किंभूतं पृश्नि अग्निरूपं नानारूपं वा शेवलं पिच्छलं जलोपचितं वा। किमर्थं शुने श्वानमुपकर्तुम् । यद्वा शुने इति षष्ठ्यर्थे चतुर्थी शुनोऽत्तवे भक्षणाय। हे पीवरि पुत्रादिगर्भधारणेन सुपुष्टगात्रि तव जरायु मांसेन गर्भव्यथकावयवेन सह आयतं संबद्धं विस्तृतं वा अव अधः नैव मैव पद्यतां पततु। न च कस्मिंश्चन गर्भोपघाते निमित्ते सत्यपीति। जातस्येति। तस्य नालच्छेदात्प्राक् मधुघृते मिलिते असंभवे घृतमेव वा प्राशयति सङ्कल्पिता भूस्त्वयि इत्यादि सर्वं त्वयि दधामि इत्यन्तेन मन्त्रेण। प्रतिवाक्यमित्यपरे। कुमारग्रहणादतः प्रभृति स्त्रिया न भवति। अथ मन्त्रार्थः—तत्र सर्वासां प्रजापतिः क्रमेण गायत्र्युष्णिगनुष्टुभः अग्निवायुसूर्याः प्राशने० । भूरादिव्याहृतित्रयेणोपलक्षितं वेदत्रयं सर्वोपलक्षितमर्थत्रयेणोपलक्षितमथर्ववेदं च त्वयि दधामि स्थापयामि। यद्वा वेदत्रयं लोकत्रयं च त्वदधीनं स्थापयामि इति। अस्य कुमारस्य आयुष्यमेवाह नाभ्यामित्यादि करोतीत्यभिमन्त्रणं यावत्। नाभ्यां स्थितेरसंभवान्नाभेः कर्णस्य वा समीपे स्थित्वा अग्निरायुष्मानित्याद्यष्टौ मन्त्रांस्त्रिर्जपति

पिता। अथ मन्त्रार्थः—तत्र सर्वेषां प्रजापतिर्गायत्री लिङ्गोक्ता आयुष्यकरणे०। अग्निः कारणात्मना आयुष्मानस्ति। स च वनस्पतीभिरिध्मसमिद्भिरिष्ट आयुष्मान् आयुष्मत्त्वहेतुर्भवति वनस्पतिभिः कृत्वेति वा तेन अग्न्यायुषा त्वा त्वाम् आयुष्मन्तं निर्दुष्टदीर्घायुषं करोमीति वाक्यार्थ उत्तरत्रापि संबध्यते। एवं सोमोऽपि व्याख्येयः। स च ओषधीभिरिति संधिरार्षः। २। ब्रह्म वेदः ब्राह्मणैरध्येतृभिः। ३। देवाः अमृतेन सुधया। ४। ऋषयो व्रतैः कृच्छ्रादिभिः॥ ५॥ पितरः स्वधाभिः तृप्तिजनकमन्त्रैः। ६। यज्ञो दक्षिणाभिः परिक्रयद्रव्यैः। ७। समुद्रः स्रवन्तीभिर्नदीभिरित्येतावान्विशेषः। ८। एतानष्टौ मन्त्रॉस्त्रिर्जपति। त्र्यायुषमिति च। त्रिरेव। यदि चास्य मेधाजननं स्वकाले न कृतं विघ्नवशात्तर्हि तिष्ठत्येव तस्य नियतकालत्वात्। तथा च श्रूयते तस्मात्कुमारं जातं घृतं वै वाऽग्रे प्रतिलेहयन्ति स्तनं वाऽनुधापयन्तीति अपीतस्तनस्यैतत् आयुष्यं तु भवत्येव। स पिता यदि कामयेत अयं सर्वं शतवर्षमायुरियात्प्राप्नुयादिति तर्हीदं काम्यमुच्यते। उत्तमां चरमामृचं परिशेषयित्वा तत्रावशिष्टं वात्सप्रमत्र गृह्यते। तत्र द्वादशानां वत्सप्रीर्भालन्दनः त्रिष्टुप् अग्निरभिमर्शने०। प्रतिदिशमवस्थापितान् पञ्चब्राह्मणान्प्रति पिताऽऽह भो ब्राह्मणा इमं कुमारमनुप्राणित अनुकूलप्राणं मन्त्रैः कुरुतेति। ततस्ते ब्राह्मणाः प्राणेत्याद्याहुः क्रमेण अविद्यमानेषु विप्रेषु स्वयमेव अनुपरिक्रामं परिक्रम्य परिक्रम्य। अथ मन्त्रार्थः—भो कुमार त्वं प्राण सुस्थितप्राणो भव। एवमुपर्यपि। तत्र सर्वाङ्गेषु सुस्थो व्यानः गुदे सुस्थोऽपानः कण्ठे सुस्थ उदान. नाभौ सुस्थः समानो भवेति स्थानभेदः। एवमेते वायवोऽस्य सुजीवनं कुर्वन्त्विति वाक्यार्थः। स कुमारो यत्र प्रदेशे जातस्तं वेद ते इति मन्त्रेण मन्त्रयते। वेदत इति प्रजापतिरनुष्टुप् भूमिस्तदभिमन्त्रणे०। हे भूमे कुमारजन्मप्रदेश तव हृत् यदुपकरणम् अयं प्रत्यगात्मा सूर्यः भूमिश्च कुमारसूर्वेद जानाति विसर्गाभावश्छान्दसः। किंभूतम् दिवि द्युलोके वर्तमाने चन्द्रमसि प्रसादरूपेण श्रितं स्थितं तत्कर्मभूतमहं वेद जानामि तत्कर्तृभूतम् एवं पुनरुपकर्तुं मां विद्याज्जानातु अतस्त्वद्दत्तपुत्रेण सह वयं पश्येमेत्याद्युक्तार्थम्। अथैनं कुमारं पिताऽभिमृशति हृदि स्पृशति अश्मा भवेति मन्त्रेण। अस्यार्थः तत्र प्रजापतिरनुष्टुप् लिङ्गोक्ता अभिमर्शने०। हे कुमार त्वम् अश्मा मणिरिव दृढः प्रियश्च भव परशुर्वज्र इवापकर्तृनाशको भव। किंच अस्रुतम् अनभिभूतम् अप्रच्युतस्वरूपमिति यावत् हिरण्यं हिरण्यवत्तेजोयुक्तः स्पृहणीयश्च भव यथा धात्वन्तरासंभिन्नं सुवर्णं शुद्धं भवति तथा त्वमपि रोगाद्युपद्रवहीनो भवेत्यर्थः। यतस्त्वं पुत्रनामा आत्माऽसि अतः स त्वं वै निश्चयेन शतं शरदो जीव प्राणिहि। वात्सप्राभिमर्शनाद्येतदभिमर्शनान्तं कर्म कालातिक्रमेऽपि भवति संस्कारत्वात्। अथास्य मातरं कुमारस्य प्रसूम् अभि अभिमुखो भूत्वा मन्त्रयते मन्त्रश्रावणेन संस्करोति इडासीति मन्त्रेण। अस्यार्थः—तत्र प्रजापतिरनुष्टुप् इडाभिमन्त्रणे०। हे वीरे वीरवति पुत्रवतीति यावत्। त्वमिडा मानवी यज्ञपात्री तद्गतद्रव्यं चासि मैत्रावरुणी मित्रावरुणयोरंशोत्पन्ना। यथा इडायां पुरूरवा उत्पन्नः यथाच यज्ञपात्र्यां तद्द्रव्ये वा पुरोडाशो भवति तथा त्वय्यपि तादृशाः स्वर्गादिसाधनपराः पुत्राः सन्त्वित्यभिप्रायः। यतस्त्वं वीरं पुत्रमजीजनथाः असौषीः अतः सा त्वं वीरवती जीवपतिपुत्रा भव या त्वमस्मान्वीरवतः जीवबहुपुत्रान् अकरत् अकरोः। अथास्यै अस्या मातुर्दक्षिणं स्तनं स्वयं प्रक्षाल्य कुमाराय प्रयच्छति ददाति पिता इमꣳ स्तनमिति मन्त्रेण। उत्तरं वामम् इमꣳस्तनं यस्ते स्तन इत्येताभ्यां मन्त्राभ्याम् द्विवचनोपदेशात्। तत्राद्ये प्रजापतिस्त्रिष्टुप् अग्निर्द्वितीये दीर्घतमा त्रिष्टुप् वाक् स्तनदाने०। उदपात्रं सजलं शरावं शिरस्तः सूतिकायाः शिरःप्रदेशे खट्वाऽधस्तान्निदधाति आपो देवेष्विति मन्त्रेण। तत्रोत्थानपर्यन्तं

१ सौषधीभिरिति सूत्रपाठाभिप्रायेण।

तिष्ठति । अथ मन्त्रार्थः—तत्र प्रजापतिरनुष्टुप् आपो जलपात्राधाने० । हे आपः जीवनादिहेतवः यूयं देवेषु देवकार्यनिमित्तं जाग्रथ तत्साधनत्वेन तिष्ठथ अतो यथा देवेषु जाग्रथ एवं तथा अस्यां सूतिकायां सूतिकाहिते जाग्रथ जाग्रतेत्यर्थः । पुरुषव्यत्ययश्छान्दसः । किंभूतायां सपुत्रिकायां पुत्रादिसहितायाम् द्वारदेशे सूतिकागृहस्य च होमः प्रतिमन्त्रं, फलीकरणास्तण्डुलकणाः । आवपनोपदेशान्न चात्र होमेतिकर्तव्यता अग्निस्थापनं तु भवत्येव उपसमाधायेत्युक्तत्वात् । अथ मन्त्रार्थः—तत्र द्वयोः प्रजापतिरनुष्टुप् जाया लिङ्गोक्ता आवपने० ॥ शण्डाः शण्डः मर्काः मर्कः तत्र शृणोति हिनस्तीति शण्डो बालग्रहः इतः स्थानान्नश्यतात् अपगच्छतु । अयं च वाक्यार्थ उत्तरत्रापि योज्यः । मारयतीति मर्कः उपघाते वीरः समर्थः उपवीरः विघ्नकुशलः शौण्डिकेयः आश्रितघातकः उलूखलः अप्रतीकार्यो मलिम्लुचः अतिमलिनाशय इत्यर्थः । दीर्घनासो द्रोणासः च्यावयत्यङ्गानि सर्वेन्द्रियाणि वा तच्छक्तीर्वा च्यवनः एते सर्वे मत्कृतावपनोपद्रुता भीताश्चापसर्पन्त्वित्यर्थः। एवमासमन्ततो भावेन लिखन् भक्षयन् य आस्ते स आलिखन् पराभवितुमन्यवच्छिन्नदृष्टिरनिमिषः उप समीपे श्रुत्वा अपकर्ता उपश्रुतिः हर्यक्षः पिङ्गलनयनः कुम्भयति स्तम्भयत्येवंशीलः कुम्भी शातयतीति शत्रुः कर्परहस्तः करपात्रहस्तो वा पात्रपाणिः नृन् मिनोति हिनस्तीति नृमणिः हन्त्री हिंसा हननम् मुखे यस्यासौ हन्त्रीमुखः सर्षपवदरुण उग्रो धूसरो वा सर्षपारुणः । च्यवत्यनेनेति च्यवनः येनोपद्रुतश्च्यवति प्रकृतेः परिभ्रश्यतीत्यर्थः ॥ इतः स्थानान्नश्यतादिति सर्वपदानामेवान्वयः ॥ गणमभिप्रेत्याह ' किंवदन्त इति ' एते सर्वे किंवदन्तः किंवद्व्रणोऽयमित्यर्थः । इदमग्नय इत्युभयत्र त्यागः ॥ यदि कुमारो बालग्रह एतं बालमुपद्रवेत् विघ्नयेत्तदैनं जालेन आनायेन उत्तरीयेण वाससा वा प्रच्छाद्याङ्के कृत्वा पिता जपति ॥ ' कूर्कुर ' इत्यादि मन्त्रत्रयम् ॥ अथ मन्त्रार्थः—तत्र त्रयाणां प्रजापतिरनुष्टुप् शुनको जपे० कूर्कुरो भीषणाख्यो बालग्रहः तथा सुकूर्कुरश्चातिभीषणः बालान्बध्नाति वशयतीति बालबन्धनः कूर्कुरः कर्कशश्च यो बालग्रहः सीसरोऽङ्गसारकः हे शुनक तद्गणमुख्य लपेत लापनं रोधो वेति यावत् । अपह्वर गात्रापहारक ह्वृ कौटिल्ये ते तुभ्यं नमोऽस्तु । ततस्तुष्टश्चैनं कुमारं सृज मुञ्च किंकुर्वन् चेचेत् छुछुशब्दं कुर्वन् । हे शुनक तत्सत्यं यत्ते तुभ्यं देवदूताय देवा वरमदुः दत्तवन्तः स च त्वं हिंसाविहारः कुमारमेव वा वृणीथाः वृतवानसीति शेषमुक्तार्थम् । हे शुनक तत्सत्यम् यत्ते तव सरमा देवशुनी माता सीसरश्च देवश्वा पिता श्यामशबलौ च भ्रातराविति शिष्टमुक्तार्थम् । तत एनं कुमारं पिताऽभिमृशति ' न नामयति ' इति मन्त्रेण सर्वाङ्गेष्वभिमृशति । अथ मन्त्रार्थः—तत्र प्रजापतिरनुष्टुप् वायुरभिमर्शने० ॥ यत्र यस्मिन्कुमारे वयं वदामो ब्रूमः साकाङ्क्षत्वान्मन्त्रं यत्र चाभिमृशाम अभितः स्पर्शं कुर्मः स कुमारो न नामयत्यङ्गानि । शिष्टं स्पष्टम् ॥ १६ ॥ ॥ * ॥

( हरिहरः )—' सोष्यन्ती......यस्यैत इति ' । सोष्यन्तीं प्रसवशूलवतीं स्त्रियं भर्ता अद्भिर्जलेनाभ्युक्षति प्रसिञ्चति एजतु दशमास्य इत्येतया प्राग्यस्यैत इति प्राक्पठितया ऋचा त्र्यवसानया विराड्जगत्या । अथावरावपतनम् । अथाभ्युक्षणानन्तरमवरावपतनम् अवरमुल्वं जरायुवेष्टितं गर्भवेष्टनमवाचीनमधः पतत्यनेन जप्तेनेत्यवरावपतनो मन्त्रः तं स्त्रीसमीपे उपविश्य भर्ता जपति, यथा ' अवैतु पृश्निशेवलमित्यादि अवजरायुपद्यताम् ' इत्यन्तम् । अवरावपतनमन्त्रो भर्त्रा जाप्यः । ' जातस्य......करोति ' ततो जातस्य उत्पन्नस्य कुमारस्य पुत्रस्य अच्छिन्नायां नाड्यामखण्डिते नाले सति मेधाजननायुष्ये मेधाजननं च आयुष्यं च मेधाजननायुष्ये ते करोति पिता मेधाजननं तावदाह ' अनामि......दधामीति ' अनामिकयाऽङ्गुल्या सुवर्णेनाच्छादितया मधु च घृतं च मधुघृते द्वन्द्वसमाससामर्थ्यादेकीकृते घृतं वा केवलं कुमारं सकृत्प्राशयति कुमारस्य जिह्वायां निर्मार्ष्टि भूस्त्वयीत्यादि सर्वं त्वयि दधामीत्यन्तेन मन्त्रवाक्यसमुदायेन । ननु ' अर्थैकत्वादेकं वाक्यम् ' इति

जैमिनिसूत्रात्, 'तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विता' इत्यमरसिंहोक्तेश्चैकार्थमेकं वाक्यम्। एकस्य वाक्यस्य च तेषां वाक्यं निराकाङ्क्षं मिथः संबद्धमिति कात्यायनवचनेनैकमन्त्रत्वमिति प्रतिपादनात्कथं मन्त्रवाक्यसमुदायस्यैकमन्त्रत्वम्? अत्रोच्यते—सत्यं यदि इतिकारादिकं मन्त्रावसानज्ञापकं किंचिन्न स्यात्तदैतच्छक्यम्। अत्र पुनरितिकारो मन्त्रावसानज्ञापको जागर्ति तेन नायं दोषः। यथा स वै भूर्भुव इत्येतावतैव गार्हपत्यमादधाति तैः सर्वैः पञ्चभिराहवनीयमादधाति भूर्भुवःस्वरिति च श्रुतौ वाक्यसमुदायस्य इतिकारेण मन्त्रावसानं ज्ञायते। कातीयसूत्रेऽपि दारुभिर्ज्वलन्तमादधाति भूर्भुव इति आहवनीयमादधाति भूर्भुवः स्वरिति। अत्र यद्यपि एकैकस्याः व्याहृतेर्मन्त्रत्वं युक्तं समस्तानां व्याहृतीनां च तथापि इतिकारेण द्वयोरपि व्याहृत्योर्मन्त्रत्वं व्यवस्थाप्यते। एवमन्यत्रापि बहूनां मन्त्रवाक्यानामितिकारादिविनियोजकेन मन्त्रैक्यं तत्र तत्रायमेव न्यायोऽनुसर्तव्यः। 'अथास्याः······जपति' अथ मेधाजननानन्तरम् अस्य कुमारस्यायुष्यमायुषे हितं जीवनवर्द्धनं कर्म करोति। तद्यथा नाभिदेशे दक्षिणे वा श्रवणे नाभ्यां दक्षिणे वा कर्णे इति समीपाधिकरणा सप्तमी, गङ्गायां घोष इतिवत्। तेन नाभिसमीपे दक्षिणकर्णसमीपे वा जपति। 'अग्निरायुष्मान्' इत्यादिकान् मन्त्रान् त्रिर्जपति त्रीन् वारान् उपांशु पठति। अग्निसोमब्रह्मदेवऋषिपितृयज्ञसमुद्र इत्यन्तान्। 'त्र्यायुषमिति च' ततः त्र्यायुषं जमदग्नेरित्यादि तन्नो अस्तु त्र्यायुषमित्यन्तं च मन्त्रं तथैव त्रिर्जपति। इदं चायुष्यकरणं कालातिक्रमेऽपि क्रियते। मेधाजननं तु मुख्यकालातिक्रमान्निवर्तते तस्मात्कुमारं जातं घृतं वै वाऽग्रे प्रतिलेहयन्ति स्तनं वाऽनुधापयन्तीति जातमात्रस्य कुमारस्य श्रुत्या मेधाजननोपदेशात्। 'स यदि······भिमृशेत्' स पिता यदीच्छेदयं कुमारः सर्वं संपूर्णमायुर्जीवितम् इयात् प्राप्नुयात् इत्येवं तदा वात्सप्रेण वात्सप्रिणाभालन्दनेन दृष्टेनानुवाकेन दिवस्परीत्यादिद्वादशर्चेन एनं कुमारम् अभि समन्ततः सर्वं शरीरमालभेत। तत्र विशेषमाह 'दिवस्प······शिनष्टि' दिवस्परीत्यादिको द्वादशर्चोऽनुवाको वात्सप्रः एतस्य उत्तमामन्त्यां द्वादशीम् अस्ताव्यग्निरित्येतामृचं परिशिनष्टि व्युदस्यति तां परित्यज्य एकादशभिर्ऋग्भिरभिमृशेदित्यर्थः। 'प्रतिदिशं······मानेषु' इत्यन्तं सूत्रम्। कुमारस्य प्रतिदिशं दिशं दिशं प्रति चतसृषु दिक्षु प्राच्यादिषु मध्ये च यथाक्रमं पञ्च ब्राह्मणानवस्थाप्य संनिवेश्य कुमाराभिमुखांस्तान्प्रतिब्रूयात्। किम्? इममनुप्राणितेति। इमं कुमारमनुप्राणितानुलक्षीकृत्य प्राणेत्यादि ब्रूत इति प्रैषः। ततः प्रेषिता ब्राह्मणाः पूर्वादिक्रमेण प्राणेति कुमारं लक्षीकृत्य पूर्वो ब्रूयात्। व्यानेति दक्षिणो ब्राह्मणः अपानेति पश्चिमः उदानेत्युत्तरः समानेति पञ्चम उपरिष्टादूर्ध्वमवेक्षमाणः। अविद्यमानेषु असत्सु ब्राह्मणेषु स्वयं वा स्वयमेव अनुप्राणनं कुर्यात्। कथम् अनुपरिक्रामं परिक्रम्य परिक्रम्य पूर्वादिकां दिशं प्राणेत्यादि। अनुपरिक्राममिति णमुलन्तम्। अस्मिन्पक्षे प्रैषाभावः। 'स यस्मि···मन्त्रयते' स कुमारः यस्मिन्देशे भूभागे उत्पन्नः पतति तं देशमभिमन्त्रयते हस्तेन स्पृशति वेद ते भूमि इत्यादिशरदःशतमित्यन्तेन मन्त्रेण। 'अथैन······शतमिति' अथ जन्मदेशाभिमन्त्रणानन्तरमेनं कुमारं पिता अभिमृशति समन्ततः सर्वशरीरे स्पृशति। अश्मा भवेत्यादिना सजीव शरदः शतमित्यन्तेन मन्त्रेण। वात्सप्राभिमर्शनादि एतदभिमर्शनान्तं कालव्यतिक्रमेऽपि क्रियते संस्कारकर्मत्वात्। 'अथास्य······ऽकरदिति'। अथ कुमाराभिमर्शनानन्तरमस्य कुमारस्य जननीमभिमन्त्रयते अभिलक्षीकृत्य। इडासीत्यादिना वीरवतोऽकरदित्यन्तेन। 'अथास्यै······भेताभ्याम्' अथाभिमन्त्रणं कृत्वा अस्यै अस्याः मातुर्दक्षिणं स्तनं प्रक्षाल्य धावयित्वा कुमाराय ददाति इमꣳ स्तनमित्येतयर्चा। तत उत्तरं वामं स्तनं प्रक्षाल्य प्रयच्छति यस्ते स्तन इमꣳ स्तनमित्येताभ्यामृग्भ्याम्। 'उदपात्रꣳ······ग्रथेति' उदपात्रं जलपूर्णपात्रं शिरस्तः शिरःप्रदेशे कुमारस्य निदधाति स्थापयति।

आपो देवेष्वित्यादिना जाग्रथेत्यन्तेन मन्त्रेण । 'द्वारदेशे······शण्डामर्का' इत्यादि । ततः पञ्च-भूसंस्कारपूर्वकं द्वारदेशे सूतिकागृहस्य सूतिकाग्निं स्थापयित्वा ओत्थानात् उत्थानं यावत् संधिवे-लयोः सायं प्रातः फलीकरणमिश्रान् फलीकरणैः तण्डुलकणैः मिश्रान् युक्तान् सर्षपान् तस्मिन्नग्नौ आवपति जुहोति द्वे आहुती शण्डामर्का इति आलिखन्ननिमिष इति द्वाभ्यां मन्त्राभ्याम् । आवपनो-पदेशात् होमेतिकर्तव्यतानिवृत्तिः । नैमित्तिकमाह 'यदि······कूर्कुर' इत्यादि । यदि चेत्कुमारो बालग्रहः तं बालमुपद्रवेत् अभिभवेत् तदा तं बालं जालेन मत्स्यग्रहणसाधनेन तदलाभे उत्तरीयेण वा वाससा प्रच्छाद्य छादयित्वा अङ्के उत्सङ्गे निधाय धृत्वा कूर्कुर इत्यादिकमपह्वरेत्यतं मन्त्रं जपति । अभिमृशति न नामयतीति । जपान्ते कुमारस्य सर्वाङ्गमभिमृशति, न नामयतीत्यादि यत्र चाभिमृशामसीत्यन्तेन मन्त्रेणेति सूत्रार्थः ॥ ॥ अथ प्रयोगः । अथ प्रसवशूलवत्यभिमन्त्रणादि कुमारोपद्रवशमनान्तानां चतुर्दशानां प्रयोगः । सोष्यन्तीं स्त्रियमेजतु दशमास्य इत्यनयर्चा अवज-रायुणा सहेत्यन्तया अद्भिरभ्युक्षति पतिः । ततः स्त्रीसमीपे अवैतु पृश्निशेवलꣳ शुने जराय्वत्तवे नैवमाꣳसेन पीवरीं न कस्मिंश्चनायतनमवजरायुपद्यतामित्यन्तमवरावपतनं मन्त्रं जपति । तत्र यदि कुमार उत्पद्यते तदा मातृपूजाभ्युदयिके विधाय अच्छिन्ने नाले मेधाजननायुष्ये करोति । तत्र मेधाजननं यथा । अनामिकयाऽङ्गुल्या सुवर्णेनान्तर्हितया मधुघृते मेलयित्वा केवलं घृतं वा कुमारं भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भुवःस्वः सर्वं त्वयि दधामीत्यनेन मन्त्रेण सकृत्प्राशयति । अथायुष्यं करोति तद्यथा कुमारस्य नाभिसमीपे दक्षिणकर्णसमीपे वा अग्निरायुष्मा-नित्यादिकान् समुद्र आयुष्मानित्यन्तानष्टौ मन्त्रान् त्रिर्जपति । अग्निरायुष्मान्त्सवनस्पतीभिरायुष्मां-स्तेन त्वायुपायुष्मन्तं करोमि । सोम आयुष्मान्त्सौषधीभिरायुष्मॉंस्तेन त्वायुपायुष्मन्तं करोमि । ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वायुपायुष्मन्तं करोमि । देवा आयुष्मन्तस्ते-ऽमृतेनायुष्मन्तस्तेन त्वायुपायुष्मन्तं करोमि । ऋषय आयुष्मन्तस्ते व्रतैरायुष्मन्तस्तेन त्वायुपायुष्मन्तं करोमि । पितर आयुष्मन्तस्ते स्वधाभिरायुष्मन्तस्तेन त्वायुपायुष्मन्तं करोमि । यज्ञ आयुष्मान्त्स दक्षिणाभिरायुष्मांस्तेन त्वायुपायुष्मन्तं करोमि । समुद्र आयुष्मान्त्स स्रवन्तीभिरायु-ष्मांस्तेन त्वायुषायुष्मन्तं करोमि इति । ततस्त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं यद्देवेषु त्र्यायुषं तन्नो अस्तु त्र्यायुषमिति । इति मन्त्रं त्रिर्जपति । स पिता यदि कामयेत अयं कुमारः सर्वमायुरियादिति तदा तं कुमारं दिवस्परीत्यारभ्य उशिजोविवव्रुरित्यन्तेन वात्सप्रसंज्ञकेनानुवाकेनाभिमृशेत् । अथ कुमारस्य पूर्वादिचतसृषु दिक्षु चतुरो ब्राह्मणान् एकं मध्ये च अवस्थाप्य इममनुप्राणितेति तान् ब्रूयात् । ततः पूर्वदिक्स्थितो ब्राह्मणः कुमारं लक्ष्यीकृत्य प्राण इति । दक्षिणो व्यान इति । पश्चिमः अपान इति । उत्तर उदान इति । पञ्चमः समान इति उपरिष्टादवेक्षमाणो ब्रूयात् । अविद्यमानेषु तु ब्राह्मणेषु स्वयमेव तस्यां तस्यां दिशि कुमाराभिमुखं स्थित्वा प्राणेत्यादिपूर्वोक्तं ब्रूयात् । अस्मि-न्पक्षे प्रैषो न । ततो यस्मिन्देशे कुमारो जातो भवति तं देशं वेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितम् । वेदाहं तन्मां तद्विद्यात्पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतमित्य-न्तेन मन्त्रेणाभिमन्त्रयते । अथैनं कुमारम् अश्मा भव परशुर्भव हिरण्यमस्तृतं भव । आत्मा वै पुत्र-नामासि स जीव शरदः शतमित्यन्तेन मन्त्रेणाभिमृशति । अथास्य कुमारस्य मातरमभिमन्त्रयते । इडासि मैत्रावरुणी वीरे वीरमजीजनथाः । सा त्वं वीरवती भव यास्मान्वीरवतोऽकरदित्यनेन मन्त्रेण । अथास्य कुमारस्य मातुः दक्षिणं स्तनं प्रक्षाल्य प्रयच्छति इमꣳ स्तनमित्येतयर्चा । तत उत्तरं वामं प्रक्षाल्य प्रयच्छति यस्ते स्तन इमꣳ स्तनमित्येताभ्यामृग्भ्याम् । ततः कुमारस्य शिरः-प्रदेशे जलपूर्णं पात्रं निदधाति स्थापयति । आपो देवेषु जाग्रथ यथा देवेषु जाग्रथ एवमस्याꣳ सूति-

एवं कुमार्यां अपि ॥ ॥ अथ कर्णवेधः। तत्र याज्ञिकाः पठन्ति—अथ कर्णवेधो वर्षे तृतीये पञ्चमे वा पुष्येन्दुचित्राहरिरेवतीषु पूर्वाह्णे कुमारस्य मधुरं दत्त्वा प्रत्यङ्मुखायोपविष्टाय दक्षिणं कर्णमभिमन्त्रयते भद्रं कर्णेभिरिति सव्यं वक्ष्यन्तीवेदेति चाथ भिन्द्यात्। ततो ब्राह्मणभोजनम्। मदनरत्ने—प्रथमे सप्तमे मासि अष्टमे दशमे तथा। द्वादशे च तथा कुर्यात्कर्णवेधं शुभावहम्। हेमाद्रौ व्यासवचनम्—कार्तिके पौषमासे वा चैत्रे वा फाल्गुनेऽपि वा। कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने। कारिकायाम्—सुनक्षत्रे शुभे चन्द्रे स्वस्थे शीर्षोदये तथा। दिनच्छिद्रव्यतीपातविष्टिवैधृतिवर्जिते। चित्राऽनुराधामृगरेवतीषु पुनर्वसौ पुष्यकराश्विनीषु। श्रुतौ धनिष्ठात्रिसृपूत्तरासु लग्ने गुरौ लाभनृगे(?)शुभे तत्। मदनरत्ने—द्वितीया दशमी षष्ठी सप्तमी च त्रयोदशी। द्वादशी पञ्चमी शस्ता तृतीया कर्णवेधने। सौवर्णी राजपुत्रस्य राजती विप्रवैश्ययोः। शूद्रस्य चायसी सूची मध्यमाष्टाङ्गुलात्मिका। हेमाद्रौ देवलः—कर्णरन्ध्रे रविच्छाया न विशेदग्रजन्मनः। तं दृष्ट्वा विलयं यान्ति पुण्यौघाश्च पुनः पुनः। शङ्खः—अङ्गुष्ठमात्रसुषिरौ कर्णौ न भवतो यदि। तस्मै श्राद्धं न दातव्यं दत्तं चेदासुरं भवेत्। ततो यथोक्तकाले देशकालौ स्मृत्वाऽस्य शिशोः कर्णवेधं करिष्ये इति संकल्प्य कुमारं स्नापयित्वा तस्मै शर्करादि मधुरं दत्त्वा भद्रं कर्णेभिरिति दक्षिणकर्णमभिमन्त्र्य वक्ष्यन्तीवेदेतिमन्त्रेण सव्यकर्णस्याभिमन्त्रणं कुर्यात्। ततः सूच्या दक्षिणकर्णस्य वेधः। ततः सव्यस्य। ततो ब्राह्मणभोजनम्। अत्राभ्युदयिकं केषांचिन्मते नास्ति ॥ * ॥ इति कर्णवेधपदार्थक्रमः ॥ * ॥

( विश्व० )-अथेदानीं नामकर्मनिष्क्रमणिके क्रमेण सूत्रयति 'दशम्या'''करोति' जननाशौचस्य प्रक्रान्तत्वात् तत्प्रतियोगिनी दशमी चरमावस्था तस्यां जातायां सूतके विनष्टे दशाहे निवृत्त इत्यर्थः। तत एकादशेऽहनि सूतिकागृहात्सूतिकामुत्थाप्य स्नापयित्वा नाम करोति जननाशौचत्वाद्ब्रह्मशरीरादिगोचरां शुद्धिं सूतिकायाः संपाद्य पिता नाम करोतीत्यन्वयः। तदुक्तं—अहन्येकादशे नामेति। अत्राप्येकादशाहपदं सूतकान्तोपलक्षणं, तेन क्षत्रियादेरपि सूतकनिवृत्त्यनन्तरमेव नामकरणम्। कथमित्यपेक्षायामाह ब्राह्मणान् भोजयित्वेति। एतस्य नामकरणपूर्वाङ्गत्वादादौ वैश्वदेवपूर्वकमाभ्युदयिकं श्राद्धं कुर्यात्। तत इतरान् ब्राह्मणान्नामकरणाङ्गत्वेन भोजयेत्। कीदृशं तदित्याह 'द्व्यक्षरं'''तद्धितं' अत्राज्झल्समुदायस्याक्षरत्वम्, द्वे अक्षरे यस्य तद्द्व्यक्षरं, चत्वारि अक्षराणि यस्य तत्तादृशं, वाशब्दो विकल्पार्थः। पुनः कीदृशं घोषवदादि घोषवदक्षरं आदौ यस्य तत्तादृशं, वर्गाणां प्रथमद्वितीयाः शषसाश्चाऽघोषाः। तद्भिन्नहलां घोषवत्त्वम्। पुनः कीदृशं 'अन्तरन्तस्थम्' अन्तर्मध्ये अन्तस्था यस्य तत्तादृशम्। यरलवा अन्तस्थाः। पुनः कीदृक् 'दीर्घाभिनिष्ठानं' दीर्घमक्षरमभिनिष्ठानेऽवसाने यस्य तद्दीर्घाभिनिष्ठानं 'कृतं' राशिचक्रादिविचारेण ज्योतिःशास्त्रे कृतं कर्त्तव्यतया बोधितं, अथवा पितामहादेः कृतं यत्प्रपितामहादिभिः, अथवा रामकृष्णादिदेवतासंबन्धि पुराणादौ कृतमिति श्रुतं, यद्वा कृत्प्रत्ययान्तं, कृतमिति क्रियाविशेषणं वा 'कुर्यात्' कुमारस्य दक्षिणं कर्णमभिनिधाय पठेदित्यर्थः। कुमार्यास्तु वामश्रवणे जपेदिति शेषः। 'न तद्धितं' तद्धितप्रत्ययान्तं न कुर्यात्। कुमार्याः कीदृशं नामेत्यत आह 'अयुजाक्षरं' अयुग्माक्षरम्। 'आकारातं' आशब्दः अन्ते यस्य 'तद्धितं' तद्धितान्तं कन्यानाम कुर्यादिति पूर्वानुषङ्गः। अपिच 'शर्म ''वैश्यस्य' ब्राह्मणक्षत्रियविशां नामकीर्तनानन्तरं शर्मवर्मगुप्तेति यथाक्रमं प्रयोगादौ प्रयोक्तव्यम्। यद्वा केषांचिच्छर्मविशेषाः सन्ति। तत्तदुपस्थापकपदप्रयोगानन्तरं शर्मपदं प्रयोगादौ प्रयोक्तव्यम्। यद्वा केषांचित्क्लृप्तम्। एवं क्षत्रियादिरपि वर्मोपस्थापकपदविशेषप्रयोगानन्तरं वर्मेतिपदप्रयोगः। एवं वैश्यस्यापि धनविशेषविषयकरक्षणपदप्रयोगानन्तरं गुप्तेतिपदप्रयोगः। शूद्रस्यापि प्रेष्यत्वप्रतिपादकं दासादिपदं नामकीर्तनानन्तरं प्रयोक्तव्यमिति नामकरणं यथाकुलाचारं वा।

निष्क्रमं सूत्रयति 'चतुर्थे मासि निष्क्रमणिका' निष्क्रमणिकेति कर्मनामधेयं, कदेत्यत उक्तं चतुर्थं मासीति । तदुक्तं चतुर्थे मासि निष्क्रम इति । कथमित्यत आह 'सूर्यमुदीक्षस्वेतिप्रैषपूर्वं कुमारं सूर्यमुदीक्षयति तच्चक्षुरितिमन्त्रेण' । बालकस्यायोग्यत्वात्स्वयं मन्त्रपाठः । कन्यायास्तु सूर्यावेक्षणं तूष्णीम् ॥ १७ ॥ सप्तदशी कण्डिका ॥ * ॥

प्रोष्येत्य गृहानुपतिष्ठते पूर्ववत् ॥ १ ॥ पुत्रं दृष्ट्वा जपति अङ्गादङ्गात्संभवसि हृदयादधिजायसे । आत्मा वै पुत्रनामाऽसि स जीव शरदः शतमिति ॥ २ ॥ अथास्य मूर्द्धानमवजिघ्रति । प्रजापतेष्ट्वा हिंकारेणावजिघ्रामि सहस्रायुषाऽसौ जीव शरदः शतमिति ॥ ३ ॥ गवां त्वा हिंकारेणेति च त्रिर्दक्षिणेऽस्य कर्णे जपति । अस्मे प्रयन्धि मघवन्नृजीषिन्निन्द्ररायोविश्ववारस्य भूरेः । अस्मे शतᳬं शरदो जीवसे धा अस्मै वीराञ्छश्वत इन्द्र शिप्रिन्निति ॥ ४ ॥ इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे । पोषᳬं रयीणामरिष्टिं तनूनाᳬं स्वात्मानं वाचः सुदिनत्वमह्नामिति सव्ये ॥ ५ ॥ स्त्रियै तु मूर्द्धानमेवावजिघ्रति तूष्णीम् ॥ ६ ॥ १८ ॥

( कर्कः )—'प्रोष्येत्य'''पूर्ववत्' । प्रोषितः सन्नेत्य गृहोपस्थानं करोति । पूर्ववद् गृहामाविभीतेति । पुत्रं दृष्ट्वा जपत्यङ्गादङ्गात्संभवसीत्यमुं मन्त्रम् । अथास्य मूर्द्धानमवजिघ्रति प्रजापतेष्ट्वा हिंकारेणेति मन्त्रेण । असाविति तस्यैव नामग्रहणम् । गवां त्वा हिंकारेणेति च त्रिरवघ्राणं करोति । सहस्रायुषेत्यत्राप्यनुषङ्गः । सकृच्च मन्त्रवचनम् । दक्षिणेऽस्य कर्णे जपत्यस्मे प्रयन्धि मघवन्नित्यमुं मन्त्रम् । अस्येति पुत्रोऽभिधीयते । इन्द्र श्रेष्ठानि द्रविणानि धेहीति सव्ये कर्णे जपति । स्त्रियै तु मूर्द्धानमेवावजिघ्रति तूष्णीम् ।

( जयरामः )—प्रोष्य प्रवासं कृत्वा एत्य आगत्य गृहानुपतिष्ठते स्तौति साग्निः । कथम् पूर्ववत् श्रौतवत् । गृहामाविभीतेत्यादित्रिभिर्मन्त्रैरित्यर्थः । तत्र त्रयाणां शंयुर्बार्हस्पत्यः प्रथमस्य विराड्रूपात्रिष्टुप् येषामनुष्टुप् उपहूता महापंक्तिस्त्र्यवसाना तिस्रो वास्तव्यः उपस्थाने० क्षेमायेति प्रवेशनम् । तत्र पुत्रं दृष्ट्वा जपति अङ्गादङ्गादिति मन्त्रम् । अस्यार्थः । तत्र प्रजापतिरनुष्टुप् आयुर्जपे० । हे पुत्र यतस्त्वमङ्गादङ्गात्प्रत्यङ्गात्संभवसि उत्पत्स्यसे हृदयादन्तरङ्गादपि अधि अधिकतया जायसे अतस्त्वं वै निश्चितं पुत्रनामा आत्मा अभिन्नरूपोऽसि । स त्वं शतं शरदो वर्षाणि जीव प्राणिहि । पुत्रमूर्द्धानं शिरः अस्य पुत्रस्यैवावजिघ्रति प्रजापतेष्ट्वेति मन्त्रेण । अस्यार्थः । तत्र परमेष्ठी उष्णिक् प्रजापतिरवघ्राणे० । हेपुत्र प्रजापतेः ब्रह्मणः हिंकारेण स्नेहार्द्रशब्देन सामवेदेन वा त्वा त्वामवजिघ्रामि अतोऽवघ्राणात् हे असौ अमुकशर्मन् असौस्थाने नामादेशः सहस्रायुषा सुबहुजीवनेन शरदः शतमित्युक्तार्थम् । अवघ्राणं च त्रिः सकृन्मन्त्रेण द्विस्तूष्णीम् । गवांत्वेति मन्त्रेण त्रिवारं जिघ्रति । सहस्रायुषेत्यादेरत्राप्यनुषङ्गः तेन प्रजापतिस्थाने गवांत्वेति पदं मन्त्रे पठेदित्यर्थः । दक्षिणे कर्णे जपश्चास्मे प्रयन्धीति मन्त्रेण । तस्यार्थः । तत्र द्वयोः प्रजापतिस्त्रिष्टुप् इन्द्रः कर्णजपे० । हे मघवन् नाकेश ऋजीषिन् स्निग्धचित्त हे इन्द्र लोकेश शिप्रिन् सुखन्‌ लघुहस्तेति वा अस्मे अस्मै कुमाराय इन्द्राय

ऐश्वर्ययुक्तधनानि प्रयन्धि प्रयच्छ । विश्ववारस्य सर्ववरणीयस्य वराणां समूहो वारं सर्वेषां वाराणां समूहः सर्ववारं तस्येति वा भूरेर्बहुतरस्य—अत्र कर्मणि षष्ठी—प्रचुरं सर्ववारं रायं प्रयच्छेत्यर्थः । प्रयोजनमाह अस्मे अस्य शतं शरदो जीवसे जीवनायेति किंच अस्मिन् वीरान्पुत्रान् शश्वतः शाश्वतान् दीर्घायुषः अधाः निधेहि अस्मै देहीत्यर्थः । वामे तु इन्द्रश्रेष्ठानीति मन्त्रेण जपः । अस्यार्थः—हे इन्द्र परमैश्वर्ययुक्त अस्मे अस्मिन् श्रेष्ठानि सुमङ्गलानि द्रव्याणि धेहि स्थापय । चित्तिं ज्ञानम् तनूनामवयवानामरिष्टिं नीरोगत्वं दक्षस्य प्रजापतेरिव सुभगत्वं सौभाग्यं सर्वप्रभुत्वं च धेहि । तथा रयीणां धनाना पोषं पुष्टिम् वाचः वागिन्द्रियस्य स्वात्मानं स्वादुत्वं माधुर्यमिति यावत् । अह्नां दिनानां सुदिनत्वं साफल्यं च धेहीति । स्त्रियै स्त्रियास्तु मूर्द्धावघ्राणमात्रं नत्वन्यत् तदपि तूष्णीं नतु मन्त्रेण ॥१८॥

( हरिहरः )—' प्रोष्येत्य'''पूर्ववत् । प्रोष्य प्रवासादेत्य गृहान् गृहस्थान्भार्यापुत्रादीनुपतिष्ठते प्रार्थयते । कथं ? पूर्ववत् । आहिताग्निप्रवासप्रकरणोक्तवत् । तद्यथा—गृहामाबिभीतेत्यारभ्य उपहूतो गृहेषु न इत्येतावत्पर्यन्तैस्त्रिभिर्मन्त्रैः गृहानुपस्थाय क्षेमाय व इत्यादिना शंय्योरित्यन्तेन मन्त्रेण गृहं प्रविशेत् । केचित्तु सूत्रकारेण गृहोपस्थानमात्रविधानान्मन्त्रवत्प्रवेशं नेच्छन्ति । 'पुत्रं'''शतमिति ' पुत्रमात्मजं दृष्ट्वा विलोक्य अङ्गादङ्गादित्यादिकं मन्त्रं जपति । ' अथा'''घ्रति ' । अथ जपानन्तरमस्य पुत्रस्य मूर्द्धानं शिरः अवजिघ्रति अवाचीनं जिघ्रति । केन मन्त्रेण ? ' प्रजाप'''शतमिति ' अनेन मन्त्रेण सकृत् । असावित्यस्य स्थाने अमुकशर्मन्निति पुत्रनामग्रहणम् । ' गवां'''त्रिः ' प्रजापतेष्ट्वेति सकृदवघ्राणानन्तरं पुनः गवां त्वा हिङ्कारेणावजिघ्रामि सहस्रायुषाऽसौ जीव शरदः शतमिति मन्त्रेण सकृन्मूर्द्धानमवघ्राय द्विस्तूष्णीमवजिघ्रति । 'दक्षिणेऽ'''प्रिन्निति ' अस्य पुत्रस्य दक्षिणे कर्णे अस्मे प्रयन्धीत्यादि इन्द्रशिप्रिन्नित्यन्तं मन्त्रं जपति । ' इन्द्रश्रे'''सव्ये ' सव्ये वामकर्णे इन्द्रश्रेष्ठेत्यादि सुदिनत्वमह्नामित्यन्तं मन्त्रं जपति । ' स्त्रियै ''तूष्णीम् ' स्त्रियाः पुत्रिकायाः मूर्द्धानमेव अवजिघ्रति तूष्णीं विना मन्त्रेण एवकारेण दर्शनजपकर्णजपयोर्निवृत्तिः ॥ १८ ॥ * ॥

( गदाधरः )—' प्रोष्येत्य'''पूर्ववत् ' । साग्निकः प्रवासं कृत्वा एत्य गृहान् गृहस्थितान् भार्यापुत्रादीनुपतिष्ठते तत्समीपे स्थित्वा मन्त्रं पठति पूर्ववत् श्रौतवत् । गृहामाबिभीतेति त्रिभिर्मन्त्रैरित्यर्थः । उपस्थानानन्तरं क्षेमाय व इति प्रवेशनमिति भर्तृयज्ञहरिहरौ । प्रवासश्च साग्निकेन द्रव्यार्जनादिदृष्टकार्यार्थमेव केवलेन पुरुषेण कार्यः । न तु तीर्थयात्राद्यदृष्टकार्यार्थमिति प्रयोगरत्ने । ' पुत्रं'''शतमिति ' पुत्रमात्मजं दृष्ट्वा विलोक्य अङ्गादङ्गादिति मन्त्रं पठति । मन्त्रार्थः—हे पुत्र यतस्त्वमङ्गात्प्रत्यङ्गात्संभवसि उत्पत्स्यसे । हृदयादन्तरङ्गादपि अधिकतया जायसे । अतस्त्वं वै निश्चितं पुत्रनामा आत्माऽभिन्नरूपोऽसि । स त्वं शतं शरदो वर्षाणि जीव प्राणिहि । ' अथा'''शतमिति ' जपोत्तरमस्य पुत्रस्य मूर्द्धानं शिरः अवजिघ्रति । अवाचीनं जिघ्रति प्रजापतेष्ट्वेति मन्त्रेण । असाविति तस्यैव नामग्रहणम् । मन्त्रार्थः—हे पुत्र प्रजापतेर्ब्रह्मणः हिंकारेण स्नेहार्द्रकृतध्वनिविशेषेण सामवेदावयवेन वा त्वा त्वामवजिघ्रामि शिरसि चुम्बामि । अतोऽवघ्राणात् हे असौ अमुकशर्मन् सहस्रायुषा सुबहुजीवनेन शरदः शतमिति उक्तार्थम् । ' गवां'''त्रिः ' गवां त्वेतिच मन्त्रेण त्रिरवजिघ्रति सहस्रायुषेत्यादेरत्राप्यनुषङ्गः । तेन प्रजापतिस्थाने गवां त्वेति पदं मन्त्रे पठेदित्यर्थः ततश्च गवां त्वा हिंकारेणावजिघ्रामि सहस्रायुषाऽमुकशर्मन् जीव शरदः शतमिति मन्त्रेण सकृन्मूर्द्धानमवघ्राय द्विस्तूष्णीमवजिघ्रति । ' दक्षिणे'''शिप्रिन्निति ' अस्य पुत्रस्य दक्षिणे कर्णे अस्मे प्रयन्धि मघवन्निति मन्त्रं जपति । मन्त्रार्थः—हे मघवन् इन्द्र ऋजीषिन् स्निग्धचित्त हे इन्द्र लोकेश शिप्रिन् सुखद लघुहस्तेति वा । अस्मे अस्मै कुमाराय इन्द्रायः ऐश्वर्याणि धनानि च प्रयन्धि प्रयच्छ । विश्ववारस्य सर्ववरणीयस्य वराणां समूहो वारं सर्वेषां वाराणां समूहः सर्ववारं तस्येति वा । भूरेः बहुतरस्य । उभयत्र कर्मणि षष्ठी । प्रचुरसर्व-

वारं रायं प्रयच्छ इत्यर्थः । प्रयोजनमाह । अस्मे अस्य शतं शरदो जीवसे जीवनायेति । किंच अस्मे अस्मिन् वीरान् पुत्रान् शश्वतः शाश्वतान् दीर्घायुषः अधाः निधेहि अस्मै देहीत्यर्थः । 'इन्द्र'''ह्ना-मिति' सव्ये सव्यकर्णे इन्द्रश्रेष्ठानीति मन्त्रं जपति । मन्त्रार्थः—हे इन्द्र परमैश्वर्ययुक्त अस्मे अस्मिन् श्रेष्ठानि सुमङ्गलानि धेहि स्थापय । चित्तिं ज्ञानं दक्षस्य दक्षप्रजापतेरिव सुभगत्वं सौभाग्यं सर्वप्रमुत्वं च धेहि । तथा रयीणां धनानां पोषं पुष्टिं तनूनामवयवानामरिष्टिं नीरोगत्वं वाचः वाण्याः स्वात्मानं स्वादुत्वं माधुर्यमिति यावत् । अह्नां दिनानां सुदिनत्वं साफल्यं च धेहि । 'स्त्रियै'''तूष्णीम्' स्त्रियै स्त्रियाः दुहितुः पुत्रिकायाः मूर्द्धानमेव तूष्णीं जिघ्रति न त्वन्यत् । एव-कारेण दर्शनजपकर्णजपयोर्निवृत्तिरिति हरिहरः । एवकारकरणं कर्णजपप्रतिषेधार्थकमिति भर्तृ-यज्ञः । इति अष्टादशी कण्डिका ॥ १८ ॥

( विश्व० )—प्रवासादागतस्य संजातापत्यस्य विशेषं वक्तुं प्रवासतद्धर्मांशसूत्रणप्रयोज्यमानत्व-मपनेतुं सूत्रयति—'प्रोष्येत्य'''पूर्ववत्' प्रवासं कृत्वा आगत्य आवसथ्यभार्यापुत्रादेर्वास-स्थानान्युपतिष्ठते । कथमित्यत उक्तं 'पूर्ववदिति' पूर्वं कात्यायनसूत्रे यथोक्तं तद्वदित्यर्थः । एतेन कात्यायनगृह्ययोः समानकर्तृकता कात्यायननिष्ठा पूर्वकालता च द्योत्यते । तद्यथा गृहा मा बिभी-तेति गृहानुपैति क्षेमायव इति प्रविशतीति । अत्राप्यावसथ्यनतिमैर्निचावेलं गमनागमनयोः । 'पुत्रं दृष्ट्वा'''शतमिति' पुत्रमात्मजं दृष्ट्वा अङ्गादङ्गादित्यादिकं मन्त्रं जपति । 'अथास्य'''शतमिति' अस्य पुत्रस्य असावित्यत्र संबोधनान्तं पुत्रनामग्रहणम् । सहस्रायुपेत्यनन्तरं गवां त्वा हिंकारेणेति च । अवजिघ्रामीत्यारभ्य समममन्त्रसमुच्चयार्थश्चकारः । अत्रापि मूर्द्ध्नोऽवाचीनं घ्राणम् । पुत्रनामग्रहणं च पूर्ववत् 'त्रिःदक्षिणेस्य'''शिप्रिन्निति' इतिशब्दो मन्त्रसमाप्तिद्योतकः । अस्मेप्रयन्धिमघव-न्नित्यमुं मन्त्रं त्रिर्वारं कुमारस्य दक्षिणे कर्णे जपतीत्यर्थः । 'इन्द्रश्रेष्ठा'''मह्नामितिसव्ये' । सव्ये वामकर्णे इन्द्रश्रेष्ठानिद्रविणानीत्यमुं मन्त्रं त्रिः पठतीत्यर्थः । 'स्त्रियै तु मूर्द्धानमेवावजिघ्रति तूष्णीम्' एवकारः कर्णजपव्यवच्छेदार्थः । अष्टादशी कण्डिका ॥ १८ ॥

षष्ठे मासेऽन्नप्राशनम् ॥ १ ॥ स्थालीपाकꣳ श्रपयित्वाऽऽज्यभागा-विष्ट्वाऽऽज्याहुती जुहोति देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु स्वाहेति ॥ २ ॥ वाजो नो अद्येति च द्वितीयाम् ॥ ३ ॥ स्थालीपाकस्य जुहोति प्राणेनान्नमशीय स्वाहाऽपानेन गन्धानशीय स्वाहा चक्षुषा रूपाण्यशीय स्वाहा श्रोत्रेण यशोऽशीय स्वाहेति ॥ ४ ॥ प्राशनान्ते सर्वान् रसान्त्सर्व-मन्नमेकत उद्धृत्याथैनं प्राशयेत् ॥ ५ ॥ तूष्णीꣳहन्तेति वा हन्तकारं मनुष्या इति श्रुतेः ॥ ६ ॥ भारद्वाज्यामाꣳसेन वाक्प्रसारकामस्य ॥ ७ ॥ कपिञ्जलमाꣳसेनान्नाद्यकामस्य ॥ ८ ॥ मत्स्यैर्जवनकामस्य ॥ ९ ॥ कृकषाया आयुष्कामस्य ॥ १० ॥ आट्या ब्रह्मवर्चसकामस्य ॥ ११ ॥

**सर्वैः सर्वकामस्य ॥ १२ ॥ अन्नपर्याय वा ततो ब्राह्मणभोजनमन्नपर्याय वा ततो ब्राह्मणभोजनम् ॥ १३ ॥ ॥ १९ ॥ ॥ ७ ॥**

( कर्कः )—'षष्ठे मासेऽन्नप्राशनम्' कुमारस्य कर्तव्यमिति सूत्रशेषः। 'स्थालीपाकं͡͡...द्वितीयाम्' चशब्दात्पूर्वया च स्थालीपाकस्य जुहोति। प्राणेनान्नमशीय स्वाहेति प्रतिमन्त्रं चतुर्भिः। ततः स्विष्टकृदादि । 'प्राशनान्ते...श्रुतेः' विकल्पोऽयं सर्वे रसाः कटुतिक्तादयः सर्वमन्नं च शालिसूपापूपादि। एकत इत्येकपात्रोद्धरणम् । 'भारद्वा...कामस्य' भारद्वाजी पक्षिविशेषस्तस्य मांसेन वाग्मीकुमारःस्यादित्येवंकामस्य प्राशनम्। 'कपिञ्जलमांसेनान्नाद्यकामस्य' 'मत्स्यैर्जवनकामस्य' जवनो वेगोऽभिधीयते। 'कृकषाया आयुःकामस्य' कृकषेति कङ्कणहारिकोच्यते। तन्मांसेनायुःकामस्य। 'आट्या ब्रह्मवर्चसकामस्य' आटीनाम जलचरः पक्षी तस्य मांसेन ब्रह्मवर्चसकामस्य प्राशनम्। 'सर्वैः सर्वकामस्य' य एतान्सर्वान्कामान्कामयते तस्य सर्वैरेतैर्मांसैः प्राशनं कारयेत् 'अन्नपर्याय वा' अन्नपरिपाट्या वैकीकृत्य सर्वमांसानि प्राशयेत्। 'ततो ब्राह्मणभोजनमित्युक्तार्थम्।'

इति श्रीकर्कोपाध्यायकृते गृह्यसूत्रभाष्ये प्रथमकाण्डविवरणं सपूर्णम् ॥ १९ ॥

( जयरामः )—षष्ठे मासे कुमारस्यान्नप्राशनाख्यं कर्म कार्यमिति शेषः। 'श्रपयित्वेति' सिद्धस्यासादनव्युदासार्थम् । आज्यभागान्ते देवीं वाचमित्यनेन मन्त्रेणैकामाज्येनाहुतिं जुहोति। द्वितीयां तु देवीवाचमिति चशब्दाद्वाजोन इत्येताभ्यां मन्त्राभ्यां जुहोति। अथ मन्त्रार्थः—तत्र प्रजापतिस्त्रिष्टुप् वाक् आज्यहोमे०। देवीं द्युतिमतीं वाचं वाणीं देवाः प्राणादिवायवः। अजनयन्त उत्पादितवन्तः। ततस्तां वाचमैश्वर्याख्यां पशवो मनुष्यादयो वदन्ति। पशुरेवं स देवानामिति श्रुतेः। सा वाक् नोऽस्मान् उपैतु संनिहिताऽस्तु। किंभूता मन्द्रा हर्षकरी। इषं रसम् ऊर्जमन्नादीनि च दुहाना। सुष्टुता शोभनैर्मन्त्रैस्तद्द्रष्टृभिर्वा स्तुता नुता। तत्र दृष्टान्तः वत्सान्धेनुरिवेति। 'वाजो नो इति' अस्य प्रजापतिरनुष्टुप् अन्नं तत्प्राशनाङ्गहोमे०। स्थालीपाकस्येत्यवयवलक्षणा षष्ठी। ततः चतस्र आहुतीः प्रतिमन्त्रम्। मन्त्रार्थः सुगमः। तद्यथा प्राणेन वायुना अन्नमशीय अश्नानि। एवमुपर्यपि। ततः स्विष्टकृदादि प्राशनान्तम्। एकत इत्यत्र संधिश्छान्दसः। एकस्मिन्पात्रे एकीकृत्येत्यर्थः। 'हन्तेति' मन्त्रेण वेति विकल्पः। भारद्वाजी पक्षिविशेषः तस्य मांसेन वाक्प्रसारः अयं कुमारो वाग्मी स्यादित्येवंकामो यस्मिन्कुमारे तस्य प्राशनं कपिञ्जलस्तित्तिरो वेति मयूरो वा कृकषा कङ्कणहारिका। आटी प्लवविशेषः। 'सर्वैरिति' य एतान्सर्वान्कामान् कामयते तस्य सर्वैरेतैरेव मांसैर्व्यस्तैः समस्तैर्वा प्राशनं कारयेत्। ततस्तैः सर्वै रसैः सर्वान्नैश्च प्राशनम्। 'अन्नपर्याय वेति' छान्दसम्। अन्नपरिपाट्या सर्वान्नैः सर्वरसैश्च सर्वमांसान्येकीकृत्य प्राशयेद्वा। 'ततो ब्राह्मणभोजनम्' इत्युक्तार्थम्। तत्पदावृत्तिः काण्डपरिसमाप्तिप्रज्ञापनार्थम् ॥ १९ ॥

इत्याचार्यजयरामकृते गृह्यभाष्ये सज्जनवल्लभाख्ये प्रथमकाण्डविवरणं समाप्तिमगमत् ॥ ॰ ॥

( हरिहरः )—'षष्ठे मासेऽन्नप्राशनम्' जन्मतः षष्ठे मासे कुमारस्य अन्नप्राशनं कर्म कुर्यात्। 'स्थालीपाकं͡͡...जुहोति' अन्नप्राशनस्येतिकर्तव्यताविशेषमाह स्थालीपाकं चरुं यथाविधि श्रपयित्वा आधारावाज्यभागौ हुत्वा द्वे आहुती जुहोति। देवीं वाचमित्यादि वाजोनो अद्येति च द्वितीयाम्' इत्यन्तं सूत्रम्। आज्येन देवीं वाचमित्यादिकया ऋचा एकामाहुतिं जुहुयात्। इदं वाचे इति त्यागं विधाय चकारात्पुनर्देवीं वाचमित्येतस्यान्ते वाजो नः। यथा देवीं वाचमिति वाजो नो अद्येति च द्वाभ्यामृग्भ्यां द्वितीयामाज्याहुतिं हुत्वा इदं वाचे वाजाय चेति त्यागं कुर्यात्। 'स्थाली-

पाकस्य जुहोति ' स्थालीपाकस्य चरोः प्राणेनान्नमशीयेत्यादिभिश्चतुर्भिर्मन्त्रैश्चतस्र आहुतीर्जुहोति ततः स्विष्टकृदादि प्राशनान्तं विधाय । ' सर्वान्'''इति श्रुतेः ' सर्वान् मधुरादीन् रसान्सर्वमन्नं भक्ष्यभोज्यलेह्यपेयचोष्यादि । एकतोद्धृत्येत्यत्र विसर्जनीयलोपेऽपि पुनः सन्धिरार्षः पृथगुकारोच्चारणं वा । एकतः एकस्मिन्पात्रे उद्धृत्य कृत्वा अथानन्तरमेनं कुमारं प्राशयेत् तूष्णीं मन्त्ररहितं हन्तेति वा मन्त्रेण । कुतः हन्तकारं मनुष्या उपजीवन्ति इति श्रवणात् । ' भारद्वाज्या'''पर्याय वा ' अत्र गुणफलमाह भारद्वाज्याः पक्षिण्याः मांसेन कुमारस्य प्राशनं कारयितव्यम् । यदीयं कामना भवति कस्य पितुः कथंभूतस्य वाक्प्रसारकामस्य वाचः प्रसारो बहुत्वं तत्कुमारस्य कामयते इति वाक्प्रसारकामः तस्य कर्तरि षष्ठी कृत्यप्रत्ययान्तत्वात् । एवमन्नाद्यकामस्य कपिञ्जलमांसेन एवमुत्तरत्रापि । अयमर्थः—यदि कुमारस्य अयं वाग्मी स्यादिति कामयेत्तदा भारद्वाज्या मांसं प्राशयेत् । यदि कुमारोऽन्नादः स्यादिति कामयेत्तदा कपिञ्जलमांसं प्राशयेत् । कपिञ्जलः कारण्डवो भैरिवीं मयूरो वा केचित्तित्तिरो वेति । यदि कुमारोऽयं जवनः शीघ्रगामी स्यात्तदा यथासंभवं मत्स्यान्प्राशयेत् । स यदि कुमारो दीर्घायुः स्यादिति कामयेत् तदा कृकषाया मांसं प्राशयेत् । यदि कुमारो ब्रह्मवर्चस्वी स्यादिति कामयेत्तदा आट्या मांसं प्राशयेत् । यदि वाक्प्रसारादीनि ब्रह्मवर्चसान्तानि सर्वाणि कुमारस्य भवन्त्विति कामयेत्तदा भारद्वाज्यादीनामाट्यन्तानां सर्वाणि मांसानि क्रमेण प्राशयेत्। अन्नपर्याय वा अन्नपरिपाट्या वा अन्नवदेकीकृत्य प्राशयेदित्यर्थः । अन्नपर्यायेति अविभक्तिकमार्षं पदम् । ' ततो ब्राह्मणभोजनम् ' ततः कर्मसमाप्तौ एकस्य ब्राह्मणस्य भोजनं कारयितव्यम् । अत्र काण्डपरिसमाप्तौ द्विरुक्तिः । यथा कात्यायनसूत्रे अध्यायपरिसमाप्तौ उपस्पृशेदप उपस्पृशेदप इति सूत्रार्थः ॥ ॥ अथान्नप्राशनप्रयोगः—कुमारस्य षष्ठे मासे चन्द्रतारानुकूले शुभे दिने मातृपूजापूर्वकं नान्दीमुखश्राद्धं विधाय पञ्च भूसंस्कारान्कृत्वा लौकिकाग्निं स्थापयित्वा ब्रह्मोपवेशनाद्याज्यभागान्तं विदध्यात् । तत्र आज्येन देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु स्वाहेति प्रथमाम् । इदं वाचे इति त्यागं विधाय पुनर्देवीं वाचमित्येतस्यान्ते वाजो नो अद्य प्रसुवातिदानं वाजो देवाँ ऋतुभिः कल्पयाति । वाजो हि मा सर्ववीरं जजान विश्वा आशा वाजपतिर्जयेयꣳस्वाहेति द्वितीयाम् । इदं वाचे वाजायेति च त्यागं कुर्यात् । अथ स्थालीपाकेन चतस्र आहुतीर्जुहोति तद्यथा । प्राणेनान्नमशीय स्वाहा इदं प्राणाय० । अपानेन गन्धानशीय स्वाहा । इदमपानाय० । चक्षुषा रूपाण्यशीय स्वाहा । इदं चक्षुषे० । श्रोत्रेण यशोऽशीय स्वाहा । इदं श्रोत्राय० । ततः स्थालीपाकेन स्विष्टकृतं हुत्वा महाव्याहृत्यादिप्राजापत्यान्ता नवाहुतीराज्येन हुत्वा संस्रवप्राशनम् । दक्षिणादानान्तं कृत्वा सर्वान् रसान्सर्वं चान्नमेकस्मिन् पात्रे समुद्धृत्य सकृदेव कुमारं तूष्णीं प्राशयेत् । हन्तेति वा मन्त्रेण । स यदि कुमारस्य वाग्मित्वमिच्छेत्तदा भारद्वाज्या मांसं प्राशयेत् । यद्यन्नाद्यत्वं कामयेत्तदा कपिञ्जलमांसं, यदि जवनत्वं तदा मत्स्यमांसं, यदि दीर्घायुष्ट्वं तदा कृकषायाः मांसं, यदि ब्रह्मवर्चसं तदा आट्या मांसं, यदि सर्वकामस्तदा सर्वमांसानि क्रमेण प्राशयेत् । एकीकृत्य वा । अस्य कर्मणः समृद्ध्यर्थं ब्राह्मणमेकं भोजयिष्ये इति संकल्प्य ब्राह्मणं भोजयेत् । इत्यन्नप्राशनम् ।

इत्यग्निहोत्रिहरिहरविरचितायां पारस्करगृह्यसूत्रव्याख्यानपूर्विकायां प्रयोगपद्धतौ प्रथमः काण्डः ॥ * ॥

( गदाधर० )—' षष्ठे मासेऽन्नप्राशनम् ' जन्मतः षष्ठे मासे कुमारस्यान्नप्राशनाख्यं कर्म कुर्यात् । नारदः—जन्मतो मासि षष्ठे स्यात् सौरेणान्नाशनं परम् । तदभावेऽष्टमे मासि नवमे दशमेऽपि वा । द्वादशे वाऽपि कुर्वीत प्रथमान्नाशनं परम् । संवत्सरे वा संपूर्णे केचिदिच्छन्ति पण्डिताः । षष्ठे वाऽप्यष्टमे मासि पुंसां स्त्रीणां तु पञ्चमे । सप्तमे मासि वा कार्यं नवान्नप्राशनं शुभम् । रिक्तां दिन-

क्षयं नन्दां द्वादशीमष्टमीममाम् । त्यक्त्वाऽन्यतिथयः प्रोक्ताः सितजीवज्ञवासराः । चन्द्रवारं प्रशंसन्ति कृष्णे चान्त्यत्रिकं विना । श्रीवरः—आदित्यतिष्यवसुसौम्यकरानिलाश्विचित्राजविष्णुवरुणोत्तरपौष्णमित्राः । बालान्नभोजनविधौ दशमे विशुद्धे छिद्रां विहाय नवमीं तिथयः शुभाः स्युः । वसिष्ठः—बालान्नभुक्तौ व्रतबन्धने च राजाभिषेके खलु जन्मधिष्ण्यम् । शुभं त्वनिष्टं सततं विवाहे सीमन्तयात्रादिषु मङ्गलेषु । 'स्थालीपा···जुहोति ' स्थालीपाकं चरुं यथाविधि श्रपयित्वाऽऽज्यभागौ हुत्वा द्वे आज्याहुती वक्ष्यमाणैर्मन्त्रैर्जुहोति । 'देवीं वाच···द्वितीयाम् ' द्वे आहुती जुहोतीत्युक्तं तत्र देवीं वाचमजनयन्त इति मन्त्रेणैकामाहुतिं जुहोति । वाजो नो अद्येति च द्वितीयां, चशब्दात्पूर्वया ऋचा सह वाजोनो अद्येत्यनया द्वितीयामाहुतिं जुहोति । ततश्च देवीं वाचमिति वाजो नो अद्येति च द्वाभ्यामृग्भ्यां द्वितीयामाहुतिं जुहोतीत्यर्थः । मन्त्रार्थः—देवीं देवसंबन्धिनीं वाचं वाणीं देवाः प्राणादिवायवः अजनयन्त उत्पादितवन्तः ततस्तां देवीं वाचं विश्वरूपाः नानारूपा ऋषिमुनिब्राह्मणादयः पशवः संसरणत्वाद्वदन्ति । पशुरेवं स देवानामिति श्रुतेः । सा नो अस्मान् उपैतु संनिहिताऽस्तु । किंभूता मन्द्रा हर्षकरी । इषं रसं ऊर्जं अन्नादि च दुहाना । सुष्टुता शोभनैर्मन्त्रैः तद्द्रष्टृभिर्वा स्तुता । तत्र दृष्टान्तः । वत्सान् धेनुरिवेति । 'स्थालीपा···स्वाहेति ' स्थालीपाकस्येत्यवयवलक्षणा षष्ठी । स्थालीपाकस्य चरोः प्राणेनान्नमशीय स्वाहेति प्रतिमन्त्रं चतुर्भिर्मन्त्रैश्चतस्र आहुतीर्जुहोति । ततः स्विष्टकृदादिप्राशनान्तम् । मन्त्रार्थः—प्राणेन वायुनाऽन्नमशीय अहं प्राप्नुयाम् लभेयम् । अपानेन वायुना गन्धान् परिमलान् लभेयम् । एवमग्रेऽपि योज्यम् । 'प्राशनान्ते···श्रुतेः ' प्राशनान्ते कर्मणि सर्वान् रसान् कटुमधुरतिक्तकषायादीन् सर्वमन्नं भक्ष्यं भोज्यं लेह्यं चोष्यं पेयं चैकतां एकस्मिन् सुवर्णादिपात्रे उद्धृत्याथैनं कुमारं तस्मादन्नं गृहीत्वा तूष्णीं प्राशयेत् । हन्तेति मन्त्रेण वा प्राशयेत् । तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं वषट्कारं च, हन्तकारं मनुष्याः स्वधाकारं पितर इति श्रवणात् । श्रुतिरपि च लिङ्गभूता स्मरणस्य द्योतिका भवति । नन्वग्रमुद्धृत्य ब्राह्मणाय दीयते तत्र कृतार्थमेतद्दर्शनमिति चेन्नैवम् । उभयोर्द्योतिका भविष्यति । एकतोद्धृत्येत्यत्र छान्दसः संधिः । मार्कण्डेयः—देवतापुरतस्तस्य धात्र्युत्सङ्गगतस्य च । अलंकृतस्य दातव्यमन्नं पात्रे सकाञ्चनम् । मध्वाज्यदधिसंयुक्तं प्राशयेत्पायसं तु वेति । गुणफलमाह 'भारद्वाज्या···कामस्य ' । भारद्वाजी पक्षिणीविशेषः 'चिठीकेति प्रसिद्धा ' तस्याः मांसेन वाक्प्रसारः अयं कुमारो वाग्मी स्यादित्येवं कामो यस्मिन् कुमारे तस्य प्राशनं कुर्यात् । 'कपिञ्ज···कामस्य ' कपिञ्जलः पक्षिविशेषः प्रसिद्धः । यद्ययं कुमारोऽन्नादः स्यादिति कामयेत्तदा कपिञ्जलमांसेन प्राशनं कुर्यात् । एव मग्रेऽपि योज्यम् । 'मत्स्यै···मस्य ' जवनः शीघ्रगामी स्यादिति कामयेत् तदा मत्स्यानां मांसेन प्राशनं कुर्यात् । 'कृकषा···मस्य ' कृकषा कङ्कणहारिका तन्मांसेन दीर्घायुष्कामस्य प्राशनम् । 'आट्या···मस्य ' आटिर्जलचरः पक्षी तन्मांसेन ब्रह्मवर्चसकामस्य प्राशनं कुर्यात् । 'सर्वैः सर्वकामस्य ' यो वाक्प्रसारादिसर्वान्कामान् कामयते तस्य भारद्वाज्यादिसर्वैर्मांसैः क्रमेण प्राशनं कुर्यात् । मिश्रैः प्राशनमिति भर्तृयज्ञाः । 'अन्नपर्यो···भोजनम् ' अन्नपरिपाट्या वाऽन्नवत् सर्वमांसान्येकीकृत्य प्राशयेदित्यर्थः । अन्नपरिपाट्या वा क्रमेण प्राशयेन्नैकत उद्धृत्येति भर्तृयज्ञाः । अन्नपर्येत्यविभक्तिकं छान्दसं पदम् । तत इत्युक्तार्थम् । द्विरुक्तिः काण्डसमाप्तिसूचनार्था ॥ ॥ * ॥

इति श्रीत्रिरग्निचित्सम्राट्स्थपतिश्रीमहायाज्ञिकवामनात्मजदीक्षितगदाधरकृते गृह्यसूत्रभाष्ये प्रथमकाण्डे एकोनविंशीकण्डिका ॥ १९ ॥

अथ पदार्थक्रमः—जन्मतः षष्ठे मासे रेवत्यश्विनीरोहिणीमृगशिरःपुनर्वसुपुष्यहस्तचित्राश्रवणधनिष्ठोत्तरात्रयेषु बुधजीवभानुवारेषु शुभे चन्द्रे पूर्वाह्ने पित्रादिः शिशोरन्नप्राशनं कारयेत् । षष्ठे

च क्रियते तदा गुरुशुक्रभौमादिदोषोऽधिकमासादिदोषश्च नास्ति । पित्रादिः सभार्यः शिशोर्मङ्गलस्नानं कारयित्वा देशकालौ स्मृत्वा ममास्य शिशोर्मातृगर्भमलप्राशनशुद्ध्यन्नाद्यब्रह्मवर्चसतेजइन्द्रियायुर्लक्षणफलसिद्धिवीजगर्भसमुद्भवैनोनिवर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थमस्य कुमारस्यान्नप्राशनाख्यं कर्माहं करिष्ये । ततः स्वस्तिवाचनाभ्युदयिके कृत्वा पञ्च भूसंस्कारान्कृत्वा लौकिकाग्नेः स्थापनम् । वैकल्पिकावधारणे हन्तेति प्राशनमिति विशेषः । ततो ब्रह्मोपवेशनाद्याज्यभागान्तं तत आज्येन देवीं वाचमिति प्रथमाहुतिः । इदं वाचे नमम । पुनर्देवीं वाचं वाजो नो अद्येति मन्त्राभ्यां आज्येन द्वितीयाहुतिः । इदं वाचे वाजाय नमम । ततः स्थालीपाकेन चतस्र आहुतयः । प्राणेनान्नमशीय स्वाहा इदं प्राणाय न० । अपानेन गन्धानशीयस्वाहा इदमपानाय० । चक्षुषा रूपाण्यशीय स्वाहा इदं चक्षुषे न० । श्रोत्रेण यशोऽशीय स्वाहा इदं श्रोत्राय न० । ततः स्थालीपाकेन स्विष्टकृद्धोमः । ततो महाव्याहृत्यादिप्राजापत्यान्ता नवाहुतयः । ततः संस्रवप्राशनम् । पवित्राभ्यां मार्जनम् । पवित्रप्रतिपत्तिः । ब्रह्मणे पूर्णपात्रदानम् । प्रणीताविमोकः । ततः सर्वान्रसान्सर्वमन्नं चैकस्मिन्पात्रे उद्धृत्य सकृदेव हन्तेति मन्त्रेण कुमारं प्राशयेत् । काम्यं यथोक्तम् । एकब्राह्मणभोजनम् । ततो दशब्राह्मणभोजनम् । बालं भूमावुपवेश्य तदग्रे पुस्तकवस्त्रशस्त्रादिशिल्पानि विन्यस्य जीविकापरीक्षां कुर्यात् । शिशुः स्वेच्छया यत्प्रथमं स्पृशेत्साऽस्य जीविकेति विद्यात् । तदुक्तं कारिकायाम्—कृतप्राशनमुत्सङ्गाद्धात्री बालं समुत्सृजेत् । कार्यं तस्य परिज्ञानं जीविकाया अनन्तरम् । देवताग्रेऽथ विन्यस्य शिल्पभाण्डानि सर्वशः । शास्त्राणि चैव शस्त्राणि ततः पश्येत्तु लक्षणम् । प्रथमं यत्स्पृशेद्बालस्ततो भाण्डं स्वयं तदा । जीविका तस्य बालस्य तेनैवेति भविष्यति । गर्भाधानादिका अन्नप्राशनान्ता मलिम्लुचे । आकर्णवेधाः स्युः क्रिया नान्या इत्याह भास्करः । कुमार्या अप्येतदमन्त्रकं कार्यम् । इत्यन्नप्राशने पदार्थक्रमः ॥ ॥ गर्गमते प्राणापानाय चक्षुषे श्रोत्राय जुष्टं गृह्णामीति चरुग्रहणम् । प्रोक्षणे त्वाधिकः । अन्यत्समानम् ॥ ॥ अथ वर्द्धापनविधिः । आदित्यपुराणे—सर्वैश्च जन्मदिवसे स्नातैर्मङ्गलवारिभिः । गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नत इति । स्वनक्षत्रं च पितरस्तथा देवः प्रजापतिः । प्रतिसंवत्सरं यत्नात्कर्तव्यश्च महोत्सवः । स्वनक्षत्रं स्वनक्षत्रदेवता । स्वनक्षत्रं वित्तपश्चेति क्वचित्पाठः । तदा वित्तपः कुबेरः ॥ ॥ अथ प्रयोगः—तत्र वर्षपर्यन्तं प्रतिमासं ततः प्रतिवर्षं तिलतैलेनैव स्नात्वा शुक्लवस्त्रयुगं परिधायाचान्तो गृहाभ्यन्तरत उपविश्य कुशायवजलान्यादाय ॐ अद्य मदीयजन्मदिने दीर्घायुष्यकामो मार्कण्डेयादीनां पूजनमहं करिष्य इति संकल्प्य तत्र निर्विघ्नार्थं गणपतिपूजनमहं करिष्ये । ॐ गणपतयेनमः इति गन्धादीनि दत्त्वा प्रणम्य गणपते क्षमस्वेति विसर्जयेत् । एवम् गौरीं पद्मां शचीं मेधां सावित्रीं विजयां जयां देवसेनां स्वधां स्वाहां मातृः लोकमातृः धृतिं पुष्टिं तुष्टिं आत्मनः कुलदेवतां पूजयेत् । ततो घृतेन वसोर्द्धारां कुर्यात् । ततः ॐ गणपतये नमः दुर्गायै नमः कुलदेवतायै नमः गुरुभ्यो नमः देवताभ्यो नमः अग्नये नमः विप्रेभ्यो नमः मातृभ्यो नमः पितृभ्यो नमः सूर्याय नमः चन्द्राय नमः मङ्गलाय नमः बुधाय नमः बृहस्पतये नमः शुक्राय नमः शनैश्चराय नमः राहवे नमः केतवे नमः पञ्चभूतेभ्यो नमः कालाय नमः युगाय नमः संवत्सराय नमः मासाय नमः पक्षाय नमः अस्मज्जन्मतिथये नमः अस्मज्जन्मनक्षत्राय नमः अस्मज्जन्मराशये नमः शिवायै नमः संभूत्यै नमः प्रीत्यै नमः संतत्यै नमः अनुसूयायै नमः क्षमायै नमः विष्णवे नमः भद्रायै नमः इन्द्राय नमः अग्नये न० यमाय न० निर्ऋतये न० वरुणाय न० वायवे न० धनदाय न० ईशानाय न० अनन्ताय न० ब्रह्मणे नमः इति संपूज्य । षष्ठिके इहागच्छेह तिष्ठेत्यावाह्य पाद्यादिकं दत्वा ॐ जगन्मातर्जगद्धात्रि जगदानन्दकारिणि । प्रसीद मम कल्याणि नमोऽस्तु षष्ठिदेवते । इति मन्त्रेण पुष्पाञ्जलित्रयेण संपूज्य गन्धादिकं दत्त्वा

वरं प्रार्थयेत्। रूपं देहि यशो देहि भद्रं भगवति देहि मे। पुत्रान्देहि धनं देहि सर्वान्कामाँश्च देहि मे। इति वरं प्रार्थ्य प्रणम्य विसर्जयेत्। ततश्चन्दनेनाष्टदलं कृत्वा अक्षतानादाय ॐ भगवन्मार्कण्डेय इहागच्छेह तिष्ठेत्यावाह्य स्थापयित्वा पाद्यादीनि दत्त्वा इदमनुलेपनम् ॐ मार्कण्डेयाय नमः इति चन्दनं दत्त्वा। ॐ आयुःप्रद महाभाग सोमवंशसमुद्भव। महातपो मुनिश्रेष्ठ मार्कण्डेय नमोऽस्तु ते। इति पुष्पाञ्जलित्रयेण संपूज्य गन्धादीनि दत्त्वा वरं प्रार्थयेत्। ॐ मार्कण्डेयाय मुनये नमस्ते महदायुषे। चिरजीवी यथा त्वं भो भविष्यामि तथा मुने। मार्कण्डेय महाभाग सप्तकल्पान्तजीवन। आयुरारोग्यसिद्ध्यर्थमस्माकं वरदो भव। नराणामायुरारोग्यैश्वर्यसौख्यैः सुखप्रदः। सौम्यमूर्ते नमस्तुभ्यं भृगुवंशवराय च। महातपो मुनिश्रेष्ठ सप्तकल्पान्तजीवन। मार्कण्डेय नमस्तुभ्यं दीर्घायुष्यं प्रयच्छ मे। मार्कण्डेय महाभाग प्रार्थये त्वां कृताञ्जलिः। चिरजीवी यथा त्वं भो भविष्येऽहं तथा मुने। इति वरं प्रार्थ्य प्रणम्य। अश्वत्थाम्ने नमः बलये नमः व्यासाय न० हनूमते न० विभीषणाय नमः कृपाय नमः परशुरामाय० कार्तिकेयाय० जन्मदेवतायै० स्थानदेवतायै० प्रत्यक्षदेवतायै० वासुदेवाय० क्षेत्रपालाय० पृथिव्यै० अद्भ्यो नमः तेजसे० वायवे० आकाशाय०। इत्यष्टदिग्भागे संपूज्य। प्रीयन्तां देवताः सर्वाः पूजां गृह्णन्तु ता मम। प्रयच्छन्त्वायुरारोग्यं यशः सौख्यं च संपदः। मन्त्रहीनं भक्तिहीनं क्रियाहीनं महामुने। यदर्चितं मया देव परिपूर्णं तदस्तु मे। इति पठित्वा तिलवपनम्। ब्राह्मणाय तिलदानम्। देयद्रव्याणि संपूज्य कुशत्रयतिलजलान्यादाय अद्य मदीयजन्मदिने दीर्घायुष्ट्वकाम एतांस्तिलान् सोमदैवतान् यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृजे इति दद्यात्। ततो घृताक्ततिलैर्व्याहृतिभिर्होमः। ततः पयसा सर्वभूतेभ्यो नम इति बलिं दद्यात्। तण्डुलेभ्यो नमः इति संपूज्य जलेन सिक्त्वा कुशत्रयतिलजलान्यादाय अद्य मदीयजन्मदिने दीर्घायुष्ट्वकाम एतान् सोपकरणान् तण्डुलान् यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृजे। घृताय नम इति घृतं संपूज्य जलेन सिक्त्वा अद्य मदीयजन्मदिने दीर्घायुष्ट्वकाम इदं घृतं प्रजापतिदैवतं यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृजे। ततस्तिलगुडसहितदुग्धपानम्। तत्र मन्त्रः—अञ्जल्यर्द्धमितं क्षीरं सतिलं गुडमिश्रितम्। मार्कण्डेयवरं लब्ध्वा पिबाम्यायुष्यहेतवे। इति तिलगुडसहितं दुग्धं पीत्वाऽऽचम्य। मार्कण्डेयाय नमः गोभ्यो नमः ब्राह्मणेभ्यो नमः इति प्रणम्य मार्कण्डेय क्षमस्वेति विसर्जयेत्। अश्वत्थामा बलिर्व्यासो हनूमाँश्च विभीषणः। कृपः परशुरामश्च सप्तैते चिरजीविनः। सप्तैताँश्च स्मरेन्नित्यं मार्कण्डेयमथाष्टमम्। जीवेद्वर्षशतं साग्रमपमृत्युविवर्जितः। इति वचनादश्वत्थामादिमार्कण्डेयान्तानष्टौ स्मरेत्। इदं च वर्द्धापनं यदि जन्ममासोऽसङ्क्रान्तस्तदा शुद्धमास एव कार्यं नत्वधिके। इदं वर्द्धापनं यावद्बाल्यं पित्रादिभिः कार्यम्। पश्चात्तु प्रतिवर्षं स्वयमेवेति। ग्रन्थान्तरे तु—माङ्गल्यस्नानं कृत्वा कुमुदादिदेवताः संपूज्य यथाशक्ति ब्राह्मणभोजनं दक्षिणां च दत्त्वा सुवासिनीभिर्नीराजितो धृतनूतनवस्त्रो ब्राह्मणीभ्यः शिशुभ्यश्चापूपपूरिकाः साज्याः कुमुदादिप्रीतये आयुर्वृद्धये च वायनादि दद्यात्। जन्मर्क्षदेवताप्रीत्यै च दद्यात्। वर्षान्ते सुदृढद्वादशवंशपेटिकाः सुमोदकादिखाद्यं निधाय नूतनवस्त्राच्छादिताः जीवत्पतिपुत्राभ्यो दत्त्वा तदाशिषो गृह्णीयात्। इदं सर्वं जीवन्ती मातैवापत्यायुषे कुर्यात्।

इति श्रीत्रिरग्निचित्सम्राट्स्थपतिश्रीमहायाज्ञिकवामनात्मजदीक्षितगदाधरकृते गृह्यसूत्रभाष्ये प्रथमकाण्डं समाप्तम्।

( विश्व० )—अन्नप्राशनं सूत्रयति 'षष्ठे...शनमिति' इति। कथमित्यत आह 'स्थाली...जुहोति' स्थालीपाकमिति परिभाषाशास्त्रमाक्षिप्यते। अतः वैश्वदेवपूर्वं मातृपूजाभ्युदयिके विधायोपलिप्त उद्धतावोक्षिते लौकिकाग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्येत्यारभ्य

स्थालीपाकं परिभाषोक्तविधिना पक्त्वा आज्यभागौ हुत्वा वक्ष्यमाणमन्त्राभ्यां द्वे आज्याहुती जुहोतीत्यर्थः । तत्र विशेषः । प्राणायापानाय चक्षुषे श्रोत्राय जुष्टं गृह्णामि प्रोक्षणे चतुर्थ्यनन्तरं त्वा जुष्टं प्रोक्षामीत्यर्थः । आज्याहुत्योर्मन्त्रावाह 'देवीं वाच'''द्वितीयाम्' इति सूत्रम् । द्वितीये मन्त्रे आद्यस्य समुच्चयार्थश्चकारः । तथाच देवींवाचमित्यारभ्य सुष्टुतैतु स्वाहेत्यन्तेनैकामाहुतिं हुत्वेदं वाच इति त्यागं विधाय वाजोनो अद्येति देवीं वाचमिति च द्वाभ्यां द्वितीयाहुतिहोमः । इदं वाजाय वाच इति त्यागः । चकाराच्छेषत्वे शेषे पाठः । 'स्थालीपाक'''शीयस्वाहेति' । चरोः स्थालीपाकाऽवयवमादाय प्राणेनान्नमशीयेत्यादिभिश्चतुर्भिर्मन्त्रैश्चतस्र आहुतीर्जुहोति । प्रयोगश्चैवं—प्राणेनान्नमशीय स्वाहा इदं प्राणाय । अपानेन गन्धानशीय स्वाहा इदमपानाय । चक्षुषा रूपाण्यशीय स्वाहा इदं चक्षुषे । श्रोत्रेण यशोऽशीय स्वाहा इदं श्रोत्राय । 'प्राशनान्ते'''श्रुतेः' प्राशनान्ते स्विष्टकृद्धोमादिदक्षिणादानान्ते सर्वान् रसान्मधुरादीनैक्षवादिविकारान्सर्वमन्नमोदनादिकमन्नमदनीयम् । यद्यपि गुणस्य गुण्याश्रितत्वेन भेदाभावः तथापि गुणस्य रसस्य प्राधान्यात्तदाश्रयोपादानं गुणभूतम् । एवमन्यत्राश्रयस्यान्नस्य प्रधानत्वाद्गुणोपादानं गुणभूतं तथाचोभयत्रोभयनान्तरीयकत्वेनोभयादानेऽपि गुणप्रधानभावाद्भेदः । तथाच सर्वान्रसान्सर्वमन्नमेकस्मिन्पात्रे उद्धृत्यासने कुशास्तीर्णे उपविश्यैनं कुमारं तूष्णीं हन्तेति वा मन्त्रेण प्राशयेत् । हन्तेतिमन्त्रोच्चारणे श्रुतिं प्रमाणयति हन्तकारमिति । 'काम्यं कामिकार्यं प्राशनमाह' भारद्वाज्यामाꣳसेन 'वाक्प्रसारकामस्य' भारद्वाजी पक्षिविशेषः । वाचः प्रसारः वक्ता स्यादिति कामाविष्टस्य । 'कपिञ्जलमाꣳसेनान्नाद्यकामस्य' कपिञ्जलोऽपि पक्षिविशेषः । 'मत्स्यैर्जवनकामस्य' जवनं वेगित्वम् । कृकषाया आयुष्कामस्य कृकषा कङ्कणहारिका गोधा वा । 'आट्या ब्रह्मवर्चसकामस्य' आटी प्लवविशेषः । 'सर्वैः सर्वकामस्य' वागन्नवेगायुर्ब्रह्मवर्चसकामस्य । सर्वैः भारद्वाज्यादिसर्वमांसैः । कामना च काम्यस्य संस्कार्यकुमाराधिकरणतावगाहिप्राशयितृज्ञानम् । 'अन्नपर्यायवा' यावमेषन्यायेन काम्यमांसाकृति अन्नं निष्पाद्य प्राशयेत् । वा शब्दो विकल्पार्थः । विभक्तेरनिर्देशश्छान्दसः । कन्यायास्तूष्णीं प्राशनं कारयेदन्नस्य । आचाराकृष्टमन्यदपि सरस्वत्यादिग्रहणपरीक्षा कार्या । 'ततो ब्राह्मणभोजनम्' बर्हिर्होमादिकर्मापवर्गान्ते दश ब्राह्मणान् भोजयेत्परिशिष्टात् । द्विरभ्यासः काण्डसमाप्तिप्रज्ञप्त्यर्थः । इत्यन्नप्राशनम् । इत्यकोनविंशी कण्डिका ॥ १९ ॥

इति श्रीपण्डितनृसिंहात्मजपण्डितविश्वनाथकृतायां गृह्यसूत्रव्याख्यायामाद्यं काण्डं समाप्तिमगमत् ॥

---



श्रीः ॥ सांवत्सरिकस्य चूडाकरणम् ॥ १ ॥ तृतीये वाऽप्रतिहते ॥ २ ॥ षोडशवर्षस्य केशान्तः ॥ ३ ॥ यथामङ्गलं वा सर्वेषाम् ॥ ४ ॥ ब्राह्मणान्भोजयित्वा माता कुमारमादायाप्लाव्याहते वाससी परिधाप्याङ्क आधाय पश्चादग्नेरुपविशति ॥ ५ ॥ अन्वारब्ध आज्याहुतीर्हुत्वा प्राशनान्ते शीतास्वप्सूष्णा आसिञ्चत्युष्णेन वाय उदकेनेह्यदिते केशान्वपेति ॥ ६ ॥ केशश्मश्रु्वीति च केशान्ते ॥ ७ ॥ अथात्र नवनीतपिण्डं घृतपिण्डं दध्नो वा प्रास्यति ॥ ८ ॥ तत आदाय दक्षिणं गोदानमुन्दति । सवित्रा प्रसूता दैव्या आप उन्दन्तु ते तनूं दीर्घायुत्वाय वर्चस इति ॥९॥ त्र्येण्या शलल्या विनीय त्रीणि कुशतरुणान्यन्तर्दधात्योषध इति ॥१०॥ शिवो नामेति लोहक्षुरमादाय निवर्तयामीति प्रवपति, येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदमस्यायुष्यञ्जरदष्टिर्यथासदिति ॥ ११ ॥ सकेशानि प्रच्छिद्यानडुहे गोमयपिण्डे प्रास्यत्युत्तरतो ध्रियमाणे ॥१२॥ एवं द्विरपरं तूष्णीम् ॥ १३ ॥ इतरयोश्चोन्दनादि ॥१४॥ अथ पश्चात्त्र्यायुषमिति ॥ १५ ॥ अथोत्तरतो येन भूरिश्चरा दिवं ज्योक्च पश्चाद्धि सूर्यम् ॥ तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तय इति ॥ १६ ॥ त्रिः क्षुरेण शिरः प्रदक्षिणं परिहरति समुखं केशान्ते ॥ १७ ॥ यत्क्षुरेण मज्जयता सुपेशसा वप्त्वा[1] वावपति केशाञ्छिन्धि शिरो माऽस्यायुः प्रमोषीः ॥ १८ ॥ मुखमिति च केशान्ते ॥ १९ ॥ ताभिरद्भिः शिरः समुद्य नापिताय क्षुरं प्रयच्छति । अक्षुण्वन्परिवपेति ॥ २० ॥ यथामङ्गलं केशशेषकरणम् ॥ २१ ॥ अनुगुप्तमेतꣳसकेशं गोमयपिण्डं निधाय गोष्ठे पल्वल उदकान्ते वाऽऽचार्याय वरं ददाति ॥ २२ ॥ गां केशान्ते ॥ २३ ॥ संवत्सरं ब्रह्मचर्यमवपनं च केशान्ते द्वादशरात्रꣳ षड्रात्रं त्रिरात्रमन्ततः ॥२४॥

( कर्क० )—'सांवत्स···रणम्' संवत्सरो यस्य जातः स सांवत्सरिकः । तस्य सांवत्सरिकस्य चूडाकरणाख्यं कर्म कर्तव्यम् । 'तृतीये वाऽप्रतिहते' तृतीये वा संवत्सरेऽप्रपन्ने, वाशब्दो विकल्पार्थः । 'षोडशवर्षस्य केशान्तः' कर्तव्य इति शेषः । तुल्यत्वात्तत्कर्मणः केशान्तोऽत्राभिधीयते । 'यथामङ्गलं वा सर्वेषाम्' । यद्यस्य मङ्गलमुचितं कुले कस्यचित्तृतीये कस्यचित्संवत्सरे

[1] वप्त्रेति जयरामसमतः पाठः; वसेति पाठः ।

अन्ये तु यथामङ्गलशब्देन कालान्तरं कल्पयन्ति । 'ब्राह्मणा'''विशति' माता कुमारमादायऽऽप्लाव्य स्नापयित्वाऽहते वाससी परिधाप्याङ्के कृत्वा पश्चादग्नेरुपविशति । 'अन्वार'''केशान्वप' इत्यनेन मन्त्रेण । 'केश'''शान्ते' विशेषः । 'अथात्र'''प्रास्यति' अत्रेति प्रकृतोदकमुच्यते । 'तत आदाय'''दैव्या इति' तत उदकमादाय दक्षिणं गोदानमुन्दति । गोदानशब्देनाङ्गविशेषोऽभिधी-यते इति अङ्गमिति शीर्षपार्श्वमुच्यते । उन्दति क्लेदयतीत्यर्थः । तच्च सवित्रा प्रसूता इत्यनेन मन्त्रेण । 'त्र्येण्या शलल्या विनीय' त्र्येणी शलली प्रसिद्धा तया विनीय केशान् । 'त्रीणि'''पध इति' अनेन मन्त्रेण । 'शिवो'''वपति' शिवो नामेति मन्त्रेण ताम्रमयं क्षुरमादाय गृहीत्वा निवर्तयामी-त्यनेन मन्त्रेण कुशतरुणेष्वन्तर्हितेषु संलागयति । प्रपूर्वो वपतिः संलागने । येनावपत्सविता क्षुरेणे-त्यनेन मन्त्रेण सकेशान्प्रच्छिद्य कुशान् । 'आनडु'''तूष्णीम्' एवं द्विरपरं कर्म तूष्णीं भवति । 'इतरयोश्चोन्दनादि' इतरयोश्च गोदानयोः उन्दनाद्येव कर्म भवति सकृन्मन्त्रेण द्विस्तू-ष्णीम् । 'अथ पश्चाच्च्यायुषमिति' छेदनमन्त्रः । 'अथोत्तरतो येन भूरिश्चरा दिवमिति' छेदन-मन्त्र एव । 'त्रिः क्षुरेण'''यत्क्षुरेण' इत्यनेन मन्त्रेण । 'मुखमिति च केशान्ते' मन्त्रविशेषः । ताभि-र'''रिवपेति' ताभिरेवाद्भिः शिरः समुद्य । उन्दयति क्लेदनार्थः तस्य कित्वादनुनासिकलोपः क्रियते समुद्येतिरूपं क्लेदयित्वेत्यर्थः । नापिताय क्षुरं प्रयच्छति । अक्षण्वन्परिवपेत्यनेन मन्त्रेण । यथा मङ्गलं केशशेषकरणम् । यथाशास्त्रं यद्यस्य गोत्रे उचितम् । केचित् त्रिशिखाः केचित्पञ्चशिखाः यथा यस्य प्रसिद्धिः । 'अनुगुप्तमेतर्ठ सकेशं गोमयपिण्डं निधाय गोष्ठे पल्वल उदकान्ते वाऽऽचार्याय वरं ददाति । गां केशान्ते' तस्यैव ह्याचार्यस्य नेतरस्येति । 'संवत्सरं ब्रह्मचर्यमवपनं च केशान्ते' व्रतं भवति । 'द्वादशरात्रर्ठ षड्रात्रं त्रिरात्रमन्ततः' स चायं विकल्पः । तुल्यं हि स्मरणमन्यत्रेति ॥ * ॥

( जयरामः ) संवत्सरो जातो यस्य स सांवत्सरिकः संवत्सरातिक्रान्तः तस्य चूडाकरणा-ख्यं कर्म कर्तव्यमिति शेषः । तृतीये वा संवत्सरे अप्रतिहते अगते असंपूर्ण इत्यर्थः । तुल्यत्वात्तत्क-र्मणः केशान्तोऽप्यत्रोच्यते । स च नियतकाल एव विवाहिताविवाहितयोः संवत्सरं ब्रह्मचर्यमि-त्यादि वक्ष्यमाणत्वात् । 'यथामङ्गलमिति' यद्यस्य कुले मङ्गलमुचितं कस्यचित्संवत्सरे कस्यचित्तृ-तीये । यथामङ्गलं कालान्तरे कार्यमित्यपरे । आदौ ब्राह्मणान् संभोज्य शिशोर्माता बालं संस्नाप्याहतं वस्त्रयुग्मं परिधाप्य उत्सङ्गे बालमारोप्य स्थापितस्य वह्नेः पश्चाद्धर्तुरुत्तरत उपविशति, अन्वारम्भेणै-वाघारादिस्विष्टकृदन्ताश्चतुर्दशाहुतयो हूयन्ते ता एव हुत्वा । 'शीतासूपकल्पितास्वप्सु उष्णा अप आ-सिञ्चति पिता उष्णेनेति' मन्त्रेण । अस्यार्थः । तत्र परमेष्ठी प्रतिष्ठा वायुर्वपनोदकासेके० । हे वायो हे अदिते अखण्डिता दितिः खण्डनं दो अवखण्डने इहि एहि आगच्छ । आगत्य चोष्णेन जलेन सह वर्तमानेनेतरेणोदकेन केशार्द्रीकरणेनास्य केशान्वप छिन्धि । केशश्मश्रुवपेति केशान्ते-कर्मणि विशेषः । अथात्र प्रकृतोदके दध्यादीनामेकतमस्य पिण्डं प्रास्यति प्रक्षिपति । ततस्तस्मादु-दकमादाय दक्षिणं गोदानं केशसटामुन्दति क्लेदयति । सवित्रा प्रसूता दैव्या आप इति मन्त्रेण । उन्दी क्लेदने । अथ मन्त्रार्थः । तत्र प्रजापतिर्गायत्री आपः क्लेदने० । हे कुमार सवित्रा सूर्येण प्रसूता उत्पादिता आपः ते तव तनूं चूडाख्यमङ्गम् उन्दन्तु क्लेदयन्तु । किंभूता दैव्याः दिवि भवाः, किम-र्थम्, तव दीर्घायुत्वाय चिरकालं निर्दुष्टजीवनाय वर्चसे प्रतापाय ऐश्वर्याय च त्र्येण्या त्रिश्वेतया शलल्या शल्यकपक्षकण्टकेन नयनं पृथक्करणम् । तूष्णींकुशतृणत्रयान्तर्द्धानम् ओषधे त्रायस्वेत्ये-तावता मन्त्रेण । तत्र प्रजापतिर्यजुर्गायत्री तृणमन्तर्धाने० । शिवोनामेति मन्त्रेण ताम्रपरिष्कृतक्षुरा-दानम् । तत्र प्रजापतिः प्राजापत्या बृहती क्षुरः तदादाने० । 'निवर्तयामीति' मन्त्रेण संलागन-करणम् । प्रपूर्वो वपतिः संलागने । तत्र प्रजापतिः प्राजापत्यात्रिष्टुप् क्षुरः स्पर्शने० । येनावपदिति

मन्त्रेण सकेशानि कुशतरुणानि प्रच्छिद्य छित्त्वा प्रास्यति प्रक्षिपति उत्तरत अग्नेरेव आनडुहे ध्रियमाणे गोमयपिण्डे । अथ मन्त्रार्थः । तत्र लम्बायनः पङ्क्तिः सविता कुशतरुणप्रच्छेदने० । हे ब्राह्मणाः ब्राह्मणाः येन कारणेन क्षुरेण वा सविता प्रसविता पिता आदित्यो वा राज्ञः सोमस्य वरुणस्य च शिरः अवपत् राजसूयदीक्षायै अमुण्डयत् । किंभूतः विद्वान् सर्वज्ञः तेन कारणेन क्षुरेण वा प्रकारेण वाऽस्य कुमारस्य इदं शिरो यूयं वपत मुण्डयत । यथाऽयं कुमार आयुष्मान् दीर्घायुः जरदष्टिः सुपरिणतवपुश्च सन् स्यात् । एवम् एवमेवोन्दनादि कर्म । द्विरपरं तूष्णीम् मन्त्रान् विना भवति । इतरयोश्च पश्चिमोत्तरयोर्गोदानयोरुन्दनादि, चकारादेवमेव सकृन्मन्त्रेण द्विस्तूष्णीम् । अथ पश्चात्पश्चिमगोदाने त्र्यायुषमिति छेदने मन्त्रभेदः । तत्र उत्तरनारायण उष्णिक् आशीः छेदने० । अथोत्तरतो येन भूरिरिति छेदने मन्त्रभेदः । अस्यार्थः । तत्र वामदेवो यजुः क्षुरः केशच्छेदने० । हे क्षुमार येन ब्रह्मणा मन्त्रेण तपसा वा चराः चरणशीलो वायुः ज्योक् चिरम् आकल्पमित्यर्थः । दिवं द्याम् पश्चात्तामनुसूर्यं तमनुविश्वं च चरति । किंभूतः भूरिः प्रचुरः तेन ब्रह्मणा तपसा वा तन्मन्त्रितक्षुरेण वा ते तव शिरो वपामि । किमर्थं जीवातवे जीवनहेतवे धर्मार्थं जीवनायायुषे सुश्लोक्याय शोभनयशसे स्वस्तये मङ्गलाय । त्रिः क्षुरेण क्षुरभ्रामणेन शिरः प्रदक्षिणं त्रिः करोति सकृन्मन्त्रेण द्विस्तूष्णीम् । केशान्ते तु समुखमिति विशेषः । तत्र मन्त्रः । यत्क्षुरेणेति । अस्यार्थः । तत्र वामदेवो यजुः क्षुरभ्रामणे० । हे क्षुरदेवते यत् यस्मात् वप्त्रा क्षुरेण आवपति शिरो मुण्डयति नापितादिः, किंभूतेन एनं कुमारं मज्जयता संस्कुर्वता तथा सुपेशसा शोभयता वाशब्दश्चार्थे अतोऽस्य कुमारस्य केशान् छिन्धि मुण्डय शिरः आयुश्च मा प्रमोषीः मा मुषाण । मुषस्तेये । केशान्ते तु मुखमिति च मन्त्रान्ते वाच्यम् । ताभिरेवाद्भिः शिरः समुद्य क्लेदयित्वाऽऽर्द्रभावमापाद्येत्यर्थः । नापिताय क्षुरं प्रयच्छति पिता तस्याधिकारित्वावगमात् । अक्षण्वन्परिवपेत्येतावता मन्त्रेण । अस्यार्थः । तत्र वामदेवो यजुः क्षुरो वपने० । हे नापित अस्य शिरः अक्षण्वन् क्षतमकुर्वन् परिवप परितो वप शिखा रक्षित्वा परितो मुण्डयेत्यर्थः । यथामङ्गलं यथाशास्त्रं त्रिशिखत्वादि । अनुगुप्तं सुगुप्तं वरमिति चूडाकरणे संस्कर्ता स्वाचार्याय केशान्ते संस्कृतोऽपि गाम् । संवत्सरमिति केशान्त एव संवत्सरादिकालं ब्रह्मचर्यव्रतम् । नतु कुमारस्य, असंभवात् । अवपनं च विहितवपनव्यतिरिक्तवपनाभावोऽत्रैव । ब्रह्मचर्यकालविकल्पश्च शक्तिश्रद्धापेक्षः ॥ १ ॥

( हरिहरः )—अथ चूडाकरणकेशान्तौ तन्त्रेण सूत्रयति । 'सांवत्स···तिहते ' संवत्सरमन्दमतिक्रान्तः सांवत्सरिकः तस्य कुमारस्य चूडाकरणं चूडाकर्म कुर्यात् । तृतीये वा संवत्सरे अप्रतिहते अल्पावशिष्टे । 'यथा···र्वेषाम् ' यद्वा यथामङ्गलं यथाकुलाचारं, एतदुक्तं भवति यस्य कुले सांवत्सरिकस्य चूडाकर्म क्रियते तस्य सांवत्सरिकस्य यस्य तृतीयेऽब्दे तस्य तदा इति व्यवस्था । यस्य कुले नास्ति नियमः तस्य यदृच्छया विकल्पः । अन्ये तु यथामङ्गलशब्देन धर्मशास्त्रान्तरे विहितकालान्तरोपलक्षणमाहुः । अतश्च सर्वेषां तुल्यविकल्पः । 'षोड···शान्तः ' षोडशवर्षाण्यतीतानि यस्य असौ षोडशवर्षः तस्य सप्तदशे वर्षे केशान्तः केशान्ताख्यः संस्कारो भवति । अत्र यद्यपि सूत्रक्रमोऽन्यथा तथापि केशान्तस्य कालविकल्पाभावात् चूडाकरण एव कालविकल्प इति हेतोर्यथामङ्गलं वा सर्वेषाम् इति सूत्रं पूर्वं व्याख्यातं पाठक्रमादर्थक्रमो बलीयानिति न्यायात् । 'ब्राह्म···शति' एवं कालमभिधाय कर्माभिधत्ते । चूडाकरणाङ्गतया त्रीन्ब्राह्मणान्भोजयित्वा माता जननी कुमारं पुत्रं चूडाकरणार्हमादाय गृहीत्वा आप्लाव्य स्नापयित्वा अहते नवे सकृद्धौते वाससी द्वे वस्त्रे परिधाप्य परिहिते कारयित्वा अन्तरीयोत्तरीयत्वेन अङ्के उत्सङ्गे आधाय स्थापयित्वा पश्चादग्नेः पश्चिमतः उपविशति आस्ते । 'अन्वा···च्चति ' ततोऽन्वारब्धः ब्रह्मणा उपस्पृष्टः आज्याहुती. आघारादिखि-

ष्टकृदन्ताश्चतुर्दश हुत्वा संस्रवप्राशनान्ते शीतासु अप्सु उष्णा अप आसिञ्चति प्रक्षिपति वक्ष्यमाणमन्त्रेण । अन्वारब्धग्रहणेन नित्याज्याहुतिहोमो नियम्यते । 'उष्णे···शान्ते' केशान्ते पुनः उष्णेन वाय उदकेनेह्युदिते केशश्मश्रु वपेति विशेषः । 'अथा···स्यति' । अथ उष्णोदकसेकानन्तरमत्र आस्वप्सु नवनीतपिण्डं घृतपिण्डं दध्नो वा पिण्डं प्रास्यति । असु क्षेपणे प्रक्षिपति । 'तत···सूता इति' ततस्ताभ्योऽद्भ्यः चुलुकेनैकदेशमादाय दक्षिणं गोदानं शिरसो दक्षिणप्रदेशस्थं गोदानं केशसमूहं उन्दति आर्द्रं करोतीत्यर्थः । केन मन्त्रेण । सवित्राप्रसूतेत्यादिना दीर्घायुत्वाय वर्चस इत्यन्तेन । 'त्र्येण्या···पथ इति' त्र्येण्या त्रिश्वेतया शलल्या शल्यकपक्षककण्टकेन विनीय पृथक्कृत्य पूर्वेदिनाधिवासितां केशलतिकां तस्या अन्तर्मध्ये अन्तरा त्रीणि त्रिसङ्ख्याकानि कुशतरुणानि दर्भपत्राणि दधाति धारयति ओषधे त्रायस्वेति मन्त्रेण । 'शिवो···पति' ततः शिवो नामेत्यनेन मन्त्रेण लोहक्षुरं ताम्रपरिष्कृतमायसं क्षुरमादाय गृहीत्वा दक्षिणकरेण निवर्तयामीत्यनेन मन्त्रेण प्रवपति तं क्षुरं कुशतरुणान्यभिनिदधाति । उपसर्गेण धात्वर्थो बलादन्यत्र नीयते इति न्यायात् धातूनामनेकार्थत्वाच्चेत्यत्र प्रपूर्वो वपतिरभिनिधानार्थः । छेदनार्थत्वे तु उत्तरसूत्रविहितप्रच्छेदनानर्थक्यं प्रसज्येत । 'येना···माणे' येनावपदिति मन्त्रेण केशसहितानि कुशतरुणानि प्रच्छिद्य खण्डयित्वाऽग्नेरुत्तरतो भूभागे ध्रियमाणे स्थाप्यमाने आनडुहे आर्षभे गोमयपिण्डे गोशकृत्पिण्डे प्रास्यति प्रक्षिपति । 'एवं तूष्णीम्' एवमुक्तेन प्रकारेण द्विः द्विर्वारम् उन्दनादि गोमयपिण्डनिधानान्तमपरं कर्म तूष्णीं मन्त्ररहितं कुर्याम् । 'इत···नादि' इतरयोः पश्चिमोत्तरयोः गोदानयोः उन्दनादि छेदनप्रभृति कर्म चकारात्सकृत्समन्त्रकं द्विरमन्त्रकं भवति 'अथ···षमिति' अथ दक्षिणगोदानस्य त्रिरुन्दनादिप्रच्छेदनानन्तरं पश्चाद्गोदाने विशेषमाह । त्र्यायुषमिति । त्र्यायुषं जमदग्नेरित्यादिना मन्त्रेण सकेशानि कुशतरुणानि सकृत्प्रच्छिद्य तूष्णीं द्विः प्रच्छिद्य गोमयपिण्डे प्रास्यति । अथोत्तरतः । अथानन्तरम् उत्तरगोदाने उन्दनादिगोमयपिण्डनिधानान्ते विशेषमाह 'येन भूरिश्चरेति स्वस्तय' इत्यन्तेन मन्त्रेण सकृत्सकेशानां कुशतरुणानां प्रच्छेदनं द्विस्तूष्णीम् । 'त्रिः क्षु···शान्ते' त्रिः त्रीन्वारान् क्षुरेण शिरः मूर्धानं प्रदक्षिणं यथा भवति तथा परिहरति शिरसः समन्तात्प्रदक्षिणं क्षुरं भ्रामयतीत्यर्थः । तत्र मन्त्रमाह । यत्क्षुरेणेत्यादि मास्यायुः प्रमोषीरित्यन्तं केशान्ते च समुखमिति पदं प्रक्षिपेन्मन्त्रे आवपेत् । अत्रापि सकृन्मन्त्रो द्विस्तूष्णीम् । 'ताभि···वपेति' ताभिः शीतोष्णाभिरद्भिः कुमारस्य शिरः समुद्य आर्द्रं विधाय नापिताय क्षौरकर्त्रे जातिविशेषाय क्षुरमक्षण्वन्परिवपेत्यनेन मन्त्रेण प्रयच्छति । 'यथा···रणम्' केशानां शेषकरणं शिखास्थापनं केशशेपकरणम् । यथामङ्गलं मङ्गलं कुलाचारव्यवस्थामनतिक्रम्य भवति । कुलाचाराश्च बहुधा तद्यथा लौगाक्षिः—तृतीयस्य वर्षस्य भूयिष्ठे गते चूडां कारयेत् । दक्षिणतः कम्बुजानां वसिष्ठानां उभयतोऽत्रिकश्यपानां मुण्डा भृगवः पञ्चचूडा आङ्गिरसः । वाजसनेयिनामेकां मङ्गलार्थं शिखिनोऽन्य इति । कम्बुजानां वसिष्ठानां दक्षिणे कारयेच्छिखाम् । द्विभागेऽत्रिकश्यपानां मुण्डाश्च भृगवो मताः । पञ्चचूडा अङ्गिरस एका वाजसनेयिनाम् । मङ्गलार्थं शिखिनोऽन्य उक्ता चूडाविधिः क्रमादिति । 'अनु···कान्ते वा' अनुगुप्तमावृतम् एनं गोमयपिण्डं सकेशं केशैः सहितं निधाय स्थापयित्वा गोष्ठे गवां व्रजे पल्वले अल्पोदके सरसि उदकान्ते वा उदकस्य समीपे वा । 'आचा···दाति' स्वकीयाय आचार्याय वरम् आचार्याभिलषितं द्रव्यं ददाति कर्मकर्ता पित्रादिः । 'गां केशान्ते' केशान्ते कर्मणि संस्कार्यस्य आचार्याय गां ददाति । 'संव···न्ततः' केशान्तकर्मानन्तरं संवत्सरं यावत् ब्रह्मचर्यं भवेत् । अवपनं केशान्ते द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः । केशान्तकर्मानन्तरं यावज्जीवमवपनं च विहितवपनव्यतिरेकेण । विहितवपनञ्च—गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरौ मृते । आधाने सोमपाने च वपनं सप्तसु

स्मृतम्। तथा वपनं चानुभाविनां, प्रेतकनीयसां वपनं। तथा मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः। वर्जयित्वा कुरुक्षेत्रं विशालं विरजं गयाम्। नैमिषं पुष्करं गयामिति पाठान्तरम्। प्रयागे वपनं कुर्याद् गयायां पिण्डपातनम्। दानं दद्यात्कुरुक्षेत्रे वाराणस्यां तनुं त्यजेत्। इत्यादिवचननिचयप्रतिपादितनिमित्तेषु। अत्र गर्भाधानादिषु विवाहपर्यन्तेषु संस्कारकर्मसु मुख्यत्वेन पितैव कर्ता तदभावे सन्निहितोऽन्यः। तथाच स्मरणम्—स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु। पिण्डानोद्वाहनात्तेषां तस्याभावेऽपि तत्क्रमात्। एतान्युक्तानि नामकरणादीनि चूडाकरणान्तानि कर्माणि दुहितॄणामपि मन्त्ररहितानि कुर्यात्। यथाह याज्ञवल्क्यः—तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रक इति। तथा शूद्रस्य यथार्हम्। यथाह यमः—शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः। न केनचित्समसृजच्छन्दसा तं प्रजापतिः। एवंविधः गर्भाधानादिचूडाकरणान्तैः संस्कारैर्बैजिकगार्भिकपापशून्यः। विना मन्त्रेण तूष्णीं यतस्तं शूद्रं केनापि एकतमेनापि छन्दसा वेदेन प्रजापतिः परमेश्वरः न समसृजत् समयोजयत् इति। तथा ब्रह्मपुराणे—विवाहमात्रसंस्कारं शूद्रोऽपि लभतां सदा। मात्रशब्देन विहितेतरसंस्कारनिवृत्तिश्च। यमब्रह्मपुराणवचनाभ्यां शूद्रस्य गर्भाधानपुंसवनसीमन्तजातकर्मनामधेयनिष्क्रमणान्नप्राशनचूडाकरणविवाहान्ता नवसंस्कारा विहितास्ते च तूष्णीम् इतरेषां निवृत्तिः॥ ॥प्रसङ्गादनुपनीतधर्मा लिख्यन्ते। मनुः—नास्मिन्युज्यते कर्म किञ्चिदामौञ्जिबन्धनात्। नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते। शूद्रेण हि समस्तावद्यावद्वेदे न जायते। वृद्धशातातपः—प्राक् चूडाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः। कुमारस्तु स विज्ञेयो यावन्मौञ्जीनिबन्धनम्। शिशोरभ्युक्षणं प्रोक्तं बालस्याचमनं स्मृतम्। रजस्वलादिसंस्पर्शे स्नातव्यं तु कुमारकैः। गौतमः—प्रागुपनयनात्कामचारवादभक्षः। नित्यं मद्यं ब्राह्मणोऽनुपनीतोऽपि वर्जयेत्। उच्छिष्टादावप्रयता न स्युः। महापातकवर्जम्। ब्राह्मे—मातापित्रोरथोच्छिष्टं बालो भुञ्जन् भवेत्सुखी। संस्कारप्रयोजनं च स्मृत्यन्तरोक्तम्। यथाह याज्ञवल्क्यः—एवमेनः शमं याति बीजगर्भसमुद्भवम्। अङ्गिराः—चित्रकर्म यथाऽनेकैरङ्गैरुन्मील्यते शनैः। ब्राह्मण्यमपि तद्वत्स्यात्संस्कारैर्विधिपूर्वकैः। मनुः—गार्भैर्होमैर्जातकर्मचूडामौञ्जीनिबन्धनैः। बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते। हारीतः—गर्भाधानवदुपेतो ब्रह्मगर्भं संदधाति पुंसवनात्पुंसीकरोति फलस्नपनात्पितृजं पाप्मानमपोहति जातकर्मणा प्रथममपोहति नामकरणेन द्वितीयं प्राशनेन तृतीयं चूडाकरणेन चतुर्थं स्नानेन पञ्चमम्। एतैरष्टभिर्गार्भसंस्कारैर्गर्भोपघातात्पूतो भवति। उपनयनाद्यैरेभिरनुव्रतैश्चाष्टभिः स्वच्छन्दसंमितो ब्राह्मणः परं पात्रं देवपितॄणां भवति। छन्दसामायतनम्। सुमन्तुः—तत्र ब्राह्मणक्षत्रियवैश्यानां वृत्तिगर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणनिष्क्रमणान्नप्राशनचूडोपनयनं चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः पञ्चानां यज्ञानामनुष्ठानम् देवपितृमनुष्यभूतब्रह्मयज्ञानाम्। एतेषां (?) चाष्टकाः पार्वणः श्राद्धं श्रावण्याग्रहायणीचैत्र्याश्वयुजीतिपाकयज्ञसंस्थाः। अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्याग्रयणेष्टिर्निरूढपशुबन्धः सौत्रामणीति सप्तहविर्यज्ञसंस्थाः। अग्निष्टोमोऽत्यग्निष्टोमउक्थ्यःषोडशीवाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्थाः एते चत्वारिंशत्संस्काराः। हारीतः—द्विविध एव संस्कारो भवति। ब्राह्मो दैवश्च। गर्भाधानादिस्नानान्तो ब्राह्मः। पाकयज्ञहविर्यज्ञसौम्याश्चेति दैवः। ब्राह्मसंस्कारसंस्कृत ऋषीणां समानतां सायुज्यतां गच्छति। दैवेनोत्तरेण संस्कारेणानुसंस्कृतो देवानां समानतां सालोक्यतां सायुज्यतां गच्छतीत्यलमतिप्रसङ्गेन॥ इति सूत्रार्थः॥ ॥ * ॥ ॥ * ॥

( अथ प्रयोगः )—तत्र सांवत्सरिकस्य तृतीये वा वर्षे भूयिष्ठे गते कुमारस्य चूडाकरणाख्यं कर्म कुर्यात्। कुलधर्मव्यवस्थया वा। दैवयोगाद् गृह्योक्तकालालाभे स्मृत्यन्तरोक्तान्यतमकाले मातृ-

परिधापयति येनेन्द्रायेति मन्त्रेण। वासांसि च शाणक्षौमाविकानि ब्राह्मणक्षत्रियविशां यथासंख्यं ज्ञेयानि। वासांसि शाणक्षौमाविकानीति वक्ष्यमाणत्वात्। मन्त्रार्थः—हेकुमार येन विधिना इन्द्राय संस्कर्तुं बृहस्पतिः सुराचार्यो वासः पर्यदधात् परिधापितवान्। किंभूतममृतमहतं, तेन विधिना त्वा त्वां माणवकं परिदधामि परिधापयामि। उभयत्रान्तर्भूतो णिच् ज्ञेयः परिधापयतीति सूत्रितत्वात्। यद्वा इन्द्राय पर्यदधात्। इन्द्रे अव्यवच्छिन्नं स्थापितवान्। तथा त्वा त्वां लक्ष्यीकृत्य परिदधामि त्वयि अव्यवच्छेदेन धारयामीति। किमर्थम्। दीर्घायुत्वाय तव चिरजीवनाय। आयुशब्द उकरान्तोऽप्य-स्ति। बलाय देहशक्तये। वर्चसे इन्द्रियशक्तये ऐश्वर्याय वेति। 'मेख···ष्णीं वा' तत आचार्यो माणवककट्यां मेखलां रशनां बध्नीते इयं दुरुक्तमिति मन्त्रेण। अथवा युवा सुवासा इति मन्त्रेण। अथवा तूष्णीं बध्नीते। आचार्यस्यैव मन्त्रपाठः। अत्रैवं बन्धनम्। आचार्यस्त्रिगुणां मेखलामादाय वटोः कटिप्रदेशे प्रादक्षिण्येन त्रिर्वेष्टयति। तृतीये वेष्टने ग्रन्थयस्त्रयः पञ्च सप्त वा कार्याः। तदुक्तम्—त्रि-वृता मेखला कार्या त्रिवारं स्यात्समावृता। तद्ग्रन्थयस्त्रयः कार्याः पञ्च वा सप्त वा पुनः। अत्र प्रवरसंख्यया नियमः। त्र्यार्षेयस्य ग्रन्थित्रयम्। पञ्चार्षेयस्य पञ्च। सप्तार्षेयस्य सप्तेति गर्गपद्धतौ। वृद्धाचारोऽप्येवमेव। आचार्यकर्तृकं मेखलाबन्धनं कुमारस्य मन्त्रपाठ इति वासुदेवमुरारिमिश्रजय-रामहरिहराः। अत्र मुरारिमिश्रैरबुद्धैव पुरुषयोगिमन्त्रसंस्कारयोस्त्यागे सामर्थ्यादिति हेतूपन्यासार्थं प्रदर्शितम्। नहि करणमन्त्रेऽयं न्यायः प्रवर्तते। आचार्यकर्तृको ह्ययं पदार्थः। मन्त्रपाठस्तु लिङ्गवशेन माणवककर्तृकः स्यादिति चेत्, तन्न। प्रधानभूतश्च पदार्थः गुणभूतश्च मन्त्रः। अतः पदार्थाङ्गत्वेन मन्त्रोऽपि पदार्थकर्त्रा पठनीयः। मन्त्रेऽपि च लक्षणया माणवकाभिधानमित्यदोषः। तथाच श्रुतिः—यां वै कांच यज्ञ ऋत्विज आशिषमाशासते यजमानस्यैव सेति। कारिकायाम्—'बध्नीयात्त्रिगुणां श्लक्ष्णा-मियंदुरुक्तमुच्चरन्। आचार्यस्यैव मन्त्रोऽयं न वटोरात्मनेपदात्। अस्मिन्नवसरे समाचाराद्यज्ञोपवी-ताजिने भवत इति भर्तृयज्ञव्यतिरिक्तवासुदेवादिसर्वग्रन्थेषु। कर्काचार्यैस्तूपवीतमेव लिखितम्। तत्र चाविरोधादुपवीते शाखान्तरीयो मन्त्रो ग्राह्यः। यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्। आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः' इति। अजिनस्योत्तरीयकरणं तूष्णीं मन्त्रपाठेन वेति वासुदेवः। 'मित्र···हमिति' मन्त्रेणाजिनधारणमिति कारिकायां गर्गपद्धतौ च। यज्ञोपवीतलक्षणं स्मृत्यर्थसारे—कार्पासक्षौमगोवालशाणवल्कतृणादिकम्। यथा संभवतो धार्यमुपवीतं द्विजातिभिः। शुचौ देशे शुचिः सूत्रं संहताङ्गुलिमूलके। आवेष्ट्य षण्णवत्या तत्त्रिगुणीकृत्य यत्नतः। अब्लिङ्गकैस्त्रिभिः सम्यक् प्रक्षाल्योर्ध्ववृतं तु तत्। अप्रदक्षिणमावृत्तं सावित्र्या त्रिगुणीकृतम्। अधः प्रदक्षिणावृत्तं समं स्यान्नवसूत्रकम्। त्रिरावेष्ट्य दृढं बद्ध्वा हरिब्रह्मेश्वरान्नमेत्। यज्ञोपवीतं परममिति मन्त्रेण धारयेत्। सूत्रं सलोमकं चेत्स्यात्ततः कृत्वा विलोमकम्। सावित्र्या दशकृत्वोऽद्भिर्मन्त्रिताभिस्तदुक्षयेत्। विच्छिन्नं वाऽप्यधो यातं भुक्त्वा निर्मितमुत्सृजेत्। पृष्ठवंशे च नाभ्यां च धृतं यद्विन्दते कटिम्। तद्धार्यमुप-वीतं स्यान्नातिलम्बं न चोच्छ्रितम्। स्तनादूर्ध्वमधो नाभेर्न धार्यं तत् कथंचन। ब्रह्मचारिण एकं स्यात्स्नातस्य द्वे बहूनि वा। तृतीयमुत्तरीयं वा वस्त्राभावे तदिष्यते। ब्रह्मसूत्रे तु सव्येंऽसे स्थिते यज्ञो-पवीतिता। प्राचीनावीतिताऽसव्ये कण्ठस्थे हि निवीतिता। वस्त्रं यज्ञोपवीतार्थे त्रिवृत्सूत्रं च कर्मसु। कुशमुञ्जबालतन्तुरज्वा वा सर्वजातिषु। कात्यायनः—सदोपवीतिना भाव्यं सदा बद्धशिखेन तु। विशिखो व्युपवीतश्च यत्करोति न तत्कृतम्। यज्ञोपवीतं द्विजत्वचिह्नार्थमिति प्रयोगरत्ने। कृष्णाजिनधारणं प्रावरणार्थम्। तच्च। त्र्यङ्गुलं तु बहिर्लोम यद्वा स्याच्चतुरङ्गुलम्। अजिनं धारयेद्विप्रश्चतुर्विंशाष्टपो-डशैः। इतिप्रयोगरत्ने। रशनाश्च मौञ्ज्यादिकाः मौञ्जी रशना ब्राह्मणस्य धनुर्ज्या राजन्यस्य मौर्वी वैश्यस्येति वक्ष्यमाणत्वात्। अजिनान्यप्यैणेयादीनि। इयंदुरुक्तमित्यस्यार्थः—इयमितीदंशब्द

आद्यन्तयोर्वाक्यालङ्कारार्थः । इयं मेखला मामगात् आगता । किंकुर्वती दुरुक्तं दुष्टं भाषितमसत्याप्रियादिकम् परितः सर्वतः भूतं भविष्यच्च बाधमाना निराकुर्वाणा वर्णं वर्णत्वं पवित्रं शुद्धं पुनती सत्कुर्वती मे मम प्राणापानाभ्यां मरुद्भ्यां तयोर्बलं सामर्थ्यं आदधाना स्थापयन्ती स्वसा स्वसृवत् हिता देवी दीप्तिमती सुभगा सौभाग्यदा । युवासुवासा इत्यस्यायमर्थः—यौति गुणानेकीकरोतीति युवा सुवासाः शोभनवस्त्रः अहतं शोभनमुच्यते परिवीतः वस्त्रपुष्पमालादिभिः समन्ततो वेष्टित आगात् आगतः उ वितर्के । श्रेयान् स यदि जायमानः उत्पाद्यमानः श्रेयान् शुद्धः स्यात् । धीरासः स्थिरप्रज्ञाः कवयः वेदवेदार्थप्रवक्तारः क्रान्तदर्शनाः स्वाध्यः शोभनचित्तवृत्तयः । तं च उन्नयन्ति उत्कर्षं गमयन्ति । किं कुर्वन्तः मनसा मनोवृत्त्या देवयन्तः वेदार्थं ज्ञापयन्तः । यज्ञोपवीतमन्त्रार्थः—हे आचार्य इदं ब्रह्मसूत्रमहं प्रतिमुञ्च प्रतिमुञ्चामि । प्रतिपूर्वो मुञ्चतिर्बन्धनार्थः । पुरुषव्यत्ययश्छान्दसः किंभूतं यज्ञोपवीतं यज्ञेन प्रजापतिना यज्ञाय वेदोक्तकर्माधिकारायेति वा उपवीतं उपरि स्कन्धदेशे वीतं परिहितं परमं पर आत्मा मीयते ज्ञायते तेन वाक्योपदेशाधिकारत्वात् पवित्रं शोधकं प्रजापतेर्ब्रह्मणः सहजं सहोत्पन्नं स्वभावसिद्धं वा पुरस्तात्प्रागभवमत इदमायुषे हितं आयुष्यमस्तु अग्र्यं मुख्यमनुपहतं, शुभ्रं निर्मलं बलं धर्मसामर्थ्यदं तेजः प्रभावप्रदम् । यद्यपि सूत्रकृता यज्ञोपवीतं नोक्तं तथापि उपवीतिन इति परिभाषणात्सदा यज्ञोपवीतिना भाव्यमिति परिशिष्टाच्च ग्राह्यम् । कालश्चानुक्तोऽपि स्मृत्यन्तरादयमेव । उपवीतिन इत्यस्यायमर्थः—सर्वे उपवीतिनः सव्यस्कन्धस्थितयज्ञोपवीतधारिणः कर्म कुर्वन्तीति शेषः । उद्धृते दक्षिणे पाणावुपवीत्युच्यते बुधैरिति स्मरणात् । यज्ञोपवीती देवकर्माणि करोति । 'दण्ड···सायेति' तत आचार्यो माणवकाय तूष्णीं दण्डं प्रयच्छति समर्पयति । माणवकश्च दक्षिणहस्तेन दण्डं प्रतिगृह्णाति यो मे दण्ड इति मन्त्रेण । दण्डाश्च पालाशवैल्वौदुम्बरा ब्राह्मणक्षत्रियविशां यथासंख्यं ज्ञेयाः । अथवा पालाशादयः सर्वेषां वर्णानाम् । पालाशो ब्राह्मणस्य दण्डो वैल्वो राजन्यस्यौदुम्बरो वैश्यस्य सर्वे वा सर्वेषामिति वक्ष्यमाणत्वात् । मानं च शाखान्तरीयं ग्राह्यम् । केशसंमितो ब्राह्मणस्य दण्डो ललाटसंमितः क्षत्रियस्य घ्राणसंमितो वैश्यस्येति । । मन्त्रार्थः—हे आचार्य यो दण्डः मे मह्यं परापतत् अभिमुखमागतः वैहायसः आकाशे प्रसृतः अधिभूम्यां भूमेरुपरि वर्तमानः तं दण्डमहमाददे गृह्णामि । पुनर्ग्रहणात्सोमदीक्षायां यो दण्डो ग्राह्यस्तमप्याददे इत्याशंसनम् । किमर्थम् । आयुषे जीवनाय ब्रह्मणे वेदग्रहणाय ब्रह्मवर्चसाय याजनाध्यापनोत्कर्षतेजसे । 'दीक्षा···वचनात्' एके आचार्या दीक्षावत्सोमयागदीक्षायां यथा तूष्णीं प्रतिगृह्योच्छ्रयस्वेत्युच्छ्रयणं विहितं तद्वदत्रापीच्छन्ति । कुतः दीर्घसत्रं वा एष उपैति यो ब्रह्मचर्यमुपैतीति वचनात् । दण्डप्रतिग्रहणसामान्याद्दीर्घसत्रताऽस्योक्ता । यद्येवं न दीक्षावत्प्रतिग्रहणम् । स्मरणाभावात् । या चात्र दीर्घसत्रसंस्तुतिः सा दीर्घकालसामान्यादिति भर्तृयज्ञकर्कजयरामाः । दीक्षावद्वा दण्डग्रहणमिति वासुदेवकारिकाकारहरिहराः । 'अथा···तिसृभिः' अथाचार्योऽस्य कुमारस्याञ्जलिं स्वेनाञ्जलिना अप आदाय ताभिरद्भिः पूरयत्यापोहिष्ठेति तिसृभिर्ऋग्भिः । 'अथैन···रिति' अथाचार्य एनं कुमारं सूर्यमुदीक्षयति सूर्यं दर्शयति तच्चक्षुरिति मन्त्रेण । उदीक्षयतीति कारितत्वात्सूर्यमुदीक्षस्वेति प्रैष आचार्यस्य । 'अथास्य···महामिति' आथाचार्योऽस्य कुमारस्य दक्षिणांसमधि दक्षिणस्कन्धस्योपरि स्वीयं दक्षिणहस्तं नीत्वा हृदयं वक्षः आलभते स्पृशति । मम व्रते व इति मन्त्रेण । व्याख्यातश्चायं विवाहप्रकरणे । 'अथास्य···सीति' अथाचार्योऽस्य कुमारस्य दक्षिणं हस्तं स्वदक्षिणहस्तेन गृहीत्वा को नामासीत्याह ब्रवीति । असावहं भो३ इति प्रत्याह । एवमाचार्येण पृष्टः कुमार आचार्यं प्रत्याह । असाविति सर्वनामस्थाने आत्मनो नामग्रहणम् । अमुकोऽहं भो इति । अथैनमाह कस्य ब्रह्मचार्यसीति । अथैनं कुमारं प्रति

आचार्यं आह कस्य ब्रह्मचार्यसीति । 'भवत'''साविति' भवत इति आचार्यं प्रति कुमारेणोच्यमाने आचार्ये इन्द्रस्य ब्रह्मचार्यसीत्यमुं मन्त्रं पठति । असावित्यस्य स्थाने आमन्त्रणविभक्तियुक्तं कुमारनामग्रहणं कार्यम् । स्वनाम प्रथमान्तमित्यपरे । उभयथा मन्त्रार्थोपपत्तेः । स्मृत्यन्तरान्निर्णय इति भर्तृयज्ञभाष्ये । मन्त्रार्थस्तु—इदि परमैश्वर्ये इन्द्रस्य प्रजापतेर्ब्रह्मचारी त्वमसि तत्र चाग्निराचार्यः प्रथमः द्वितीयश्चाहं तव हे असौ अमुकशर्मन् ब्रह्मचारिन् । 'अथैनं'''रिष्ट्या इति' अथाचार्य एनं कुमारं भूतेभ्यः प्रजापतिप्रभृतिभ्यः परितोऽरिष्टै रक्षार्थं प्रयच्छति । प्रजापतये त्वा परिददामीत्यनेन मन्त्रेण । अथैनं भूतेभ्यः परिददाति प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे परिददामीति श्रुतत्वात् । मन्त्रार्थः सुगमः । हे ब्रह्मचारिन् प्रजापतये स्रष्ट्रे त्वा त्वां परिददामि समर्पयामि विश्वेभ्यो भूतेभ्यः विश्वानि भूतानि पृथिव्यादीनि पञ्च तेभ्यः सर्वेभ्यो भूतेभ्यो देवविशेषेभ्य इत्यपौनरुक्त्यम् । किमर्थम् । अरिष्टै अहिंसायै ॥ इति द्वितीया कण्डिका ॥२॥

( विश्व० )—'अष्टवर्षं ब्राह्मणमुपनयेत्' अष्टौ वर्षाणि उत्पन्नानि यस्यासौ अष्टवर्षः । अष्टम इत्यर्थः । 'गर्भाष्टमेषु वा' जन्मतः पञ्चमषष्ठसप्तमेष्वित्यर्थः । गर्भाष्टमेऽष्टमे वाब्द इत्युक्तेः । ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे । राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टम इति । 'एका'''जन्यं' उपनयेदित्यनुषङ्गः । 'द्वाद'''वैश्यं' अत्राप्युपनयेदित्यनुषङ्गः । 'यथा'''वेषां' अनेन स्मृत्यन्तरोक्तः समय उपलक्ष्यते । अन्येऽपि शाखान्तरीयाः आपस्तम्बाद्युक्ताः समया बोद्धव्याः । केचित्तु शाखीयो यस्य कुले यो पक्ष आदृतः स कुलाचार इत्याहुः । अपरे स्वशाखीयमपीत्याहुः । इदानीं कर्तव्यतामाह—'ब्राह्म'''तञ्च' मातृपूजाभ्युदयिके विधाय त्रीन् ब्राह्मणान् भोजयेत् । तं च संस्कार्यं कुमारम् । 'पर्यु'''यन्ति' बहिःशालायां उपलिप्त उद्धतावोक्षितेऽग्निमुपसमाधाय भोजनात्प्राक् शिरसः मुण्डनं शिखावर्जं कारयित्वा भोजनोत्तरमलंकृत्याचार्यसमीपमानयन्ति । केचित्तु तेनैवाचार्येण ये उपनीतास्ते आनयन्तीत्याहुः । 'पश्चा'''नीति च' अग्ने आज्याहुतिमात्रोक्तेर्ब्रह्मासनादिबर्हिस्तरणान्ते अग्नेः पश्चिमत आत्मनो दक्षिणतः माणवकमवस्थितं कृत्वा ब्रह्मचर्यमागामिति ब्रूहीति आचार्येणोक्ते माणवको ब्रह्मचर्यमागामिति वदेत् । ततः ब्रह्मचार्यसानीत्याचार्योक्ते ब्रह्मचार्यसानीति ब्रह्मचारी वदेत् । 'अथै'''चेस' इति आचार्यः एनं वटुं वस्त्रं येनेन्द्रायेतिमन्त्रेण परिधापयति । मन्त्रान्वयस्तु—हे वटो येन प्रकारेण इन्द्राय इन्द्रं संस्कर्तुं बृहस्पतिः सुराचार्यो वासः पर्यदधात् परिधापितवान् । कीदृशम् । अमृतमहतं तेन प्रकारेण त्वा त्वां वटुं परिदधामि परिधापयामि । अथवा इन्द्राय पर्यदधात् इन्द्रे स्थापितवान् । तथा त्वां परिदधामि अव्यवच्छेदेन स्थापयामि । किमर्थं दीर्घायुत्वाय चिरजीवनाय । बलाय शारीरशक्त्यै । वर्चसे ब्रह्मचर्यतेजसे ऐश्वर्याय वा । अङ्गिरा बृहती बृहस्पति. परिधापने । परिधापनं च कटिवेष्टनं बहिर्वासवत् । 'मेख'''लेयमिति' मौञ्जी त्रिवृता मेखला तां मेखलां बध्नीते । यथार्षिग्रन्थिं कुर्यात् । कथं च इयंदुरुक्तमिति मंत्रेण । मन्त्रान्वयः—दुरुक्तं दुष्टमुक्तं परितो बाधमाना अपसारयन्ती पवित्रं वर्णं ब्राह्मणादित्रयं पुनती पवित्रयन्ती आगात् आगता । पुनश्च प्राणापानयोः सामर्थ्यं स्थापयन्ती अत एव नः स्वसा भगिनी दानादिगुणयुक्ता सौभाग्यदा । अहो दर्शनीयाऽह्नो दर्शनीयेत्विदाद्यन्तयोरभ्यासः । वामदेवस्त्रिष्टुप् मेखला तद्बन्धने । 'युवा'''तूष्णीं वा' युवा सुवासाः इति मन्त्रेण वा तूष्णीं वा पक्षत्रयान्यतरपक्षेण मेखलां बध्नीत इत्यर्थः । अन्वयस्तु—अभ्यासेन गुणान् यौतीति मिश्रयतीति, युवा शोभनवस्त्रः अलंकरणैः परिवीतः आगतः । उ वितर्के । उत्पद्यमान. स श्रेष्ठः स्यात् । तं वटुं पण्डिताः क्रान्तदर्शिन. स्वाध्यः शोभनचित्ताः मनोव्यापारैर्वेदार्थं बोधयन्तः उत्कर्षं प्रापयन्ति । अङ्गिरा बृहती बृहस्पतिः । बद्धमेखलस्य वटोर्यज्ञोपवीतपरिधानं, शाखान्तरीयो मन्त्रः—'यज्ञोपवीतं परमं पवित्रं

प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः । यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामीति । मन्त्रार्थः—ब्रह्मसूत्रं क्रत्वर्थं सृष्टमसि । अत एव वटो क्रतोर्यज्ञोपवीतेन त्वां बध्नामि । कीदृशं यज्ञस्य उपवीतं परमं परः आत्मा मीयते येन पावनं यद्वा असाधारणं पावनं पूर्वमेव ब्रह्मणोत्पत्तिसमानसमयोत्पत्तिकम् अत एव श्रेष्ठमायुर्मयि कीर्त्यपि कीर्त्यन्वितं स्वच्छं स्थापय । त्वमेव बलाधायकं तेजसः आधायकं च भव । ऐणेयमजिनमुपवीतानन्तरं धारयति । तत्र मन्त्रः—मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरꣳसमिद्धम् । अनाहनस्य वसनं परीदं वाज्यजिनं दधेयमिति । एतच्चाजिनधारणं यज्ञोपवीतपरिधानानन्तरमाचम्य । 'दण्डं प्रयच्छति' वक्ष्यमाणलक्षणं दण्डं माणवकायाचार्यः प्रयच्छति । 'तं प्रति'''सायेति' माणवकश्चाचार्यहस्तात्तं दण्डं प्रतिगृह्णाति यो मे दण्ड इतिमन्त्रेण । 'दीक्षावदेके' मुखसंमितमौदुम्बरं दण्डं प्रयच्छतीति कात्यायनोक्तप्रकारेण दण्डादानं प्रतिग्रहणं च माणवकस्य । तत्र हेतुमाह—'दीर्घ'''नात्' दीर्घसत्रं वा एष उपैति यो ब्रह्मचर्यमुपैतीत्यादिवाक्यादित्यर्थः । 'अथा'''सृभिः' आचार्यः स्वाञ्जलिना जलमापोहिष्ठेतितिसृभिर्माणवकाञ्जलौ प्रक्षिपतीत्यर्थः । 'अथैनꣳ'''क्षुरिति' सूर्यमुदीक्षस्वेति आचार्यस्य बटुं प्रति प्रैषः । स च तच्चक्षुरिति सूर्यमीक्षते । 'अथास्य'''मह्यमिति' वटोर्दक्षिणांसस्योपरि स्वदक्षिणहस्तं नीत्वा वटोर्हृदयमालभ्य मम व्रत इतिमन्त्रं पठेदित्यर्थः । 'अथा'''प्रत्याह' अमुकगोत्रः अमुकशर्मा अहं भो३ इति कुमारः स्वनामाचार्यं प्रति कथयतीत्यर्थः । 'अथैन'''सीति' एनं वटुमाचार्यः कस्य ब्रह्मचार्यसीत्याहेत्यर्थः । भवत इत्युच्यमाने । कुमारेणेति शेषः । 'इन्द्र'''सावितिः' असौ अमुकगोत्रामुकप्रवराऽमुकशर्मन्निति अहमाचार्यस्तवेत्यन्तं पठित्वा पठेदित्यर्थः । 'अथैनं'''रिष्या इति' अनेन मन्त्रेण माणवकं भूतेभ्यः परिददाति । इति द्वितीया कण्डिका ॥२॥

प्रदक्षिणमग्निं परीत्योपविशति ॥ १ ॥ अन्वारब्ध आज्याहुतीर्हुत्वा प्राशनान्तेऽथैनꣳ सꣳशास्ति ब्रह्मचार्यस्यपोशान कर्म कुरु मा दिवा सुषुप्था वाचं यच्छ समिधमाधेह्यपोशानेति ॥ २ ॥ अथाऽस्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायोपसन्नाय समीक्षमाणाय समीक्षिताय ॥ ३ ॥ दक्षिणतस्तिष्ठत आसीनाय वैके ॥ ४ ॥ पच्छोऽर्द्धर्चशः सर्वां च तृतीयेन सहानुवर्तयन् ॥ ५ ॥ संवत्सरे षण्मास्ये चतुर्विꣳशत्यहे द्वादशाहे षडहे त्र्यहे वा ॥ ६ ॥ सद्यस्त्वेव गायत्रीं ब्राह्मणायानुब्रूयादाग्नेयो वै ब्राह्मण इति श्रुतेः ॥ ७ ॥ त्रिष्टुभꣳ राजन्यस्य ॥ ८ ॥ जगतीं वैश्यस्य ॥ ९ ॥ सर्वेषां वा गायत्रीम् ॥ १० ॥ ॥ ३ ॥

( कर्कः )—प्रदक्षिणमग्निं परीत्योपविशति कुमारः । अन्वारब्ध आज्याहुतीर्हुत्वा प्राशनान्तेऽथैनꣳ सꣳशास्ति । आचार्यः कुमारं ब्रह्मचार्यसीत्येवमादिभिः प्रैषवाक्यैः । ब्रह्मचार्यसीत्युक्ते भवामीति प्रत्याह कुमारः । अपोऽशानेत्युक्ते अश्नानीति प्रत्याह कुमारः । कर्म कुर्वित्युक्ते करवाणीति प्रत्याह कुमारः । मा दिवा सुषुप्था इत्युक्ते न स्वपानीति । वाचं यच्छेत्युक्ते यच्छानीति । समिधमाधेहीत्युक्ते आदधामीति । अपोऽशानेत्युक्ते अश्नानीति कुमारः । एतदनुशासनम् । 'अथास्मै'''ताय' गुरुं समीक्षमाणाय कुमाराय । उपसदनं च पादोपसंग्रहणपूर्वकम् । सवितृदेवत्यां गायत्रीछन्दस्कां

सावित्रीम् । तस्मादेतां गायत्रीमेव सावित्रीमनुब्रूयादिति वचनात् । 'दक्षिण···वैके' एके आचार्याः सावित्रीमन्वाहुः । एकीयशब्दाद्विकल्पः । 'पच्छो···र्तयन्' पच्छ इति पादं पादं पुनरर्द्धमर्द्धं तृतीयेन सर्वां सहानुवर्तयन् । 'संवत्स···त्र्यहेवा' सावित्र्युच्यते एवमेव हि श्रूयत इति । 'सद्य···इति श्रुतेः' आग्नेयो वै ब्राह्मणः सद्यो वा अग्निर्जायते तस्मात्सद्य एव ब्राह्मणायानुब्रूयादिति । इतरेषां त्विच्छया कालः । 'त्रिष्टुभर्ठराजन्यस्य' सावित्रीमनुब्रूयात् । 'जगतीं वैश्यस्य' सावित्रीमनुब्रूयात् । 'सर्वेषां वा गायत्रीमनुब्रूयात्' वाशब्दो विकल्पार्थः ॥ ३ ॥ * ॥

( जयरामः )—एवं वस्त्रादिना संस्कृतः, अग्निं प्रदक्षिणं कृत्वा पश्चादग्नेराचार्यस्योत्तरत उपविशति कुमारः । अन्वारब्धे ब्रह्मणा आचार्ये आघारादिस्विष्टकृदन्ताश्चतुर्दशाहुतीर्हुत्वा संस्रवप्राशनान्ते ब्रह्मचार्यसीत्येवमादिभिः प्रैषवाक्यैरेनं कुमारमनुशास्ति शिक्षयति । तत्र ब्रह्मचार्यसीत्युक्ते असानीत्याह कुमारः । अपोशानेत्युक्ते अश्नानीति । कर्म कुरु इत्युक्ते करवाणीति । मा दिवा सुषुप्था इत्युक्ते न स्वपानीति । वाचं यच्छेत्युक्ते यच्छानि । समिधमाधेहीत्युक्ते आदधानीति । पुनरपोशानेत्युक्ते अश्नानीत्येतदनुशासनम् । समीक्षमाणाय गुरुं समीक्षितश्च तेनैव । उपसदनं च पादोपसंग्रहणपूर्वकम् । सावित्री सवितृदेवत्यां गायत्रीच्छन्दस्कामृचम् । तस्मादेतां गायत्रीमेव सावित्रीमनुब्रूयादिति श्रवणात् । एके आचार्या अग्नेर्दक्षिणतस्तिष्ठते स्थिताय आसीनाय वा सावित्रीमन्वाहुः । एकीयशब्दाद्विकल्पः । कथमन्वाहुः । पच्छः प्रथमं पादं पादं ततोऽर्द्धर्चशः अर्द्धर्चमर्द्धर्चम् । ततस्तृतीयेन सर्वां सह बटुना सममनुवर्तयन् पठन् । संवत्सर इति सावित्रीप्रदानस्यैते कालविकल्पाः । ब्राह्मणाय तु सद्यो ब्रूयात् । श्रूयते च सद्यस्त्वेवेति । आग्नेयो वै ब्राह्मणः सद्यो वा अग्निर्जायते । तस्मात्सद्य एव ब्राह्मणायानुब्रूयात् । इतरेषां त्विच्छया विकल्पः । त्रिष्टुभं सावित्रीमनुब्रूयात् । जगतीं सावित्रीमनुब्रूयात् । तत्र तत्सवितुरिति विश्वामित्रः प्रतिष्ठा गायत्री सविता होमानन्तरमाहवनीयेक्षणजपे० । क्षत्रियाय तु देवसवितरिति बृहस्पतिस्त्रिष्टुप् सविता वाजपेयाज्यहोमे० । वैश्यस्य च विश्वारूपाणि प्रतिमुञ्चत इति प्रजापतिर्जगती सविता उपासंभरणे रुक्मपाशप्रतिमोके० । सर्वेषां गायत्री वेति विकल्पः । ॥ ३ ॥ ॥ * ॥

( हरिहरः )—'प्रदक्षि···शति' एवं वस्त्रदानादिभिराचार्येण संस्कृतो माणवकः अग्निं प्रदक्षिणं यथा भवति तथा परीत्य परिक्रम्य पश्चादग्नेराचार्यस्योत्तरत उपविशति आस्ते । 'अन्वा···नान्ते' ततो ब्रह्मणाऽन्वारब्ध आचार्यः आघारादिस्विष्टकृदन्ताश्चतुर्दशाहुतीर्हुत्वा संस्रवप्राशनान्ते । अत्र पुनरन्वारम्भानुवादश्चतुर्दशाहुतिहोमव्यतिरिक्तहोमप्रतिषेधार्थः । 'अथैन···नेति' अथानन्तरमाचार्यः एनं माणवकं संशास्ति शिक्षयति । कथं ब्रह्मचारी असि असानीति माणवकेन प्रत्युक्तः । अपः अशान पिब इति । अश्नानीति प्रत्युक्तः । कर्म स्नानादिकं स्ववर्णाश्रमविहितं कुरु विधेहि करवाणीति प्रत्युक्तः । मा दिवा दिवसे सुषुप्थाः स्वाप्सीरिति न स्वपानीति प्रत्युक्तः । वाचं गिरं यच्छ नियमयेति यच्छानीति प्रत्युक्तः । समिधं वक्ष्यमाणप्रकारेण आधेहि अग्नौ प्रक्षिपेति आदधानीति प्रत्युक्तः । अपोऽशानेति पूर्ववत् । 'अथास्मै···यन्' अथ शासनानन्तरमस्मै ब्रह्मचारिणे सावित्रीं सवितृदेवत्यां गायत्रीच्छन्दस्कां विश्वामित्रदृष्टां ऋचमन्वाह उपदिशति । कथंभूताय प्रत्युङ्मुखाय पश्चिमाभिमुखाय । पुनः कथंभूताय उपविष्टाय च अग्नेरुत्तरस्यां दिशि तथा उपसन्नाय पादोपसंग्रहणादिना भजमानाय । तथा समीक्षमाणाय सम्यक् आचार्यमवलोकयते । तथा आचार्येण सम्यगवलोकिताय । पक्षान्तरमाह दक्षिणतः अग्नेर्दक्षिणस्यां दिशि तिष्ठते ऊर्ध्वाय ऊर्ध्वीभूताय वा आसीनाय उपविष्टाय इत्येके आचार्याः सावित्रीप्रदानं मन्यन्ते । कथमन्वाह पच्छः पादं पादं अर्द्धर्चशः तदनु अर्द्धर्चमर्द्धर्चम् तदनु च सर्वां तृतीयेन वारेण सह मिलित्वा आवर्तयन्

पठन् । ' संव'''गायत्रीम् ' सावित्रीप्रदानस्य कालं विकल्पेनाह—संवत्सरे उपनयनमारभ्य पूर्णे वर्षे षण्मास्ये षडेव मासाः षण्मास्यं स्वार्थे तद्धितश्छान्दसो वृद्धिलोपः " छन्दोवत्सूत्राणि भवन्तीति वचनात् " तस्मिन् षण्मास्ये चतुर्विंशत्यहे चतुर्विंशत्या अहोभिरुपलक्षितः कालः चतुर्विंशत्यहः तस्मिन् द्वादशाहे द्वादशभिरहोभिरुपलक्षितः कालो द्वादशाहः तस्मिन् षडहे षड्भिरहोभिरुपलक्षितः कालः षडहः तस्मिन् त्र्यहे त्रिभिरहोभिरुपलक्षितः कालस्त्र्यहः तस्मिन् । वाशब्दः सर्वेषु संवत्सरादिषु संबध्यते । एते कालविकल्पाः आचार्यस्य शुश्रूषादिशिष्यगुणतारतम्यापेक्षाः । एवं सामान्येन सावित्रीप्रदानस्य कालविकल्पानभिधायाधुना ब्राह्मणस्य विशेषमाह । तुशब्दः पक्षव्यावृत्तौ । ब्राह्मणस्य नैते कालविकल्पाः किंतु क्षत्रियवैश्ययोः । सद्य एव गायत्रीं ब्राह्मणायानुब्रूयान् कथयेत् कुतः आग्नेयो वै ब्राह्मण इति श्रुतेः । आग्नेयो अग्निदैवत्यः ब्राह्मण इति वेदवचनात् । 'त्रिष्टुभः राजन्यस्य जगतीं वैश्यस्य सर्वेषां वा गायत्रीं' राजन्यस्य क्षत्रियस्य त्रिष्टुभं त्रिष्टुप् छन्दो यस्याः सा त्रिष्टुप् तां त्रिष्टुभं सावित्रीम्, जगती छन्दो यस्याः ऋचः सा जगती तां जगतीं सावित्रीं वैश्यस्य विशः, सावित्रीमनुब्रूयादित्यनुषज्यते । सर्वेषां वा गायत्रीं यद्वा सर्वेषां ब्राह्मणक्षत्रियविशां गायत्रीमेव गायत्रीछन्दस्कामेव सावित्रीं सवितृदेवताकां तत्सवितुरिति सकलवेदशाखाम्नातां ऋचमनुब्रूयात् ॥ ३ ॥ ॥ * ॥

( गदाधरः )—'प्रद'''शति' परिदानानन्तरं कुमारोऽग्निं प्रदक्षिणं यथास्यात्तथा परीत्य परिक्रमणं कृत्वाऽग्नेरुत्तरत उपविशति । पश्चादग्नेराचार्यस्योत्तरत उपविशतीति जयरामहरिहरौ । पश्चादग्नेरुपवेशनमिति भर्तृयज्ञकारिकाकारौ । आचार्यस्य दक्षिणत इति गर्गपद्धतौ । आचार्यस्योत्तरत इति वासुदेवः । 'अन्वा'''नेति' तत आचार्यो ब्रह्मणाऽन्वारब्ध आघारादिस्विष्टकृदन्ताश्चतुर्दशाज्याहुतीर्हुत्वा संस्रवप्राशनान्ते ब्रह्मचार्यसीत्येवमादिभिः सम्प्रैषवाक्यैरेनं कुमारमनुशास्ति शिक्षयति । अत्र ब्रह्मोपवेशनादि दक्षिणादानान्तं कर्म कृत्वाऽनुशासनं कार्यम् । तद्यैवम्—ब्रह्मचार्यसीत्याचार्य आह । भवानीति ब्रह्मचारी प्रत्याह । अपोशानेत्याचा० । अश्नानीति ब्र० । कर्म कुर्वित्याचा० । करवाणीति ब्र० । मा दिवा सुषुप्था इत्याचा० । न स्वपानीति ब्र० । वाचं यच्छेत्याचा० । यच्छानीति ब्र० । समिधमाधेहीत्याचा० । आदधानीति ब्र० । अपोशानेत्याचा० । अश्नानीति ब्र० । ब्रह्मचार्यसीत्यादिप्रैषाणामयमर्थः—ब्रह्म कर्म चरतीत्येवं शीलो ब्रह्मचारी असि भवसि । अपः अशान पिब । कर्म स्नानादिकं स्ववर्णाश्रमविहितं कुरु विधेहि । दिवसे मा स्वाप्सीः । स्मृत्युक्तकाले वाचं गिरं यच्छ नियमय । समिधं वक्ष्यमाणप्रकारेण आधेहि अग्नौ सर्वदा प्रक्षिप । प्रथममाचमनमशिष्यन् द्वितीयं चाशित्वा । अशिष्यन्नाचामेदशित्वाऽऽचामेदिति श्रुतेः । कर्मकरणमविशेषोपदिष्टमप्याचार्याय । आचार्याय कर्म करोतीति श्रुतत्वादिति भर्तृयज्ञः । सावित्र्युपदेशमाह ' अथास्मै'''ताय ' अथाचार्योऽस्मै ब्रह्मचारिणे सावित्रीं सवितृदेवताकां गायत्रीछन्दस्कां तत्सवितुरित्यृचमन्वाहोपदिशति । किंभूताय प्रत्यङ्मुखाय पश्चिमाभिमुखाय । पुनः किंलक्षणाय उपविष्टाय आसीनाय । क इत्यपेक्षायामुत्तरतोऽग्नेः अग्नेरुत्तरस्यां दिशि । उपसन्नाय पादोपग्रहणादिना भजमानाय । पुनः किंभूताय गुरुं समीक्षमाणाय । पुनः किंभूताय समीक्षिताय गुरुणा सम्यगवलोकिताय । श्रुतिः—तस्मादेतां गायत्रीमेव सावित्रीमनुब्रूयादिति । मदनपारिजाते शातातपः—तत्सवितुर्वरेण्यमिति सावित्रीं ब्राह्मणस्येति । ' दक्षिण''' वैके ' एके आचार्या अग्नेर्दक्षिणतो दक्षिणस्यां दिशि तिष्ठते स्थिताय ऊर्ध्वीभूताय ब्रह्मचारिणे आसीनायोपविष्टाय वा सावित्रीप्रदानमाहुः । अथ हैके दक्षिणतस्तिष्ठते वाऽऽसीनाय वाऽन्वाहुरिति श्रुतत्वात् । एकग्रहणाद्विकल्पः । ' पच्छो'''र्तयन् ' सावित्रीप्रदानेऽयं प्रकारः । प्रथमं तावत्पच्छः पादं पादं , ततोऽर्द्धर्चशः अर्धर्चं अर्द्धर्चम्, ततस्तृतीयेन वारेण सह वदुना

सर्वां च सावित्रीमनुवर्तयन् आवर्तयन् पठेत् । अत्राह मदनपारिजाते लौगाक्षिः—ॐभूर्भुवःस्वरित्युक्त्वा तत्सवितुरिति सावित्रीं त्रिरन्वाह पच्छोऽर्द्धर्चशः सर्वामन्तत इति । तां वै पच्छोन्वाहेत्युपक्रम्य अथार्द्धर्चश अथ कृत्स्नामिति श्रुतेः । सावित्रीप्रदानस्य कालविकल्पानाह 'संवत्सरे'''वा' उपनयनदिनमारभ्य संवत्सरे पूर्णे वा षण्मास्ये मासपक्षे वा चतुर्विंशत्यहे वा द्वादशाहे षडहे वा त्र्यहे वा सावित्रीमनुब्रूयादाचार्यः । तां ह स्मै तां पुरा संवत्सरेऽन्वाहुरित्युपक्रम्य अथ षट्सु मासेष्वथ चतुर्विंशत्यहे अथ द्वादशाहे अथ षडहे अथ त्र्यहे इति श्रुतत्वात् । क्षत्रियवैश्ययोरेते कालविकल्पाः ब्राह्मणस्य तु वक्ष्यमाणत्वात् । एते कालविकल्पा आचार्यशुश्रूषादिशिष्यगुणतारतम्यापेक्षा इति हरिहरः । षण्मास्ये इति षडेव मासाः षण्मास्यं स्वार्थे तद्धितश्छान्दसश्च वृद्धिलोपः । छन्दोवत्सूत्राणि भवन्तीति वचनात् । ब्राह्मणस्य कालमाह । 'सद्य'''श्रुतेः' तु पुनः ब्राह्मणाय सद्य एव गायत्रीमनुब्रूयात् उपदिशेत् कुतः । 'आग्ने'''श्रुतेः' आग्नेयः अग्निदेवत्य इति अतोऽस्मै सद्य एवोपदेशो युक्तः । आग्नेयो वै ब्राह्मणः सद्यो वा अग्निर्जायते तस्मात्सद्य एव ब्राह्मणायानुब्रूयादिति श्रुतेः । 'त्रिष्टुभर्ठ०राजन्यस्य' त्रिष्टुप् छन्दो यस्याः सा त्रिष्टुप् तां सावित्रीं त्रिष्टुभं देवसवितरित्यादिकां राजन्यस्य क्षत्रियस्यानुब्रूयात् । पारिजाते—देवसवितरिति राजन्यस्येति । तार्छ सवितुरिति भर्तृयज्ञेनोदाहृता । 'जगती वैश्यस्य' जगतीछन्दस्कां सावित्रीं विश्वारूपाणि प्रतिमुञ्चत इत्यृचं वैश्यस्यानुब्रूयात् । जगती छन्दो यस्याः सा जगती ताम् । युञ्जते मन इति भर्तृयज्ञभाष्ये । विश्वारूपाणीति वैश्यस्येति पारिजाते । 'सर्वे'''त्रीम्' गायत्री छन्दो यस्याः सा गायत्री तां सावित्रीं सर्वेषां ब्राह्मणक्षत्रियविशां तत्सवितुरित्यृचमनुब्रूयात् । वा शब्दो विकल्पार्थः ॥ इति तृतीया कण्डिका ॥ ३ ॥ ॥ * ॥

( विश्व० )—'प्रदक्षि'''शति' आचार्यस्य दक्षिणतो वटुरिति शेषः । तत उपयमनकुशादानादि पर्युक्षणान्तमाचार्यस्य कृत्यम् । 'अन्वा'''नान्ते' कुशहस्तेन वटुनान्वारब्धः आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्रायश्चित्तं स्विष्टकृच्चेत्येता आज्याहुतीर्हुत्वा संस्रवप्राशनादि दक्षिणादानान्ते क्रियाकलापे जात इत्यर्थः । 'अथैन९ स९शास्ति' वटुमाचार्यः । किमत आह—'ब्रह्मचा'''शानेति' वटुश्च असानि, अश्नानि, करवाणि, न दिवा स्वपानि, यच्छानि, आदधानि, अश्नानि, इति प्रत्याचार्यवचनं ब्रूयात् । प्रणवेन वा प्रत्युत्तरयति । ततो बर्हिर्होमः प्रणीताविमोकः कर्मापवर्गसमित्प्रक्षेप उत्सर्जनं ब्रह्मण उपयमनकुशानामग्नौ प्रक्षेपः । ततो दश ब्राह्मणान्संकल्प्य भोजयेत् । एवं बर्हिर्होमादि ब्राह्मणभोजनान्तां कर्मसमाप्तिं विदध्यात् । इत्युपनयनम् । इदानीं सावित्रव्रतादेशमाह—'अथास्मै'''न्वाह' अस्मै वटवे आचार्यः । कीदृशाय वटवे सावित्रव्रतादेश इत्याकाङ्क्षायामाह—'उत्त'''ताय' उपलिप्त उद्धतावोक्षितेऽग्निस्थापनादि बर्हिस्तरणान्तमुत्तरतोऽग्नेरित्युक्तेः । नचोपस्थितवह्नेः परित्यागे बीजाभावात्तस्यैवोत्तरत इति वाच्यम् । समाप्तिव्रतादेशादौ वह्निरक्षाविधायकविधेरभावात्तदुपशमे प्रायश्चित्ताद्युपायानुपदेशाच्च वह्न्यन्तरोपस्थितेरावश्यकत्वात् । तेन बर्हिस्तरणान्ते आचार्येण कृते सति ब्रह्मचारी दक्षिणहस्तेनोदकमादायाग्निं प्रति वदेत् । क्षत्रियाद्युपदेशसमयस्य नानात्वेऽप्याग्नेयो वै ब्राह्मण इत्यादिविधिना ब्राह्मणायोपदेशस्य तात्कालिकत्वसमर्थनात्तस्यैव प्रयोगो लिख्यते । अग्ने व्रतपते व्रतं चरिष्यामि सावित्रं सद्यःकालं तच्छकेयं तन्मे राध्यतामिति व्रतं गृहीत्वोपविश्याचार्यं कुशैरन्वारभेत्सर्वास्वाहुतिषु । सर्वेषु ब्रह्मचर्यव्रतेषु च । तत आचार्य उपयमनकुशादानाद्याज्यभागान्तं कुर्यात् । एतदेव व्रतादेशनविसर्गेष्वित्युक्तेः पृथिव्या अग्नय इत्याद्याहुतिचतुष्टयं प्रतिवेदमेवं षोडश, प्रजापतय इत्यादि सप्त, महाव्याहृत्यादिस्विष्टकृदन्ता (अतुर्) दश । एताः सर्वेषु व्रतादेशेषु विसर्गेषु च सप्तत्रिंशदाहुतयः । ततः संस्रवप्राशनादि दक्षि-

ततः आवाहनं, सावित्रीं त्र्यक्षरां शुक्लां शुक्लवस्त्रां त्रिलोचनाम् । त्रिशूलहस्तां वृषभादिधिरूढां रुद्राणीं रुद्रदेवतां । यजुर्वेदकृतोत्सङ्गां जटामुकुटमण्डिताम् । वरदां त्र्यक्षरां साक्षाद्देवीमावाहयाम्यहम् । त्र्यक्षरां प्रणवात्मिकाम् । ततो भूर्भुवःस्वरिति गायत्र्या च शिखां स्पृशेत् । उपवीती बद्धशिखः समाचम्य यथागमम् । पवित्रपाणिः सोंकारं नारायणमनुस्मरेत् । अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा । यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः । इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे । दर्भेण सोदकेनैव दद्यादासनमात्मनः । पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चासनम् । ॐकारस्य ऋषिर्ब्रह्मा देवोऽग्निस्तस्य कथ्यते । गायत्री च भवेच्छन्दो नियोगः सर्वकर्मसु । त्रिमात्रस्तु प्रयोक्तव्य आरम्भे सर्वकर्मणाम् । व्याहृतीनां च सर्वेषामार्षं चैव प्रजापतिः । गायत्र्युष्णिगनुष्टुप् च बृहती त्रिष्टुवेव च । पङ्क्तिश्च जगती चैव छन्दांस्येतानि सप्त वै । अग्निर्वायुस्तथा सूर्यो बृहस्पतिरपांपतिः । इंद्रश्च विश्वेदेवाश्च देवताः समुदाहृताः । प्राणस्यायमने चैव विनियोग उदाहृतः । एतास्तु व्याहृतीः सप्त यः स्मरेत्प्राणसंयमे । उपासितं भवेत्तेन विश्वं भुवनसप्तकम् । भूर्लोकं पादयोर्न्यस्य भुवर्लोकं च जानुनोः । स्वर्लोकं गुह्यदेशे तु नाभिदेशे महस्तथा । जनलोकं च हृदये कण्ठदेशे तपस्तथा । भ्रुवोर्ललाटसंधौ च सत्यलोकं प्रतिष्ठितम् । सविता देवता यस्या मुखमग्नित्रयात्मकम् । विश्वामित्र ऋषिश्छन्दो गायत्री सा विशिष्यते । जपहोमोपनयने विनियोगो विशिष्यते । भूर्विन्यस्य हृदये भुवः शिरसि विन्यसेत् । स्वरितीदं शिखायां च गायत्र्याः प्रथमं पदम् । विन्यसेत्कवचे धीमान् द्वितीयं नेत्रयोर्न्यसेत् । तृतीयेनास्त्रविन्यास एष न्यासोऽघनाशनः । ॐभूः पादयोः । भुवः जानुनोः । स्वः गुह्ये । महः नाभौ । जनः हृदये । तपः कण्ठे । सत्यं भ्रूललाटसंधौ । भूः हृदयाय नमः । भुवः शिरसे स्वाहा । स्वः शिखायै वषट् । तत्सवितुर्वरेण्यं कचाय हुं । भर्गोदेवस्य धीमहि नेत्रत्रयाय वौषट् । धियोयोनः प्रचोदयात् अस्त्राय फट् । शिरोन्यासः । ॐआपोगुह्ये । ज्योतिश्चक्षुषी । रसो मुखम् । अमृतं जानुनी । ब्रह्म हृदये । भूः पादयोः । भुवः नाभौ । स्वर्ललाटे । ॐकारं मूर्ध्नि । एवं ऋष्यादिकं स्मृत्वा न्यासं कृत्वा करौ संपुटीकृत्य मध्याह्नसंध्यां सावित्रीं रुद्राणीं रुद्रदेवतामाह्वयामि । आगच्छ वरदे देवि त्र्यक्षरे रुद्रवादिनि । सावित्रि छन्दसां मातः रुद्रयोने नमोस्तु ते । ततो भूर्भुवः स्वरित्यपोऽभिमन्त्र्य शिरसः प्रदक्षिणं परिक्षिपेत् । अथ प्राणायामः । याज्ञवल्क्यः—सव्याहृतिकां सप्रणवां गायत्रीं शिरसा सह । त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते । स्मृत्यन्तरे—दक्षिणे श्वासमाहृत्य वामे चैव विसर्जयेत् । अनेन विधिना चैव प्राणायामो विधीयते । अनामिका कनिष्ठा तु अङ्गुष्ठस्तु तृतीयकः । नासिकायां निरुन्धीत तर्जनीमध्यमामृते । अङ्गुष्ठेन पुटं ग्राह्यं नासाया दक्षिणं पुनः । कनिष्ठानामिकाभ्यां तु वामं प्राणस्य संग्रहे । आदानरोधमुत्सर्गं वायोस्त्रिस्त्रिः समभ्यसेत् । ब्रह्माणं केशवं शम्भुं ध्यायेद्देवताननुक्रमात् । रक्तं प्रजापतिं ध्यायेद्विष्णुं नीलोत्पलप्रभम् । शंकरं त्र्यम्बकं श्वेतं ध्यायन्मुच्येत बन्धनात् । षोडशाक्षरकं ब्रह्म गायत्र्यास्तु शिरः स्मृतम् । सशिरा चैव गायत्री यैर्विप्रैरवधारिता । तेजः संबन्धनिर्मुक्ताः परं ब्रह्म विशन्ति ते । आपोज्योतिरित्येष मन्त्रो वै तैत्तिरीयके । अस्य प्रजापतेरार्षं छन्दोहीनं यजुर्यतः । ब्रह्माग्निवायुसूर्याश्च देवताः प्राणायामे विनियोगः । प्राणायामत्रयं कार्यं संध्यासु च तिसृष्वपि । नित्ये देवार्चने होमे संध्यायां श्राद्धकर्मणि । स्नाने दाने तथा ध्याने प्राणायामास्त्रयः स्मृताः । प्राणस्यायमनं कृत्वा आचामेत्प्रयतोऽपि सन् । आपः पुनन्त्वित्याचमनमन्त्रः । अस्य नारायण ऋषिः आपो देवता अनुष्टुप् छन्दः आचमने विनियोगः । आपः पुनन्तु पृथ्वि पृथ्वी पूता पुनातु माम् । पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूतं पुनातु माम् । यदुच्छिष्टमभोज्यं वा यद्वा दुश्चरितं मम । सर्वं पुनन्तु मामापो असतां च प्रतिग्रहꣳस्वाहा । शौनकः—सायमग्निश्चमेत्युक्त्वा प्रातः सूर्येत्यपः पिबेत् । आपः पुनन्तु

मध्याह्ने एतैश्चाचमनं चरेत्। ततो द्विराचमनम्। अथ मार्जनम्। ब्रह्माण्डपुराणे—नद्यां तीर्थे ह्रदे वाथ भाजने मृन्मयेऽथवा। औदुम्बरेऽथ सौवर्णे राजते दारवे जलम्। कृत्वाथ वामहस्तेन संध्योपास्तिं समाचरेत्। आपोहिष्ठेति तिसृभिर्नवभिस्तु प्रयतः शुचिः। नवप्रणवयुक्ताभिर्जलं शिरसि निक्षिपेत्। प्रतिपादं प्रणवान्वयान्नवप्रणवता। पक्षान्तरमपि—ऋगन्ते मार्जनं कुर्यात्पादान्ते वा समाहितः। आपोहिष्ठेत्यृचा कार्यं मार्जनं तु कुशोदकैः। तच्च मार्जनजलं प्रणवव्याहृतिपूर्विकया गायत्र्या स्पृशेत्। बौधायनः—दत्त्वा चाभिमुखं तोयं मूर्ध्नि ब्रह्मसुखेन तु। आपोहिष्ठेतिसूक्तेन दर्भैर्मार्जनमाचरेत्। यस्यक्षयायेति जलं सकुशं प्रक्षिपेत्त्वधः। आपोहिष्ठेति तिसृणां सिंधुद्वीप ऋषिः आपो देवता जलादानक्षेपयोर्विनियोगः। द्रुपदादिवेति प्राजापत्यश्विसरस्वत्य ऋषयः। आपो देवता। अनुष्टुप् छन्दः अञ्जलिप्रक्षेपे विनियोगः। ऋतं च सत्यं चेत्यघमर्षण ऋषिः। भाववृत्तिर्देवता अनुष्टुप्छन्दः प्रक्षेपे विनियोगः ॐऋतं च सत्यंचा०मथोस्वः। कात्यायनः—द्रुपदा नाम गायत्री यजुर्वेदे प्रतिष्ठिता। सकृदेव जपात्तस्या ब्रह्महत्यां व्यपोहति। ऋतंचेतिपठन्त्यस्मात्पापमामरणान्तिकम्। मनोवाक्कायजं सर्वमर्पयेदघमर्षणम्। आपः पचतीत्यनेन गायत्रीशिरसा चाघमर्षणं। ॐ आपः पचति भूतानि गुहायां पुरुषोत्तमः। त्वं ब्रह्म त्वं यज्ञस्त्वं विष्णुस्त्वं रुद्रस्त्वं वषट्कारः ॐ आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्। अथ सूर्यार्घः—प्रणवेन व्याहृत्या गायत्र्या चाञ्जलिनाम्बुमिश्राणि पुष्पाणि सूर्याभिमुखंस्तिष्ठन् क्षिपेत् एकमञ्जलिम्। कात्यायनः—उच्छायार्कं प्रति प्रोहेत्रिकेणाञ्जलिमम्भसः। व्यासः—कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम्। आदित्याभिमुखस्तिष्ठंस्त्रिरूर्द्ध्वं संध्ययोः क्षिपेत्। मध्याह्ने तु सकृदेव क्षेपणीयं द्विजातिभिः। तेनाञ्जलिमित्येकवचनं मध्याह्नविषयम्। अथ सूर्योपस्थानम्—ऊर्द्ध्वबाहुः सूर्यमुदीक्षन्नुद्वयमुदुत्यं चित्रं तच्चक्षुरिति। उद्वयं प्रस्कण्व ऋषिः सूर्यो देवता अनुष्टुप्छन्दः। उदुत्यं प्रस्कण्व ऋषिः सूर्यो देवता गायत्री छन्दः। चित्रंदेवानां कुश ऋषिः। सूर्यो देवता। अनुष्टुप् छन्दः। तच्चक्षुरिति वसिष्ठ ऋषिः सूर्यो देवता। परोष्णिक् छन्दः। चतुर्णामपि सूर्योपस्थाने विनियोगः। उद्वयं०—उपस्थानम्। अथ जपः। तेजोऽसीति परमेष्ठी आर्ज्यं गायत्री आवाहने। तुरीयस्य विमल ऋषिः परमात्मा देवता गायत्री छन्दः उपस्थाने विनियोगः। ततो गायत्रीजपः। प्रणवन्यासः। अकारं नाभौ। उकारं हृदये। मकारं मूर्ध्नि। महाव्याहृतित्रयन्यासः। भूः अङ्गुष्ठयोः। भुवस्तर्जनिकाद्वये। ज्येष्ठाङ्गुलिद्वये धीमान् स्वःपदं विनियोजयेत्। भूः हृदये। भुवः शिरसि। स्वः शिखायम्। तत्सवि०ण्यं कवचे। भर्गोदे०हि नेत्रयोः। धियो०त् दिग्विदिक्षु। अथ वर्णन्यासः। तकारं पादाङ्गुष्ठयोः। सकारं गुल्फयोः। विकारं जङ्घयोः। तुकारं जान्वोः। वकारमूर्वोः। रेकारं गुदे। णिकारं लिङ्गे। यकारं कट्याम्। भकारं नाभौ। गोकारमुदरे। देकारं स्तनयोः। वकारं हृदि। स्यकारं कण्ठे। धीकारं मुखे। मकारं तालुदेशे। हिकारं नासिकाग्रे। धिकारं नेत्रयोः। योकारं भ्रुवोः। द्वितीयं योकारं ललाटे। नकारं प्राङ्मुखे। प्रकारं दक्षिणे मुखे। चोकारं पश्चिमे मुखे। दकारमुत्तरे मुखे। याकारं मूर्ध्नि। व्यञ्जनतकारं सर्वतः। पदन्यासः—तत् शिरसि। सवितुः भ्रूमध्ये। वरेण्यं नेत्रयोः। भर्गः वक्त्रे। देवस्य कण्ठे। धीमहि हृदये। धियः नाभौ। यः गुह्ये। नः जान्वोः। प्रचोदयात् पादयोः। तकारं चिन्तयेत्स्वाङ्गे पादाङ्गुष्ठद्वये द्विजः। सकारं गुल्फदेशे तु विकारं जङ्घयोर्न्यसेत्। जान्वोस्तु विद्धि तुकारं वकारं चोरुदेशतः। रेकारं विन्यसेद्गुह्ये णिकारं वृषणे न्यसेत्। कटिदेशे तु यकारं भकारं नाभिमण्डले। गोकारं जठरे योगी देकारं स्तनयोर्न्यसेत्। वकारं हृदये न्यस्य स्यकारं कण्ठदेशतः। धीकारं तु मुखे विद्यान्मकारं तालुदेशतः। हिकारं नासिकाग्रे तु धिकारं नयनद्वये। भ्रुवोर्मध्ये तु योकारं ललाटे तु द्वितीयकं। पूर्वानने नकारं च प्रकारं दक्षिणानने। उत्तरास्ये च चोकारं दकारं

पश्चिमानने । विन्यसेन्मूर्ध्नि याकारं सर्वव्यापिनमीश्वरम् । तथा पदन्यासः—शिरोभ्रूमध्यनयनवक्त्रकण्ठेषु वै क्रमात् । हृन्नाभिगुह्यजानूनां पादयोश्च क्रमान्न्यसेत् । त्रिकेणैव जपः कार्यो जपयज्ञप्रसिद्धये । प्रणवव्याहृतियुतां स्वाहान्तां होमकर्मणि । त्रिको नाम प्रणवो व्याहृतयस्तिस्रो गायत्री चेति । एवकारस्तु प्रकारान्तरनिषेधाय । अथ जपसंख्या—ब्रह्मचारी गृहस्थश्च शतमष्टोत्तरं जपेत् । वानप्रस्थो यतिश्चैव द्विसहस्राधिकं जपेत् । जपानन्तरं विश्वतश्चक्षुरिति विश्वकर्मा भौवन ऋषिः विश्वकर्मा देवता उपस्थाने विनियोगः । विश्वतश्चक्षुरित्युपस्थानं ततः प्रदक्षिणा । देवागातुविद इति मनसस्पतिर्वातो विराट् गायत्रीविसर्जने । देवागातु० वातेधाः । गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि नहि पद्यसे । नमस्ते तुरीयाय दर्शताय पदाय परो रजसे सावदों३ विसर्जनम् । अनेन जपेन रुद्ररूपी सूर्यः प्रीयतामित्युक्त्वा भूर्भुवःस्वरिति हस्तगृहीतमुदकं क्षिपेत् । संध्याप्रार्थनं—यदक्षरपरिभ्रष्टं मात्राहीनं च यद्भवेत् । तत्सर्वं क्षम्यतां देवि क(श्य)पिप्रिय(नि)वासिनि । ततः संध्याविसर्जनम्—उत्तरे शिखरे जाता भूम्यां पर्वतवासिनि । ब्रह्मणा समनुज्ञाता गच्छ देवि यथासुखमित्युदकप्रक्षेपः । इति मध्याह्नसंध्या ॥ ॥ अथ सायंप्रातः संध्ययोर्विशेषः—उपात्तदुरितक्षयार्थं ब्रह्मावास्यै सायंसंध्योपासनमहं करिष्ये इति संकल्पः । वृद्धां सरस्वतीं कृष्णां पीतवस्त्रां चतुर्भुजाम् । शङ्खचक्रगदाशार्ङ्गपद्महस्तां गरुडवाहिनीम् । बदर्याश्रमवासां तां वनमालाविभूषिताम् । वैष्णवीं त्र्यक्षरां शांतां देवीमावाहयाम्यहम् । प्रातःसंध्या तु गायत्री सावित्री मध्यमा स्मृता । या भवेत्पश्चिमा संध्या सा च देवी सरस्वती । आगच्छ वरदे देवि त्र्यक्षरे विष्णुवादिनि । सरस्वति छन्दसां मातर्विष्णुयोने नमोऽस्तु ते । ततः प्राणायामादि । अग्निश्चमेति नारायण ऋषिः अग्निर्देवता प्रकृतिश्छंदः आचमने विनियोगः । अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः । पापेभ्यो रक्षन्तां, यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना, अहस्तदवलुम्पतु यत्किंच दुरितं मयि इदमहं माममृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा । ततो द्विराचमनादि । इमं मे वरुणेति चतसृभिरुपस्थानम् । देवलः—मित्रस्य चर्षणी तिस्रो वसवस्त्वेति चोदये । इमंमेति चतुष्केण सायं कुर्यादुपस्थितिः । अथवा माध्याह्निकमेवोपस्थानम् । व्यासः—संध्यात्रयेऽप्येकमेव उपस्थानं प्रचक्षते । अथोद्वयमथोदुत्यं चित्रं तच्चक्षुरित्यपि । तिष्ठेद्दिवाकरं प्रातः सायं मध्याह्न एव च । केचित्तूद्वयमित्याद्युपस्थानं सायंप्रातःसंध्यायोरुक्तोपस्थानानन्तरं भवतीत्याहुः । सायंसंध्याङ्गभूतेन गायत्र्या जपेन च । यथासंख्येन जाप्येन विष्णुर्मे प्रीयतामिति । विशेषश्च संकल्पावाहनाचमनोपस्थाननिवेदनेषु । इति सायं संध्या ॥ ॥ प्रातः संध्यायां तु विशेषः—उपात्तदुरितक्षयार्थं ब्रह्मावास्यै प्रातःसंध्योपासनमहं करिष्ये । सूर्यश्चमेति नारायण ऋषिः सूर्यो देवता अनुष्टुप् छन्दः आचमने विनियोगः । सूर्यश्च मामन्युश्च मन्युपतयश्च० सूर्ये ज्योतिषि जुहोमि स्वाहा । मित्रस्य चर्षणी धृत इति तिसृभिर्वसवस्त्वेति चोपस्थानम् । अथवा मध्याह्नसंध्यावत् समुचितं वा । अनेन गायत्रीजपेन प्रातःसंध्याङ्गभूतेन ब्रह्मस्वरूपी सविता देवता प्रीयताम् । शेषं मध्याह्नसंध्यावत् । इति प्रातः संध्या ॥ ॥ अथ संक्षेपतः संध्यावन्दनविधिः—आचमनमिदंविष्णुरिति मार्जनं प्राणायामः आचमनं पात्रे उदकं गृहीत्वा ॐकारेण सावित्र्या आपोहिष्ठेतितिसृभिश्च मार्जनं द्रुपदादिवेत्याद्यघमर्षणम् ॐकारेण व्याहृत्या सावित्र्या च सूर्यार्घः उद्वयमुदुत्यं चित्रं तच्चक्षुरित्युपस्थानं ततो यथाशक्ति गायत्रीजपः जपनिवेदनम् । इति मध्याह्न संध्या । एवं सायंप्रातःसंध्ययोरप्यूहनीयः संक्षेपः । आग्नेयव्रतस्थवटोर्व्रतस्य संध्यावन्दनकर्तव्यताधीनत्वात्संध्यावंदनं व्यलेखि । इति तृतीया कण्डिका ॥ ३ ॥

अत्र समिदाधानम् ॥ १ ॥ पाणिनाऽग्निं परिसमूहति अग्ने सुश्रवः

सुश्रवसं मा कुरु यथा त्वमग्ने सुश्रवः सुश्रवा अस्येवं माꣳ सुश्रवःसौश्रवसं कुरु यथा त्वमग्ने देवानां यज्ञस्य निधिपा अस्येवमहं मनुष्याणां वेदस्य निधिपो भूयासमिति ॥ २ ॥ प्रदक्षिणमग्निं पर्युक्ष्योत्तिष्ठन्त्समिधमादधाति अग्नये समिधमहार्षं बृहते जातवेदसे। यथा त्वमग्ने समिधा समिध्यस एवमहमायुषा मेधया वर्च्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकारिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो भूयासꣳस्वाहेति ॥ ३ ॥ एवं द्वितीयां तथा तृतीयाम् ॥ ४ ॥ एषात इति वा समुच्चयो वा ॥ ५ ॥ पूर्ववत्परिसमूहनपर्युक्षणे ॥ ६ ॥ पाणी प्रतप्य मुख विमृष्टे तनूपा अग्नेऽसि तन्वं मे पाह्यायुर्दा अग्नेऽस्यायुर्मे देहि व्वर्चोदा अग्नेऽसि व्वर्चो मे देहि। अग्ने यन्मे तन्वा ऊनं तन्म आपृण ॥ ७ ॥ मेधां मे देवः सविता आदधातु मेधां मे देवी सरस्वती आदधातु मेधामश्विनौ देवावाधत्तां पुष्करस्रजाविति ॥ ८ ॥ ४ ॥ (अङ्गान्यालभ्य जपत्यङ्गानि च म आप्यायन्तां वाक्प्राणश्चक्षुः श्रोत्रंयशोबलमिति त्र्यायुषाणि करोति भस्मना ललाटे ग्रीवायां दक्षिणेꣳसे हृदि च त्र्यायुषमिति प्रतिमन्त्रम्) ॥ ॥ ४ ॥

(कर्कः)—'अत्र···नम्' अत्रावसर इति केचित् तन्न पाठादेव तत्प्राप्तेः। तेनात्रशब्दोऽग्निपरो द्रष्टव्यः। 'पाणिना···असीति' एवमादिभिर्मन्त्रैः प्रतिमन्त्रं परिसमूहनं च संधुक्षणम्। पाणिनेत्येकवचनमेकत्वनियमार्थम्। उभाभ्यामपि संधुक्षणप्रसिद्धिरस्ति। 'प्रदक्षि···धाति' अग्निं पर्युक्ष्य तिष्ठन् समिधमादधाति। 'अग्नये···मिति' स्वाहाकारान्तेन। 'एवं···तृतीयां' समिधमादधाति। 'एषात इति वा' मन्त्रेण समिदाधानम्। समुच्चयो वा द्वयोरपि मन्त्रयोः। 'पूर्वव···क्षणे' अग्नेः कर्तव्ये। 'पाणी···ऽसीति' वाक्यभेदाच्च प्रतिवाक्यं पाणी प्रतप्य मुखविमार्जनम्। मेधां मे देवः सविता मेधां मे देवी सरस्वती इत्यनयोरादधात्वित्यध्याहारः साकाङ्क्षत्वात्। अत्र प्रसिद्ध्या त्र्यायुपकरणानन्तरं गोत्रनामपूर्वकं वैश्वानरादीनामभिवादनम्। त्र्यायुपकरणमनुक्तमपि सूत्रकारेण ॥ ४ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

(जयरामः)—'अत्र···धानम्' अत्रेत्यग्नावेव नत्ववसरे पाठादेव तत्प्राप्तेः। तत्समिदाधानं कथं कर्तव्यमित्यपेक्षायामाह—पाणिनेति। तत्रैकवचनमेकत्वनियमार्थम्। उभाभ्यामपि दृश्यते सन्धुक्षणम्। तच्च समूहनशब्देनाभिधीयते। तत्केन मन्त्रेण भवतीति मन्त्रो वक्ष्यते। अग्ने सुश्रव इत्यादिभिः पञ्चमन्त्रैः। अथ मन्त्रार्थः—तत्र प्रजापतिर्यजुः अग्निः तत्समिन्धने०। हे अग्ने हे सुश्रवः शोभनकीर्ते मा मां सुश्रवसं सुकीर्तिं कुरु। किञ्च हे अग्ने सुश्रवः यथा येन गुणेन त्वं सुश्रवा असि। एवं गुणाधानेन मा मां सुश्रवःसौश्रवसम् सुश्रवाश्चासौ सौश्रवसश्च तम्। तत्र सुश्रवाः वटुः स्वयम्। सुश्रवा गुरुस्तस्यायं

सौश्रवसः ममाचार्यमपि सुश्रवसं कृत्वा तदीयत्वेन मां सौश्रवसं कुर्वित्यर्थः । किञ्च हे अग्ने यथा त्वं दीव्यन्ति प्रकाशयन्त इति देवा अङ्गानि इन्द्रादयो वा यज्ञस्य चाङ्गिनो वेदस्य विष्णोर्वा निधिपाः निधीनां मन्त्राणामधिष्ठानमसि । एवमहं वेदस्य साङ्गस्य मनुष्याणां च तदध्येतॄणां निधिपाः वेदस्य निधिरधिकरणम् मनुष्याणां पालकश्च भूयासमिति।प्रदक्षिणं पर्युक्ष्य समिधमादधाति अग्नौ प्रक्षिपति। 'अग्नये'''स्वाहेत्यन्तेन' मन्त्रेण । अस्यार्थः—तत्र प्रजापतिराकृतिः समित् तदाधाने० हे देवाः इमां समिधमग्नये अग्न्यर्थम् अहार्षम् आहृतवानस्मि । किंभूताय । बृहते परिपूर्णाय जातवेदसे जातं वेदो धनं यस्मात्तस्मै समिन्धे दीप्ये । अनिराकरिष्णुः गुरूपदिष्टधर्माद्यविस्मरणशीलः ब्रह्मवर्चसी याजनादितेजोयुक्तः । शिष्टं स्पष्टम् । एवं द्वितीयां समिधमादधाति तथा तृतीयाम् । 'एषा'''वा' समिदाधाने मन्त्रः । समुच्चयो वा उभयोः । परिसमूहनपर्युक्षणे प्राग्वत् अग्नेः कर्तव्ये । पाणी अग्नौ प्रतप्य ताभ्यां स्वं मुखं विमृष्टे मार्जयति । तनूपाः प्रभृतिभिः सप्तभिर्मन्त्रवाक्यैर्वाक्यभेदात् प्रतिवाक्यम् पाण्योः प्रतपनं मुखविमार्जनं च । तनूपा इत्येतस्य स्वशाखीयत्वात्प्रतीकग्रहणे प्राप्ते मन्त्रवाक्यचतुष्टयस्योपयोगात्सर्वपाठः तत्र तनूपा अग्नेऽसीत्यादयः स्पष्टाः तत्र प्रजापतिर्यजुः अग्निराहवनीयोपस्थाने० । मेधामित्यस्यार्थः—तत्र प्रजापतिरनुष्टुप् लिङ्गोक्ता मुखविमार्जने० । देवो द्युतिमान् सविता सूर्यो मे मह्यं मेधाम् धारणवतीं बुद्धिम् तथा देवी दीप्यमाना सरस्वती मेधां साकाङ्क्षत्वादुभयोरादधात्वित्यध्याहारः । तथा देवौ कान्तौ अश्विनौ दस्रौ मे मह्यम् मेधां आधत्ताम् संपादयताम् । एतानि सप्तवाक्यानि । अत्राङ्गालम्भनत्र्यायुपकरणाभिवादनानि ग्रन्थकारानुक्तान्यप्याचारतोऽनुष्ठेयानि अविरोधात् । तत्राभिवादनं गोत्रनामोच्चारपूर्वकम् पादोपसंग्रहोऽग्न्यादीनाम् अङ्गालम्भत्र्यायुषयोर्मन्त्रौ सूत्रकारान्तरप्रदर्शितौ ग्राह्यौ । तद्यथा अङ्गान्यालभ्य जपत्यङ्गानि च म आप्यायन्ताम् वाक् प्राणश्चक्षुः श्रोत्रं यशोबलमिति त्र्यायुषाणि करोति भस्मना ललाटे ग्रीवायां दक्षिणेऽसे हृदि च त्र्यायुषमिति प्रतिमन्त्रम् । तत्र वाक् च म आप्यायतामिति क्रियाविपरिणामं कुर्यात् । अस्यार्थः सुगमः । तत्र प्रजापतिर्यजुर्लिङ्गोक्ता अङ्गाप्यायने० । त्र्यायुषमिति नारायण उष्णिक् लिङ्गोक्ता भस्मतिलके० ॥ ॥ ४ ॥ ॥ * ॥

( हरिहरः )—'अत्र समिदाधानम्' अत्र सावित्रीप्रदानोत्तरकाले समिधामाधानं प्रक्षेपः ब्रह्मचारिणो भवति । अत्राग्नाविति भाष्यकारः । अत्रावसरस्य पाठादेवसिद्धेः । 'पाणि'''हति' पाणिना दक्षिणहस्तेन अग्निं प्रकृतहोमाधिकरणं परिसमूहति सन्धुक्षयति । इन्धनप्रक्षेपेण वक्ष्यमाणैः पञ्चभिर्मन्त्रैः यथा । 'अग्ने'''भूयासम्' केचित्परिसमूहने त्रीन्मन्त्रान् मन्यन्ते । तद्यथा अग्ने सुश्रव इत्यारभ्य सुश्रवसं माकुरु इत्येकम् । यथात्वमग्ने इत्यारभ्य सौश्रवसं कुरु इत्येवं द्वितीयम् । यथात्वमग्ने देवानामित्यादि भूयासमित्यन्तं तृतीयमिति । 'प्रद'''मिति' ततः प्रदक्षिणं यथाभवति तथाऽग्निं पर्युक्ष्य दक्षिणहस्तगृहीतेनोदकेन परिषिच्य उत्थाय ऊर्ध्वीभूय प्राङ्मुखस्तिष्ठन् समिधं समिध्यते दीप्यते अग्निरनयेति समित् तां समिधं आदधाति प्रक्षिपति । समिल्लक्षणं छन्दोगपरिशिष्टे—नाङ्गुष्ठादधिका कार्या समित्स्थूलतया कचित्।न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥ प्रादेशान्नाधिका न्यूना न तथा स्याद्द्विशाखिका । न सपर्णा न निर्वीर्या होमेषु च विजानता ॥ ब्रह्मपुराणे—पलाशाश्वत्थन्यग्रोधप्लक्षवैकङ्कतोद्भवाः। अश्वत्थोदुम्बरो बिल्वश्चन्दनः सरलस्तथा ॥ शालश्च देवदारुश्च खादिरश्चेति याज्ञिकाः । मरीचिः—विशीर्णा विदला ह्रस्वा वक्राः ससुषिराः कृशाः । दीर्घाः स्थूला घुणैर्जुष्टाः कर्मसिद्धिविनाशिकाः ॥ अस्य पूर्वश्लोकः—प्रागग्राः समिधो देयास्ताश्च काम्येष्वपाटिताः । काम्येषु च सवल्काद्रा विपरीता जिघांसत इति । केन मन्त्रेण । 'अग्नये'''वा' एवमनेनैव मन्त्रेण द्वितीयां समिधमादधाति तथा तेनैव मन्त्रेण तृतीयाम् । मन्त्र-

विकल्पमाह्—एषा ते अग्ने समिदित्यादि आचष्यासिषीमहीत्यन्तेन वा मन्त्रेण । अथवा अग्नये समिधमित्येषात इतिद्वयोर्मन्त्रयोः समिदाधाने समुच्चयः ऐक्यम् । ततश्च मन्त्रद्वयान्ते समित्प्रक्षेपः । इति त्रयो मन्त्रविकल्पाः । 'पूर्वव'''क्षणे' पूर्ववत् अग्ने सुश्रव इत्यादिभिः पञ्चभिर्मन्त्रैः परिसमूहनं पर्युक्षणमपि पूर्ववत्कुर्यात् । 'पाणी'''विति' पाणी हस्तौ प्रतप्य तूष्णीमग्नौ तापयित्वा तनूपा अग्नेसीत्यादिभिः सप्तभिर्मन्त्रैः प्रतिमन्त्रं पाणिभ्यां मुखं विमृष्टे । ललाटादिचिबुकान्तं प्रोञ्छति । तत्र मेधां मे देवः सविता मेधां देवी सरस्वती अनयोरादधात्वित्यध्याहारः । 'अङ्गा'''वलमिति' अङ्गानि च म इत्यनेन मन्त्रेण शिरःप्रभृतीनि पादान्तानि अङ्गान्यालभते, एवं वाक् इत्यनेन मुखं प्राण इत्यनेन नासिके युगपत् चक्षुरित्यनेन चक्षुषी युगपत् श्रोत्रमित्यनेन श्रवणे मन्त्रावृत्त्या यशोबलमित्यस्य पाठमात्रम् । 'त्र्यायु'''मन्त्रम्' तिलकानि करोति । त्र्यायुषमित्येतैश्चतुर्भिर्मन्त्रपादैः अनामिकागृहीतेन भस्मना ललाटे ग्रीवायां दक्षिणेंऽसे हृदये प्रतिपादं त्र्यायुषाणि कुरुते । अत्र त्र्यायुषकरणं सूत्रकारानुक्तमपि प्रसिद्धत्वात् शिष्टपरम्पराचरितत्वात्क्रियते । ततो ब्रह्मचारी संध्यामुपास्याग्निकार्यं कृत्वा गुरुपूपसंग्रहणं वृद्धतरेष्वभिवादनम् वृद्धेषु नमस्कारं कुर्यात्पर्यायेण । अत्र स्मृत्यन्तरोक्तमभिवादनं लिख्यते—ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन् । इतियाज्ञवल्क्यादिस्मृतिप्रणीतस्याभिवादनप्रयोगो यथा उपसंग्रहणं नाम अमुकगोत्रोऽमुकेत्येतावत्प्रवरः अमुकशर्माऽहं भो ३ श्रीहरिहरशर्मन् त्वामभिवादये इत्युक्त्वा कर्णौ स्पृष्ट्वा दक्षिणोत्तरपाणिभ्यां दक्षिणपाणिना गुरोर्दक्षिणं पादं सव्येन सव्यं गृहीत्वा शिरोऽवनमनम् । अभिवादने पादग्रहणं नास्ति पादस्पर्शनं कार्यम् आयुष्मान् भव सौम्यामुक [ शर्मा३न् ] इति प्लुतान्तमुक्त्वा [अमुक] शर्मन्निति प्रत्यभिवादः कार्यः । आयुष्मान् भव सौम्येति प्रत्यभिवादः । अत्र गुरवो माता स्तन्यदात्री च पिता पितामहः प्रपितामहो मातामहोऽन्नदाता भयत्राता आचार्यश्चोपनेता च मन्त्रविद्योपदेष्टा च तेषां पत्न्यश्चोपसंग्राह्याः एतेन समावृत्तेन च ॥ बाले समवयस्के वाऽध्यापके गुरुवच्चरेत् । मातुलाश्च पितृव्याश्च श्वशुराश्च यवीयांसोऽपि प्रत्युत्थायाभिवाद्याः उपाध्याया ऋत्विजो ज्येष्ठभ्रातरश्च सर्वेषां पत्न्यश्च एवं मातृष्वसा सवर्णा पितृष्वसा च सवर्णा भ्रातृभार्या च नित्यमभिवाद्याः । विप्रोष्य तूपसंग्राह्या ज्ञातिसंबन्धियोषितः । विप्रोष्य विप्रं कुशलं पृच्छेन्नृपमनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥ न वाच्यो दीक्षितो नाम्ना यवीयानपि सर्वथा । पूज्यैस्तमभिभाषेत भोभवन् कर्मनामभिः ॥ परपत्नीमसम्बन्धां भगिनी चेति भाषयेत् । त्रिवर्षपूर्वः श्रोत्रियोऽभिवाद्यः । अत्रिवर्षाः संबन्धिनश्च स्वल्पेनापि स्वयोनिजः । अन्ये च ज्ञानवृद्धाः सदाचाराश्चाभिवाद्याः । उदक्यां सूतकां नारीं भर्तृघ्नीं गर्भपातिनीम् । पाषण्डं पतितं व्रात्यं महापातकिनं शठम् । नास्तिकं कितवं स्तेनं कृतघ्नं नाभिवादयेत् ॥ मत्तं प्रमत्तमुन्मत्तं धावन्तमशुचिं नरम् । वमन्तं जृम्भमाणं च कुर्वन्तं दन्तधावनम् ॥ अभ्यक्तं शिरसि स्नानं कुर्वन्तं नाभिवादयेत् । इति शातातपः । बृहस्पतिस्तु—जपयज्ञजलःस्थं च समित्पुष्पकुशानलान् । उदपात्रार्घ्यभैक्षान्नं वहन्तं नाभिवादयेत् । अभिवाद्य द्विजश्चैतानहोरात्रेण शुध्यति । क्षत्रियवैश्याभिवादने विप्रस्यैवम् । शूद्राभिवादने त्रिरात्रम् । कायं तु रजकादिषु 'चाण्डालादिषु चान्द्रं स्यादिति संग्रहकृत्स्मृतम्' । जमदग्निः—देवताप्रतिमां दृष्ट्वा यतिं चैव त्रिदण्डिनम् । नमस्कारं न कुर्याच्चेदुपवासेन शुध्यति ॥ सर्वे वाऽपि नमस्कार्याः सर्वावस्थासु सर्वदा । अभिवादे नमस्कारे तथा प्रत्यभिवादने ॥ आशीर्वाच्या नमस्कार्यैर्वयस्यस्तु पुनर्नयेत् । स्त्रियो नमस्या वृद्धाश्च वयसा पत्युरेव वा ॥ ॥ २ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

( गदाधरः )—उपनयनाङ्गभूतं समिदाधानमाह 'अत्र समिदाधानम्' अत्रास्मिन् प्रकृतेऽग्नौ समिदाधानं समिधां तिसृणां प्रक्षेपो ब्रह्मचारिकर्तृको भवति । अत्रावसरे इति केचित् तन्न पाठादेव

तत्सिद्धेः । अत्रशब्दोऽग्निपरो द्रष्टव्यः । समिदाधानस्येतिकर्तव्यतामाह 'पाणिनाग्निं···समिति' ब्रह्मचारी पाणिना दक्षिणहस्तेनाग्निं प्रकृतमुपनयनाङ्गहोमाधिकरणं परिसमूहति शुष्कगोमयखण्डादीन्धनप्रक्षेपेण संधुक्षयति, अग्ने सुश्रवःसुश्रवसंमाकुर्वित्यादिभिः पञ्चमन्त्रैः । कारिकायां विशेषः— प्रतिमन्त्रं त्रिभिः काष्ठैरग्ने सुश्रव आदिभिः । अग्ने सुश्रव इत्येकं यथा त्वं स्याद् द्वितीयकम् ॥ यथात्वमग्ने देवानां मन्त्रेणापि तृतीयकम् । कृत्वा पर्युक्षणं वह्नेरुत्थाय समिदाहुतिरिति ॥ पाणिनेत्येकवचनमेकत्वनियमार्थम् । उभाभ्यामपि दृश्यते संधुक्षणम् । मन्त्रार्थः—हे अग्ने हे सुश्रवः शोभनकीर्ते मा मां सुश्रवसं शोभनकीर्तिं कुरु । किञ्च हेअग्ने सुश्रवःसौश्रवसं सुश्रवाश्च सौश्रवसश्च तम् । तत्र सुश्रवाः स्वयम् सुश्रवा गुरुस्तस्यायं सौश्रवसः ममाचार्यमपि सुश्रवसं कृत्वा तदीयत्वेन मां सौश्रवसं कुर्वित्यर्थः । किंच हे अग्ने यथा त्वं देवानामिन्द्रादीनां मध्ये यस्य च क्रतोर्निधिं हविर्द्रव्यम् पासि रक्षसि । एवमहं मनुष्याणां मध्ये वेदस्य श्रुतेर्निधिरधिकरणम् भूयासं भवेयम् । 'प्रदक्षि···स्वाहेति' ततो ब्रह्मचारी प्रदक्षिणं यथा स्यात्तथा सन्धुक्षितमग्निं दक्षिणहस्तगृहीतेनोदकेन परिषिच्योत्थाय प्राङ्मुखस्तिष्ठन् समिधमादधाति अग्नौ प्रक्षिपति अग्नये समिधमित्यादि स्वाहाकारान्तेन मन्त्रेण । समिध्यते दीप्यते अग्निरनयेति समित् । तल्लक्षणं चास्माभिः समिधोऽभ्याधाय पर्युक्ष्य जुहुयादिति सूत्रार्थे उक्तम् । ननु तिष्ठन्समिधः सर्वत्रेति श्रौतसूत्रे उक्तत्वादुत्थायेति ग्रहणं व्यर्थम् । सत्यम्,—नायं होमः समिदाधानमित्येतत्सूचनार्थमुत्थायेति ग्रहणमित्यदोषः । अतोऽत्र त्यागाभावः । यद्वा इहोत्थायेति ग्रहणमन्यत्र स्मार्ते परिसङ्ख्यार्थमिति कारिकायाम् । प्रयोगरत्ने तु त्यागो लिखितः । मन्त्रार्थः—हे देवाः इमां समिधमग्नये अग्न्यर्थमाहार्षम् आहृतवानस्मि । किंभूताय बृहते महते । जातान् जातान् वेत्ति इति जातवेदास्तस्मै । यथा येन प्रकारेण समिधा अनया दीप्यमानया त्वं हे अग्ने समिध्यसे दीप्यसे एवमहमायुषा जीवनेन मेधयाऽतीतादिधारणवत्या बुद्ध्या वर्चसा तेजसा प्रजया पुत्रादिभिः पशुभिः गवादिभिः ब्रह्मवर्चसेन तेजसा कृताध्ययनसंपत्त्या एतैरहं समिन्धे समृद्धो भवामि । आचार्यविषयं फलमप्याशंसते । जीवपुत्रो दीर्घायुरपत्यो ममाचार्यो भवतु जीवन्तः पुत्रा यस्य । मेधावी अहमसानि भवामि । अनिराकरिष्णुर्गुरूपदिष्टधर्माद्यविस्मरणशीलः । यशस्वी तेजस्वी ब्रह्मवर्चसी अन्नादः अन्नमत्तीत्यन्नादः भूयासम् भवेयम् । स्वाहा सुहुतमस्तु । 'एवं···याम्' एवमनेनैव मन्त्रेण द्वितीयां समिधमादधाति । तथैवानेन मन्त्रेण तृतीयां समिधमादधाति । तिस्रः समिध आदधात्यग्नये समिधमाहार्षमित्युच्यमाने मन्त्रान्ते युगपत्तिसृणामाधानं प्राप्नोति तन्निवृत्त्यर्थमेवं द्वितीयां तथा तृतीयामिति सूत्रणं । 'एषात इति वा' अथवा एषा ते अग्ने समित्तयेति मन्त्रेण समिदाधानम् अत्रापि मन्त्रावृत्तिः । 'समुच्चयो वा' अथवा अग्नये समिधम्, एषात इति च द्वयोर्मन्त्रयोः समुच्चय ऐक्यं समिदाधाने स्यात् । अत्रापि प्रतिसमिदाधानं मन्त्रयोरावृत्तिः । 'पूर्वे···पर्युक्षणे' परिसमूहनं अग्ने सुश्रव इत्यादिना सन्धुक्षणम् । पर्युक्षणं अग्नेः सर्वतो जलासेकः । परिसमूहनपर्युक्षणे पूर्ववत्प्राग्वदग्नेः कर्तव्ये । 'पाणी···जाविति' पर्युक्षणानन्तरं ब्रह्मचारी पाणी उभौ हस्तौ प्रतप्य तूष्णीमग्नौ तापयित्वा तनूपा अग्नेऽसीति सप्तभिर्मन्त्रवाक्यैर्मुखं विमृष्टे पाणिभ्यां मार्जयति । वाक्यभेदाच्च प्रतिवाक्यं पाण्योः प्रतपनं मुखविमार्जनं च । तनूपा इत्येतस्य स्वशाखीयत्वात्प्रतीकग्रहणे प्राप्ते मन्त्रवाक्यचतुष्टयस्योपयोगात्सर्वपाठः । मेधां मे देवः सविता मेधां मे देवीसरस्वतीत्यनयोर्मन्त्रयोरादधात्वित्यध्याहारः साकाङ्क्षत्वात् । मन्त्रार्थः—तनूपा अग्नेऽसीत्यादयः स्पष्टाः । मेधामित्यस्यार्थः—देवो द्युतिमान् सविता सूर्यो मे मह्यं मेधां धारणावतीं बुद्धिं तथा देवी दीप्यमाना सरस्वती आदधातु । तथा अश्विनौ देवौ मे मह्यं मेधां आधत्तां संपादयेतां पुष्करस्रजौ पद्ममालाधारिणौ । अत्राङ्गालम्भनव्यायुषकरणाभिवादनानि गृह्यकारानुक्तान्यप्याचारतोऽनुष्ठेयानि । तत्राभिवादनं गोत्रनामोच्चारपूर्वकं पादोपसंग्रहः ।

ऽनुष्ठेयाः पदार्थाः। अङ्गानि च म आप्यायन्तामिति शिरःप्रभृति पादान्तं सर्वाङ्गान्यालभते। वाक् च म आप्यायतामिति मुखालम्भनम्। प्राणश्च म आप्यायतामिति नासिकयोरालम्भनम्। चक्षुश्च म आप्यायतामिति नेत्रयोरालम्भनम्। श्रोत्रं च म आप्यायतामिति दक्षिणकर्णमालभ्यानेनैव मन्त्रेण वामालम्भनम्। यशोबलं च म आप्यायतामिति जपः। ततो भस्मना ललाटे तिलकं त्र्यायुषं जमदग्नेरिति। कश्यपस्य त्र्यायुषमिति ग्रीवायाम्। यद्देवेषु त्र्यायुषमिति दक्षिणेंऽसे। तन्नो अस्तु त्र्यायुषमिति हृदि। ततोऽभिवादनम्। तत्रैवं प्रयोगः। माण्डव्यसगोत्रः भार्गवच्यावनआप्नवानौर्वजामदग्न्येतिपञ्चप्रवरोऽभिवादयेऽमुकनामाऽहमस्मि ३॥ कारिकायाम्—पद्माकारौ करौ कृत्वा पादोपग्रहणं गुरोः। उत्तानाभ्यां तु पाणिभ्यामिति पैठीनसेर्वचः। आयुष्मान् भव सौम्य विष्णुशर्म३न् इत्याचार्यस्य प्रत्यभिवादनम्। ततो वृद्धाभिवादनम्। अथ भिक्षाचर्यचरणम्। तत्र ब्रह्मचारी पात्रं गृहीत्वा भवति भिक्षां देहीत्येवं भिक्षां याचेत। तिस्रोऽप्रत्याख्यायिन्यः षट् द्वादशापरिमिता वा। ततो भिक्षामाचार्याय निवेदयेत्। अत्र मध्याह्नसंध्यां कुर्यादिति प्रयोगपारिजाते। नेति कृष्णंभट्टीकारः। ततो भैक्ष्यं भुङ्क्ष्वेति गुरुणाऽनुज्ञातो भोजनं कुर्यात्। इतः प्रभृति सूर्यास्तमयं यावद्वाग्यतो वा भवेत्। ततः सायं संध्यावन्दनपूर्वकमग्निपरिचरणं पाणिनाग्निं परिसमूहतीत्याद्यभिवादनान्तं पूर्ववत्। उपनयनाग्निस्त्रिरात्रं धार्यः। त्र्यहमेतमग्निं धारयतीत्यापस्तम्बोक्तेः। यावद्धुतमग्निरक्षणमिति गर्गपद्धतौ। इत्युपनयने पदार्थक्रमः॥ ॥ एष प्रयोगः स्वस्वकाले कृतपूर्वसंस्कारस्य। असंस्कृतस्य तु विशेष उच्यते। आचार्य उपनयनात्पूर्वाह्णे बटुना सह मङ्गलस्नातः प्राणानायम्य तिथ्यादि सङ्कीर्त्य मम कुमारस्य गर्भाधानपुंसवनसीमन्तजातकर्मनामकरणनिष्क्रमणान्नप्राशनचौलकर्मान्तानां संस्काराणां कालातिपत्तिदोषनिवृत्तिद्वारा परमेश्वरप्रीत्यर्थं प्रायश्चित्तहोमं करिष्य इति संकल्प्य पञ्चभूसंस्कारपूर्वकमग्निं लौकिकं स्थापयित्वा स्थाल्यामाज्यं निरुप्याग्नावधिश्रित्य स्रुवं दर्भैः संमृज्याज्यमुद्वास्य कुशतृणाभ्यामुत्पूयावेक्ष्य स्रुवेणादाय समित्प्रक्षेपं कृत्वा नवाहुतीर्जुहोति। भूः स्वाहा १ भुवः० २ स्वः० ३ भूर्भुवःस्वः०४ त्वन्नो अग्ने० ५ सत्वन्नो अग्ने० ६ अयाश्चाग्ने० ७ येतेशतं० ८ उदुत्तमं० ९ इति नवाहुतिहोमात्मकं प्रायश्चित्तं कृत्वा चौलातिरिक्तसंस्काराणां प्रमादादकरणे प्रत्येकं पादकृच्छ्रं चौलाकरणेऽर्द्धकृच्छ्रं बुद्धिपूर्वे चौलातिरिक्ताकरणे प्रत्येकमर्द्धकृच्छ्रं चौलाकरणे कृच्छ्रं बटुना कारयेत्। अशक्तौ तत्प्रत्याम्नायत्वेन गोदानतिलाहुतिसहस्रदशसहस्रगायत्रीजपद्वादशविप्रभुक्त्यादिष्वेकं प्रायश्चित्तं कारयित्वाऽतीतजातकर्मादीनि कृत्वा पूर्वोक्तोपनयनतन्त्रं सर्वमाचरेत्। उपनीत्या सह चौलकरणे पूर्वेद्युः संस्कारद्वयं संकीर्त्य युगपत्स्वस्तिवाचनग्रहयज्ञनान्दीश्राद्धानि कृत्वा परेद्युर्मङ्गलस्नानविप्रत्रयभुक्त्यादिवरदानान्तं पूर्वोक्तं चौलप्रयोगं सर्वं कृत्वा पुनस्तिथ्याद्युल्लिख्य कुमारस्य वपनाद्युपनयनं सर्वं कार्यम्। अत्र शौनकः—आरभ्याधानमाचौलात्कालेऽतीते तु कर्मणाम्। व्याहृत्याज्यं सुसंस्कृत्य हुत्वा कर्म यथाक्रमम्। एतेष्वेकैकलोपे तु पादकृच्छ्रं समाचरेत्। चूडाया अर्द्धकृच्छ्रं स्यादापदीत्येवमीरितम्। अनापदि तु सर्वत्र द्विगुणं द्विगुणं चरेत्। कात्यायनः। लुप्ते कर्मणि सर्वत्र प्रायश्चित्तं विधीयते। प्रायश्चित्ते कृते पश्चाल्लुप्तं कर्म समाचरेत्। स्मृत्यर्थसारे चैवम्। आश्वलायनकारिकायां तु प्रायश्चित्ते कृतेऽतीतं कर्म कृताकृतमित्युक्तम्। प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै। कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चित इति। मण्डनस्तु—कालातीतेषु सर्वेषु प्राप्तवत्स्वपरेषु च। कालातीतानि कृत्वैव विदध्यादुत्तराणि त्वित्युक्तवान्। तत्र सर्वेषां तन्त्रेण नान्दीश्राद्धं कुर्यात् देशकालकर्त्रैक्यात्। अथ ब्रह्मचारिधर्माः—अधःशयनमक्षारालवणाशनं दण्डधारणमरण्यात्स्वयंप्रशीर्णानां समिधामाहृतिः कालत्रये संध्योपासनं परिसमूहनादि यथोक्तमग्निपरिचरणं सायं प्रातः संध्योपास्ते-

रूर्द्धं गुरुशुश्रूषया स्थातव्यं, भोजनार्थं वारद्वयं सायं प्रातश्च भिक्षाचरणं, भैक्षाशनं लौहे मृन्मये पर्णादौ वा कार्यम् । मधुमांसयोरभक्षणमुन्मज्जनं न कार्यमुद्धृतोदकेन स्नानमासनस्योपरि मसूरिकां स्थापयित्वा नोपविशेत्, स्त्रीणां मध्ये नावस्थानं, नानृतवदनं नादत्तादानम् । अन्येऽपि स्मृत्यन्तरोक्ता नियमाः । याज्ञवल्क्यः—मधुमांसाञ्जनोच्छिष्टं शुक्तस्त्रीप्राणिहिंसनम् । भास्करालोकनाश्लीलपरिवादादि वर्जयेत् । शुक्तं परुषं वचः पर्युषितान्नं च । मनुः—अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम् । वर्जयेदिति प्रकृतम् । पारिजाते कौर्मे—नादर्शं चैव वीक्षेत नाचरेद्दन्तधावनम् । गुरूच्छिष्टं भेषजार्थं प्रयुञ्जीत न कामतः । एतन्निषिद्धमध्वादिविषयम् । अन्यस्य गुरूच्छिष्टस्य सर्वदा प्राप्तेः । वसिष्ठः—स चेद्व्याधीयीत कामं गुरोरुच्छिष्टशेषमौषधार्थं सर्वं प्राश्नीयादिति । ज्येष्ठभ्रातुरित्यपि ज्ञेयम् । तथाऽऽपस्तम्बः—पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोज्यमिति । स्मृत्यन्तरे—गुरुवद्गुरुपुत्रे स्यादन्यत्रोच्छिष्टभोजनात् । प्रचेताः—ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम् । यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत् । यमः—मेखलामजिनं दण्डमुपवीतं च नित्यशः । कौपीनं कटिसूत्रं च ब्रह्मचारी तु धारयेत् ॥ ॥ अथ ब्रह्मचारिव्रतलोपे प्रायश्चित्तम् । तत्र बौधायनः—अत्र शौचाचमनसन्ध्यावन्दनदर्भभिक्षाऽग्निकार्यराहित्यशूद्रादिस्पर्शनकौपीनकटिसूत्रयज्ञोपवीतमेखलादण्डाजिनत्यागदिवास्वापच्छत्रधारणपादुकाध्यारोहणमालाधारणोद्वर्तनानुलेपनाञ्जनजलक्रीडाद्यूतनृत्यगीतवाद्याद्यभिरतिपाखण्डादिसंभाषणपर्युषितभोजनादिब्रह्मचारिव्रतलोपजसकलदोषपरिहारार्थं ब्रह्मचारी कृच्छ्रत्रयं चरेन्महाव्याहृतिहोमं च कुर्यात् । तद्यथा । लौकिकाग्निं प्रतिष्ठाप्य ब्रह्मवरणाद्याज्यभागान्तं कृत्वा प्रथमं व्यस्तसमस्तव्याहृतिभिश्चतस्र आज्याहुतीर्हुत्वा ४ भूरग्नये च पृथिव्यै च महते च स्वाहा ५ भुवो वायवे चान्तरिक्षाय च महते च स्वा० ६ सुवरादित्याय च दिवे च महते च स्वा० ७ भूर्भुवः सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वा० ८ पाहि नो अग्न एनसे स्वा० ९ पाहि नो अग्ने विश्ववेदसे स्वा० १० यज्ञं पाहि विभावसो स्वा० ११ सर्वं पाहि शतक्रतो स्वा० १२ पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा । पुनर्नः पाह्यंहसः स्वाहा १३ सहरय्या निवर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्न्याविश्वतस्परि स्वाहा १४ पुनर्व्याहृतिभिर्हुत्वा स्विष्टकृदादिवरदानान्तं शेषं समापयेदिति ॥ एतदल्पधर्मलोपे प्रायश्चित्तम् । बहुधर्मलोपे तु प्रायश्चित्तविशेष ऋग्विधाने शौनकेनोक्तः—त्र्यंबकं धिया जपेन्मन्त्रं लक्षं चैव शिवालये । ब्रह्मचारी स्वधर्मं च न्यूनं चेत्पूर्णमेव तदिति । महानाम्न्यादिव्रतेषु लुप्तेषु तारतम्येन त्रीन् षट् द्वादश वा कृच्छ्रान् कृत्वा पुनर्व्रतं प्रारभेतेति स्मृत्यर्थसारे । तथा संध्याग्निकार्यलोपे स्नात्वाऽष्टसहस्रं जपः । भिक्षालोपेऽष्टशतम् । अभ्यासे द्विगुणं पुनः संस्कारश्चेत्युक्तम् । इति ब्रह्मचारिव्रतलोपे प्रायश्चित्तम् ॥ ॥ अथ पुनरुपनयनम् । तत्र मनुः—अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च । पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः । चन्द्रिकायां बौधायनः—सिन्धुसौवीरसौराष्ट्रान् तथा प्रत्यन्तवासिनः । अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति । हेमाद्रौ पाद्मे—प्रेतशय्याप्रतिग्राही पुनः संस्कारमर्हति । वृद्धमनुः—जीवन् यदि समागच्छेद् घृतकुम्भे निमज्ज्य च । उद्धृत्य स्थापयित्वाऽस्य जातकर्मादि कारयेदिति । मिताक्षरायां पराशरः—यः प्रत्यवसितो विप्रः प्रव्रज्यातो विनिर्गतः । अनाशकनिवृत्तश्च गार्हस्थ्यं चेच्चिकीर्षति । स चरेत् त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि च । जातकर्मादिभिः सर्वैः संस्कृतः शुद्धिमाप्नुयात् । शातातपः—लशुनं गृञ्जनं जग्ध्वा पलाण्डुं च तथा शुनम् । उष्ट्रमानुषकेभाश्वरासभीक्षीरभोजनात् । उपायनं पुनः कुर्यात्तप्तकृच्छ्रं चरेन्मुहुः । अपरार्कादिसर्वग्रन्थेषु पित्रादिव्यतिरेकेण ब्रह्मचारिणः प्रेतकर्मकरणे पुनरुपनयनमित्युक्तम् । त्रिस्थलीसेतौ—कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् । गण्डकीबाहुतरणात्पुनःसंस्कारमर्हति । पराशरः—अजिनं मेखला दण्डो भैक्ष्यचर्या व्रतानि च । निवर्तन्ते

द्विजातीनां पुनःसंस्कारकर्मणि । य एकं वेदमधीत्यान्यवेदमध्येतुमिच्छति तस्य पुनरुपनयनमिति हर-दत्तः । नेत्यन्ये । सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यत इत्यापस्तम्बवचनात् । यमः—पुराकल्पेषु नारीणां मौञ्जीबन्धनमिष्यते । अध्यापनं च वेदानां सावित्रीवाचनं तथा । इदं च युगान्तरविषयम् । इति पुनरुपनयनम् ॥ ॥ त्रुटितानां मेखलादीनां प्रतिपत्तिमाह मनुः—मेखलामजिनं दण्डमुपवीतं कमण्डलुम् । अप्सु प्रास्य विनष्टानि गृहीत्वाऽन्यानि मन्त्रवत् ॥ ॥ अथ गर्गमते पदार्थक्रमः—श्राद्धम् । वपनम् । विप्रभोजनम् । वटोरपि । अग्निस्थापनम् । अलंकृतस्यानयनम् । पश्चादग्नेरवस्थापनम् । ततो ब्रह्मासनादिबर्हिस्तरणान्तं कर्म । ततो ब्रह्मचर्यमागामिति वाचनम् । ब्रह्मचार्यसानीति च । वासः परिधापयति । मेखलाबन्धनम् । वटोर्मन्त्रपाठः । मन्त्रेण यज्ञोपवीतपरिधानम् । तत आचमनम् । उत्तरीयधारणं मन्त्रेण । दण्डप्रतिग्रहः । दीक्षावद्वा । अञ्जलिनाऽञ्जलिपूरणमद्भिः । प्रैषपूर्वकं सूर्यावेक्षणम् । हृदयालम्भनम् । दक्षिणहस्तग्रहणादि भूतेभ्यः परिदानान्तम् । ततो हस्तविसर्गः । ततः प्रदक्षिणं परिक्रम्योपवेशनम् । तत आचार्यस्योपयमनादानादिपर्युक्षणान्तम् । आचार्यस्यान्वारम्भो माणवककर्तृकः । तत आघाराद्याश्चतुर्दशाहुतयः । संस्रवप्राशनादिदक्षिणादानान्तम् । ततो ब्रह्मचारिशासनं ब्रह्मचार्यसीत्यादि पूर्ववत् । ततो बर्हिर्होमादिब्राह्मणभोजनान्तम् ॥ ॥ अथ सावित्रव्रतादेशः । तत्रोपलेपनादिबर्हिस्तरणान्तम् । ततः कुमार उत्थाय हस्तेनोदकं गृहीत्वाऽग्निमभिमुखो भूत्वाऽग्ने व्रतपते व्रतं चरिष्यामि सावित्रं सद्यःकालं तच्छकेयं तन्मे राध्यतामिति व्रतग्रहणं करोति । ततो ब्रह्मचारिण उपवेशनम् । ब्रह्मचारिण आचार्यस्यान्वारम्भः सर्वाहुतिषु । तत उपयमनादानादि आज्यभागान्तम् । ततो वेदाहुतयः षोडश । प्रतिवेदं चतस्रश्चतस्रः । एवं षोडश । ततः प्रजापतये देवेभ्य इत्याद्याः सप्त । ततो महाव्याहृत्यादिस्विष्टकृदन्ता दश । आज्यभागाद्या एताः सप्तत्रिंशदाहुतयो व्रतानामादेशे विसर्गे च होतव्याः । ततः संस्रवप्राशनादि ब्रह्मणे दक्षिणादानान्तम् । तत अथास्मै सावित्रीमन्वाहेत्यादि यथोक्तं सावित्रीप्रदानम् । ततो माणवकस्य तत्सवितुरित्यनेन मन्त्रेण सन्ध्योपासनम् । सन्ध्योपासनान्ते तत्सवितुरित्यनेनैवाग्निपरिचरणम् । तदन्ते गोत्रनामग्रहणपूर्वकं सर्वेषामभिवादनम् । ततो भिक्षाचर्यचरणम् । भिक्षानिवेदनम् भिक्षां भो इत्येवम् । आचार्यस्तु भिक्षां भो इत्येवं भिक्षां स्वीकुर्यात् । ततो ब्रह्मचारी शुचिर्भूत्वा स्वासने उपविशति । ततो बर्हिर्होमादिविप्रभुक्त्यन्तम् । अथानन्तरं सावित्रव्रतवत् सन्ध्योपासनाग्निपरिचरणम् । तत उपलेपनादिबर्हिस्तरणान्तम् । तत उत्थाय हस्तेनोदकं गृहीत्वाऽग्निमभिमुखो भूत्वाऽग्ने व्रतपते व्रतमचारिषं सावित्रं सद्यःकालं तदशकं तन्मे राधीतिमन्त्रेण सावित्रव्रतोत्सर्गं करोति । उपयमनकुशादानादिपर्युक्षणान्तम् । अन्वारम्भः । आघारावाज्यभागौ । वेदाहुतयः षोडश । प्रजापतय इत्याद्याः सप्त । महाव्याहृत्यादिस्विष्टकृदन्ता दश । एवं सप्तत्रिंशदाहुतयः । प्राशनादिविप्रभुक्त्यन्तं पूर्ववत् । सावित्रव्रतादेशे ब्रह्मणे दक्षिणादानान्ते सावित्र्या संध्यावन्दनमग्निपरिचरणं च यत्कृतम् व्रतोत्सर्गे तदभावः । ततः अप्स्वन्तरिति दण्डस्याप्सु प्रक्षेपः । वातो वा इति मेखलाया अ० । वातरंहा भवेति यज्ञोपवीतस्या० । नमो वरुणायेति कुमारस्य दधिघृतशर्कराणां प्रत्येकं प्राशनम् । इति सावित्रव्रतोत्सर्गः ॥ ॥ अथाग्नेयव्रतम् । तत्रोपलेपनादिबर्हिस्तरणान्तम् । ततो ब्रह्मचारिणो मेखलाबन्धनम् । यज्ञोपवीतधारणम् । दण्डसमर्पणम् ग्रहणं च । मेखलादिषु पूर्वोक्ता एव मन्त्राः । व्रतग्रहणं पूर्ववत् । अग्ने व्रतपत इति । आग्नेयं सांवत्सरिकम् तच्छ०राध्यतामिति । आग्नेयं यथाकालं तच्छके०ध्यतामितीदानीं प्रयोगं कुर्वन्ति । ततः स्वस्थाने उपवेशनम् । आचार्यान्वारम्भः । उपयमनादानादिपर्युक्षणान्तम् । आघाराद्याः स्विष्टकृदन्ताः सप्तत्रिंशदाहुतयोऽत्रापि होतव्याः । ततः प्राशनादिब्राह्मणभोजनान्तम् । ततः स्मृत्युक्तं माध्याह्निकं संध्योपासनम् । ततोऽग्नेः पश्चादुपविश्य पाणिनाऽग्निं परिसमूहतीत्यात्र्यायुषकरणान्तं यथोक्तम् ।

तत्र विशेषः । गात्रालम्भने कर्कमतेऽध्याहारः । अङ्गानि च म आप्यायन्तामिति गर्गपद्धतौ । त्र्यायुपकरणान्ते शिवो नामेति जपः । यदि वटुर्मेधाकामः स्यात्तदा सदसस्पतिमितितृचेन मेधां याचते। श्रीकामश्चेदिमंमे इति श्रियं या० । ततो मेखलास्थान्प्रवरान्प्रदक्षिणोपचारेण स्पृष्ट्वाऽमुकसगोत्रोऽमुकशर्माऽहं भो वैश्वानर अभिवादयामि । एवं वरुणाचार्यवृद्धानाम् । भिक्षाचर्यंच० गुरवे नि० । अनुज्ञातस्तां स्वीकृत्य मातृहस्ते समर्पयति । बर्हिर्होमादिविप्रभुक्त्यन्तम् । इत्युपनयने पदार्थाः । ततः सन्ध्याकालेऽञ्जलिप्रक्षेपान्ते सूर्योपस्थानं वारुणीभिर्ऋग्भिरिमम्मेत्यादिभिः । मित्रः सः सृज्येत्यादिभिः प्रातः । उद्वयमित्यादिभिर्मध्याह्ने । ततो दण्डं गृहीत्वाऽग्निपरिचरणम् । मध्याह्ने सायाह्ने च संध्योपासनान्ते प्रत्यहमग्निपरिच० । एके प्रातरप्यग्निपरिचरणमिच्छन्ति। ततो वाग्विसर्गः । पूर्वोक्ता एव ब्रह्मचारिधर्मा ज्ञेयाः । संध्योपासनादीनि स्वस्वकाले कार्याणि तेषां कालातिक्रमे कर्मणां भ्रेषे प्रायश्चित्तमुच्यते । परिसमूहनादि कृत्वाऽन्वग्निरिति मन्त्रेणाग्नेराहरणम् । पृष्ठोदिवीति स्थापनम् । ताꣳसवितुस्तत्सवितुर्विश्वानि देवेत्यादिभिः सावित्रमन्त्रैस्त्रिभिः प्रज्वालनम् । नात्र ब्रह्मोपवेशनादि । पूर्णाहुतिवदाज्यं संस्कृत्यानादिष्टं कार्यम् । अथाग्नेयव्रतस्थितो ब्रह्मचारी समिधाऽग्निं दुवस्यतेत्येवमाद्याग्नेयवेदविभागं संवत्सरपर्यन्तं पठित्वा व्रतमुत्सृजति । संवत्सरे पूर्णे आग्नेयव्रतविसर्गः । तत्र परिसमूहनादिविप्रभुक्त्यन्तमाग्नेयव्रतादेशवत् भवति । एतावान्विशेषः । यस्मिन्काले आग्नेयव्रतग्रहणं कृतं तस्मिन्संध्यावन्दनम् । अग्निपरिच० । आग्नेयव्रतविसर्गः । अग्नेव्रतपतेव्रतमचारिषं सांवत्सरिकं तदशकं तन्मेराधीति मन्त्रेण । ततोऽनन्तरमामभिक्षानिवृत्तिः । दण्डादीनामप्सु प्रक्षेपः । व्रतादौ ग्रहणं तेषाम् । इत्याग्नेयव्रतविसर्गः ॥ ॥ अथ शुक्रियव्रतादेशः । तत्रोपलेपनादि बर्हिस्तरणान्तं कृत्वा मेखलायज्ञोपवीतदण्डानां धारणपूर्वकं व्रतग्रहणम् । अग्ने० मि शुक्रियं सांवत्सरिकं तच्छकेयमिति विशेषः । तत उपयमनादिविप्रभुक्त्यन्तमाग्नेयव्रतादेशवत् । शुक्रियवेदव्रतस्थित ऋचं वाचमित्यादि शुक्रियवेदविभागं पठति संवत्सरं यावत् । उत्तमेऽह्नि अपराह्णकालान्ते निशामुखे त्रिगुणेन पटेन एकस्यांदिशि बद्धेन नाभिमात्रं यावन्माणवकस्य प्रच्छादनम् मूर्धानमारभ्य ग्रन्थेः शिरस उपरिकरणम् । ततः सावित्र्या वेदशिरसा हिरण्मयेन पात्रेणेति मन्त्रैरवगुण्ठनम् । एवं प्रच्छादितो ब्रह्मचारी सूर्योदयं यावत्तिष्ठति । रात्रौ वा गोष्ठे वा देवायतने वाऽधः शयनम् । रात्रौ गृहे यदि स्थितिस्तदा व्युष्टायां रात्रौ ग्रामाद्बहिर्गमनम् । ततोऽवगुण्ठनीयविसर्गः । ततोऽदृश्रमस्य , उदुत्यम् , चित्रं देवानामुदितेऽर्के जपः । ततो व्रतस्थाने माणवकमानीय शुक्रियव्रतस्य विसर्गः । तत्र परिसमूहनादिबर्हिस्तरणान्तम् । ततः प्राकृतं संध्योपासनम् । अग्निस्वीकरणम् । ततोऽग्ने॰ व्रत० मचारिषं शुक्रियं सांवत्सरिकं तदशकं तन्मे राधीति मन्त्रेणोत्सर्गः । उपयमनादानादिब्राह्मणभोजनान्तम् । ततस्ताम्रपात्रे उदकप्रक्षेपः । द्यौः शान्तिरिति शान्तिकरणम् । शान्तिपात्रमवगुण्ठनीयवस्त्रं च गुरवे दद्यात् । ततोऽप्स्वन्तरमृतमित्यादिभिः पूर्ववत्प्रत्यृचं दण्डमेखलायज्ञोपवीतानामप्सु प्रक्षेपः । दधिघृतशर्कराणां नमोवरुणायेति प्रतिमन्त्रं प्राशनम् । ततो वपनम् । व्रतग्रहणस्यादौ सर्वत्र शुक्रियादिषु मेखलायज्ञोपवीतदण्डानां धारणम् ॥ ॥ अथौपनिषद्व्रतम् । उपलेपनादिबर्हिस्तरणान्तम् । ततोऽग्ने व्रत० औपनिषदं सांवत्सरिकं तच्छके० राध्यतामिति व्रतग्रहणम् । तत उपयमनादानादिविप्रभुक्त्यन्तम् । औपनिषदे व्रते स्थितो द्वयाह प्राजापत्या इत्याद्यौपनिषदवेदविभागं संवत्सरं यावत्पठति । तत उत्तमेऽहनि निशामुखे अवगुण्ठनीयवस्त्रेणाच्छादनादि । उदिते अदृश्रमस्य । उदुत्तमम् । चित्रं देवानामिति जपान्तं शुक्रियवत् । ततो व्रतस्थाने माणवकमानीय व्रतविसर्गः । तत्र परिसमूहनादि बर्हिस्तरणान्तं कृत्वा पूर्ववत्संध्योपासनमग्निपरिचरणं च । ततोऽग्ने० व्रतमचारिषमौपनिषदं सांवत्सरिकं तद० तन्मे राधीति व्रतविसर्गः । तत उपयमनादानादिविप्रभुक्त्यन्तम् । ताम्रे

उदकप्रक्षेपः । द्यौः शान्तिरिति शान्तिकरणम् । भाजनवस्त्रयोराचार्याय दानम् । दण्डादीनामप्सु प्रासनम् । दध्यादीनां प्राशनम् । इत्यौपनिषदं व्रतम् ॥ ॥ अथ शौलभव्रतादेशः । तत्र परिसमूहनादिविप्रभुक्त्यन्तमौपनिषदव्रतादेशवत् । व्रतग्रहणे शौलभं सांवत्सरिकमिति प्रयोगः । शौलभिनीनामृचां पाठो व्रते स्थितस्य । अत्राप्युक्तमेऽहनि निशामुखे पटेन प्रच्छादनादि उदिते जपान्तं पूर्ववत् । ततो व्रतस्थाने माणवकमानीय व्रतविसर्गः । तत्रैवं परिसमूहनादि बर्हिस्तरणान्तम् । ततः संध्योपासनादि । ततो व्रतविसर्गः । अग्ने० रिषं शौलभं सांवत्सरिकं तद० धीति मन्त्रः । तत उपयमनादानादि ब्राह्मणभोजनान्तम् । तत उदकं पात्रे कृत्वा द्यौः शान्तिरिति शान्तिकरणम् । पात्रवस्त्रयोर्गुरवे दानम् । दण्डादीनामप्सु प्रक्षेपः । दधिमधुशर्कराणां नमो वरुणायेति प्रत्यृचं प्राशनम् । ततो वपनम् । इति शौलभम् । अथ गोदानव्रतादेशः । तत्र परिसमूहनादिविप्रभुक्त्यन्तम् । व्रतग्रहणस्यादौ मेखलायज्ञोपवीतदण्डानां धारणम् । गोदानं सांवत्सरिकमिति मन्त्रे विशेषः । अस्मिन्व्रते अवगुण्ठन्यादीनामभावः । त्रिष्ववगुण्ठनहःशुक्रियादिष्विति सूत्रणात् । ततः संवत्सरे पूर्णे गोदानव्रतविसर्गः । तत्र परिसमूहनादि बर्हिस्तरणान्तम् । ततः संध्योपासनादि । अग्ने०रिषं गोदानं सांवत्सरिकं त०धीति मन्त्रेणोत्सर्गः । उपयमनादि विप्रभुक्त्यन्तं पूर्ववत् । अत्रास्मिन्विसर्गे दण्डमेखलायज्ञोपवीतानामप्सु प्रक्षेपाभावः । आचार्याय गोमिथुनदानम् । समाप्तानि व्रतानि । इति गर्गमते उपनयने पदार्थक्रमो व्रतानि च । इमानि च व्रतानि प्रक्षिप्तसूत्रे पठितानि कर्कमतानुसारिभिरप्यनुष्ठेयानि स्मृत्यन्तरे केषाञ्चित् चत्वारिंशत्संस्कारेषु पाठात् । इति उपनयने पदार्थक्रमः ।

अथ वेदारम्भे पदार्थक्रमः । तत्र स्मृतौ—उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् । वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् । कारिकायाम्—अप्रसुप्ते हरौ स स्यान्नानध्याये शुभेऽहनि । नास्तङ्गते जीवसिते बाले वृद्धे मलिम्लुचे ॥ षष्ठीं रिक्तां शनिं सोमं भौमं हित्वोत्तरोडुपु । मृगादिपञ्चधिष्ण्येषु मूलाश्विन्योः करत्रये । पूर्वासु तिसृपूपेन्द्रभत्रये केन्द्रगैः शुभैः ॥ तत्र मातृपूजापूर्वकमाभ्युदयिकं श्राद्धम् । देशकालौ स्मृत्वा यजुर्वेदव्रतादेशं करिष्य इति संकल्पः । ततः पञ्चभूसंस्कारपूर्वकं लौकिकाग्निस्थापनम् । ब्रह्मोपवेशनाद्याज्यभागान्तम् । ततः स्थाल्याज्येनैव जुहोति । अन्तरिक्षाय स्वाहा १ वायवे० २ ब्रह्मणे० ३ छन्दोभ्यः० ४ प्रजापतये० ५ देवेभ्यः० ६ ऋषिभ्यः० ७ श्रद्धायै० ८ मेधायै० ९ सदसस्पतये० १० अनुमतये० ११ ततो भूराद्याः स्विष्टकृदन्ताः । ततः प्राशनादिदक्षिणादानान्तम् । ततो विघ्नेशं सरस्वतीं हरिं लक्ष्मीं स्वविद्यां च पूजयेत् । यदि ऋग्वेदारम्भस्तदाऽऽज्यभागान्ते पृथिव्यै स्वाहा अग्नये स्वाहेति च हुत्वा ब्रह्मणे स्वाहेत्यादि समानम् । यदि सामवेदारम्भस्तदाऽऽज्यभागान्ते दिवे स्वा० सूर्याय स्वाहेति हुत्वा ब्रह्मणे स्वाहेत्यादि पूर्ववत् । यद्यथर्ववेदारम्भस्तदाऽऽज्यभागान्ते दिग्भ्यः स्वा० चन्द्रमसे स्वाहेति हुत्वा ब्रह्मणे स्वाहेत्यादि यथोक्तम् । यद्येकदा सर्ववेदारम्भस्तदैवम् । आज्यभागान्ते वेदारम्भक्रमेण प्रतिवेदं वेदाहुतिद्वयं द्वयं हुत्वा ब्रह्मणे छन्दोभ्य इत्याहुतिद्वयं हुत्वा प्रजापतय इत्याद्याः सप्त तन्त्रेण जुहुयात् । ततो महाव्याहृत्यादि समानम् । कारिकायाम्—तत्र प्रत्यङ्मुखायोपविष्टायाननमीक्षते । वेदारम्भमनुब्रूयाद्यथाशास्त्रमतन्द्रितः । मनुः—ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा । व्यत्यस्तपाणिना कार्यमुपसङ्ग्रहणं गुरोः ॥ सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः । ब्राह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा । प्राञ्जलिः पर्युपासीत पवित्रैश्चैव पावितः ॥ प्राणायामैस्त्रिभिः पूतस्तत ॐकारमर्हति ॥ ॐकारं व्याहृतीस्तिस्रः सपूर्वां त्रिपदान्ततः । उक्त्वाऽऽरभेच्च वृत्तान्तमन्वहं गौतमोऽब्रवीत् ॥ त्रिपदां गायत्रीं । मनुः—अध्येष्यमाणश्च गुरुर्नित्यकालमतन्द्रितः । अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत् । दक्षः—द्वितीये तु तथा भागे वेदाभ्यासो विधीयते । वेदस्वीकरणं पूर्वं विचा-

रोऽभ्यसनं जपः । तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥ याज्ञवल्क्यः—हस्तौ सुसंयतौ धार्यौ जानुभ्यामुपरि स्थितौ । तथा । हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् । ऋग्यजुः-सामभिर्दग्धो वियोनिमधिगच्छति । पराशरः—ज्ञातव्यः सर्वदैवार्थो वेदानां कर्मसिद्धये । पाठमात्र-मधीती च पङ्के गौरिव सीदति ॥ व्यासः— वेदस्याध्ययनं पूर्वं धर्मशास्त्रस्य चैव हि । अजानतोऽर्थं तद्व्यर्थं तुषाणां कण्डनं यथा ॥ मनुः—योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्र-त्वमाशु गच्छति सान्वयः ॥ यमः—य इमां पृथिवीं सर्वां सर्वरत्नोपशोभिताम् । दद्याच्छास्त्रं च शि-ष्येभ्यस्तच्च तच्च द्रव्यं समम् ॥ न निन्दां ताडने कुर्यात्पुत्रं शिष्यं च ताडयेत् । अधोभागे शरीरस्य नोत्तमाङ्गे न वक्षसि ॥ अतोऽन्यथा हि प्रहरन् न्याययुक्तो भवेन्नरः ॥ न्याययुक्तो दण्डयुक्त इत्यर्थः। अत्र माणवकं कुलपरम्परागतं वेदमध्यापयेत् । तस्यैवाध्येतव्यत्वनियमात् । वसिष्ठः—पारंपर्यागतो येषां वेदः सपरिबृंहणः । तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथा ॥ अधीत्य शाखामात्मीयामन्यशा-खां ततः पठेत् । स्वशाखां यः परित्यज्य अन्यशाखामुपासते । शाखारण्डः स विज्ञेयः सर्वकर्मबहि-ष्कृत इति । इति वेदारम्भः ॥

( विश्व० )—' अत्र'''रणं ' अत्रावसरे अभिवादनानन्तरं भिक्षाप्रार्थना तस्याश्चरणमनुष्ठानं कर्तव्यमिति शेषः । ' भवत्पूर्वां''' वैश्यः ' इति त्रिसूत्री । भिक्षेतेति द्वयोरनुषङ्गः । भवच्छब्दः संबुद्ध्यर्थः पूज्यताद्योतकः । ब्राह्मणक्षत्रियवैश्यैर्यथाक्रममादिमध्यावसानेषु भवच्छब्दोपलक्षिता वृत्त्यर्थं सिद्धान्नादिप्रार्थना कर्तव्या । कतिसंख्याकाः कीदृश्यश्च प्रार्थनीया इत्यत आह ' तिस्रो'''यिन्यः ' प्रत्याख्यानं प्रार्थितनिषेधः । अत्रापूर्तौ पक्षान्तराण्याह ' षड्द्वा'''मेके ' इति चतुःसूत्री । याच्यायां दातुः स्नेहस्याभ्यर्हितत्वद्योतनार्थं मातरमित्युक्तम् । ' आचा'''यित्वा ' आचार्याभावे स्वजनन्यै भिक्षानिवेदनम् । भिक्षां निवेद्याचार्याज्ञया भुक्त्वा वा कर्मणः प्रतिपत्तिं कुर्यादिति शेषः । बर्हिर्होमः प्राशनं मार्जनं पवित्रप्रतिपत्तिः व्यस्तसमस्तव्याहृतिहोमानन्तरं त्वन्नइत्यादिपञ्चाहुतयः सर्वप्रायश्चित्तसंज्ञकाः। एवं नवाहुतयः । प्रणीताविमोकः ब्राह्मणभोजनसंकल्प एकस्य । कर्मापवर्गाः समिधः । उत्सर्जनं ब्रह्म-णः उपयमनकुशानामग्नौ प्रक्षेपः । उपनयनान्तर्गताग्नेयव्रतादेशसाङ्गतासिद्ध्यर्थमिति संकल्प्य ब्राह्म-णान्भोजयेद्दशेति परिशिष्टाद्दशब्राह्मणभोजनसंकल्पः । इदानीमाग्नेयव्रतस्य संवत्सरसाध्यत्वेन ब्रह्मचा-रिकर्तव्यान्नियमान्सूत्रकृत्सूत्रयति ' वाग्य'''त्येके ' आत्मनोऽहःसाध्यां ब्रह्मचर्याश्रमकर्तव्यतामवसा-योपसंध्यं वाग्यतो भवेदित्यर्थः । ' अहि''''जते ' तस्मिन्निति तच्छब्दस्य पूर्वप्रक्रान्तपरामर्शित्वा-द्व्रतं यावत्कालं तावत्कालं व्रतादेशाभिरक्षा कर्तव्या । पूर्ववदित्यनेन पूर्वकण्डिकाप्रतिपादिता पाणि-नाग्निं परिसमूहतीत्याद्यभिवादनान्ता समस्तेतिकर्तव्यताऽतिदिश्यते । तां कृत्वा पूर्वनियमितां वाचं विसृजते । समिदाधानस्य प्राधान्यं द्योतयितुं वृक्षादिकमपीडयन्समिधमाहृत्याधायेत्युक्तं जातावेकव-चनम् । सायंकाले संध्यावन्दनं पूर्वोक्तविधिना । सायंकाले इमंमेति चतसृभिर्वारुणीभिरुपस्थानं, प्रातर्मित्रः सꣳसृज्य मित्रस्यचर्षणीधृतः मित्रैतांत उपांपरिददाम्यभित्या एषामाभेदीत्येतावदेव प्रात-रुपस्थानमाचार्यमते । ' अध'''स्यात् ' क्षारं गुडादि । ' दण्ड'''येत् ' अग्निपरिचरणं मध्याह्ने सायंकाले च । प्रतिसंध्यमग्निचरणं तेन प्रातःसमये भवतीत्याहुः । यत्तु माध्याह्निकं नेति । तन्न । अनाहिताग्नेर्न्यैरतब्रह्मस्यापि माध्याह्निकापरिचर्यायाः पातित्याधायकतया नित्यत्वात् । गुरुशुश्रूषणं मनोवाक्कायकर्मभिः । आत्मनस्तृप्त्यर्थं भिक्षा आचार्यार्थमपि । स्नानकालेऽमज्जतः स्नानम् आसनो-पर्यासनं न स्थापयेत् । अदत्तं न गृहीयात् । स्पष्टमन्यत् । ' अष्टा'''चरेत् ' । विभागमाह । ' द्वाद'''वेदं '

---

१ याच्यायाच्यायामिति पाठः । २ उपनयनसांगतासिद्ध्यर्थमिति पाठः।

'याव···णं वा' सूत्रयोर्ब्रह्मचर्यं चरेदित्यनुकर्षः । अध्ययनसमयमनुरुणद्धि ब्रह्मचर्यमिति सूत्रणार्थः । 'वासा॰···कानि' ब्राह्मणक्षत्रियविशामिति शेषः । 'ऐणे···णस्य' ऐणेयमेण्याश्चर्म । 'रौर···न्यस्य' रुरोश्चित्रमृगस्य चर्म । 'आजं···श्यस्य' आजमजस्य गव्यं गोः । 'सर्वे···प्रधानत्वात्' गव्यस्य चर्मणः पौरुषीत्वगवि देवैराहिता । तेन गोत्वचः अजिनं सर्वेषां प्रधानमित्यर्थः । 'मौञ्जी···णस्य' मुञ्जमयी रशना मेखला । 'धनु···यस्य' ज्या प्रत्यञ्चा । 'मौर्वी वैश्यस्य' मुरुस्तृणविशेषः ॥ 'मुञ्जा···जानां' यथाक्रमं मेखला भवन्तीत्यर्थः । 'पाला···स्यौदुम्बरो वैश्यस्य' त्रिसूत्री स्पष्टार्था । यथाक्रमं मानमाह 'केश···दण्डः' केशसंमितः केशमूलसंमितः । ललाटसंमित इत्यर्थः । अन्यथा सर्ववपनादिपक्षो बाध्येतेत्यभिप्रायः । 'लला···यस्य' ललाटावधिः घ्राणसंमित इत्यर्थः । 'घ्राण···श्यस्य' घ्राणावधिः मुखसंमित इत्यर्थः । 'सर्वे वा सर्वेषां' वाशब्दः पक्षान्तरे । सर्वे दण्डाः सर्वेषां ब्राह्मणादीनामनियमेन भवन्तीत्यर्थः । 'आचा···यात्' ब्रह्मचारी आचार्याय प्रतिवाचं दद्यात् । 'शया···सीनः' आचार्यः स्वपन्तं चेदाह्वयति तदोपविष्टः प्रतिवाचं दद्यात् एवमुत्तरसूत्रान्वयः । 'आसी···धावन्' त्रिसूत्री निगदव्याख्याता । उक्तकर्तव्यतारतस्य फलमाह । 'स एवं···तीति' अद्य ब्रह्मचर्यकाले एवमुक्तकर्तव्यतायां वर्तमानः अमुत्र ब्रह्मलोके वसति तिष्ठति । द्विरुक्तिर्भूयोर्थप्रतिपादिका । अहो दर्शनीयाहोदर्शनीयेतिवत् । आग्नेयव्रते तिष्ठता ब्रह्मचारिणा समिधाग्निमित्येवमाद्याग्नेयो वेदविभागः पठनीयः । संवत्सरे पूर्णे आग्नेयव्रतविसर्गः । परिसमूहनादि बर्हिस्तरणान्तम् । हस्तेनोदकमादायाग्ने व्रतपते व्रतमचारिषं ( आग्नेयं ) सांवत्सरिकं तदशकं तन्मेराधि । ततः उपयमनकुशादानादि ब्राह्मणभोजनान्तं व्रतादेशवत् । आमभिक्षानिवृत्तिर्विशेषः ॥ ॥ ततः शुक्रियव्रतादेशः । परिसमूहनाद्युपयमनप्रक्षेपान्तमाग्नेयव्रतादेशवत् प्रयोगे विशेषः । अग्ने व्रतपते व्रतं चरिष्यामि शुक्रियं सांवत्सरिकं तच्छकेयं तन्मे राध्यताम् । शुक्रियव्रतस्थेन ऋचं वाचमित्यादि शुक्रियो विदविभागोऽध्येतव्यः । संवत्सरस्योतमेऽह्नि त्रिगुणपटैकदेशे ग्रन्थि कृत्वा ब्रह्मचारिण. शिरस उपरि ग्रन्थि कृत्वा नाभिं तेन पटेनाच्छादयीत । तत्सवितुर्हिरण्मयेन पात्रेणेति च । हिरण्मयेनेत्यस्याः वेदशिरस्त्वम् । एतच्चाच्छादनमपराह्णान्ते कर्तव्यं ततः सूर्योदयपर्यन्तं वाग्यतो भवेत् । ग्रामे गोष्ठे देवतायतने वा भूमौ शयनम् । अध्युषितायां रात्रौ ग्रामाद्बहिर्गत्वाऽवगुण्ठनं विसृजेत् । अदृश्रमस्योदुत्यं चित्रंदेवानांतृचमुदितेऽर्के जपेत् । उदकं ताम्रे प्रक्षिप्य द्यौः शान्तिरिति शान्तिकरणं । ततोऽवगुण्ठनशान्तिभाजने गुरवे दद्यात् । ततः शुक्रियविसर्गः । परिसमूहानाद्युपयमनप्रक्षेपान्तं प्रयोगे विशेषः । अग्ने व्रतपते व्रतमचारिषं शुक्रियं सांवत्सरिकं तदशकं तन्मेराधि । शुक्रियादित्रये व्रतादेशविसर्गयोस्त्रिगुणपटावगुण्ठनवेष्टनं गुरवे दानान्तम् । ततो दण्डमेखलोपवीतान्यप्सु प्रक्षिपेदप्स्वन्तरिति प्रत्यृचम् । दधिघृतशर्कराणां प्राशनं नमोवरुणायेति । ततो वपनम् । पुनर्व्रतार्थं मेखलोपवीतदण्डानां समन्त्रकः पूर्ववत्प्रतिग्रहः । एतच्च मेखलादित्रयप्रतियोगिकत्यागाङ्गीकारावाग्नेयादिव्रतचतुष्टयेऽपि भवति ॥ ॥ तत उपनिषद्व्रतादेशे परिसमूहनादिब्राह्मणभोजनान्ते विशेषः—अग्ने व्रतपते व्रतं चरिष्याम्यौपनिषदं सांवत्सरिकं तच्छकेयं तन्मे राध्यताम् । औपनिषदव्रतस्थेन द्वयाह्प्राजापत्येत्याद्युपनिषद्भागोऽध्येतव्यः । संवत्सरस्योत्तमेऽह्न्यवगुण्ठनदानान्तं पूर्ववत् व्रतविसर्गः । प्रयोगे विशेषः—अग्ने व्रतपते व्रतमचारिषमौपनिषदं सांवत्सरिकं तदशकं तन्मेराधि । अत्राप्यवगुण्ठनदानानन्तरं दण्डादित्रितयत्यागाङ्गीकारौ व्रतोद्देशेन ॥ ॥ ततः शौलभव्रतादेशः । परिसमूहनादिब्राह्मणभोजनान्तम् । मन्त्रे विशेषः । अग्ने व्रतपते व्रतं चरिष्यामि शौलभं सांवत्सरिकं तच्छकेयं तन्मे राध्यताम् । संवत्सरस्योत्तमेऽह्नि अवगुण्ठनदानान्तं ततो वपनम् । दण्डादिविमोचनादित्रिमधुरप्राशनादि । व्रतोद्देशेन पूर्ववद्दण्डादिप्रतिग्रहः । शौलभव्रतविसर्गः । परिसमूहनादि ब्राह्मणभोजनान्तम् । मन्त्रे विशेषः—अग्ने व्रतपते व्रतम-

चारिषं शौलभं सांवत्सरिकं तद्दशकं तन्मेराधि । अत्राप्यवगुण्ठनादि पूर्ववत् । अवगुण्ठनाभावे शौलभिन्यः कण्डिका ब्रह्मचारिणे श्रावयेत् । आब्रह्मन् । १ उदीरतां । २ आनोभद्राः । ३ । आशुःशिशानः । ४ इमानुकमित्येता, शौलभिन्यः ५ ॥ ॥ ततो गोदानादेशः । परिसमूहनादि । व्रतोद्देश्यकं मेखलाद्युपादानं सर्वं पूर्ववत् । गोदानं सांवत्सरिकम् । संवत्सरे पूर्णे पुण्येऽह्नि गोदानविसर्गः पूर्ववत् । दण्डाद्यप्सुप्रक्षेपाभावः । सौकर्याय व्रतकर्तव्यतालेखनम् । 'तस्य स्ना'''वति ' वेदाध्ययनव्रतकर्तव्यतान्यतरसमुदायैतस्य(?)स्नातकस्य कीर्तिर्भवति । तस्यैव प्रकारभेदविजृम्भितान्भेदानाह ' त्रय'''भवन्ति ' । कथमत आह ' विद्या'''तक इति ' । किंस्वरूपो विद्यास्नातक इत्यत आह ' समा'''तकः ' । वेदाध्ययनपरित्यागेन व्रतकर्तव्यतामादाय व्रतस्नातकं लक्षयति ' समा'''तकः' एतेन स्वाध्यायाध्ययनगोचराद्यप्रवृत्तेरेव व्रतादेशनां मन्यमाना हृच्छून्यतया निर्लज्जया च सूत्रकृतैवापहस्तिता इत्यवधेयम् । नच ब्रह्मचर्यमेव व्रतं समावर्तनप्राक्कालिकब्रह्मचर्यप्रतियौगिकविसर्गस्य गगनकमलकल्पत्वात् । नच मेखलादिधारणाधिकारकाले ब्रह्मचर्यपरित्यागः शास्त्रप्रसिद्धः । नच समावर्तनमेव व्रतविसर्ग इति वाच्यं, गुरवे तु वरं दत्त्वेत्यादिधर्मशास्त्रे व्यस्तयोः समुच्चितयोर्वा वेदाध्ययनव्रतानुष्ठानयोः समाप्त्युत्तरकालं समावर्तनाधिकारात् । अतिस्पष्टं समाप्यव्रतमित्यादिना तथैव सूत्रणात्पारस्कराभिधैः कात्यायनचरणैः । समावर्तनस्यैकत्वाच्च । नच व्रतादेशोऽप्येक एवेति वाच्यम् । एतदेव व्रतादेशनविसर्गेष्विति वक्ष्यमाणसूत्रकारेणैव व्रतादेशानां विसर्गाणां च बहुवचनेन बाहुल्यप्रतिपादनात् । नच बहुत्वमविवक्षितमिति वाच्यम् । स्थालीपाकानामित्यादावविवक्षापत्तेः वेदव्रतानि वेत्यत्रापि बहुत्वश्रवणात् । नच तदप्यविवक्षितेव । एवं च बहुवचनमात्रस्यैवाविवक्षितत्वे बहुषु बहुवचनमित्यस्य पाणिनीयप्रणयनस्याप्यानर्थक्यापत्तेरितिदिक् । ' उभ'''तक इति ' उभयं वेदं व्रतानि चेत्यर्थः । ' आषो'''र्वात ' अर्वाक् षोडशाद्वर्षाद्द्विजस्यानतिक्रान्तः कालो भवति । 'आद्वा'''न्यस्य' 'आ च'''श्यस्य' अनतीतः कालो भवतीति शेषः सूत्रयोः । ' अत'''वन्ति ' पतिता सावित्री येभ्यः सवितृदेवताकमन्त्रोपदेशानधिकारः । ' नैना'''युः ' चतुःसूत्री निगदव्याख्याता । ' काला'''वत् ' नियते श्रौते यदनादिष्टं तद्वत् तादृशम् अविज्ञाते प्रतिमहाव्याहृति सर्वाभिश्चतुर्थं सर्वप्रायश्चित्तं चेत्येतदाहुतिनवकं भवतीति शेषः । तथाहि भूसंस्काराः अन्वग्निरित्यग्नेराहरणं पृष्ठोदिवीति स्थापनं ता॑सवितुः, तत्सवितुः, विश्वानिदेव सवितरिति प्रज्वालनं परिस्तरणं पात्रासादनं पवित्रे आज्यस्थालीं आज्यं संमार्गकुशाः उपयमनकुशाः स्रुवः निरुप्याज्यमधिश्रित्य पर्यग्नि कुर्यात् स्रुवं प्रतप्य संमृज्य लौकिकोदकेनाभ्युक्ष्य पुनः प्रतप्य निदध्यात् । आज्यमुद्वास्य पवित्राभ्यामुत्पूयावेक्ष्य कुशोपग्रहो दक्षिणं जान्वाच्य जुहुयात् । तिस्रो महाव्याहृतयः सर्वाभिश्चतुर्थी सर्वप्रायश्चित्तं च । इदमग्नये इदं वायवे इदं सूर्याय इदंप्रजापतये इदमग्नीवरुणाभ्याम् इदमग्नये अयासे इदं वरुणायसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यःस्वर्केभ्यः इदं वरुणायादितये । एतच्चाग्नेयव्रतस्थस्य वटोः । शुक्रियव्रतस्थस्तु संध्याकाले व्यतिक्रान्ते जपं कुर्यात्पुनर्मनः । ऋचं वाचंतृचं जप्त्वा कालदोषैर्न लिप्यते । अन्यदापि आदित्योभ्युदियाद्यस्य संध्योपास्तिमकुर्वतः । स्नात्वा प्राणास्त्रिरायम्य गायत्र्यष्टशतं जपेत् । केचित्तु कालातिक्रमे नियतवदित्यनेन गर्भाधानादिसकलकर्मकालातिक्रमे श्रौतानादिष्टातिदेश इत्याहुः । ' त्रिपु'''स्कारः ' सावित्र्यनधिकारसंपन्नहृत्संतापानामपत्यसंस्कारः पुनः प्रसूयते । सकियद्दूरमत आह त्रिपुरुषमिति । यत्तु चतुर्थाद्यपत्यस्य संस्कार्यताऽनेन प्रतिपाद्यत इति तन्न । त्रिपुरुषमित्यस्य व्यर्थतापत्तेः । नच त्रिपुरुषमसंस्कार्यताप्रतिपत्त्यर्थमिदमिति वाच्यं पुरुषत्रयमनुवृत्तस्यैनसो बलवत्त्वेन निवर्तयितुमशक्यत्वात् । संस्कारांशं प्रतिप्रसूयाध्यापनांशं निषेधति नाध्यापनं च तेषामिति । पुनस्तत्प्रतिप्रसवमाह ' संस्का'''यीरन् ' तेषां मध्ये यः संस्कारेप्सुः आत्मनः संस्कारेच्छावान् स

व्रात्यस्तोमेन यज्ञेनेष्ट्वा व्रात्यस्तोमं कृत्वा तत्पुत्रपौत्रादयः कामं यथेष्टमधीयीरन् अध्ययनं कुर्युः कुतः 'व्यव''नात्' श्रौतवचनादित्यर्थः। यद्वा काममिच्छयाऽध्ययनस्य व्रात्यस्तोमेनेष्ट्वा व्रात्यस्तोमानुष्ठानं च सावित्रीपाताहितां व्रात्यतामपनेतुम्। पञ्चमी कण्डिका ॥ ५ ॥

वेदꣳ समाप्य स्नायात् ॥ १ ॥ ब्रह्मचर्यं वाऽष्टाचत्वारिꣳशकम्॥२॥ द्वादशकेऽप्येके ॥ ३ ॥ गुरुणाऽनुज्ञातः ॥ ४ ॥ विधिर्विधेयस्तर्कश्च वेदः ॥ ५ ॥ षडङ्गमेके ॥ ६ ॥ न कल्पमात्रे ॥ ७ ॥ कामं तु याज्ञिकस्य॥८॥ उपसंगृह्य गुरुꣳ समिधोऽभ्याधाय परिश्रितस्योत्तरतः कुशेषु प्रागग्रेषु पुरस्तात्स्थित्वाऽष्टानामुदकुम्भानाम् ॥ ९ ॥ ये अप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मयूषो मनोहास्खलो विरुजस्तनूदूषुरिन्द्रियहातान्विजहामि[1] यो रोचनस्तमिह गृह्णामीत्येकस्मादपो गृहीत्वा ॥ १० ॥ तेनाभिषिञ्चते। तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसायेति ॥ ११ ॥ येन श्रियमकृणुतां येनावमृशताꣳ सुराम्। येनाक्ष्यावभ्यषिञ्चतां यद्वां तदश्विना यश इति ॥ १२ ॥ आपोहिष्ठेति च प्रत्यृचम् ॥ १३ ॥ त्रिभिस्तूष्णीमितरैः ॥ १४ ॥ उदुत्तममिति मेखलामुन्मुच्य दण्डं निधाय वासोऽन्यत्परिधायादित्यमुपतिष्ठते ॥ १५ ॥ उद्यन्भ्राजभृष्णुरिन्द्रो[2] मरुद्भिरस्थात्प्रातर्यावभिरस्थाद्दशसनिरसि दशसनिं मा कुर्वाविदन्मागमय। उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवा यावभिरस्थाच्छतसनिरसि शतसनिं मा कुर्वाविदन्मागमय। उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्सायंयावभिरस्थात्सहस्रसनिरसि सहस्रसनिं मा कुर्वाविदन्मागमयेति ॥ १६ ॥ दधितिलान्वा प्राश्य जटालोमनखानि[3] सꣳहृत्यौदुम्बरेण दन्तान्धावेत। अन्नाद्याय व्यूहध्वꣳ सोमो राजाऽयमागमत्। स मे मुखं प्रमार्क्ष्यते यशसा च भगेन चेति ॥ १७ ॥ उत्साद्य पुनः स्नात्वाऽनुलेपनं नासिकयोर्मुखस्य चोपगृह्णीते प्राणापानौ मे तर्पय चक्षुर्मे तर्पय श्रोत्रं मे तर्पयेति ॥ १८ ॥ पितरः शुन्धध्वमिति पाण्योरवनेजनं दक्षिणानिषिच्यानुलिप्य जपेत् ॥ सुचक्षा अहमक्षीभ्यां भूयासꣳ सुवर्चा मुखेन। सुश्रुत्कर्णाभ्यां भूयास

---

१ दूषिरिन्द्रियहा अतितान्सृजा इति जयरामसंमतः पाठः। २ भ्राजभ्रष्टिरितिभ्राजभ्रष्टिरिति च पाठान्तः
३ नखान् इत्यपि पाठः।

मिति ॥ १९ ॥ अहतं वासो धौतं वाऽमौत्रेणाच्छादयीत । परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि । शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्य इति ॥ २० ॥ अथोत्तरीयम् ॥ यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती । यशो भगश्च माविन्दद्यशो मा प्रतिपद्यतामिति ॥ २१ ॥ एकश्चेत्पूर्वस्योत्तरवर्गेण प्रच्छादयीत ॥ २२ ॥ सुमनसः प्रतिगृह्णाति । या आहरज्जमदग्निः श्रद्धायै मेधायै कामायेन्द्रियाय । ता अहं प्रतिगृह्णामि यशसा च भगेन चेति ॥ २३ ॥ अथावबध्नीते यद्यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु । तेन सङ्ग्रथिताः सुमनस आबध्नामि यशोमयीति ॥ २४॥ उष्णीषेण शिरो वेष्टयते युवा सुवासा इति ॥२५॥ अलङ्करणमसि भूयोऽलङ्करणं भूयादिति कर्णवेष्टकौ ॥ २६ ॥ वृत्रस्येत्यङ्क्ते ऽक्षिणी ॥ २७ ॥ रोचिष्णुरसीत्यात्मानमादर्शे प्रेक्षते ॥ २८ ॥ छत्रं प्रतिगृह्णाति । बृहस्पतेश्छदिरसि पाप्मनो मा मन्तर्धेहि तेजसो यशसो माऽन्तर्धेहीति ॥ २९ ॥ प्रतिष्ठेस्थो विश्वतो मा पातमित्युपानहौ प्रतिमुञ्चते ॥३०॥ विश्वाभ्यो मा नाष्ट्राभ्यस्परिपाहि सर्वत इति वैणवं दण्डमादत्ते॥३१॥ दन्तप्रक्षालनादीनि नित्यमपि वासश्छत्रोपानहश्चापूर्वाणि चेन्मन्त्रः ॥ ३२॥

(कर्कः)—'वेदꣳ''यात्' एवं हि श्रूयते वेदमधीत्य स्नायादिति । ब्रह्मचर्यं वेति वर्षे विकल्पः । 'द्वादशकेऽप्येके' स्नानमिच्छन्ति । 'गुरुणाऽनुज्ञातः' स्नायादित्यनुवर्तते । गुर्वनुज्ञा च कर्माङ्गतया, न स्नानस्य कालान्तरमेतत् । वेदशब्देन किमभिधीयत इत्यत आह 'विधि''वेदः' विधिर्विधायकं ब्राह्मणं, विधेया मन्त्राः, तर्कशब्देनार्थवादोऽभिधीयते । तर्क्यते ह्यनेन संदिग्धोऽर्थः । यथा अक्ताः शर्करा उपदधाति तेजो वै घृतमिति । अञ्जनं च तैलवसादिनाऽपि संभवति । तत्र तेजो वै घृतमिति घृतसंस्तवात् तर्क्यते घृताक्ता इति । तेन विध्यर्थवादमन्त्रा वेदशब्देनाभिधीयन्त इत्युक्तम् । 'षडङ्गमेके' शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षड्भिरङ्गैरुपेतमेक आचार्या वेदमिच्छन्ति । एतस्मिन्हि अधिगते स्नानार्हो भवति । स्नानशब्देन द्वितीयाश्रमप्रतिपत्तिरुच्यते । तदनुष्ठानयोग्यता च षडङ्गेऽप्यधिगते वेदे भवति । अत एवोक्तम् 'न कल्पमात्रे' कल्पशब्देन च ग्रन्थमात्रमभिधीयते । न ग्रन्थमात्रेऽधिगते स्नायीत । न ह्येतावता तदनुष्ठानयोग्यता भवति तस्मादर्थतो ग्रन्थतश्चाधिगम्य स्नानमिति । 'काम''कस्य' वक्ष्यं वेदेति याज्ञिकः तस्य कामं स्नानं भवति । षडङ्गमर्थतोऽनधिगम्यापि । 'उपसंगृह्य गुरुꣳ समिधोऽभ्याधाय' इत्यत आरभ्य 'यद्वा तदश्विना यश' इत्येवमन्तं सूत्रम् । उपसंगृह्य गुरुमिति गुरोः पादोपसङ्ग्रहणं कृत्वा समिधोऽभ्याधायेति अग्निपरिचरणं कृत्वेत्यर्थः । अतश्च पूर्वं वेदाहुतिहोमः । एतदेव व्रतादेशनविसर्गेष्वित्युक्तम् । ननु च समिदाधानस्य पश्चात्कस्माद्वेदाहुतयो न भवन्ति । एवं च सूत्रानन्तर्यमनुगृहीतं भवति । नचेह वेदाहुतीनां क्रमान्तरविधानमस्ति । उपसंगृह्य गुरुꣳ समिधोऽभ्याधायेति च पाठानुग्रहः । नैतदेवम् । वेदाहुतीना

समिदाधानमेव पश्चाद्भवति । एवं हि श्रूयते । स यामुपयन्त्समिधमादधाति सा प्रायणीया याᳪं स्नास्यन्सोदयनीयेति । स्नानं चाष्टभिरुदकुम्भैः समिदाधानसमनन्तरमेव भवति उत्तरतः परिश्रितस्याष्टानामुदकुम्भानां पुरस्तात् स्थित्वा कुशेषु प्रागग्रेषु येऽप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्य इत्यनेन मन्त्रेण एकस्मादुदकुम्भादपो गृहीत्वा तेनाभिषिञ्चते तेन मामभिषिञ्चामि इत्यनेन मन्त्रेण । अथ द्वितीयेन येन श्रियमकृणुतामित्यनेन मन्त्रेण । 'आपोहिष्ठेति च प्रत्यृचं' त्रिभिरुदकुम्भैरभिषिञ्चति । तूष्णीमितरैरुदकुम्भैरभिषेकः । 'उदु'''म्रुत' उद्यन्भ्राजभृष्णुरित्यनेन मन्त्रेण । 'दधि'''वेत' अन्नाद्याय व्यूहध्वमित्यनेन मन्त्रेण दधितिलयोरन्यतरप्राशनं कृत्वा जटालोमनखानां संहारं च औदुम्बरेण दन्तान्प्रक्षालयेदन्नाद्याय व्यूहध्वमित्यनेन मन्त्रेण । 'उत्सा'''येति' उत्सादनमङ्गोद्वर्तनं कृत्वा पुनः स्नात्वाऽनुलेपनं नासिकयोर्मुखस्य चोपगृह्णीते प्राणापानौ मे तर्पयेत्यनेन मन्त्रेण । 'पित'''जपेत्' सुचक्षा अहमक्षीभ्यामिति । 'अहतं'''यीत' परिधास्यै० इत्यनेन मन्त्रेण । 'अथोत्तरीयं' यशसा मा द्यावापृथिवी० इत्यनेन मन्त्रेणाच्छादयीत । 'एकं'''यीत' एकं चेद्वासो भवति तस्यैवोत्तरवर्गेण प्रच्छादयीत । तत्रापि मन्त्रो भवति । क्रियान्तरत्वात् । 'सुम'''ह्णाति' या आहरज्जमदग्नि० इत्यनेन मन्त्रेण । 'अथावबध्नीते' यद्यशोऽप्सरसामिन्द्र० इत्यनेन मन्त्रेण । 'उष्णी'''यते' युवासुवासा इत्यनेन मन्त्रेण । 'अल'''ष्टकौ' आवध्नाति । वृत्रस्येत्यनेन मन्त्रेणाङ्क्ते अक्षिणी । रोचिष्णुरसीत्यनेन मन्त्रेणात्मानमादर्शे प्रेक्षते । 'छत्रं प्रतिगृह्णाति' बृहस्पतेश्छदिरसि० इत्यनेन मन्त्रेण । 'प्रति'''ञ्चते' युगपत् शक्यत्वाद् द्विवचनान्तत्वाच्च मन्त्रस्य । 'विश्वाभ्यो मेति वैणवं दण्डमादत्ते । 'दन्त'''मपि' मन्त्रवन्ति भवन्तीति सूत्रशेषः । 'वास'''न्मन्त्रः' वासआदिषु नवेष्वेव मन्त्रो भवति ॥　॥ * ॥　॥ * ॥

( जयरामः )—वेदमधीत्य स्नायादिति ब्रह्मचर्यं वेति वर्षे विकल्पः । द्वादशके व्रते एके स्नानमिच्छन्ति । 'गुरुणाऽनुज्ञातः' सर्वत्र स्नायादित्यनुवर्तते । गुर्वनुज्ञा च कर्माङ्गं नतु स्नानकालान्तरमेतत् । वेदशब्देन किंतदाह 'विधिर्विधेयस्तर्कश्च वेदः' इति । विधिर्विधायकं ब्राह्मणं, विधेया मन्त्राः, तर्क्यते ह्यनेन संदिग्धोऽर्थ इति तर्कोऽर्थवादः । यथा अक्ताः शर्करा उपदधाति तेजो वै घृतमिति । अञ्जनं च तैलवसादिना च संभवति । तत्र तेजो वै घृतमिति घृतसंस्तवात्तर्क्यते घृताक्ता इति तेन विध्यर्थवादमन्त्रा वेद इत्युक्तम् । षडङ्गं शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । षड्भिरङ्गैरुपेतं वेदमधीत्य स्नायादित्येके । स्नानं च द्वितीयाश्रमप्रतिपत्तिः । तदनुष्ठानयोग्यता च षडङ्गे वेदेऽधिगते भवति । अत एवोच्यते 'न कल्पमात्रे' इति नच कल्पमात्रे ग्रन्थमात्रेऽधिगते स्नानार्हो भवति तस्माद्ग्रन्थतोऽर्थतश्चाधिगम्य स्नायात् । काममिच्छया । यज्ञं वेदेति याज्ञिकस्तस्येच्छया स्नानं भवति । षडङ्गमर्थतोऽनधिगम्यापि । किंकृत्वा 'उपसंगृह्य गुरुं' गुरोः पादोपग्रहणं कृत्वा 'समिधोऽभ्याधाय' अग्निपरिचरणं कृत्वा । इतश्च पूर्वं वेदाहुतिहोमः । एतदेव व्रतादेशनविसर्गेष्वित्युक्तत्वात् । ननु समिदाधानस्य पश्चाद्वेदाहुतयः कुतो न भवन्ति क्रमान्तरानभिधानात् । उपसंगृह्य गुरुं समिधोऽभ्याधायेति पाठानुग्रहापत्तेश्च । मैवम् । यतो वेदाहुतीनां पश्चादेव समिदाधानं ततश्च स्नानमिति, स यामुपयन्त्समिधमादधाति सा प्रायणीया याᳪं स्नास्यन्सोदयनीयेतिश्रुतेः । तस्मात्समिदाधानस्नानयोरव्यवहितकालत्वोपपादनाद्वेदाहुतीनां च स्नानाङ्गत्वातिदेशाच्च समिदाधानात्पूर्वं वेदाहुतिहोम इत्युक्तम् । स्नानं चाष्टभिरुदकुम्भैः क्रमेण । परिश्रितस्य वस्त्रादिना परिवेष्टितसमावर्तनस्थानस्थितस्याग्नेरुत्तरपार्श्वे स्थापितानामष्टानामुदकुम्भानामुदक्संस्थानां पुरस्तात्पूर्वस्यां दिशि आस्तीर्णेषु कुशेषु स्थित्वा प्रथमादुदकमादाय गृहीत्वा आत्मानमभिषिञ्चत इत्यग्रिमेणान्वयः । अष्टाभ्य उदकुम्भेभ्योऽपां ग्रहणे एक एव मन्त्रो येऽप्स्वन्त-

रमय इति । अभिषेचने तु भिद्यते । तत्र ग्रहणमन्त्रव्याख्या । तत्र येऽप्स्वन्तरित्यस्य प्रजापतिरग्निर्गायत्री आपो जलादाने० । हे अग्नयः ये भवन्त इह एतेषूदकुम्भेषु वर्तमाने जले प्रविष्टाः । कथम् अन्तः मध्ये धारणत्वेनेत्यर्थः । अग्नेराप इति श्रुतेः । तत्र ये गोह्यादयो विमङ्गलाः अतितान्सृजामि अतिसृजनं प्रक्षेपः विजहामीत्यर्थः । यश्च रोचनः सुमङ्गलस्तमनेन जलेन सह गृह्णामि । मङ्गलायोपपादयामि । के तेऽग्नयस्तानाह । गृहाति संवृणोति प्राणिजालमिति गोह्यः। उपगोह्योङ्गतापनः । मयून् विकृतमुखान् कृत्वा स्यति अन्तं नयतीति मयूषः । मनस उत्साहं हन्तीति मनोहा । अस्खलः अप्रतीकार्यः । विरुजः विविधतया रुजति पीडयतीति विरुजः । तनूः शरीरावयवान् दूषयति विकृतान्करोती तनूदूषिः । इन्द्रियाणि हन्तीतीन्द्रियहा । एतानष्टौ विहायैकं रोचनं गृह्णामीति वाक्यार्थः । तथाच वृद्धमनुः—गोह्यादयोऽग्नयो ह्यष्टावमेध्यास्त्वशुभावहाः। शुभकृद्रोचनस्त्वेको मेध्यो दीप्तिकरः पर इति । अथाभिषेकमन्त्रव्याख्या । तेनमामिति द्वयोः प्रजापतिर्यजुरापोऽभिषेक० । तेन अभीष्टेन जलेनाहं मन्त्रलिङ्गात् आत्मानमभिषिञ्चामि । प्रयोजनमाह । श्रियै धर्मादिवृद्धये । यशसे कीर्त्यै ब्रह्मणे वेदार्थम् । ब्रह्मवर्चसाय यागाध्यापनोत्कर्षजतेजसे। पुनर्येऽप्स्वन्तरिति द्वितीयादुदकुम्भादपो गृहीत्वा · येन च श्रियमितिमन्त्रेणाभिषिञ्चते । अस्यार्थः। हे अश्विनौ येन जलप्रभावेण भवन्तौ सुराणां श्रियं संपदं शोभां वा अकृणुताम् कृतवन्तौ श्रियाश्तोयत उत्पन्नत्वात् । येन च सुरामभृतमवमृशतां प्राप्तवन्तौ । अटोऽदर्शनं छान्दसम् । येन जलेनाक्ष्यौ उपमन्योरक्षिणी अभ्यषिञ्चताम् अभिषिक्तवन्तौ । वां युवयोर्यदेवंभूतं यशस्तदेतज्जलाभिषेकेण ममाप्यस्त्विति शेषः । साकाङ्क्षत्वात् । तृतीयादित्रयादापोहिष्ठादित्र्यृचेन यथाक्रममभिषेकः इतरैस्त्रिभिरुदकुम्भजलैस्तूष्णीमभिषेकः । उदुत्तममितिमन्त्रेण मेखलामुन्मुच्य ऊर्ध्वं कण्ठदेशेनावतार्य दण्डं निधाय भूमौ स्थापयित्वा । अनेनावसरप्राप्तं दण्डाजिनयोर्निधानं लक्ष्यते तूष्णीम् । वस्त्रान्तरं धृत्वा सूर्यमुपतिष्ठते । अथोपस्थानमन्त्रव्याख्या । उद्यन्निितिमन्त्रत्रयस्य प्रजापतिः शक्करी सविता उपस्थाने० । हे सूर्य यतो भवान् प्रातःसवने यावभिर्गमनशीलैर्ऋष्यादिसकलगणैश्च सनिः सेविता सेवितो वाऽस्थास्तिष्ठति तद्वत् । किंभूतः । उद्यन् उद्गच्छन् । भ्राजभृष्टिः स्वप्रभयाऽन्यतेजोह्रासकः । आविदन् सर्वं शुभाशुभं जानन् । किंच यथा च त्वं प्रातःसवने दशसनिः दशसंख्यातानां गवादीनां सनिर्दाताऽसि । षणु दाने । अतो मामपि दशसनिं दशगुणदक्षिणादिदातारं कुरु । मा मा वेदनं सर्वज्ञत्वं च गमय प्रापय । एवमुत्तरत्रापि व्याख्येयम् । एवं स्तुत्वा दधितिलयोरन्यतरं प्राश्य जटालोमनखानि च संहृत्य अपनीय औदुम्बरेण काष्ठेन दन्तान्धावेत शोधयेत् अन्नाद्यायेति मन्त्रेण । अस्यार्थः। तत्राथर्वणोऽनुष्टुप् वनस्पतिर्दन्तधावने० । हे दन्ताः यूयमन्नाद्याय अन्नादनाय व्यूहध्वमास्मशुद्ध्यर्थमेकपङ्क्तिनिविष्टा भवत । यतोऽयं राजा सोमश्चन्द्रः काष्ठरूपेणागमन् आगतः स एव सोमो मे मम मुखं प्रमार्क्ष्यते शोधयिष्यति । केन यशसा सत्कीर्त्या भगेन षड्विधैश्वर्येणेति दन्तधावनस्य नित्यकामत्वादुभयफलसंबन्धः । उन्माद्य अङ्गोद्वर्तनेन मलमपसार्य पुनः स्नात्वा मलस्नानं कृत्वा अनुलेपनमुपगृहीतं आदत्ते प्राणापानौ मे तर्पयेतिमन्त्रेण । अस्यार्थः । तत्र प्रजापतिर्यजुः प्राणापानौ चन्दनानुलेपे० । भो उपलेपनाधिदैवत मे मम प्राणापानौ वायू तर्पय प्रीणय । तथा मे चक्षुः चक्षुरिन्द्रियं तथा मे श्रोत्रं श्रवणेन्द्रियं च तर्पय । पितरः शुन्धध्वमित्यनेन मन्त्रेण पाण्योरवनेजनं क्षालनोदकं दक्षिणाग्रहणात्प्राचीनावीती भूत्वा दद्यात् । शुन्धध्वं शोधनं दक्षिणापवं कुसुमसम्यन्तं तेन दक्षिणस्यां दिशि निषिच्य क्षिप्त्वा चन्दनेनात्मानमनुलिप्य जपेत्, सुचक्षाअहमिति मन्त्रम् । अस्यार्थः । तत्र प्रजापतिर्यजुः सविता नेत्राभिमन्त्रणे० । हे सवितः अहमक्षीभ्यां नेत्राभ्यां कृत्वा सुचक्षाः सुदर्शनो भूयासम् । तथा मुखेन सुवर्चाः सुतेजाः भूयासमिति पूर्वेण संबन्धः । तथा कर्णाभ्यां सुश्रुत् सुश्रवणो भूयासं भवेयम् । अहतं नवीनं

सदशमनुपहतं वा । तत्रापि अभौत्रेण मौत्रो रजकस्तद्व्यतिरिक्तेन धौतं वा आच्छादयीत परिदधीत परिधास्या इति मन्त्रेण । अस्यार्थः तदादिद्वयोराथर्वणो यजुर्लिङ्गोक्ता वासःपरिधाने० । हे वासोदेवते परिधास्यै अनेकशुभवस्त्रपरिधानाय तथा यशोधायै कीर्त्याधानाय तथा दीर्घायुत्वाय निर्दुष्टजीवनाय च इदं वासः संव्ययिष्ये परिधास्ये । किंभूतः वासोदेवतानुग्रहेण जरदष्टिः आयुःपरिपाकवान् । पुरूचीः पुरुभिर्बहुभिः पुत्रधनादिभिरुचः संयोगोऽस्ति यस्य सः । उच समवाये । किंभूतं वासः रायस्पोषं रायो धनादिसमृद्धेः पोषं पोषणं पुष्टिकरमित्यर्थः । किंचैतत्संबन्धेनाहं शतं शरदो वर्षाणि जीवामि । अथोत्तरीयं वास आच्छादयतीत्यनुषङ्गः । यशसामेति मन्त्रेण । अस्यार्थः । हे वासोदेवते द्यावापृथिवी द्यावाभूमी यशसा युक्तौ मा मामविन्दन् विन्दतां प्राप्नुतामिति यावत् विद्लृ लाभे धातुः । विभक्तिवचनव्यत्ययेनान्वयः । तथा इन्द्राबृहस्पती अपि यशसा युक्तौ मामविन्दत् । तथा भगः सूर्योऽपि यशसा युक्तो मामविन्दत् । तत्रैतैः संपादितं यशो मा मां प्रतिपद्यताम् मयि सर्वदा तिष्ठत्वित्यर्थः । यद्वा तद्यशो माप्रतिपद्यताम् । प्रतिरत्रापार्थः मत्तो माऽपयात्वित्यर्थः । एकं चेत् तत्रापि परिधानमन्त्रं पठित्वा वस्त्रार्द्धं परिधाय द्विराचम्य उत्तरार्द्धं गृहीत्वा उत्तरीयमन्त्रं पठित्वोत्तरीयं कृत्वा पुनर्द्विराचामेदित्यर्थः । एतन्मन्त्रद्वयं स्वकर्तृकपरिधाने बोद्धव्यम् । परकर्तृके तु परिधापने येनेन्द्रायेति मन्त्रान्तरमित्यविरोधः । सुमनसः पुष्पाणि या आहरदिति मन्त्रेण । अस्यार्थः । तत्र द्वयोर्भरद्वाजोऽनुष्टुप् सुमनसो देवता क्रमेण पुष्पादानवन्धनयोर्वि० । याः सुमनसः पुष्पाणि जमदग्निः प्रजापतिः श्रद्धाद्यर्थमाहरत आददे । ताः सुमनसो यशसा कीर्त्या भगेनैश्वर्येण च सहाहं प्रतिगृह्णामि श्रद्धाद्यर्थम् । तत्र श्रद्धा धर्मादरः । मेधा धारणाशक्तिः । कामोऽभिलाषपूर्तिः । इन्द्रियं तत्पाटवम् । अथेति सुमनसां ग्रहणानन्तरम् तानि स्वशिरस्यवबध्नाति । यद्यशोऽप्सरसामिति मन्त्रेण । अस्यार्थः । हे सुमनसः इन्द्रो देवः अप्सरसामुर्वश्यादीनां कुसुमाववन्धनेन यद्यशः सर्वजनप्रियत्वं चकार कृतवान् । तेन यशसा संग्रथिताः युष्मानावध्नामि चूडायाम् । किंभूतं यशः । विपुलं विशालं पृथु संततं दीर्घं तद्यशो मयि विषये तिष्ठत्विति शेषः । उष्णीषेण शिरोवेष्टनवस्त्रेण शिरो वेष्टयते युवासुवासा ति मन्त्रेण । व्याख्यातश्चायं मेखलाबन्धनप्रसङ्गे । कर्णवेष्टकौ कुण्डले कर्णयोरामुञ्चति अलंकरणमसीति मन्त्रेण । अस्यार्थः । तत्र प्रजापतिर्युजरग्निः कर्णालंकरणे० । हे कुण्डलदेवते त्वम् अलंकरणम् अलंकारशोभाऽसि । अतस्त्वयाऽलंकृतस्य मम भूयो बहु वारं वारं वा अलंकरणं भूयादस्तु । वृत्रस्यासि कनीनक इत्यादि चक्षुर्मे देहीत्यन्तेन मन्त्रेणाङ्क्तेऽक्षिणी । तत्र प्रजापतिर्गायत्री अञ्जनं तत्करणे० । रोचिष्णुरसीत्येतावता मन्त्रेणादर्शे दर्पणे मुखं प्रेक्षते । तत्र सूर्यो यजुरादर्शो मुखनिरीक्षणे० । छत्रं प्रतिगृह्णाति । बृहस्पतेरिति मन्त्रेण । अस्यार्थः । तत्र गौतमो गायत्री छत्रं तद्ग्रहणे० । हे छत्र त्वं बृहस्पतेः पितामहस्य छदिः घर्मादिनिवर्तकोऽसि प्रथमम् । अतः पाप्मनो निषिद्धाचरणान्मामन्तर्द्धेहि व्यवहितं कुरु तेजसः प्रतापात् यशसश्च सकाशान्माऽन्तर्द्धेहि मा व्यवहितं कुरु तद्युक्तं कुर्वित्यर्थः । प्रतिष्ठेस्थ इति मन्त्रेणोपानहौ पादयोः प्रतिमुञ्चते परिधत्ते युगपत् शक्यत्वाद्द्विवचनान्तत्वाच्च मन्त्रस्य । अस्यार्थः । तत्र प्रजापतिर्यजुर्द्धर्मः उपानद्ग्रहणे० । हे उपानहौ तद्देवते युवां प्रतिष्ठे स्थितिहेतू स्थः भवथः । अतो विश्वतः सर्वस्मात्परिभवान्मा मां पातं रक्षतम् । विश्वाभ्य इति मन्त्रेण वैणवं दण्डमादत्ते । अस्यार्थः । तत्र याज्ञवल्क्यो यजुर्दण्डस्तद्ग्रहणे० । हे दण्ड विश्वाभ्यः सर्वाभ्यः नाष्ट्राभ्यो राक्षसादिभ्यः सर्वतः सर्वावस्थासु मा मां परिपाहि सर्वभावेन रक्ष । दन्तप्रक्षालनादीनि तत्साधनानि प्राप्य नित्यमपि नित्यमेव मन्त्रो भवति । अपि एवार्थे । वासःप्रभृतिष्वपूर्वेष्वेव मन्त्रः ॥ ६ ॥

( हरिहरः )—'वेदर्ठं ''शकम् ' वेदं मन्त्रब्राह्मणात्मकं समाप्य सम्यक् पाठतोऽर्थतश्च अन्तं

'उष्णी···सा इति' उष्णीषेण पूर्वोक्तलक्षणेन तृतीयेन वाससा शिरो मूर्द्धानं वेष्टयते । युवा सुवासा इत्यादिकया देवयन्त इत्येतयर्चा । 'अलं···वे ष्टकौ' अलंकरणमसीति मन्त्रेण दक्षिणोत्तरयोः कर्णयोर्वेष्टकौ भूषणं प्रतिमन्त्रं प्रतिमुञ्चते परिधत्ते । 'वृत्र···क्षिणी' । वृत्रस्येत्यादिना चक्षुर्मे देहीत्यन्तेन मन्त्रेण यथाक्रमं दक्षिणवामे मन्त्रावृत्त्याऽक्षिणी अङ्क्ते सौवीराञ्जनेन संस्करोति । 'रोचि···क्षते' रोचिष्णुरसीत्यनेन मन्त्रेण आत्मानं मुखप्रभृति शरीरमादर्शे दर्पणे प्रेक्षते पश्यति । 'छत्रं···र्ह्णीति' छत्रम् आतपत्रं बृहस्पतेश्छदिरसीत्यादिना यशसो मान्तर्धेहीत्यन्तेन मन्त्रेण प्रतिगृह्णाति प्रतिग्रहशब्दसामर्थ्यादन्यत आदत्ते । 'प्रति···ञ्चते' उपानहौ पादत्राणे प्रतिमुञ्चते परिधत्ते प्रतिष्ठे स्थो विश्वतो मा पातमित्यनेन मन्त्रेण परिधत्ते । मन्त्रस्य द्विवचनान्तत्वात्परिधातुं शक्यत्वाच्च युगपत्पादयोः प्रतिमुञ्चते प्रतिष्ठे इति द्विवचनं स्थ इति च । 'विश्वा···दत्ते' विश्वाभ्यो मन्यादिसर्वतःस्पत्यन्तेन मन्त्रेण वैणवं वंशमयं दण्डं यष्टिमादत्ते गृह्णाति तथोक्तन्यायेन पूर्वदण्डं त्यक्त्वैव । इदमभिषेकप्रभृति दण्डग्रहणान्तं कर्मजातं स्नानकर्ता करोति नाचार्यः । 'दन्त···न्मन्वः' दन्तप्रक्षालनमादौ येषां पुष्पादानादीना तानि दन्तप्रक्षालनादीनि नित्यमपि सर्वदा मन्त्रवन्ति स्नातकस्य भवन्ति । वाससी च छत्रं च उपानहौ च वासश्छत्रोपानहं चकाराद्दण्डोऽपि । एतानि चेद्यदि अपूर्वाणि नूतनानि ध्रियन्ते गृह्यन्ते तदा मन्त्रो भवति तद्ग्रहणे ॥

( गदाधरः )—'वेदꣳ···यात्' स्नानशब्देन समावर्तनसंस्कार उच्यते । वेदं मन्त्रब्राह्मणात्मकं समाप्य सम्यक् पाठतोऽर्थतश्चान्तं नीत्वा स्नायाद्वक्ष्यमाणविधिना स्नानं कुर्यात् । 'ब्रह्म···शकम्' अथवा ब्रह्मचर्यव्रतमष्टाचत्वारिंशकमष्टाचत्वारिंशद्वर्षं निर्वर्त्य समाप्य अवसानं प्रापय्य गुरुणाऽनुज्ञातः स्नायादिति संबन्धः । मीमांसकास्तु अष्टाचत्वारिंशकं व्रतं समाप्य अवसानं कुर्यादिति पक्षं नाङ्गीकुर्वन्ति । जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्याधानश्रुतिविरोधात् । नच विकल्पः अतुल्यत्वात् । प्रत्यक्षमेकं श्रुतिवचनम् । कल्प्यमपरम् । कल्प्यप्रत्यक्षयोः प्रत्यक्षं बलवदिति भर्तृयज्ञभाष्ये । 'द्वा···के' द्वादशवार्षिके व्रते समाप्तेऽप्येके स्नानमिच्छन्ति । अन्ये तु वेदव्रतसमाप्त्युत्तरं स्नानमिच्छन्ति । 'गुरु···ज्ञातः' स्नायादिति शेषः । गुर्वनुज्ञा च समावर्तनकर्माङ्गं नतु स्नानकालान्तरमेतत् । वेदः समाप्य स्नायादित्युक्तम् । तत्र वेदशब्देन किमुच्यते इत्यत आह 'विधि···वेदः' विधत्त इति विधीयत इति वा विधिः । दर्शपूर्णमासाभ्यां यजेत अग्निहोत्रं जुहुयादित्यादिविधायकं ब्राह्मणवाक्यम् । विधीयते विनियुज्यते ब्राह्मणवाक्येन कर्माङ्गत्वेनेति विधेयो मन्त्रः इषेत्वादिः । तर्कशब्देनार्थवादोऽभिधीयते । तर्क्यते ह्यनेन संदिग्धोऽर्थः । यथा अक्ताः शर्करा उपदधाति तेजो वै घृतमिति । अञ्जनं तैलवसादिनाऽपि संभवति तत्र तेजो वै घृतमिति घृतसंस्तवात् तर्क्यते घृताक्ता इति । तेन विध्यर्थवादमन्त्रा वेदशब्देनाभिधीयन्त इत्युक्तम् । तर्कः कल्पसूत्रमिति भर्तृयज्ञः । तर्को मीमांसेति कल्पतरुः । चशब्दान्नामधेयभागसंग्रह इति हरिहरः । 'षडङ्गमेके' शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षड्भिरङ्गैरुपेतमेक आचार्या वेदमिच्छन्ति । तमधीत्य स्नायादित्यन्वयः ॥ स्नानं च द्वितीयाश्रमप्रतिपत्तिः । तदनुष्ठानयोग्यता च षडङ्गे वेदेऽधिगते भवति । अत एवोच्यते । 'न कल्पमात्रे' कल्पशब्देन च ग्रन्थमात्रमभिधीयते । कल्पमात्रे ग्रन्थमात्रे मन्त्रे वा ब्राह्मणे वा अधीते न स्नानमिच्छन्ति । नहि ग्रन्थमात्राध्ययनेन कर्मानुष्ठानयोग्यता भवति । तस्मादर्थतो ग्रन्थतश्चाधिगम्य स्नानमिति । 'कामं···ज्ञिकस्य' यज्ञं वेदेति याज्ञिकः । तुशब्देन ग्रन्थमात्राधीतस्याध्वर्यवादियज्ञविद्याकुशलस्य षडङ्गमर्थतोऽनधिगम्यापि कामामिच्छया स्नानं भवति । तेनायमर्थः । मन्त्रब्राह्मणात्मकं वेदमधीत्यावबुध्य च स्नायादित्येकः पक्षः । साङ्गं वेदमधीत्यावबुध्य च स्नायादिति द्वितीयः पक्षः । ग्रन्थमात्रमधीत्य यज्ञविद्यां

चाभ्यस्य स्नायादिति तृतीयः पक्षः । स्नायादित्युक्तं तत्र कथं स्नायादित्यपेक्षायामाह 'उप…येति' उपसंगृह्य गुरोः पादोपग्रहणं कृत्वा समिधोऽभ्याधायाग्निपरिचरणं कृत्वा । इतश्च पूर्वं वेदाहुतिहोमः । एतदेव व्रतादेशनविसर्गेष्वित्युक्तत्वात् । ननु समिदाधानस्य पश्चाद्वेदाहुतयः कुतो न भवन्ति । क्रमान्तरानभिधानात् । उपसंगृह्य गुरुं समिधोऽभ्याधायेतिपाठानुग्रहापत्तेश्च । मैवम् । यतो वेदाहुतीनां पश्चादेव समिदाधानम् ततश्च स्नानमिति श्रूयते । स यामुपयन्त्समिधमादधाति सा प्रायणीया याꣳ स्नास्यन्त्सोदयनीयेति । तस्मात्समिदाधानस्नानयोरव्यवहितकालत्वोपपादनाद्वेदाहुतीनां च स्नानाङ्गत्वातिदेशाच्च समिदाधानात्पूर्वं वेदाहुतिहोम इत्युक्तम् । स्नानं चाष्टभिरुदकुम्भैः क्रमेण । परिश्रितस्य वस्त्रादिना वेष्टितसमावर्तनस्थानस्थितस्याग्नेरुत्तरपार्श्वे स्थापितानामष्टानामुदकुम्भानां दक्षिणोत्तरायतानां पुरस्तात्पूर्वस्यां दिशि आस्तीर्णेषु कुशेषु ब्रह्मचारी स्थित्वा ऊर्ध्वीभूय येऽप्स्वन्तरग्नय इति मन्त्रेण प्रथमादुदकुम्भादपो गृहीत्वा तेन मामभिषिञ्चामीति मन्त्रेणात्मानमभिषिञ्चति । मन्त्रार्थः । येऽग्नयो गोह्यादयोऽप्सु अन्तर्मध्ये प्रविष्टाः स्थिताः इन्द्रियहान्ता अष्टौ तान् अमेध्यत्वादमङ्गल्यत्वादेताभ्योऽद्भ्यः सकाशात् अग्नीन् विजहामि पृथक्करोमि । यश्च रोचनोऽग्निर्मेध्यत्वान्मङ्गल्यत्वात्प्रीतिकारित्वाच्च तमिहाप्सु विषये गृह्णामि स्वीकरोमि । यतः अद्भ्योऽग्निरुत्पद्यते संत्रियते आच्छाद्यत इति गोह्यः । उपगोह्यः अङ्गतापकः । मयूषो जन्तुहिंसकः । मनस उत्साहं हन्तीति मनोहाः । अस्खलः प्रध्वंसी अजीर्णकृत् । विविधतया रुजति पीडयतीति विरुजः । तनूं शरीरं दूषयति विकृतिं नयति इति तनूदूषुः इन्द्रियाणि हन्तीति इन्द्रियहाः । अभिषेकमन्त्रार्थः । तेनोदकेन मां इममात्मानमभिषिञ्चामि । किमर्थं? श्रियै संपत्त्यर्थं यशसे कीर्त्यै ब्रह्मणे ब्रह्मवर्चसाय यागाध्यापनोत्कृष्टतेजसे 'येन…तरैः' अष्टाभ्य उदकुम्भेभ्योऽपां ग्रहणे एक एव मन्त्रो ये अप्स्वन्तरग्नयः इति । अभिषेचने तु भिद्यते । तद्यथा । येन श्रियमिति द्वितीयम् आपो हिष्ठेति तृतीयं यो वः शिवतम इति चतुर्थं, तस्मा अरङ्गमिति पञ्चमं, ततस्तूष्णीं त्रिभिरितरैरुदकुम्भैरभिषेकः । मन्त्रार्थः—हे अश्विनौ येन जलप्रभावेण भवन्तौ सुराणां श्रियं संपदं शोभां वा अकृणुतां कृतवन्तौ । येन च सुराणाममृतमवमृशतां प्राप्तवन्तौ । अटोऽदर्शनं छान्दसम् । येन वलेनाक्षौ उपमन्योरक्षिणी अभ्यषिञ्चताममिषिक्तवन्तौ । वां युवयोर्यदेवंभूतं यशस्तदेतज्जलाभिषेकेण ममाप्यस्त्विति शेषः । 'उदु…मयेति' तत उदुत्तममिति मन्त्रेण मेखलां रशनामुन्मुच्य ऊर्ध्वं शिरोमार्गेण निःसार्य तां च भूमौ निक्षिप्य वासोऽन्यत्परिधाय वस्त्रान्तरं परिहितं कृत्वा उद्यन्भ्राजभृष्णुरितिमन्त्रेण सूर्यमुपतिष्ठते । मेखलानिधानोत्तरं दण्डाजिनयोर्निधानम् । तूष्णीमिति जयरामकारिकाकारौ । मन्त्रार्थः—हे सूर्य यतो भवान् प्रातःसवने यावभिर्गमनशीलैर्ऋष्यादिसप्तकगणैः सेवितोऽस्थात् तिष्ठति यथेन्द्रो मरुद्भिरस्थात् तिष्ठति तद्वत् । किंभूतः उद्यन् उद्गच्छन् भ्राजभृष्णुः स्वप्रभयाऽन्यतेजउद्भासकः । आविदन् सर्वं शुभाशुभं जानन् । किंच यथाच त्वं प्रातःसवने दशसनिः दशसंख्यातानां गवादीनां सनिर्दाता । षणु दाने । अतो मामपि दशसनिं दशगुणदक्षिणादिदातारं कुरु । मा मां विदन् वेदयन् ज्ञापयन् गमय प्रापय प्रतिष्ठामिति शेषः । एवमुत्तरत्रापि व्याख्येयम् । 'दधि…चेति' ततो दधितिलयोरन्यतरं प्राशयित्वा जटाश्च लोमानि च नखानि च जटालोमनखानि तानि संहृत्यापनीय वापयित्वा । संहृत्येत्यत्र णिचो लोपश्छान्दसः स्वयं संहर्तुमशक्यत्वात् । औदुम्बरेण दन्तान्धावेत औदुम्बरेण काष्ठेन दन्तान् शोधयेत् अन्नाद्यायेति मन्त्रेण । हे दन्ताः यूयं अन्नाद्याय अन्नादनाय व्यूहध्वं निर्मला भवत । यतोऽयं राजा सोमश्चन्द्रः काष्ठरूपेणागमत् आगतः । अतः स एव सोमो मे मम मुखं प्रमार्क्ष्यते शोधयिष्यति । केन यशसा सत्कीर्त्या भगेन भाग्येन च । दन्तधावनस्य नित्यकाम्यत्वादुभयफलसंबन्ध इति मुरारिः । 'उत्सा…येति'

उत्साद्य अङ्गोद्वर्तनेन मलमपसार्य पुनः स्नात्वा मलापकर्षणस्नानोत्तरं पुनः स्नानं कृत्वाऽनुलेपनं चन्दनादि नासिकयोर्मुखस्य चोपगृह्णीते आदत्ते प्राणापानौ मे इति मन्त्रेण । मुखनासिके चानुलिम्पतीति हरिहरः । पाण्योरवनेजनं निषिच्येति वक्ष्यमाणत्वादत्र पाणिभ्यामनुलेपनग्रहणम् । मन्त्रार्थः। हे उपलेपनाधिदेवते मे मम प्राणापानौ वायू तर्पय प्रीणय । तथा मे चक्षुरिन्द्रियम् । तथा मे श्रोत्रं श्रवणेन्द्रियं च तर्पय ॥ ' पित''यासमिति ' प्राचीनावीती दक्षिणाभिमुखो भूत्वा पितरः शुन्धध्वमित्येतावता मन्त्रेण पाण्योरवनेजनं हस्तयोः प्रक्षालनोदकं दक्षिणानिषिच्य दक्षिणस्यां दिशि निषिच्य प्रक्षिप्य यज्ञोपवीती भूत्वा पितृकर्मत्वादुदकं स्पृष्ट्वा चन्दनेनात्मानमनुलिप्य सुचक्षा अहमिति मन्त्रं जपेत् । अत्र दक्षिणापदं लुप्तसप्तम्यन्तम् । मन्त्रार्थः—हे सवितः अहमक्षीभ्यां नेत्राभ्यां कृत्वा सुचक्षाः सुदर्शनो भूयासं भवेयं तथा मुखेन सुवर्चाः सुतेजाः भूयासमिति पूर्वत्र संबन्धः। तथा कर्णाभ्यां सुश्रुत् सुश्रवणो भूयासम् । ' अह''थिष्य इति ' अहतं नवीनं सदशं वासः वसनम् अथवाऽमौत्रेण अरजकेन धौतं वास आच्छादयीत परिधास्या इति मन्त्रेण । मन्त्रार्थः—हे वासोदेवते परिधास्यै अनेकशुभवस्त्रपरिधानाय तथा यशोधास्यै स्तुत्यै दीर्घायुत्वाय दीर्घजीवनाय च इदं वासः संव्ययिष्ये परिधास्ये । किम्भूतः । वासोदेवतानुग्रहेण जरदष्टिरस्मि । वृद्धत्वव्याप्यायुर्भवामि । पुरूचीः पुम्भिर्बहुभिः पुत्रधनादिभिश्च संयोगोऽस्ति यस्य सः । उच समवाये । किम्भूतं वासः रायस्पोषम् धनादिपोषणं पुष्टिकरम् । किंच एतत्संबन्धेनाहं शतं शरदो वर्षाणि जीवामि । ' अथो'''तामिति ' अथ परिधानानन्तरमाचम्य यशसामेति मन्त्रेण अहतमेव वास उत्तरीयमाच्छादयीतेति संबन्धः । मन्त्रार्थः—हे वासोदेवते द्यावापृथिवी द्यावाभूमी यशसा युक्तौ मा मां अविन्दत् विन्दतां प्राप्नुतामिति यावत् । विदॢ लाभे धातुः । विभक्तिवचनव्यत्ययेनान्वयः । तथा इन्द्राबृहस्पती अपि यशसा युक्तौ मा अविन्दत् तथा भगः सूर्योऽपि यशसा अविन्दत् । तश्चैतैः संपादितं यशो मा मां प्रतिपद्यतां मयि सर्वदा तिष्ठत्वित्यर्थः । ' एकं'''यीत ' चेद्यदि एकं वासो भवति द्वितीयं न भवति तदा पूर्वस्य परिधानीयस्यैव वाससः उत्तरवर्गेण उत्तरभागेन प्रच्छादयीत उत्तरीयं कुर्यात् । तत्रापि यशसामेति मन्त्रो भवति क्रियान्तरत्वात् । अत्रैवम् । पूर्वं वस्त्रार्द्धं समन्त्रकं परिधाय द्विराचम्य उत्तरार्द्धं गृहीत्वा उत्तरीयं मन्त्रं पठित्वोत्तरीयं कृत्वा पुनर्द्विराचामेत् । ' सुम'''चेति ' सुमनसः पुष्पाणि प्रतीत्युपसर्गसामर्थ्यात् गुरुणा समर्पिताः सुमनसः प्रतिगृह्णाति या आहरदिति मन्त्रेण । याः सुमनसः पुष्पाणि जमदग्निः प्रजापतिः श्रद्धाद्यर्थमाहरत् आददौ । ताः सुमनसो यशसा कीर्त्या भगेनैश्वर्येण च सहाहं प्रतिगृह्णामि श्रद्धाद्यर्थम् । तत्र श्रद्धा धर्मादरः । मेधा धारणाशक्तिः । कामोऽभिलाषपूर्तिः । इन्द्रियं तत्पाटवम् । ' अथा'''मयीति ' ताः प्रतिगृह्य स्वशिरसि बध्नाति यद्यशोऽप्सरसामिति मन्त्रेण । मन्त्रार्थः—हे सुमनसः इन्द्रो देवः अप्सरसामुर्वश्यादीनां कुसुमावबन्धेन यद्यशः सर्वजनप्रियत्वं चकार कृतवान् तेन यशसा संग्रथिताः युष्मान् आबध्नामि चूडायाम् । किंभूतं यशः विपुलं विशालम् । एषु संततं दीर्घं तद्यशो मयि विषये तिष्ठत्वित्यर्थः । ' उष्णी'''सा इति ' उष्णीषेण शिरोवेष्टनवस्त्रेण शिरो वेष्टयते । युवा सुवासा इति मन्त्रेण । व्याख्यातश्चायमुपनयने । ' अलं'''ष्टकौ ' कर्णवेष्टकौ कुण्डले दक्षिणसव्यकर्णयोरामुञ्चति । अलंकरणमसीति मन्त्रावृत्त्या । मन्त्रार्थः—हे कुण्डलदेवते त्वमलंकरणमलंकारशोभाऽसि । अतस्त्वयाऽलंकृतस्य मम भूयो बहुवारमलंकरणं भूयात् अस्तु । ' वृत्र'''क्षिणी ' वृत्रस्येत्यादिचक्षुर्मेदेहीत्यन्तेन मन्त्रेण कज्जलेन अक्षिणी अङ्क्ते संस्करोति । सौवीराञ्जनेनेति हरिहरः। अत्र च सव्यं नेत्रमङ्क्त्वा ततो दक्षिणाञ्जनं मन्त्रावृत्त्या । तथाच दीक्षाप्रकरणे लिङ्गम् । सव्यं वा अग्रे मानुष इति । कारिकायाम्—वृत्रस्येत्यक्षिणी अङ्क्तेऽभ्यञ्जनेनाभिनासिकम् । सव्यं प्रथम-

मित्येव श्रूयते बह्वृचश्रुतौ। हरिहरेण दक्षिणाञ्जनं पूर्वमुक्तं तदाशयं न विद्मः। 'रोचि···क्षते' आत्मानं सर्वं देहमादर्शे दर्पणे प्रेक्षते पश्यति रोचिष्णुरसीत्येतावता मन्त्रेण। मन्त्रार्थः। रोचिष्णुः प्रकाशकः। 'छत्रं···ह्येति' उपसर्गसामर्थ्याद्गुरुणा दत्तं छत्रमातपत्रं वृहस्पतेश्छदिरसीति मन्त्रेण प्रतिगृह्णाति। मन्त्रार्थः। हे छत्र त्वं वृहस्पतेः पितामहस्य छदिर्घर्मादिनिवर्तकोऽसि प्रथमम् अतः पाप्मनो निषिद्धाचरणान्माम् अन्तर्द्धेहि अन्तर्हितं कुरु। तेजसश्च सकाशान्माऽन्तर्द्धेहि मा व्यवहितं कुरु तद्युक्तं कुर्वित्यर्थः। 'प्रति···ञ्चते' प्रतिष्ठे स्थ इति मन्त्रेण उपानहौ पादत्राणे पादयोः प्रतिमुञ्चते परिधत्ते युगपत् शक्यत्वात् द्विवचनान्तत्वाच्च। मन्त्रार्थः—हे उपानहौ देवते युवां प्रतिष्ठे स्थितिहेतू स्थः भवथः। अतो विश्वतः सर्वस्मात्परिभवात् मा मां पातं रक्षतम्। 'विश्वा···दत्ते' विश्वाभ्य इति मन्त्रेण वैणवं वंशमयं दण्डं यष्टिमादत्ते। अत्राभिषेकादिदण्डधारणान्तं कर्म स्नानकर्तुर्न त्वाचार्यस्य। मन्त्रार्थः—हे दण्ड विश्वाभ्यः सर्वाभ्यः नाष्ट्राभ्यो राक्षसादिभ्यः सर्वावस्थासु मा मां परिपाहि सर्वभावेन रक्ष। 'दन्त···न्मन्त्रः' दन्तप्रक्षालनमादौ येषां पुष्पादीनां तानि दन्तप्रक्षालनादीनि तत्साधनानि प्राप्य नित्यमपि नित्यमेव मन्त्रो भवति। अपि एवार्थे। वाससी च छत्रं च उपानहौ च वासश्छत्रोपानहः चकाराद्दण्डोऽपि। एतानि वाससादीनि चेद्यदि नवीनानि ध्रियन्ते तदैव मन्त्रो भवति न सर्वदा॥ ॥ इति षष्ठी कण्डिका॥ ॥ ॥ ॥

अथ पदार्थक्रमः। सुरेश्वरः—भौमभानुजयोर्वारे नक्षत्रे च व्रतोदिते। ताराचन्द्रविशुद्धौ च स्यात्समावर्तनक्रियेति। एतच्च ब्रह्मचारिव्रतलोपे प्रायश्चित्तं कृत्वा कार्यम्। तदाह बौधायनः—शौचसन्ध्यादर्भभिक्षाऽग्निकार्यराहित्यकौपीनोपवीतमेखलादण्डाजिनाधारणदिवास्वापच्छत्रपादुकास्रग्विधारणोद्वर्तनानुलेपनाञ्जनद्यूतनृत्यगीतवाद्याद्यभिरतो ब्रह्मचारी कृच्छ्रत्रयं चरेदिति। ब्रह्मचारी गुरुमर्थदानेन संपूज्य तेनानुज्ञातो ज्योतिश्शास्त्रोक्ते शुभे काले आचार्यगृहे समावर्तनं नाम कर्म कुर्यात्। ब्रह्मचारी कृतनित्यक्रियः कृतप्रातरग्निकार्यश्च। तत आचार्यः प्राणानायम्य देशकालौ स्मृत्वा अस्य ब्रह्मचारिणो गृहस्थाद्याश्रमान्तरप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं समावर्तनाख्यं कर्माहं करिष्ये इति संकल्प्य तदङ्गभूतं निर्विघ्नार्थं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं चाहं करिष्ये। श्राद्धादि समाप्य। तत आचार्यम् अहं स्नास्ये इत्युक्ते स्नाहीति प्रत्यनुज्ञा गुरोः। ततः पादोपसंग्रहणं गुरोः। ततः परिश्रिते पञ्च भूसंस्कारान्कृत्वा लौकिकाग्नेः स्थापनम्। वैकल्पिकावधारणे विशेषः। दधिप्राशनममौञ्ज्यौतवस्त्रम्। ततो ब्रह्मवरणाद्याज्यभागान्ते विशेषः—उपकल्पनीयेषु समिन्धनकाष्ठानि, समिधः, पर्युक्षणार्थमुदकं, हरितकुशाः, अष्टावुदकुम्भाः, औदुम्बरं द्वादशाङ्गुलं दन्तकाष्ठं ब्राह्मणस्य, दशाङ्गुलं राजन्यस्य, अष्टाङ्गुलं वैश्यस्य, दधि, नापितः, स्नानार्थमुदकमुद्वर्तनद्रव्यं चन्दनमहते वाससी। प्रयोगरत्नमते—यज्ञोपवीते, पुष्पाणि, उष्णीषं, कर्णालंकारौ, अञ्जनम्, आदर्शः, नूतनं छत्रम्, उपानहौ, वैणवो दण्डः। ततः पवित्रकरणाद्याज्यभागान्तं कुर्यात्।१ अन्तरिक्षाय स्वाहा। २ वायवे स्वाहा। ३ ब्रह्मणे स्वाहा। ४ छन्दोभ्यः स्वाहा। ५ प्रजापतये स्वाहा। ६ देवेभ्यः स्वाहाः। ७ ऋषिभ्यः स्वाहा। ८ श्रद्धायै स्वाहा। ९ मेधायै स्वाहा। १० सदसस्पतये स्वाहा। ११ अनुमतये स्वाहा। लिङ्गोक्तास्त्यागाः। यदि ऋग्वेदमधीत्य स्नाति तदा १ पृथिव्यै स्वाहा २ अग्नये स्वाहेत्याहुतिद्वयं हुत्वा ब्रह्मणे छन्दोभ्य इत्यारभ्यानुमत्यन्ता नवाहुतीर्जुहोति। एवं सामवेदे दिवे सूर्यायेत्याहुतिद्वयं हुत्वा ब्रह्मणे इत्याद्या नवाहुतीर्जुहोति। एवमथर्ववेदेऽपि दिग्भ्यश्चन्द्रमस इत्याहुतिद्वयं हुत्वा ब्रह्मणे छन्दोभ्य इत्याद्या जुहोति। यदि वेदचतुष्टयमधीत्य स्नानं करोति तदा आज्यभागानन्तरं प्रतिवेदं वेदाहुतिद्वयं हुत्वा ब्रह्मणे छन्दोभ्य इत्याज्याहुतीः पुनः पुनर्जुहोति। ततः प्रजापतय इत्यारभ्यानुमत्यन्ताः सप्ताहुतीस्तन्त्रेण जुहोति। एवं वेदद्वयत्रयाध्ययनेऽपि

योज्यम्'। ततो भूराद्या नवाहुतयः । ततः स्विष्टकृद्धोमः । ततः प्राशनादिप्रणीताविमोकान्तम् । ततो ब्रह्मचारी उपसंग्रहणपूर्वकं गुरुं नमस्कृत्य परिसमूहनादि न्याय्युपकरणान्तं समिदाधानं तस्मिन्नेवाग्नौ कुर्यात् । तत आचार्यपुरुषैः परिश्रितस्योत्तरभागे स्थापितानां दक्षिणोत्तरायतानामष्टानाममलजलपूर्णानामुदकुम्भानां पूर्वभागे आस्तृतेषु प्रागग्रेषु कुशेषु उदङ्मुखः स्थित्वा येऽप्स्वन्तरिति मन्त्रेण प्रथमकलशादुदकं गृहीत्वा तेनोदकेन स्वकीयशिरसोऽभिषेकस्तेन मामिति मन्त्रेण । एवमेव द्वितीयादिभ्य उदकुम्भेभ्यो येऽप्स्वन्तरित्यनेनैवैकैकस्माज्जलमादाय वक्ष्यमाणैर्मन्त्रैरभिषेकः । येन श्रियमिति द्वितीयः । आपोहिष्ठेति तृतीयः । यो व इति चतुर्थः । तस्मा इति पञ्चमः । ततस्तूष्णीं त्रिवारमभिषेकः । तत उदुत्तममिति मेखलां शिरोमार्गेण निस्सार्य भूमौ प्रक्षेपः । ततः कृष्णाजिनदण्डयोस्त्यागः । वासोऽन्यत्परिधायादित्योपस्थानमुद्यन्भ्राजभृष्णुरिति । ततो दधिप्राशनं तिलानां वा । जटालोमनखानां निकृन्तनं स्नानमौदुम्बरकाष्ठेन दन्तधावनमन्नाद्यायेति । ततः सुगन्धिद्रव्येणोद्वर्तनम् । स्नानम् । चन्दनाद्यनुलेपनं गृहीत्वा मुखनासिकयोरुपग्रहणं प्राणापानाविति । ततोऽपसव्येन दक्षिणामुखेन पाण्योरवनेजनजलस्य दक्षिणस्यां दिशि निषेकः पितरः शुन्धध्वमिति । ततः सव्येनोदकालम्भः । ततश्चन्दनेनात्मानमनुलिप्य सुचक्षा अहमिति जपः । अहतवाससः परिधानं परिधास्या इति । अरजकधौतस्य वा । द्विराचमनम् । धारयेद्वैणवीं यष्टिं सोदकं च कमण्डलुम् । यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले'। इति मनूक्तत्वाद्यज्ञोपवीतद्वयधारणमिति हरिहरः प्रयोगरत्नकारश्च । तत उत्तरीयवाससो धारणं यशसामेति । एकं चेत्पूर्वस्यैवोत्तरभागेनोत्तरीयधारणम् । या आहरज्जमदग्निरिति सुमनसः प्रतिग्रहः । ततः शिरसि पुष्पबन्धनं यद्यशोऽप्सरसेति । उष्णीषेण शिरोवेष्टनं युवा सुवासा इति । अलंकरणमसीति कुण्डलधारणम् । मन्त्रावृत्त्या दक्षिणकर्णे वामकर्णे च । वृत्रस्येत्यक्षिणी अङ्क्ते । प्रथमं वामं ततो दक्षिणमनेनैव मन्त्रेण । रोचिष्णुरसीत्यनेनात्मन आदर्शे प्रेक्षणम् । बृहस्पतेरिति छत्रप्रतिग्रहणम् । प्रतिष्ठे स्थ इत्युपानहौ प्रतिमुञ्चते पादयोर्युगपत् । ततो विश्वाभ्य इति दण्डादानम् । अभिषेकादि दण्डादानान्तं स्नानकर्ता करोति नाचार्यः । समावर्तनोत्तरं पूर्वमृतानां त्रिरात्रमाशौचं कार्यम् । आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात् । समाप्ते तूदकं दत्वा त्रिरात्रमशुचिर्भवेदित्युक्तेः । आदिष्टी ब्रह्मचारीति विज्ञानेश्वरः । ब्रह्मचर्ये यदि कश्चिन्न मृतस्तदा त्रिरात्रमध्ये विवाहः कार्योऽन्यथा नेति सिध्यति । जनने तु सत्यपि न त्रिरात्रम् । तत्रातिक्रान्ताशौचाभावात् । उदकं दत्त्वेति वचनाच्चेति दिक् । ततो मधुपर्कः । इति समावर्तने पदार्थक्रमः ॥ अत्र गर्गमते होमो नास्ति अन्यत्तुल्यम् ॥ * ॥ ६ ॥

( विश्व० )—इदानीं क्रमप्राप्तं समावर्तनमाह 'वेदं...यात्' । पक्षान्तरमाह 'ब्रह्म...शकं' ब्रह्मचर्यपदमाग्नेयादिव्रतपरं वेदं व्रतानि वेत्युक्तेः । कीदृशं तदत आह 'अष्टाचत्वारिंशकमिति' अष्टाचत्वारिंशद्वर्षावच्छिन्नमित्यर्थः । अत्रापि स्नायादित्यनुषङ्गः । वेदव्रतयोः संकुचिताध्ययनाचरणपक्षमतमाह 'द्वा...के' द्वादशवर्षावच्छिन्नं वेदाध्ययनं व्रतानुष्ठानं चेत्यर्थः । एतन्मते एकमेव वेदमधीत्य स्नायादित्यवधेयम् । कथं स्नायादत आह 'गुरुणानुज्ञातः' आज्ञाप्रार्थनं च गुरवे वरदानानन्तरं वरं दत्त्वा स्नायीतेत्युक्तेः । एतच्च स्नानाधिकारिविशेषणं सति गुरौ । वेदं समाप्येति प्रागुक्तं स च वेदपदवाच्यः क इत्यत आह 'विधि...वेदः' यजेतेत्यादिविधायको विधिः, विधेयाः विधिविनियोज्याः मन्त्राः, तर्को न्यायमीमांसे, अर्थवाद इतिकेचित्, चकारान्नामधेयांशसंग्रहः । लक्ष्यमाह—वेद इति । यद्वा गुर्वनुज्ञाकारमाह विधिर्विधेयस्तर्कश्च वेद इति । विधीयत इति विधिर्योगेन यजेतेत्यादिविधायकवाक्यार्थ इति यावत्स विधेयः कृतिसाध्यक्रियाविषयत्वं लंभनीय इत्यर्थः । तर्कश्चेत्यत्र विधेय इत्यर्थानुकर्षणार्थश्चकारः । तर्कस्य च प्रमाणसाचिव्येनैव विधायकत्वाद्विध्यर्थविरोधे तर्क-

सहकृतविध्यर्थस्य विधेयत्वमित्यर्थः । यथा समित्समिध्यमानवह्निप्रैषे शब्दार्थाध्याहारसंदेहे वरणप्रागभावावच्छिन्नसमये यदि पदार्थगोचरपदसंकेतः स्यात्तदा पदाध्याहारः स्यात्स च नास्तीत्यतो न पदाध्याहार इति तर्कस्याहार्यादर्थाध्याहार इत्यर्थः । नन्वेवं बार्हस्पत्यसूत्रे क्षणभङ्गाद्यर्थसमर्पकतत्साहाय्यादप्यर्थनिर्णयः स्यादत आह वेद इति । वेदपदसमभिव्याहाराद्वेदसंबन्धी तर्को लभ्यते तथा च विध्यर्थविरोधे वैदिकतर्कसहकृतवेदादर्थनिर्णय इत्यर्थः । मन्त्रब्राह्मणात्मकं वेदं पाठतोऽर्थतश्च समाप्य स्नायादित्युक्तम् । इदानीं शिक्षादिषडङ्गोपेतं वेदमधीत्य वेदार्थं च ज्ञात्वा स्नायादिति मतमुपन्यस्यति 'षडङ्गमेके'। ननु श्रुतिस्मृत्यर्थानुष्ठानकामिकार्यं स्नानं कल्पसूत्राध्ययनात्सिध्यतीति क्रत्वनुष्ठानकामी कल्पमात्रमधीत्य स्नास्यतीत्याशङ्क्य निषेधति 'न कल्पमात्रे' 'कामं ···कस्य' तु पुनः याज्ञिकस्य कामं तदापि कल्पमात्रे अधीते न स्नानाधिकार इत्यर्थः । कथं स्नायादित्यत आह 'उप···गुरुं'। वैश्वदेवपूर्वमाभ्युदयिकं श्राद्धं समाप्याऽभिलषितं वरं गुरवे दत्त्वोपसंगृह्य उपसंग्रहणं तु दक्षिणोत्तरकराभ्यां गुरोर्दक्षिणोत्तरौ चरणौ स्पृष्ट्वा शिरसा चरणयोः स्पर्शनं, कर्माकाङ्क्षायामुक्तं गुरुमिति । ततः स्नास्यामीति गुरोरनुज्ञाप्रार्थनम् गुरुणाऽनुज्ञात इत्युक्तेः स्नाहीति गुरोरनुज्ञादानम् 'समि···धाय' ततः पाणिनाग्निं परिसमूहतीत्यारभ्य मेधामश्विनौ देवावाधत्तां पुष्करस्रजावित्यन्तं समग्रकण्डिकोक्तम् अग्निपरिचरणम् । एतच्च समावर्तनमुपक्रम्य विधीयमानत्वात्समावर्तनाङ्गं तेन ब्रह्मचर्यकालीनाग्निपरिचर्यातः पृथक् समिधामाधानस्य प्राधान्यं द्योतयितुं समिधोऽभ्याधायेत्युक्तम् । अनेन च वेदाध्ययनव्रतानुष्ठानोपेता ब्रह्मचर्यपरिसमाप्तिः । या॰स्नास्यन्त्सोदयनीयेति श्रुतेः 'परि···सायेति' अग्नेः कटवस्त्रादिना वेष्टनेनाऽप्सु दीक्षावत्परिश्रितकरणम् । तस्योत्तरतः प्रागास्तृतेषु कुशेषु स्थित्वा धात्वर्थस्य गतिनिवृत्त्यर्थस्य गतिनिवृत्त्यर्थतया तिष्ठतः स्थितिर्लभ्यते । ऐन्द्र्याग्नेय्यादिषु ईशानीपर्यन्तं प्रादक्षिण्येन स्थापितानामष्टानामुदकुम्भानां मध्ये स्वापेक्षया पुरस्तात्प्राच्यां वर्तमानादेकस्मादुदकुम्भाद्येप्स्वन्तरग्नयः प्रविष्टेत्यारभ्य यो रोचनस्तमिह गृह्णामीत्यन्तेन मन्त्रेण । प्राक्पदशक्यस्य स संबन्धिकतया दिगन्तरस्थपदार्थनिरूप्यतया प्रागादीशानान्तासु दिक्षु प्रादक्षिण्येन कलशस्थापनं लभ्यते । नचैवं सत्येकपदव्येति व्यर्थतेति वाच्यं तस्य स्वरूपोपस्थापनतात्पर्यकत्वात् । अन्यथैकनिरूप्यानामनेकेषां प्रागादिव्यवहारानापादकतापत्तेरिति प्रतीमः । 'येन···यश इति' पुनर्येऽप्स्वन्तरग्न इत्याग्नेय्यां स्थिताद् द्वितीयादुदकुम्भादुदकं गृहीत्वा येन श्रियमकृणुतां यश इत्यन्तेन मन्त्रेण पूर्ववदात्मानं वटुरभिषिञ्चते । 'आपोहिष्ठेतिप्रत्यृचं त्रिभिः' ततः याम्यनैर्ऋत्यवारुणीदिक्स्थैस्त्रिभिः कलशैः कलशस्थजलैः आपोहिष्ठा योवस्तस्माअरङ्गमिति त्रिभिर्ऋग्भिर्येऽप्स्वन्तरग्नय इति जलमादायात्मानमभिषिञ्चते 'तूष्णीमितरैः' इतरैर्वायव्यां कौबेर्यामीशान्यां च स्थितैस्तत्रस्थजलैस्तूष्णीमभिषेकः । जलादानमभिषेकश्च तूष्णीमितरकलशस्थजलाद्भवतीत्यर्थः । 'उदु···ष्ठते' उन्मुच्य ऊर्ध्वं कण्ठदेशमानीय शिरोमार्गेण उदुत्तममिति मन्त्रेण मेखलां निःसार्य निधाय भूमौ स्थापयित्वा । अस्मिन्नवसरे दण्डाजिनयोर्निधानं तूष्णीम् । ततः आदित्यमुपतिष्ठते । अन्यवाससा कटिं संवेष्ट्य । उपस्थानमन्त्रानाह । 'उद्य···मयेति' 'दधि···वेत' ततः सूर्योपस्थानानन्तरं दधितिलयोरेकं प्राश्याचम्य । जटालोमनखानि च वापयित्वा स्मृतिशुद्धो भूत्वाऽऽचम्य । आयुर्बलं यशो वर्चः प्रजां पशुवसूनि च । ब्रह्म प्रज्ञां च मेधां च त्वं नो धेहि वनस्पते । इति औदुम्बरं दन्तधावनमादाय अन्नाद्यायेति मन्त्रेण दन्तान् शोधयेत् । दन्तधावनमन्त्रमाह 'अन्ना···चेति' पुनराचम्य 'उत्सा···येति' उत्साद्य घृतोपरक्तसुगन्धिना द्रव्येण शरीरमुद्वर्त्य पुनः भूयः स्नात्वा वारद्वयमाचम्य चन्दनादि पाषाणघृष्टमनुलेपनं नासिकयोर्मुखस्य च समीपे उपग्रहणं प्राणापानौ मे तर्पय श्रोत्रं मे तर्पयेत्यन्तेन । केचित्तु उपग्रहणं लेपनमाहुः । 'पित···समिति'

पाण्योः करयोरवनेजनमुदकं प्राचीनावीती दक्षिणामुखो भूत्वा दक्षिणस्यां दिशि निषिच्य तदेव निषिक्तं भूजलं स्वगात्रेऽनुलिप्य जपेत्किमत उक्तं सुचक्षा अहमक्षीभ्यामित्यारभ्य सुश्रुत्कर्णाभ्यां भूयासमित्यन्तमन्त्रं यज्ञोपवीती भूत्वा । 'अह...यिष्य इति' अहतं नवं सदशम् । अथवा धौतं मैत्रो रजकः तद्व्यतिरिक्तेन । आच्छादयीत । परिधास्या इत्यारभ्य संव्ययिष्य इत्यन्तेन मन्त्रेण । आचमनद्वयम् । 'अथो...तामिति' अन्तरीयपरिधानानन्तरं यशसामेति प्रतिपद्यतामित्यन्तेन मन्त्रेणाच्छादयीतेति प्राक्सूत्रादनुवर्तनीयम् । तत आचमनम् । 'एकं...यीत' उत्तरीयाभावेऽयं विधिः । आचमनम् । 'सुम...चेति' सुमनसः पुष्पाणि । प्रतिग्रहविधानादन्यस्य दातृता लभ्यते । या आहरज्जमदग्निरिति भगेन चेत्यन्तेन मन्त्रेण । 'अथा...यीति' अथ सुमनसां ग्रहणानन्तरं तानि स्वशिरसि बध्नाति यद्यशोप्सरसामिति मन्त्रेण । 'उष्णी...युवा सुवासा इति' पूर्वोक्तमन्त्रेणोष्णीषेण शिरो वेष्टनेन वस्त्रेण शिरः मूर्द्धानं वेष्टयते । 'अलं...षकौ' कर्णौ श्रोत्रे वेष्टयन्ते याभ्यां तौ सौवर्णौ अलंकरणमसीति मन्त्रेण प्रतिमुञ्चते कर्णयोः मन्त्रावृत्तिः । 'वृत्र...क्षिणी' वृत्रस्यासीति मन्त्रेण नेत्रे सौवीराञ्जनेन लौकिकेन वा कज्जलेन अङ्क्ते, मन्त्रावृत्त्या अञ्जयति दक्षिणोत्तरे । 'रोचि...क्षते' आत्मानं मुखप्रभृतिशरीरं दर्पणे रोचिष्णुरसीति पश्यति । 'छत्रं...हीति' छत्रप्रतिग्रहणं बृहस्पते इति । 'प्रति...चते' युगपत्परिधातुं शक्यत्वान्नावर्तते मन्त्रः । 'विश्वा...दत्ते' अस्मिन्नवसरे गृहीतदण्डे शंबलं बद्ध्वाव्रजेत् विवाहाद्यङ्गीकार्यगृहे समानीयते समाचारात् । 'दन्त...मपि' मन्त्रवद्भवन्तीति सूत्रशेषः । 'वास...मन्त्रः' सकृत्परिगृहीतेषु मन्त्राभावः । षष्ठी कण्डिका ॥

स्नातस्य यमान्वक्ष्यामः ॥ १ ॥ कामादितरः ॥ २ ॥ नृत्यगीतवादित्राणि न कुर्यान्न च गच्छेत् ॥ ३ ॥ कामं तु गीतं गायति वैव गीते वा रमत इति श्रुतेर्ह्यपरम् ॥ ४ ॥ क्षेमे नक्तं ग्रामान्तरं न गच्छेन्न च धावेत् ॥ ५ ॥ उदपानावेक्षणवृक्षारोहणफलप्रपतनसंधिसर्पणविवृतस्नानविषमलङ्घनशुक्तवदनसंध्यादित्यप्रेक्षणभैक्षणानि न कुर्यात् न ह वै स्नात्वा भिक्षेतापह वै स्नात्वा भिक्षां जयतीति श्रुतेः ॥ ६ ॥ वर्षत्यप्रावृतो व्रजेत् अयं मे वज्रः पाप्मानमपहनदिति ॥ ७ ॥ अप्स्वात्मानं नावेक्षेत ॥ ८ ॥ अजातलोम्नीं विपुꣳसीꣳ षण्ढं च नोपहसेत् ॥ ९ ॥ गर्भिणीं विजन्येति ब्रूयात् ॥ १० ॥ सकुलमिति नकुलम् ॥ ११ ॥ भगालमिति कपालम् ॥ १२ ॥ मणिधनुरितीन्द्रधनुः ॥ १३ ॥ गां धयन्तीं परस्मै नाचक्षीत ॥ १४ ॥ उर्वरायामनन्तर्हितायां भूमावुत्सर्पꣳस्तिष्ठन्न मूत्रपुरीषे कुर्यात् ॥ १५ ॥ स्वयं प्रशीर्णेन काष्ठेन गुदं प्रमृजीत ॥ १६ ॥ विकृतं वासो नाच्छादयीत ॥ १७ ॥ दृढव्रतो वधत्रः स्यात् सर्वत आत्मानं गोपायेत् सर्वेषां मित्रमिव ( शुक्रियमध्येष्यमाणः ) ॥ १८ ॥ ७ ॥ ॐ ॥

( कर्कः )—'स्नात···क्ष्यामः' प्रतिज्ञासूत्रम् । 'कामादितरः' इतरः शूद्रोऽभिधीयते स हि स्नातको न भवति । एवं च सति इच्छया शूद्रस्यापि यमेषु अधिकारो भवति । 'नृत्य···गच्छेत्' नृत्यादीनि क्रियमाणानि प्रति । 'कामं तु गीतं' कुर्यात् गच्छेच्च । कर्मण्यौपयिकत्वाद्गीतस्य । दृश्यते हि कचित्कर्मविशेषे गानम् । ब्राह्मणोऽन्यो गायति । राजन्योऽन्य इति न चाक्रियमाणं शक्यते गातुमिति । 'गाय···परं' वचनमस्ति । अपरग्रहणाच्च पूर्वं न्यायप्राप्तमभिहितम् । 'क्षेमे ···च्छेत्' अक्षेमे तु नक्तमपि गच्छेत् । 'नच धावेत' क्षेम एवेति वर्तते । 'उद···यात्' उदपान-शब्देन कूपोऽभिधीयते । संधिशब्देन कुद्वारम् । विवृतस्नानशब्देन नग्नस्नानमुच्यते । विषमलङ्घनं प्रसिद्धमेव । शुक्तवदनमश्लीलवदनम् । सन्ध्यादित्यप्रेक्षणं प्रसिद्धमेव । एतानि न कुर्यात् । भैक्षणप्र-तिषेधस्य वाक्यमुदाह्रियते । 'न ह···श्रुतेः' अत्र यो दृष्टार्थविषयः प्रतिषेधस्तत्र दृष्टार्थत्वादेवाक-रणे प्राप्ते प्रतिषेधविधानसामर्थ्याददृष्टार्थत्वमनुमीयते । 'वर्ष···हसेत्' । अजातानि लोमानि यस्याः सेयमजातलोम्नी तां विपुंसी या पुमांसं विकरोति कूर्चादिना । पण्ढः प्रसिद्ध एव । एतानि नोपहसेत् । उपहासशब्देनाभिगम उच्यते । न गच्छेदेतानि प्रति । 'गर्भि···यात्' न गर्भिणीमिति । 'सकु···क्षीत' धयन्तीमित्युक्ते धीयमानां नाचक्षीत । तस्या हि प्रतिषेधः स्मृत्यन्तरेऽपि । 'उर्व···र्यात्' उर्वरा सस्यवती भूमिः तस्यां मूत्रपुरीषे न कुर्यात् अनन्तर्हितायां च तृणादिना मूत्रपुरीषे न कुर्यात् । उत्सर्पंस्तिष्ठंश्च न कुर्यादिति वर्तते । 'स्वयं···यीत' विकृतं नील्यादिना न कषायप्रतिषेधः । कषायरक्तं तु प्रशस्यत एवेति । 'दृढ···स्यात्' यद्व्रतमङ्गीकृतं मयैतत्कर्तव्यमिति तत्र दृढव्रतः स्यान्न चञ्चलः 'सर्वेषां मित्रमिव' संव्यवहरेत् । मैत्रो हि ब्राह्मण उच्यते ॥ * ॥

( जयरामः )—'स्नात···क्ष्याम' इत्यधिकारसूत्रम् । तेषु स्नातकोऽधिक्रियते । कामादि-च्छातः । इतरः स्नानसंबन्धशून्यः शूद्रोऽपि । तानाह 'नृत्येति' काममिच्छया ब्राह्मणो गीतं कुर्याद् गच्छेच्च कर्मण्युपयोगाद्गीतस्य । तद्यथा । ब्राह्मणोऽन्यो गायति राजन्योऽन्य इति । गायति वैव गीते वा रमत इति ह्यपरं वचनमस्ति । अपरग्रहणात्पूर्वं न्यायप्राप्तमिति गम्यते । क्षेमे सति नक्तं रात्रौ । अक्षेमे पुनर्नक्तमपि गच्छेत् । नच धावेत् । क्षेम इति वर्तते । अक्षेमे तु धावेदपि । उद-पानशब्देन कूपोऽभिधीयते । वृक्षारोहणं प्रसिद्धम् । फलानां प्रपतनं त्रोटनम् । संधिः कुद्वारं तत्र सर्पणं गमनम् । विवृतस्नानं नग्नस्नानम् । विषमलङ्घनम् प्रसिद्धमेव शुक्तवदनमश्लीलभाषणम् । संध्यादित्यप्रेक्षणं प्रसिद्धमेव । भिक्षणं सिद्धान्नस्यैव । तस्य च विप्रत्वेनावश्यकत्वात् । तत्प्रतिषेधे श्रुतिमाह । न ह वै स्नात्वेति यतः स्नात्वा भिक्षाञ्जयति अपाकरोति । अप ह वैइति निपातसमुदायो निश्चयार्थः । अत्र यो दृष्टार्थविषयः प्रतिषेधस्तस्य दृष्टार्थत्वादेवाकरणे प्राप्ते प्रतिषेधसामर्थ्याददृष्टार्थ-ताऽप्यनुमीयते । अप्रावृतश्छत्रादिना वर्षति व्रजेदयमेवज्र इति मन्त्रं जपेत् । अस्यार्थः तत्र प्रजापति-र्जगती वज्रो वृष्टिजपे० । अयं रविरश्मिसंस्कृतो जलकणरूपो वज्रो मे मम पाप्मानम् अपहनत् अपहन्तु। अयं चातपवृष्टिविषय इत्येके । आत्मानं स्वम् । अजातलोम्नीं समयेऽप्यनुत्पन्नलोम्नीम् । विपुंसीं कूर्चा-दिना पुरुषाकृतिं स्त्रियम् । षण्ढं च प्रसिद्धमेव । एतानि नोपहसेन्नाभिगच्छेत् । उपहासशब्देनाभिगमन-मुच्यते । गर्भिणी गुर्वी विजन्येति ब्रूयान्न गर्भिणीमिति । एवमुत्तरत्रापि । गां धयन्ती स्वयमेव वत्सेन वा धीयमानाम् । जलादि पिबन्ती वा । उर्वरा सस्यवती भूमिस्तस्यां तथाऽनन्तरितायां तृणादिना । तथोत्सर्पन् तिष्ठंश्च मूत्रपुरीषे न कुर्यादिति सर्वत्र संबध्यते । मूत्रपुरीषसंनिधानाद्गुदस्यैव मार्जनम् । विकृतं च नील्यादिना । न तु कषायादिना । तत्तु प्रशस्यते । दृढं व्रतं संकल्पो यस्य स दृढव्रतः । तथा वधात् घातादात्मानं परं वा त्रायते स वधत्रः स्यात् । तथा सर्वेषां मित्रमिव विश्वासास्पदं च स्यात् । मैत्रो हि ब्राह्मण उच्यते । एते च निषेधा विवाहावधिकाः । अन्येषां पृथग्वक्ष्यमाणत्वात् ॥ ७ ॥

( हरिहरः )—' स्नात···क्ष्यामः ' स्नातस्य ब्रह्मचर्यात्समावृत्तस्य द्विजातेः यमान् व्रतानि वक्ष्यामः कथयिष्यामहे । ' कामादितरः ' कामात् इच्छया इतरः द्विजातेरन्यः शूद्र इति यावत् यमेषु अस्नातकोऽपि अधिक्रियते । ' नृत्य···च्छेत् ' नृत्यं लास्यादिभेदभिन्नं गीतं षड्जादिस्वरैर्ध्रुवादिरूपकविशेषैर्निबद्धम् । वादित्रं तन्त्र्यादिभेदेन चतुर्विधम् । नृत्यं च गीतं च वादित्रं च नृत्यगीतवादित्राणि तानि स्वयं न कुर्यान्न च गच्छेत् । नृत्यादीनि अन्यैरपि क्रियमाणानि न गच्छेत् द्रष्टुं श्रोतुम् । चकारः करोतेर्गच्छतिक्रियासमुच्चयार्थः । ' कामं···तेर्हि ' अत्र गीते प्रतिप्रसवमाह । तु पुनः काममिच्छया गीतं गानं स्वयं कुर्यात् परैः क्रियमाणं च गच्छेच्छ्रोतुम् । कुतः हि यस्मात् गायति स्वयं गानं करोति गीते वा अन्यैः क्रियमाणे गाने वा रमते रतिं प्राप्नोति इति श्रुतिर्वेदवचनम् । कः यः सर्वः कृत्स्नो मन्यते आत्मानं सुखिनं संपूर्णं मन्यते स स्वयं गायति गीतं च शृणोति । ' अपरम् ' अपरमपि गायेत गीतं च शृणुयादित्येतदर्थज्ञापकं वेदे लिङ्गमस्ति । यथाऽश्वमेधे श्रूयते दिवा ब्राह्मणो गायति नक्तं राजन्य इति । अनेन ब्राह्मणराजन्ययोः स्वयं गानेऽधिकारोऽस्तीति ज्ञायते । तथा तौ च अश्वमेधयाजिनं यजमानं राजन्यं श्रावयितुं गायतः तेन श्रवणेऽप्यधिकारो गम्यते । ' क्षेमे···च्छेत् ' क्षेमे सति आपदभावे सति नक्तं रात्रौ ग्रामान्तरं अन्यद्ग्रामं न गच्छेत् अक्षेमे तु गच्छेत् । ' न च धावेत् ' क्षेमे सतीत्यनुषज्यते नच धावेत् शीघ्रं न गच्छेत् । ' उद···येत् ' उदपानस्य कूपस्यावेक्षणमुपरि स्थित्वा अधोमुखीभूयावलोकनं वृक्षस्य आरोहणमुपरिगमनं, फलानामाम्रादीनां प्रपतनं त्रोटनं, संधौ संध्यासमये सर्पणमध्वगमनं, संधिना अपमार्गेण वा सर्पणम्, विवृतेन नग्नेन स्नानं, विषमस्य पर्वतगर्तादेर्लङ्घनमतिक्रमणं, शुक्तस्य अश्लीलस्य वदनं भाषणम्, अश्लीलं तु त्रिविधं लज्जाकरं दुःखकरममङ्गलसूचकं च । संध्यासु आदित्यस्य सूर्यमण्डलस्य रागतः प्रेक्षणं दर्शनमुपरक्तस्य वारिप्रतिबिम्बितस्य च । नोपरक्तं न वारिस्थमिति मनुस्मृतेः । नेक्षेतादित्यमुद्यन्तं नास्तं यान्तं कदाचन । नोपसृष्टं न वारिस्थं न मध्यं नभसो गतमिति स्मृतेः । भिक्षणं भिक्षाचर्या । एतानि उदपानावेक्षणादीनि भिक्षणान्तानि वर्जयेत् । ' न ह···श्रुतेः' भिक्षणप्रतिषेधे श्रुतिं प्रमाणत्वेनावतारयति स्नात्वा समावर्त्य न भिक्षेत यतः स्नात्वा भिक्षामपजयति अपाकरोति । हवै इति निपातसमुदायो निश्चयार्थ इति वेदवचनात् । ' वर्ष···दिति ' देवे वर्षति अप्रावृतः अनाच्छादितो व्रजेत् गच्छेत् अयं मे वज्र इत्यनेन मन्त्रेण । ' अप्स्वा···क्षेत ' अप्सु जले आत्मानं स्वमुखं नावेक्षेत न पश्येत् । 'अजा···सेत' समयेऽपि न जातानि लोमानि यस्याः सा अजातलोम्नी ताम् अजातलोम्नीं नोपहसेत् नच गच्छेत् । विपुंसी च पुरुषाकारां स्त्रियं कूर्चादिविकारेण नोपहसेदित्यनुवर्तते । पण्ढं नपुंसकं नोपहसेदित्यनुवर्तते । ' गर्भि···यात् ' गर्भिणीं अन्तर्वत्नी विजन्या इति नाम ब्रूयात् वदेत् । ' सकु···क्षीत ' सकुलमिति नकुलं ब्रूयात् । कपालं कर्परं भगालमिति ब्रूयात् । इन्द्रधनुः मणिधनुरिति ब्रूयात् । परस्य गां सुरभि धयन्तीं वत्सं पाययन्तीं परस्मै अन्यस्मै स्वामिने नाचक्षीत न कथयेत् । ' उर्व···र्यात् ' उर्वरायां सस्यवत्या भूमौ पृथिव्यां केवलायां तृणैरनन्तर्हितायां मूत्रपुरीषे मूत्रस्य पुरीषस्य वा उत्सर्गं न कुर्यात् । किंच तिष्ठन् ऊर्ध्वः न कुर्यात् । तथा उत्सर्पन् उत्प्लवमानः सन् न कुर्यात् । ' स्वयं···जीत ' स्वयमात्मनः प्रयत्नं विना प्रशीर्णेन स्वयं छिन्नेन पतितेन काष्ठेन दारुशकलेन अयज्ञीयेन प्रमृजीत प्रोञ्छेत् । पुरीषोत्सर्गसंनिधानात् गुदमित्यध्याहारः । ' विकृ···धीत ' विकृतं मञ्जिष्ठादिरागेण विकारमापादितं वासो वस्त्रं न परिदधीत । नील्यादिना रक्तं विकृतं निषिध्यते कषायरक्तं तु न निषिध्यते किंतु प्रशस्यत इति भाष्यकारः । ' दृढ···मिव ' दृढं स्थिरं व्रतं प्रारब्धं कर्म यस्य स दृढव्रतः स्यात् भवेत् । किंच वधात् घातात् त्रायते रक्षतीति वधत्रः स्यात् । किंच सर्वेषां स्वेषां

परेषां च मित्रमिव सखेव सुहृदिव हितकारी स्यादित्यर्थः । मैत्रो ब्राह्मण उच्यते इति स्मरणात् । अत्र यो दृष्टार्थविषयः प्रतिषेधः तत्र दृष्टार्थादेव निवृत्तिप्राप्तौ प्रतिषेधसामर्थ्याददृष्टमप्यनुमीयते । अत एव प्रायश्चित्तस्मरणम् । स्नातकव्रतलोपे तु एकरात्रमभोजनमिति स्मरणात् ॥ * ॥

गदाधरः—'स्नात···क्ष्यामः' स्नातस्य ब्रह्मचर्यात्समावृत्तस्य त्रैवर्णिकस्य यमान् नियमान् वक्ष्यामः । अधिकारसूत्रमेतत् । तेषु स्नातकोऽधिक्रियते । 'कामादितरः' कामादिच्छातः इतरः स्नानसंबन्धशून्यः शूद्रोऽभिधीयते । स हि स्नातको न भवति । एवं सतीच्छया शूद्रस्यापि यमेष्वधिकारो भवति । तानाह । 'नृत्य···च्छेत्' नृत्यं च गीतं च वादित्रं च नृत्यगीतवादित्राणि तानि स्वयं न कुर्यात् नच गच्छेत् नृत्यादीनि अन्यैः क्रियमाणानि द्रष्टुं श्रोतुं वा न व्रजेत् । 'कामं तु गीतम्' तु पुनः काममिच्छया गीतं गानं स्वयं कुर्यात् । अन्यैः क्रियमाणं श्रोतुं गच्छेच्च । कर्मण्यौपयिकत्वाद्गीतस्य । दृश्यते हि अश्वमेधे गानम् । ब्राह्मणोऽन्यो गायति राजन्योऽन्य इति । न चाक्रियमाणं शक्यते गातुमिति । 'गाय···रम्' अपरम् उपासंभरणकाण्डे वचनमस्ति—तस्माद्धैतद्यः सर्वः कृत्स्नो मन्यते गायति चैव गीते वा रमत इति । अपरग्रहणाच्च पूर्वं न्यायप्राप्तमभिहितम् । एवंच यत्रापि पुनर्वचनेन देवताग्रे नृत्यगीतादिकं विहितं तत्रापि ब्राह्मणादिभिः कार्यमेव । विहिते निषेधाप्रवृत्तेः । 'क्षेमे···च्छेत्' क्षेमे आपदभावे सति नक्तं रात्रौ ग्रामान्तरमन्यद्ग्रामं न गच्छेत् । अक्षेमे तु नक्तमपि गच्छेत् । 'नच धावेत्' क्षेम इत्यनुवर्तते । क्षेमे सति नच धावेत् शीघ्रं न गच्छेत् । 'उद···र्यात्' उदपानस्य कूपस्यावेक्षणमुपरिस्थित्वा अधोमुखीभूयावलोकनम् । आम्रादिवृक्षस्यारोहणमुपरि गमनम् । फलानामाम्रादीनां प्रपतनं त्रोटनम् । संधौ संध्यासमये सर्पणमध्वगमनम् । संधिः कुद्वारं सर्पगर्तादिलक्षणं वा तत्र सर्पणम् । विवृतेन नग्नेन स्नानम् । विषमस्य पर्वतगर्तादेर्लङ्घनमतिक्रमणम् । शुक्तवदनमश्लीलभाषणम् । संध्यादित्यप्रेक्षणं संध्यासु सूर्यावेक्षणम् । नेक्षेतादित्यमुद्यन्तं नास्तं यान्तं कदाचन । नोपसृष्टं न वारिस्थं न मध्यं नभसो गतमिति स्मृतेः । भिक्षणं सिद्धान्नस्यैव । उदपानावेक्षणादीनि वर्जयेत् । तत्र भैक्षणप्रतिषेधे प्रत्यक्षमेव वचनमस्तीत्याह 'न ह···श्रुतेः' स्नात्वा समावर्त्य न भिक्षेत । यतः स्नात्वा भिक्षामपजयति अपाकरोति । हवै इति निपातसमुदायो निश्चयार्थः । अत्र यो दृष्टार्थविषयः प्रतिषेधस्तत्र दृष्टार्थत्वादेवाकरणे प्राप्ते प्रतिषेधविधानसामर्थ्याददृष्टार्थताऽप्यनुमीयते । 'वर्ष···दिति' पर्जन्ये वर्षति अप्रावृत अनाच्छादित एव व्रजेत् गच्छेत् अयं मे वज्र इति मन्त्रेण । मन्त्रार्थः—जलकणरूपो वज्रो मम पाप्मानमपहनत् अपहन्तु । 'अप्स्वा···क्षेत' अप्सु जले आत्मानं स्वशरीरं न पश्येत् । 'अजात···सेत्' समयेऽप्यनुत्पन्नलोम्नीं अजातानि लोमानि यस्याः सेयमजातलोम्नी ताम् । विपुंसीं कूर्चादिना पुरुषाकृतिं स्त्रियम् । पण्ढः प्रसिद्ध एव । एतानि नोपहसेत् नाभिगच्छेत् उपहासशब्देनाभिगमनमुच्यते । 'गर्भि···क्षीत' गर्भिणी विजन्येति ब्रूयात् । गर्भिणी गुर्वी विजन्येति पर्यायशब्देन वदेत् न गर्भिणीमिति । उत्तरत्राप्येवमेव योज्यम् । सकुलमिति नकुलम् । सकुलमिति नकुलं ब्रूयात् । भगालमिति कपालम् । भगालमिति कपालं कर्परं ब्रूयात् । मणिधनुरितीन्द्रधनुः । मणिधनुरिति इन्द्रधनुर्ब्रूयात् । गां धयन्तीं परस्मै नाचक्षीत । परस्य गां सुरभिं धयन्तीं वत्सं पाययन्तीं अन्यस्मै परस्मै स्वामिने वा नाचक्षीत न कथयेत् । 'उर्व···र्यात्' उर्वरायां सस्यवत्यां भूमौ तृणैरनन्तर्हितायां केवलायां च मूत्रस्य पुरीषस्य वा उत्सर्गं न कुर्यात् । किंच । तिष्ठन् ऊर्ध्वः सन् न कुर्यात् । तथोत्सर्पन् उत्प्लवमानस्सन्न कुर्यात् । 'स्वयं···जीत' आत्मनः प्रयत्नमन्तरेण स्वयमेव प्रशीर्णेन छिन्नेन दारुशकलेन गुदं प्रमृजीत प्रोञ्छेत् परिमार्जयेत् । ततः शौचं कुर्यात् । 'विकृ···यीत' विकृतं नीलयादिना विकारमापादितं वस्त्रं न परिदधीत । अत्र न कषायप्रतिषेधः । कषायरक्तं तु प्रश-

स्यत इति भाष्यकाराः। ' दृढ···स्यात् ' दृढं व्रतं संकल्पो यस्य स दृढव्रतः स्यात् भवेत्। तथा वधात् घातादात्मानं परं च त्रायते रक्षतीति वधत्रः स्यात्। 'सर्व···मिव ' सर्वेषां स्वेषां परेषां च मित्रमिव सखेव सर्वेषु सुहृदिव हितकारी भवेत् मैत्रो ब्राह्मण उच्यत इति स्मृतेः। इति सप्तमीकण्डिका ७

( विश्व० )—' स्नात···क्ष्यामः ' प्रतिज्ञासूत्रम्। ' कामादितरः ' कामात् इच्छात इतरः शुक्रियव्रतस्थो ब्रह्मचारी। केचित्तु इतरपदार्थं शूद्रमाहुः। ' नृत्त···परं ' अपरं श्रौतं वचनमस्ति। ब्राह्मणौ वीणागाथिनौ संवत्सरं गायतः, राज्यन्योऽन्य इत्यादि। ' क्षेमे···छेत् ' अक्षेमे तु गच्छेदिति। ' नच धावेत् ' क्षेम एवेत्यनुवर्तते। 'उद···यीत्' उदपानमुदकाधारः। अपरे कूपमाहुः। नचोदकाधारतायामप्स्वात्मानं नावेक्षेतेति पौनरुक्त्यापत्तिः निषेधभूयस्त्वप्रतिपत्त्यर्थत्वात्। अभ्यासे भूयांसमर्थं मन्यन्त इति न्यायादित्याहुः। प्रचयनं त्रोटनं, संधिः कुद्वारं तत्र सर्पणं गमनं, विवृतस्नानं नग्नस्नानं, शुक्तवदनमश्लीलभाषणं, सिद्धान्नभिक्षणम् अस्मिन्नर्थे श्रुतिं प्रमाणयति ' नह···श्रुतेः '। 'वर्ष···दिति' अप्रावृतो वस्त्रादिना। ' अप्स्वा···सेत् ' न जातानि लोमानि यस्याः तां, विपुंसीं पुरुषं विपर्यीकुर्वाणां पुरुषाकृतिं श्मश्रुयुक्तां, पण्ढो नपुंसकः। उपहासोऽत्राभिगमनम्। 'गर्भि···यात्' न गर्भिणीमिति ब्रूयात् 'सकु···नकुलं' नकुलं ब्रूयादित्यर्थः एवमत्राद्यमुद्देश्यमुत्तरं विधेयम् (?)। 'भगा···क्षीत्' धयन्तीमात्मनो वत्सं पाययन्तीं स्वयं वा जलादिकं पिबन्तीम्। 'उर्वे···यीत्' उर्वरायां सस्यवत्या तथा तृणाद्यनन्तरितायां भूमौ पृथिव्याम्। उत्सर्पन्नित्यस्यैव विवरणं तिष्ठन्। 'स्वय···येण' काष्ठेन गुदं प्रमृजीत। गुदमित्यध्याहारः केचित्। स्वयं प्रशीर्णमयत्नपतितम्। 'विकृ···यीत्' नीलयादिना विकारमापादितं, माञ्जिष्ठादिनापि विकृतं निषिध्यते शुद्धस्यैव परिधानादित्यन्ये ॥ ' दृढ···स्यात् ' आरब्धं वैधं न त्याज्यं वधो घातः तस्मात् ( त्रायत इति वध ) त्रः स्यात् रक्षेत्। ' सर्व···मिव ' स्वपरेषां हितकारी स्यादित्यर्थः। उक्तनियमातिक्रमे एकरात्रमभोजनम् ॥ इति सप्तमीकण्डिका ॥ ७ ॥

तिस्रो रात्रीर्व्रतं चरेत् ॥ १ ॥ अमाꣳसाश्यमृण्मयपायी ॥ २ ॥ स्त्रीशूद्रशवकृष्णशकुनिशुनां चादर्शनमसंभाषा च तैः ॥ ३ ॥ शवशूद्रसूतकान्नानि च नाद्यात् ॥ ४ ॥ मूत्रपुरीषे ष्ठीवनं चातपे न कुर्यात्सूर्याच्चात्मानं नान्तर्दधीत ॥ ५ ॥ तप्तेनोदकार्थान्कुर्वीत ॥ ६ ॥ अवज्योत्य रात्रौ भोजनम् ॥ ७ ॥ सत्यवदनमेव वा ॥ ८ ॥ दीक्षितोऽप्यातपादीनि कुर्यात्प्रवर्ग्यवाँश्चेत् ॥ ९ ॥ ८ ॥

( कर्कः )—' तिस्रो···रेत् ' स्नातस्यातो रात्रित्रयं व्रतचर्योच्यते। ' अमाꣳ···पायी ' भवतीति शेषः। ' स्त्रीशू···नम् ' कृष्णशकुनिः काकः। एषामदर्शनम् ' असं···तैः ' तैः स्त्र्यादिभिर्यस्य येन यादृक् संभाषणम् तादृक् प्रतिषिध्यते। ' शव···द्यात् ' शवान्नं क्रीत्वा लब्ध्वा वा यद्धते तत्प्रतिषेधः। शूद्रान्नं भोज्यान्नस्यापि नापितादेः प्रतिषिध्यते। सूतकान्नम् अर्वाक् दशाहात्प्रसवे सति। ' मूत्र···यात् ' मूत्रादेरातपे करणप्रतिषेध.। ' सूर्या···धीत ' छत्रादिना। ' तप्ते···र्वीत ' उदकेन। ' अव···जनम् ' कर्तव्यं प्रदीपोल्कादिनाऽन्यतरेण। ' सत्य···वा ' कर्तव्यम्। नाधस्तना नियमाः। ' दीक्षितस्ततोऽत्र मूत्रपुरीषे ष्ठीवनं चातपे न कुर्यादित्येवमादीनि करोति ॥ ८ ॥ ॥ * ॥ ॥ * ॥

( जयरामः )—तिस्र इति स्नातस्य सतस्त्रिरात्रं व्रतचर्योच्यते। अमांसाश्यादिः स्यादिति

शेषः। स्त्र्यादीनां पञ्चानामदर्शनं कार्यम्। कृष्णशकुनिः काकः। तैस्त्र्यादिभिर्यस्य येन यादृक् संभाषणं प्राप्तं तादृङ्निषिध्यते। शवादीनामन्नं च नाद्यात्। तत्र शवान्नं क्रीत्वा लब्ध्वा वा यदद्यते तत्प्रतिषेधः। शूद्रान्नं भोज्यान्नस्यापि शूद्रस्य नापितादेरन्नम्। सूतकान्नं दशाहादर्वाक् प्रसवे सति। आतपे मूत्रादित्रयं न कुर्यात्। अन्तर्धानं च छत्रादिना। तप्तेनोदकेन। अवज्योत्य दीपोल्काद्यन्यतरेण। सत्यवदनमेव वा कुर्यान्नाधस्तनान्नियमान्। दीक्षितः सोमार्थं स्वीकृतदीक्षः। स यदि प्रवर्ग्यवान् प्रवर्ग्यो महावीरस्तद्वान्। तर्हि आतपादीनि आतपाधिकरणकानि मूत्राद्यवज्योत्यभोजनान्तानि व्रतानि कुर्यात्। सत्यवदनमेव वा कुर्यात् ॥ ८ ॥

( हरिहरः )—'तिस्रो…रेत्' एवं स्नातकस्य समावर्तनप्रभृति यावद्गार्हस्थ्यं कर्तव्यत्वेन वर्जयनीयत्वेन च नृत्यगीतादीन्यभिधाय अधुना तस्यैव समावर्तनदिनमारभ्य त्रिरात्रव्रतचर्यामाह। तिस्रः त्रिसंख्या रात्रीः अहोरात्राणि व्रतं वक्ष्यमाणं चरेत् अनुतिष्ठेत्। 'अमा ं…पायी' मांसमश्नातीत्येवंशीलो मांसाशी तद्विपरीतः अमांसाशी मृण्मयेन मृदादिनिर्मितेन पात्रेण पिबतीति मृण्मयपायी तद्विपरीतः अमृण्मयपायी स्यादिति शेषः। 'स्त्रीशू…च तैः' स्त्री नारी शूद्रश्चतुर्थो वर्णः शवो मृतशरीरं कृष्णशकुनिः काकः श्वा कुक्कुरः। एतेषामदर्शनमवलोकनाभावः। तैः स्त्रीशूद्रादिभिश्च सह असंभाषा न संभाषा असंभाषा अवचनव्यवहारः। 'शव…द्यात्' नाद्यात् न भक्षयेत् कानि शवो मृतकः तस्मिन् जाते सति क्रीत्वा लब्ध्वा वा यत् ज्ञातिभिरद्यते। शूद्रस्य अवरवर्णस्य नापितादेर्भोज्यान्नस्यापि यदन्नं तच्छूद्रान्नं, सूतके प्रसवाशौचे सति यत् ज्ञातीनामन्नं तत्सूतकान्नं तानि शवशूद्रसूतकान्नानि चकारः स्त्रियाद्यदर्शनादिसमुच्चयार्थः। 'मूत्र…र्यात्' मूत्रं च पुरीषं च मूत्रपुरीषे आतपे घर्मे न कुर्यात् नोत्सृजेत् तथा ष्ठीवनं च थूत्कृत्य मुखाल्लालादिनिस्रावं न कुर्यादातपे। 'सूर्या…धीत' सूर्यादादित्यादात्मानं स्वं छत्रादिना अन्तर्हितं न कुर्यात्। 'तप्ते…र्वीत' तप्तेन जलेन उदकार्थान् उदकसाध्याः शौचाचमनादिकाः क्रियाः कुर्वीत विदध्यात्। 'अव…नम्' रात्रौ निशि अवज्योत्य दीपं प्रज्वाल्य भोजनमशनं कुर्वीत। 'सत्य…व वा' वा यद्वा सत्यवदनमेव सत्यवाक्योच्चारणमेव कुर्यात् न अधस्तनानि अमांसाशनादीनि। 'दीक्षि…श्चेत्' चेद्यदि दीक्षितः सोमयागार्थं स्वीकृतदीक्षः प्रवर्ग्यवान् प्रवर्ग्यो महावीरः अस्यास्तीति प्रवर्ग्यवान्। तदा आतपादीनि आतपे मूत्रपुरीषोत्सर्गष्ठीवनादीनि अवज्योत्य रात्रिभोजनान्तानि कुर्यात् वा सत्यवदनमेव। अत्र सूत्रकारेण यावन्ति स्नातकव्रतान्युक्तानि न तावन्त्येवानुतिष्ठेत् अपितु मन्वादिस्मृतिप्रणीतान्यपि इति सूत्रार्थः॥ ॥ अथ प्रयोगः—वेदमुक्तलक्षणं व्रतं वा उभयं वा समाप्य गुर्वनुज्ञातो ब्रह्मचारी स्नायात्। तत्र आचार्यो मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा ब्रह्मचारिणा भो आचार्य अहं स्नास्ये इत्यनुज्ञादानं प्रार्थितः स्नाहीत्यनुज्ञां दत्त्वा ब्रह्मचारिणे परिश्रित्य पञ्च भूसंस्कारान् कृत्वा लौकिकाग्निं विधाय ब्रह्मोपवेशनाद्याज्यभागान्तं कर्म निर्वर्त्य वेदारम्भवत् वेदाहुतिहोमं विधाय महाव्याहृत्यादि स्विष्टकृदन्तं च कृत्वा संस्रवं प्राश्य पूर्णपात्रवरयोरन्यतरं ब्रह्मणे दक्षिणां दद्यात्। तद्यथा तत्राज्यभागान्तं कृत्वा यदि ऋग्वेदमधीत्य स्नानं करोति तदा पृथिव्यै स्वाहा अग्नये स्वाहेति द्वे आज्याहुती हुत्वा ब्रह्मणे छन्दोभ्य इत्याद्या नवाज्याहुतीर्हुत्वा; यदि यजुर्वेदं तदाऽऽज्यभागानन्तरमन्तरिक्षाय स्वाहा वायवे स्वाहेति द्वे आज्याहुती हुत्वा ब्रह्मणे छन्दोभ्य इत्याद्या नवाहुतीर्हुत्वा; यदि सामवेदं तदाऽऽज्यभागान्ते दिवे स्वाहा सूर्याय स्वाहेति हुत्वा ब्रह्मणे छन्दोभ्य इत्यारभ्यानुमत्यन्ता नवाहुतीर्जुहोति; यदाऽथर्ववेदं तदाऽऽज्यभागान्ते दिग्भ्यः स्वाहा चन्द्रमसे स्वाहेति आहुतिद्वयं हुत्वा ब्रह्मण इत्याद्या जुहोति। यद्येकदा वेदचतुष्टयमधीत्य स्नानं करोति तदाऽऽज्यभागानन्तरं प्रतिवेदं वेदाहुतिद्वयं

द्वयं हुत्वा ब्रह्मणे छन्दोभ्य इत्याहुतिद्वयं च हुत्वा प्रजापतय इत्याद्याः प्रजापतये देवेभ्यः ऋषिभ्यः श्रद्धायै मेधायै सदसस्पतये अनुमतय इति सप्त मन्त्रेण जुहुयात्। एवं वेदद्वयत्रयाध्ययनेऽपि योज्यम्। अनन्तरं महाव्याहृत्यादिस्विष्टकृदन्ता द्व्याहुतीर्हुत्वा प्राशनं विधाय दक्षिणादानान्तं कुर्यात्। अथ ब्रह्मचारी उपसंग्रहणपूर्वकं गुरुं नमस्कृत्य परिसमूहनादि त्र्यायुपकरणान्तं तस्मिन्नग्नौ समिदाधानं कुर्यात्। तत आचार्यपुरुषैः परिश्रितस्योत्तरभागे स्थापितानां दक्षिणोत्तरायतानामष्टानां जलपूर्णकलशानां पूर्वभागे आस्तृतेषु प्रागग्रेषु कुशेषु उदङ्मुखः स्थित्वा येऽप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मयूषो मनोहास्खलो विरुजस्तनूदूषिरिन्द्रियहाऽतितान्सृजामि यो रोचनस्तमिह गृह्णामीति मन्त्रेण प्रथमकलशाद्दक्षिणचुलुकेन उदकमादाय तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसायेति मन्त्रेणात्मानमभिषिञ्चते। एवमेव द्वितीयादिभ्यः सप्तभ्य उदकुम्भेभ्यः येऽप्स्वन्तरग्नय इत्यनेनैव मन्त्रेण एकैकस्माज्जलमादाय येन श्रियमकृणुतां येनावमृशतांᳬसुरां येनाक्षायभ्यषिञ्चतां यद्वां तदश्विना यश इति। आपो हिष्ठा मयो भुवः। यो वः शिवतमो रसः। तस्माअरङ्गमामव इत्येतैश्चतुर्भिर्मन्त्रैः प्रतिमन्त्रमात्मानमभिषिच्य त्रिस्तूष्णीमभिषिञ्चते। तत उदुत्तममिति मन्त्रेण मेखलां शिरोमार्गेण निःसार्य तां मेखलां भूमौ निधाय अन्यद्वासः परिधायाचम्य आदित्यमुपतिष्ठते। उद्यन्भ्राजभृष्णुरिन्द्रोमरुद्भिरस्थात्प्रातर्यावभिरस्थाद्दशसनिरसि दशसनिं मा कुर्वाविदन्मागमयोद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवायावभिरस्थाच्छतसनिरसि शतसनिं मा कुर्वाविदन्मागमयोद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्सायंयावभिरस्थात्सहस्रसनिरसि सहस्रसनिं मा कुर्वाविदन्मागमयेत्यादित्योपस्थानमन्त्रः। ततो दधि वा तिलान्वा दक्षिणहस्तमध्यगतेन सोमतीर्थेन प्राश्य जटालोमनखानि वापयित्वा स्नात्वाऽऽचम्योक्तलक्षणेनौदुम्बरकाष्ठेन—अन्नाद्याय व्यूहध्वᳬ सोमो राजाऽयमागमत्। स मे मुखं प्रमार्क्ष्यते यशसा च भगेन चेत्यनेन मन्त्रेण दन्तान् क्षालयित्वाऽऽचम्य सुगन्धिद्रव्यमिश्रितेन यवादिचूर्णेन तैलसन्नीतेन शरीरमुद्वर्त्य पुनः सशिरस्कं स्नात्वाऽऽचम्य चन्दनाद्यनुलेपनं पाणिभ्यां गृहीत्वा मुखं नासिकां च प्राणापानौ मे तर्पय चक्षुर्मे तर्पय श्रोत्रं मे तर्पयेत्यनेन मन्त्रेणानुलिम्पेत्। ततः पाणी प्रक्षाल्य तदुदकमञ्जलिनाऽऽदायापसव्यं कृत्वा दक्षिणामुखो भूत्वा दक्षिणस्यां दिशि पितरः शुन्धध्वमित्यनेन मन्त्रेण भूमौ निषिञ्चेत्पितृतीर्थेन। अथ यज्ञोपवीती भूत्वोदकमुपस्पृश्य चन्दनादिना सुचक्षा अहमक्षीभ्यां भूयासᳬ सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासमिति मन्त्रेण आत्मानमनुलिप्य परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि। शतं च जीवामि शरदः पुरूचीरायस्पोषमभिसंव्ययिष्य इति मन्त्रेण अहतं धौतं वा यथालाभं वासः परिधाय 'धारयेद्वैणवीं यष्टिं सोदकं च कमण्डलुम्। यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले' इति मनुना ब्रह्मचर्ये प्राप्तस्य यज्ञोपवीतधारणस्य स्नातकस्य पुनर्विधानात् द्वितीययज्ञोपवीतधारणं प्राप्तं तच्च पूर्वे धृते सति न संभवति अतस्तदुत्तार्य जले प्रक्षिप्यापरं नवम् उक्तलक्षणमुपवीतद्वयं यज्ञोपवीतमित्यादिना मन्त्रेण परिधाय। यज्ञोपवीतस्यैकदेशविनाशे यातयामत्वम् अतो न तस्य नवेन संयोगः। यज्ञोपवीतस्यैकदेशविनाशेऽपि मन्त्रादिकसंस्कारस्य विनष्टत्वात्। ततो यशसा मा द्यावापृथिवी यशसेन्द्रावृहस्पती। यशो भगश्च माऽविन्दद्यशो मा प्रतिपद्यतामिति मन्त्रेण उत्तरीयं वास आच्छाद्य द्वितीयवस्त्रालाभे पूर्वस्यैवोत्तरवर्गेण अनेनैवोत्तरीयमन्त्रेणोत्तरीयं वासः परिधत्ते। या आहरज्जमदग्निः श्रद्धायै मेधायै कामायेन्द्रियाय। ता अहं प्रतिगृह्णामि यशसा च भगेन चेति मन्त्रेण पुष्पाणि अन्यतः प्रतिगृह्य, यद्यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु। तेन संग्रथिताः सुमनस आवध्नामि यशो मयीति मन्त्रेण शिरसि बद्ध्वा, युवा सुवासा इत्यनयर्चा उष्णीषेण शिरो वेष्टयित्वा, अलंकरणमसि भूयोऽलंकरणं भूयादिति मन्त्रेण दक्षिणे

कर्णे कुण्डलं कृत्वा तेनैव वामकर्णे परिधाय, वृत्रस्यासि कनीनकश्चक्षुर्दा असि चक्षुर्मे देहीति मन्त्रेण दक्षिणमक्षि सौवीराञ्जनेनाङ्क्त्वा तेनैव वाममङ्क्ते। रोचिष्णुरसीत्यादर्शे मुखं विलोक्य, वृहस्पतेश्छदिरसि पाप्मनो मामन्तर्द्धेहि तेजसो यशसो माऽन्तर्द्धेहि इत्यनेनान्यस्माच्छत्रं प्रतिगृह्य, प्रतिष्ठे स्थो विश्वतो मापातमित्युपानहौ युगपत्पादयोः प्रतिमुच्य, विश्वाभ्यो मा नाष्ट्राभ्यस्परिपाहि सर्वत इति वैणवं दण्डमादत्ते पूर्वदण्डं त्यक्त्वा। अत्र मातृपूजादि ब्रह्मणे दक्षिणादानान्तमाचार्यकृत्यम्। कलशाभिषेकादि दण्डग्रहणान्तं स्नानकर्तुः। वासश्छत्रोपानद्ग्रहणव्यतिरिक्तानि दन्तप्रक्षालनादीनि मन्त्रवन्ति सदा भवन्ति। वासःप्रभृतीनि तु नूतनान्येव। तत आचार्यः स्नातकस्य नियमान् श्रावयेत् त्रिरात्रव्रतानि च। स्नातकश्च तानि यथोक्तानि कुर्यादिति समावर्तनम्॥ ॥ * ॥ ॥ * ॥

(गदाधरः)—स्नातस्य समावर्तनप्रभृति यावद्गार्हस्थ्यं धर्मानभिधायाधुना तस्यैव समावर्तनदिनमारभ्य त्रिरात्रं व्रतमाह 'तिस्रो···रेत्' वक्ष्यमाणं व्रतं तिस्रः त्रिसंख्याः रात्रीः अहोरात्राणि चरेदनुतिष्ठेत्। 'अमाᳪस···पायी' मांसमश्नातीत्येवंशीलो मांसाशी न मांसाशी अमांसाशी, मृण्मयेन मृत्पात्रेण पिवतीत्येवंशीलो मृण्मयपायी न मृण्मयपायी अमृण्मयपायी स्यादिति शेषः। 'स्त्रीशू···च तैः'। स्त्री नारी शूद्रोऽन्त्यवर्णः शवः मृतशरीरं कृष्णशकुनिः काकः श्वा कुक्कुर एतेषामदर्शनं भवेत्। एतैः स्त्र्यादिभिः सहासंभाषणं च अवचनव्यवहारः। अत्र यस्य येन यादृक् संभाषणं प्राप्तं तादृङ्निषिध्यते। 'शव···द्यात्' मरणानन्तरं क्रीत्वा लब्ध्वा वा ज्ञातिभिर्यद्दद्यते तच्छवान्नम्। शूद्रस्य भोज्यान्नस्य नापितादेरन्नं शूद्रान्नम्। प्रसवे सति अर्वाग् दशाहात् यत् ज्ञातीनामन्नं तत्सूतकान्नम्। एतानि नाद्यात् भक्षयेत्। 'मूत्र···र्यात्' मूत्रं च पुरीषं च मूत्रपुरीषे। ष्ठीवनं थूत्कृत्य मुखाल्लालादित्यजनम्। एतत्त्रयम् आतपे घर्मे न कुर्यात् नोत्सृजेत्। 'सूर्या···धीत' सूर्यादादित्यादात्मानं स्वं छत्रादिना अन्तर्हितं न कुर्यात्। 'तप्ते···र्वीत' तप्तेन जलेनोदकार्थान् उदकसाध्याः शौचाचमनादिकाः क्रियाः कार्याः। 'अव···जनम्' रात्रौ अवज्योत्य दीपोल्काद्यन्यतरेण प्रकाशं कृत्वा भोजनं कुर्यात्। 'सत्य···वा' अथवा सत्यभाषणमेव कुर्यान् नाधस्तननियमान्। 'दीक्षि···श्चेत्' चेद्यदि दीक्षितः सोमयागार्थं स्वीकृतदीक्षः प्रवर्ग्यवान् प्रवर्ग्यः सोमयागाङ्गकर्मविशेषः सोऽस्यास्तीति तथा, तदाऽऽतपादीनि मूत्रपुरीषे ष्ठीवनं चातपे न कुर्यादित्यादीनि करोति॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

(विश्व०)—प्रवर्ग्यकालीननियमानाह 'तिस्रो···पायी' भवतीति शेषः। 'स्त्री···र्शनं' कृष्णशकुनिः काकः। एषां पञ्चानामदर्शनं कार्यम्। 'असं···तै' स्त्रीशूद्रादिभिः सह न संभाषा असंभाषा। दर्शननिषेधे संभाषणनिषेधस्य प्राप्तत्वेऽपि पुनः संभाषणं निषेधयन् दैवाद्दर्शने पुनस्तदुद्देशेन वार्तादिकथने दोषाधिक्यप्रदर्शनार्थं संभाषणनिषेधः। 'शव···द्यात्' भोज्यान्नस्यापि दासादेरन्नं प्रवर्ग्यकाले प्रतिषिध्यते। 'मूत्र···र्यात्' ष्ठीवनं मुखोच्छिष्टं मूत्रादित्रयं घर्मे न कुर्यात्। 'सूर्या···धीत' छत्रादिनेति शेषः 'तप्ते···र्वीत' उष्णजलेन शौचाचमनं कुर्यात्। 'अव···जनं' प्रदीपोल्कादिना भोज्यान्नादौ तेजःसंयोगं संपाद्य भुञ्जीतेत्यर्थः 'सत्य···वा' वाशब्दः पूर्वोक्तनिरासार्थः। सत्यवदनमेव कुर्यात् नाधस्तनान् नियमान्। 'दीक्षि···श्चेत्' एवार्थोऽपिशब्दः। प्रवर्ग्यशून्ये प्रथमयज्ञादावश्रोत्रियस्य प्रसक्तिं निराकरोति प्रवर्ग्यवांश्चेदिति। नन्वेवं दीक्षितमात्रकर्तृकत्वे चिरकालं क्रियमाणप्रवर्ग्यादौ रात्रिविशेषणं तिस्रःपदं व्यर्थमसंगतोक्तिश्चेति चेत् उच्यते—तिस्रःपदस्य प्रवर्ग्याधिकरणसकलसमयोपलक्षकत्वात्। ब्रह्मचर्यगार्हस्थ्यादिधर्माक्रान्तनियमोपन्यासप्रसक्त्या दीक्षितनिय-

मोपन्यासस्यापि नासंगतत्वमित्याहुः । अपरे त्वसुमेवास्वरसं हृदि कृत्वा कृतसमावर्तनस्याप्यमी नियमास्त्रिरात्रं भवन्तीत्याहुः ॥ इत्यष्टमी कण्डिका ॥ ८ ॥

अथातः पञ्च महायज्ञाः ॥ १ ॥ वैश्वदेवादन्नात्पर्युक्ष्य स्वाहाकारैर्जुहुयाद्ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमतय इति ॥ २ ॥ भूतगृह्येभ्यो मणिके त्रीन् पर्जन्यायाद्भ्यः पृथिव्यै ॥ ३ ॥ धात्रे विधात्रे च द्वार्ययोः ॥ ४ ॥ प्रतिदिशं वायवे दिशां च ॥ ५ ॥ मध्ये त्रीन्ब्रह्मणेऽन्तरिक्षाय सूर्याय ॥ ६ ॥ विश्वेभ्यो देवेभ्यो विश्वेभ्यश्च भूतेभ्यस्तेषामुत्तरतः ॥ ७ ॥ उषसे भूतानां च पतये परम् ॥ ८ ॥ पितृभ्यः स्वधा नम इति दक्षिणतः ॥ ९ ॥ पात्रं निर्णिज्योत्तरापरस्यां दिशि निनयेद्यक्ष्मैतत्त इति ॥ १० ॥ उद्धृत्याग्रं ब्राह्मणायावनेज्य दद्याद्धन्तत इति ॥११॥ यथाऽर्हं भिक्षुकानतिथींश्च संभजेरन् ॥ १२ ॥ बालज्येष्ठा गृह्या यथार्हमश्नीयुः ॥ १३ ॥ पश्चाद् गृहपतिः पत्नी च ॥१४॥ पूर्वो वा गृहपतिः । तस्माद्गु स्वा( दि ? द्वि )ष्टं गृहपतिः पूर्वोऽतिथिभ्योऽश्नीयादिति श्रुतेः ॥ १५ ॥ अहरहः स्वाहा कुर्यादन्नाभावे केनचिदाकाष्ठाद्देवेभ्यः पितृभ्यो मनुष्येभ्यश्चोदपात्रात् ॥ १६ ॥

( कर्कः )—'अथातः···यज्ञाः' व्याख्यास्यन्त इति सूत्रशेषः । महायज्ञा इति च कर्मनामधेयम् । तत्रैको देवयज्ञो ब्रह्मणे स्वाहेत्येवमादयो होमाः । मणिके त्रीनित्येवमादिर्भूतयज्ञः । पितृभ्यः स्वधानम इति पितृयज्ञः । हन्तकारोऽतिथिपूजादिर्नृयज्ञः । पञ्चग्रहणाच्च पञ्चमो ब्रह्मयज्ञः ॥ 'वैश्वदे···यात्' विश्वे देवा देवता अस्येति वैश्वदेवमन्नं ते च देवपितृमनुष्यादयः । कथमेषां देवतात्वमिति चेत् । येन स्मृतावेषां दानं विहितम् । एभ्यो दत्त्वा शेषभुजा गृहपतिना भवितव्यम् । तस्माद्वैश्वदेवमन्नं यदहरहः पच्यते तत आदाय पर्युक्ष्य स्वाहाकारैर्जुहुयात् । पर्युक्ष्यग्रहणाच्च कुशकण्डिकोक्तेतिकर्तव्यताव्युदासः । स्वाहाकारैर्जुहुयादिति जुहोति तत्स्वाहाकारैः । शेषे नमस्काराः । आचरन्ति हि बलिकर्मणि नमस्कारान् । यद्वा स्वाहाकारैर्जुहुयादिति संस्रवव्युदासार्थम् ॥ 'ब्रह्म···तय इति' एते पञ्च होमाः । 'भूतगृह्येभ्यः' भूतानि च तानि गृह्याणि च भूतगृह्याणि तेभ्यो ददाति । तान्याह 'मणि···पृथिव्यै' ददातीति शेषः । 'धात्रे···र्ययोः' ददाति । 'प्रति···यवे' ददाति । 'दिशां च' यत्संबन्धि दानं तत्प्रतिदिशं ततश्चैतत्सिद्धं भवति । प्राच्यै दिशे नम इत्येवमादि । 'मध्ये···र्याय' मध्ये च प्रतिदिशं यद्दत्तं तन्मध्ये । 'विश्वे···रतः' आनन्तर्यात् त्रयाणाम् । 'उष···परम्' परमिति तयोरप्युत्तरतः । 'पितृ···णतः' तेषामेव त्रयाणां पित्र्यत्वाच्चात्र दक्षिणामुखः प्राचीनावीति भवति । नमस्कारश्चात्र प्रदर्शित आचार्येण स सर्वबलिहरणेषु प्रत्येतव्यः समाचारादित्युक्तमेव । 'पात्रं···त्त इति' अनेन मन्त्रेण निर्णेजनमित्यध्याहारः । उत्तरापरा च दिक् त्रयाणामेव । 'उद्धृ···त इति' तत एव वैश्वदेवादन्नादुद्धृत्याग्रं ब्राह्मणायावनेज्य दद्याद्धन्त त इत्यनेन मन्त्रेण । हन्तकाराच्च पूर्वं ब्रह्मयज्ञस्यावसरः । नृयज्ञो हि हन्तकारादिरास्वापात् । रात्रावपि ह्यतिथिपूजा स्मर्यते । अतिथिं प्रकृत्य

नास्यानश्नन् गृहे वसेदिति । तस्माद् ब्रह्मयज्ञोऽनिर्दिष्टकालोऽपि नृयज्ञात्पूर्व एव । 'यथा···र्न्' यथार्हमिति उपकुर्वाणकब्रह्मचारिणोऽक्षारालवणं च । इतरेषां भिक्षुकाणां यद्यस्योचितमिति । 'वाल···म श्नीयुः' यद्यस्यार्हमिति 'पश्चा···पत्नी च' अश्नीतः । 'पूर्वो···पतिः' पत्न्या अश्नाति । एवं हि श्रूयते—'तस्मा···दिति' तस्मात्स्वाद्वन्नाद्यदिष्टतमं तद् गृहपतिरश्नाति । अतिथिभ्योऽशितेभ्यः पूर्वं पत्न्या इति । 'अह···वेभ्यः' देवयज्ञोऽयमाकाष्ठादप्यहरहः कार्यः । 'पितृ···त्रात्' पितृयज्ञो मनुष्ययज्ञश्च उदपात्रादप्यहरहः कर्तव्यः । एवं पञ्चमहायज्ञक्रिया अहरहरेवेति गम्यते ॥ इति नवमी कण्डिका ॥ ९ ॥

( जयरामः )—'अथा···यज्ञाः' व्याख्यास्यन्त इति सूत्रशेषः । महायज्ञा इति कर्मणो नामधेयम् । तत्रैको देवयज्ञो ब्रह्मणे स्वाहेत्येवमादिहोमरूपः । मणिके त्रीनित्येवमादिवलिरूपो भूतयज्ञः पितृभ्यः स्वधा नम इति पितृयज्ञः हन्तकारातिथिपूजादिरूपो नृयज्ञः । पञ्चग्रहणात् पञ्चमो ब्रह्मयज्ञः । वैश्वदेवं विश्वे सर्वे देवमनुष्यादयो देवा देवता अस्येति ततोऽन्नात् । एषां देवतात्वं श्रूयते देवादिभ्यो दत्त्वा शेषभुजा गृहपतिना भाव्यमिति । तस्माद्वैश्वदेवमन्नं यदहरहः पच्यते तत आदाय पर्युक्ष्य स्वाहाकारैर्जुहुयात् । पर्युक्षणग्रहणसामर्थ्यात्कुशकण्डिकोक्तेतिकर्तव्यताव्युदासः । स्वाहाकारैरिति यज्जुहोति तत्स्वाहाकारैरेव । शेषे नमस्काराः । यद्वा स्वाहाकारैर्जुहुयादिति संस्रवव्युदासार्थम् । ब्रह्मणे स्वाहेत्येवं पञ्चहोमाः । भूतगृह्येभ्यः भूतानि च तानि गृह्याणि च तेभ्यो ददातीति शेषः सर्वत्र पूरणीयः । तानि च स्थानविभागेनाह—मणिके त्रीनित्यादि । धात्रे विधात्रे चेति द्वार्ये द्वारशाखे दक्षिणोत्तरे तयोः । वायवे प्रतिदिशं ददाति । दिशां च यद्दानं तदपि प्रतिदिशमेवेति दिशां नाममन्त्रैः । ततश्च प्राच्यै दिशे नम इत्यादि सिद्ध्यति । मध्ये दिग्बलिचतुष्टयस्यैव आनन्तर्यात् । विश्वेभ्य इति, तेषां मध्यवलीनामानन्तर्याद्बहुत्वोपदेशाच्च । उषस इति, परं तयोरप्युत्तरतः आनन्तर्यात् । पितृभ्यइति ब्रह्मादिवलित्रयस्य दक्षिणतः पित्र्यत्वाच्चात्र दक्षिणामुखः प्राचीनावीती च भवेत् । नमस्कारश्चात्र यः प्रदर्शितः स सर्वबलिषु प्रत्येतव्यः । तत्पात्रं निर्णिज्य प्रक्षाल्य दिग्बलीनामुत्तरापरस्यां वायव्यां दिशि यक्ष्मैतत्त इति मन्त्रेण निर्णेजनमित्यध्याहृत्य निनयेत् । उद्धृत्याग्रं षोडशग्रासमात्रं चतुर्ग्रासमात्रं वाऽन्नं वैश्वदेवादन्नादुद्धृत्यावनेजनजलं दत्त्वा ब्राह्मणायैव दद्याद्धन्त त इति मन्त्रेण । हन्तकाराच्च पूर्वं ब्रह्मयज्ञावसरः । नृयज्ञो हि हन्तकारादिरास्वापात् रात्रावपि ह्यतिथिपूजा । अतिथिं प्रकृत्य स्मर्यते । नास्यानश्नन् गृहे वसेदिति । तस्मादनिर्दिष्टकालोऽपि ब्रह्मयज्ञो नृयज्ञात्पूर्वमेव । यथार्हमित्युपकुर्वाणस्य ब्रह्मचारिणोऽक्षारालवणम् । इतरेषां भिक्षुकाणां यद्यस्योचितमिति । बालज्येष्ठा बालपूर्वा यथार्हं यद्यस्यार्हमेवमश्नीयुः । ततो जायापती अश्नीतः । पूर्वो वा पत्न्या गृहपतिरश्नाति । श्रूयते च तस्मादिति । अस्यार्थः—तस्मात्स्वाद्वन्नाद्यद्यदिष्टमिष्टतमं तत्तद्गृहपतिरश्नाति । कदा अतिथिभ्योऽशितेभ्योऽनन्तरम् । पूर्वं च पत्न्याः । उ एवार्थे । अहरहः प्रतिदिनं देवयज्ञ आकाष्ठादप्यहरहः कार्यः । पितृयज्ञो मनुष्ययज्ञश्च आउदपात्रादुदकेनाप्यहरहः कार्यः । एवं पञ्चमहायज्ञक्रिया अहरहरेवेति गम्यते ॥ ९ ॥ ॥ * ॥

( हरिहरः )—'अथा···यज्ञाः' । अथ समावर्तनानन्तरं कृतविवाहस्य पञ्चमहायज्ञेष्वधिकारः । अतो हेतोः पञ्चसंख्याकाः महायज्ञा महायज्ञशब्दवाच्याः कर्मविशेषाः पञ्चमहायज्ञा व्याख्यास्यन्ते । तत्र पञ्चसु ब्रह्मणे स्वाहेत्येवमादिहोमात्मकः पूर्वो देवयज्ञः । ततो मणिके त्रीनित्येवमादिबलिरूपो भूतयज्ञः । ततः पितृभ्यः स्वधा नम इति बलिदानं पितृयज्ञः । हन्तकारातिथिपूजादिको मनुष्ययज्ञः । पञ्चमो ब्रह्मयज्ञः । एते पञ्चमहायज्ञा अहरहः कर्तव्याः स्नातकेन । कथमित्यपेक्षायामाह 'वैश्व···यात्' विश्वे सर्वे देवा देवता अस्येति वैश्वदेवमन्नं तस्मात् । के ते देवभूतपितृमनुष्यादयः । स्मृतिषु तेभ्यः अदत्त्वा भोजननिषेधात् । तेभ्यो दत्त्वा गृहपतेः शेषभुजित्वविधानात् ।

तस्माद्यदन्नम् अहरहः शालाग्नौ लौकिकेऽग्नौ वा यथाधिकारं पच्यते तद्वैश्वदेवमन्नम् । तस्मादुद्धृत्य पात्रान्तरे कृत्वा पर्युक्ष्य आवसथ्यस्य पर्युक्षणं कृत्वा स्वाहाकारैः सह वक्ष्यमाणैर्मन्त्रैर्जुहुयात् । अत्र पर्युक्षणोपदेशः कुशकण्डिकेतिकर्तव्यतानिरासार्थः । जुहोतिपु स्वाहाकारोपदेशश्च वल्यादिभ्यो निवृत्त्यर्थः संस्रवव्युदासार्थो वा । वलिदानं तु नमस्कारेणैव कुर्यात् । पितृभ्यः स्वधा नम इत्यत्राचार्येण वलिदाने नमस्कारस्य दर्शितत्वात् । 'ब्रह्म···तय इति' एते पञ्च होमाः । 'भूतगृह्येभ्यः' भूतानि च तानि गृह्याणि च भूतगृह्याणि तेभ्यो भूतगृह्येभ्यः होमानन्तरं दद्यादिति शेषः । कथम् 'मणि···थिव्यै' मणिकसमीपे सामीप्यसप्तमीयम् । त्रीन् वलीन् दद्यादिति शेषः । कथं पर्जन्याय नमः अद्भ्यो नमः पृथिव्यै नम इति । 'धात्रे···र्ययोः' द्वारशाखयोर्दक्षिणोत्तरयोर्यथाक्रमं धात्रे नमो विधात्रे नम इति द्वौ वली दद्यात् । 'प्रति···शां च' प्रतिदिशं दिशं दिशं प्रति वायवे नम इति एकैकं वलिं दद्यात् । दिशां च दिग्भ्यश्च प्रतिदिशं प्राच्यै दिशे नम इत्येवमादितत्तल्लिङ्गोल्लेखेनैकैकं वलिं दद्यात् । "मध्ये···र्याय' मध्ये प्रतिदिशं दत्तानां वलीनामन्तराले त्रीन् वलीन् दद्यात् । कथं ब्रह्मणे नमः अन्तरिक्षाय नमः सूर्याय नम इति । 'विश्वे···रतः' तेषां ब्रह्मादीनां त्रयाणां वलीनामुत्तरतः उत्तरप्रदेशे विश्वेभ्यो देवेभ्यो नमः विश्वेभ्यो भूतेभ्यो नम इति द्वौ वली दद्यात् । 'उप···परम्' परं तयोरुत्तरत उपसे नमः भूतानां पतये नम इति वलिद्वयं दद्यात् । केचित्तु विश्वेभ्यश्च भूतेभ्यः भूतानां च पतये इत्यत्र चकारं मन्त्रान्तर्गतमाहुः । 'पितृ···णतः' एषामेव ब्रह्मादिवलीनां दक्षिणतः दक्षिणप्रदेशे पितृकर्मत्वात्प्राचीनावीती दक्षिणामुखः पितृभ्यः स्वधा नम इति मन्त्रेणैकं वलिं पात्रावशिष्टेनान्नेन दद्यात् । 'पात्रं···त्त इति' उद्धरणपात्रं निर्णिज्य प्रक्षाल्य निर्णेजनजलं तेपामेव ब्रह्मादिवलीनामुत्तरापरस्यां वायव्यां दिशि निनयेत् उत्सृजेत् । कथं यक्ष्मैतत्ते निर्णेजनं नम इति मन्त्रेण । 'उद्धृ···तत इति' वैश्वदेवादन्नादुद्धृत्य अवदाय अग्रं षोडशग्रासपरिमितं ग्रासचतुष्टयपर्याप्तं वा अन्नं ब्राह्मणाय विप्राय न क्षत्रियवैश्याभ्यां अवनेज्य अवनेजनं दत्त्वा हन्तत इत्यनेन मन्त्रेण दद्यात् । अत्र पञ्चमहायज्ञा इत्युपक्रम्य चतुर्णां क्रमेणानुष्ठानमुक्तम् । पञ्चमस्य ब्रह्मयज्ञस्य पञ्च महायज्ञा इत्यनेनानुष्ठानस्य वक्तुमुपक्रान्तत्वात् तदनुष्ठानं सावसरं वक्तव्यं तच्च नोक्तम् । अतो विचार्यते ब्रह्मयज्ञस्य स्मृत्यन्तरे त्रयः काला उक्ताः । यथाह कात्यायनः—यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञस्तु स स्मृतः । स चार्वाक् तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः । वैश्वदेवावसाने वा नान्यत्रेत्यनिमित्तकात् इति । स्नानविधावपि—उपविशेद्दर्भेपु दर्भपाणिः स्वाध्यायं च यथाशक्त्यादावारभ्य वेदमिति, तेनोपक्रान्तस्यापि ब्रह्मयज्ञविधेः तर्पणात्प्रागुक्तत्वात् अत्र तस्याकथनमदोपः । सः अत्र यदि क्रियते तदा तेनैव विधिना कर्तव्यः । तत्र चेत्कृतस्तदाऽत्र न कर्तव्यः । विकल्पेन हि कालाः स्मर्यन्ते न समुच्चयः । किंच—न हन्तर्ति न होमं च स्वाध्यायं पितृतर्पणम् । नैकः श्राद्धद्वयं कुर्यात्समानेऽहनि कुत्रचित् । इत्यनेनात्रापि समुच्चयनिषेधात् । तस्मात्प्रातर्होमानन्तरं वा तर्पणात्पूर्वं वा वैश्वदेवान्ते वा सकृद् ब्रह्मयज्ञं कुर्यादिति सिद्धम् । एतावदवशिष्यते । यदा वैश्वदेवावसाने क्रियते तदा कोऽवसरः । चतुर्णामन्त इति चेत् न हन्तकारादेर्नृयज्ञस्य रात्रावपि स्मरणात् । नास्यानश्नन् गृहे वसेत् इत्यादिना । तस्मादनिर्दिष्टकालोऽपि ब्रह्मयज्ञो मनुष्ययज्ञात्पूर्वं कर्तव्यः । 'यथा···रन्' यथार्हं यो यथार्हति तदनतिक्रम्य यथार्हं तद्यथा भवति तथा भिक्षुकान् परिव्राजकब्रह्मचारिप्रभृतीन् । तत्र उपकुर्वाणकब्रह्मचारिणामक्षारालवणम् । इतरेषां च यथोचितम् । अतिथींश्च अध्वनीनान् श्रोत्रियादीन् संभजेरन् भिक्षाभोजनादिदानेन तोषयेरन् गृहमेधिनः । 'वाल···श्रीयुः' वालो ज्येष्ठः प्रथमो येषां गृह्याणां ते वालज्येष्ठा गृह्या गृहे भवाः पुत्रादयः ते यथार्हं यथायोग्यमश्नीयुः भुञ्जीरन् । 'पश्चा···त्ती च' पश्चाद् गृहेषु

श्चार्धषष्ठान् मासानधीत्योत्सृजेयुरर्धसप्तमान्वेति तत्रानध्यायः । 'अभ्र'''न्ध्यं वा' अभ्रदर्शनमतिशयिकं गृह्यते सर्वकालमभ्राणि सन्त्येव, सर्वरूपं च स्तनितविद्युद्वृष्ट्यादि तत्र त्रिरात्रं त्रिसंध्यं वा नाधीयीतेति विकल्पः । अपरे व्यवस्थितं विकल्पमिच्छन्ति । अभ्रदर्शने त्रिसंध्यं सर्वरूपे च त्रिरात्रम् । भुक्त्वार्द्रपाणिर्नाधीयीत । तथा उदके । न निशायाम् । निशाशब्देनार्धरात्रमुच्यते स्मृत्यन्तरात् । अहोरात्रस्य संधिवेलयोः । अन्तःशवे ग्रामे ग्राममध्ये यावच्छवो भवति तावन्नाधीयीत । ग्रामेऽन्तः ग्राममध्ये नाधीयीत । अपरे तु वर्णयन्ति—अन्तर्दिवाकीर्तिरनध्ययनम् । दिवाकीर्तिर्यद्दिवा कीर्त्यते तत् ग्राममध्ये न पठनीयम् । अन्ये दिवाकीर्तिं चण्डालमभिवदन्ति तद्दर्शने नाधीयीत । तथाच स्मृत्यन्तरम्—दिवाकीर्तिमुदक्यां च स्पृष्ट्वा स्नानं समाचरेत् । 'धाव'''त्कालम्' नाधीयीत । 'नीहा'''लम्' एते तात्कालिकाः । 'गुरौ'''मेत्' अपोऽभ्यवायेनोदकक्रिया लक्ष्यते । तद्दशरात्रं चानध्ययनं भवति । 'सता'''त्रम्' सह तानूनप्त्रं येन स्पृष्टं स सतानूनप्त्री समाने ब्रह्मणि यश्चरति स सब्रह्मचारी । 'एक'''रिणि' अनध्यायः । 'अर्ध'''जेयुः' उपाकृतानि छन्दाँसि । 'अर्ध'''न्वा' अधीत्योत्सृजेयुः । ततश्च विकल्पोऽयम् । उत्सर्गश्च छन्दसामङ्गानि पुनरधीयीतैव । 'अथे'''युवेति' जपन्ति च सहाचार्येण शिष्याः । 'त्रिरा'''रन्' अत्र त्रिरात्रं सहवासनियमः विप्रतिपत्ति विद्यत एव ॥ ॥ * ॥ ॥ * ॥

( जयरामः )—वातस्य सर्वदा विद्यमानत्वादतिशयितोऽत्र गृह्यते । सर्वशब्दादङ्गानां छन्दसामपि तदहरनध्यायः । यद्यदुपाध्यायाद् गृह्यते शिल्पाद्यपि तत्सर्वग्रहणेन गृह्यत इति । शिल्पिनामप्यनध्यायप्रसिद्धिरस्ति । अनध्यायश्च गुरुमुखाच्छिक्षितस्यानध्ययनम् । सर्वविषयमित्यन्ये मन्यन्ते । श्राद्धाशने स्वीकृते तथोल्काद्युत्पातेऽपि सर्वानध्याय इत्यनुवर्तते । कियावत् । आकालमाकालिका एतेऽनध्यायाः । यावत्कालमुत्पातस्तत्कालपर्यन्तम् । श्राद्धाशने अजीर्ण इत्यपरे यावच्छ्राद्धेऽशितं न जीर्यते तावदिति वर्णयन्ति । उल्का अलातम् । अवस्फूर्जत् विद्योतमाना विद्युत् । भूमेश्चलनं कम्पः । एषामुत्पातेऽभिभवे । ऋतुसंधिषु चाकालमनध्यायः । ऋतुसंधिश्चैकस्य ऋतोरन्तः अपरश्च यावन्न प्रवर्तते तत्राकालिकताऽनुपपत्तिः । तस्मात्पूर्वस्य ऋतोर्या अन्तिमा रात्रिरपरस्य च यदाद्यमहः स ऋतुसन्धिरत्रानध्यायः । एवं च सति प्रतिपद्यनध्यायः स्यात् तत्र तु विद्यमानत्वात् द्वितीयायामित्यपरे । उत्सृष्टेषु छन्दस्सु । उत्सर्गोऽर्धषष्ठान् मासानधीत्योत्सृजेयुरर्धसप्तमान्वेति । एषु त्रिरात्रम् । अभ्रदर्शनमत्रातिशयितं गृह्यते । सर्वरूपं च स्तनितविद्युद्वृष्ट्यादिसंघातस्तत्रापि त्रिरात्रमनध्यायः । त्रिसंध्यं वेति विकल्पः । अभ्रदर्शने त्रिरात्रं सर्वरूपे च त्रिसंध्यमिति व्यवस्थाविकल्प इत्यपरे । भुक्त्वा र्द्रपाणिर्नाधीयीत । तथा उदकादौ स्थितः । निशाशब्देन तन्मध्यमप्रहरौ गृह्यते स्मृत्यन्तरात् । संधिवेलयोः अहोरात्रस्य । अन्तःशवे ग्रामे । ग्राममध्ये यावच्छवो भवति तावन्नाधीयीरन् अन्तः ग्राममध्य एवेदानीम् । अपरे त्वन्यथा वर्णयन्ति । अन्तर्दिवाकीर्त्येऽनध्ययनम् । दिवाकीर्तिश्चाण्डालः ग्रामे च तस्य दर्शने नाधीयीत । यद्दिवैव कीर्त्यते तद्दिवाकीर्त्यं प्रवर्ग्यादि तद्ग्रामे न पठितव्यम् । तथा च स्मृत्यन्तरम् । दिवाकीर्तिमुदक्यां च स्पृष्ट्वा स्नानं समाचरेदिति । धावतोऽनध्यायः । अभिशस्तो मिथ्याऽभिशप्तः । पतितो ब्रह्महत्यादिना । तयोर्दर्शने । तथा आश्चर्ये अद्भुतदर्शने । अभ्युदयः पुत्रजन्मादि । एषु तत्कालं यावन्निमित्तम् । नीहारादिषु च तत्कालम् । ग्रामस्यान्ते सीम्नि । श्वादीनां शब्दे श्रूयमाणे । शिष्टाचरिते च आगमे तत्कालम् । गुरौ प्रेते अपोऽभ्यवेयात् उदकक्रियां कुर्यात् । दशरात्रं चोपरमेदध्ययनात् । तानूनप्त्रं सोमयागे दीक्षितस्य ऋत्विजां वाऽऽज्यालम्भनं सह तानूनप्त्रं स्पृष्टं येन स सतानूनप्त्री तस्मिन् । तथा समाने ब्रह्मणि यश्चरति स सब्रह्मचारी सहाध्यायी तस्मिंश्च प्रेते त्रिरात्रमुपरमेत् ।

असब्रह्मचारिणि त्वेकरात्रम् । अर्द्धषष्ठानिति पौषस्य रोहिण्यां मध्यमायां चाष्टकायाम् । उत्सृष्टान्यपि अर्द्धः षष्ठो येषु तान् सार्द्धपञ्चमासानधीत्योत्सृजेयुः तदुत्सर्गं कुर्युः । अर्द्धसप्तमान्वेति विकल्पः । उत्सर्गश्चात्र छन्दसामङ्गानां च । आचार्येण सह शिष्या उभाकवी इतीमामृचं जपन्ति । तदर्थः—तत्र परमेष्ठी अनुष्टुप् अश्विनौ जपे० । हे अश्विनौ युवा युवामुभा उभौ यतः कवी क्रान्तदर्शनौ । युवा युवानौ च वचनव्यत्ययः । किंच । युष्मत्संपादितो यो धर्मः नोऽस्माकं धर्मिणः परिसख्यस्य सुमित्रभावस्य परापतत् रक्षणार्थमागतः तेन धर्मेण विसख्यानि विद्वेषादीनि विषमाध्ययनादीनि वा वयं विसृजामहे त्यजामहे । किंभूतस्य सख्यस्य धर्मिणः उपकारादिधर्मवतः परस्परमनुकूलस्येत्यर्थः । त्रिरात्रमिति । अत्र त्रिरात्रं सहवासनियमः । विप्रतिष्ठा(नुवर्तत एव वि?नू )द्यत एव ॥ ११ ॥

(हरिहरः)—त्रिरात्रं नाधीयीरन् इत्यनध्यायप्रसङ्गादनध्यायानाह । 'वाते···ध्यायः' वाते वायौ प्रचण्डे वाति सति । वातमात्रस्य सर्वदा विद्यमानत्वात् नानध्यायनिमित्तता । अमावास्यायां दर्शे च सर्वानध्यायः सर्वत्र वेदेषु वेदाङ्गेषु चानध्यायः अध्ययननिवृत्तिः सर्वानध्यायः । मतान्तरे तु यद् गुरुमुखाच्छिक्ष्यते शिल्पश्रमादि तत्राप्यनध्यायः । यतः शिल्पिनः स्थपत्यादयः श्रमिणो मल्लादयः अनध्यायं मन्यमाना दृश्यन्ते । अतो यत्किंचिदुपाध्यायादधीयते श्रूयते वा शिक्ष्यते वा तत्र सर्वत्रानध्यायः । सचानध्यायः गुरोः सकाशात् अनधीताध्ययने अध्यापकधर्मप्रकरणात् न गुणनेऽपि । केचित्तु सर्वशब्दस्य गुणनादिविषयतां मन्यन्ते तन्मते नापूर्वाध्ययनं नाधीतस्याभ्यसनमपि । 'श्राद्धाश···कालम्' न केवलममावस्यायाम् अपितु श्राद्धाशने च श्राद्धान्नस्य भोजने अशने भक्षणे च उल्का ज्वालाकृतिः पतन्ती तारका, अवस्फूर्जन्ती विद्योतमाना विद्युत्, भूमिः पृथिवी तस्याश्चलनं कम्पः भूमिचलनम्, अग्निः प्रसिद्धः, उल्का च अवस्फूर्ज च भूमिचलनं च अग्निश्च उल्कावस्फूर्जद्भूमिचलनाग्नयः तेषामुत्पातः उत्पतनं तस्मिन् ऋतुसंधिषु ऋतूनां संधयः अन्तरालानि ऋतुसंधयः तेषु सर्वानध्याय इत्यनुवर्तते । किं यावत् आकालं यस्मिन्काले यस्य निमित्तस्य उल्कादेरापतनम् अपरदिने तावत्कालपर्यन्तमाकालम् । केचित्तु श्राद्धाशने यावदन्नं जीर्यते तावदनध्यायमाहुः । ऋतुसंधिशब्देन एकस्य ऋतोः अन्ते अपरस्य यावदप्रवृत्तिः स काल उच्यते तत्राकालिकता नोपपद्यते । ततश्च पूर्वस्यर्तोः अन्त्या रात्रिः उत्तरस्य आद्यमहः तावाननध्यायः । 'उत्सृ···न्ध्यं वा' उत्सृष्टेषु छन्दःसु वक्ष्यमाणेन पुनर्विधिना छन्दसामुत्सर्गे कृते अनध्यायः । अभ्रस्य मेघस्य अतिशयितस्य दर्शने आविर्भावे विद्युदभ्रवायुवृष्टिगर्जितानां युगपत्प्रवृत्तिः सर्वरूपं तस्मिन् सर्वरूपे च त्रिरात्रं त्रीण्यहोरात्राणि वा त्रिसंध्यं संध्यात्रयमनध्याय इति चकारेणानुगृह्यते । अन्येषां पक्षे (?) अभ्रदर्शने त्रिसंध्यं सर्वरूपे त्रिरात्रमिति व्यवस्थितो विकल्पः । 'भुक्त्वाऽऽ···याम्' भुक्त्वाऽशित्वा यावदार्द्रपाणिस्तावदनध्याय इत्यनुषङ्गः । उदके यावत्तिष्ठति तावत् निशायां महानिशायां 'महानिशा च विज्ञेया मध्यस्थं प्रहरद्वयमिति स्मरणात्' रात्रेः पूर्वोत्तरौ यामौ वेदाभ्यासेन तौ नयेदिति वचनेन रात्रेः पूर्वचतुर्थयामयोर्वेदाभ्यासविधानात् द्वितीयतृतीयप्रहरयोः परिशेषादनध्याय इत्यर्थान्महानिशा लभ्यते । 'संधिवेलयोः' अहोरात्रयोः संधिवेले तयोः सन्ध्याकालयोरित्यर्थः । 'अन्त···ग्रामे' अन्तर्मध्ये शवः मृतशरीरं यस्य सः तस्मिन् ग्रामे तावदनध्यायः । 'अन्त···कीर्त्ये' दिवाऽह्नि कीर्त्यं पठनीयं यत् प्रवर्ग्यादि तद्दिवाकीर्त्यं तस्मिन् दिवाकीर्त्ये विषये अन्तर्ग्राममध्ये अनध्यायः । पक्षान्तरे तु अन्तः संनिहितो दिवाकीर्त्यश्चण्डालो यत्र सोऽन्तर्दिवाकीर्त्यो देशः तत्रानध्यायः । 'धाव···त्कालम्' धावतः शीघ्रं गच्छतः अभिशस्तः ब्रह्महत्यादिपापेनाभियुक्तः पतितो ब्रह्महत्यादिना पापेन । अभिशस्तश्च पतितश्च अभिशस्तपतितौ तयोर्दर्शनम् । आश्चर्यमद्भुतम् । अभ्युदयः पुत्रजन्मविवाहादि । एतेषु धावनादिनिमित्तेषु तत्कालं यावन्निमित्तं तावत्कालमनध्यायः । 'नीहा···त्कालम्' नीहारे धूमरिकायां

वादित्राणां मृदङ्गादीनां शब्दे आर्तस्य दुःखितस्य स्वने शब्दे ग्रामस्यान्ते सीम्नि श्मशाने प्रेतभूमौ श्वा च गर्दभश्च उलूकश्च शृगालश्च साम च श्वगर्दभोलूकशृगालसामानि तेषां शब्दे श्रूयमाणे शिष्टाचरिते च शिष्टस्य श्रोत्रियस्य आचरिते आगमने तत्कालं यावत् तन्निमित्तं तावत्कालमनध्यायः। 'गुरौ...मेत्' गुरौ आचार्ये प्रेते मृते अपो जलं अभ्यवेयात्प्रविशेत्। स्नानपूर्वकमुदकदानाय दशरात्रं दशाहानि अध्ययनादुपरमेत्। 'सता...त्रम्' तानूनप्त्रं नाम सोमयागे ऋत्विजां दीक्षितस्य च आज्याभिमर्शनलक्षणं कर्म समानं तानूनप्त्रं यस्यास्तीति स सतानूनप्त्री तस्मिन् सतानूनप्त्रिणि प्रेते। समाने तुल्ये ब्रह्मणि वेदे चरति स सब्रह्मचारी तस्मिन् सब्रह्मचारिणि सहाध्यायिनि समानाचार्ये प्रेते त्रिरात्रमनध्यायः। 'एक...रिणि' न सब्रह्मचारी असब्रह्मचारी तस्मिन् असब्रह्मचारिणि भिन्नाचार्ये सहाध्यायिनि प्रेते एकरात्रमनध्यायः। 'अर्द्ध...जेयुः' अर्द्धः षष्ठो मासो येषां मासानां ते अर्द्धषष्ठा मासाः तान् मासानधीत्य पठित्वा उत्सृजेयुः। पूर्वं श्रावण्यादौ उपाकृतानि छन्दाँसि। 'अर्द्ध...न्वा' अर्द्धः सप्तमो येषान्ते अर्द्धसप्तमाः तान् अर्द्धसप्तमान् मासान् वा अधीत्य छन्दांसि उत्सृजेयुरिति पूर्वोक्तेन संबन्धः। अत्र छन्दसामुत्सर्गोपदेशात् अङ्गाध्ययनमनुज्ञायते। 'अथे...इति' आचार्येण सह शिष्याः उभाकवीयुवा इतीमामृचं जपन्ति उभाकवीयुवायोनो धर्मः परापतत्। परिसख्यानि धर्मिणो विसख्यानि विसृजामहे इति इमामृचं जपन्ति। 'त्रिरा...रन्' त्रिरात्रं सह एकत्र उषित्वा विप्रतिष्ठेरन् विप्रवासं कुर्युः विशेषेण प्रवासं कुर्युरिति सूत्रार्थः ॥ ११ ॥ ॥ * ॥

( गदाधरः )—'वाते...ध्यायः' वाते वायौ प्रचण्डे सति वातस्य सर्वदा विद्यमानत्वादतिशयितोऽत्र ग्राह्यः। सर्वशब्दाद्वाङ्गानामपि न छन्दसामेव। यद्यदुपाध्यायसकाशाद् गृह्यते शिल्पाद्यपि तत्सर्वग्रहणेन गृह्यते। शिल्पिनामपि हि अनध्यायप्रसिद्धिरस्ति। अनध्यायश्च प्रकृतत्वाद् गुरुमुखाद्यच्छिक्ष्यते तत्रैव भवति न गुणनेऽपीति। अपरे तु सर्वविषयतामिच्छन्ति। 'श्राद्धा...कालम्' आकालिका एते अनध्यायाः। आकालं यस्मिन्काले उल्कादेरापतनं अपरदिने तावत्कालपर्यन्तं श्राद्धाशने श्राद्धान्नभोजने श्राद्धान्नेऽजीर्णे इत्यपरे। उल्का ज्वालाकृतिः पतन्ती तारका। अवस्फूर्जत् विद्योतमाना विद्युत्। भूमिचलनं भूमेः कम्पः। अग्निर्ग्रामदाहः। एषामुत्पात उत्पतनं तस्मिन्। ऋतुसंधिशब्देन एकस्य ऋतोरन्तः अपरस्य यावदप्रवृत्तिः स काल उच्यते। तत्र चाकालिकता नोपपद्यते। ततश्च पूर्वस्यान्तोऽन्त्या रात्रिः उत्तरस्याद्यमहस्तावाननध्यायः। 'उत्सृ...वा' उत्सृष्टेषु छन्दःसु वेदानामुत्सर्गे कृते अभ्रदर्शनमत्रातिशयितं गृह्यते सर्वकालमभ्रस्य विद्यमानत्वात्। विद्युदभ्रवायुवृष्टिगर्जितानां युगपत्प्रवृत्तिः सर्वरूपम्। तत्रापि त्रिरात्रमनध्यायः। त्रिसंध्यं वेति विकल्पः। अभ्रदर्शने त्रिसंध्यं सर्वरूपे च त्रिरात्रमिति व्यवस्थितविकल्प इत्यन्ये। 'भुक्त्वा...कीर्त्ये' भुक्त्वा यावदार्द्रपाणिस्तावन्नाधीयीत। तथोदके यावत्तिष्ठति तावत्। निशायाम् स्मृत्यन्तरान्निशाशब्देनार्द्धरात्रमुच्यत इति कर्कः। महानिशा च विज्ञेया मध्यस्थं प्रहरद्वयमिति स्मरणात्। रात्रेः पूर्वोत्तरौ यामौ वेदाभ्यासेन तौ नयेदिति वचनेन रात्रेः पूर्वचतुर्थयामयोर्वेदाभ्यासविधानाद् द्वितीयतृतीययोः परिशेषादनध्याय इति हरिहरः। संधिवेलयोः अहोरात्रयोः संध्याकालयोः। अन्तःशवे ग्रामे ग्राममध्ये यावच्छवं मृतशरीरं भवति तावन्नाधीयीत। अन्तर्दिवाकीर्त्ये। दिवा अह्नि कीर्त्यं पठनीयं यत् प्रवर्ग्यादि तद्दिवाकीर्त्यं तस्मिन्विषये ग्रामे अनध्यायः। तद्ग्राममध्ये न पठनीयम्। सूत्रयोजनायां ग्रामपदं काकाक्षिगोलकन्यायेनोभयत्र योजनीयम्। ग्रामेऽन्तर्दिवाकीर्त्ये इति अन्येतु अन्तः संनिहितो दिवाकीर्तिश्चाण्डालो यत्र सोऽन्तर्दिवाकीर्त्यो देशस्तत्रानध्यायः। 'धाव...स्कालम्' धावतः शीघ्रं गच्छतः। अभिशस्तो ब्रह्महत्यादिपापेनाभियुक्तः पतितो ब्रह्म-

हत्यादिपापेन अभिशस्तपतितयोर्दर्शनम् । आश्चर्यमद्भुतमिन्द्रजालादि । अभ्युदयः पुत्रजन्मविवाहादि । एषु धावनादिनिमित्तेषु तत्कालं यावन्निमित्तं तावत्कालमनध्यायः । 'नीहा···तेच' नीहारे धूमरिकायाम् वादित्राणां मृदङ्गादीनां शब्दे । आर्तस्य दुःखितस्य स्वने शब्दे । ग्रामस्यान्ते सीम्नि । श्मशाने मृतकदाहभूमौ । श्वा च गर्दभश्च उलूकश्च श्रृगालश्च साम च श्वगर्दभोलूकश्रृगालसामानि तेषां शब्दे श्रूयमाणे । शिष्टाचरिते च शिष्टस्य श्रोत्रियस्याचरिते आगमने चकारात् तत्कालं यावन्निमित्तमनध्यायः । 'गुरौ···मेत' गुरौ आचार्ये प्रेते मृते अप उदकमभ्यवेयात् प्रविशेत् । स्नानपूर्वकमुदकदानाय दशरात्रं दशाहानि स्वाध्यायादध्ययनादुपरमेत् । 'सता···रात्रम्' तानूनप्त्रं ध्रौवं व्रतप्रदाने गृह्णात्यापतय इति द्विश्च स्थाल्याः स्रुवेण तानूनप्त्रमेतद्दक्षिणस्यां वेदिश्रोणौ निधायावमृशत्यृत्विजो यजमानश्चानाधृष्टमिति ज्योतिष्टोमे विहितम् । सह तानूनप्त्रमाज्यं येन स्पृष्टं स सतानूनप्त्री तस्मिन् सतानूनप्त्रिणि प्रेते । समाने तुल्ये ब्रह्मणि वेदे चरतीति सब्रह्मचारी तस्मिन् सब्रह्मचारिणि सहाध्यायिनि समानाचार्ये च प्रेते त्रिरात्रं स्वाध्यायादुपरमेत् । 'एक···रिणि' न सब्रह्मचारी असब्रह्मचारी तस्मिन् भिन्नाचार्ये प्रेते एकरात्रमनध्यायः । 'अर्द्ध···जेयुः' अर्द्धः षष्ठो मासो येषां ते अर्द्धषष्ठा मासास्तानर्द्धषष्ठान्मासानधीत्य पठित्वोत्सृजेयुः । पूर्वमुपाकृतानि स्वीकृतानि छन्दांसि उत्सृजेयुः । उत्सर्गश्छन्दसामेव । अङ्गानि पुनरधीयीत । 'अर्द्ध···त्वा' अधीत्योत्सृजेयुरिति शेषः । अर्द्धसप्तमो मासो येषु ते अर्द्धसप्तमासाः । 'अथेमा···महे इति' उत्सर्गानन्तरमाचार्येण सह शिष्या उभा कवी इतीमामृचं जपन्ति । उच्चारयन्ति । मन्त्रार्थः—हे अश्विनौ युवां उभा उभौ यतः कवी क्रान्तदर्शनौ । युवा युवानौ । युष्मत्संपादितो धर्मो नोऽस्माकं परिसख्यस्य सुमित्रभावस्य परापतत् रक्षणार्थमागतः । तेन धर्मेण विसख्यानि विद्वेषादीनि विषमाध्ययनादीनि वा विसृजाम त्यजाम । किंभूतस्य सख्यस्य धर्मिणः उपकारादिधर्मवतः परस्परमनुकूलस्येत्यर्थः । 'त्रिर···रन्' अत्र त्रिरात्रं सह एकस्मिन् गृहे आचार्यसहिताः शिष्या निवासं कृत्वा विप्रतिष्ठेरन् विविधं प्रवासं कुर्युः । त्रिरात्रं सहवासनियमः । विप्रतिष्ठात्र विद्यत एव ॥ इत्येकादशी कण्डिका ॥ ११ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

( विश्व० )—अनध्यायानाह 'वातेमावास्यायामिति' सर्वानध्यायः । प्रचण्डे वाते, अन्यथा तस्य साधारणस्य सार्वकालिकत्वात् । सर्वपदमङ्गादिपरम् । शिल्पिनामपीत्यन्ये । अपरे तु गुर्वधीनपदार्थमात्रगोचरानध्ययनमाहुः । स्वाधीनतां प्रापितस्याप्यनभ्यसनमिति केचित् । व्यस्तयोर्वातामावास्ययोरध्ययननिषेधप्रयोजकत्वे समुदितयोर्विहितश्राद्धादिव्यतिरिक्तकर्तव्यतामात्रनिषेधकतेति नव्याः । 'श्राद्धाशनेच' श्राद्धाशनदिनेऽनध्याय इत्यर्थः । 'उल्का···कालं' यस्मिन्काले उल्काद्युत्पात आपतति अपरदिनेऽपि तत्कालपर्यन्तम् । उल्का अलातम्, अवस्फूर्जो विद्युत्, चलनं क्रिया । उत्पातः अनिष्टत्वसूचकोहव(?)विशेषः । ऋतुसंधिश्च धर्मशास्त्रेषु ऋतुसंधित्वेन प्रसिद्धमहोरात्रम् । पूर्वऋतोरन्त्या रात्रिः अपरस्यतोराद्यमहरित्यन्ये । 'उत्सृ···संध्यवा' उत्सृष्टेषु छन्दःसु त्रिरात्रम् । अभ्रदर्शनमेहरभ्रदर्शनम् । सर्वरूपता च स्तनितविद्युद्वृष्ट्यादिसंघातः । तस्मिन्निमित्ते त्रिरात्रं त्रिसंध्यं वेति विकल्पः । अभ्रदर्शने त्रिसंध्यं संघाते च त्रिरात्रमिति व्यवस्थितं विकल्पमन्ये । 'भुक्त्वार्द्रपाणिः' नाधीयीतेति शेषः । 'उदके निशायां' निशायाः मध्यमौ प्रहरौ । अर्द्धरात्रमित्यन्ये । 'संधिवेलयोः' अहोरात्रस्य । 'अन्तःशवेग्रामेऽन्तः' अन्तर्मध्ये शवो यस्य तस्मिन्नन्तर्मध्ये नाधीयीत । यावद्ग्राममध्ये शवस्तावदन्तर्नाध्ययनमित्यर्थः । 'दिवाकीर्त्ये' दिवाकीर्ति-

---

१ न महद ।

श्चाण्डालः तद्ग्रामे नाधीयीत । केचित्पूर्वसूत्रस्थमन्तःपदमस्मिन्सूत्रे योजयन्ति । अन्तर्दिवाकीर्त्ये चाण्डाले ग्राममध्ये सत्यनध्यायः । दिवैव कीर्त्येत इति दिवाकीर्त्यं प्रवर्ग्यं ग्राममध्ये तस्मिञ्जायमाने तस्मिन्ग्रामेऽनध्यायमाहुः । केचित्तु दिवाकीर्तेश्चाण्डालस्य दर्शनं, दिवाकीर्त्ये तस्मिन्सत्यनध्यायमाहुः । 'धावतो···त्कालं' अभिशस्तो मिथ्याभिशस्तः पतितो ब्रह्महत्यादिना । तयोर्दर्शने तथा आश्चर्यमद्भुतदर्शनम् । अभ्युदयः पुत्रजन्मादि । एषु तत्कालं यावन्निमित्तम् । 'नीहा···तेषु च' ग्रामस्यान्ते सीम्नि श्वादीनां शब्दे श्रूयमाणे । आचरितमागमनमेषु । तत्कालमित्यनुपङ्गार्थश्चकारः । 'गुरौ···मेत्' अपोऽभ्यवेयात् प्रेतोदकक्रियां कुर्यात् । अध्ययनादुपरमेच्च दशरात्रम् । 'सता···रात्रं' तानूनप्त्रमाज्यविशेषः । सह तानूनप्त्रमाज्यं गृहीतं स्पृष्टं वा येनासौ सतानूनप्त्री तस्मिन् तथा सब्रह्मचारिणि समानाचार्योपनीते त्रिरात्रमध्ययनादुपरमेत् । 'एक···रिणि' अध्ययनमात्रं सह कुर्वाणे । 'अर्द्ध···जेयुः' अर्द्धः षष्ठो येषु तान्सार्द्धपञ्चमानित्यर्थः । एतच्च श्रावण्यामुपाकर्मपक्षे । मासवृद्धिरभ्युपेत्याह—'अर्द्धसप्तमान्वा' अर्द्धः सप्तमो येषां वाशब्दोऽवधारणे । छन्दसामुत्सर्गादङ्गाध्ययनम् । यद्वा माघाष्टकाया मध्यमत्वविवक्षयार्धसप्तमान्वेत्युक्तम् । अस्मिन्पक्षे वाशब्दो विकल्पार्थ इत्येके । 'अथेमा···मह इति' अथ उत्सर्गानन्तरमिमामुमाकत्रीयुवीवेतीमाऽऽचार्यः शिष्याश्च ऋचं जपन्तीत्यर्थः । 'त्रिरा···रन्' अत्र त्रिरात्रं सहवासनियमे विप्रवासांशेऽनुवादः । अतश्च सति प्रयोजने विप्रतिष्ठेरन् प्रवासं कुर्युः । इत्येकादशी कण्डिका ॥ ११ ॥ ॥

**पौषस्य रोहिण्यां मध्यमायां वाऽष्टकायामध्यायानुत्सृजेरन् ॥ १ ॥ उदकान्तं गत्वाऽद्भिर्देवाँश्छन्दाᳬसि वेदानृषीन्पुराणाचार्यान् गन्धर्वानितराचार्यान्संवत्सरं च सावयवं पितॄनाचार्यान्स्वाँश्च तर्पयेयुः ॥ २ ॥ सावित्रीं चतुरनुद्रुत्य विरताः स्म इति प्रब्रूयुः ॥३॥ क्षपणं प्रवचनं च पूर्ववत् ॥४॥**

( कर्कः )—'पौष···रन्' पौषमासे रोहिणीषु मध्यमाऽष्टकापि पौष एव तत्राध्यायोत्सर्गः । 'उद···येयुः' इत्येवमन्तं सूत्रम् । उदकान्तं गत्वा उदकान्ते गमनेन च स्नानमुपलक्ष्यते । ततोऽद्भिर्देवाँस्तर्पयेयुराचार्यसहिताः शिष्याः देवास्तृप्यन्तु छन्दांसि तृप्यन्त्वित्येवमादि । 'सावि···ब्रूयुः' । 'क्षप···वत्' पूर्वशब्देनोपाकर्मकालो लक्ष्यते । तद्वत्क्षपणं भवति प्रवचनं चाध्यायादीनाम् ॥ * ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

( जयरामः )—पौषमासि रोहिणीषु, मध्यमाष्टकाऽष्टकाऽपि पौष एव तत्राध्यायोत्सर्गः । कृष्णपक्षेषु सार्द्धपञ्चमासान् । उत्सर्गप्रकारमाह—उदकान्तं गत्वेति । उदकान्तगमनेन च स्नानमुपलक्ष्यते । ततोऽद्भिर्देवादींस्तर्पयेयुराचार्यसहिताः शिष्याः । देवास्तृप्यन्तां छन्दांसि तृप्यन्तामित्येवमाद्याचार्यान्तान् संतर्प्य अपसव्यं प्राचीनावीतिन आचार्यसहिता दक्षिणामुखाः स्वांश्च पित्रादीनविद्यमानानेव तर्पयेयुः । सावित्रीं चतुःकृत्वोऽनुद्रुत्य पठित्वा विरताः स्म इतीमं मन्त्रं प्रब्रूयुः उक्त्वोत्सर्गं कुर्युरित्यर्थः । विरामश्च स्वाध्यायादोपाकर्म । ततः क्षपणमनध्यायो लोमनखानामनिकृन्तनं च । प्रवचनं चाध्यायादीनां पूर्ववत् उपाकर्मवत् । ततस्त्रिरात्रानन्तरं शुक्लपक्षेषु छन्दांस्यधीयीरन् कृष्णपक्षेष्वङ्गानि । ततोऽर्द्धषष्ठान्मासानेवमेवाधीत्य सर्वोत्सृज्य उपाकृत्य चाऽधीयीतेति सिद्धम् ॥ १२ ॥

( हरिहरः )—'पौष···रन्' पौषमासस्य रोहिणीनक्षत्रे मध्यमायां पौष्या ऊर्ध्वाष्टकायां अष्टम्यां वा अध्यायान्स्वाध्यायानुत्सृजेरन् पूर्वमुपाकृतान् पुनरुपाकरणं यावन्नाधीयीरन्नित्यर्थः । 'उद···येयुः' कथमुत्सृजेरन्नित्यपेक्षायामुच्यते । उदकान्तं नद्यादुदकसमीपे गत्वा उदकसमीपग-

मनात् स्नानं लक्ष्यते । ननु मासद्वयं श्रावणादि सर्वा नद्यो रजस्वलाः । तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगा इति छन्दोगपरिशिष्टे नदीस्नानस्य निषेधात् कथं नद्याद्युच्यते । सत्यम् । उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च । चन्द्रसूर्योपरागे च रजोदोषो न विद्यत इत्यपवादवचनान्न दोषः । ततो यथाविधि स्नात्वा माध्याह्निकं कर्म देवागातु विद इत्येतत्प्राक् निर्वर्त्य सप्तर्षिपूजावंशानुपठनानन्तरं देवास्तृप्यन्तां छन्दांसि तृप्यन्तामित्येवमाचार्यान्तान् यज्ञोपवीतिनस्तर्पयेयुः आचार्यसहिताः शिष्याः ततः प्राचीनावीतिनो दक्षिणामुखा नामगोत्रोच्चारणपूर्वकं स्वांश्च पितृपितामहप्रपितामहान् तर्पयेयुः अनन्तरं स्नानवस्त्रं निष्पीड्याचम्य देवागातु विद इत्यनयर्चा समापयेयुः । 'सावि'''ब्रूयुः' ततः सावित्री तत्सवितुरित्यादिकां चतुःकृत्वोऽनुद्रुत्य पठित्वा विरताः स्म इत्याचार्यप्रमुखा शिष्याः सर्वेऽनुब्रूयुः । 'क्षप'''वत्' क्षपणं अनध्ययनं लोमनखानामनिकृन्तनं च प्रवचनं अध्यायादीनां पठनं पूर्ववत् उपाकरणकालवत् । ततस्त्रिरात्रानन्तरं शुक्लपक्षेषु छन्दांस्यधीयीरन् कृष्णपक्षेष्वङ्गानि । ततः पुनरर्द्धसप्तमासान्वाऽधीत्य एवमेवोत्सर्गं विधाय उभाकवी युवेत्यादिकां ऋचं जपित्वा त्रिरात्रमेकरात्रं वाऽवस्थाय यथेष्टं विप्रतिष्ठेरन् पृथक् पृथक् गच्छेयुः । ततः पुनरुपाकरणकाले उत्सृष्टान् वेदानुपाकृत्य अध्ययनं यावदुत्सर्गमिति सूत्रार्थः ॥ १२ ॥

( गदाधरः )—'पौष'''रन्' पौषमासस्य रोहिण्यां रोहिणीनक्षत्रे । मध्यमायामष्टकायाम् । पौष्या ऊर्ध्वमष्टम्यां वा अध्यायान् वेदान् उत्सृजेरन् पूर्वमुपाकृतान् पुनरुपाकरणं यावन्नाधीयीरन् । उत्सर्गप्रकारमाह । 'उद'''येयुः' । नद्याद्युदकान्तं उदकसमीपं गत्वा तत्र स्नात्वाऽद्भिर्देवादींस्तर्पयेयुराचार्यसहिताः शिष्याः । उदकान्तगमनेन च स्नानं लक्ष्यते । अत्र नदीरजोदोषो न भवति । तदुक्तम्—उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च । चन्द्रसूर्योपरागे च रजोदोषो न विद्यत इति । 'सावि'''ब्रूयुः' तर्पणस्यान्ते आचार्यसहिताः सर्वे शिष्याः सावित्रीं तत्सवितुरित्यृचं चतुःकृत्वोऽनुद्रुत्य पठित्वा विरताः स्म इति मन्त्रं ब्रूयुः । 'क्षप'''वत्' ततः क्षपणं अनध्ययनं लोमनखानामनिकृन्तनं च प्रवचनं चाध्यायादीनां पठनं पूर्ववत् उपाकर्मकालवत् । ततस्त्रिरात्रानन्तरं शुक्लपक्षेषु छन्दांस्यधीयीरन् कृष्णपक्षेष्वङ्गानि । ततोऽर्द्धषष्ठान्मासानर्द्धसप्तमान्वा मासानेवमेवाधीत्य सर्वत उत्सृज्य उपाकृत्य चाधीयीतेति सिद्धम् ॥ इति द्वादशी कण्डिका ॥ १२ ॥

अथ पदार्थक्रमः । पौषस्य रोहिण्यां मध्यमाष्टकायां वा पौषस्यैवाध्यायोत्सर्गः । तत्र मातृपूजापूर्वकमाभ्युदयिकं श्राद्धम् । उदकान्तगमनम् । स्नात्वाऽद्भिर्देवादितर्पणम् । देवास्तृप्यन्तु छन्दांसि तृप्यन्तु वेदास्तृप्यन्तु ऋषयस्तृप्यन्तु पुराणाचार्यास्तृप्यन्तु गन्धर्वास्तृप्यन्तु इतराचार्यास्तृप्यन्तु संवत्सरः सावयवस्तृप्यतु पितरस्तृप्यन्तु आचार्यास्तृप्यन्तु । नामगोत्रोच्चारणपूर्वकं स्वांश्च पित्रादींस्तर्पयेयुः । जीवपितृकाणां तु पितामहादितर्पणम् । ततस्तत्सवितुरित्यस्याः सावित्र्याश्चतुरनुद्रवणम् । विरताः स्म इति सकृत् ब्रूयुः । उपाकर्मवदध्यायादीनां पठनम् । त्रिरात्रमनध्यायः । लोमनखानामनिकृन्तनं च त्रिरात्रम् । ततस्त्रिरात्रादूर्ध्वं शुक्लपक्षेषु छन्दांसि अधीयीरन् कृष्णपक्षेष्वङ्गानि । ततः पुनरर्द्धषष्ठमासानधीत्यार्द्धसप्तमासान्वाऽधीत्य एवमेवोत्सर्गं विधाय उभाकवीत्यादिकामृचं जपित्वा त्रिरात्रमेकत्रावस्थाय पश्चाद्यथेष्टं पृथक् गच्छेयुः । ततः पुनरुपाकरणकाले उत्सृष्टान्वेदानुपाकृत्याध्ययनं यावदुत्सर्गम् । वृद्धाचारकारिकायां विशेषः—पौषस्य रोहिण्यामृक्षे वाऽष्टकां प्राप्य मध्यमाम् । उदकान्तं समासाद्य वेदस्योत्सर्जनं बहिः । स्नातव्यं विधिवत्तत्र स्थापयेदृष्यरुन्धती । प्रवरांश्च ततो धीमान् कुर्यात्तेषां प्रतिष्ठितिम् । इमावेवेति यजुषा नामान्येषां विनिर्दिशेत् । अङ्गिरस्तान् स्थापयेत्तत्र सप्तऋषय इत्यृचा । अर्घस्तेभ्यः प्रदातव्यः पूजनं चन्दनादिभिः । नैवेद्यैर्विविधैः पूज्या वेदस्य हितमिच्छता । ऋषीणां प्रीतये दद्यादुपवीतान्यनेकशः । प्रणम्य च मुनीन् भक्त्या पश्चात्तर्पणमाचरेत् ।

देवाच्छदांसि वेदाश्च ऋषयश्च सनातनाः । तथा—पुराणाचार्यान् गन्धर्वानितराचार्यांस्तथैव च । अहोरात्राण्यर्द्धमासा मासा ऋतव एव च । संवत्सरोऽवयवैः सार्द्धमयं पुरश्च पञ्चभिः । मन्त्रैर्द्वाभ्यां मूर्द्धेति माछन्दस्तिस्र एव च । एवं षोडशभिर्मन्त्रैः सप्तऋषय इत्येकया । चतुर्भिस्तर्पयेद्वंशैरिमावेवेत्यनेन च । सावित्रीं पाठयेच्छिष्यान् चतुःकृत्वो गुरुः स्वयम् । विरताः स्मेति पठेयुस्ते प्रणवं योजयेत्कविः । सावित्रीं त्रिः समुच्चार्य अध्यायाँश्च प्रपाठकान् । शतस्थानान्यनुस्मृत्य कण्डिकाश्च तथान्तिमाः । अन्तिमाः फक्किका ब्रूयादग्निमीळे पुरोहितम् । इषे त्वेत्यग्न आयाहि शन्नो देवीरभिष्टयः । सहनोऽस्त्विति मन्त्रं च पश्चादुभाकवीति च इति ॥ इति पदार्थक्रमः ॥

( विश्व० )—पूर्वमर्द्धषष्ठानर्द्धसप्तमान्वा मासानधीत्योत्सृजेयुरित्युक्तं, सचोत्सर्गः कथमित्यपेक्षायां ससमयं तद्विधिमाह—'पौष'''जेयुः' मध्यमाष्टका पौष्यनन्तरकृष्णाष्टमी । अपरे तु पौषीमाघ्युत्तरकृष्णाष्टम्योरुपादानमाहुः । कथमत आह—'उद'''येयुः' उदकान्तं गत्वेत्यनेन स्नानविधिर्लक्ष्यते स च वस्त्रनिष्पीडनात् प्रागग्रे तर्पणस्य करिष्यमाणत्वात्, ततश्च तर्पणकुशान् ऋषितर्पणार्थं संरक्ष्य नित्यतर्पणानन्तरं प्रवरारुन्धतीसहितान्सप्तर्षीन्संस्थाप्य प्रतिष्ठां कृत्वेमावेवेत्यालभ्य सप्तर्षय इत्युपचारैः पूजयित्वा तत्प्रीत्यर्थं द्विजेभ्योपवीतानि दत्त्वा ऋषिभ्यो नत्वा प्राक्स्थापितान्कुशानादायाद्भिर्देवादींस्तर्पयेयुरित्यन्वयः । तद्यथा । देवास्तृप्यन्तां छन्दा५ंसि तृप्यन्ताम् ऋषयः सनातनास्तृप्यन्तां पुराणाचार्यास्तृप्यन्तां गन्धर्वास्तृप्यन्ताम् इतराचार्यास्तृप्यन्तां अहोरात्राणि तृप्यन्ताम् अर्द्धमासास्तृप्यन्तां मासास्तृप्यन्ताम् ऋतवस्तृप्यन्तां संवत्सरः सावयवस्तृप्यतु तत आचार्यपितॄन् तर्पयेत् । अमुकसगोत्राः आचार्यपितरः अमुकशर्माणस्तृप्यध्वम् । अपसव्येनाञ्जलित्रयम् । एवं पितामहप्रपितामहयोस्तर्पणमाचार्यस्य । अत्रैकवचनान्त एव तर्पणे प्रयोग इत्याचार्यः । ततोऽमुकगोत्राः पितरः अमुकशर्माणस्तृप्यध्वमिति स्वपितृतर्पणम् एवं पितामहप्रपितामहयोः । अत्राप्येकवचनान्त एव प्रयोग इत्याचार्याः । ततो मण्डनकारिकान्ते आवापः । अयं पुरोभुवः ५ । मूर्द्धावयः २ । माछन्दः ३ । एवश्छन्दः १६ । सप्तऋषयः १ । चत्वारोवंशाः । इमावेव गोतमभरद्वाजौ १ । 'सावि'''ब्रूयुः' अत्र प्राङ्मुख आचार्यः । प्रत्यङ्मुखा इतरे । 'क्षपणं' त्रिरात्रमनध्यायो लोमनखानामकर्तनं चेत्यर्थः । 'प्रवचनं च' इषेत्वा कृष्णोऽसि व्रतमुपैष्यन् सवै कपालानीत्येवमादि अध्यायशतप्रपाठकांत्यकण्डिकान्त्यफक्किकादिकीर्तनम् । कथमत आह 'पूर्ववत्' अध्यायोपाकर्मवत् । अत्रापि प्रथमप्रयोगे मातृश्राद्धम् । उभाकवीत्येषा ऋक् उत्सर्गमन्त्रः । उदकसमीपे उत्सर्गः । त्रिरात्रमुत्सर्गानन्तरं तर्पणमित्यन्ये । ततस्त्रिरात्रानन्तरं शुक्लपक्षेषु वेदाध्ययनं कृष्णपक्षेष्वङ्गानीति संप्रदायः । पूर्ववदित्यनेनात्रापि त्रिरात्र५ंसहोष्य विप्रतिष्ठेरन्निति ॥ द्वादशीकण्डिका॥१२

पुण्याहे लाङ्गलयोजनं ज्येष्ठया वेन्द्रदैवत्यम् ॥ १ ॥ इन्द्रं पर्जन्यमश्विनौ मरुत उदलाकाश्यप५ं स्वातिकारी५ंसीतामनुमतिं च दध्ना तण्डुलैर्गन्धैरक्षतैरिष्ट्वाऽनडुहो मधुघृते प्राशयेत् ॥ २ ॥ सीरायुञ्जन्तीति योजयेत् ॥ ३ ॥ शुन५ंसुफाला इति कृषेत् फालं वाऽऽलभेत ॥ ४ ॥ नवाऽन्युपदेशाद्वपनानुषङ्गाच्च ॥ ५ ॥ अग्र्यमभिषिच्याकृष्टं तदाकृषेयुः ॥ ६ ॥ स्थालीपाकस्य पूर्ववद्देवता यजेदुभयोर्व्रीहियवयोः प्रवपन्सीतायज्ञे च ॥ ७ ॥ ततो ब्राह्मणभोजनम् ॥ ८ ॥ १३ ॥

( कर्कः )—'पुण्या···नम्' प्रथमं कृषिप्रवृत्तस्यैतद्भवति । पुण्याहग्रहणमापूर्यमाणपक्षोदगयनाद्यनादरार्थम् । लाङ्गलयोजनं हलयोजनमित्यर्थः । 'ज्येष्ठ···त्यम्' ज्येष्ठया वेति हेतौ तृतीया । अपुण्याहेऽपि ज्येष्ठया भवति लाङ्गलयोजनम् । कुत एतत् । इन्द्रदैवत्यं ज्येष्ठानक्षत्रं इन्द्रायत्ता च कृषिरिति । 'इन्द्रं···रिष्ट्वा' इन्द्रादिदेवताविशेषान् दध्यादिभिरिष्ट्वा । इष्ट्वेत्यनेन नमस्कारान्तैरेभिर्मन्त्रैर्बलिहरणमिन्द्राय नम इत्येवमादिभिः । 'अन···भेत' कुत एतत् । लिङ्गाच्च मन्त्रयोः । 'न वा···शात्' न चैतौ मन्त्रौ विनियोक्तव्यौ किंकारणं अग्नौ ह्येतावुपदिष्टौ न चाग्निप्रकरणपठितयोरिहोपदेशो नातिदेशः । किंच 'वप···च्च' वपनेऽपि तन्मन्त्राणामनुषङ्गः प्राप्नोति न चैतदिष्यते । 'अग्र्य···षेयुः' योऽग्र्यो वल्लभो बलीवर्दस्तस्य चाभिषेको घुर्घुरमालादिना अनेन प्रकारेणाकृष्टं कृषेयुः । 'स्थाली···जनम्' ॥ १३ ॥

( जयरामः )—पुण्याहग्रहणं चापूर्यमाणपक्षोदगयनाद्यनादरार्थम् । लाङ्गलं हलं तस्य योजनमनुसंधानम् । तच्च प्रथमकृषिप्रवृत्तस्य भवति । ज्येष्ठया वेति हेतौ तृतीया । अतोऽपुण्याहेऽपि ज्येष्ठया तद्भवति लाङ्गलयोजनम् । कुत एतत् । इन्द्रदैवत्यं हि ज्येष्ठानक्षत्रम् । इन्द्रायत्ता च कृषिरिति । इन्द्रादिदेवताविशेषान्दध्यादिभिरिष्ट्वा । इष्टिश्च नमस्कारान्तैरिन्द्राय नम इत्यादिमन्त्रैर्बलिहरणम् । ततोऽनडुहो मधुघृते प्राशयेत् । अनडुहश्चतुः प्रभृतीन् । योजनं च लाङ्गले बलीवर्दयोः सीरायुयुञ्जन्तीति मन्त्रेण । तत्र बुधो गायत्री सीरायोजने० । शुनमिति मन्त्रेण भूमिं कृषेत् फालं हलं वा लभेतेति विकल्पो मन्त्रलिङ्गात् । तत्र कुमारहरितस्त्रिष्टुप् सीताकर्षणे० न वा एतौ मन्त्रौ न वा विनियोक्तव्यौ । कुतः अग्न्युपदेशात् । यत एतावग्नावुपदिष्टौ । न चाग्निप्रकरणपठितयोरिहोपदेशो न वातिदेशः । किंच वपनानुषङ्गाच्च वपनेऽपि च तन्मन्त्राणामनुषङ्गः प्राप्नोति । नचैतदिष्यते । अग्र्यस्य श्रेष्ठस्य बलीवर्दस्याभिषेको घर्घरमालादिनाऽलंकारः । एवंप्रकारेणाकृष्टं भूभागं कृषेयुः । तदा एतत्प्रवृत्तिकाले । इदमपरं कर्मान्तरम् । स्थालीपाकस्येत्यवयवलक्षणा षष्ठी पूर्ववल्लाङ्गलयोजनोक्तदेवता इन्द्रमित्याद्या यजेत । किंकुर्वन् व्रीहियवयोः प्रवपन् पूर्ववत् सीतायज्ञे च वक्ष्यमाणे । अत्र च स्थालीपाकस्य श्रपणानुपदेशात्सिद्धस्योपादानमिति ॥ १३ ॥

( हरिहरः )—'पुण्या···नम्' प्रथमं कृषिप्रवृत्तस्यैतत्कर्मोच्यते । पुण्याहे उदगयनशुक्लपक्षादिव्युदासेन चन्द्रतारानुकूले दिवसे लाङ्गलस्य हलस्य योजनं प्रवर्तनम् । 'ज्येष्ठ···त्यम्' पक्षान्तरमाह । यद्वा अपुण्याहेऽपि ज्येष्ठया नक्षत्रेण युते लाङ्गलयोजनम् । कुतः । इन्द्रदैवत्या ज्येष्ठा यतः इन्द्रायत्ता च कृषिरिति । एतच्च मातृपूजाभ्युदयिकश्राद्धपूर्वकम् । 'इन्द्रं···येत्' तत्र इन्द्रादीननुमत्यन्तान् अष्टौ देवताविशेषान् दध्ना तण्डुलैर्गन्धैरक्षतैश्च अक्षताः यवाः इष्ट्वा नमोन्तैर्नाममन्त्रैर्बलिहरणेन संपूज्य अनडुहो वृषभान् मधुघृते मिलिते प्राशयेत् । तद्यथा । दधितण्डुलगन्धाक्षतान् पात्रे कृत्वा शुचिराचान्तः प्राङ्मुख उपविश्य कृषिक्षेत्रैकदेशे गोमयोपलिप्ते हस्तेन गृहीत्वा । इन्द्राय नमः पर्जन्याय नमः अश्विभ्यां नमः मरुद्भ्यो नमः उदलाकाश्यपाय नमः स्वातिकार्यै नमः सीतायै नमः अनुमत्यै नमः । यथामन्त्रं त्यागाः इदमादिका नमोरहिताः । इत्यष्टौ बलीन् प्राक्संस्थान् दत्त्वा ततो बलीवर्दान् मधुघृते पात्रे कृत्वा तूष्णीं प्रत्येकं प्राशयेत् लेहयेत् । 'सीरा···भेत' सीरायुञ्जन्तीत्यनयर्चा वृषभौ हले योजयेद्दक्षिणोत्तरक्रमेण शुनः सुफाला इत्यनयर्चा भूमिं कृषेत् । यद्वा शुनः सुफाला इति फालमभिमृशेत् । उभयलिङ्गत्वान्मन्त्रस्य । 'न वा···शात्' न वा एतौ योजने कर्षणे च मन्त्रौ भवतः । कुतः अग्नौ अग्निचयने एतयोरुपदेशात् । न च अग्निप्रकरणे आम्नातयोरत्रोपदेशः न वाऽतिदेशः । 'वपनानुषङ्गाच्च' इतोऽपि मन्त्रौ न भवतः । अग्निप्रकरणे बीजवपने ये मन्त्रा या ओषधीरित्याद्या विनियुक्तास्तेषामप्यत्रानुषङ्गः स्यात् । यदि लिङ्गमात्रेणोपदेशातिदेशा-

भावेऽपि विनियुज्यते तदा वपनमन्त्रा अपि तल्लिङ्गत्वाद्विनियोजनीया भवेयुः । न चैतदिष्यते । 'अग्र्य'''षेयुः' अग्र्यं श्रेष्टं बलीवर्दं अभिषिच्य गन्धमाल्यादिभिर्भूषयित्वा अकृष्टमविलिखितं यत्तत्क्षेत्रमाकृषेयुः विलिखेयुः । 'ततो'''नम्' इति लाङ्गलयोजनम् । इति सूत्रार्थः । अथ साग्निकस्य कृषिकर्मणि विशेषमाह 'स्थाली'''ज्ञे च' स्थालीपाकस्य चरोः पूर्ववल्लाङ्गलयोजनोक्तदेवता इन्द्रादिकाः यजेत किंकुर्वन् प्रवपन् सीरामुष्टिं कुर्वन् कयोः व्रीहियवयोः व्रीहियवयोर्वपनकाले । अत्र स्थालीपाकस्य श्रपणोपदेशाभावात् सिद्धस्योपादानम् । इति सूत्रार्थः ॥ ॥ अथ प्रयोगः । तत्र प्रथमप्रयोगे मातृपूजाभ्युदयिकानन्तरमावसथ्याग्नौ ब्रह्मोपवेशनादिप्राशनान्ते तण्डुलस्थाने पूर्वसिद्धं स्थालीपाकमासाद्य प्रोक्षणकाले प्रोक्षेत । तत आज्यभागानन्तरं स्थालीपाकेन लाङ्गलयोजनदेवताभ्यो जुहुयात् । तद्यथा इन्द्राय स्वाहा इदमिन्द्राय० । तथा पर्जन्याय स्वाहा इदं पर्जन्याय० अश्विभ्याᳪं स्वाहा इदमश्विभ्यां० मरुद्भ्यः स्वाहा इदं मरुद्भ्यो० । उदलाकाश्यपाय स्वाहा इदमुदलाकाश्यपाय० । स्वातिकार्यै स्वाहा इदं स्वातिकार्यै० । सीतायै स्वाहा इदं सीतायै० । अनुमत्यै स्वाहा इदमनुमत्यै० । ततोऽग्नये स्विष्टकृते स्वाहेति हुत्वा आज्येन नवाहुतीश्च हुत्वा प्रागनब्रह्मणे-दक्षिणादानब्राह्मणभोजनादि कुर्यात् । इति व्रीहियववपनकर्म । सीतायज्ञे च एता एव देवताः स्थालीपाकेन यजेदित्यतिदेशः ॥

( गदाधरः )—'पुण्या'''जनम्' यस्य कृषिकर्मण्यधिकारस्तस्येदमुच्यते । पुण्याहे उदगयने शुक्लपक्षे चन्द्राद्यनुकूलदिने लाङ्गलस्य हलस्य योजनं प्रवर्तनं भवति । प्रथमकृषिप्रवृत्तस्यैतत्कर्म भवति । उदगयने आपूर्यमाणपक्षे पुण्याह इत्यनेनैव प्राप्तत्वादत्र पुण्याहग्रहणमग्रिमसूत्रे अपुण्याहत्वद्योतनार्थम् । पक्षान्तरमाह 'ज्येष्ठ'''त्यम्' अथवा अपुण्याहेऽपि ज्येष्ठया नक्षत्रेण युते दिने लाङ्गलयोजनं भवति । प्रथमकृषिप्रवृत्तस्यैतत्कर्म भवति । उदगयन इन्द्रदैवत्यं ज्येष्ठानक्षत्रं यतः इन्द्राधीनं च कृषिकर्म वृष्टिनिमित्तत्वात् । ज्येष्ठया वेति हेतौ तृतीया । ज्येष्ठायामिन्द्रदैवत्यं वेति भर्तृयज्ञपाठः । 'इन्द्रं'''येत्' यागशब्देन देवतोद्देशेन बल्युपहार उच्यते । इन्द्रादिदेवताविशेषान्दध्ना तण्डुलैर्गन्धैरक्षतैर्यवैश्चेष्ट्वा नमोऽन्तैर्नाममन्त्रैर्बलिहरणेन संपूज्य अनडुहो बलीवर्दान्मधुघृते पात्रे कृत्वा तूष्णीं प्रत्येकं प्राशयेत् । 'सीरा'''भेत' यागानन्तरं सीरायुञ्जन्तीत्यनेन मन्त्रेण वृषभौ हले योजयेद्दक्षिणोत्तरक्रमेण । ततः शुनᳪं सुफाला इति भूमिं कृषेत् । अथवा शुनᳪं सुफाला इति फालं हलमुखमायसमभिमृशेत् । उभयलिङ्गत्वान्मन्त्रस्य । 'नवा'''शात्' न चैतौ मन्त्रौ विनियोक्तव्यौ । किंकारणम् । अग्निचयन एतावुपदिष्टौ । न चाग्निप्रकरणपठितयोरिहोपदेशो नातिदेशः । किंच 'वन'''च' अग्निचयनप्रकरणे अन्नवपने ये मन्त्रा या ओषधीरित्यादयो विनियुक्तास्तेषामप्यनुषङ्गः प्राप्नोति । यदि लिङ्गमात्रेण विनियोगः स्यात् । न चैतदिष्यते । 'अग्र्य'''षेयुः' । अग्र्यं बल्लभं बलीवर्दमभिषिच्य घुर्घुरमालादिना भूषयित्वा अकृष्टमविलिखितं यत्क्षेत्रं तत्कृषेयुः । 'स्थाली'''जनम्' इदमपरं कर्मान्तरम् । स्थालीपाकस्य श्रपणानुपदेशादत्र सिद्धस्यैव ग्रहणम् । स्थालीपाकस्य चरोः पूर्ववल्लाङ्गलयोजनोक्ता देवता इन्द्रादिका यजेत् । किंकुर्वन् प्रवपन् उप्तिं कुर्वन् । कयोः व्रीहियवयोर्वपनकाले । ततो ब्राह्मणस्य भोजनं कार्यम् ॥ इति त्रयोदशी कण्डिका ॥ १३ ॥

अथ पदार्थक्रमः । पुण्याहे लाङ्गलयोजनम् । उदगयनाद्यभावेऽपि ज्येष्ठानक्षत्रे वा मातृपूजापूर्वकमाभ्युदयिकश्राद्धम् । ततो दध्याद्यादाय लाङ्गलयोजनदेशे गमनम् तत्र स्थण्डिलानुलेपनम् । तत्र दधितण्डुलगन्धाक्षतमिश्रितैरिन्द्रादिभ्यो बलिहरणम् । हस्तेनैव । इन्द्राय नमः पर्जन्याय नमः अश्विभ्यां नमः मरुद्भ्यो नमः उदलाकाश्यपाय नमः स्वातिकार्यै नमः सीतायै नमः अनुमत्यै नमः । यथा दैवतं त्यागाः । अनडुहो मधुघृतं प्राशयेत् । ततः प्रथमबलीवर्दस्य मण्डनम् । ततोऽकृष्टे देशे

कर्षणम्। ततो ब्राह्मणभोजनम्। अथ व्रीहियवयोर्वपनकाले मातृपूजापूर्वकमाभ्युदयिकं कृत्वाऽऽवसथ्येऽग्नौ कर्म भवति। तत्र ब्रह्मोपवेशनादिप्राशनान्ते विशेषः। तण्डुलस्थाने सिद्धस्य चरोरासादनं प्रोक्षणं च। आज्यभागान्ते स्थालीपाकेन लाङ्गलयोजनदेवताभ्यो होमः। इन्द्राय स्वाहा पर्जन्याय स्वाहा अश्विभ्यां स्वाहा मरुद्भ्यः स्वाहा उदलाकाश्यपाय स्वाहा स्वातिकार्यै स्वाहा सीतायै स्वाहा अनुमत्यै स्वाहा। यथादैवतं त्यागाः। ततश्चरुणा स्विष्टकृत्। ततो भूरादिनवाहुतयः। संस्रवप्राशनम्। मार्जनम्। पवित्रप्रतिपत्तिः। दक्षिणादानम्। प्रणीताविमोकः ॥ १३ ॥

( विश्व० )—'पुण्या⋯जनं' पुण्याहपदं शुक्लपक्षायनादरार्थं तच्च न संभवति गौण्या मुख्यया वा तस्य तत्रावृत्तेः। लाङ्गलं हलं ज्योतिःशास्त्रादिपरिगृहीते उत्तमेऽह्नि हलयोजनं कुर्यादिति शेषः। पक्षान्तरमाह—'ज्येष्ठ⋯वत्यं' हेतुत्वं तृतीयार्थः। यतः ज्येष्ठानक्षत्रमिन्द्रदेवताकं कृषेश्चेन्द्राधीनत्वात्तेन ज्येष्ठायां लाङ्गलयोजने न तथा पुण्याहापेक्षा। प्रथमलाङ्गलयोजनप्रवृत्तस्य भवति। अत्रापि मातृपूजाभ्युदयिके भवतः। 'इन्द्रं⋯येत्' इन्द्रादीननुमत्यन्तान्। दध्ना तण्डुलैर्गन्धैरक्षतैरेकीकृतैरिष्ट्वा बलिदानेनेति शेषः। बलिदानं प्राक्संस्थमुदग्वा। प्राग्युदग्वीति परिभाषितत्वात्। बलिदानं चोपलिप्तायां क्षेत्रसंनिहितभुवि। ततो दधितण्डुलान्धाक्षतान् दक्षिणहस्तेनादाय इन्द्राय नमः पर्जन्याय नमः अश्विभ्यां नमः मरुद्भ्यो नमः उदलाकाश्यपाय नमः स्वातिकार्यै नमः सीतायै नमः अनुमत्यै नमः अष्टौ बलीन् दद्यात्। ततो मधुघृते पात्रे कृत्वा बलीवर्दाभ्यां प्राशयेत्। लेहयेदित्यर्थः। 'सीरा⋯येत्' लाङ्गल इति शेषः। 'शुनं⋯मेत' फालः कर्षणसाधनं लौहं कर्षणस्पर्शयोर्विकल्पार्थो वाशब्दः। इदानीं मन्त्रयोर्निषेधमाह—'नवा⋯गाय' वाशब्दः पूर्वपक्षव्यावृत्तौ। एतौ मन्त्रौ न भवतः किंतु तूष्णीमेव योजनकर्षणादि भवेत्। तत्र हेतुमाह—अग्न्युपदेशात्। अग्निः चयनं तत्र मन्त्रयोरुपदेशात्प्रकृते न भवतः। न च वाच्यमतिदेशः, अन्येषामपि धान्यादिवपनमन्त्राणां चयनोपदिष्टानां या ओषधीरित्यादीनामतिदेशापत्तेरित्याह वपनानुषङ्गाच्चेति। 'अभ्य⋯षेयुः' अभ्यं श्रेष्ठबलीवर्दमभिषिच्य घण्टादिनाऽलंकृत्य अकृष्टमविलिखितं भूभागं तदा कृषेयुः विलिखेयुः। लाङ्गलयोजनेन भूमिं वपनयोग्यां संपादयेत्। इदानीं वपनकर्तव्यतामाह—'स्थाली⋯पन्' मातृपूजाभ्युदयिके विधाय परिसमूहनाद्युपयमनप्रक्षेपान्ते विशेषः। ग्रहणे इन्द्राय पर्जन्यायाश्विभ्यां मरुद्भ्य उदलाकाश्यपाय स्वातिकार्यै सीतायै अनुमत्यै जुष्टं गृह्णामि। प्रोक्षणे त्वाशब्दोऽधिकः। आज्यभागानन्तरं स्थालीपाकस्य चरोः पूर्ववत् लाङ्गलयोजनोक्तदेवताः इन्द्रादिकाः यजेत्। किं कुर्वन्। प्रवपन् उप्तिं कुर्वन्। कयोः व्रीहियवयोरित्यन्वयः। इन्द्राय स्वाहेत्यादि अनुमत्यन्तं स्विष्टकृद्धोमादि ब्राह्मणभोजनान्तं तदनन्तरं वैश्वदेवः। 'सीतायज्ञे च' सिद्धेषु व्रीहिषु यवेषु च सीतायज्ञो भवति। स च वक्ष्यते। तत्रापीन्द्रादयोऽनुमत्यन्ता लाङ्गलयोजनदेवताः होमकर्मणा बलिदानेन च यष्टव्या इत्यतिदिश्यत इत्यर्थः। 'ततो⋯जनं' दश पञ्च वा परिशिष्टात्। एतच्च प्रवपनं व्रीह्यादीनां लौकिकाग्नौ भवतीत्यवसीयते। अन्ये तु निरग्नेरेव लौकिकाग्नौ कृतावसथ्यस्यावसथ्ये भवतीत्याहुः। इति त्रयोदशी कण्डिका ॥ १३ ॥ ॥ * ॥

अथातः श्रवणाकर्म ॥ १ ॥ श्रावण्यां पौर्णमास्याम् ॥ २ ॥ स्थालीपाकꣳ श्रपयित्वाऽक्षतधानाश्चैककपालं पुरोडाशं धानानां भूयसीः पिष्ट्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुती जुहोति ॥ ३ ॥ अपश्वेतपदाजहि पूर्वेण

चापरेण च । सप्त च वारुणीरिमाः प्रजाः सर्वाश्च राजबान्धवैः स्वाहा ॥ ४ ॥ न वै श्वेतस्याध्याचारेऽहिर्ददर्श कंचन । श्वेताय वैदर्व्याय नमः स्वाहेति ॥ ५ ॥ स्थालीपाकस्य जुहोति विष्णवे श्रवणाय श्रावण्यै पौर्णमास्यै वर्षाभ्यश्चेति ॥ ६ ॥ धानावन्तमिति धानानाम् ॥ ७ ॥ घृताक्तान्सक्तून्सर्पेभ्यो जुहोति ॥ ८ ॥ आग्नेयपाण्डुपार्थिवानाᳬं सर्पाणामधिपतये स्वाहा श्वेतवायवान्तरिक्षाणाᳬं सर्पाणामधिपतये स्वाहाऽभिभूः सौर्यदिव्यानाᳬं सर्पाणामधिपतये स्वाहेति ॥ ९ ॥ सर्वहुतमेककपालं ध्रुवाय भौमाय स्वाहेति ॥ १० ॥ प्राशनान्ते सक्तूनामेकदेशᳬं शूर्पे न्युप्योपनिष्क्रम्य बहिःशालायाः स्थण्डिलमुपलिप्योल्कायां ध्रियमाणायां माऽन्तरागमतेत्युक्त्वा वाग्यतः सर्पानवनेजयति ॥ ११ ॥ आग्नेयपाण्डुपार्थिवानाᳬं सर्पाणामधिपतेऽवनेनिक्ष्व श्वेतवायवान्तरिक्षाणाᳬं सर्पाणामधिपतेऽवनेनिक्ष्वाभिभूः सौर्यदिव्यानाᳬं सर्पाणामधिपतेऽवनेनिक्ष्वेति ॥ १२ ॥ यथाऽवनिक्तं दर्व्योपघातᳬं सक्तून्सर्पेभ्यो बलिᳬं हरति ॥ १३ ॥ आग्नेयपाण्डुपार्थिवानाᳬं सर्पाणामधिपत एष ते बलिः श्वेतवायवान्तरिक्षाणाᳬं सर्पाणामधिपत एष ते बलिरभिभूः सौर्यदिव्यानाᳬं सर्पाणामधिपत एष ते बलिरिति ॥ १४ ॥ अवनेज्य पूर्ववत्कङ्कतैः प्रलिखति ॥ १५ ॥ आग्नेयपाण्डुपार्थिवानाᳬं सर्पाणामधिपते प्रलिखस्व श्वेतवायवान्तरिक्षाणाᳬं सर्पाणामधिपते प्रलिखस्वाभिभूः सौर्यदिव्यानाᳬं सर्पाणामधिपते प्रलिखस्वेति ॥ १६ ॥ अञ्जनानुलेपनᳬं स्रजश्चाङ्क्ष्वानुलिम्पस्व स्रजोऽपिनह्यस्वेति ॥ १७ ॥ सक्तुशेषᳬं स्थण्डिले न्युप्योदपात्रेणोपनिनीयोपतिष्ठते नमोऽस्तु सर्पेभ्य इति तिसृभिः ॥ १८ ॥ स यावत्कामयेत न सर्पा अभ्युपेयुरिति तावत्सन्ततयोदधारया निवेशनं त्रिः परिषिञ्चन्परीयादपश्वेतपदा जहीति द्वाभ्याम् ॥ १९ ॥ दर्वीं शूर्पं प्रक्षाल्य प्रतप्य प्रयच्छति ॥ २० ॥ द्वारदेशे मार्जयन्त आपो हिष्ठेति तिसृभिः ॥ २१ ॥ अनुगुप्तमेतᳬं सक्तुशेषं निधाय ततोऽस्तमितेऽस्तमितेऽग्निं परिचर्य दर्व्योपघातᳬं सक्तून्सर्पेभ्यो बलिᳬं हरेदाग्रहायण्याः ॥ २२ ॥ तᳬं हरन्तं नान्तरेण गच्छेयुः ॥ २३ ॥ दर्व्याचमनं

प्रक्षाल्य निदधाति ॥ २४ ॥ धाना प्राश्नन्त्यसꣳस्यूताः ॥ २५ ॥ ततो ब्राह्मणभोजनम् ॥ २६ ॥ ॥ १४ ॥ ॥ ❀ ॥ ॥ ❀ ॥

( कर्कः )—'अथा···कर्म' व्याख्यास्यत इति सूत्रशेषः । 'श्राव···स्यां' कर्तव्यम् । 'स्थाली···शम्' तद्भूतोपादानं माभूदिति श्रपयित्वेत्युच्यते । भर्जनैककपालयोरपि प्रोक्षणं भवति । अर्थवत्प्रोक्ष्येत्यविशेषोपदेशात् । 'धाना···हीति' द्वाभ्यां मन्त्राभ्याम् । 'स्थाली···भ्यश्च' इति चतस्र आहुतयः । 'धाना···नाम्' एकाहुतिं जुहोति । 'घृता···नामिति' एतैस्त्रिभिर्मन्त्रैस्तिस्र आहुतयः । 'सर्वे···लम्' पुरोडाशम् । 'ध्रुवा···हेति' ततः स्थालीपाकधानासक्तुभ्यः स्विष्टकृत् । 'प्राश···नामिति' एभिर्मन्त्रैः शेषं निगदव्याख्यातम् । 'यथा···नामिति' एभिर्मन्त्रैः । यथाऽवनिक्तमिति । येषु देशेष्ववनेजनं कृतं तत्र तत्र बलिहरणम् । दर्व्योपघातमिति दर्व्योपहत्योपहत्येत्यर्थः । उपपूर्वो हन्तिर्ग्रहणार्थः । अथ स्रुवेणोपहत्याज्यमिति । 'अव···नामिति' प्रतिमन्त्रं प्रतिबलिहरणं प्रलेखः । 'अञ्ज···स्वेति' एभिर्मन्त्रैः प्रतिमन्त्रं यथालिङ्गं प्रतिबलिहरणं ददाति । 'सक्तु···सृभिः' ऋग्भिः सक्तुशेषं तु यत् शूर्पे न्युप्योपनीतम् । 'स···द्वाभ्याम्' मन्त्राभ्याम् । 'दर्वी···च्छति' उल्काधारस्य । प्रतपनं चोल्कायामेव संनिधानात् । 'द्वार···सृभिः' ऋग्भिः । बहुवचनोपदेशाद्ब्रह्मयजमानोल्काधाराश्च । 'अनु···यण्याः' तत इति सक्तुभ्यो दर्व्योपहत्योपहत्यास्तमितेऽस्तमितेऽग्निपरिचरणं कृत्वा बलिं हरेदाग्रहायणीं यावत् । तावद्बलिहरणमवनेजनदानप्रत्यवनेजनैः । 'तꣳ···च्छेयुः' अन्तरागमनप्रतिषेधश्च बलिहरणकर्तुरावसथ्यस्य । 'दर्व्या···धाति' प्रत्यहम् । 'धानाः···स्यूताः' अनवखण्डयन्तः । 'ततो···जनम्' इत्युक्तार्थमेव ॥ १४ ॥ ॥ ❀ ॥ ॥ ❀ ॥ ॥ ❀ ॥ ॥ ❀ ॥

( जयरामः )—'अथा···कर्म' वक्ष्यत इति सूत्रशेषः । तच्छ्रावण्यामेव पौर्णमास्यां भवति । कथमित्यत आह स्थालीपाकमिति । तद्भूतोपादानं माभूदिति श्रपयित्वेत्युक्तिः । भर्जनादीनामपि प्रोक्षणम् । अर्थवत्प्रोक्ष्येत्यविशेषोपदेशात् । धानानां मध्ये भूयसीः बह्वीर्धानाः पिष्ट्वा सक्तुत्वमापाद्य आज्याहुती द्वे हुत्वा वक्ष्यमाणमन्त्राभ्याम् । अपश्वेतेत्यादि मन्त्रद्वयं सर्पभयनिवारकम् । तदर्थः—तत्र द्वयोः प्रजापतिरनुष्टुप् गायत्र्यौ सर्प आज्यहोमे० । हे श्वेतपद गूढपद त्वं इमाः मदीयाः प्रजाः राजबान्धवैर्वासुकिप्रभृतिभिस्तथा वारुणैर्वरुणसंबन्धिभिश्च सर्पयूथैः सह जहि त्यज । पूर्वपददीर्घश्छान्दसः । हित्वा च इतः स्थानादप अपगच्छ । किं भूताः प्रजाः । सप्त सपिण्डसगोत्रसोदकत्वभेदेन सप्त सप्तपुरुषसंबन्धाः । सप्तकुलजा वा । तद्यथा । पिता माता च भार्या च दुहिता भगिनी तथा । पितृष्वसा मातृष्वसा सप्त गोत्राण्यमूनि वै इति । सर्वाश्च सकलाश्च सेवकपश्वादिरूपाः । कथं पूर्वेण पुरतः । अथापरेण पश्चात् । पूर्वोत्तराः प्रजा इति वा । वारुण्यादिभिः सह तुभ्यं सुहुतमस्तु ॥ १ ॥ एतदेवोत्तरमन्त्रेण द्रढयति । नवा इति । वै इति शब्दद्वयं अतिनिश्चयार्थकम् । श्वेतस्य श्वेतपदस्य अध्याचारे आधिपत्ये अधिकृतप्रदेशे वा । अहिः कश्चिदपि सर्पः कंचन जनं न ददर्श पापदृष्ट्या मा पश्यत्वित्यर्थः । तदर्थं श्वेताय शुद्धाय प्रसन्नाय वा नमस्कारयुक्तं स्वाहा सुहुतमस्तु । किं भूताय दर्व्याय दर्वीकराय दीर्घफणायेत्यर्थः । यद्वा वैदर्व्याय विदर्वापत्याय तदा वैशब्द एक एव । सर्पगमनमार्गे श्वेतरेखाया दृश्यमानत्वात् तस्य श्वेतपदत्वम् । मदीयनमस्कारयुजा सुहुतेन प्रीतोऽस्माकं सर्पभयं निवर्तयेति वाक्यार्थः । 'स्थाली···श्चेति' चतस्र आहुतीः । 'धानावन्तमिति' मन्त्रेण धानानामेकामाहुतिं जुहोति । तत्र घृताक्तसक्तुहोमे मन्त्रभेदेनाहुतित्रयम् । तदाह 'आग्नेयपाण्डुर्तिं' । तदर्थः । तत्र त्रयाणां परमेष्ठी यजुः सर्पाधिपतयः सर्पयागे सर्पसक्तु-

होमे० । आग्नेयाः अग्निदेवत्याः । पाण्डवः पाण्डुसंज्ञकसर्पजातीयाः । पार्थिवाः पृथिव्यां विहारिणः तेषां सर्पाणामधिपतये शेषाय वासुकये वा स्वाहा सुहुतमस्तु । तथा श्वेताः श्वेतजातीयाः वायवाः वायुदेवत्या इति यावत् अन्तरिक्षाः अन्तरिक्षविहारिणः तेषामधिपतय इति प्राग्वत् ॥ २ ॥ तथा अभिभवन्ति सर्वानित्यभिभुवः । सौर्याः सूर्यदेवत्याः । दिव्याः द्युविहाराः । अत्र सर्वत्र द्वन्द्वसमासः । तेषाम् । अभिभूरित्यत्र विसर्गश्छान्दसः ॥ ३ ॥ अवनेजनबलिहरणप्रत्यवनेजनकङ्कतप्रलेखनाञ्जनानुलेपनस्रजश्चाप्येवमेव व्याख्येयाः । सर्वहुतं चापरिशेषितं सकलमित्यर्थः । तत्र चैकाऽऽहुतिः । सर्वहुतमेककपालं पुरोडाशं ध्रुवाय भौमाय स्वाहेति जुहोति । ततः स्थालीपाकधानासक्तुभ्यः स्विष्टकृद्धोमः । प्राशनान्ते सक्तूनामेकदेशं शूर्पे न्युप्य प्रक्षिप्य ब्रह्मोल्काधाराभ्यां सह शालाया बहिः निष्क्रमणम् उपनिष्क्रम्य बहिः शालायां स्थण्डिलमुपलिप्य स्वयमेव । उल्का च लौकिकाग्निसंभूता अन्तरागमनं च यजमानशालाग्न्योरेव । माऽन्तरागमतेति प्रैषमुक्त्वा वाग्यतः स्थण्डिले सर्पानवनेजयति आग्नेयादिभिर्मन्त्रैः प्रतिमन्त्रम् । शेषं निगदव्याख्यातम् । यथाऽवनिक्तमिति यत्र यत्र देशेऽवनेजनं कृतं तत्र तत्र बलिहरणम् । दर्व्योपघातं दर्व्योपहत्येत्यर्थः । उपपूर्वो हन्तिश्च ग्रहणार्थः । अथ स्रुवेणोपहत्याज्यमिति च । प्रलेखनं च क्रमेण प्रतिमन्त्रम् । बलिकण्डूयनं कङ्कतैस्तानि च वैकङ्कतीयानि प्रादेशमात्राण्येतानि काष्ठानि भवन्ति । अञ्जनादीनि च प्रतिमन्त्रं यथा(लि)ङ्गं प्रतिबलिहरणं ददाति । सक्तुशेषं च शूर्पे उपनीतं स्थण्डिले न्युप्य स्रुवेण क्षित्वा उपनिनीय आप्लाव्य उपस्थानं नमोऽस्तु सर्पेभ्य इति तिसृभिर्ऋग्भिः । तत्र तिसृणां प्रजापतिरनुष्टुप् सर्पस्तदुपस्थाने० । स यावत्कामयेत एतावन्तं देशं न सर्पा अभ्युपेयुरिति निवेशनं गृहं प्रति तावन्तं गृहदेशं संततयोदकधारया भूभागं त्रिः परिषिञ्चन् परीयात् परिक्रामेत् । अपश्वेतपदा जहीति द्वाभ्यां पूर्वोक्तमन्त्राभ्याम् । सक्तून्मन्त्रेण परिगमनं द्विस्तूष्णीम् । 'दर्वी···च्छति' उल्काधाराय । प्रतपनं चोल्कायामेव संनिधानात् । द्वारदेशे स्थित्वा आत्मानमद्भिः मार्जयन्ते आपोहिष्ठेति तिसृभिर्ऋग्भिः । बहुवचनोपदेशात् [ अनेन ] ब्रह्मयजमानोल्काधाराश्च । एतं प्रकृतम् । 'अनु···यण्याः' आग्रहायणीं यावत् । बलिहरणं चावनेजनदानप्रत्यवनेजनैः । 'तर्ह···च्छेयुः' अन्तरागमनप्रतिषेधश्च बलिहरणकर्तुरावसथ्यस्य च । दर्व्याचमनं मुखं प्रक्षाल्यनिदधाति प्रत्यहम् । दर्वीग्रहणान्न शूर्पस्य प्रक्षालनम् । 'धानाः···स्यूताः' अनवखण्डयन्त इत्यर्थः । तत एकं ब्राह्मणं कर्माङ्गं भोजयेत् ॥ १४ ॥ ॥ * ॥ ॥ * ॥

( हरिहरः )—'अथा···कर्म' अथेदानीमावसथ्याग्निसाध्यकर्मणां प्रकृतत्वात् श्रवणाकर्मोच्यत इति शेषः । 'श्राव···स्याम्' तत्र श्रावणमासस्य शुक्लपञ्चदश्यां कर्तव्यम् । 'स्थाली···डाशम्' स्थालीपाकं चरुम् अक्षतधानाः अक्षतानां सतुषाणां यवानां धानाः अक्षतधानाः ताश्च श्रपयित्वा एककपालमेकस्मिन्कपाले श्रप्यत इत्येककपालं तं पुरोडाशं श्रपयित्वेत्यनुषज्यते अन्यथा तद्भूतोपादानं स्यात् । अतश्च धानापुरोडाशयोः श्रपणोपदेशात् भर्जनकपालयोरपि आसादने प्रोक्षणे भवतः, अर्थवतां प्रोक्षणमविशेषेणोपदिश्यते । 'धाना···स्वाहेति' धानानां भर्जितानां यवानां मध्ये भूयसीः बह्वीः पिष्ट्वा सक्तुत्वमापाद्य आज्यभागौ हुत्वा अपश्वेतपदा जहि नवै श्वेतस्याध्याचार इति द्वाभ्यां मन्त्राभ्यां द्वे आज्याहुती जुहोति । 'स्थाली···भ्यश्चेति' अनन्तरं स्थालीपाकस्य चरोश्चतस्र आहुतीर्जुहोति यथा विष्णवे स्वाहेत्येवमादिभिश्चतुर्भिर्मन्त्रैः । 'धाना···नाम्' धानावन्तं करम्भिणमित्यनयर्चा धानानामेकामाहुतिं जुहोति । 'घृता···स्वाहेति' घृतेन आज्येन अक्ताः अभिघारिताः घृताक्ताः तान् सक्तून् सर्पेभ्य आग्नेयपाण्डुपार्थिवेत्यादिभिर्मन्त्रैः प्रतिमन्त्रमेकैकामेवं तिस्र आहुतीर्जुहोति । 'सर्व···स्वाहेति' तत एककपालं पुरोडाशं सर्वहुतं यथा भवति

तथा ध्रुवाय भौमाय स्वाहेत्यनेन मन्त्रेण जुहोति । ततः स्थालीपाकधानासक्तुभ्यः स्विष्टकृद्धोमः । 'प्राश…येति' प्राशनान्ते संस्रवप्राशनानन्तरं सक्तूनामेकदेशं वलित्रयपर्याप्तं शूर्पे शरेषिकावंशान्यतममये इच्छापरिमाणे न्युप्य कृत्वा उपनिष्क्रम्य शालायाः सकाशान्निर्गत्य वहिरङ्गणे स्थण्डिलं भूमिं स्वयमेव गोमयेनोपलिप्य । अत्र सर्पानवनेजयतीत्यस्याः क्रियाया उपलेपनक्रियायाश्चैककर्तृकत्वेन पूर्वकालीनस्योपलेपनस्य ल्यवन्तत्वम् । समानकर्तृकयोः पूर्वकाले इति पाणिनिना ल्यपः स्मरणात् । तेनात्र स्थण्डिलस्य स्वयं पूर्वमुपलेपनम् । उल्कायां ध्रियमाणायां ज्वलति काष्ठेऽन्येन ध्रियमाणे माऽन्तरागमत आवसथ्यस्य मम चान्तराले मागच्छत इत्युक्त्वा अभिधाय वाग्यतो मौनी सर्पान् आग्नेय श्वेत अभिभूरित्यादिभिस्त्रिभिर्मन्त्रैरवनेनिक्ष्वेत्येतदन्तैः प्राक्संस्थानवनेजयति अवनिक्तान् शुचीन् करोति । 'यथा…लिरिति' यथाऽवनिक्तं येषु देशेषु अवनेजनं कृतं यथाऽवनिक्तं अवनिक्तमनतिक्रम्येत्यर्थः । दर्व्या प्रादेशमात्रया ह्यङ्गुष्ठपर्वविस्तीर्णया पलाशाद्यन्यतमयज्ञियवृक्षोद्भवया उपघातमुपहत्योपहत्य गृहीत्वा आग्नेयेत्यादिभिस्त्रिभिर्मन्त्रैरेष ते वलिरित्येतदन्तैः प्रतिमन्त्रं सर्पेभ्यो वलिं हरति ददाति । उपघातमिति णमुल्प्रत्ययान्तः उपपूर्वो हन्तिर्ग्रहणार्थः । अथ स्रुवेणोपहत्याज्यमितिवत् । 'अव…स्व' इत्यन्तम् । अवनेज्य अवनेजनं दत्वा कथं पूर्ववत्कङ्कतैर्वै प्रादेशमात्रैस्त्रिभिरेकतोदन्तैः समुच्चितैराग्नेयेत्यादिभिस्त्रिभिर्मन्त्रैः प्रलिखस्वेत्यन्तैर्यथासङ्ख्यं प्रतिवलि प्रलिखति कण्डूयति । 'अञ्ज…स्वेति' अञ्जनं कज्जलं लौकिकदीपजं त्रैककुदं सौवीरमिति प्रसिद्धं वा । अनुलेपनं सुरभिचन्दनादि स्रजः पुष्पमालाः आग्नेयेत्यादिभिस्त्रिभिर्मन्त्रैरञ्जस्व अनुलिम्पस्व स्रजोऽपिनह्यस्वेत्यन्तैः प्रतिमन्त्रं प्रतिवलिहरणमेकैकं यथाक्रमं ददाति । 'सक्तु…स्तृभिः' सक्तुशेषं यच्छूर्पे न्युप्यानीतं वल्यर्थं वलिदानायोपलिप्तैकदेशे न्युप्य शूर्पेणैव क्षिप्त्वा उदपात्रेण जलपात्रेण उपनिनीय प्रवाह्य नमोऽस्तु सर्पेभ्य इति तिसृभिर्ऋग्भिः सर्पानुपतिष्ठते । वल्यभिमुखस्तिष्ठन् प्राङ्मुखस्तिष्ठन् सर्पानुपतिष्ठते स्तौति । 'स या…द्वाभ्यां' स गृहपतिः यावत् यावन्तं देशं सर्पाः नागाः नाभ्युपेयुर्न संचरेयुरिति कामयेत इच्छेत् तावत् तावन्तं देशं सन्ततया अनवच्छिन्नया उदधारया सलिलधारया निवेशनं गृहं परिषिञ्चन् त्रिः परीयात् त्रीन्वारान् गृहस्य समन्तात्प्रादक्षिण्येन परिक्रम्य गच्छेत् कथम् अपश्वेतपदा जहीति द्वाभ्यां मन्त्राभ्याम् । 'दर्वीं…च्छति' दर्वीं पूर्वोक्तां शूर्पं च प्रक्षाल्य क्षालयित्वा प्रतप्य सन्तापयित्वा संनिधानादुल्कायामेव प्रयच्छति ददाति उल्काधाराय सन्निधानादेव । 'द्वार…स्तृभिः' द्वारदेशे शालायाः द्वारे आपोहिष्ठेति तिसृभिर्ऋग्भिः मार्जयन्ते । वहुवचनोपदेशात् ब्रह्मयजमानोल्काधाराः मार्जयन्ते अद्भिरात्मानमभिषिञ्चन्ति । 'अनु…यण्याः' एतं प्रकृतं सक्तुशेषं होमावशिष्टान् सक्तून् अनुगुप्तं सुरक्षितं यथा भवति तथा निधाय स्थापयित्वा ततस्तस्मात् श्रवणाकर्मकालात् प्रभृति अस्तमिते सूर्ये प्रतिदिनमग्निमावसथ्यं परिचर्य सायंहोमेन आराध्य दर्व्योपघातं शूर्पे न्युप्तान् सक्तून्सर्पेभ्य उक्तप्रकारेणैव वलिं हरति किमवधि आऽऽग्रहायण्याः आग्रहायणीं पौर्णमासीं यावत् । अथवा आग्रहायणीशब्देन तत्कालावधिकमाग्रहायणीकर्म लक्ष्यते तत्र हि वलीनामुत्सर्गस्य वक्ष्यमाणत्वात् । भाष्यकारस्तु तत इति तेभ्यः सक्तुभ्यः दर्व्योपहत्योपहत्यास्तमितेऽस्तमिते अग्निपरिचरणं कृत्वा वलिं हरेदाग्रहायणीं यावदित्याह स्म । वलिहरणं च अवनेजनदानप्रत्यवनेजनैः कङ्कतविलेखनान्तैरेव । 'तदं…च्छेयुः' तं गृहपतिं वलीन् हरन्तं आवसथ्याग्निं अन्तरेण मध्ये न गच्छेयुः प्राणिनः ततः श्वादयोऽपि निवार्याः । 'दर्व्या…धाति' दर्व्या आचमनं मुखं प्रक्षाल्य निदधाति स्थापयति प्रत्यहं दर्वीमुखप्रक्षालनोपदेशाच्छूर्पप्रक्षालनाभावः । 'धाना…स्यूताः' धाना भर्जितान् यवान् प्राश्नन्ति भक्षयन्ति वहुवचनोपदेशात् ब्रह्मयजमानोल्काधाराः । कथं भूत

धानाः असछंस्यूताः दन्तैरलग्ना अचर्वयन्त इत्यर्थः। 'ततो'''नम्'। इति सूत्रार्थः॥ ॥ अथ प्रयोगः। तत्र श्रावण्यां पूर्णिमायां श्रवणाकर्म। तस्य प्रथमप्रयोगे मातृपूजापूर्वकमाभ्युदयिकं विधायावसथ्याग्नौ कर्म कुर्यात्। तद्यथा ब्रह्मोपवेशनादिप्राशनान्ते अयं विशेषः—चरुस्थाल्यनन्तरं भर्जनकर्परं तत एकं कपालं तथा तण्डुलानन्तरं यवान् ततस्तण्डुलपिष्टान्यासादयेत्। प्रोक्षणकाले यथासादितं प्रोक्षेत् उपकल्पितं च दृषदुपले शूर्पोल्के उदपात्रदर्व्यौ कङ्कतत्रयमञ्जनमनुलेपनं स्रजश्चेति ततः पवित्रकरणादिप्रोक्षणीनिधानान्ते चरुदेशस्योत्तरतो भर्जनमधिश्रित्य तदुत्तरतः कपालमुपधाय आज्यं निरुप्य चरुपात्रे प्रणीतोदकासेचनपूर्वकं तण्डुलप्रक्षेपं कृत्वा प्रणीतोदकेन पिष्टं संयूय पुरोडाशं कृत्वा ब्रह्मद्वारा आज्यमधिश्रित्य स्वयं चरुमन्येन भर्जने यवान् अपरेणैककपाले पुरोडाशमधिश्रित्य पुरोडाशं प्रथयित्वा यावत्कपालं, सर्वेषां पर्यग्निकरणं कुर्यात्। ततः स्रुवं संस्कृत्याज्यमुद्वास्य चरुं चोद्वास्याज्यस्योत्तरतः स्थापयित्वा धाना उद्वास्य चरोरुत्तरतो निधाय पुरोडाशमुद्वास्य धानानामुत्तरतः स्थापयेत्। तत आज्योत्पवनावेक्षणप्रोक्षण्युत्पवनानि कृत्वा धानानां भूयसीर्धाना दृषदुपलाभ्यां पिष्ट्वा अल्पाः पृथक् स्थापयित्वा घृतेन सक्तून् अक्त्वा उपयमनकुशादानाद्याज्यभागान्तं कर्म कुर्यात्। तत आज्येन अपश्वेतपदा जहि पूर्वेण चापरेण च। सप्त च वारुणीरिमाः प्रजाः सर्वाश्च राजबान्धवैः स्वाहेति इदं श्वेतपदे इति त्यागं विधाय, नवै श्वेतस्याद्ध्याचारेऽहिर्ददर्श कंचन श्वेताय वैदर्व्याय नमः स्वाहेति मन्त्रेण द्वितीयामाहुतिं हुत्वा इदं श्वेताय वैदर्व्यायेति त्यक्त्वा स्थालीपाकेन चतस्र आहुतीर्जुहोति। तद्यथा विष्णवे स्वाहा इदं विष्णवे० श्रवणाय स्वाहा इदं श्रवणाय० श्रावण्यै पौर्णमास्यै स्वाहा इदं श्रावण्यै पौर्णमास्यै० वर्षाभ्यः स्वाहा इदं वर्षाभ्यो० इति। अथ धानावन्तं करम्भिणमित्यृचा धानानामेकाहुतिं हुत्वा इदमिन्द्रायेति त्यक्त्वा सक्तूनामाहुतित्रितयं जुहुयात्। तद्यथा आग्नेयपाण्डुपार्थिवानाछं सर्पाणामधिपतये स्वाहा। इदंशब्दयुक्तः स्वाहाकाररहितो मन्त्र एव त्यागः। एवं त्रिषु। श्वेतवायवान्तरिक्षाणाछं सर्पाणामधिपतये स्वाहा। अभिभूः सौर्यदिव्यानाछं सर्पाणामधिपतये स्वाहा। ततो ध्रुवाय भौमाय स्वाहेति सर्वं पुरोडाशं स्रुवे कृत्वा जुहुयात्। इदं ध्रुवाय भौमायेति त्यक्त्वा चरुधानासक्तुभ्य उत्तरतः किंचित्किंचिदादाय स्विष्टकृतं विधाय महाव्याहृतिहोमं संस्रवप्राशनं ब्रह्मणे दक्षिणादानान्तं कुर्यात्। अथ हुतशेषसक्तूनामेकदेशं शूर्पे प्रक्षिप्योदपात्रं दर्वीकङ्कतत्रयाञ्जनानुलेपनस्रजश्च। शालाया बहिर्निष्क्रम्य ब्रह्मणा उल्काधारेण च सह स्वाङ्गणे हस्तमात्रं स्थण्डिलं स्वयमुपलिप्य लौकिकाग्न्युल्कायां ध्रियमाणायां माऽन्तरागमतेति प्रैषमुच्चार्यवाग्यतः स्थण्डिले उदपात्रमादायाग्नेय इत्यादिना अधिपतेऽवनेनिक्ष्वेत्यन्तेन मन्त्रेण एकत्रावनेजनार्थं जलं दत्वा श्वेतवायवेत्यादिना अधिपते ऽवनेनिक्ष्वेत्यन्तेन द्वितीयम्, अभिभूः-सौर्येत्यादिना तथैव तृतीयं, सर्पानवनेजयति। ततोऽवनेजनस्थानेषु अवनेजनक्रमेण एतैरेव मन्त्रैरेषते बलिरित्यन्तैस्त्रिभिः प्रतिमन्त्रं बलिं हरति। ततः पूर्ववदवनेज्य कङ्कतत्रयेण प्रलिखस्वेत्यन्तैरेतैरेव मन्त्रैः प्रतिबलिं प्रतिमन्त्रं प्रलिखति। ततोऽञ्जस्वेत्यन्तैरुक्तमन्त्रैः प्रतिबलिं प्रतिमन्त्रमञ्जनं ददाति तथैवानुलिम्पस्वेत्यनुलेपनम्। एवमेव स्रजोऽपिनह्यस्वेति पुष्पमालां दत्वा सक्तुशेषं स्थण्डिले क्षिप्त्वा उदपात्रजलेन प्रसंप्लाव्य नमोऽस्तु सर्पेभ्य इत्यादिभिस्तिसृभिर्ऋग्भिस्तिष्ठन् सर्पानुपतिष्ठते। ततः स गृहपतिरेतावन्तं देशं सर्पा न प्रविशेयुरिति यावन्तं कामयेत तावन्तं देशं संततोदकधारया त्रिःपरिषिञ्चन् गृहं परीयात् अपश्वेतपदाजहीति पूर्वोक्तमन्त्राभ्यां सकृत् द्विस्तूष्णीम्। ततो दर्वीं शूर्पं च प्रक्षाल्योल्कायां सकृत्प्रतप्योल्काधाराय प्रयच्छति। अथ शालाद्वारि आपोहिष्ठेति तृचेन ब्रह्मयजमानोल्काधारा मार्जयन्ते जलेनात्मानम्। ततो धानाः प्राश्नन्ति ब्रह्मयजमानोल्काधारा अनवखण्डयन्तः। ततो ब्राह्मणभोजनम्। एतावच्छ्रवणाकर्म॥ ॥ अथ प्रत्यहं

बलिहरणप्रयोगः । सक्तुशेषं सुगुप्ते भाण्डे स्थापयित्वा ततोऽस्तमिते सूर्ये कृतसायंहोमः शूर्पे सक्तुदर्वीकङ्कतत्रयं निधायोदपात्रं गृहीत्वा सोल्काधारः शालाया बहिरुपलेपनादि परिलेखनान्तं बलिहरणमनुदिनं पूर्ववत्कुर्यात् आग्रहायणीं यावत् । मान्तरागमतेति प्रैषाभावेऽपि कश्चिदन्तरा न गच्छेत् दर्वीमुखमेव प्रक्षालयेदिति । इत्यहरहर्बलिदानविधिः ॥ ॥ * ॥

( गदाधरः )—'अथा···कर्म' श्रवणाकर्मेति वक्ष्यमाणस्य कर्मणो नामधेयम् । व्याख्यास्यत इति सूत्रशेषः । 'श्राव···स्याम्' तत्कर्म श्रावणशुक्लपञ्चदश्यां भवति । अस्य कर्मणो गौणकालो न भवति । तदुक्तं कारिकायाम्—श्रावण्यामेव तत्कार्यमभावाद्गौणकालतः । परिसंख्योक्तितः सूत्रकारस्यान्यस्मृतेर्बलात् । यावज्जीवं पाकयज्ञानुष्ठानं सकृद्वेति तत्रैवोक्तम् । वचनात्सूत्रकारस्य सकृदस्य क्रिया भवेत् । एवमेवोत्तरेषां स्यादावृत्तिर्वा स्मृतेर्बलात् । सकृत्करणमिच्छन्ति तत्रावृत्तिः सतां मतात् । तथा—यावज्जीवं पाकयज्ञैर्यजेत्संवत्सरेण चेति । 'स्थाली···शम्' स्थालीपाकं चरुं श्रपयित्वा अक्षतानां सतुषयवानां धाना अक्षतधानास्ताश्च श्रपयित्वा एकस्मिन् कपाले श्रप्यत इत्येककपालस्तं च पुरोडाशं श्रपयित्वा । चरुधानापुरोडाशानां सिद्धानामुपादानं माभूदिति श्रपयित्वेति ग्रहणम् । भर्जनैककपालयोरप्यासादनप्रोक्षणे भवतः, अर्थवदासाद्यार्थवत्प्रोक्ष्येत्यविशेषोपदेशात् । पुरोडाशस्य श्रपणमात्रोपदेशात्पेषणानुपदेशाच्च लौकिकपिष्टानामासादनम् । 'धाना···स्वाहेति' धानानां मध्ये भूयसीर्बह्वीर्धानाः पिष्ट्वा पेषणेन सक्तुत्वं संपाद्याज्यभागौ हुत्वा आज्येनाहुती द्वे जुहोत्यपश्वेतपदाजहीति द्वाभ्यां मन्त्राभ्याम् । तत्रापश्वेतपदा जहीति प्रथमां, न वै श्वेतस्येति द्वितीयाम् । मन्त्रार्थः—हे श्वेतपद त्वमिमा मदीयाः प्रजाः मम निवासभूमेः पूर्वेण भागेन अपरेण च पश्चाद्भागेन च जहि स्वजातिजनितमालिन्यधर्मात् परित्यज । अस्मात् स्थानाच्च स्थानान्तरं व्रज । किंभूताः प्रजाः सप्त च सपिण्डसगोत्रसोदकत्वभेदेन सप्तसप्तपुरुषसंबन्धाः सप्त कुलजा वा । तद्यथा पिता माता च भार्या च दुहिता भगिनी तथा । पितृष्वसा मातृष्वसा सप्त गोत्राण्यमूनि वै इति । वारुणैर्वरुणायत्तैर्नागैर्मदीयाः प्रजाः परित्यज । सर्वाः सेवकपश्वादिरूपाः राजबान्धवैर्नागैः राजा तक्षको वासुकिः शेषो वा तस्य ये बान्धवास्तैः सह त्यज । एतैः सह सदा तुभ्यं सुहुतमस्तु हविःसंपादनमस्तु ॥ १ ॥ पूर्वोक्तमेव द्रढयति । वै निश्चयेन । श्वेतस्य नागस्याध्याचारे आधिपत्ये अहिः सर्पजातीयः कंचन लोकं प्राणिजातीयं न पश्यतिस्म पापदृष्ट्या । अनेन कर्मणा स्थानत्यागात् तदर्थं श्वेताय शुद्धाय नागाय नमस्कारपूर्वकं सुहुतमस्तु । किंभूताय नागाय वैदर्व्याय विदर्वापत्याय । 'स्थाली···श्चेति' ततो विष्णवे स्वाहेत्येवमादिभिश्चतुर्भिर्मन्त्रैः स्थालीपाकस्य चरोश्चतस्र आहुतीर्जुहोति । 'धाना···नाम्' ततो धानावन्तं करम्भिणमित्यनयर्चा स्रुवेण धानानामेकाहुतिं जुहोति । 'घृता···स्वाहेति' घृतेनाक्तान् अभिघारितान् सक्तून् सर्पेभ्यो मन्त्रोक्तेभ्य आग्नेयपाण्डुपार्थिवानामिति त्रिभिर्मन्त्रैस्तिस्र आहुतीर्जुहोति । मन्त्रार्थः—आग्नेयाः अग्निदेवत्याः पाण्डवाः पाण्डुजातीयाः पार्थिवा पृथिवीविहारिणः तेषां सर्पाणामधिपतये शेषाय वासुकये वा स्वाहा सुहुतमस्तु ॥ १ ॥ श्वेताः श्वेतजातीयाः वायवाः वायुदेवत्या इति यावत् । आन्तरिक्षा अन्तरिक्षविहारास्तेषामधिपतय इति प्राग्वत् ॥ २ ॥ तथा अभिसवन्ति सर्वानित्यभिसुवः सौर्याः सूर्यदेवत्याः दिव्या दिवि विहारास्तेषाम् । अभिभूरिति विसर्गश्छान्दसः ॥ ३ ॥ 'सर्व···स्वाहेति' सक्तुहोमोत्तरमेककपालं पुरोडाशं सर्वहुतं संपूर्णं हुतं यथा भवति तथा ध्रुवाय भौमाय स्वाहेत्यनेन मन्त्रेण जुहोति । ततः स्विष्टकृद्धोमः स्थालीपाकधानासक्तुभ्यः । सर्वहुत एककपाल इति परिभाषितत्वादत्रावाच्यं सर्वहुतमेककपालमिति । वाच्यं वा पाकयज्ञेष्ववत्तस्यासर्वहोम इति सूत्रेण संस्रवनिधानं प्राप्तं तद्व्युदासार्थम् । 'प्राश···निश्चेति' संस्रवप्राशनान्ते पूर्वकृतसक्तूनामेकदेशं बलित्रयपर्याप्तं नव-

वेणुशरेषीकान्यतममये शूर्पे न्युप्य कृत्वा उपनिष्क्रम्य शालायाः सकाशान्निर्गत्य बहिः प्राङ्गणे स्थण्डिलभूमिं गोमयेनोपलिप्योल्कायां ध्रियमाणायां ज्वलत्काष्ठे अन्येन ध्रियमाणे माऽन्तरागमतेत्यभिधाय वाग्यतः आग्नेयपाण्डुपार्थिवानामिति त्रिभिर्मन्त्रैः सर्पान् प्राक्संस्थान् अवनेजयति भूमावुदकप्रक्षेपेणावनिक्तान् शुचीन् करोति । माऽन्तरागमत आवसथ्यस्य मम चान्तराले मा गच्छतेत्यर्थः । अत्र शूर्पं चर्मतन्तुबद्धमपि ग्राह्यमेव शूर्पस्वरूपस्य तथा प्रसिद्धत्वात् । उल्का च लौकिकाग्निना कार्या । विषये लौकिकमुपयुक्तत्वादिति कात्यायनोक्तेः । 'यथा' ''लिरिति' येषु देशेषु अवनेजनं कृतं तदनतिक्रम्य यथाऽवनिक्तं दर्व्या प्रसिद्धया उपघातं उपहत्योपहत्य गृहीत्वा आग्नेयेत्यादिभिर्मन्त्रैः प्रतिमन्त्रं सर्पेभ्यो बलिं हरति ददाति । उपपूर्वो हन्तिर्ग्रहणार्थः । अथ स्रुवेणोपहत्याज्यमितिवत् । 'अव' ''खस्वेति' । तत आग्नेयेत्यादिमन्त्रैः पूर्ववदवनेजनं कृत्वा कङ्कतैस्त्रिभिर्वैकङ्कतीयैः प्रादेशप्रमाणैरेकतोदन्तैः सगुम्बितैराग्नेयेत्यादित्रिभिर्मन्त्रैर्यथासंख्यं दत्तबलिं प्रलिखति कण्डूयति । 'अञ्ज' ''ह्यस्वेति' अञ्जनं सौवीराञ्जनं लौकिकदीपजं कज्जलं वा । अनुलेपनं चन्दनादि । स्रजः पुष्पमालाः । आग्नेयेत्यादित्रिभिर्मन्त्रैरञ्जस्वानुलिम्पस्व स्रजोऽपिनह्यस्वेत्यन्तैः प्रतिमन्त्रं प्रतिबलि यथाक्रममेकैकं ददाति । 'सक्तु' ''सृभिः' सक्तुशेषं बल्यर्थं यत्पूर्वं शूर्पे कृत्वा आनीतं बलिदानावशिष्टं तत्स्थण्डिले उपलिप्तायां भूमौ शूर्पेणैव न्युप्य प्रक्षिप्योदपात्रेणोपनिनीय आप्लाव्य नमोऽस्तु सर्पेभ्य इति तिसृभिर्ऋग्भिः बलिमुपतिष्ठते । बलिसमीपे तिष्ठन् मन्त्रं पठतीत्यर्थः । 'स या' ''द्वाभ्याम्' स यजमानो यावत् यावन्तं देशं सर्पा नाभ्युपेयुर्नागच्छेयुरिति कामयेत इच्छेत् तावत् तावन्तं देशं भूभागं संततया अनवच्छिन्नया जलधारया निवेशनं गृहमपश्वेतपदा जहीति पूर्वोक्ताभ्यां मन्त्राभ्यां परिषिञ्चन् त्रिः परीयात् । त्रीन्वारान् गृहस्य परितः प्रादक्षिण्येन गच्छेत् । सकृन्मन्त्रेण परिगमनम् । द्विस्तूष्णीम् । तत इतरथावृत्तिः । कर्त्रन्तरस्यानुपदेशात्स्वयंकर्तृकाणि स्मार्तानि कर्माणि तत्र स इत्युच्यमाने तस्यैव प्राप्नुवन्ति । काम्येषु तु पुनर्ग्रहणं नियमार्थम् । काम्यं नियमेन स्वयं कर्तव्यम् । यत्त्वकामसंयुक्तं कालनिमित्ते चोद्यते तदागते काले अवश्यं कर्तव्यम् । असंनिहिते च यजमाने अन्येनापि कारयितव्यमिति भर्तृयज्ञाः । 'दर्वी' ''च्छति' यया बलिदानं कृतं तां दर्वीं शूर्पं च प्रक्षाल्य प्रतप्य संनिधानादुल्कायामेव सकृत्तापयित्वा प्रयच्छति उल्काधाराय संनिधानात् । 'द्वार' ''सृभिः' ऋग्भिः बहुवचनाद्ब्रह्मयजमानोल्काधाराः शालाया द्वारे आपोहिष्ठेति तिसृभिर्ऋग्भिर्मार्जयन्ते अद्भिरात्मानमभिषिञ्चन्ति । 'अनु' ''यण्याः' एतं प्रकृतं सक्तुशेषमनुगुप्तं सुगुप्तं यथा भवति तथा स्थापयित्वा ततस्तेभ्यः सक्तुभ्योऽस्तमितेऽस्तमिते सूर्ये प्रत्यहमक्षतहोमानन्तरं दर्व्योपघातं दर्व्योपहत्योपहत्य सक्तून्सर्पेभ्यो बलिं हरेदाग्रहायणीं पौर्णमासीं यावत् । 'तरः' ''च्छेयुः' तमावसथ्याग्निं बलिं हरन्तं यजमानं चान्तरा मध्ये न गच्छेयुर्लोकाः । श्वादयोऽपि निवार्याः । 'दर्व्याः' ''धाति' ततो दर्व्या आचमनं मुखं प्रक्षाल्य निदधाति प्रतिदिनम् । अत्र न शूर्पप्रक्षालनमनुक्तत्वात् । 'धाना' ''स्यूताः' श्रावण्यां पौर्णमास्यां संस्थिते श्रवणाकर्मणि धाना अश्नन्ति दन्तैरचर्वयन्तो ब्रह्मयजमानोल्काधाराः । 'ततो' ''जनम्' । इति चतुर्दशी कण्डिका ॥ १४ ॥ ॥ * ॥ ॥ * ॥

अथ पदार्थक्रमः । तत्र प्रथमप्रयोगे मातृपूजापूर्वकं नान्दीमुखं श्राद्धं कृत्वा आवसथ्ये कर्म कार्यम् । ब्रह्मोपवेशनादिदक्षिणादानान्ते विशेषः । चरुपात्रानन्तरं भर्जनखर्परस्यासादनम् । तत एककपालम् । तण्डुलानन्तरं यवानामासादनम् । ततः पिष्टानाम् प्रोक्षणं च यथासादितानाम् । उपकल्पनीयानि—दृषदुपले शूर्पमुल्का उदपात्रं दर्वी कङ्कतत्रयमञ्जनमनुलेपनं स्रजश्चेति । उल्का-

धारकः मार्जनीयोदकं धानाः प्राशनार्थाः लौकिका इति त्रयमधिकमुपकल्पनीयमिति रेणुकः । ततः पवित्रकरणादिप्रोक्षणीनिधानान्ते चरुदेशस्योत्तरतो भर्जनखर्पराधिश्रयणम् । अत्र सव्याशून्ये-ऽङ्गारकरणमिति रेणुकः । भर्जनस्योत्तरत एककपालोपधानमाज्यनिर्वापश्चरुपात्रे तण्डुलप्रक्षेपः प्रणीतोदकेन पिष्टसंयवनं ब्रह्मण आज्याधिश्रयणं तदुत्तरतश्चरोरधिश्रयणं यजमानस्य, चरोरुत्तरतः खर्परे यवाधिश्रयणमुल्काधारस्य, कपाले पुरोडाशमधिश्रित्यैककपालं प्रथयेदितरः, सर्वेषां पर्यग्निकरणं, स्रुवसंस्कारः, तत आज्यादीनामुद्वासनमुदक्संस्थमाज्योत्पवनमवेक्षणं प्रोक्षण्युत्पवनं, धानानां भूयसीः पिष्ट्वा अल्पानां स्थापनम्, आज्येन सक्तूनामञ्जनम् । तत उपयमनकुशादानाद्याज्यभागान्ते आज्याहुतिद्वयं कुर्यात् । तत्र अपश्वेतपदेति प्रथमाम् । इदं श्वेतपदे० । नवै श्वेतस्येति द्वितीयाम् इदं श्वेतपदाय वैदर्व्याय० । ततःस्थालीपाकेनाहुतिचतुष्टयम् । विष्णवे स्वाहा० । श्रवणाय स्वाहा० । श्रावण्यै पौर्णमास्यै० । वर्षाभ्यः० ॥ इदं विष्णवे नममेत्यादित्यागः ॥ धानावन्तमित्यृचा धानानामेकाऽऽहुतिः । इन्द्रायस्वाहा इदमिन्द्रायन० । ततः सक्तूनामाहुतित्रयं जुहुयात् । आग्नेयपाण्डुपार्थिवानामिति प्रथमाम् । श्वेतवायवान्तरिक्षाणामिति द्वितीयाम् । अभिभूरिति तृतीयाम् । यथा (दैवतं) मन्त्रान्ते त्यागाः स्वाहाकारवर्जिता इदंशब्दादयः । ततो ध्रुवाय भौमाय स्वाहेति पुरोडाशं सकलं जुहोति । इदं ध्रुवाय भौमाय० । ततश्चरुधानासक्तुभ्य उत्तरतः स्विष्टकृत् । ततो नवाहुतयः । संस्रवप्राशनादिदक्षिणादानान्तम् । सक्तुशेषैकदेशस्य शूर्पे प्रक्षेपः । शालाया बहिर्निष्क्रमणम् । बहिरेव स्थण्डिलोपलेपनम् । तत उल्काधारणम् । माऽन्तरागमतेति प्रैषः । वाग्यतः स्थण्डिले सर्पानवनेजयति आग्नेयपाण्डुपार्थिवानाꣳ सर्पाणामधिपतेऽवनेनिक्ष्वेति त्रिभिर्मन्त्रैः प्रतिमन्त्रम् । ततोऽवनेजनस्थाने-ष्ववनेजनक्रमेणैतैरेव मन्त्रैरेष ते बलिरित्यन्तैस्त्रिभिः प्रतिमन्त्रं बलिं हरति । अत्र यथादैवतं त्यागा इति गर्गः । नेत्यपरे । नाञ्जनादौ त्याग इति रेणुकः । ततः पूर्ववत्पुनरवनेजनम् । एतैरेव मन्त्रैः प्रलिखस्वेत्यन्तैः कङ्कतत्रयेण प्रतिबलि प्रतिमन्त्रं प्रलिखति । ततोऽञ्जस्वेत्यन्तैरुक्तमन्त्रैः प्रतिबलि प्रतिमन्त्रमञ्जनं ददाति । तथैवानुलिम्पस्वेत्यनुलेपनदानम् । स्रजोऽपिनह्यस्वेत्यन्तैः पुष्पमालादानम् । ततः सक्तुशेषं स्थण्डिले न्युप्योदपात्रनिनयनं सक्तुशेषस्योपरि । नमोऽस्तु सर्पेभ्य इति तिसृभिरुपस्थानम् । स यावन्तं कामयेत एतावन्तं देशं न सर्पा अभ्युपेयुरिति तावन्तं गृहदेशमुदधारया सन्ततया त्रिः परिषिञ्चन्परीयादपश्वेतपदा जहीति द्वाभ्याम् । अत्र स्वाहाकारो नेति गर्गरेणुकौ । सकृन्मन्त्रेण परिगमनम् । द्विस्तूष्णीम् । तत इतरथावृत्तिरिति रेणुकः । दर्वी शूर्पं च प्रक्षाल्योल्कायां प्रतप्योल्काधाराय प्रयच्छति । ततो जलेन मार्जनं द्वारदेशे आपोहिष्ठेति तिसृभिर्ब्रह्मयजमानोल्काधाराणाम् । ततो धानानां प्राशनं तेषामेव । ततो ब्राह्मणभोजनम् । सक्तुशेषस्थापनं सुगुप्ते भाण्डे । ततोऽस्तमिते अक्षतहोमानन्तरमुल्काधारणादिबलिहरणकङ्कतपरिलेखान्तं पूर्ववत् । माऽन्तरागमतेति प्रैषाभावेऽपि नान्तरागमनम् । दर्वीमुखप्रक्षालनम् । शूर्पदर्व्योः प्रक्षालनमिति वासुदेवरेणुकौ । एवमन्वहं बलिहरणमाग्रहायणीं यावत् । इति पदार्थक्रमः ॥ ॥ अथ गर्गमते विशेषः । पात्रासादने— चरुस्थाली आज्यानन्तरं यवाः तण्डुलाः पिष्टं कर्परिका कपालं बर्हिः दर्वी उल्का उल्काधारश्च शूर्पं कङ्कतास्त्रयः अञ्जनमनुलेपनं स्रजश्च उदकं दृषदुपले वरश्च । ततः स्फ्योपहितमोषधिकरणम् । ततो ग्रहणम् । विष्णवे श्रवणाय श्रावण्यै पौर्णमास्यै वर्षाभ्यो जुहोति । तण्डुलानां ग्रहणम् । इन्द्राय जुष्टं गृह्णामीति यवानाम् ध्रुवाय भौमाय जु० पिष्टस्य ग्रहणम् । प्रोक्षणे त्वाधिकः । प्रोक्षणीनिधानान्ते भर्जनाधिश्रयणादिपर्यग्निकरणान्ते स्रुवप्रतपनादिबर्हिस्तरणान्तम् । धाना उद्वास्याल्पानां पेषणं कृत्वा चर्वादीनामुद्वासनमिति गर्गमतमिति तत्पद्धतौ । स्तरणान्ते आज्योद्वासनादिधानोद्वासनान्तम् । अल्पाना धानानां पृथक्करणम् । भूयिष्ठानां पेषणम् । ततः सर्वेषामभिघारणम् । बर्हि-

ष्यासादनं च । तत उपयमनादानाद्याज्यभागान्तम् । ततः स्विष्टकृदादि दर्वी शूर्पं प्रक्षाल्य प्रतप्य प्रदानान्तं समानम् । बलिहरणादौ सकृद्धोमवद्यथोद्देशं त्यागाः । परिषेचनमन्त्रयोः स्वाहाकारवर्जितयोरुच्चारणमिति गर्गपद्धतौ । मार्जनं यजमानपत्न्युल्काधाराणाम् । सक्तूनां स्थापनम् । ततो धाना-प्राशनं स्वामित्रह्मोल्काधाराणाम् । ततो बर्हिर्होमादिब्राह्मणभोजनान्तम् । ततोऽस्तमिते उल्काधारणादिपरिलेखान्तं पूर्ववत् । यथोक्ता एव त्यागाः । एवं प्रत्यहमाग्रहायणीं यावत् । इति गर्गमते । कारिकायां विशेषः श्रवणाकर्माकरणे—श्रवणाकर्म लुप्तं चेत्कथं चित्सूतकादिना । आग्रहायणिकं कर्म बलिवर्जमशेषतः । अकृत्वाऽन्यतमं यज्ञं पञ्चानामधिकारतः । उपवासेन शुध्यन्ति पाकसंस्थां तथैव च । पाकसंस्थासु लुप्तासु श्रवणाकर्म आदितः । प्राजापत्यं चरेत्कृच्छ्रं वचनात्तु प्रजापतेः । स्वयं होमाश्च यावन्तो न कृताश्चेत्प्रमादतः । तावतोऽपि बलीश्चायं हरेत्तदहरेव तु । एकैकं परिलेखान्तमेकमेवोदपावकम् । प्रक्षालनं तदन्ते स्याच्छूर्पदर्व्योर्भवेदिति ॥

( विश्व० ) 'अथा'''कर्म' । समयमाह 'श्राव'''स्यामिति' नान्यदेत्यर्थः । कथं स्यादत आह 'स्थाली'''डाशं' पदार्थक्रमोऽयं । परिसमूहनादि । आज्यस्थालीमासाद्य चरुस्थाली संमार्गकुशाः उपयमनकुशाः समिधः । स्रुवः आज्यं यवाः तण्डुलाः पिष्टं कर्परिका एककपालं बर्हिः दर्वी उल्काधारश्च शूर्पं कङ्कतास्त्रयः अञ्जनम् अनुलेपनं स्रजश्च उदकं दृषदुपलं वरश्च स्पयोपहितमोपधिकरणं तण्डुलानां ग्रहणं विष्णवेश्रवणायश्रावण्यैपौर्णमास्यैवर्षाभ्योजुष्टंगृह्णामि । यवानां ग्रहणम् इंद्राय जुष्टंगृह्णामि । पिष्टस्यग्रहणं ध्रुवायभौमायजुष्टंगृह्णामि । सर्वत्र प्रोक्षणे त्वाशब्दोऽधिकः । चरोरधिश्रयणं कर्परिकैककपालयोश्चाधिश्रयणं कर्परिकायां यवाः, एककपाले पुरोडाशः । आज्यचरुधानानां युगपदधिश्रयणम् । ततः पर्यग्निकरणं सर्वेषाम् । अर्द्धश्रृते स्रुवप्रतपनादि बर्हिस्तरणान्तम् । अन्वयस्तु अक्षतानां यवानां धानाः । अक्षतेषु यवा मुख्या इत्युक्तत्वात् । श्रपयित्वेति काकाक्षिन्यायादन्वितं भवति । चकारस्तु एककपालमित्यत्र श्रपयित्वेत्यनुकर्षणार्थः । 'धाना'''होति' ततो घृताक्तानामुद्वासनं धानानां कृत्वा तेषां भूयसीः बह्वीः पिष्ट्वा सक्तुत्वमापाद्य ततश्चरुपुरोडाशयोः श्रृताभिघारणोद्वासने कृत्वोद्वासितानां चरुधानासक्तुपुरोडाशानां प्राणदानानंतरं बर्हिषि निधायोपयमनकुशादानाद्याज्यभागाविष्ट्वा वक्ष्यमाणमन्त्राभ्यां द्वे आज्याहुती जुहोतीत्यर्थः । तदेव सर्पापसर्पकं मन्त्रद्वयमाह 'अप'''स्वाहेति' इदं श्वेतपदे । इदंश्वेतायवैदर्व्यायेति त्यागः । 'स्थाली'''श्चेति' विष्णवेस्वाहा इत्यादिचतस्र आहुतयः । इदं विष्णव इत्यादि यथादैवतं त्यागाः । विष्ण्वादिदेवताभ्यः स्थालीपाकाऽवयवमादाय जुहोतीत्यर्थः । 'धाना'''नानां' धानानामेकामाहुतिं धानावन्तमिति मन्त्रेण जुहोतीत्यनुषङ्गः । इदमिन्द्रायेति त्यागः । 'घृताक्ता'''स्वाहेति' घृतेन अक्ताः तान् सक्तून् सर्पेभ्यः आग्नेयेत्यादिभिस्त्रिभिर्मंत्रैः प्रतिमन्त्रं तिस्र आहुतीर्जुहोति । इदंपूर्वः स्वाहाशून्यो मन्त्र एव त्यागः । 'सर्वं'''स्वाहेति' सर्वहुतं यथा स्यात्तथैककपालं जुहोति केन मन्त्रेणेत्यत उक्तं ध्रुवायभौमायस्वाहेति । इदं ध्रुवायभौमाय । ततश्चरुधानासक्तुभ्यः स्विष्टकृत् । अग्नयेस्विष्टकृतेस्वाहा इदमग्नयेस्विष्टकृते । 'प्राश'''न्युप्य' ततो महाव्याहृत्यादिदक्षिणादानान्ते । 'सक्तूनाम्' इत्युपलक्षणं दर्वी कङ्कताः अञ्जनानुलेपनं स्रजश्चेति । सक्त्वैकदेशश्च बलित्रयपर्याप्तः । शूर्पे शरेषीकावंशान्यतममये न्युप्य स्थाप्येत्यर्थः । 'उपनि'''निष्क्रेति' उदकं लौकिकाग्निदीप्तामुल्कां तस्याः ग्रहीतारं चाहूयोपनिष्क्रम्योल्कायां ध्रियमाणायां मान्तरागमतेत्यन्यान् प्रत्युक्त्वा । अन्तरालं च यजमानावसथ्ययोः । वाग्यतः सर्पानित्यादि निगदव्याख्यातम् । अवनेजनं प्राक्संस्थम् । यथा'''बलिरिति' होमवत्त्यागाः । अवनिक्तमनतिक्रम्य दर्व्या प्रादेश-

मितया उपघातमित्युपपूर्वस्य हन्तेर्ग्रहणार्थता स्रुवेणोपहत्याज्यमितिवत् । 'अव···खस्वेति' कङ्कतानि प्रादेशमात्राणि त्रीणि वैकङ्कतानि । तैः क्रमेण प्रलेखनं कण्डूयनेन रेखाकरणम् । 'अञ्ज···ह्य-स्वेति' अञ्जनं त्रैककुदं लौकिकं वा अनुलेपनं चन्दनं स्रजः सुरभिपुष्पमालाः । आग्नेयेत्यादिभिः त्रिभिर्मन्त्रैः । अञ्जस्वानुलिम्पस्व स्रजोऽपिनह्यस्वेत्यन्तैः प्रतिमन्त्रं प्रतिबलिमेकैकं ददाति क्रमेण । 'सक्तु···द्वाभ्यां' मंत्राभ्यां स्वाहाकाररहिताभ्यां परिषिञ्चन् त्रिः परीयात्सकृन्मन्त्रेण द्विस्तूष्णीम् 'दर्वी···छति' प्रतपनमुल्कायां संनिधानात् दानं चोल्काधाराय । 'द्वार···सृभिः' मार्जयन्त इति बहुत्वसामर्थ्यात्पत्नीयजमानोल्काधाराः । 'अनु···धाय' अनुगुप्तं सुरक्षितं स्थाप्य वर्हिर्होमादि ब्राह्मणभोजनान्तं समापयेत् । 'ततोऽ···यण्याः' ततः श्रवणाकर्मानन्तरम् सक्तुभ्य इति कर्कोपाध्यायाः । अग्निमावसथ्यम् । आग्रहायण्यवधि नित्यत्वसूचनार्थोऽभ्यासः । कर्मोपलक्ष(ण)कमाग्रहायणीपदम् । 'त९···च्छेयुः' आवसथ्यबलिदानस्थलयोरन्तरेण अन्ये न गच्छेयुः । 'दर्व्या···धाति' भूमाविति शेषः । आद्यबलिदानविहितदानापवादः । किंतु भूमौ निदध्यात् प्रत्यहीयबलिदाने दर्वी शूर्पे च । आचमनं मुखम् । बलिदानं च प्रैपावनेजनाद्युक्तप्रकारेण शूर्पदर्व्योर्भूनिधानान्तम् । अभ्यस्यमानमाग्रहायणीयसमयावधि श्रवणाकर्माङ्गबलिदानमभिधायेदानीं प्रकृतमाह—'धाना···स्यूताः' असंस्यूताः दन्तैरस्पृष्टाः । 'ततो···जनम्' बलिदानसमाप्त्यग्रे, समाप्तेकर्मणि दश पञ्च वा ब्राह्मणानभोजयेदित्यर्थः । श्रावण्यां श्रवणाकर्म पूर्वाह्णे प्राग्वैश्वदेवात् । तदनन्तरं वैश्वदेवः ॥ चतुर्दशी कण्डिका ॥ १४ ॥

प्रौष्ठपद्यामिन्द्रयज्ञः ॥ १ ॥ पायसमैन्द्रꣳ श्रपयित्वाऽपूपांश्चापूपैः स्तीर्त्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोतीन्द्रायेन्द्राण्या अजायैकपदेऽहिर्बुध्न्याय प्रौष्ठपदाभ्यश्चेति ॥ २ ॥ प्राशनान्ते मरुद्भ्यो बलिꣳ हरत्यहुतादो मरुत इति श्रुतेः ॥३॥ आश्वत्थेषु पलाशेषु मरुतोऽश्वत्थे तस्थुरिति वचनात् ॥४॥ शुक्रज्योतिरिति प्रतिमन्त्रम् ॥ ५ ॥ विमुखेन च ॥ ६ ॥ मनसा ॥ ७ ॥ नामान्येषामेतानीति श्रुतेः ॥ ८ ॥ इन्द्रं दैवीरिति जपति ॥ ९ ॥ ततो ब्राह्मणभोजनम् ॥ १० ॥ १५ ॥

( कर्कः )—'प्रौष्ठ···यज्ञः' इन्द्रयज्ञ इति कर्मणो नामधेयम् । प्रौष्ठपदी च भाद्रपदी पौर्णमासी । 'पाय···पाँश्च' ऐन्द्रग्रहणात् इन्द्राय स्वाहेति होमो लभ्यते । इह च पयस उपसर्जनार्थतया अपां क्षीरस्य च प्रणयनं क्रियते । 'अपू···होति' इन्द्रायेन्द्राण्यै इत्येवमाद्याः । अपूपैः स्तरणमग्नेः । आज्याहुत्यन्ते इन्द्राय स्वाहेति पायसेन होमः । ततः स्विष्टकृदादि । 'प्राश···शेपु' कुत एतत् 'मरु···चनात्' 'शुक्रज्योतिरिति' एभिर्मन्त्रैर्नमस्कारान्तैः प्रतिमन्त्रम् । 'विमु···नसा' बलिहरणम् । विमुखश्च उग्रश्च भीमश्चेत्यध्येतॄणां प्रसिद्धः । 'नामा···श्रुतेः' एषां मरुतामेतानि नामानि श्रूयन्ते । 'इन्द्रं···पति' 'ततो···जनम्' ॥ १५ ॥ ॥ * ॥ ॥ * ॥

( जयरामः )—इन्द्रयज्ञ इति कर्मणो नामधेयम् । प्रौष्ठपदी भाद्रपदपौर्णमासी । ऐन्द्रग्रहणादिन्द्राय स्वाहेति एकाहुतिको होमो लभ्यते । इह च पयस उपसर्जनार्थतया अपां क्षीरस्य च प्रणयनं क्रियते । अपूपैः स्तीर्त्वाऽऽज्यभागाविष्ट्वा आज्याहुतीर्जुहोति इन्द्राय इन्द्राण्यै इत्येवमाद्याः

पञ्च । अपूपैः स्तरणमग्नेः । आज्याहुत्यन्ते इन्द्राय स्वाहेति पायसेनैकाहुतिहोमः । ततः स्विष्टकृदादि । प्राशनान्ते मरुद्भ्यो बलिं हरति । अहुतादो मरुत इति श्रुतेः । आश्वत्थेषु पालशेषु । कुत एतत् । यतोऽश्वत्थे तस्थुरिति वचनात् । शुक्रज्योतिरित्येतैर्मन्त्रैर्नमस्कारान्तैः प्रतिमन्त्रं विमुखेन च मनसा बलिहरणम् । विमुखश्च उग्रश्च भीमश्चेत्यध्येतॄणां प्रसिद्धः । नामान्येषामेतानीति श्रुतेः । एषां मरुतामेतानि शुक्रज्योतिरित्यादीनि नामानि श्रूयन्ते । इन्द्रं दैवीरिति जपति बलिहरणान्ते । ततो ब्राह्मणभोजनम् ॥ १५ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

( हरिहरः )—' प्रौष्ठ'''यज्ञः ' प्रौष्ठपदी भाद्रपदी प्रकरणात् पौर्णमासी । तस्यां इन्द्रयज्ञनामधेयं कर्म भवति औपासनाग्नौ । ' पाय'''पांश्च ' पायसं पयसा सिद्धं चरुमैन्द्रमिन्द्रदेवत्यं श्रपयित्वा यथाविधि पक्त्वा अपूपांश्च श्रपयित्वा तांश्च चतुरः प्रतिदिशं संस्तरणार्थम् । ऐन्द्रमित्यनेन देवतातद्धितेन इन्द्रायस्वाहेति होमलक्षणा । उपरि होमस्य मन्त्रान्तरस्य चानुक्तत्वात् । अत्र पायसश्रपणोपदेशात् पयश्च प्रणीयते । ' अपू'''श्चेति ' अपूपैः प्रतिदिशमग्निं स्तीर्त्वा परिस्तीर्य आज्यभागौ हुत्वा इन्द्रायेत्यादिभिः स्वाहान्तैः पञ्चभिर्मन्त्रैः प्रतिमन्त्रं पञ्चाज्याहुतीर्जुहोति । अत्रानुक्तोऽपि पायसेन इन्द्राय स्वाहेत्येकाहुतिहोमः । अन्यथा पायसश्रपणमदृष्टार्थं स्यात् । 'प्राश'''श्रुतेः' ततः स्विष्टकृदादिप्राशनान्ते मरुद्भ्य एकोनपञ्चाशत्संख्येभ्यो देवताभ्यो बलिं ददाति । ननु मरुतां देवतात्वे सति कथं होमसंबन्धरहितत्वं बलिदानार्हत्वं च । शृणु । अहुतादो मरुत इति श्रुतेः । अहुतमदन्तीत्यहुतादः मरुतो देवा इति श्रुतेः वेदवचनात् । ' आश्व'''नात् ' मरुद्भ्यो बलिर्हरतीत्युक्तं तस्याधिकरणमुच्यते । अश्वत्थस्य इमानि आश्वत्थानि तेषु पिप्पलोद्भवेषु पत्रेषु बलिं हरतीति शेषः । ननु बलिहरणं भूमौ अन्यत्र दृश्यते इह कस्मादश्वत्थपत्रेष्विति शङ्कते । आह मरुतः शुक्रज्योतिप्रभृतयो यस्मात् अश्वत्थे तस्थुः स्थितवन्त इति वचनात् श्रुतेः । ' शुक्र'''श्रुतेः ' मन्त्रापेक्षायामाह शुक्रज्योतिरित्येवमादिभिर्मन्त्रैर्नमस्कारान्तैः प्रतिमन्त्रं विमुखेन च उग्रश्च भीमश्चेत्येवमादिना अध्येतृप्रसिद्धेन मनसा मनोव्यापारेण बलिं हरतीति शेषः । कुत एभिर्मन्त्रैर्बलिहरणम् ? एषां मरुतामेतानि शुक्रज्योतिश्च चित्रज्योतिश्चेत्येवमादीनि विक्षिप इत्यन्तानि नामानि इति श्रुतेः वेदवचनात् । ' इन्द्र'''जपति ' बलिहरणान्ते इन्द्र दैवीरित्येतामृचं जपति । ' ततो'''जनम् ' इतिसूत्रार्थः ॥ ॥ अथ प्रयोगः । भाद्रपदपौर्णमास्यां प्रथमप्रयोगे मातृपूजापूर्वकमाभ्युदयिकं विधायावसथ्याग्नौ इन्द्रयज्ञाख्यं कर्म कुर्यात् । तत्र ब्रह्मोपवेशनादिप्राशनान्ते विशेषः । सक्षीरं प्रणयनं मूलदेशे पयः इतरत्र जलं प्रक्षिप्य प्रणयेत् । उपकल्पनीयानि । तण्डुलपिष्टं सप्ताश्वत्थपर्णानि । तत आज्यनिर्वापानन्तरं प्रणीताभ्यः क्षीरमुत्सिच्य चरुपात्रे तण्डुलान्प्रक्षिप्य प्रणीतोदकेन पिष्टं संपूय चतुरोऽपूपान्निर्मायाज्यमधिश्रित्य तदुत्तरतश्चरुं तदुत्तरतः कर्परे चतुरोऽपूपानधिश्रयति । आसादनक्रमेणोद्वासनादि । तत उपयमनकुशादानात्पूर्वमपूपैरग्नेः पुरस्तात् दक्षिणतः पश्चिमत उत्तरतश्च एकैकेन परिस्तरणं कृत्वा आज्यभागान्ते पञ्चाज्याहुतीर्जुहोति । इन्द्राय स्वाहा इदमिन्द्राय० इन्द्राण्यै स्वाहा इदमिन्द्राण्यै० अजायैकपदे स्वाहा इदमजायैकपदे० अहिर्बुध्न्याय स्वाहा इदमहिर्बुध्न्याय० प्रौष्ठपदाभ्यः स्वाहा इदं प्रौष्ठपदाभ्यो० । ततः पायसेन इन्द्राय स्वाहेत्येकामाहुतिं हुत्वा इदमिन्द्रायेति त्यक्त्वा पायसेनैव स्विष्टकृद्धोमं विधाय महाव्याहृत्यादिहोमसंस्रवप्राशनदक्षिणादानानि कुर्यात् । अथाग्नेरुत्तरतः प्राक्संस्थानि प्रागग्राणि सप्ताश्वत्थपत्राणि निधाय तेषु मरुद्भ्यो बलीन् हरति पायसशेषं स्रुवेणादायादाय शुक्रज्योतिरित्येवमादिभिः षड्भिर्मन्त्रैर्नमस्कारान्तैरुग्रश्च भीमश्चेत्येतेनैव सप्तमेन च मनसोच्चारितेन च प्रतिमन्त्रं सप्तसु पत्रेषु

यथाक्रमम् । स्पष्टार्थं प्रयोग उच्यते त्यागश्च । शुक्रज्योतिश्चेत्यारभ्य ऋतपाश्चात्यंहा नमः इदं शुक्रज्योतिषे चित्रज्योतिषे सत्यज्योतिषे ज्योतिष्मते शुक्राय ऋतपसेऽत्यंहसे च० । ईदृङ्चान्यादृङ्चेत्यादि सभरा नमः इदमीदृशे अन्यादृशे सदृशे प्रतिसदृशे मिताय संमिताय सभरसे च० । ऋतश्चेत्यादि विधारयो नमः इदमृताय सत्याय ध्रुवाय धरुणाय धर्त्रे विधर्त्रे विधारयाय च० । ऋतजिश्चेत्यारभ्य गणो नमः इदमृतजिते सत्यजिते सेनजिते सुषेणाय अन्तिमित्राय दूरे अमित्राय गणाय च० । ईदृक्षास इत्यारभ्य यज्ञे अस्मिन्नमः इदमीदृक्षेभ्यः एतादृक्षेभ्यः सदृक्षेभ्यः प्रतिसदृक्षेभ्यो मितेभ्यः सम्मितेभ्यो सभरेभ्यः मरुद्भ्यश्च० । स्वतवाँश्चेत्यादि उज्जेषी नमः इदं स्वतवसे प्रघासिने सांतपनाय गृहमेधिने क्रीडिने शाकिने उज्जेषिणे च० । उग्रश्चेन्यारभ्य विक्षिपः स्वाहा नमः मनसा । इदमुग्राय भीमाय ध्वान्ताय धुनये सासह्वतेऽभियुग्वने विक्षिपाय चेत्यपि मनसा । तत इन्द्रं दैवीरित्येतामृचं जपति यजमानः । ततो ब्राह्मणभोजनमिति ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

( गदाधरः )—' प्रौष्ठ'''यज्ञः ' इन्द्रयज्ञ इति कर्मणो नामधेयम् । प्रौष्ठपदी च भाद्रपदी पौर्णमासी तस्यामेतत्कर्मावसथ्येऽग्नौ भवति । ' पाय'''पांश्च ' पायसं पयसि पक्वं चरुमैन्द्रमिन्द्रदेवत्यं यथाविधि श्रपयित्वा अपूपांश्च चतुरः श्रपयित्वा । ऐन्द्रग्रहणात् इन्द्राय स्वाहेति होमो लभ्यते । अत्रापां क्षीरस्य च प्रणयनं कार्यम् । ' अपूपैः'''भ्यश्च ' अग्नेः प्रतिदिशमपूपैः स्तीर्त्वा प्रदक्षिणं परिस्तीर्य आज्यभागानन्तरमिन्द्रायेत्यादिभिः स्वाहाकारान्तैः पञ्चमन्त्रैः प्रतिमन्त्रं पञ्चाज्याहुतीर्जुहोति । आज्याहुत्यन्ते इन्द्रायस्वाहेति पायसेन होमः । ततः स्विष्टकृदादि । ' प्राश'''चनान् ' संस्रवप्राशनान्ते मरुद्भ्यो देवताभ्यो बलिं ददाति । ननु होमासंबन्धे कथमेषां देवतात्वं बलिकर्मार्हत्वं च । उच्यते । अहुतादो मरुत इति श्रुतेः । अहुतमदन्तीत्यहुतादो मरुत इति श्रुतेः । अतएव बलिदानमेव न तु होमः । तच्चाश्वत्थेषु पत्रेषु कार्यम् । कुतः यस्मान्मरुत अश्वत्थे तस्थुः स्थितवन्तः । अतएवाश्वत्थपत्राणां सदैव चाञ्चल्यम् । अश्वत्थस्येमानि आश्वत्थानि पर्णानि तेषु बलिं हरतीत्यर्थः । ' शुक्र'''मन्त्रम् ' यद्बलिहरणं तच्छुक्रज्योतिरित्येवमादिभिः षड्भिर्मन्त्रैर्नमस्कारान्तैः प्रतिमन्त्रं कार्यम् । ' विमु'''श्रुतेः ' चकाराद्बलिहरणं विमुखेन उग्रश्चभीमश्चेत्यध्येतृप्रसिद्धेन मन्त्रेण मनसोच्चारितेन । एतैर्मन्त्रैरिति कुतः । नामान्येषामेतानीति श्रुतेः । एषां मरुतामेतानि शुक्रज्योतिरित्यादीनि नामानि श्रूयन्ते । ' इन्द्र'''पति ' बलिहरणानन्तरमिन्द्रं दैवीरित्येतामृचं जपति । ' ततो'''नम् ' इति पञ्चदशी कण्डिका ॥ ॥ १५ ॥

अथ पदार्थक्रमः । प्रथमप्रयोगे मातृपूजापूर्वकमाभ्युदयिकं श्राद्धम् । ब्रह्मोपवेशनादिदक्षिणादानान्ते विशेषः । सक्षीरं प्रणयनम् । उपकल्पनीयानि । यवपिष्टं व्रीहिपिष्टं वा । सप्ताश्वत्थपत्राणि पोतकं कर्परमपूपार्थं, निरुप्याज्यं प्रणीताभ्यः पोतकेन क्षीरं गृहीत्वा चरुपात्रे कृत्वा तण्डुलप्रक्षेपः । प्रणीतोदकेन पिष्टसंयवनं लौकिकेनेति रेणुकः । आज्याधिश्रयणं ततश्चतुर्णामपूपानामधिश्रयणमुपयमनादानात्पूर्वमग्नेरपूपैस्स्तरणं पुरस्तात्प्रथमं प्रदक्षिणम् । आज्यभागान्ते पञ्चाज्याहुतयः । इन्द्राय स्वाहा । इन्द्राण्यै स्वाहा । अजायैकपदे स्वाहा । अहिर्बुध्न्याय स्वाहा । प्रौष्ठपदाभ्यः स्वाहा । सुगमास्त्यागाः । ततः पायसेन इन्द्राय स्वाहा इदमिन्द्राय० । ततो नवाहुतयः स्विष्टकृच्च । संस्रवप्राशनम् । मार्जनम् । पवित्रप्रतिपत्तिः प्रणीताविमोको दक्षिणादानम् । प्राक्संस्थान्युदक्संस्थानि वा सप्ताश्वत्थपत्राणि कृत्वा तेषु मरुद्भ्यो बलिहरणं पायसशेषेणैव स्रुवेण शुक्रज्योतिरिति षड्भिरुग्रश्चेत्यनेन सप्तमेन च प्रतिमन्त्रम् । शुक्रज्योति० नमः । इदं शुक्रज्योतिषे चित्रज्योतिषे सत्यज्योतिषे ज्योतिष्मते शुक्राय ऋतपसेऽत्यंहसे च नमम ॥ १ ॥ ईदृङ्चान्या-

ईदृङ्चा० गणो नमः । ॐ ईदृक्षेऽन्यादृक्षे सदृक्षे प्रतिसदृक्षे मिताय संमिताय सभरसे च न० ॥ २ ॥ ऋतश्च० गणो नमः । ॐ ऋताय सत्याय ध्रुवाय धरुणाय धर्त्रे विधर्त्रे विधारयाय च न० ॥ ३ ॥ ऋतजिच्च० गणो नमः । ॐ ऋतजिते सत्यजिते सेनजिते सुषेणायान्तिमित्राय दूरे अमित्राय गणाय च न० ॥ ४ ॥ ईदृक्षास० अग्निगणः । ॐ ईदृक्षेभ्य एतादृक्षेभ्यः सदृक्षेभ्यः प्रतिसदृक्षेभ्यो मितेभ्यः सम्मितेभ्यः सभरेभ्यो न० ॥ ५ ॥ स्वतवांश्च० षष्ठो नमः । ॐ स्वतवसे प्रघासिने सान्तपनाय गृहमेधिने क्रीडिने शाकिने उज्जेषिणे न० ॥ ६ ॥ उग्रश्च भीमश्च० षः स्वाहा नमः । मनसा । ॐ उग्राय भीमाय ध्वान्ताय धुनये सासहते अभियुग्वने विक्षिपाय नेत्यपि मनसा ॥ ७ ॥ इन्द्रं दैवी रित्यस्याः ऋषिच्छन्दांसि जपः । ततो विप्रभुक्तिः मुख्यकालाभावे गौणेऽप्येतत्कार्यम् । अभावान्मुख्यकालस्य गौणकालेऽपि शस्यत इति कारिकोक्तेः । गर्गमते । सद्गुणे इन्द्राय जुहुयात् । प्रोक्षणे स्वामिकः । इन्द्रं दैवीरित्यस्याः ऋष्यादिस्मरणं जपान्ते बलिहोमादिब्राह्मणतर्पणान्तम् । ततो वैश्वदेवः । अन्यत्समानम् । इति पद्धतिक्रमः ।

( विश्व० )—'प्रोष्ठप···यज्ञः' प्रोष्ठपदी भाद्रपदपौर्णमासी इन्द्रयज्ञ इति कर्मनामधेयम् । अत्रापि पूर्वं मातृपूजाभ्युदयिके । इन्द्रयज्ञादिन्द्रायेत्याहुतिहोमो लक्ष्यते । 'पाय···होति' परिसमूहना-द्याज्यभागान्तविधि पश्चादाहुतीः । 'इन्द्रा···स्यंति' इन्द्राय स्वाहा इदमिन्द्रायेत्यादि यथावचनं त्यागाः इन्द्राण्यै स्वाहा । अजायैकपदे स्वाहा । अहिर्बुध्न्याय स्वाहा । प्रोष्ठपदाभ्यः स्वाहा । ततः स्थालीपाकेन इन्द्राय स्वाहा इदमिन्द्राय । अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते । महाव्याहृतिहोमादिदक्षिणा-दानान्तम् । 'मरु···श्नाति' ननु कथं होमाभाव इत्यत आह—'अहु···श्रुतेः' अहुतमदन्तीत्युक्तावः । बलिदानेनैवाऽदन्तीत्यर्थः । किं न उक्तं मरुत इति । 'आश्व···शेषु' वल्मीकवपादिति शेषः । अन्यत्र भूमौ इत्युत्सर्गस्य तत्र आह—'मरु···नान' । 'शुक्र···मन्त्रं' नमस्कारान्तैर्मन्त्रैः प्राक्संस्थमु-दक्संस्था बलिदानम् । 'विमुखेन' मुखव्यापारवर्जितेन । पुनः 'मनसा' मनोव्यापारवर्जितेन बलिं दद्यादिति शेषः । कुत एभिर्मन्त्रैरत आह—'नामा···श्रुतेः' एषां मरुतामेतानि नामानि शुक्रज्योतिश्चेत्येवमा-दीनि । 'इन्द्रं···पति' । ततो बलिहोमादि ब्राह्मणभोजनान्तम् । तदनन्तरं वैश्वदेवः । पञ्चदशी कण्डिका ॥ १५ ॥

आश्वयुज्यां पृषातकाः ॥ १ ॥ पायसमैन्द्रꣳ श्रपयित्वा दधिमधुघृत-मिश्रं जुहोतीन्द्रायेन्द्राण्या अश्विभ्यामाश्वयुज्यै पौर्णमास्यै शरदे चेति ॥२॥ प्राशनान्ते दधिपृषातकमञ्जलिना जुहोति ऊनं मे पूर्यतां पूर्णं मे मा व्यगा-त्स्वाहेति ॥ ३ ॥ दधिमधुघृतमिश्रममात्या अवेक्षन्त आयात्विन्द्र इत्यनु-वाकेन ॥ ४ ॥ मातृभिर्वत्सान्सꣳसृज्य ताꣳ रात्रिमाग्रहायणीं च ॥ ५ ॥ ततो ब्राह्मणभोजनम् ॥ ६ ॥ १६ ॥

( कर्कः )—'आश्व···तकाः' पृषातका इति कर्मणो नामधेयम् । तचाश्वयुज्यां पौर्णमास्यां भवति । 'पाय···न्द्राण्या' इत्येवमाद्याः पञ्चाहुतयः । ततः स्विष्टकृदादि । 'प्राश···मिति' एतेन मन्त्रेण । दधिपृषातकशब्देन पृषदाज्यमभिधीयते । 'दधि···केन' दधिमधुघृतमिश्रः पायसः अमात्या यजमानगृह्याः । 'मातृ···रात्रिम्' तस्यां रात्रौ मातृभिर्वत्साः संसृष्टा एव वसन्ति । अधि-कारमुपजीवन्नाह—'आग्र···च' रात्रिं वत्ससंसर्गः । ततो ब्राह्मणभोजनम् ॥ १६ ॥

( जयरामः )—पृषातका इति कर्मणो नामधेयम् । तदाश्वयुज्यां पौर्णमास्यां भवति । पायसमैन्द्रꣳ श्रपयित्वा दधिमधुघृतमिश्रं जुहोति । इन्द्राय इन्द्राण्यै इत्येवमाद्याः पञ्चाहुतयः । ततः स्विष्टकृदादि । 'प्राश···र्यताम्' इत्यनेन मन्त्रेण । अस्यार्थः । तत्र गार्ग्यो गायत्री प्रजापतिः पृषदाज्यहोमे० । अत्र देवतालिङ्गाभावात्—आज्यन्द्रव्यमनादेशे जुहोतिषु विधीयते । मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिरिति छन्दोगपरिशिष्टपरिभाषितत्वादग्निरेवात्र देवता तस्य प्रजापतित्वश्रवणात् । हे अग्ने अनेन पृषदाज्यहोमेन मे मम यदूनं तत्पूर्यतां पूर्णं त्वया क्रियताम् । यच्च पूर्णं मे मम तन्मा व्यगात् विपरीतभावमपूर्णतां मा गच्छतु । दधिपृषातकशब्देन पृषदाज्यमभिधीयते । आयात्विन्द्र इत्यनुवाकेन दधिमधुघृतमिश्रं पायसचरुशेषममात्या यजमानगृह्या अवेक्षन्ते । तस्यां रात्रौ मातृभिर्वत्सान्संसृज्य । एवंसति अधिकारमुपजीवन्नाह । आग्रहायणीं च रात्रिं वत्ससंसर्गः । ततो ब्राह्मणभोजनम् ॥ १६ ॥

( हरिहरः )—'आश्व···तकाः' पृषातकाइतिसंज्ञकं कर्म भवति । तच्च आश्वयुज्यां पूर्णिमायां भवति । 'पाय···होति' तत्र ऐन्द्रमिन्द्रदेवत्यं पायसं चरुं संसाध्य दधिमधुघृतैर्मिश्रं कृत्वा आवसथ्याग्नौ जुहोति । केभ्य इत्याह । इन्द्रा···चेति' इन्द्रायेत्यादिभिः पञ्चभिर्मन्त्रैः स्वाहाकारान्तैः प्रतिमन्त्रं पञ्चाहुतीर्जुहोति । यथामन्त्रं त्यागः ।'प्राश···स्वाहेति' ततः स्विष्टकृत्प्रभृति प्राशनान्ते पृषातकम् पृषदाज्यमञ्जलिना ऊनं मे इत्यादिना मन्त्रेण जुहोति । पृषदाज्यं घृते दधिप्रक्षेपाद्भवति । दुग्धेनापि तत्संभवाद्दधिग्रहणम् । 'दधि···केन' ततो दधिमधुघृतमिश्रं हुतशेषं पायसममात्या अमा च गृहं तत्रभवा अमात्या यजमानस्य गृह्याः भ्रातृपुत्रादयः अवेक्षन्ते आयात्विन्द्रोऽवस उप न इत्यारभ्य यूयं पात स्वस्तिभिः सदा न इत्यन्तेन अनुवाकेनावेक्षन्ते पश्यन्ति । 'मातृ···रात्रिम्' तामाश्वयुजीसंबन्धिनीं रात्रिं वत्सांस्तर्णकान् मातृभिर्जननीभिर्धेनुभिः संसृज्य संसृष्टान् कृत्वा तां रात्रिमिति कालाध्वनोरत्यन्तसंयोगे इत्युपपदविभक्तिर्द्वितीया तेन संध्यायां वत्सान् संसृज्य सकलां रात्रिं न बध्नीयात् । 'आग्रहायणीं च' न केवलं तामेव रात्रिं वत्ससंसर्गः आग्रहायणीं च मार्गशीर्षसंबन्धिनीमपि रात्रिम् । ततो ब्राह्मणभोजनम् । इति सूत्रार्थः ॥ ॥ अथ प्रयोगः । तत्र आश्वयुज्यां पौर्णमास्यां पृषातकाख्यं कर्म भवति । तद्यथा । प्रथमप्रयोगे मातृपूजाभ्युदयिकपूर्वकमावसथ्याग्नौ ब्रह्मोपवेशनादिप्राशनान्ते विशेषः । सक्षीराः प्रणीताः प्रणयेत् दधिमधुनी उपकल्पयेत् प्रणीताक्षीरेण पायसं श्रपयेत् । तत उपयमनकुशादानादर्वाक् पायसे दधिमधुघृतानि आवपेत् । आज्यभागानन्तरं दधिमधुघृतमिश्रेण पायसेन इन्द्राय स्वाहा इदमिन्द्राय० इन्द्राण्यै स्वाहा इदमिन्द्राण्यै० अश्विभ्याꣳस्वाहा इदमश्विभ्यां० आश्वयुज्यै पौर्णमास्यै स्वाहा इदमाश्वयुज्यै पौर्णमास्यै० शरदे स्वाहा इदं शरदे० । एवं पञ्चाहुतीर्हुत्वा तत एव पायसात् स्विष्टकृते हुत्वा महाव्याहृत्यादिदक्षिणादानान्ते स्थाल्यामाज्यं दधि आसिच्य पृषदाज्यं कृत्वा अञ्जलिनाऽऽदाय ऊनं मे पूर्यतां पूर्णं मे माव्यगात्स्वाहेति मन्त्रेणैकामाहुतिं जुहोति इदमग्नये० । ऊनं मे पूर्यतामित्यस्य होमस्य का देवतेत्यत्र संदेहः । देवतात्वं तद्धितचतुर्थीमन्त्रलिङ्गवाक्यप्रकरणैः प्रतीयते । अत्र तु दधिपृषातकमञ्जलिना जुहोतीति होमविधिपरे वाक्ये पृषातकं द्रव्यमात्रं श्रूयते न तद्धितो न चतुर्थी वा । मन्त्रेऽपि न देवताप्रकाशकं लिङ्गमस्ति न च वाक्यम् । ततः प्रकरणमवशिष्यते तच्च ऐन्द्रं पायसमैन्द्रꣳश्रपयित्वेति तद्धितात् अस्य यज्ञस्येन्द्रो देवतेति । तर्हि किं प्राकरणिकत्वात् अस्य होमस्य इन्द्रो देवता ततः—आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते । मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिरिति छन्दोगपरिशिष्टपरिभाषातः प्रजापतिः । तत्र वाक्यप्रकरणयोर्वाक्यस्य बलीयस्त्वात्प्रकरणबाधः । तेनेह प्रजापतिरेव

देवता । वासुदेवदीक्षितास्तु स्वपद्धतावग्नय इति लिखितवन्तः तत्कुत इति न ज्ञायते । ततो दधिमधुघृतमिश्रं हुतशेषं पायसममात्याः पुत्रादयः आयात्विन्द्र इत्यनुवाकेन यूयंपातस्वस्तिभिःसदान इत्यन्तेन अवेक्षन्ते । ततो ब्राह्मणभोजनम् । कृतैतत्कर्माङ्गतया ब्राह्मणमेकं भोजयिष्ये ॥ १६ ॥

( गदाधरः )—'आश्व···तकाः' पृषातका इति वक्ष्यमाणकर्मणो नामधेयम् । तच्चावसथ्ये आश्वयुज्यां पौर्णमास्यां भवति । आश्वयुजी आश्विनी पूर्णिमा । 'पाय···दे चेति' । ऐन्द्रमिन्द्रदेवत्यं पायसं पयसि शृतं चरुं श्रपयित्वा यथाविधि पक्त्वा दधिमधुघृतैर्मिश्रितं पायसं चरुम् इन्द्रायेत्यादिभिः पञ्चमन्त्रैः प्रतिमन्त्रं पञ्चाहुतीर्जुहोति । 'प्राश···स्वाहेति' संस्रवप्राशनान्ते दधिपृषातकं दध्ना मिश्रितं स्थाल्याज्यमञ्जलिना जुहोति ऊनं मे पूर्यतामिति मन्त्रेण । दधिपृषातकशब्दः पृषदाज्यवाची । अत्राग्निर्देवतेति गर्गवासुदेवजयरामकारिकाकाराः । आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते । मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिरिति छन्दोगपरिशिष्टपरिभाषावचनाद्वाक्येन प्राकरणिकीमिन्द्रदेवतां बाधित्वा प्रजापतिर्देवतेति हरिहरः । तच्चिन्त्यम् । अनादिष्टदेवतालिङ्गेष्वपि मन्त्रेषु देवतापेक्षायां सत्यां किं यत्किंचिद्देवतान्तरं परिकल्प्यतामुत प्रकृतैव गृह्यतामिति तत्र प्रकृतपरिग्रहो न्याय्यः संनिधानात् । अप्रकृतोपादाने पुनरसंनिधानात् संदेह इति । तथा च नैरुक्ताः—तथा येऽनादिष्टदेवता मन्त्रास्तेषु देवतोपपरीक्षा । यद्देवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्तीति । तत्रापि मुख्यत्वादिन्द्र एव । अयमर्थो दर्शितः कर्केणापि पिष्टलेपाञ्जुहोतीति सूत्रे । मन्त्रार्थः । हे इन्द्र मे मम यदूनं तदनेन होमेन पूर्यतां पूर्णं क्रियताम् । यत्र पूर्णं तन्माव्यगात् विपरीतभावमपूर्णतां मा गच्छतु । 'दधि···केन' अमा गृहं तत्र भवा अमात्या यजमानगृह्या भ्रातृपुत्रादयः दधिमधुघृतैर्मिश्रितं चरुशेषं आयात्विन्द्र इत्यनुवाकेन स्वस्तिभिःसदान इत्यन्तेनावेक्षन्ते विलोकयन्ति । 'मातृ···रात्रिम्' वत्सान् धेनुभिः संसृज्य संसृष्टान्कृत्वा तस्यां रात्रौ संसृष्टा एव वसन्ति । तामिति कालाध्वनोरत्यन्तसंयोग इत्युपपदविभक्तिर्द्वितीया । तेन संपूर्णां रात्रिं वसन्ति । अधिकारमुपजीवन्नाह—'आग्र···णीं च' आग्रहायणीं मार्गशीर्षसंबन्धिनीं रात्रिं संसृष्टा एव वत्साः वसन्ति । 'ततो···जनम्' ॥ षोडशी कण्डिका समाप्ता ॥ १६ ॥ ॥ * ॥

अथ पदार्थक्रमः । प्रथमप्रयोगे मातृपूजापूर्वकमाभ्युदयिकं श्राद्धम् । ब्रह्मोपवेशनादिदक्षिणादानान्ते विशेषः । सक्षीरं प्रणयनम् । दधिमधुनोरुपकल्पनम् । प्रणीताक्षीरमुत्सिच्य पायसश्रपणम् । प्रागुपयमनादानात्पायसे दधिमधुघृतावपनम् । आज्यभागान्ते दधिमधुघृतमिश्रेण पायसेन पञ्चाहुतयः । इन्द्राय स्वाहा० । इन्द्राण्यै० । अश्विभ्याᳪं स्वाहा । आश्वयुज्यै पौर्णमास्यै० । शरदे० । यथामन्त्रं त्यागाः । ततः पायसादेव स्विष्टकृत् । ततो महाव्याहृत्यादिनवाहुतयः । संस्रवप्राशनादिदक्षिणान्तम् । ततः स्थाल्याज्ये दध्यासिच्य तत्पृषदाज्यमञ्जलिना जुहोति ऊनंमे पूर्यतामिति इदमिन्द्राय० । ततो दधिमधुघृतमिश्रं चरुशेषं यजमानगृह्याः पुत्रादयोऽवेक्षन्ते आयात्विन्द्र इत्यनुवाकेन यूयंपातस्वस्तिभिःसदा न इत्यन्तेन मन्त्रेण । ततो ब्राह्मणभोजनम् । रात्रौ वत्ससंसर्गः । गौणकालेऽपीदं कार्यम् । पृषातकमिदं कर्म गौणकालेऽपि शस्यत इति कारिकोक्तेः । गर्गमते विशेषः । ब्रह्मासनाद्याज्यभागन्ते वर्हिःसादनानन्तरं दधिमधुघृतानामासादनम् पयसश्च । ग्रहणे इन्द्राय जुष्टं गृह्णामि । इन्द्रायेन्द्राण्यै अश्विभ्यामाश्वयुज्यै पौर्णमास्यै शरदे जुष्टमिति केचित् । आज्यभागान्ते पायसे दध्याद्यावपनम् । स्विष्टकृदन्ते पृषदाज्यहोमः । इदमग्नय इति त्यागः । ततो महाव्याहृत्यादिदक्षिणान्तम् । ततो गृह्याणां चर्ववेक्षणम् । ततो वर्हिर्होमादिविप्रभुक्त्यन्तम् । ततो वैश्वदेवः । रात्रौ वत्ससंसर्ग इति ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥ ॥*॥

( विश्व० )—'आश्व···तकाः ' कर्मनामधेयं पृषातका इति । तदाश्वयुज्यां पौर्णमास्यां भवति कर्तव्यतामाह—'पाय···चेति'। मातृपूजाभ्युदयिके कृत्वा ब्रह्मासनास्तरणाद्याज्यभागान्ते विशेषः । आसादने दक्षिणायाः प्राग्दधिमधुघृतानामासादनं पयसश्च । चरुग्रहणे इन्द्राय जुष्टं गृह्णामि । प्रोक्षणे त्वाशब्दः । आज्यभागानन्तरं पायसं स्थालीपाकं दधिमधुघृतैर्मिश्रयेत् । तादृशं काभ्यो जुहोतीत्यत उक्तम् इन्द्रायेन्द्राण्या इत्यादि । तद्यथा । स्थालीपाकैकदेशहोमः । इन्द्राय स्वाहा इदमिन्द्राय । इन्द्राण्यै स्वाहा । इदमिन्द्राण्यै । अश्विभ्यां स्वाहा इदमश्विभ्याम् । आश्वयुज्यै पौर्णमास्यै स्वाहा इदमाश्वयुज्यै पौर्णमास्यै । शरदे स्वाहा इदं शरदे । अग्नये स्विष्टकृते स्वा० इदमग्नये स्विष्टकृते । ' प्राश···त्स्वाहेति ' पृषातकं पृषदाज्यं दधिपदात्पयः । तथाच पयसा मिश्रितं पृषदाज्यं संहताङ्गुलिनाञ्जलिना मनुष्यतीर्थेन जुहोति , ऊनं मे पूर्यतामिति मन्त्रेण । इदमग्नय इति त्यागः । ततो महाव्याहृत्यादिदक्षिणादानान्तम् । प्राशनान्त इत्यस्य सूत्रावयवस्याचार्यमते उत्तरसूत्रसंबन्धात् । यन्मते यथाश्रुतं तन्मते दक्षिणादानान्ते दधिपृषातकहोमः । ' दधि···वाकेन ' ततो दक्षिणादानान्ते दधिमधुघृतानां चरौ प्रक्षेपः । तैर्मिश्रितं चरुममात्याः यजमानगृह्याः पुत्रादयः आयात्विन्द्रइत्यनुवाकेन यूयंपातस्वस्तिभिः सदान इत्यन्तेन अवेक्षन्ते । अनुवाकान्ते अवेक्षणं मन्त्रान्तैः कर्मादिरित्युक्तेः । ततो बर्हिर्होमादिब्राह्मणभोजनान्तम् । तदनन्तरं वैश्वदेवः । ' मातृ···रात्रिं ' पृषातकाकर्ता तामाश्वयुजीं पौर्णमासीं रात्रीमभिव्याप्य वत्सानात्मनो मातृभिः सꣳसृज्य स्थातव्यम् । ' आग्र···णींच ' आग्रहायणी चेत्कर्म कृतं तदा तस्यामपि रात्रौ मातृभिर्वत्सान् संसृजेदित्यर्थः । अयं च वत्ससंसर्गः कर्माङ्गम् । ' ततो···जनं ' समाप्ते कर्मणि प्रातरित्यर्थः । षोडशी कण्डिका ॥ १६ ॥

अथ सीतायज्ञः ॥ १ ॥ व्रीहियवानां यत्र यत्र यजेत तन्मयꣳ स्थालीपाकꣳ श्रपयेत् ॥ २ ॥ कामादीजानोऽन्यत्रापि व्रीहियवयोरेवान्यतरꣳ स्थालीपाकꣳ श्रपयेत् ॥ ३ ॥ न पूर्वचोदितत्वात्संदेहः ॥ ४ ॥ असंभवाद्धिनिवृत्तिः ॥ ५ ॥ क्षेत्रस्य पुरस्तादुत्तरतो वा शुचौ देशे कृष्टे फलानुपरोधेन ॥ ६ ॥ ग्रामे वोभयसंप्रयोगादविरोधात् ॥ ७ ॥ यत्र श्रपयिष्यन्नुपलिप्त उद्धतावोक्षितेऽग्निमुपसमाधाय तन्मिश्रैर्दर्भैः स्तीर्त्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति ॥ ८ ॥ पृथिवी द्यौः प्रदिशो दिशो यस्मै द्युभिरावृताः तमिहेन्द्रमुपह्वये शिवा नः सन्तु हेतयः स्वाहा । यन्मे किंचिदुपेप्सितमस्मिन्कर्मणि वृत्रहन् । तन्मे सर्वꣳ समृध्यतां जीवतः शरदः शतꣳ स्वाहा । संपत्तिर्भूतिर्भूमिर्वृष्टिर्ज्यैष्ठ्यꣳ श्रैष्ठ्यꣳ श्रीः प्रजामिहावतु स्वाहा । यस्या भावे वैदिकलौकिकानां भूतिर्भवति कर्मणाम् । इन्द्रपत्नीमुपह्वये सीताꣳ सा मे त्वनपायिनी भूयात्कर्मणि कर्मणि स्वाहा ॥ अश्वावती गोमती सूनृतावती बिभर्ति या प्राणभृतो अतन्द्रिता । खलमालिनीमुर्वरामस्मिन्कर्मण्युपह्वये ध्रुवाꣳ सा मे त्वनपायिनी भूयात्स्वाहेति ॥ ९ ॥ स्था-

लीपाकस्य जुहोति सीतायै यजायै शमायै भूत्या इति ॥ १० ॥ मन्त्रवत्प्रदानमेकेषाम् ॥ ११ ॥ स्वाहाकारप्रदाना इति श्रुतेर्विनिवृत्तिः ॥१२॥ स्तरणशेष[ कुशे ?कूर्चे ]षु सीतागोप्तृभ्यो बलिꣳ हरति पुरस्ताद्ये त आसते सुधन्वानो निषङ्गिणः । ते त्वा पुरस्ताद्गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति ॥ १३ ॥ अथ दक्षिणतोऽनिमिषा वर्मिण आसते । ते त्वा दक्षिणतो गोपायन्त्वप्रमता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति ॥ १४ ॥ अथ पश्चात् आभुवः प्रभुवो भूतिर्भूमिः पार्ष्णिः शुनङ्कुरिः । ते त्वा पश्चाद्गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति ॥ १५ ॥ अथोत्तरतो भीमा वायुसमा जवे । ते त्वोत्तरतः क्षेत्रे खले गृहेऽध्वनि गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति ॥ १६ ॥ प्रकृतादन्यस्मादाज्यशेषेण च पूर्ववद्बलिकर्म ॥ १७ ॥ स्त्रियश्चोपयजेरन्नाचरितत्वात् ॥ १८ ॥ सꣳस्थिते कर्मणि ब्राह्मणान्भोजयेत्सꣳस्थिते कर्मणि ब्राह्मणान्भोजयेत् ॥ १९ ॥ १७ ॥ ॥ ॥

( कर्कः )—' अथ सीतायज्ञः ' व्याख्यास्यत इति सूत्रशेषः । स चायं कृष्यादिप्रवृत्तस्यैव भवति । ' व्रीहि···येत् ' व्रीहिकाले व्रीहीन् यवकाले यवान् । ' कामा···येत् ' ततोऽन्यत्रापि यागं कुर्वन्पक्षादिप्रभृतिषु व्रीहियवयोरेवान्यतरमिच्छया स्थालीपाकं श्रपयेत् । ' न पू···संदेहः ' नैवात्र संदेहः पूर्वं चोदितमेवैतत् व्रीहीन् यवान्वा हविषी इति । अतो न वक्तव्यमेतत् । ' असं···नि-वृत्तिः ' यावस्य चरोरसंभवाद्विनिवृत्तिरधस्तनस्य शाखान्तरस्य तेन पुनरारम्भः । अनवस्रावितान्तरोष्मपाकविशदविषयसिद्धे तण्डुलपाके चरुशब्दस्य प्रयोगप्रत्ययादिति । ' क्षेत्र···रोधेन ' कर्तव्यः । ' ग्रामे···गात् ' ग्रामे वा कर्तव्यम् । उभयं हि संप्रयोक्तुं शक्यते । फलानुपरोधः कृष्टं च न चात्र विरोधः । अतो वाशब्दो विकल्पार्थः । ' यत्र···होति ' उपलेपनोद्धतावोक्षितग्रहणं कृष्टेऽपि यथास्यादिति । तन्मिश्रैर्दर्भैः स्तरणं कर्तव्यम् । व्रीहिकाले व्रीहिसस्यमिश्रैर्यवकाले यवसस्यमिश्रैः स्तरणम् । आज्यभागोत्तरकालमाज्याहुतीर्जुहोति । ' पृथि···दिश ' इत्यादि ' स्थालीपाकस्य जुहोति ' इत्यन्तम् । स्थालीपाकस्येत्यवयवलक्षणा षष्ठी । 'सीता···केषाम् ' एकेषामाचार्याणां मतं मन्त्रवदेव प्रदानं भवति न स्वाहाकारेण । ' स्वाहा···श्रुतेः ' श्रुतौ तु स्वाहाकारप्रदानता । वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयत इति न चात्र वषट्कारः प्रवर्तते । याज्यापुरोनुवाक्यत्वे हि वषट्कारस्य श्रवणम् । तस्मात्स्वाहाकारोऽप्यत्र ( न ) भवति । विनिवृत्तिरधस्तनस्य पक्षस्य मन्त्रवत्प्रदानमित्यस्य । अस्मिन्नवसरे लाङ्गलयोजनदेवताभ्यस्तद्भूतोपादानात्तेन स्थालीपाकेन होमः स्थालीपाकहोमाधिकारात् । ततः स्विष्टकृदादि । ' स्तर···आसत० ' इत्येवमादिभिर्मन्त्रैः । स्तरणे ये शेषभावं गतास्त एव कुशास्तेषु बलिं हरति पुरस्ताद्ये त आसत इत्येवमादिभिर्मन्त्रैः । ' अथ···सते० ' इत्यनेन

मन्त्रेण । 'अथ पश्चादाभुवः प्रभुव०' इत्यनेन मन्त्रेण । 'अथोत्तरतो भीमा वायुसमा जवे०' इत्यनेन मन्त्रेण । 'प्रक्व...कर्म' कर्तव्यम् । 'स्त्रिय...त्वात्' स्त्रियश्च बलिकर्म कुर्युः । कुत एतत् आचरितत्वात् आचरन्ति हि स्त्रियो बलिकर्म । 'सर्ठस्थि...जयेत्' ॥ १७ ॥

इति श्रीकर्कोपाध्यायकृतौ गृह्यसूत्रभाष्ये द्वितीयकाण्डविवरण संपूर्णम् ॥ * ॥

( जयरामः )—'अथ सीतायज्ञः' व्याख्यास्यत इति सूत्रशेषः । स चायं कृष्यभिप्रवृत्तस्यैव साग्नेर्भवति यत्र यत्रापि व्रीहियवयोरेवान्यतरठंस्थालीपाकठंश्रपयेत् व्रीहिकाले व्रैहेयं यवकाले यावम् । अतोऽन्यत्रापि यागं कुर्वन् पक्षादिप्रभृतिषु व्रीहियवयोरेवान्यतरमिच्छया स्थालीपाकं श्रपयेत् । नैवात्र संदेहः । पूर्वचोदितत्वात् व्रीहीन् यवान्वा हविषी इति श्रौतेपूक्तत्वात् व्रीहियवयोरिति । 'असंभवादिति' यावस्य चरोरसंभवाद्विनिवृत्तिरधस्तनसूत्रस्य तेन पुनरयमारम्भः । यद्वा ननु यावस्य चरोर्विनिवृत्तिदर्शनात्कथमेकतरं श्रपयेत् तत्राह । असंभवादिति । यावस्य चरोर्विनिवृत्तिः सा चासंभवात् ननु शास्रतः असंभवश्चानवस्रावितान्तरोष्मपाकविशदसिद्धे तण्डुलपाके चरुशब्दप्रयोगदर्शनात् । क्षेत्रस्य पुरस्तात्पूर्वस्यां दिशि कृष्टे फालेन विलिखिते फलानुपरोधेन सस्याविनाशेन विधिना कार्यः । ग्रामे वा कर्तव्यः । उभयसंप्रयोगात् उभयं हि फलानुरोधः कृष्टं च संप्रयोक्तुं शक्यम् । न चात्रविरोधः एकतरोपादानेऽपरस्य बाधापत्तेः । [ तन्मिश्रे व्रीहिकाले विकल्पस्य विद्यमानत्वात् अत्रापि कृष्ट एव ।(?) ] उपलेपनादिग्रहणं कृष्टेऽपि च यथा स्यादिति । तन्मिश्रैः व्रीहिकाले व्रीहिशष्पमिश्रैः यवकाले यवशष्पमिश्रैः स्तरणम् । आज्याहुतीः पृथिवीत्यादिपञ्चभिर्मन्त्रैः क्रमेण पञ्च । अथ मन्त्रार्थः । तत्र पञ्चानां प्रजापतिः आद्ययोरनुष्टुप् तृतीयादिषु प्रतिष्ठापङ्क्तिजगत्यः लिङ्गोक्ता आज्यहोमे० । पृथिव्यादिदेवता यस्मै इन्द्राय इन्द्रमुपासितुं स्थिताः । प्रदिशो विदिशः । किंभूताः द्युभिः कान्तिभिरावृताः पूर्णाः । तमिन्द्रमिह सीतायज्ञे उपह्वये उपह्वानं करोमि । उपहूतस्येन्द्रस्य हेतयो वज्राद्यायुधानि शिवाः कल्याणकारिण्यः सन्तु तस्मै च स्वाहा सुहुतमस्तु ॥१॥ द्वितीयस्यार्थः हे वृत्रहन् अस्मिन्कर्मणि सीतायज्ञे यत्किंचिन्मे ममोपेप्सितं प्राप्तुमिष्टं तत्सर्वं शतं शतं शरदो वत्सरान् जीवतः समृध्यताम् समृद्धिंप्राप्नुताम् । तुभ्यं स्वाहेति समानं सर्वत्र ॥ २ ॥ तृतीयस्यार्थः प्रजापतिः प्रतिष्ठा लिङ्गोक्ता आज्यहोमे० । संपत्तिर्धनाद्युपचयः । भूतिरैश्वर्यम् । भूमिराश्रयः । वृष्टिरभीष्टवर्षणम् । ज्यैष्ठ्यतादिना ज्येष्ठत्वम् । श्रैष्ठ्यं सर्वोपकारित्वम् । श्रीयते सेव्यते सर्वैरिति श्रीः लाङ्गलपद्धतेः प्रतिष्ठासंपत्त्यादि गणः इह प्राप्तः सन् मदीयां प्रजां पुत्रादिकमवतु रक्षतु । इन्द्रो वा एतैर्युक्तां प्रजामवत्विति ॥ ३॥ चतुर्थस्यार्थः । यस्याः सीतायाः सद्भावे वैदिकलौकिकानां श्रौतस्मार्तकर्मणां भूतिः संपत्तिर्भवति तामिन्द्रपत्नीं सीतामुपह्वये सा सीता मे मम अनपायिनी अदनीयादिवृद्धिकारिणी कर्मणि कर्मणि प्रतिकर्म तु विशेषात् भूयात् भवतु इति । तस्यै स्वाहा ॥४॥ तामेव विशिनष्टि । अश्वावती अश्वाः विद्यन्ते यस्यां साऽश्ववती सैवाश्वावती । दीर्घश्छान्दसः । गावो विद्यन्ते यस्यां सा गोमती । सूनृतं मधुरवाक्यं तिष्ठति यस्यां सा सूनृतवती सैव सूनृतावती । प्राणभृतोऽशेषजीवान् बिभर्ति पुष्णाति । अतन्द्रिता आलस्यरहिता सती । खलमालिनी खले धान्यराशिस्थाने मालते शोभते इति खलमालिनी ताम् उर्वरां सर्वसस्याढ्यां ध्रुवां स्थिराम् तां सीतां अस्मिन्कर्मण्युपह्वये । सा मे अनपायिनी दुःखध्वंसिनी तु विशेषात् भूयात्स्वाहेति । स्थालीपाकस्येत्यत्रावयवलक्षणा षष्ठी । सीतायै यजायै शमायै भूत्यै इति चतस्र आहुतीर्जुहोति । एकेषामाचार्याणां मते मन्त्रवत्प्रदानं भवति यथामन्त्रं होमो नतु स्वाहाकारेण । कुतः स्वाहाकारप्रदाना इति श्रुतेः । श्रुतौ जुहोतीनां स्वाहाकारप्रदानता श्रूयते इदं तु स्मार्तं कर्म । ननु वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयत इति सामान्योक्तेरत्रापि प्रवर्तताभिति चेत् ।

न चात्र वषट्कारप्रवृत्तिः । याज्यापुरोनुवाक्यावत्त्वे हि वषट्कारश्रवणम् । तत्सहपाठात्स्वाहाकारोऽप्यत्र न प्रवर्तते । तत्र विनिवृत्तिः मन्त्रवत्प्रदानपक्षस्य निरासः । कुतः ?। स्मार्तेऽपि कर्मणि स्वाहाकारप्रदानत्वस्य विधानात् । तद्यथा छन्दोगपरिशिष्टे कात्यायनः—स्वाहाकारवषट्कारनमस्कारा दिवौकसाम् । हन्तकारो मनुष्याणां स्वधाकारः स्वधाभुजामिति । अत्रावसरे सीतायज्ञे चेति सूत्रातिदिष्टाभ्यो लाङ्गलयोजनदेवताभ्य इन्द्रादिभ्यस्तद्भूतोपादानात्तेन स्थालीपाकेन होमः स्थालीपाकहोमाधिकारात् । ततश्च स्विष्टकृदादि । स्तरणशेषकूर्चेषु सीतागोप्तृभ्यो वलिं हरति पुरस्ताद्येतआसते इत्येवमादिभिर्मन्त्रैः प्रतिमन्त्रम् । स्तरणे शेषभावं गतास्त एव कूर्चास्तेपु वलिहरणम् । अथ मन्त्रार्थः । तत्र चतुर्णां परमेष्ठी यजुः लिङ्गोक्ता वलिहरणे० । हे सीते ये देवाः सुधन्वानः शोभनधनुष्मन्तः निषङ्गिणः सतूणीराः ते तव पुरस्तात्पूर्वभागे आसते तिष्ठन्ति ते त्वा त्वां पुरस्तात्प्राच्यां दिशि गोपायन्तु रक्षन्तु । गुपूधूपविच्छिपणिपनिभ्य आय इत्यायप्रत्ययः । किंभूताः अप्रमताः सावधानाः । अनपायिनः कष्टहराः । अहं चैषां देवानां देवेभ्यो नमस्करोमि । वलिं चेममेभ्यो हरामि इति । अथ एवं दक्षिणतस्तव दक्षिणपार्श्वे ये अनिमिषाः निमेषमकुर्वाणाः वर्मिणः संनद्धाः । शेषं समानम् । अथैवं पश्चात्पश्चिमायां दिशि । आभुवः आसमन्ताद्भवाः प्रभुवः प्रकृष्टेन भवाः । तानेवाह । भूतिर्भूमिः पार्ष्णिः शुनङ्कुरिरित्येवंनामानः । शेषं समानम् । अथैवमुत्तरतः उत्तरपार्श्वे भीमाः भीषणाः । जवे वेगे वायुना समास्तुल्याः । क्षेत्रे खले गृहे अध्वनि वा वर्तमानं त्वा त्वां गोपायन्तु । शेषं समानम् । एवं मन्त्रलिङ्गाच्चतसृषु दिक्षु वलिदानम् । प्रकृतात्प्रधानदेवतासंवन्धिनो व्रैह्याद्यावाद्वा स्थालीपाकादन्यो यः सिद्धः पाकश्चरुस्तस्मात् । स्थाल्येनाज्यशेषेण च पूर्ववत् लाङ्गलयोजनवत् इन्द्रं पर्जन्यमित्यादिभ्यो वलिहरणम् । स्त्रियश्चाचरितत्वादाचाराद्बलिकर्म कुर्युः । सᳬस्थिते कर्मणि ब्राह्मणान् भोजयेत् ॥ १७ ॥

इत्याचार्यवलभद्रसुतजयरामकृते गृह्यभाष्ये सज्जनवल्लभाख्ये द्वितीयकाण्डविवरणं समाप्तिमगमत् ॥ * ॥

(हरिहरः)—'अथ सीतायज्ञः' अथेदानीं सीतायज्ञकर्म व्याख्यास्यत इति शेषः । तत्र कृषिप्रवृत्त औपासनिकोऽधिक्रियते । 'व्रीहि'''येत्' तत्र सीतायज्ञे व्रीहयश्च यवाश्च व्रीहियवास्तन्मध्ये यत्र यत्र यस्मिन् यस्मिन् व्रीहिकाले यवकाले वा यजेत सीतायज्ञेन तत्र तत्र तन्मयं व्रीहिमयं व्रीहिकाले यवमयं यवकाले स्थालीपाकं चरुं श्रपयेत् । 'कामा'''येत्' कामात् इच्छातः अन्यत्रापि पक्षादिप्रभृतिषु ईजानो यागं कुर्वन् व्रीहियवयोरेवान्यतरं स्थालीपाकं श्रपयेत् । 'न पू'''न्देहः' अत्र व्रीहियवयोरन्यतरस्य यागमात्रसाधनद्रव्यत्वे न संदेहः । कुतः पूर्वचोदितत्वात् पूर्वोपदिष्टत्वात् । कुत्रेति चेत् व्रीहीन् यवान्वा हविषी इत्यत्र कल्पे अतो न संदेहः । 'अस''वृत्तिः' ननु यावस्य चरोर्विनिवृत्तिर्दृश्यते कथमन्यतरं स्थालीपाकं श्रपयेदिति चेत् उच्यते—यावचरोर्या विनिवृत्तिः सा असंभवात् न शास्त्रात् अतो नायमसंभवविनिवृत्तस्य यावस्य चरोः प्रतिप्रसवः । यतः सामान्यशास्त्रविहितं कचिच्छास्त्रान्तरेण प्रतिषिद्धं पुनर्विधीयमानं हि प्रतिप्रसवमुच्यते । इदं त्वसंभवात्प्रतिषिद्धम् । कथमसंभव इतिचेत् अनवस्रावितान्तरोष्मपक्के ईषदसिद्धे तण्डुलपाके चरुशब्दप्रयोगप्रत्ययात् । अतो वाचनिको यावस्थालीपाको यत्र तत्र गुलिकाभिः संपाद्यते यत्र पुनर्विकल्पः तत्रासंभवाद्विनिवृत्तिरिति । 'क्षेत्र'''घेन' क्षेत्रस्य सस्यवतः पुरस्तात् पूर्वस्यां दिशि उत्तरतो वा उदीच्यां वा शुचौ अमेध्यद्रव्यरहिते देशे कृष्टे फालेन विलिखिते फलस्य सस्यस्य अनुपरोधः अवाधः फलानुपरोधस्तेन फलानुपरोधेन सीतायज्ञः कर्तव्यः । 'ग्रामे'''गात्' यद्वा ग्रामे कर्तव्यः कुतः उभयसंप्रयोगात् । उभयं क्षेत्रं ग्रामश्च संप्रयोक्तुमधिकरणतया संवोढुं शक्यते फलानुपरोधेन कृष्टत्वेन वा । पुरस्तादुत्तरतो वा शुचौ देशे कृष्टे इति ग्रामस्यापि विशेषणत्वेन संव-

ध्यते अविरोधात् । ननु क्षेत्रग्रामयोः एकतरोपादानेन अन्यतरस्य बाधः प्रसज्येत ततो विरोध इति चेत् न । 'अविरोधात्' न विरोधः अविरोधस्तस्मादविरोधात् विकल्पादेकतरोपादानं न दोषः । व्यवस्थासंभवे हि अष्टदोषदुष्टोऽपि विकल्प आश्रीयते न्यायविद्भिः । 'यत्र···होति' यत्र क्षेत्रे ग्रामे वा चरुं श्रपयिष्यन् भवति श्रपयितुमिच्छा भवति तत्र उपलिप्ते गोमयोदकेन उद्धते स्फ्येनोल्लिखिते अवोक्षिते मणिकोदकेन सिक्ते अग्निमावसथ्यं स्थापयित्वा । अत्र पुनरुपलेपनाद्युपदेशः कृष्टेऽपि प्राप्त्यर्थः न पुनः परिसमूहनोद्धरणनिवृत्त्यर्थः । तन्मिश्रैर्दर्भैःस्तीर्त्वा तैर्व्रीहिभिर्यवैर्वा मिश्रा मिलिता दर्भास्तैस्तन्मिश्रैर्दर्भैरग्निं स्तीर्त्वापरिस्तीर्य आज्यभागयागानन्तरं वक्ष्यमाणमन्त्रैः पृथिवी द्यौरित्यादिभिः पञ्चभिर्मन्त्रैः क्रमेण पञ्चाज्याहुतीर्जुहोति । 'स्थाली···केषाम्' स्थालीपाकस्येत्यवयवलक्षणा षष्ठी । तस्य सीताद्याभ्यश्चतसृभ्यो देवताभ्यश्चतस्र आहुतीः क्रमेण तन्नामभिरेव चतुर्थ्यन्तैः स्वाहाकारान्तैश्च जुहोति । एकेषामाचार्याणां मते मन्त्रवदेव प्रदानम् होमः न स्वाहाकारः । किं कारणम् 'स्वाहा···श्रुतेः' स्वाहाकारेण प्रदानं येषु ते स्वाहाकारप्रदानाः जुहोतयः इति श्रुतेः श्रुतौ श्रौतकर्मणि स्वाहाकारप्रदानत्वम् इदं तु स्मार्तं कर्म ॥ वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते इति सामान्यवचनात् गार्ह्येऽपि प्रवर्तताभिति चेत् नचात्र वषट्कारस्य प्रवृत्तिः किमिति याज्यापुरोनुवाक्यावत्वे वषट्कारस्य श्रवणात् । तेन सह पाठाच्च स्वाहाकारोऽप्यत्र निवर्तते । 'विनिवृत्तिः' मन्त्रवत्प्रदानमित्येतस्य पक्षस्य विनिवृत्तिः निरासः अप्रवृत्तिरिति यावत् । कुतः स्मार्तेऽपि कर्मणि स्मृतिकारैः स्वाहाकारस्य विधानात् । तत् यथा छन्दोगपरिशिष्टे कात्यायनः—स्वाहाकारवषट्कारनमस्कारा दिवौकसाम् । हन्तकारो मनुष्याणां स्वधाकारः स्वधाभुजामिति ॥ अथ सीतायज्ञ इत्यनेन सूत्रेणातिदिष्टाभ्यो लाङ्गलयोजनदेवताभ्यः तद्भूतोपात्तस्थालीपाकेनास्मिन्नवसरे जुहुयात् । कुतः ततः स्थालीपाकहोमाधिकारात् । ततः स्विष्टकृदादि । 'स्तर···आसत इत्यादि' तत्र पुरस्ताच्च इत्यादिभिश्चतुर्भिर्मन्त्रैः स्तरणे शेषभावमुपसर्जनत्वं गताः प्राप्ताः त एव कुशास्तेषु स्तरणशेषकुशेषु बलिं हरति केभ्यः सीतागोप्तृभ्यः सीता लाङ्गलपद्धतिः ताः गोपायन्ति पालयन्ति ये ते सीतागोप्तारस्तेभ्यः सीतागोप्तृभ्यः [ स्तरणशेषकूर्चाः ] प्राच्यादिषु चतसृषु दिक्षु यथालिङ्गम् । 'प्रकृ···कर्म' प्रकृताप्रधानदेवतासंबन्धिनो व्रैह्याद्याद्वा स्थालीपाकात् अन्यो यः सिद्धोपात्तश्चरुस्तस्मात् स्थाल्येनाज्यशेषेण च पूर्ववत् लाङ्गलयोजनवत् बलिकर्म इन्द्रपर्जन्यादिभ्यो बलिहरणं कर्तव्यम् । 'स्त्रिय···त्वात्' स्त्रियश्च भार्यादिकाः उपयजेरन् बलिकर्मणा ताभ्य एव देवताभ्यः पूजां कुर्युः । कुत एतत् आचरितत्वात् । प्राचीनाभिः स्त्रीभिर्बलिकर्मणः कृतत्वात् । 'सं···जयेत्' संस्थिते समाप्ते सीतायज्ञाख्ये कर्मणि ब्राह्मणान् विप्रान् त्रिप्रभृतीन् भोजयेत् आशयेद्भक्ष्यभोज्यादिभिः । द्विरुक्तिरत्र काण्डसमाप्तिनिबन्धना ॥ इति सूत्रार्थः ॥ ॥ अथ प्रयोगः । अथ सीतायज्ञः । कृषिं कुर्वतः साग्नेः व्रीहिनिष्पत्तिकाले यवनिष्पत्तिकाले च भवति । तत्र प्रथमप्रयोगे मातृपूजाभ्युदयिके भवतः । अनन्तरं क्षेत्रस्य पूर्वत उत्तरतो वा कृष्टे शुचौ देशे यत्र सस्यानि न नश्यन्ति तत्रेदं कर्म कुर्यात् । यद्वा ग्रामे पूर्वत उत्तरतो वा शुचिदेशस्य कर्षणं विधाय तत्र कर्तव्यम् । एवं देशद्वयान्यतरे देशे पञ्च भूसंस्कारान् कृत्वा औपासनाग्निमुपसमाधाय ब्रह्मोपवेशनादि कुर्यात् । तत्र विशेषः व्रीहिकाले व्रीहिसस्यमिश्रैर्दर्भैरग्निं परिस्तृणाति यवकाले यवसस्यमिश्रैः तत्र व्रीहिकाले व्रीहिमयमेकमेव चरुं यवकाले यवमयं श्रपयति । अपरं स्थालीपाकं सिद्धमेवासादयति तण्डुलानन्तरमुपकल्पयति बलिपटलकं, बलिपटलकमिति शूर्पादिकं वैणवं पात्रं कुल्माषौदनयुक्तमुच्यते । तण्डुलानन्तरं सिद्धं चरुं प्रोक्षति । आज्यभागानन्तरं पञ्चाज्याहुतीर्जुहोति तद्यथा पृथिवी द्यौः प्रदिशो दिशो यस्मै द्युभिरावृताः । तमिहेन्द्रमुपह्वये शिवा नः सन्तु हेतयः

स्वाहा इदमिन्द्राय० । यन्मे किंचिदुपेप्सितमस्मिन्कर्मणि वृत्रहन् । तन्मे सर्वꣳ समृध्यतां जीवतः शरदः शतꣳ स्वाहा । इदमिन्द्राय० । संपत्तिर्भूतिर्भूमिर्वृष्टिर्ज्यैष्ठ्यꣳ श्रैष्ठ्यꣳ श्रीः प्रजामिहावतु स्वाहा । इदमिन्द्राय० । यस्या भावे वैदिकलौकिकानां भूतिर्भवति कर्मणाम् । इन्द्रपत्नीमुपह्वये सीताꣳ सा मे त्वनपायिनी भूयात्कर्मणि कर्मणि स्वाहा । इदमिन्द्रपत्न्यै० । अश्वावती गोमती सूनृतावती विभर्त्ति या प्राणभृतो अतन्द्रिता । खलमालिनीमुर्वरामस्मिन्कर्मण्युपह्वये ध्रुवाꣳ सा मे त्वनपायिनी भूयात्स्वाहा । इदं सीतायै० । अथ प्रकृतस्य स्थालीपाकस्य चतस्र आहुतीर्जुहोति । यथा सीतायै स्वाहा इदं सीतायै० यजायै स्वाहा इदं यजायै० शमायै स्वाहा इदं शमायै० भूत्यै स्वाहा इदं भूत्यै० । अथ सिद्धेन स्थालीपाकेन लाङ्गलयोजनदेवताभ्योऽष्टाहुतीर्जुहोति । यथा इन्द्राय स्वाहा इदमिन्द्राय० पर्जन्याय स्वाहा इदं पर्जन्याय० अश्विभ्याꣳ स्वाहा इदमश्विभ्यां० मरुद्भ्यः स्वाहा इदं मरुद्भ्यो० उदलाकाश्यपाय स्वाहा इदमुदलाकाश्यपाय० स्वातिकार्यै स्वाहा इदं स्वातिकार्यै० सीतायै स्वाहा इदं सीतायै० अनुमत्यै स्वाहा० इदमनुमत्यै० । यथादैवतं त्यागः । प्रकृतात्सिद्धान्नचरोः स्विष्टकृत् । ततो महाव्याहृत्यादि ब्रह्मणे दक्षिणादानान्तं कृत्वा क्षेत्रस्य पुरस्तादारभ्य प्रतिदिशं स्तरणशेषकुशतृणान्यास्तीर्य तेषु मुख्येन चरुणा यथास्तरणं वक्ष्यमाणमन्त्रैर्बलीन् हरति । यथा पुरस्ताद्ये त आसते सुधन्वानो निषङ्गिणः । ते त्वा पुरस्ताद्गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति पुरस्ताद्बलिहरणमन्त्रः । इदं सुधन्वभ्यो निषङ्गिभ्यो० । अथ दक्षिणतोऽनिमिषा वर्मिण आसते । ते त्वा दक्षिणतो गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति दक्षिणतो बलिहरणमन्त्रः । इदमनिमिषेभ्यो वर्मिभ्यो० । अथ पश्चादाभुवः प्रभुवो भूतिर्भूमिः पार्ष्णिः शुनङ्कुरिः । ते त्वा पश्चाद्गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति पश्चिमतो बलिहरणमन्त्रः । इदमाभूभ्यः प्रभूभ्यो भूत्यै भूम्यै पार्ष्ण्यै शुनङ्कुर्यै० । अथोत्तरतो भीमा वायुसमा जवे । ते त्वोत्तरतः क्षेत्रे खले गृहेऽध्वनि गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति उत्तरतो बलिहरणमन्त्रः । इदं भीमेभ्यो वायुसमाजवेभ्यो० । अथ सिद्धचरुशेषं स्थाल्येनाज्यशेषेण सन्नीय तेनेन्द्रादिभ्योऽनुमत्यन्तेभ्यो लाङ्गलयोजनदेवताभ्यो बलीन् हरति । ततो बलिपटलकेन स्त्रियश्चेन्द्रादिभ्यो हलयोजनदेवताभ्यः अन्येभ्यश्च वृद्धव्यवहारसिद्धेभ्यः क्षेत्रपालादिभ्यो बलिदानं कुर्युः । ततो ब्राह्मणान् भोजयेत् ।

इत्यग्निहोत्रिहरिहरविरचितायां पारस्करगृह्यसूत्रव्याख्यानपूर्विकायां
प्रयोगपद्धतौ द्वितीयः काण्डः समाप्तः ॥ ॥ * ॥

( गदाधरः )—'अथ सीतायज्ञः' व्याख्यास्यत इति सूत्रशेषः । सीतायज्ञ इति कर्मनाम । स चायं कृषिप्रवृत्तस्य साग्नेर्भवति । 'व्रीहि''' येत्' व्रीहयश्च यवाश्च व्रीहियवाः । तेषां मध्ये यत्र यत्र यस्मिन् यस्मिन्काले व्रीहिकाले यवकाले वा सीतायज्ञेन यजेत तत्र तन्मयं व्रीहिकाले व्रीहिमयं यवकाले यवमयं स्थालीपाकं चरुं श्रपयेत् । 'कामा'''येत्' कामादिच्छया अतोऽन्यत्रापि ईजानो यागं कुर्वन् पक्षादिप्रभृतिषु व्रीहियवयोरेवान्यतरं स्थालीपाकं श्रपयेत् । 'न पू'''न्देहः' व्रीहियवयोरन्यतरस्य यागसाधनत्वे नैव संदेहः । कुतः ? परिभाषासूत्रे व्रीहीन् यवान्वा हविषी इति पूर्वं चोदितत्वात् पूर्वमुपदिष्टत्वात् । अतोऽर्थादपि च व्रीहिभिर्यवैर्वा यागः प्राप्नोतीति न वक्तव्यमेतत् । ननु यावस्य चरोर्विनिवृत्तिदर्शनात्कथमन्यतरं चरुं श्रपयेत्तत्राह—'असं'''वृत्तिः' यावस्य चरोरसंभवाद्विनिवृत्तिरप्रस्तनस्य शाखान्तरस्य तेन यवानां स्थालीपाकं कुर्यादिति पुनरारम्भः । असंभवश्चानवस्नावितान्तरोष्मपाकविशदविषयसिद्धे तण्डुलपाके चरुशब्दस्य प्रयोगप्रत्य-

यात् । अतः सर्वत्र स्थालीपाको व्रीहीणामेव । 'क्षेत्र'''धेन' सस्ययुक्तस्य क्षेत्रस्य पूर्वस्यां दिशि उदीच्यां वा अमेध्यरहिते देशे कृष्टे सीरेण विलिखिते फलस्य सस्यस्यानुपरोधेन अवाधेनोक्ते देशे सीतायज्ञः कार्यः । 'ग्रामे'''घात्' अथवा सीतायज्ञो ग्रामे वा कार्यः । उभयं हि संप्रयोक्तुं शक्यते फलानुपरोधः कृष्टं च । न चात्र विरोधः । अतो वाशब्दो विकल्पार्थः । 'यत्र'''स्वाहेति' यत्र क्षेत्रे ग्रामे वा चरुं श्रपयिष्यन् भवति तत्रोपलिप्ते उद्धते उल्लिखिते अवोक्षिते जलेनाभ्युक्षिते देशेऽग्निमावसथ्यमुपसमाधाय स्थापयित्वा तन्मिश्रैर्दर्भैर्व्रीहिकाले व्रीहिसस्यमिश्रैर्यवकाले यवसस्यमिश्रैर्दर्भैरग्निं परिस्तीर्याज्यभागयागानन्तरमाज्येन पञ्चाहुतीर्जुहोति पृथिवी द्यौरित्यादिभिः पञ्चमन्त्रैः प्रतिमन्त्रम् । उपलेपनोद्धतावोक्षितग्रहणं कृष्टेऽपि पञ्चसंस्कारप्रज्ञप्त्यर्थम् । नेतरपरिसंख्यार्थम् । मन्त्रार्थः । पृथिव्यादिदेवतायस्मै इन्द्राय इन्द्रमुपासितुं स्थिताः । प्रदिशः दिशश्च 'किंभूताः' द्युभिः कान्तिभिरावृताः पूर्णाः । तमिन्द्रम् इह यज्ञे उपह्वये समीपमाह्वये । इन्द्रस्य हेतयो वज्राद्यायुधानि शिवाः कल्याणकारिण्यः सन्तु । तस्मै च सुहुतमस्तु ॥ १ ॥ हे वृत्रहन् अस्मिन्कर्मणि सीतायज्ञे यत्किंचिन्मे ममोपेप्सितमिष्टं तत्सर्वं मे मम समृध्यतां संपद्यताम् । किंभूतस्य शतं शरदो वत्सरान् जीवतः । तुभ्यं स्वाहेति सर्वत्र समानम् ॥ २ ॥ संपत्तिर्धनाद्युपचयः । भूतिरैश्वर्यम् । भूमिराश्रयः । वृष्टिरभीष्टस्य । ज्यैष्ठ्यं जेष्ठत्वम् । श्रैष्ठ्यं श्रेष्ठत्वम् । श्रीः प्रतिष्ठासंपत्त्यादिगणः इह यज्ञे प्रीतः सन् मदीयां प्रजां पुत्रादिवर्गमवतु रक्षतु । इन्द्रो वा एतैर्युक्तां प्रजामवत्विति ॥ ३ ॥ यस्याः सीतायाः सह वैदिकलौकिकानां श्रौतस्मार्तानां कर्मणां भूतिः संपत्तिर्भवति । तामिन्द्रपत्नीं सीतामुपह्वये । सा सीता मे मम अनपायिनी अदनीयादिवृद्धिकर्त्री कर्मणि कर्मणि प्रतिकर्म भूयात् भवतु । तस्यै स्वाहा ॥४॥ तामेव विशिनष्टि । अश्वावती अश्वादिसंपत्तिकर्त्री । एवं गोमत्यादौ । सूनृता मधुरवाक् । अतन्द्रिता सावधाना सती या प्राणभृतो जीवान् बिभर्ति पुष्णाति । किंभूता । खलमालिनी धान्यराशिवती । उर्वरा सर्वसस्यानां संपत् । तां ध्रुवां स्थिरामस्मिन्कर्मण्युपह्वये । उपहूता च सा मे मम अनपायिनी दुःखध्वंसिनी भवतु । तस्यै स्वाहा । 'स्थाली'''त्या इति' सीताया इति चतुर्भिर्मन्त्रैः प्रतिमन्त्रं स्थालीपाकेन चतस्र आहुतीर्जुहोति । अवयवलक्षणा षष्ठी स्थालीपाकस्येति । 'मन्त्र'''श्रुतेः' एकेषामाचार्याणां मते मन्त्रवत्प्रदानम् यथामन्त्रं होमो नतु स्वाहाकारेण । कुतः स्वाहाकारप्रदाना इति श्रुतेः । श्रुतौ हि जुहोतीनां स्वाहाकारप्रदानता श्रूयते । इदं तु स्मार्तं कर्म । ननु वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयत इति सामान्येनोक्तेरत्रापि तत्प्रवर्ततामिति चेत् । न चात्र वषट्कारप्रवृत्तिः । याज्यापुरोनुवाक्यावत्त्वे च वषट्कारश्रवणम् । तत्सहपाठात्स्वाहाकारोऽप्यत्र न प्रवर्तते । 'विनिवृत्तिः' पूर्वोक्तपक्षस्य मन्त्रवत्प्रदानमित्यस्य विनिवृत्तिर्निरासः । स्मार्तेऽपि कर्मणि—स्वाहाकारवषट्कारनमस्कारा दिवौकसाम् । हन्तकारो मनुष्याणां स्वधाकारः स्वधाभुजामिति कात्यायनस्मृतौ विधानात् । सीतायज्ञेचेत्यतिदेशादस्मिन्नवसरे लाङ्गलयोजनदेवताभ्यः तद्भूतोपात्तेन स्थालीपाकेन होमः । स्थालीपाकहोमाधिकारात् । ततः स्विष्टकृदादि । 'स्तरण'''भमिति' अग्नेः परिस्तरणे ये कुशा व्रीहिसस्यमिश्रा यवसस्यमिश्रा वा शेषभावमङ्गभावं प्राप्तास्त एव कूर्चाः आसनानि तेषु बलिं हरति । सीतागोप्तृभ्यः सीता लाङ्गलपद्धतीर्ये गोपायन्ति पालयन्ति ते सीतागोप्तारस्तेभ्यः । तत्र पुरस्तात्प्राच्यां ये त आसत इति मन्त्रेण । मन्त्रार्थः—हे सीते ये देवाः सुधन्वानः शोभनधनुष्मन्तः निषङ्गिणः सतूणीराः ते तव पुरस्तात् आसते तिष्ठन्ति ते त्वां पुरस्तात्प्राच्यां दिशि गोपायन्तु रक्षन्तु । किंभूताः अप्रमत्ताः सावधानाः । अनपायिनः कष्टहराः । अहं चैषां नमस्करोमि । बलिमेवमेभ्यो हरामि ददामि । 'अथ द'''भमिति' अथ पुरस्ताद्बल्यनन्तरमग्नेर्दक्षिणपार्श्वे कूर्चेषु बलिं हरति । अनिमिषा

इति मन्त्रेण । मन्त्रार्थः—ये अनिमिषाः निमेषरहिताः वर्मिणः सन्नद्धाः शेषं पूर्ववत् । ' अथ प'''ममिति ' अथाग्नेः पश्चिमायां दिशि आभुव इति वलिं ददाति । मन्त्रार्थः—आ समन्ताद्भवाः । तानेवाह । भूतिर्भूमिः पार्ष्णिः शुनङ्कुरिरित्येवंनामानः शेषं व्याख्यातम् । ' अथोत्त'''ममिति ' अथोत्तरपार्श्वे वलिं ददाति । भीमा इति मन्त्रेण । मन्त्रार्थः—भीमाः भीषणाः जवे वेगे वायुना समास्तुल्याः क्षेत्रे खले गृहे अध्वनि वा वर्तमानं त्वा त्वां गोपायन्तु शेषं समानम् । ' प्रकृ'''कर्म' प्रकृतात्प्रधानयागदेवतासंबन्धिनः स्थालीपाकादन्यो यः सिद्धो गृहीतश्चरुस्तस्मात्स्थास्याज्येनाज्यशेषेण च पूर्ववत् इन्द्रपर्जन्यादिभ्यो लाङ्गलयोजनदेवताभ्यो बलिहरणं कार्यम् । ' स्त्रिय'''त्वात् ' ततः स्त्रियो भार्यादिका उपयजेरन् बलिहरणं कुर्युः इन्द्रादिभ्योऽन्येभ्यश्च क्षेत्रपालादिदेवताभ्यो वृद्धव्यवहारेण । कुतः आचरितत्वात् । प्राचीनाभिः कृतत्वात् बलिकर्मणः । ' सधस्थि'''येत् ' समाप्ते स्त्रीकर्तृकबल्यनन्तरं त्रीन्ब्राह्मणान्भोजयेत् । द्विरभ्यासः काण्डसमाप्तिसूचनार्थः ॥ १७ ॥ ॥

इति श्रीत्रिरश्मिचित्सम्राट्स्थपतिश्रीमहायाज्ञिकवामनात्मजदीक्षितगदाधरकृते गृह्यसूत्रभाष्ये द्वितीयकाण्डं संपूर्णम् ॥ ॥ ॥

अथ पदार्थक्रमः । प्रथमप्रयोगे मातृश्राद्धम् । उक्ते देशे आवसथ्याग्नेः स्थापनम् । ब्रह्मोपवेशनादिदक्षिणान्ते विशेषः । सस्यमिश्रैर्दर्भैरग्नेः परिस्तरणम् । एकश्चरुः श्रप्यते । अपरः सिद्ध एव तण्डुलानन्तरमासादनीयः । उपकल्पनीयानि—बलिपटलकं शूर्पादि वैणवं पात्रम् । कुल्माषौदनयुक्तं बलिपटलकमित्युच्यते । तण्डुलोत्तरं सिद्धचरोः प्रोक्षणम् । आज्यभागान्ते पञ्चाहुतयः । पृथिवी द्यौ० इदमिन्द्राय० १ यन्मे० इदमिन्द्राय० २ सम्पत्ति० इदमिन्द्राय० ३ यस्याभावे० इदमिन्द्रपत्न्यै० ४ अश्वावती० इदं सीतायै० ५ ॥ प्रकृतचरुणा आहुतिचतुष्टयम् । सीतायै स्वाहा० यजायै स्वाहा० । शमायै० भूत्यै० ६ ॥ एवं त्यागाः । ततः सिद्धचरुणा लाङ्गलयोजनदेवताभ्यो होमः । इन्द्राय स्वाहा० १ पर्जन्याय० २ अश्विभ्यां० ३ मरुद्भ्यः० ४ उदलाकाश्यपाय० ५ स्वातिकार्यै० ६ सीतायै० ७ अनुमत्यै स्वाहा० ८ । स्विष्टकृदुभयोः । महाव्याहृत्यादिदक्षिणान्तम् । प्रतिदिशं प्रदक्षिणं पुरस्तात्प्रथमं ये त इति प्रतिमन्त्रं बलिचतुष्टयदानम् । त्यागाः । इदं सुधन्वभ्यो निषङ्गिभ्यो० १ इदमनिमिषेभ्यो वर्मिभ्यो० २ इदमाभूभ्यः प्रभूभ्यो भूत्यै भूम्यै पार्ष्ण्यै शुनङ्कुर्यै०.३ इदं भीमाभ्यो वायुसमाजवेभ्यो० ४ चरोराज्यस्य च मिश्रणम् । तेन लाङ्गलयोजनदेवताभ्य इन्द्रादिभ्योऽनुमत्यन्तेभ्यो बलिहरणम् । ततो बलिपटलकेन स्त्रियश्च बलिहरणं कुर्युः इन्द्रादिभ्योऽन्येभ्यश्च क्षेत्रपालादिदेवताभ्यो वृद्धाचारेण । ततो ब्राह्मणत्रयभोजनम् ॥ ॥ ॥

इति श्रीत्रिरश्मिचित्सम्राट्स्थपतिश्रीमहायाज्ञिकवामनात्मजदीक्षितगदाधरकृते गृह्यसूत्रभाष्ये द्वितीयकाण्डे सीतायज्ञे पदार्थक्रमः ॥ समाप्तश्चेदं द्वितीयकाण्डम् ॥ २ ॥ ॥

( विश्व० )—' अथ सीतायज्ञः ' उच्यत इति सूत्रशेषः । सचायं कृषिं कुर्वतः कृतावसथ्यस्य भवति । ' व्रीहि'''यजेत् ' अभ्यस्तेन यत्रपदेन कालदेशरूपे अधिकरणे यत्र काले व्रीहियवयोरुत्पत्तिर्यत्र देशे चासौ यज्ञः तत्र तन्मयं व्रीहिकाले व्रीहिमयं यवकाले यवमयम् । ' कामा'''येत् ' ' कामात् इच्छातः अन्यत्रापि उक्तरूपदेशकालौ विहाय सीतायज्ञेन ईजानः । व्रीहियवयोरित्यत्रैवकारेण द्रव्यान्तरे साधनत्वव्यवच्छेदः । ननु प्राक्सूत्रादेव तल्लाभाद्व्यर्थोऽस्यारम्भ इत्याह ' नपूर्वचोदितत्वात् ' इति । नन्वेतदारम्भो घटते । आसन्नसमयोत्पन्नयोर्व्रीहियवयोः साधनत्वावगमात्समयान्तरे च तदभावादासन्नसमयोत्पत्तिकद्रव्यान्तरसाधनत्वावगमसंदेहः । कुतः समयान्तरे व्रीहियवयोरसंभवादनुपपत्तेरित्याह 'संदेहोऽसंभवात्' इति । विनिवृत्तिः विशेषेण कामिकार्यताबोधकसूत्रे तयोरुपा-

दानमहिम्ना संदेहनिवृत्तिरित्यर्थः । केचित्तु कामिकर्त्तव्यतावोधकसूत्रार्थमन्यथा प्रोचुः । अन्यत्र पक्षादिप्रभृतिषु कामाद्व्रीहियवयोरित्यन्वयः । न पूर्वचोदितत्वात्संदेहः । नात्र संदेहः । यतः पूर्वचोदितमेवैतत् पूर्वं व्रीहीन्यवान्वा हविषी इति परिभाषासूत्रे । अतो न वक्तव्यमेतत् व्रीहियवयोरेवेति । 'असं'''वृत्तिः' यावस्य चरोरसंभवाद्विनिवृत्तिः । नतु शास्त्रात् । असंभवश्चानवस्राविताान्तरोष्मपाकविशदसिद्धे तण्डुलपाके चरुशब्दप्रयोगदर्शनात् । 'क्षेत्र'''धेन' शुचौ पवित्रे । कृष्टे फालेन विलिखिते । फलस्य सस्यस्य उपरोधः बाधः । न उपरोधः अनुपरोधः । तेन क्षेत्रात्प्रागुदीच्यां वा सीतायज्ञः शुचौ कृष्टे कर्तव्यः । 'ग्रामे'''गात्' वाशब्दः पूर्वोक्तपक्षव्यावृत्तौ । यः कामात्करोति तेन ग्रामे एव कर्त्तव्यः । कुतः उभयथासंप्रयोगात् कृषिं कुर्वतः क्षेत्रे इतरस्य ग्राम इति । केचित्तु ग्रामेवेत्येतत्पक्षान्तरमुपन्यस्तम् उभयं ग्रामः क्षेत्रं च अधिकरणतया संप्रयोक्तुं संबद्धुं शक्यम् । तन्मते कृषिं कुर्वत एव साग्नेरत्राधिकारः 'अविरोधात्' व्यवस्थिताधिकरणानुष्ठानपक्षे विकल्पपक्षेप्यन्यतरोपादानं न विरोधः स्यादित्यर्थः । 'यत्रश्र'''जुहोति' पुनर्भूसंस्कारोक्तिः कृष्टेपि प्राप्त्यर्था इति कर्कोपाध्यायाः, निरग्नेरप्यधिकारं सूचयितुं लौकिकाग्निप्राप्त्यर्थेत्यन्ये । साग्नेरेषामाधिक्यं संभारवदित्यपरे । अग्निस्थापनाद्याज्यभागान्ते विशेषः । तन्मिश्रैर्दर्भैर्व्रीहिकाले व्रीहिमिश्रैः यवकाले यवमिश्रैर्दर्भैरग्नेः परिस्तरणम् अपरः अप्रकृतः सिद्धस्थालीपाक आसाद्यः तण्डुलानन्तरमुपकल्पनीयवलिपटलकं च ग्रहणे सीतायैयजायैशमायैभूत्यैजुष्टं । प्रोक्षणे त्वा । आज्यभागाविष्ट्वाज्याहुतीर्जुहोतीत्युक्तं ता आह 'पृथिवी'''यः स्वाहा' इदमिन्द्राय । यन्मे'''शतठं स्वाहा इदमिन्द्राय । सम्पत्ति'''वतुस्वाहा' इदमिन्द्राय । 'यस्या'''णि स्वाहा' इदमिन्द्रपत्न्यै । 'अश्वा'''यास्स्वाहेति' इदं ध्रुवायै । इतिशब्दःआज्याहुतिसमात्यर्थः । 'स्थाली'''त्या इति' चतस्रः आहुतीः स्थालीपाकस्य । सीतायैस्वाहा इदंसीतायै इत्यादि । ततः-सिद्धपाकेन लाङ्गलयोजनदेवताभ्यः अष्टावाहुतयः । इन्द्रायस्वाहा इदमिन्द्राय । पर्जन्यायस्वाहा इदं पर्जन्याय । अश्विभ्यांस्वाहा इदमश्विभ्याम् । मरुद्भ्यःस्वाहा इदंमरुद्भ्यः । उदलाकाश्यपायस्वाहा इदमुदलाकाश्यपाय । स्वातिकार्यैस्वाहा इदं० सीतायैस्वाहा इदं० अनुमत्यै स्वाहा इदमनुमत्यै । प्रकृताऽप्रकृतयोरुभयोः स्विष्टकृत् । अग्नयेस्विष्टकृतेस्वाहा इदमग्नयेस्विष्टकृते । एताश्च देवताः सीतायज्ञेचेत्यतिदेशादत्र प्रधानचरुहोमानन्तरं तद्धोमः प्रधानचरुवलिदानानन्तरं वलिदानं च । 'मंत्र'''केषां' एकेषां मते मन्त्रवत् स्वाहाकाररहितं प्रदानं देवतोद्देश्यकं प्रदानम् । तत्र हेतुमाह 'स्वाहा'''श्रुतेः' वषट्कारेण व वा स्वाहाकारेणवेत्यादौ वषट्कारसहभावः प्रतीयते प्रकृते च वषट्कारव्यतिरेकस्य स्वसहभूतस्वाहाव्यतिरेकव्याप्तत्वान्मंत्रवत्प्रदानमितिप्राप्ते आह—विनिवृत्तिः' मन्त्रवत्प्रदानस्येति शेषः । उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतयइत्युक्तत्वात्पक्षादिप्रभृतीनां जुहोतित्वात्स्वाहाकारेण होम इत्यर्थः। महाव्याहृत्यादिदक्षिणादानान्तम् स्विष्टकृदन्ते । 'स्तर'''रति' स्तरणावशिष्टकुशान् क्षेत्रस्य प्रतिदिशमास्तीर्य तेषु सीतागोप्तृभ्यो वलिदानं संस्कृतेन च प्रकृतचरुणा। 'पुरस्ता'''सीममिति' 'प्रकृ'''वैवत्' लाङ्गलयोजनवत् प्राक्संस्थमुदक्संस्थं वा वलिकर्म वलिदानम् । तद्यथा । इन्द्रायनमः पर्जन्यायनमः अश्विभ्यांनमः मरुद्भ्योनमः उदलाकाश्यपायनमः स्वातिकार्यैनमः । सीतायैनमः अनुमत्यैनमः यथादैवतं त्यागाः । 'स्त्रि'''त्वात्' वृद्धाः स्त्रियो गृह्याः इन्द्रादीन् वलिपटलकेनोपयजेरन् । वलिपटलकं च वैणवपात्राधिकरणकं कुल्माषौदनम् । कुत आचरितत्वात् । प्राचीनस्त्रीभिर्लाङ्गलयोजनदेवताभ्यः इन्द्रादिभ्यो वलिदानस्याचरितत्वादित्यर्थः । ततः संस्रवप्राशनाद्युपयमनप्रक्षेपान्तम् । 'सꣳस्थि'''येत्' दश ब्राह्मणान् भोजयेद्दशेति परिशिष्टात् । काण्डसमाप्तिसूचिका द्विरुक्तिः । ततो वैश्वदेवः ॥ १७ ॥

इति श्रीपण्डितनृसिंहात्मजपण्डितविश्वनाथकृतायां गृह्यसूत्रव्याख्यायां

द्वितीयं कांडं समाप्तिमगमत् ॥ २ ॥

श्रीः ॥ अनाहिताग्नेर्नवप्राशनम् ॥१॥ नवꣳ स्थालीपाकꣳ श्रपयित्वाज्य-भागाविष्ट्वाज्याहुती जुहोति । शतायुधाय शतवीर्याय शतोतये अभिमातिषाहे । शतं यो नः शरदोऽजीजानिन्द्रो नेषदति दुरितानि विश्वा स्वाहा । ये चत्वारः पथयो देवयाना अन्तराद्यावापृथिवी वियन्ति । तेषां योऽज्यानिमजीजिमावहात्तस्मै नो देवाः परिधत्तेह सर्वे स्वाहेति ॥ २ ॥ स्थालीपाकस्याग्रयणदेवताभ्यो हुत्वा जुहोति स्विष्टकृते च स्विष्टमग्ने अभितत् पृणीहि विश्वांश्च देवः पृतना अविष्यत् । सुगन्नु पन्थां प्रदिशन्न एहि ज्योतिष्मद्ध्येह्यजरन्न आयुः स्वाहेति ॥ ३ ॥ अथ प्राश्नाति । अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः । शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः । भद्रान्नः श्रेयः समनैष्ट देवास्त्वयावशेन समशीमहि त्वा । स नोमयोऽभूः पितो आविशस्व शंतोकाय तनुवे स्योन इति ॥ ४ ॥ अन्नपतीयया वा ॥ ५ ॥ अथ यवानामेतमुत्यं मधुना संयुतम् ॥ यवꣳ सरस्वत्या अधिवनाय चक्रुषुः इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानव इति ॥ ६ ॥ ततो ब्राह्मणभोजनम् ॥ ७ ॥ १ ॥

( कर्कः )—'अना' 'शनम्' व्याख्यास्यत इति सूत्रशेषः । अनाहिताग्निरवैतानिकः । नवप्राशनमिति कर्मणो नामधेयम् । अन्वर्थसंज्ञाकरणाच्च कृत्वैतन्नवं प्राश्यते नाकृत्वा । न चैतदाग्रयणशब्दवाच्यम् अतः पौर्णमास्याममावास्यायामिति नियमो न भवति । औचित्याच्छरद्वसन्तौ तु भवतः ॥ 'नवꣳ' 'येति' द्वे प्रतिमन्त्रम् । 'स्थाली' 'मग्ने' इति । अतश्च स्विष्टकृद्धोमस्य पूर्वं पश्चाच्च स्विष्टमग्न इत्याज्याहुतिर्होमः । ततो महाव्याहृत्यादि । 'अथ प्राश्नाति' अग्निः प्रथमः प्राश्नात्वित्यनेन मन्त्रेण । यत्र हुतशेषप्राशनं तत्रायं गुणविधिः । 'अन्न' 'वा' प्राशनं कर्तव्यम् अन्नपतिशब्दो यस्यां विद्यते सेयमन्नपतीया छप्रत्ययं ह्यत्र स्मरन्ति । अत्र यवानां प्राशने मन्त्रमाह । 'एतमुत्यमिति' । 'ततो' 'भोजनम्' ॥ प्रथमा कण्डिका ॥ १ ॥

( जयरामः )—'अना' 'शनम्' वक्ष्यत इति सूत्रशेषः । अनाहिताग्निरवैतानिक औपासनिक इति पर्यायः । तस्य नवप्राशनमिति कर्मणो नामधेयम् । अन्वर्थसंज्ञाकरणात्कृत्वैतन्नवमन्नं प्राश्यते नाकृत्वा । नन्वत्र किं नवमात्रं प्रतिषिद्धमुत कतिपयानीत्याशङ्क्य श्यामाकव्रीहियवानामेव नियमो नान्येषाम् । यथाह गृह्यसंग्रहकारः—नवयज्ञाधिकारस्थाः श्यामाका व्रीहयो यवाः । नाश्नीयात्तानहुत्वैवमन्येष्वनियमः स्मृतः । ऐक्षवः सर्वशुद्धाश्च नीवाराश्चणकास्तिलाः । अकृताग्रयणोऽश्नीयान्नैषा मुक्ता हविर्गुणा इति । यत्तु श्रूयते नवमात्रप्रतिषेधस्तदाहिताग्निविषयः । शरद्वसन्तयोरेव तद्भवति औचित्यात् । न चात्र पौर्णमास्यादिकालनियमः । अनाग्रयणत्वात् । 'नवꣳस्थालीपाकꣳ श्रपयित्वाऽऽज्यभागौ इष्ट्वा आज्याहुती द्वे शतायुधायेति द्वाभ्यां मन्त्राभ्यां प्रतिमन्त्रम् । अथ मन्त्रार्थः । तत्र द्वयोः प्रजापतिस्त्रिष्टुप् आद्यस्येन्द्रो परस्य विश्वेदेवा आज्यहोमे० । स इन्द्रः नोऽस्मान् शतं शरदो वर्षाणि

अजीजान् जीवयतु । यद्वा नोऽस्मभ्यं धान्यं जनयतु तत्र नः इति तन्त्रम् । तेन नोऽस्माकं दुरितानि दुर्व्यसनानि पापानि वा विश्वा विश्वानि सर्वाणि अतिनेषत् अतिनेष्यति । तस्मै स्वाहा सुहुतमस्तु । किंभूताय शतायुधाय शतमपरिमितान्यायुधानि यस्य तस्मै । तथा शतवीर्याय अपरिमितशक्तये । तथा शतोतये अनन्तलीलाय । तथा अभिमातिषाहे अभिमातयः अरातयः तान्सहते जयतीत्यभिमातिषाट् तस्मै १ । हे सर्वे देवाः ये चत्वारः पथयः पन्थानः देवपितृमनुष्यसर्पाणां मार्गाः देवयाना देवनं क्रीडां संपादयन्तः देवादिभिर्गम्यमाना वा । अन्तरा द्यावापृथिवी द्यावापृथिव्योर्मध्यस्थाः । पृथ्वीशब्देनात्र पृथ्वीतलं लक्ष्यते । वियन्ति वियत्तुल्याः । अतिनिर्मला इत्यर्थः । यद्वा विविधत्वं यन्ति भिन्नत्वेनेत्यर्थः । तेषां चतुर्णां पथां मध्ये यः पन्था अजीजिमजेयत्वं परैरनभिभवनमिति यावत् । आवहात् आवहेत्प्रापयेत् । तस्मै पथे नोऽस्मान् परिधत्त परिदत्त समर्पयतेत्यर्थः । तं पन्थानमस्मान्प्रापयतेत्यर्थः इह अस्मिन्कर्मणि कृते सति । अनेन कर्मणा प्रतोषं प्राप्येत्यर्थः । किंभूतामजीजिम् । अज्यानिं ज्यानिर्ग्लानिः हानिर्वा तद्रहिताम् । क्षेमेणाभीष्टपदप्राप्तिहेतुमित्यर्थः । युष्मभ्यं स्वाहेत्युक्तार्थम् २ । ततश्च स्थालीपाकेनाग्रयणदेवताभ्य इन्द्राग्नी विश्वेदेवा द्यावापृथिवी इत्येताभ्यो हुत्वा जुहोत्याज्याहुतिं स्विष्टमग्न इति वक्ष्यमाणमन्त्रेण । स्विष्टकृते चेति स्थालीपाकास्स्विष्टकृद्धोमं विधाय चकारात्पुनरप्याज्याहुतिं स्विष्टमग्न इत्यनेनैव मन्त्रेण पूर्ववज्जुहोति । स्विष्टमग्न इति मन्त्रेण स्विष्टकृद्धोमस्योभयत आज्याहुती भवत इत्यर्थः । स्विष्टमग्न इत्यस्यार्थः । तत्र प्रजापतिर्विराडग्निराज्यहोमे० । हे अग्ने प्रजापते यत् स्विष्टं स्विष्टकृते हुतं तत् अभि अभितः उभयतः आदावन्ते च पृणीहि पूर्णीकुरु । देवः प्रकाशात्मा भवान् विश्वान् सकलपरिवारयुतान् अस्मान् अविष्यत् अवतु । किंभूतान् । पृतनाः सेनाः तद्रूपरिचारकानित्यर्थः । यद्वा । पृतना इति पञ्चम्यर्थे प्रथमा । तेन पृतनाभ्यः शत्रुसेनाभ्योऽस्मानवत्विति । किञ्च । नोऽस्माकं सुगं सुगम्यम् अर्चिरादिरूपं पन्थां पन्थानं प्रदिशन् ददद्देव एहि आगच्छ । नु एवार्थे । किंच नोऽस्मभ्यं ज्योतिष्मत् प्रकाशयुक्तं कीर्तियुक्तमित्यर्थः । अजरम् जरा रोगाद्युपद्रवः तद्रहितमायुद्ध्येहि चिन्तय । आशंसेत्यर्थः । यद्वा । ध्येहि धेहि देहीत्यर्थः । तदा यकारोऽनर्थकः । तुभ्यं स्वाहेति । अथ महाव्याहृतिहोमानन्तरम् प्राश्नाति संस्रवमग्निः प्रथम इत्यादितन्मेस्योन इत्यन्तेन ऋगुद्वयात्मकेन मन्त्रेण । अस्यार्थः । तत्र प्रजापतिः क्रमेणानुष्टुप्त्रिष्टुभौ जाठरोग्निः संस्रवप्राशने विनियोगः । इदं हविरग्निर्जाठरः प्रथमो मुख्यः अश्नातु भुनक्तु । स एवाग्निः हि यतः यथा यादृशं पावनं पोषणं चेदं हविर्वेद जानाति । अतोऽस्मभ्यमोषधीर्ग्राम्या आरण्याश्च शिवाः सुखकरीः कृणोतु करोतु । किंभूतः । विश्वचर्षणिः सर्वधान्याधिपः । हे देवाः इन्द्रादयः यूयं नोऽस्मान् प्रति श्रेयः एवं नवान्नप्राशनभवमारोग्यं समनयिष्ट सम्यक् प्रापयत । किंभूतान् भद्रान् भन्दनीयान् युष्मत्प्रसादेन नवान्नप्राशनार्हान् । किंच हे पितो अन्न ब्रीहे वयं त्वत्प्रसादप्राप्तसामर्थ्यास्त्वा त्वां समशीमहि सम्यक् संस्कृतमेवाशीमहि अश्नाम । केन साधनेन त्वया अनुग्राहकेण । त्वत्प्रसाद एव तत्र कारणमित्यर्थः । किंभूतेन त्वया अवशेन पाथेयेन शम्बलेनेत्यर्थः । किंच हे पितो अन्न स त्वमस्माभिरेवं विधिना प्राशितः सन् नोऽस्मान् आविशस्व बलादिहेतुत्वेनास्मत्कुक्षिं प्रविशस्व । किंच मयोऽभूः मयः सुखं तद्रूपोऽभूः भव । तथा शं कल्याणाय । शमित्यव्ययम् । तथा तोकाय अपत्याय । तथा तनुवे शरीरावयवपालनाय । स्योनः परिणामेन सुखकरः सेवनीयो वा अभूर्भव । यत्र च हुतशेषप्राशनं तत्रायं गुणविधिः । अन्नपतीयया वा । अन्नपतेन्नस्य नो देहीत्यनयर्चा वा प्राशनं कार्यम् । अन्नपतिशब्दो विद्यते यस्यां सेयमन्नपतीया छप्रत्ययमत्र स्मरन्ति । तत्र परमेष्ठी बृहती लिङ्गोक्ता समिदाहुतौ० । यादृच्छिकोऽयं विकल्पः । अपरे त्वाहुः—वाशब्दश्चकारार्थे अतः समुच्चय इति । अथ यवानां प्राशने मन्त्रविशेष उच्यते एतमिति । तत्र प्रजापतिर्जगती इन्द्रो यवान्न-

प्राशने० । उ एवार्थे । एतम् एतत् प्रत्यक्षं त्यं त्यत् परोक्षमन्नं यु मिश्रणे यौति लीयतेऽस्मिन्निति यवः परमात्मा तत्प्राप्तिसाधनत्वाद्यमपि यवः तं यवं मरुतो देवविशेषाः । सरस्वत्याः सर इत्युदकनाम तद्वत्याः नद्याः अधिवनाय उपरि वनेषु केदारेषु चकृषुः कृष्टवन्तः । यद्वा । सरोऽस्यामस्तीति सरस्वती पृथिवी तस्या अधि उपरि वनाय संभजनाय । वन संभक्तौ । पञ्चमहायज्ञाद्यर्थमित्यर्थः । किंभूतम् मधुना मधुरसेन संयुक्तं संसक्तम् । अथवा एतं त्वंपदार्थं जीवं त्यं तत्पदार्थं परं ब्रह्म तत् यवं मिश्रीभूतमेकत्वमापन्नं कर्मभूमौ वनाय अतश्चिरसनाय चकृषुः आकृष्टवन्तः उपादधुरित्यर्थः । तत्साधनत्वेन प्रथममिदमपि कर्म चक्रुरिति विवक्षितम् । तत्किमित्यत आह । यत इन्द्रः शतक्रतुः अतः सीरस्य लाङ्गलस्य पतिरासीत् बभूव । मरुतश्च कीनाशाः कृषीवलाः कर्षका इत्यर्थः । सुदानवः शोभनस्य भोगादेर्दानवः दातारः आसन् बभूवुः । तदनेन यवोत्पत्तिः प्रशस्यते ॥ १ ॥

( हरिहरः )—'अना'''शनम्' अनाहिताग्निरावसथिकः तस्य नवान्नप्राशनाख्यं कर्म व्याख्यास्यत इति सूत्रशेषः । नवप्राशनमिति संज्ञाऽन्वर्था ततश्चैतत्कृत्वा नवं प्राश्यते नाकृत्वा । अत्र किं नवमात्रनिषेधः उत कतिपयानामित्यपेक्षिते गृह्यसंग्रहकारः—नवयज्ञाधिकारस्थाः श्यामाका व्रीहयो यवाः । नाश्नीयात्तानहुत्वैवमन्येष्वनियमः स्मृतः । ऐक्षवः सर्वगुञ्जाश्च नीवाराश्चणकास्तिलाः । अकृताग्रयणोऽश्नीयात्तेषां नोक्ता हविर्गुणाः । इति । नचास्याग्रयणशब्दवाच्यता । तेन पौर्णमास्याममावस्यायामिति नियमो नास्ति । व्रीहियवपाकोचितत्वात् शरद्वसन्तावाद्रियेते । 'नवꣳ'''धायेति' नवं शरदि नूतनं व्रीहिमयं वसन्ते नूतनं यवमयं स्थालीपाकं चरुं पक्त्वाऽऽज्यभागयोरन्ते शतायुधायेति ये चत्वार इत्येताभ्यां प्रतिमन्त्रं . द्वे आज्याहुती जुहोति । 'स्थाली''मग्न इति' अथ स्थालीपाकस्य आग्रयणदेवताभ्य इन्द्राग्नी विश्वेदेवा द्यावापृथिवी इत्येताभ्यः प्रत्येकमेकैकामाहुतिं हुत्वा स्विष्टमग्न इत्यनेन मन्त्रेण स्विष्टकृद्धोमात्पूर्वं चकारात् पश्चाच्चाज्याहुतिं जुहोति । मध्ये स्थालीपाकेन सौविष्टकृतम् । ततो महाव्याहृत्यादिप्राजापत्यान्ते 'अथ प्राश्नाति' अग्निः प्रथम इत्यनेन मन्त्रेण संस्रवं प्राश्नाति । अत्र हुतशेषप्राशने गुणविधिरयं मन्त्रेण । 'अन्नपतीयया वा' अन्नपतिरिति अन्नं पतिर्देवता यस्याः सा अन्नपतीया ऋक् तया अन्नपतीयया ऋचा अन्नपतेऽन्नस्येत्यादिकया वा विकल्पेन प्राश्नाति । यद्वा अन्नपतिशब्दो यस्यामृचि अस्ति साऽन्नपतीया । 'अथ य'''त्यमिति' अथ व्रीहिप्राशनमन्त्राभिधानानन्तरं यवानां प्राशने मन्त्रमाह । एतमुत्यमित्यादि सुदानव इत्यन्तं मन्त्रम् । यवप्राशने पैठीनसिः अग्निमेवोपासीत नान्यदैवतम् । अग्निर्भूस्यामिति विज्ञायते न प्रवसेत् यदि प्रवसेदुक्तमुपस्थानं यजमानस्य प्राशितमग्नौ जुहुयात् । नवेष्टथामेवौपासनिकस्य । 'ततो ब्राह्मणभोजनम्' । इति सूत्रार्थः ॥ ॥ अथ प्रयोगः । तत्र शरदि वसन्ते च अनाहिताग्नेर्नवप्राशनं कर्म भवति तत्र प्रथमप्रयोगे मातृपूजाभ्युदयिके विदध्यात् । आवसथ्याग्नौ ब्रह्मोपवेशनादिप्राशनान्ते विशेषः । नवस्थालीपाकं श्रपयित्वा आज्यभागानन्तरमाज्याहुतिद्वयं जुहोति । तद्यथा । शतायुधाय शतवीर्याय शतोतये अभिमातिषाहे । शतं यो नः शरदोऽजीजानिन्द्रो नेषदति दुरितानि विश्वा स्वाहा । इदमिन्द्राय० । ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति । तेषां योऽज्यानिमजीजिमावहात्तस्मै नो देवाः परिधत्तेह सर्वे स्वाहा । इदꣳ सर्वेभ्यो देवेभ्यो० । इन्द्राग्नी विश्वेदेवा द्यावापृथिवी स्थालीपाकेनाग्रयणदेवताः । इन्द्राग्निभ्याꣳ । उपांशु । विश्वेभ्यो देवेभ्यः स्वाहा इदं विश्वेभ्यो देवेभ्यो० । उपांशु । द्यावापृथिवीभ्याꣳस्वाहा इदं द्यावापृथिवीभ्यां० । इति तिस्र आहुतीर्हुत्वा स्विष्टमग्ने अभितत् पृणीहि विश्वाँश्च देवः पृतना अविष्यत् । सुगन्नु पन्थां प्रदिशन्न एहि ज्योतिष्मद्धेह्यजरन्न आयुः स्वाहेत्यनेन मन्त्रेण आज्याहुतिं जुहोति इदमग्नये इति त्यागः । ततः स्थालीपाकात् अग्नये स्विष्टकृते स्वाहेति हुत्वा त्यक्त्वा च पुनः स्विष्टमग्न इत्यादिनाऽऽज्याहुतिं जुहोति । इदमग्नय

इति त्यागः । ततो महाव्याहृत्यादि प्राजापत्यहोमान्तं कृत्वा । अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः । शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः । भद्रान्नः श्रेयः समनैष्ट देवास्त्वयाऽवसेन समशीमहि त्वा । स नो मयोऽभूः पितो आविशस्व शन्तोकाय तनुवे स्योन इत्यनेन मन्त्रेण संस्रवं प्राश्नाति । अन्नपतेऽन्नस्य नो देहीत्यनयर्चा वा प्राश्नाति । यवान्नप्राशने तु एतमुत्यं मधुना संयुतं यवं सरस्वत्या अधिवनाय चकृपुः इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानव इत्यनेन यवसंस्रवं प्राश्नाति । ततो ब्राह्मणभोजनमिति ॥ ॥ १ ॥ ॥ * ॥

( विश्व० )—' अना'''शनं ' न आहिता अग्नयो गार्हपत्यादयो येनासौ कृतावसथ्यः । तस्य नवस्यासन्नसमयोत्पन्नस्य प्राशनं प्रोच्यत इति सूत्रशेषः । तच्च शरद्वसन्तयोः । यस्मिन्नाग्रयणं कुर्याद्दतो तदनुसंभवम् । धान्यं तन्नवमित्याहुरर्वाक्पकं पुरातनम् । प्रावृट्कालात्परं (पक्कं?) शरदाग्रयणे नवम् । ऊर्द्ध्वं वसन्तान्निष्पन्नं वसन्ताग्रयणे नवम् । व्रीहियागस्य याः काले पक्का व्रैहेण संस्कृताः । शेषा यावेन यागेन यदि यागात्पुरा कचित् । ओषधिं भक्षयेत्कांचित्तत्र वैश्वानरः स्मृतः । तथाच व्रीह्युत्पत्तिसमानकालोत्पन्नौषधिभक्षणाधिकारो व्रीह्याग्रयणेन । यवोत्पत्तिसमानसमयोत्पन्नौषधिभक्षणाधिकारो यवाग्रयणेनेति श्रीअनन्तयाज्ञिकाः । तथा—मनुष्यैरुपजीव्यानां पशुभिश्च यथायथम् । तृणगुल्मलतापुष्पपत्रादेरप्यभक्षणं याज्ञिकमते । तन्मते प्रियंगुकोद्रवादेरप्यभक्षणम् । एवं चाग्रयणमकृत्वा नवान्नमग्नौ न होतव्यम् । ब्राह्मणेभ्योपि न देयम् । आथर्वणे होमनिषेधात् । तथाहि—अथ योऽहुत्वा नवान्नं प्राश्नीयादग्नौ वा गमयेत्का तत्र प्रायश्चित्तिः सोऽग्नये व्रतपतये चरुं निर्वपेदिति । ब्राह्मणेभ्यो दाननिषेधः श्राद्धकल्पे—अयं च दम्पत्योः समो निषेधः । केचित्तु व्रीहियवयोरेव यागसाधनतया तयोरेव भक्षणं निषिद्धमाहुः । यागो न क्रियते यैस्तु गोधूमैर्माषकोद्रवैः । तेषामिह भवेदेतत्प्राशनं केचिद् ुवन् । नवशब्दस्य सामर्थ्यात्सामान्येन मतं त्विदम् । वाक्यशेषविरोधाच्च यदेतन्न मतं मम । आसन्नो यजमानश्च देवानामेव पठ्यते । तस्मादन्नमदन्त्यस्य यवव्रीह्यादिकं मखे । तस्मात्तदेव वर्ज्यं स्यादन्यत्कामं तु भक्षयेदिति । अस्यातिक्रमेऽग्नये वैश्वानराय चरुर्भवति । अत्रापि प्रथमप्रयोगे मातृपूजाभ्युदयिके भवतः । अन्वारम्भणीयादेवताकश्चरुश्च भवति । अनुष्ठानं च व्रीहेः शरदन्तर्गतपौर्णमास्यमावास्यायां यावस्य तु वसन्वान्तर्गतायामिति । अप्रोत्पन्नयोर्व्रीहियवयोर्होमहेतुत्वायतनत्वे(?)ऽप्याग्रयणपदवाच्यता नास्तीत्येतद्रिक्तं वचः । अनाग्रयणस्य च पर्वानुष्ठानमेतदपि बाललालनम् । न विपक्षे क्रियाः स्युः समभिव्याहारादित्येतस्य साधारण्यादिति । कथं कुर्यादत आह—' नव९'''वेंस्वाहेति ' प्रथमप्रयोगे मातृपूजाभ्युदयिके कृत्वा पूर्ववदन्वारम्भणीयेष्टिदेवताकं चरुं हुत्वा पर्वदिने पुण्येऽह्नि वा व्रीहियवयोरन्यतरेण स्थालीपाकं परिभाषोक्तविधिना श्रपयित्वा पक्त्वाज्यभागानन्तरं शतायुधायेति द्वाभ्यां मन्त्राभ्यां द्वे आज्याहुती जुहोति । तत्र विशेषः । इन्द्राग्निभ्यां विश्वेभ्योदेवेभ्यो द्यावापृथिवीभ्यां जुष्टमिति ग्रहणे । प्रोक्षणे त्वाशब्दोऽधिकः । इन्दमिंद्रायेत्याद्यायाः । इदं सर्वेभ्योदेवेभ्य इति द्वितीयस्याः । ' स्थाली'''युः स्वाहेति ' शतायुधायेत्येतदाहुतिद्वयानन्तरं स्थालीपाकेन आग्रयणस्य देवता इन्द्राग्नी विश्वेदेवा द्यावापृथिव्यः ताभ्यः इन्द्राग्निभ्या९ स्वाहा इदमिन्द्राग्निभ्यां विश्वेभ्योदेवेभ्यः स्वाहा इदंविश्वेभ्योदेवेभ्यः । द्यावापृथिवीभ्या९ स्वाहा इदंद्यावापृथिवीभ्याम् । एवं ताभ्यो हुत्वा स्विष्टमग्न इतिमन्त्रेणाज्याहुतिं जुहोति । ततः स्थालीपाकात्स्विष्टकृते स्वाहेति हुत्वा त्यक्त्वा पुनःस्विष्टमग्न इति मन्त्रेणाज्याहुतिं चकाराज्जुहोतीत्यर्थः । स्विष्टकृद्धोमस्योभयत आज्याहुती भवत इत्यर्थः । ' अथप्रा'''यया वा ' ततो महाव्याहृत्यादिप्राजापत्यन्ते नवाहुत्यनन्तरं संस्रवं प्राश्नात्यग्निः प्रथमः प्राश्नात्विति ऋग्भ्यां मन्त्रेण शतोकायतनुवेस्योन इत्यन्तेन । वा अथवा अन्नपतिशब्दो विद्यते यस्यां सेयमन्नपतीया तया अन्न-

पतेन्नस्यन्नोदेहीत्यनयर्चा। प्राशनं संस्रवस्य। 'अथ य'''नव इति' यवाग्रयणे त्वेतमुत्यं मधुनासंयुतमिति मन्त्रेण सुदानव इत्यन्तेन यवानां संस्रवं प्राश्नातीत्यर्थः। श्यामाकाग्रयणे तु तूष्णीं प्राशनम्। सोमाय जुष्टं गृह्णामीति ग्रहणे। प्रोक्षणे त्वाशब्दः। सोमाय स्वाहेति स्थालीपाकहोमः। यथादेवतं त्यागः। अन्यद्व्रीह्याग्रयणवत्। केचित्तु आज्यभागोत्तरमाज्याहुतिद्वयं स्विष्टकृद्धोमात्प्रागुत्तरमाज्याहुतिद्वयमेवमाहुतिचतुष्टयं नेच्छन्ति। 'ततो ब्राह्मणभोजनं' बर्हिर्होमादिकर्मापवर्गान्ते दश पञ्च वा ब्राह्मणान्भोजयेदित्यर्थः। ततो वैश्वदेवः॥ इति तृतीयस्य प्रथमा कण्डिका॥ १॥

मार्गशीर्ष्यां पौर्णमास्यामाग्रहायणीकर्म ॥ १ ॥ स्थालीपाकꣳ श्रपयित्वा श्रवणवदाज्याहुती हुत्वाऽपरा जुहोति। यां जनाः प्रतिनन्दन्ति रात्रीं धेनुमिवायतीम्। संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली स्वाहा। संवत्सरस्य प्रतिमा या ताꣳ रात्रीमुपास्महे। प्रजाꣳ सुवीर्यां कृत्वा दीर्घमायुर्व्यश्नवै स्वाहा। संवत्सराय परिवत्सरायेदावत्सरायेद्वत्सराय वत्सराय कृणुते बृहन्नमः। तेषां वयꣳ सुमतौ यज्ञियानां ज्योग्जीता अहताः स्याम स्वाहा। ग्रीष्मो हेमन्त उतनो वसन्तः शिवा वर्षा अभया शरन्नः। तेषामृतूनाꣳ शतशारदानां निवात एषामभये वसेम स्वाहेति ॥ २ ॥ स्थालीपाकस्य जुहोति। सोमाय मृगशिरसे मार्गशीर्ष्यै पौर्णमास्यै हेमन्ताय चेति ॥ ३ ॥ प्राशनान्ते सक्तुशेषꣳ शूर्पे न्युप्योपनिष्क्रमणप्रभृत्यामार्जनात् ॥४॥ मार्जनान्त उत्सृष्टो बलिरित्याह ॥ ५ ॥ पश्चादग्नेः स्रस्तरमास्तीर्याहतं च वास आप्लुता अहतवाससः प्रत्यवरोहन्ति दक्षिणतः स्वामी जायोत्तरा यथाकनिष्ठमुत्तरतः ॥ ६ ॥ दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रꣳ शमीशाखासीतालोष्ठाश्मनो निधायाग्निमीक्षमाणो जपति। अयमग्निर्वीरतमोऽयं भगवत्तमः सहस्रसातमः। सुवीर्योऽयꣳ श्रैष्ठ्ये दधातु नाविति ॥ ७ ॥ पश्चादग्नेः प्राञ्चमञ्जलिं करोति ॥ ८ ॥ दैवीं नावमिति तिसृभिः स्रस्तरमारोहन्ति ॥ ९ ॥ ब्रह्माणमामन्त्रयते ब्रह्मन्प्रत्यवरोहामेति ॥ १० ॥ ब्रह्मानुज्ञाताः प्रत्यवरोहन्ति आयुः की(र्तिः र्ति)र्यशो बलमन्नाद्यं प्रजामिति ॥११॥ उपेता जपन्ति। सुहेमन्तः सुवसन्तः सुग्रीष्मः प्रतिधीयतान्नः। शिवा नो वर्षाः सन्तु शरदः सन्तु नः शिवा इति ॥ १२ ॥ स्योना पृथिवि नो भवेति दक्षिणपार्श्वैः प्राक्शिरसः संविशन्ति ॥ १३ ॥ उपोदुत्तिष्ठन्ति उदायुषा स्वायुषो-

त्पर्जन्यस्य वृष्ट्या पृथिव्याः सप्तधामभिरिति ॥ १४ ॥ एवं द्विरपरं ब्रह्मानुज्ञाताः ॥ १५ ॥ अधः शय्यीरंश्चतुरो मासान्यथेष्टं वा ॥ १६ ॥ २ ॥

( कर्कः )—'मार्ग'''कर्म ' कर्तव्यमिति शेषः। ' स्थाली'''होति ' श्रवणाकर्मवदाज्याहुतिद्वयं हुत्वा ततोऽपरा जुहोति। ' यां जनाः प्रतिनन्दन्ति ' एवमाद्याः। ' स्थाली'''न्ताय चेति '। ततः स्विष्टकृदादि। ' प्राश'''र्जनात् ' श्रवणाकर्मवत्कर्म भवति। ' मार्ज'''त्याह '। परिसमाप्तमाग्रहायणीकर्म। इदमन्यत्कर्मान्तरम्। ' पश्चा'''हन्ति ' अग्निमपरेण तृणैः स्रस्तरमास्तीर्य तदुपर्यहतं च वासः आप्लुताः स्नाता अहतवाससोऽनुस्रस्तरं प्रत्यवरोहन्ति तेषां च प्रत्यवरोहतां दक्षिणतः स्वामी भवति जाया चोत्तरा यथाकनिष्ठमुत्तरतोऽपत्यानि। ' दक्षिण'''जपति ' अयमग्निर्वीरतमोऽयमिति गृहपतिः। ' पश्चा'''रोति '। 'दैवीं'''हन्ति ' सांप्रतम्। तत्र। ' ब्रह्मा'''ह्यामेति ' प्रत्यवरोहन्त्विति ब्रह्मानुज्ञाताः प्रत्यवरोहन्ति स्रस्तरमायुः कीर्त्तिर्यशोवलमित्यनेन मन्त्रेण। ' उपेता जपन्ति सुहेमन्त इति ' ये उपेतास्ते जपन्ति सुहेमन्त इत्यमुं मन्त्रम्। ' स्योना'''शन्ति ' स्रस्तरम्। 'उपोदुतिष्ठन्ति ' उदायुषा स्वायुषेत्यनेन मन्त्रेण स्रस्तरात्। ' एवं'''ज्ञाताः ' स्रस्तरमारोहन्ति। ' अधः'''थेष्टं वा ' ॥ २ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

( जयरामः )—मार्गशीर्ष्यां शुक्लपक्षचतुर्दश्यामाग्रहायणीकर्म कर्तव्यमिति सूत्रशेषः। तत्कथम्? स्थालीपाकमिति। स्थालीपाकश्रपणमाज्यभागहोमोपलक्षणम्। तेनाज्यभागानन्तरमाज्येन अपश्वेतपदा न वै श्वेतस्येति मन्त्राभ्यामाहुतिद्वयं श्रवणाकर्मणि यथा तथाऽत्रापि हुत्वा अपराश्चतस्रो जुहोति। यांजना इत्येवमादि वक्ष्यमाणमन्त्रैः प्रतिमन्त्रम्। अथ मन्त्रार्थः। तत्र यां जना इति द्वयोः प्रजापतिरनुष्टुप् रात्रिराज्यहोमे०। तत्र धेनुरूपेण तावद्रात्रिः प्रस्तूयते। यां रात्रीमायतीमागच्छन्तीं जनाः सन्तः प्रतिनन्दन्ति प्रजाप्यायनदात्रीत्वेनादृत्य हृष्टाः समर्द्धयन्ति। वनादागच्छन्तीम् धेनुमिव। या च रात्री संवत्सरस्य प्रजापतेः पत्नी यज्ञसंयोगभाग्योपा। पत्युर्नो यज्ञसंयोग इतिस्मरणात्। संवत्सरो वै यज्ञ इतिश्रुतेः। धेनुपक्षे संवत्सरस्य पत्नीत्वं प्रजापालयित्रीत्वेन। स्वाहेत्युक्तार्थम्। सा रात्रिर्नोऽस्माकं सुमङ्गली शोभनकल्याणकर्त्री अस्तु भूयात् १॥ या रात्री संवत्सरस्य प्रतिमा आकृतिर्जायेति यावत्। अर्द्धो वा एष आत्मनो यज्जायेति श्रुतेः। अहोरात्रे हि संवत्सरस्य शरीरम्। तद्भावभावात्। तां रात्रीमुपास्महे आराधयामः। तत्फलमाह। प्रजां पुत्रादिरूपां सुवीर्यां शोभनैश्वर्यां दीर्घमखण्डितमायुश्च व्यश्नवै प्राप्नवानि। स्वाहेत्युक्तार्थम् २॥ संवत्सरायेति द्वयोर्विराट् ऋषिः त्रिष्टुप् प्रथमस्य संवत्सरादिपञ्चदेवता द्वितीयस्यार्तव आज्यहोमे० हे स्तोतारः भवन्तो याभ्यः संवत्सरादिसंज्ञिकाभ्यः कालविशेषदेवताभ्यो वृहत् महत् यथा तथा नमः नमस्कारं कृणुते कृण्वते हविः समर्पयन्तीत्यर्थः। तासां च प्रसादात्सुमतौ शोभनबुद्धौ वर्तमाना वयं ज्योक् चिरं जीताः दोषाणां दुष्टानां च जेतारः अहताः अनुपहताः स्याम भवेमेति प्रार्थना। किंभूतानां यज्ञियानां यज्ञार्हाणाम् ३॥ ग्रीष्मो हेमन्तः। उत अप्यर्थे। वसन्तोऽपि। नोऽस्माकं शिवाः कल्याणकृतो भवन्तु। तथा वर्षाः शिवाः सन्तु। शरच्च नोऽस्माकमभया नीरुक् अस्तु। ग्रीष्मादय ऋतवो वृषादिमासद्वयभुजः कालावयवाः तेषा ग्रीष्माद्यधिष्ठातॄणां प्रसादात् वयमेषां संवत्सरादीनां निवाते अनर्दितप्रदेशे आश्रये वा अभये निर्भये वसेम तिष्ठामेत्यपि प्रार्थना। किंभूतानां शतशारदानां वर्षशतसंबन्धिनाम् ॥ ४॥ ततः स्थालीपाकस्यावयवेन सोमादिभ्यश्चतुर्भ्यो नाममन्त्रैः प्रतिमन्त्रम्। ततः स्विष्टकृद्धोमः। प्राशनान्ते सक्तुशेषं शूर्पे न्युप्य संस्थाप्य निष्क्रमणप्रभृति सक्तुभ्यो वलिदानविधिः सर्वोऽप्यामार्ज-

नात् श्रवणाकर्मवद्भवति। मार्जनान्ते उत्सृष्टो बलिरित्येवमाह यजमानः समाप्तमिदमाग्रहायणी-कर्म ॥ ॥ अथान्यत्कर्मान्तरम्। तत्राग्निमपरेण तृणैः स्रस्तरमास्तीर्य तदुपर्यहतं च वास आस्तीर्य। आप्लुताः स्नाताः अहतवाससश्च सन्तः स्रस्तरं प्रत्यवरोहन्ति आरोहन्ति। तेषां च प्रत्य-वरोहतां दक्षिणतः स्वामी यजमानः। जाया च पत्नी तदुत्तरतः। तदुत्तरतो यथाकनिष्ठमपत्यानि भवन्ति। उदपात्रादिनिधानं त्वदृष्टार्थम्। आदावग्निं पश्यन् गृहपतिर्जपत्ययमग्निरित्यमुं मन्त्रम्। अस्यार्थः तत्र प्रजापतिरनुष्टुप् अग्निस्तदुपस्थाने०। अयमावसथ्याग्निर्वीरतमः अचिन्त्यशक्तिः भग-वत्तमः ऐश्वर्यादिषड्गुणाश्रयोऽयम् सहस्रं सहन्ते ददतीति सहस्रसाहः तेषु तमः नानार्थप्रदमुख्यः। सुवीर्यः शोभनमेव वीर्यं यस्य सोऽयं नौ आवां जायापती सपरिकरौ श्रैष्ठ्ये श्रेष्ठे कर्मणि दधातु स्थापयतु। ततोऽग्नेः पश्चाद्भागे स्थित्वा प्राञ्चं प्रागग्रमञ्जलिं करोति दैवीं नावमित्यादितिसृभिर्ऋग्भिः तासां क्रमेण प्रजापत्यश्विसरस्वत्य ऋषयो गायत्री छन्दः अदितिर्द्यौर्मित्रावरुणौ च उपस्थाने०। एव मञ्जलिं विधाय आरोहन्ति सर्वे। तत्र विधानमाह—यजमानो ब्रह्माणमामन्त्रयते ब्रह्मन्प्रत्यवरोहा-मेति मन्त्रेण पृच्छति। प्रत्यवरोहध्वमिति ब्रह्मणाऽनुज्ञाताः स्रस्तरमवरोहन्ति आयुः कीर्त्तिं यशो बलमन्नाद्यं प्रजामिति मन्त्रेण। तत्र आसुरी गायत्री लिङ्गोक्ता आरोहणे० आयुरादि आरोहेम लभेमेति प्रार्थना। उपेता उपनीता जपन्ति सुहेमन्त इत्यमुं मन्त्रम्। तस्यार्थः। तत्राश्वलायनः पङ्क्ति-र्ऋतवो जपे०। नोऽस्माकं सुशोभनो हेमन्तः प्रतिधीयतां संपद्यताम् शिष्टं स्पष्टम्। स्योनापृथिवीति दध्यङ्ङाथर्वणो गायत्री पृथिवी शान्तिकरणे०। अनेन स्रस्तरे स्वपन्ति। तत उप युगपदुत्तिष्ठन्ति। उः पादपूरणः। उत्तिष्ठन्ति उदायुषेति मन्त्रेण। अस्यार्थः। तत्र गौतमो गायत्री अग्निरुत्थाने०। उदायुषा दीर्घायुषा। तथा स्वायुषा शोभनजीवितेन उत् उत्कृष्टस्य पर्जन्यस्य वृष्ट्या। पृथिव्या सप्तभिर्धामभिः श्रेष्ठस्थानैः सह भवामेति प्रार्थना। एवमेवमेव समन्त्रकं द्विरपरं ब्रह्मानुज्ञाताः स्रस्त-रारोहादि कुर्युः ॥ २ ॥ ॥ * ॥ ॥ * ॥

( हरिहरः )—'मार्ग'''कर्म' मार्गशीर्ष्यामाग्रहायण्यां पौर्णमास्यामाग्रहायणीसंज्ञं कर्म भवति ॥ 'स्थाली'''जुहोति' यां जना इत्यादि। तत्र चरुं श्रपयित्वा श्रवणाकर्मणि यथा द्वे आज्याहुती जुहोति तथाऽत्र अपश्वेतपदाजहीति द्वाभ्यां मन्त्राभ्यां हुत्वा ततोऽनन्तरमपराः यां जना इत्यादि-भिश्चतस्र आज्याहुतीर्जुहोति। 'स्थाली'''चेति' ततः स्थालीपाकेन सोमायेत्यादिभिश्चतुर्भिर्मन्त्रैः स्वाहान्तैश्चतस्र आज्याहुतीर्जुहोति इति चकारः समुच्चयार्थः। 'प्राश'''र्जनात्' ततः स्विष्टकृत्प्रभृति प्राशनान्ते बलिहरणार्थं सक्तुशेषं शूर्पे कृत्वा उपनिष्क्रमणादि आमार्जनात् द्वारदेशे मार्जनं यावत् श्रवणाकर्मवत्कुर्यात्। 'मार्ज'''त्याह' मार्जनस्यान्ते अवसाने उत्सृष्टो बलिरिति वचनं ब्रूयात्। एतावदाग्रहायणीकर्म ॥ ॥ अथान्यत्कर्माभिधीयते ॥ 'पश्चा'''हन्ति' पश्चादग्नेरावसथ्यस्य पश्चिम-प्रदेशे स्रस्तरं प्रागग्रैः कुशैः स्रस्तरमास्तीर्य विरचय्य। तच्चास्तरणमग्निशालातो गृहान्तरे युज्यते। अग्नि-शालायां ह्यौपवसथ्यरात्रिमन्तरेण शयनप्रतिषेधात्। अहतं च वसनं सकृत्प्रक्षालितं वस्त्रं तदुपरि आस्तीर्येति संबन्धः। आप्लुताः स्नाताः अहते नवे सदृशे सकृत्प्रक्षालिते प्रत्येकं वाससी येषां ते अहतवाससः स्वामिप्रभृतयः प्रत्यवरोहन्ति स्रस्तरं निविशन्ते। 'दक्षि'''रतः' कथं प्रत्यवरोहन्ति सर्वेषां दक्षिणतः स्वामी गृहपतिर्भवति तस्योत्तरा जाया पत्नी तस्या उत्तरतः अपत्यानीति शेषः। कथं यथाकनिष्ठं यो यस्मात् कनिष्ठः स तदुत्तरत इति। 'दक्षि'''जपति' अयमग्निर्वीरतम इति। तत्रस्वामी स्रस्तरं प्रत्यवरोक्ष्यन् दक्षिणतोऽग्नेर्ब्रह्माणं यथाविध्युपवेश्य उत्तरत उदपात्रं जलपूर्णभाजनं शमीवृक्षस्य शाखा सीतालोष्ठं हलपद्धतिभवं मृत्खण्डमश्मानं प्रस्तरं निधाय स्थापयित्वा अग्निमी-क्षमाणः आवसथ्यं पश्यन् अयमग्निर्वीरतम इत्येतं मन्त्रं जपति। 'पश्चा'''सृभिः' अग्नेः पश्चिमतः

स्थित्वा प्रागग्रमञ्जलिं करसंपुटं विदधाति दैवी नावमित्यारभ्य मध्वारजाᳬसिसुक्रतू इत्यन्ताभिस्ति-सृभिर्ऋग्भिः। 'स्रस्त...हामेति' स्रस्तरं यथोक्तमारोहन्ति सांप्रतं स्वामिप्रभृतयः पूर्वं यत्प्रत्यवरोह-न्तीत्युक्तं तद्विधानार्थमिदम्। तत्र स्वामी ब्रह्माणमामन्त्रयते पृच्छति। कथं ब्रह्मन् प्रत्यवरोहामेति वाक्येन। 'ब्रह्मा...जामिति' प्रत्यवरोहध्वमिति वाक्येन ब्रह्मणाऽनुज्ञाताः प्रसूताः प्रत्यवरोहन्ति स्रस्तरमधितिष्ठन्ति आयुःकीर्तिरित्यादिमन्त्रेण। अत्र स्त्रीणामपि मन्त्रपाठः॥ 'उपेता जप-न्ति' सुहेमन्तः सुवसन्त इत्यादिकम्। तत्र ये उपेता उपनीतास्ते स्रस्तरमारुह्य सुहेमन्त इत्यादिकं मन्त्रं जपन्ति। 'स्योना...शन्ति' स्रस्तरमारुह्य स्योना पृथिवीत्यनेन मन्त्रेण स्वामी जायापत्यानि प्राक् पूर्वस्यां दिशि शिरो येषां ते प्राक्शिरसः दक्षिणापार्श्वैः उदङ्मुखाः संविशन्ति स्वपन्ति शेरते स्रस्तरोपरीत्यर्थः। 'उपो...भिरिति' उप स्रस्तरसमीपे उद्धुतिष्ठन्ति. उत्थाय उत्तिष्ठन्तीत्यर्थः। उपपदमनर्थकम्। उदायुषा स्वायुषोत्पर्जन्यस्येत्यादिमन्त्रेण स्रस्तरात्। 'एवं...ज्ञाताः' एवमुक्तप्र-कारेण ब्रह्मन्प्रत्यवरोहामेत्यारभ्य उत्थानपर्यन्तं ब्रह्मानुज्ञाताः सन्तो द्विरपरमपरमन्यत्स्रस्तरमारो-हन्ति संविशन्ति उत्तिष्ठन्ति च। 'अव...ष्टं वा' अत ऊर्ध्वं चतुरो मासान्पौषादीन् अधः खट्वां व्युदस्य भूमौ शयीरन् गृहपतिप्रमुखाः यथेष्टं वा अथवा इष्टमनतिक्रम्य यथेष्टं यथाकामम् अधो वा खट्वायां वा शयीरन्निति विकल्पः। इति सूत्रार्थः॥ ॥ अथ पद्धतिः। मार्गशीर्ष्यां पौर्णमा-स्यामाग्रहायणीकर्म भवति। तत्र प्रथमप्रयोगे मातृपूजापूर्वकमाभ्युदयिकश्राद्धं विधाय आवसथ्याग्नौ ब्र-ह्मोपवेशनादिप्राशनान्ते विशेषः। शूर्पं सक्तूनुलूकामुदपात्रं दर्वीं कङ्कतत्रयमञ्जनमनुलेपनं स्रजश्चेत्युप-कल्पः। तत आज्यभागानन्तरमपश्वेतपदाजहीत्याज्याहुतिद्वयं श्रवणाकर्मवद्धुत्वा अपराश्चतस्र आज्या-हुतीर्जुहोति वक्ष्यमाणैश्चतुर्भिर्मन्त्रैः प्रतिमन्त्रम्। तद्यथा। यां जनाः प्रतिनन्दन्ति रात्री धेनुमिवाय-तीम्। संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली स्वाहा। इदᳬरात्र्यै० १॥ संवत्सरस्य प्रतिमा या ताᳬरात्रीमुपास्महे। प्रजाᳬसुवीर्यां कृत्वा दीर्घमायुर्व्यश्नवै स्वाहा। इदᳬरात्र्यै० २॥ संवत्सराय परिवत्सरायेदावत्सरायेद्वत्सराय वत्सराय कृणुते बृहन्नमः। तेषां वयᳬसुमतौ यज्ञियानां ज्योग्जीता अहताः स्याम स्वाहा। इदं संवत्सराय परिवत्सरायेदावत्सरायेद्वत्सराय वत्सराय च० ३॥ ग्रीष्मो हेमन्त उतनो वसन्तः शिवा वर्षा अभया शरन्नः। तेषामृतूनाᳬशतशार-दानां निवात एषामभये वसेम स्वाहा। इदं ग्रीष्माय हेमन्ताय वसन्ताय वर्षाभ्यः शरदे च० ४॥ ततः स्थालीपाकेन चतस्र आहुतीर्जुहोति तद्यथा। सोमाय स्वाहा इदं सोमाय० मृगशिरसे स्वाहा इदं मृगशिरसे०। मार्गशीर्ष्यै पौर्णमास्यै स्वाहा इदं मार्गशीर्ष्यै पौर्णमास्यै०। हेमन्ताय स्वाहा इदं हेमन्ताय०। ततः स्थालीपाकेन स्विष्टकृतं हुत्वा महाव्याहृत्यादिदक्षिणादानान्ते सक्तुशेषं शूर्पे न्युप्योप-निष्क्रमणप्रभृतिमार्जनपर्यन्तं श्रवणाकर्मवत्कृत्वा मार्जनान्ते उत्सृष्टो बलिरित्युच्चैर्ब्रूयात्। ततस्तां रात्रीं वत्सान् स्वमातृभिः सह संसृजेत्। इत्याग्रहायणीकर्म॥ ॥ अथ स्रस्तरारोहणम्। तत्र प्रथमप्रयोगे मातृपूजापूर्वकमाभ्युदयिकश्राद्धं विधाय स्रस्तरास्तरणप्रदेशगृहे सर्वमावसथ्याग्निं नीत्वा पञ्चभूसंस्कारपूर्वकं स्थापयित्वा अग्नेः पश्चिमायां दिशि कुशैः स्रस्तरास्तरणं कुर्यात्। स्रस्त-रास्तरणमग्निशालाया गृहान्तरे युज्यते। अग्निशालायामौपवसथ्यरात्रिमन्तरेण शयननिषेधात्। तस्योपरि नूतनं सकृत्प्रक्षालितमुदग्दशं वासः संस्तरेत्। अग्निं दक्षिणेन ब्रह्माणमुपवेश्य उत्तरत उद-पात्रं शमीशाखां सीतालोष्ठमश्मानं च निधाय स्रस्तरपश्चिमतः स्वामी स्थित्वा तमुत्तरेण पत्नी तामु-त्तरेणापत्यानि यथाकनिष्ठम्। तत्र गृहपतिरग्निमीक्षमाणो जपति अयमग्निर्वीरतमोऽयं भगवत्तमः सहस्रसातमः सुवीर्योऽयᳬश्रैष्ठ्ये दधातु नावित्येतं मन्त्रम्। ततः पश्चादग्नेः प्राञ्चमञ्जलिं करोति। दैवीं नावᳬस्वरित्रामनागसमित्यादिमध्वारजाᳬसिसुक्रतू इत्यन्ताभिस्तिसृभिर्ऋग्भिः। ततो-

ब्रह्मन् प्रत्यवरोहामेति ब्रह्माणमामन्त्र्य प्रत्यवरोहध्वमिति ब्रह्मणा प्रत्यनुज्ञाताः सर्वे स्नाताः अहतवाससः आयुः कीर्तिर्यशो बलमन्नाद्यं प्रजामित्यनेन मन्त्रेण स्रस्तरमारोहन्त्यधितिष्ठन्ति स्त्रियोऽपि मन्त्रेण। तमारुह्य तेषु ये उपनीतास्ते सुहेमन्तः सुवसन्तः सुग्रीष्मः प्रतिधीयतान्नः। शिवा नो वर्षाः सन्तु शरदः सन्तु शिवा इत्यमुं मन्त्रं जपन्ति। अथ स्योना पृथिवीत्यनयर्चा स्वामिप्रभृतयः स्त्रिय उपनीता अनुपनीताश्च सर्वे यथोक्तक्रमेण दक्षिणपार्श्वैः प्राक्शिरसः संविशन्ति स्वपन्ति। तत उदायुषा स्वायुषोत्पर्जन्यस्य वृष्ट्या पृथिव्याः सप्तधामभिरित्यनेन मन्त्रेणोत्तिष्ठन्ति सर्वे। ततः स्रस्तरादुत्तीर्य ब्रह्मानुमन्त्रणप्रत्यवरोहणोपेतजपसंवेशनोत्थानानि वारद्वयमेव कुर्युः। तत आरभ्य चतुरो मासान् सर्वेऽधः शयीरन् कामतो वा शय्यायाम्। पुनरावसथ्यं पञ्चभूसंस्कारपूर्वकं स्वस्थाने स्थापयेत्। इति स्रस्तरारोहणम्। मुख्यकाले यदावश्यं कर्म कर्तुं न शक्यते। गौणकालेऽपि कर्तव्यं गौणोऽप्यत्रेदृशो भवेत्॥ १॥ आ सायमाहुतेः कालात्कालोऽस्ति प्रातराहुतेः। प्रातराहुतिकालात्प्राक् कालः स्यात्सायमाहुतेः॥ २॥ पौर्णमासस्य कालोऽस्ति पुरा दर्शस्य कालतः। पौर्णमासस्य कालात्प्राक् दर्शकालोऽपि विद्यते॥ ३॥ वैश्वदेवस्य कालोऽस्ति प्राक् प्रघासविधानतः। प्रघासानां च कालः स्यात्साकमेधीयकालतः॥ ४॥ स्यात्साकमेधकालोऽप्या शुनासीरीयकालतः। शुनासीरीयकालोऽपि आ वैश्वदेवकालतः॥ ५॥ श्यामाकैर्व्रीहिभिश्चैव यवैरन्योन्यकालतः। प्राग्यष्टुं युज्यतेऽवश्यं नवत्राग्रयणात्परः॥ ६॥ दक्षिणायनकाले वा पश्चिज्या चोत्तरायणे। अन्योन्यकालतः पूर्वं यष्टुं युक्ते उभे अपि॥ ७॥ एवमागामियागीयमुख्यकालादधस्तनः। स्वकालादुत्तरो गौणः कालः पूर्वस्य कर्मणः॥ ८॥ यद्वाऽऽगामिक्रियामुख्यकालस्याप्यन्तरालवत्। गौणकालस्तमिच्छन्ति केचित्प्राक्तनकर्मणि॥ ९॥ गौणेष्वेतेषु कालेषु कर्म चोदितमाचरेत्। प्रायश्चित्तप्रकरणे प्रोक्तां निष्कृतिमाचरेत्॥१०॥ प्रायश्चित्तमकृत्वाऽपि गौणकाले समाचरेत्। नित्येष्टिमग्निहोत्रं च भारद्वाजीयभाष्यतः॥ ११॥ मुख्यकाले हि मुख्यं चेत्साधनं नैव लभ्यते। तत्कालद्रव्ययोः कस्य मुख्यत्वं गौणताऽपि वा॥१२॥ मुख्यकालमुपाश्रित्य गौणमप्यस्तु साधनम्। न मुख्यद्रव्यलोभेन गौणकालप्रतीक्षणम्॥ १३॥ एकपक्षगतो यावान् होमसंघो विपद्यते। पक्षहोमविधानान्तं हुत्वा तन्तुमतीं यजेत्॥ १४॥ ॥२॥

( विश्व० )—'मार्ग···णीकर्म' कर्तव्यमिति शेषः। 'स्थाली···होति' अत्रापि मातृपूजाभ्युदयिके कृत्वा ब्रह्मासनास्तरणादिपरिभाषोक्तविधिना स्थालीपाकं पक्त्वा। तत्र विशेषः पात्रासादनानन्तरं सक्तुशेषस्यासादनम्, उल्काधारश्च उदपात्रं, दर्वी, कङ्कतत्रयमञ्जनानुलेपनं स्रजश्च। स्थालीपाकग्रहणे सोमाय मृगशिरसे मार्गशीर्ष्यैपौर्णमास्यै हेमंताय जुष्टं गृह्णामि। प्रोक्षणे त्वाशब्दः। ततः श्रवणाकर्मवदाज्यभागानन्तरम् अपश्वेतपदा—नवैश्वेतस्येतिमन्त्राभ्यामाज्याहुती हुत्वाऽपराश्चतस्र आज्याहुतीर्जुहोति। तासां मन्त्रानाह 'यांजनाः···सेमस्वाहेति' इदं रात्र्यै २॥ इदं संवत्सरायपरिवत्सरायेदावत्सरायेद्वत्सरायवत्सराय ३॥ इदं ग्रीष्मायहेमन्ताय वसंताय वर्षाभ्यः शरदे ४॥ 'स्थाली···चेति' स्वाहान्तैरेभिश्चतुर्थ्यन्तैः प्रतिमन्त्रं होमः। त्यागास्तु इदंसोमायेत्यादि यथादैवतम्। 'प्राश···र्जनात्' ततः स्विष्टकृदादिदक्षिणादानान्ते सक्तुशेषं शूर्पे प्रक्षिप्योपनिष्क्रम्य बहिःशालायाः स्थण्डिलमुपलिप्येत्यादि द्वारदेशमार्जयन्तआपोहिष्ठेतितिसृभिरित्यन्तं श्रवणाकर्मवत्। स यावत्कामयेत न सर्पा अभ्युपेयुरिति तावत्सन्ततयोदधारया निवेशनं त्रिः परिषिञ्चन्परीयादित्येतद्वर्जम्। 'मार्जे···त्याह' तत उत्सृष्टो बलिरिति प्रैषमुच्चार्य बर्हिर्होमादिब्राह्मणभोजनान्तम्। तदनन्तरं वैश्वदेवः। आग्रहायणीचेतिसूत्रादस्तमिते वत्ससंसर्गः। इत्याग्रहायणीकर्म॥ ॥ स्रस्तरारोहमाह 'पश्चा···वासः' आस्तीर्येत्यनुषङ्गार्थश्चकारः। तत्र मातृपूजाभ्युदयिके कृत्वा सायमाग्नि परिचर्याग्नेः प्रतीच्यां कौशं स्रस्तरं प्रागुदगग्रं

वास्तीर्य तदुपरि अहतं वासश्च तथैवास्तीर्येत्यर्थः । वैश्वदेवात्प्राक् । आरोहणं च दम्पत्योः गर्भरूपाणां च । कीदृशा इत्यत आह 'आप्लु'''रतः' आप्लुताः कृतस्नानाः स्नानं चाद्भिः (र्हि) । सकृद्धौतं नवं श्वेतं सदशम् यन्न धारितं । अहतं तद्विजानीयात्सर्वकर्मसु पावनम् । यत्तु अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वयंभुवेति । शस्तं स्यात्तद्विवाहादौ तावत्कालं न सर्वदेति । तेन सकृद्धौताद्युक्तलक्षणे अहते वाससी येषां ते तादृशाः । उत्तरत इत्यनेन प्रत्यवरोहन्तीत्यस्यान्वयः । किं कृत्वा प्रत्यवरोहन्तीत्यत आह 'दक्षि'''धाय' इति । अनुज्ञादानस्य चेतनसाध्यतां प्रतीत्यैतद्दक्षिणतो ब्रह्माणमुपवेश्येत्येतत्सूत्रितम् । दक्षिणत्वं चाग्न्यपेक्षया । उत्तरत्वमपि । उदपात्राद्यदृष्टार्थम् । 'अग्नि'''तुनाविति' जपश्च स्वामिनः । 'पश्चा'''सृभिः' अग्नेः पश्चाद्भागे संहताभ्यां हस्ताभ्यां प्रागग्रमञ्जलिं करोति दैवींनावमिति तिसृभिरर्द्धकण्डिकाभिः स्वस्तय इत्यन्ताभिः, तेन सार्द्धैककण्डिकयाऽञ्जलिं करोतीत्यर्थः । 'स्रस्तरमारोहन्ति' कथमत आह 'ब्रह्मा'''वलमिति' प्रत्यवरोहध्वमित्यनुज्ञादानम् । मन्त्रपाठश्च दम्पत्योरुपनीतकुमाराणां च । 'उपे'''शिवाइति' आयुः कीर्तिमितिमन्त्रेणारूढाः संजातोपनयनाः यजमानपुत्राः सुहेमंत इत्यादिमन्त्रं जपन्ति । 'स्योना'''शन्ति' संविशन्ति स्वपन्ति । कीदृशाः प्राक् पूर्वं शिरो येषां ते । स्वामित उत्तरस्यां जाया ततो यथाकनिष्ठमुत्तरतोऽपत्यानि स्वपन्ति । पुनः कथं ? दक्षिणपार्श्वैः । उत्तराभिमुखा इत्यर्थः । स्योनापृथिविनोभवेति मन्त्रेण संहितास्थेन । अत्रापि दम्पत्योरुपनीतानां च मन्त्रपाठः । पत्नीव्यतिरिक्तस्त्रीणां मन्त्राभावः । 'उपो'''मभिरिति' तत उदायुषेतिमन्त्रेण युगपत् उत्तिष्ठन्ति । स्रस्तरोपविष्टा उत्थानेनावरोहन्तीत्यर्थः । 'एवं'''ज्ञाताः' एवमुक्तप्रकारेण ब्रह्मन्प्रत्यवरोहामेत्यारभ्य प्रत्यवरोहध्वमित्यनुज्ञाता उदायुषेत्युत्थानान्तं द्विर्वारमपरं स्रस्तरारोहणमवरोहणान्तं कर्म कुर्वन्ति । 'अधः'''सान्' चैत्रीपौर्णमासीपर्यन्तम् अधः खट्वां व्युदस्य 'यथेष्टं वा' शयीरन्नित्यनुषङ्गः वाशब्दो विकल्पार्थः । तदनन्तरं वैश्वदेवः ॥ इतिस्रस्तरारोहः ॥ तृतीयस्य द्वितीया ॥२॥

ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टकाः ॥ १ ॥ ऐन्द्री वैश्वदेवी प्राजापत्या पित्र्येति ॥ २ ॥ अपूपमाᳫंसशाकैर्यथासंख्यम् ॥ ३ ॥ प्रथमाऽष्टका पक्षाष्टम्याम् ॥ ४ ॥ स्थालीपाकᳫं श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति । त्रिᳫंशत्स्वसार उपयन्ति निष्कृतᳫं समानं केतुं प्रतिमुञ्चमानाः । ऋतूंस्तन्वते कवयः प्रजानतीर्मध्ये छन्दसः परियन्ति भास्वतीः स्वाहा । ज्योतिष्मती प्रतिमुञ्चते नभो रात्री देवी सूर्यस्य व्रतानि । विपश्यन्ति पशवो जायमाना नानारूपा मातुरस्या उपस्थे स्वाहा । एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् । तेन दस्यून्व्यसहन्त देवा. हन्ताऽसुराणामभवच्छचीभिः स्वाहा ॥ अनानुजामनुजां मामकर्त्त सत्यं वदन्त्यन्विच्छ एतत् । भूयासमस्य सुमतौ यथा यूयमन्यावो अन्यामति मा प्रयुक्त स्वाहा । अभून्मम सुमतौ विश्ववेदा आष्ट प्रतिष्ठामविदद्धि गाधम् । भूयासमस्य सुमतौ यथा यूयमन्यावो अन्यामति मा प्रयुक्त

स्वाहा । पञ्च व्युष्टीरनु पञ्चदोहा गां पञ्चनाम्नीमृतवोऽनुपञ्च । पञ्च दिशः पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरधिलोकमेकꣳ स्वाहा ॥ ऋतस्य गर्भः प्रथमा व्यूषिष्यपामेका महिमानं बिभर्ति । सूर्यस्यैका चरति निष्कृतेषु घर्मस्यैका सवितैकां नियच्छतु स्वाहा ॥ या प्रथमा व्यौच्छत्सा धेनुरभवद्यमे । सा नः पयस्वती धुक्ष्वोत्तरामुत्तराꣳ समाꣳस्वाहा ॥ शुक्रऋषभा नभसा ज्योतिषागाद्विश्वरूपा शबली अग्निकेतुः । समानमर्थꣳ स्वपस्यमाना बिभ्रती जरामजरउष आगाः स्वाहा ॥ ऋतूनां पत्नी प्रथमेयमागादह्नां नेत्री जनित्री प्रजानाम् । एका सती बहुधोषो व्यौच्छत्साऽजीर्णा त्वं जरयसि सर्वमन्यत्स्वाहेति ॥ ५ ॥ स्थालीपाकस्य जुहोति शान्ता पृथिवी शिवमन्तरिक्षꣳ शन्नो द्यौरभयं कृणोतु । शन्नो दिशः प्रदिश आदिशो नोऽहोरात्रे कृणुतं दीर्घमायुर्व्यश्नवै स्वाहा । आपो मरीचीः परिपान्तु सर्वतो धाता समुद्रो अपहन्तु पापम् । भूतं भविष्यदकृन्तद्विश्वमस्तु मे ब्रह्माभिगुप्तः सुरक्षितः स्याꣳ स्वाहा ॥ विश्वे आदित्या वसवश्च देवा रुद्रा गोप्तारो मरुतश्च सन्तु । ऊर्जं प्रजाममृतं दीर्घमायुः प्रजापतिर्मयि परमेष्ठी दधातु नः स्वाहेति च ॥ ६ ॥ अष्टकायै स्वाहेति ॥ ७ ॥ मध्यमा गवा ॥ ८ ॥ तस्यै वपां जुहोति वह वपां जातवेदः पितृभ्य इति ॥ ९ ॥ श्वोऽन्वष्टकासु सर्वासां पार्श्वसक्थिसव्याभ्यां परिवृते पिण्डपितृयज्ञवत् ॥ १० ॥ स्त्रीभ्यश्चोपसेचनं च कर्षूषु सुरया तर्पणेन चाञ्जनानुलेपनꣳ स्रजश्च ॥ ११ ॥ आचार्यायान्तेवासिभ्यश्चानपत्येभ्य इच्छन् ॥ १२ ॥ मध्यावर्षे च तुरीया शाकाष्टका ॥ १३ ॥ ॥ ३ ॥ ॥ ❀ ॥

( कर्कः )—' ऊर्ध्वं…ष्टकाः ' भवन्तीति सूत्रशेषः । संस्कारश्चायं स्मर्यते गौतमादिभिः सकृत्करणं चास्याभ्यासाश्रवणात् । अष्टकास्तिस्रो भवन्ति । ता आह ' ऐन्द्री…ज्येति' वक्ष्यति च मध्यावर्षे च तुरीयाऽष्टकेति । तद्धितान्तेन निर्देशात्प्रत्यष्टकं तद्दैवत्यो होमो यथा स्यादिति । इदानीं तत्साधनभूतं द्रव्यमाह ' अपू…सङ्ख्यम्' अपूपा मण्डकाः । मांसं मध्यमा गवेति वक्ष्यति । शाकं कालशाकम् । अष्टकाद्वये । 'प्रथ…स्याम्' आग्रहायणीसमनन्तरं पक्षाष्टम्यां भवतीति शेषः । 'स्थाली…जुहोति' त्रिꣳशत्त्वसार उपयन्तीत्येवमादिभिर्मन्त्रैः प्रतिमन्त्रम् । ' स्थाली…होति ' शान्ता पृथिवीत्येवमादिभिर्मन्त्रैः प्रतिमन्त्रं चतस्रः । ततोऽपूपेनेन्द्राय स्वाहेत्येकाहुतिः । उभयो. सकाशात्स्विष्टकृदादि । 'मध्यमा गवा' मध्यमाष्टका पौषस्य कृष्णाष्टम्यां सा च गवा भवति । तस्याश्च कल्प उपरिष्टा-

द्रक्ष्यति। 'तस्यै वपां जुहोति' वह वपां जातवेद इत्यनेन मन्त्रेण। पुनरवदानहोमो विश्वेभ्यो देवेभ्यः स्वाहेति। 'श्वोऽन्व···न्नवत्' श्वस्तनेऽहनि सर्वास्वष्टकासु पार्श्वसक्थिसन्य्ययोर्मांसमादाय परिवृते पिण्डपितृयज्ञवत्कर्म भवति। इयांस्तु विशेषः। 'स्त्रीभ्यश्च' ददाति। 'उपसेचनं च कर्पूषु सुरया' अयं च स्त्रीपिण्डसंनिधौ अवटेषु सुरयोपसेचनम् तर्पणेन च तर्पयेत्। तर्पणशब्देन सक्तवोऽभिधीयन्ते। 'अञ्जनानुलेपनं स्रजश्च' स्त्रीपिण्डेपु ददाति। 'आचा···इच्छन्' ददाति। 'मध्या···ष्टका' भवतीति शेषः॥ ३॥ *॥

(जयरामः)—अष्टकाः भवन्तीति शेषः। संस्कारश्चायं स्मर्यते गौतमादिभिः। सकृत्करणं चास्य अभ्यासस्याश्रवणात्। ता आह ऐन्द्रीत्यादि। वक्ष्यति च मध्यावर्षे च तुरीया शाकाष्टकेति चतुर्थ्या निर्देशम्। तद्धितान्तेन निर्देशः प्रत्यष्टकं तद्देवत्यो होमो यथा स्यादिति। इदानीं तत्साधनभूतं द्रव्यमाह अपूपमिति। अपूपो मण्डकः, मांसं मध्यमागवेति वक्ष्यति, शाकं कालशाकम् अष्टकाद्रये। प्रथमाष्टका आग्रहायणीसमनन्तरपक्षाष्टम्यां भवतीति शेषः। आज्यभागौ हुत्वेत्यवसरज्ञापनम्। तत्राज्याहुतिपूक्तमन्त्राणां त्रिंशदित्यादिदशानां प्रजापतिस्त्रिष्टुप् अष्टम्या अनुष्टुप् लिङ्गोक्ता आज्यहोमे०। अष्टकायास्तदधिष्ठात्रीदेवतायास्त्रिंशत्तिथयः स्वसारो भगिन्यः। ताश्चाष्टकाया उप समीपं यन्ति गच्छन्ति हविर्भोगग्रहणाय। मुख्यत्वादष्टकायास्तद्द्वारा ता अपि प्राप्नुवन्तीत्यर्थः। किंभूताः। निष्कृतं शुद्धं समानं तुल्यं केतुं चिह्नं चन्द्रादिरूपं प्रतिमुञ्चमानाः धारयन्त्यः। ऋतून् हेमन्तादीन् तन्वते संभूय विस्तारयन्ति। पुनः किंभूताः। कवयः क्रान्तदर्शनाः। प्रजानतीः पूर्वकालस्वरूपं जानानाः। छादनात् व्यापकत्वाच्छन्दो वत्सरः तस्य मध्ये परियन्ति आवर्त्तन्ते। कीदृश्यः भास्वतीः दीप्तिमत्यः। ताभ्यः स्वाहा सुहुतमस्त्विति सर्वत्र समानम् १॥ या रात्री ज्योतिष्मती आप्यायनद्वारा ओजआदिकर्त्री नक्षत्रप्रचुरा वा। देवी देवतारूपा संसारचक्रे क्रीडन्तीति वा। नभ आकाशं प्रतिमुञ्चते आवृणोति एतेन स्वरूपं व्याख्यातम्। सूर्यस्य व्रतानि दिवसोचितकर्माण्यप्यावृणोति न प्रवर्त्तन्त इत्यर्थः। यस्यां रात्र्यां पशवो गवादयः अस्या मातुः पृथिव्या उपस्थे उपरिस्थितं वस्तु विशेषेण पश्यन्ति। द्यौः पिता पृथिवी मातेति श्रुतेः। किं भूताः पशवः। नानारूपाः बिडालाद्यनेकभेदभिन्नाः। जायमाना उत्पद्यमाना अपि। जन्मदिनमारभ्येत्यर्थः २॥ एकाष्टका चतुर्थी या वर्षासु प्रसिद्धा सा तप्यमाना तपसा शास्त्रविहितधर्मेण गर्भं श्रेयःप्राप्त्युपायविशेषरूपमिन्द्रं परमैश्वर्ययुक्तं महिमानं महान्तमप्रतिहतमित्यर्थः जजान जनितवती तेन गर्भेण देवा इन्द्राद्या दस्यून्प्रतिपक्षान् व्यसहन्त पराजितवन्तः। यद्वा। तान् विशेषेण स्वप्रहारमसहन्त असहायन्त। अन्तर्भूतोऽत्र णिच् बोद्धव्यः। यश्च गर्भः शचीभिः स्वनुष्ठितकर्मभिः असुराणामपकारिणां शत्रूणां हन्ता हिंसकोऽभवत् अभूत्। शचीति कर्मणो नामधेयं गणे पठ्यते ३॥ या माध्याः पौर्णमास्या उपरिष्टादष्टका तत्राष्टमी ज्येष्ठया संवध्यते। साऽप्येकाष्टकेत्याचक्षते। अथाष्टका स्वभगिनीः प्रत्याह। हे रात्र्यः यूयमात्मगुणैः कृत्वा अनुजां कनीयसीमपि मामनानुजां न अनुजा अननुजा तामनानुजां दीर्घच्छान्दसः ज्येष्ठामकर्त्त कृतवत्यः। अहं च सत्यं युष्मत्कृतमुपकारं यथार्थं वदन्ती कीर्त्तयन्ती सती एतत् अनानुजात्वमन्विच्छे शिरसि धारये। यथाऽस्य यजमानस्य सुमतौ शोभनमतिप्रदाने भूयासं भवेयम्। तथा यूयमप्येवंविधा भवत। किंतु युष्मान्प्रति ब्रवीमि। वो युष्माकं मध्ये अन्या रात्रयः अन्यां रात्रीमति अतिक्रम्य मा प्रयुक्त प्रतिपक्षा भूत्वा यजमानकार्यं मा विच्छेदयन्तु। मिथोऽनुरागिण्यो भूत्वा यजमानकार्यं संसाधयन्त्वित्यर्थः ४॥ अभूदित्यादिना पुनस्ताः प्रत्याह। हे भगिन्यः मम सुमतौ शोभननिष्ठायां वर्तमानोऽयं यजमानः विश्ववेदाः सर्वधनोऽभूत् भवतु। विश्वानि सर्वाणि वेदांसि ज्ञानानि धनानि वा यस्य सः। किंच प्रतिष्ठां सम्यक्स्थितिसु-

रूपं वा आष्ट अश्नुताम् । गावं चाभिलापजातमर्थम् अविदत् विन्दतु । हिशब्द एवार्थे । भूयासमित्याद्युक्तार्थम् ५ ॥ याः पञ्च रात्रीः व्युष्टीः उपसोऽनुगताः तत्स्वरूपमाह । पञ्चदोहाः यजमानस्याधिकारादिरूपा दोहा दोह्या यासां ताः । तथा गां संवत्सरात्मिकाम् । पञ्चनाम्नीं संवत्सरपरिवत्सरेदावत्सरेद्वत्सरवत्सराख्याम् । अथवा नन्दा भद्रा च सुरभी सुशीला सुमनास्तथेति शिवधर्मे प्रतिपादितनाम्नीम् । यस्याः पञ्च ऋतवोऽनुगता वत्साः । किंच । दिशः पूर्वाद्या ऊर्ध्वान्ताः पञ्चदशेन स्तोमेन क्लृप्ताः समर्थीकृताः । समानमूर्ध्नीः समानस्तुल्यो मूर्द्धा मस्तको यासां ताः । मूर्द्धा चादित्यः । एकमधिलोकं लोकस्य पृथिव्याख्यस्य अधि उपरि द्वितीयान्तानुपाकर्तुं प्रथमान्ताः पदार्थाः कर्मार्थं क्लृप्ताः । ताभ्यः स्वाहेत्युक्तार्थम् ६ ॥ या रात्रिः ऋतस्य यज्ञस्य सत्यस्य वा ब्रह्मणो वा गर्भ आश्रयः कारणं वा । प्रथमा आद्या । सायंप्रातरित्यादिप्रथमत्वनिर्देशात् । व्युषिषी अन्धकारमपनयन्ती । एका कृष्णा । अपां जलानां महिमानं महत्वं चन्द्रादिरूपं बिभर्ति धारयति पुष्णाति वा या चैका सूर्यस्य रवेः निष्कृतेषु निम्रेषु अस्तमयेषु चरति व्यवहरति । एका च शुक्ला घर्मस्य आतपस्य निष्कृतेषु चरति । तामेकां सविता नियच्छतु सुखदात्रीं करोतु । अष्टकाविशेषणं वा सर्वम् ७ ॥ सैवाष्टका रात्रिर्धेनुरूपेण स्तूयतेऽनुष्टुभा । या प्रथमा अष्टका रात्रिः व्यौच्छत् विपाशितवती । उच्छी विपाशे । सा रात्रिः यमे नियमे कृते सति धर्मराजे वा धेनुः पयस्विनी गौरभवत् अभूत् । श्राद्धादिरूपहविःसंपादनद्वारा यमस्याप्यभीष्टं प्रादादित्यर्थः । सा नोऽस्माकं पयस्विनी अभीष्टदात्री भूत्वा उत्तरामुत्तरामुत्तरोत्तरां समां वर्षं यावज्जीवमस्माकं पुत्रपशुग्रामधनादिकामान् धुक्ष्व पूरयत्वित्यर्थः । पुरुषव्यत्ययश्छान्दसः ८ ॥ या रात्रिः शुक्रा शोचिष्मती ऋषभा वर्षणशीला श्रेष्ठा वा । नभसा नभसि स्थितेन ज्योतिषा सहागात् आगता । अतो विश्वरूपा नानारूपा । तदेवाह । शबली कर्बुरा शुक्लकृष्णारुणवर्णभेदेन । अग्निकेतुः होमार्थमुद्धृतोऽग्निः केतुः प्रकाशकः चिन्हं तिलको वा यस्याः सा । अग्निर्मन्दप्रकाश उषःकाले सूर्यतेजःसम्भेदाद्वा भवति । समानं तुल्यमर्थं प्रयोजनं शोभनतया अपस्यमाना संपादयन्ती । उषःकाले पुण्यकर्माणि क्रियन्त इति यजमाने जरां निर्दुष्टदीर्घजीवनं बिभ्रती धारयन्ती । हे अजरे उषः त्वमागाः आगताऽसि । अजरे इति विशेषणं सर्वदैकरूपत्वात् । यजमानविशेषणं वा ९ ॥ अथोषोरूपाया रात्रेः स्तुतिद्वारेण स्वरूपनिरूपणमाह । इयमुषा आगात् आगता । किंभूता ऋतूनां वसन्तादिषण्णां प्रथमा मुख्या पत्नी पालयित्री । उषःकालादृतोः प्रवृत्तिर्भवतीति प्रथमत्वम् । पत्नी भार्या वा । ऋतुभिः सह संधानात् । अन्हां वासराणां नेत्री प्रापयित्री । उषसो दिनानामाविर्भावात् । तथा प्रजानां जनित्री सवित्री । निद्रापगमेन जागरणधर्मत्वात् । एकैव सती बहुधा प्रकारेण व्यौच्छत् प्राकाशत । अनेन कर्तुधर्मत्वात् या एवंरूपा सा त्वं स्वयमजीर्णा सती अन्यत्सर्वं प्राणिजातं जरयसि वयोविहीनं करोषि यातायाताभ्यां वयसोपचयाद्वा । अथवा रविरश्मिकदम्बप्रसारेण स्वयं जीर्णा सती अन्यत्सर्वं निमेषादि संवत्सरान्तकालावयवजातं जरयसि अपनयसि । तथाच यास्कः—रात्रेर्जरयिता जारः सूर्य इति १० ॥ ततः स्थालीपाकेन शान्तापृथिवीत्यादिना मन्त्रचतुष्टयेन चतस्र आहुतयः क्रमेण । अथ मन्त्रार्थः । तत्र त्रयाणां प्रजापतिः पङ्क्तिर्लिङ्गोक्ता होमे० । शान्ता सुखस्वरूपा पृथिवी नोऽस्माकमभयं कृणोतु करोतु । तथा शिवं मङ्गलमन्तरिक्षम् तथा शं सुखरूपा द्यौरपि कृणोतु । तथा दिशः प्राच्याद्याः प्रदिशोऽवान्तरदिशः आदिशः सर्वा नोऽस्माकं शं कृण्वन्तु । हे अहोरात्रे युवां शं कृणुतं कुरुतम् । एवं प्रसादाद्दीर्घमायुर्व्यश्नवै प्राप्नुयाम् १ ॥ आपो जलानि मरीचीः मरीचयः मे मम देहगेहादि सर्वं परिपान्तु रक्षन्तु । धाता अपां धारयिता समुद्रः सिन्धुः मे इति पदं तन्त्रमतः सर्वत्र संबध्यते । तेन मे मम पापं वृजिनमपहन्तु दूरीकृत्य नाशयतु । कीदृशं पापं तदेव प्रपञ्चयति । भूतं व्यतीतं भवि-

ष्यदागामि तत् विश्वं सर्वं पापमकृन्तत् छिनत्त्विति यावत् । कृती छेदने । यद्वा भूतं दक्षादिषु व्यतीतं भविष्यच्च तेष्वेव वर्तमानमभीष्टं धनादिनिकरं विश्वं सर्वमकृन्तत् अनवच्छिन्नं करोतु । तत एतैरनुगृहीतस्य मे ब्रह्म वेदः अभिगुप्तः शूद्रश्रवणादिनाऽनुपहतोऽस्तु । ततोऽभिगुप्तेन वेदेनाहं सुरक्षितः । धर्मानुष्ठाने निष्प्रत्यूहः स्यां भवेयम् । सर्वैर्वा सुरक्षितः २ ॥ विश्वेदेवास्त्रयोदश । आदित्या द्वादश । वसवोऽष्टौ । रुद्रा एकादश । मरुतो देवविशेषा एकोनपञ्चाशत् । एते नोऽस्माकं गोप्तारो रक्षितारः सन्तु भवन्तु । परमेष्ठी प्रजापतिश्च मयि ऊर्जमन्नं प्राणबलं वा प्रजां पुत्रादिरूपाममृतममरणधर्मत्वं परमानन्दं वा । तथा दीर्घमायुश्चिरं जीवितं च दधातु सुस्थितं करोतु ३ ॥ अष्टकायै स्वाहेति चतुर्थीमाहुतिं हुत्वाऽपूपेनेन्द्राय स्वाहेत्येकामाहुतिं हुत्वोभयोः स्विष्टकृत् । इति प्रथमाष्टका ॥ * ॥ मध्यमाष्टका पौषस्य कृष्णाष्टम्याम् । सा च गवा गोपशुना भवति । तस्याश्च कल्पमुपरिष्टाद्वक्ष्यति । तस्यै वपां नाभिस्थचर्मविशेषं जुहोति वह वपामितिमन्त्रेण । तस्यार्थः । तत्रादित्यस्त्रिष्टुप् जातवेदा वपाहोमे० । वह प्रापय शेषं स्पष्टम् । पुनरवदानहोमो विश्वेभ्यो देवेभ्यः स्वाहेत्येकाहुतिकः । वैश्वदेवीति संशब्दनात् । श्वः सर्वासामष्टकानां श्वस्तनेऽहनि अन्वष्टकासु पार्श्वसक्थिसव्ययोर्मांसमादाय परिवृते सर्वत आच्छादिते आवसथ्यागारे पिण्डपितृयज्ञवत्कर्म भवति । इयाँस्तु विशेषः स्त्रीभ्यश्च स्त्रीभ्यश्चापि पिण्डान्ददाति । कर्षूषु स्त्रीपिण्डसमीपखातगर्तेषु सुरया विहितमद्येन तर्पणेन च तर्पणहेतुभिः सक्तुभिरुपसेचनं स्त्रीपिण्डेषु । अञ्जनानुलेपनस्रजश्च ददाति । आचार्याय तथाऽन्तेवासिभ्यः शिष्येभ्योऽनपत्येभ्य इच्छया ददाति । मध्यावर्षे च तुरीया शाकाष्टका भवतीति शेषः ॥ ॥ ३ ॥ *

( हरिहरः )—' ऊर्ध्वे''ऽष्टकाः ' ऊर्ध्वमुपरि आग्रहायण्याः मार्गशीर्ष्याः पूर्णिमायाः तिस्रः अष्टकाः त्रीणि अष्टकाख्यानि कर्माणि भवन्ति । तानि च सकृत् संस्कारकर्मत्वात् । कुतः संस्कारकर्मतेतिचेत् सुमन्तुगौतमादिभिः ' अष्टकाः पार्वणः श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति पाकयज्ञसंस्थाः ' इत्यादिना अष्टकादीनां संस्कारत्वेन स्मरणात् । ननु संस्कारकर्मणामपि पञ्चमहायज्ञपार्वणस्थालीपाकपार्वणश्राद्धानां कुतोऽसकृत्करणम् । अभ्यासश्रवणात् । तथाहि अहरहः स्वाहा कुर्यादाकाष्ठादित्यादिना पञ्चमहायज्ञादीनां मासि मासि वोशनमिति श्राद्धस्य पक्षादिष्विति बहुवचनात् स्थालीपाकस्य । न तथाऽष्टकानामभ्यासः श्रूयते येन ताः पुनः पुनरनुष्ठीयेरन् । एवंच सति चत्वारिंशत्संस्कारकर्मणां मध्ये येषामभ्यासः श्रूयते तान्यसकृद्भवन्ति इतराणि तु सकृदिति निर्णयः । ' ऐन्द्री''संख्यम् ' एवमष्टकाकर्माणि कर्तव्यत्वेनाभिधाय तत्र च द्रव्यदेवतापेक्षायां द्रव्याणि देवताश्चाभिधत्ते । तत्र प्रथमा ऐन्द्री इन्द्रो देवता अस्या इति ऐन्द्री इन्द्रदैवत्येत्यर्थः । द्वितीया वैश्वदेवी विश्वेदेवा देवता अस्या इति वैश्वदेवी विश्वेदेवदैवत्येत्यर्थः । तृतीया प्राजापत्या प्रजापतिर्देवता अस्या इति प्राजापत्या प्रजापतिदैवत्येति यावत् । चतुर्थी पित्र्या पितरो देवता अस्या इति पित्र्या पितृदैवत्येत्यर्थः । अपूपश्च मांसं च शाकश्च अपूपमांसशाकास्तैः अपूपमांसशाकैः यथासंख्यं यस्याः या यथासंख्या तामनतिक्रम्य यथासंख्यं यजेतेत्यध्याहारः । एतदुक्तं भवति प्रथमायामपूपेनेन्द्रं यजेत द्वितीयायां मध्यमागवेति वक्ष्यमाणत्वात् गोमांसेन विश्वान् देवान् तृतीयायां शाकेन प्रजापतिमिति । अत्र तिस्र उपक्रम्य पित्र्येत्यनेन चतुर्थ्या अभिधानमयुक्तमिति चेत् न । उपक्रान्तानां तिसृणां देवताभिधानावसरे चतुर्थ्या अपि देवताया आचार्यस्य बुद्धिस्थत्वात् तदभिधानं न दोषः । अत्राष्टकाशब्दः कर्मवचनोऽपि कालोपलक्षकः । यथा वार्त्रघ्नी पौर्णमासी वृधन्वती अमावास्येत्यत्र कर्माभिधायकौ पौर्णमास्यमावास्याशब्दौ कालस्याप्युपलक्षकौ । अन्यथा आग्रहायण्या ऊर्ध्वं तिस्रोऽष्टका इत्यनेन प्रतिपद्येवाष्टकाकर्मप्राप्तिः स्यात् । तस्मादष्टकाशब्देन अष्टम्युपलक्ष्यते । तथाच श्रुतिः । द्वादशपौर्णमास्यो द्वादशाष्टका द्वादशामावास्या इति । आश्वलायनस्मृतिश्च ।

हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका इति । एवमष्टकाकर्मसु द्रव्यदेवते अभिधायेदानी-
मुद्देशक्रमेण तदितिकर्तव्यतामाह । 'अथ...होति' त्रिंशत्स्वसार इत्यादि । प्रथमा आद्या
अष्टका अष्टकाख्यं कर्म भवतीति शेषः । कदा पक्षाष्टम्याम् । अत्र सौरादिभेदेन मासानामनेकत्वाद-
ष्टम्योऽप्यनेका इति किंमाससंबन्धिन्यामष्टम्यामष्टकानामधेयं कर्मेति संदेहापत्तौ पक्षाष्टम्यामित्याह ।
पक्षेऽपरपक्षे पौर्णमास्या ऊर्ध्वमिति वचनसामर्थ्यात् पक्षाष्टमी कृष्णाष्टमी न पुनः सौरसावननाक्ष-
त्रमाससंबन्धिनी तेषां शुक्लकृष्णपक्षत्वाभावात् । तस्यां पक्षाष्टम्याम् । कथं, स्थालीपाकं चरुं श्रप-
यित्वा उक्तविधिना संसाध्य आज्यभागौ आहुतिविशेषौ हुत्वा दशाज्याहुतीः त्रिंशत्स्वसार
इत्यादिभिर्दशभिर्मन्त्रैः प्रतिमन्त्रं जुहोति । 'स्थाली...शान्ता पृथिवीत्यादि' स्थालीपाकस्य चरो-
र्जुहोति शान्ता पृथिवीत्यादिभिश्चतुर्भिर्मन्त्रैश्चतस्र आहुतीर्जुहोति प्रतिमन्त्रम् । अत्र ऐन्द्री प्रथ-
माऽष्टकेति प्राधान्यमिन्द्रस्योक्तम् । अपूपेत्यनेन हविषः । यागावसरश्च नोक्तः सूत्रकृता, अतः सं-
देहः कुत्र क्रियतामिति । किंतावत्प्राप्तं साधनत्वात्प्रधानत्वादाज्यभागानन्तरं क्रियतामिति । न ।
तत्र आज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोतीति सूत्रकृताऽऽज्याहुतिविधानात् । तर्हि तदन्तेऽस्तु । न ।
तत्रापि स्थालीपाकस्य जुहोतीत्याज्यहोमानन्तरं स्थालीपाकहोमविधानात् । तस्मादनन्तरमेव युज्यते ।
ततः अपूपेन इन्द्राय स्वाहेत्येकामाहुतिं जुहुयात् । एवमुत्तरत्रापि । एवं प्रथमाष्टकेतिकर्तव्यतामनु-
विधायाधुना इयमेवोत्तरास्वप्यष्टकास्वितिकर्तव्यता इत्यभिप्रेत्य एतासां विशेषमात्रमनुविधत्ते मध्यमाग-
वेत्यादिभिः सूत्रैः । मध्यमा तिसृणां द्वितीयेत्यर्थः । सा च गवा गोपशुना कर्तव्या इति सूत्रशेषः ।
अत्राचार्येण यद्यपि गोपशुरुक्तस्तथापि 'अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु' इति स्मर-
णात्, तथा 'देवरेण सुतोत्पत्तिर्वानप्रस्थाश्रमग्रहः । दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य
च ॥ समुद्रयानस्वीकारः कमण्डलुविधारणम् । महाप्रस्थानगमनं गोपशुश्च सुराग्रहः ॥ अग्नि-
होत्रहवण्याश्च लेहो लीढापरिग्रहः । असवर्णासु कन्यासु विवाहश्च द्विजातिषु ॥ वृत्तस्वाध्यायसापेक्ष-
मघसंकोचनं तथा । अस्थिसञ्चयनादूर्ध्वमङ्गस्पर्शनमेव च ॥ प्रायश्चित्ताभिधानं च विप्राणां मरणान्ति-
कम् ॥ संसर्गदोषः पापेषु मधुपर्के पशोर्वधः । दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः । शामित्रं चैव
विप्राणां सोमविक्रयणं तथा । दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ । कलौ युगे त्विमान्धर्मान् वर्ज्या-
नाहुर्मनीषिणः ।' इति स्मरणात् । गोपशोरस्वर्ग्यत्वाल्लोकविद्विष्टत्वात्कलौ विशेषतो वर्जनीयत्वाच्च न
गवालम्भः कर्तव्यः । किं तु अनिषिद्धपश्वन्तरेणावश्यकर्तव्याष्टकादिकर्म निर्वर्तनीयम् । 'तस्यै...पि-
तृभ्य इति' तस्यै इति षष्ठीस्थाने चतुर्थी । तस्याः गोर्वपां वहवपामित्यनेन मन्त्रेण जुहोति पुनर्वि-
श्वेभ्यो देवेभ्यः स्वाहेत्यवदानानि जुहोति । शेषं पशुकल्पं पशुश्चेदाप्लाव्येत्यादिना उपरिष्टाद्वक्ष्यति ।
रूपं कालोऽनुनिर्वापः श्रपणं देवता तथा । आदौ ये विधृताः पक्षास्त इमे सर्वदा स्मृताः ॥ इत्येतस्य
संहितासु अदर्शनात् । समूलत्वे त्वनुनिर्वापादिसमभिव्याहारेण श्रौतमात्रविषयत्वात् । वस्तुतस्तु
नान्यस्य तन्त्रे प्रततेऽन्यस्य तन्त्रं प्रतीयत इति प्रायिकम्, सान्तपनीयाधिकरणेऽन्यतन्त्रमध्येऽग्निहो-
त्रदर्शनात् । 'श्वोऽन्व...ष्टवत्' श्वः अष्टम्यामुत्तरेद्युः अन्वष्टकासु अष्टका अनु पश्चाद्भवन्तीत्यन्वष्टकाः
तासु सर्वासां चतसृणामष्टकानां कर्म भवतीति शेषः । केन द्रव्येणेत्यत आह । पार्श्वसक्थिसव्या-
भ्याम् । पार्श्वं च सक्थि च पार्श्वसक्थिनी ते च सव्ये च पार्श्वसक्थिसव्ये ताभ्यां पार्श्वसक्थि-
सव्याभ्याम् । अत्र तुल्याधिकरणविशेषणीभूतस्य सव्यशब्दस्योत्तरपदत्वं छान्दसम् । परिवृते सर्वतः
प्रच्छादिते आवसथ्याग्निसदने । इतिकर्तव्यतापेक्षायामाह पिण्डपितृयज्ञवत् । अपराह्णे पिण्डपितृयज्ञ
इत्याद्युक्तपिण्डपितृयज्ञविधिना । 'स्त्रीभ्यश्च' पिण्डपितृयज्ञवत् इत्यनेन पितृपितामहप्रपितामहानामेव
पिण्डदानं प्राप्तं ततोऽधिकमुच्यते स्त्रीभ्यः मातृपितामहीप्रपितामहीभ्यः पिण्डान्दद्यादिति चकारेण

समुच्चीयते । अत्र सामान्योऽपि स्त्रीशब्दः पित्रादिसंनिधानात् मात्रादिपरोऽवसीयते । ' उप'''स्र-जश्च ' न केवलं स्त्रीभ्यः पिण्डान्दद्यात् किं तु उपसेचनं च कुर्यात् । कया सुरया मद्येन । कासु कर्षूषु अवटेषु न केवलं सुरया तर्पणेन च तर्पयत्यनेनेति तर्पणसाधनं सक्त्वादि तेन । चकार उपसेचनक्रियासमुच्चयार्थः करणाधिकरणयोश्चेति ल्युडन्तोऽत्र तर्पणशब्दः । त्रैककुदं सौवीराञ्जन-मिति प्रसिद्धं तदलाभे लौकिकं कज्जलम् अनुलेपनं सुगन्धिद्रव्यं चन्दनादि, स्रजः अप्रतिषिद्धसुर-भिपुष्पमालाः । चकारो दद्यादिति क्रियासमुच्चयार्थः । 'आचा'''च्छन्' यदि कामयेत तदा आचा-र्याय अन्तेवासिभ्यश्च शिष्येभ्यः पिण्डान् दद्यात् । यदि ते अनपत्याः स्युः । ' मध्या'''काष्टका ' एवमष्टकात्रयं सामान्यतो विशेषतश्चानुविधाय पित्र्येत्युद्देशक्रमप्राप्तां विशेषतश्चतुर्थीमष्टकामाह मध्या मध्ये वर्षे वृष्टिकाले प्रौष्ठपद्या उर्ध्वमष्टमीत्यर्थः । तुरीया चतुर्थी शाकाष्टका शाकेन कालशाकाख्येन निर्वर्त्या अष्टका शाकाष्टका । इति सूत्रार्थः ॥ ॥ अथाष्टकाकर्मपद्धतिः । तत्र मार्गशीर्ष्या उर्ध्वं कृष्णाष्टम्यां मातृपूजापूर्वमाभ्युदयिकश्राद्धं विधाय आवसथ्याग्नौ कर्म कुर्यात् । केषांचिन्मते अष्टका-कर्मसु आभ्युदयिकं नास्ति । नाष्टकासु भवेच्छ्राद्धमिति वचनात् । तत्र ब्रह्मोपवेशनादिप्राशनान्ते विशेषः । तण्डुलानन्तरं पूर्वमौपासनाग्निसिद्धस्यैवापूपस्यासादनं प्रोक्षणं च प्रोक्षणकाले । तत्राज्यभा-गान्तं कर्म कृत्वा त्रिᳪशत्स्वसार इत्येवमाद्या दशाहुतीर्हुत्वा स्थालीपाकेन शान्तापृथिवीत्यादिभि-श्चतुर्भिर्मन्त्रैश्चतस्र आहुतीर्हुत्वा अपूपादिन्द्राय स्वाहेत्येकामाहुतिं दत्त्वा स्थालीपाकादपूपाच्च स्विष्टकृते जुहोति । तद्यथा आज्यभागानन्तरं त्रिᳪशत्स्वसार उपयन्ति निष्कृतᳪसमानं केतुं प्रतिमुञ्चमानाः । ऋतूँस्तन्वते कवयः प्रजानतीर्मध्ये छन्दसः परियन्ति भास्वतीः स्वाहा इदं स्वसृभ्यो० । ज्योतिष्मती प्रतिमुञ्चते नभो रात्री देवी सूर्यस्य व्रतानि । विपश्यन्ति पशवो जायमाना नानारूपा मातुरस्या उपस्थे स्वाहा इदᳪरात्र्यै० । एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् । तेन दस्यून्व्य-सहन्त देवा हन्तासुराणामभवच्छचीभिः स्वाहा इदमष्टकायै० । अनानुजामनुजां मामकर्त्त सत्यं वद-न्त्यन्विच्छ एतत् । भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामतिमाप्रयुक्त स्वाहा । इदᳪरात्रीभ्यो० अभून्मम सुमतौ विश्ववेदा आष्ट प्रतिष्ठामविदद्धि गाधम् । भूयासमस्य सुमतौ यथा यूयमन्यावो अन्या-मतिमाप्रयुक्त स्वाहा । इदᳪरात्रीभ्यो० । पञ्चव्युष्टीरनुपञ्चदोहा गां पञ्चनाम्नीमृतवोऽनुपञ्च । पञ्चदिशः पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरधिलोकमेकᳪस्वाहा । इदᳪरात्रीभ्यो० । ऋतस्य गर्भः प्रथमा व्यूषिष्य-पामेका महिमानं बिभर्ति । सूर्यस्यैका चरति निष्कृतेषु घर्मस्यैका सवितैकां नियच्छतु स्वाहा । इदᳪरात्र्यै० । या प्रथमा व्यौच्छत्सा धेनुरभवद्यमे । सा नः पयस्वती धुक्ष्वोत्तरामुत्तराᳪ समाᳪ स्वाहा ॥ इदᳪ रात्र्यै० ॥ शुक्रऋषभा नभसा ज्योतिषागाद्विश्वरूपा शबलीरग्निकेतुः । समानमर्थᳪ स्वपस्यमाना बिभ्रती जरामजर उष आगात्स्वाहा । इदᳪरात्र्यै० । ऋतूनां पत्नी प्रथमेयमागादह्नां नेत्री जनित्री प्रजानाम् । एका सती बहुधोषो व्यौच्छत्सा जीर्णा त्वं जरयसि सर्वमन्यत्स्वाहा । इदᳪरात्र्यै० ॥ १० ॥ अथ स्थालीपाकेनाहुतीश्चतस्रः शान्ता पृथिवीत्यादिभिश्चतुर्भिर्मन्त्रैर्जुहोति प्रतिमन्त्रम् । तद्यथा । शान्ता पृथिवी शिवमन्तरिक्षᳪ शं नो द्यौरभयं कृणोतु । शं नो दिशः प्रदिश आदिशो नोऽहोरात्रे कृणुतं दीर्घमायुर्व्यश्नवै स्वाहा । इदं पृथिव्यै अन्तरिक्षाय दिवे दिग्भ्यः प्रदिग्भ्य आदिग्भ्योऽहोरात्राभ्यां च० । आपो मरीचीः परिपान्तु सर्वतो धाता समुद्रो अपहन्तु पापम् । भू-तंभविष्यदकृन्तद्विश्वमस्तु मे ब्रह्माभिगुप्तः सुरक्षितः स्याᳪस्वाहा । इदमद्भ्यो मरीचिभ्यो धात्रे समु-द्राय ब्रह्मणे च० । विश्वे आदित्या वसवश्च देवा रुद्रा गोप्तारो मरुतश्च सन्तु । ऊर्जं प्रजाममृतं दी-र्घमायुः प्रजापतिर्मयि परमेष्ठी दधातु नः स्वाहा । इदं विश्वेभ्य आदित्येभ्यो वसुभ्यो देवेभ्यो रुद्रे-भ्यो मरुद्भ्यः प्रजापतये परमेष्ठिने च० । अष्टकायै स्वाहा इदमष्टकायै० । अथ अपूपादेकाहुतिः ।

इन्द्राय स्वाहा इदमिन्द्राय० । स्थालीपाकादपूपाच्च स्विष्टकृत् । ततो महाव्याहृत्यादिप्राजापत्यान्तं होमं विधाय प्राशनादि समापयेत् । श्वोऽन्वष्टकाकर्मावसथ्याग्नावेव । तत्र नित्यवैश्वदेवानन्तरमपराह्णे प्राचीनावीती नीवीबन्धनं कृत्वा दक्षिणामुखः परिवृतेऽग्निसमीपे अग्नेरुत्तरत उपविश्य आग्नेयादिदक्षिणान्तमप्रदक्षिणमग्निं दक्षिणाग्रैः कुशैः परिस्तीर्य अग्नेः पश्चिमतो दक्षिणसंस्थानि पात्राण्येकैकश आसादयति । तद्यथा । स्रुचं चरुस्थालीं वा स्रुक्पक्षे तु स्रुगनन्तरं चरुस्थालीमुदकमाज्यं मेक्षणं स्फ्यमुदपात्रं सकृदाच्छिन्नानि क्रीतयोर्लब्धयोर्वा छागस्य पार्श्वसक्थ्नोर्मांसं सुरां सक्तूनञ्जनमनुलेपनं स्रजः सूत्राणि च । ततः पार्श्वसक्थ्नोर्मांसं श्लक्ष्णमणुशश्छित्वा प्रक्षितासादितोदकायां चरुस्थाल्यां प्रक्षिप्याग्नावधिश्रित्याप्रदक्षिणं मेक्षणेन चालयित्वा शृतमांसमासादितेन घृतेनाभिघार्य दक्षिणत उद्वास्य पूर्वेणाग्निमानीयोत्तरतः स्थापयेत् । ततः सव्यं जान्वाच्य मेक्षणेन मांसमादाय अग्नये कव्यवाहनाय स्वाहेत्येकामाहुतिं हुत्वा इदमग्नये कव्यवाहनायेति त्यागं विधाय पुनर्मेक्षणेन मांसमादाय सोमाय पितृमते स्वाहेति द्वितीयामाहुतिं हुत्वा इदं सोमाय पितृमत इति त्यागं विधाय मेक्षणमग्नौ प्रास्याग्नेर्दक्षिणतः पश्चाद्वा दक्षिणामुख उपविश्य सव्यं जान्वाच्य भूमिमुपलिप्य तत्र स्फ्येन अपहता असुरारक्षाᳬसि वेदिषद इति मन्त्रेण लेखां दक्षिणसंस्थामुल्लिख्य तथैव द्वितीयाम् । उदकमुपस्पृश्य ये रूपाणीत्युल्मुकं प्रथमलेखाग्रे निधाय तथैव द्वितीयलेखाग्रे । उदकमुपस्पृश्य उदकपात्रमादाय प्रथमलेखायां पितृतीर्थेनामुकसगोत्रास्मत्पितरमुकशर्मन्नवनेनिक्ष्वेत्येवं पितामहप्रपितामहयोरवनेजनं दत्त्वा द्वितीयलेखायामेवमेवामुकसगोत्रेऽस्मन्मातरमुकिदेवि अवनेनिक्ष्वेत्येवं पितामहीप्रपितामह्योरवनेजनं दत्त्वा सकृदुपमूललूनानि दक्षिणाग्राणि बर्हींषि लेखयोरास्तीर्य तत्रावनेजनक्रमेणामुकसगोत्रास्मत्पितरमुकशर्मन्नेतत्ते मांसं स्वधा नम इति मांसपिण्डं दत्त्वा पितामहप्रपितामहयोश्चैवं प्रदायापरलेखायाममुकसगोत्रेऽस्मन्मातरमुकि देवि एतत्ते मांसं स्वधा नम इति मांसपिण्डं दत्त्वा पितामहीप्रपितामह्योरप्येवं पिण्डद्वयं प्रदाय प्रतिपिण्डदानम् इदं पित्रे इदं पितामहाय इदं प्रपितामहाय इदं मात्रे इदं पितामह्यै इदं प्रपितामह्यै इति त्यागान् विधाय इच्छया स्त्रीपिण्डसमीपेऽवनेजनसकृदाच्छिन्नास्तरणपूर्वकमनपत्येभ्य आचार्यान्तेवासिभ्यश्च यथाक्रमं मांसपिण्डान् दद्यात् । चकारादन्येभ्योऽपि सपिण्डादिभ्यो दद्यात् । स्त्रीपिण्डसंनिधौ अवटत्रयं खात्वा तेषु अमुकसगोत्रेऽमुकि देवि सुरां पिबस्वेत्येकत्रावटे सुरां प्रसिच्य तथैव पितामहीप्रपितामह्योरितरयोरवटयोरासिच्य सक्तूनादायामुकसगोत्रेऽमुकि देवि तृप्यस्वेति मातृप्रभृतिभ्यः सक्तून्प्रत्यवटं प्रक्षिप्य ततस्तथैवाञ्जस्वेति मातृप्रभृतिभ्योऽञ्जनं दत्त्वा अनुलिम्पस्वेत्यनुलेपनं च दत्त्वा स्रजोऽपिनह्यस्वेति स्रजो दत्त्वा अत्र पितर इत्यर्द्धर्चं जपित्वा पराङावृत्य वायुं धारयन्नातमनादुदङ्मुख आसित्वा तेनैवावृत्यामीमदन्तेत्यर्द्धर्चं जपित्वा पूर्ववदवनेज्य नीवीं विस्रस्य नमो व इति प्रतिमन्त्रमञ्जलिं करोति । गृहान्नः इत्याशिषं प्रार्थ्य एतद्व इति प्रतिपिण्डं सूत्राणि दत्त्वा ऊर्जमिति पिण्डेष्वपो निषिच्य पिण्डानुत्थाप्य उखायामवधायावघ्राय सकृदाच्छिन्नान्यग्नौ प्रास्योल्मुकं प्रक्षिप्योदकं स्पृष्ट्वाऽऽचम्य आन्वष्टक्यं श्राद्धं कुर्यात् । उखा ताम्रमयी मृन्मयी वा । शिल्पिभ्यः स्थपतिभ्यश्च आददीत मतीः सदा । उखा मांससान्नाय्योखा चयनोखा पशूखा पिण्डपितृयज्ञोखा । इति प्रथमाष्टका ॥ ॥ पौष्या ऊर्ध्वं कृष्णाष्टम्यां द्वितीयाष्टका वैश्वदेवी । तत्र प्रथमप्रयोगे मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा आवसथ्याग्नौ कर्म कुर्यात् । तत्र ब्रह्मोपवेशनं प्रणीताप्रणयनं परिस्तरणं च विधाय पात्राण्यासादयेत् । पवित्रच्छेदनानि पवित्रे द्वे प्रोक्षणीपात्रमाज्यस्थाली द्वे चरुस्थाल्यौ संमार्गकुशाः उपयमनकुशाः समिधः स्रुवः आज्यं, काश्मर्यमय्यौ हस्तमात्र्यौ वपाश्रपण्यौ शाखाविशाखे, अष्टका चरुतण्डुलाः हस्तमात्रं वारणं शूलं पशुश्रपणार्थमुखा ताम्रमयी मृन्मयी वा पायुकचरुतण्डुलाश्चेत्येतानि । अथोपकल्पनीयान्युपकल्पयन्ति ।

प्लक्षशाखा पलाशशाखा त्रिहस्तप्रमाणा, व्याममात्री कौशी त्रिगुणरशना, उपाकरणतृणम्, एकं दर्भतरुणं, द्विगुणरशना कौशी व्याममात्री, पशुश्छागः, पात्रेजनी उदकपूर्णा स्थाली, असिः शस्त्रम्, हिरण्यशकलानि षट्, पृषदाज्यार्थं दधि चेति । ततः पवित्रकरणादिप्रोक्षणान्ते विशेषः । विश्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामीति पाशुकचरुतण्डुलानां प्रोक्षणम् । आज्यनिर्वापानन्तरमष्टकाचरुपात्रे तण्डुलान्प्रक्षिप्य पाशुकचरुपात्रे तण्डुलप्रक्षेपं कुर्यात् । ततो ब्रह्माज्यं स्वयमष्टकाचरुं अन्यः पत्नी वा पाशुकचरुं युगपदग्नौ उदक्संस्थमधिश्रयन्ति । ततः पर्यग्निकरणादि प्रोक्षण्युत्पवनान्तं यजमान एव कुर्यात् । अथाग्नेः पश्चाद्दक्षिणत आरभ्य उदक्संस्थाः प्रागग्राः कुशास्तरणोपरि प्लक्षशाखा आस्तीर्याग्नेः प्रादक्षिण्येन पुरस्ताद्गत्वा पलाशशाखामग्निकुण्डलप्रागुदङ्मुख उपविष्टः वितस्तिमात्रं निखाय त्रिगुणरशनामादाय प्रादक्षिण्येन पलाशशाखां त्रिर्वेष्टयति । अथोपाकरणतृणेन विश्वेभ्यो देवेभ्य उपाकरोमीति पशुमुपाकरोति शरीरे स्पृशति । ततो द्विगुणरशनया शृङ्गमध्ये तूष्णीं दक्षिणकर्णाधस्ताद्बध्नाति । ततो विश्वेभ्यो देवेभ्यो नियुनज्मीति पलाशशाखायां पशुं नियुनक्ति । ततः प्रोक्षणीरादाय ब्रह्मन्हविः प्रोक्षिष्यामीति ब्रह्माणमामन्त्र्य ॐ प्रोक्षेति ब्रह्मणाऽनुज्ञातो विश्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामीति पशुं प्रोक्ष्य प्रोक्षणीजलं पशोरास्ये कृत्वा शेषं पशोरधस्तादुपोक्षति सिञ्चति । अथ यथागतमागत्य स्वासने उपविश्योपयमनकुशानादाय समिधोऽभ्याधाय पर्युक्ष्य ब्रह्मणाऽन्वारब्ध आघारौ हुत्वा आज्यलिप्तेन स्रुवेण ललाटे अंसयोः श्रोण्योश्च पशुं समनक्ति अञ्जनं करोति । ततोऽसिमादाय स्रुवेणैव संयोज्यासिस्रुवाग्राभ्यां पशोर्ललाटमुपस्पृशति । ततोऽग्नेरुल्मुकमादायोत्थाय प्रदक्षिणं परिगच्छन् पशुमाज्यं शाखामग्निं त्रिःपर्यग्निकृत्वोल्मुकमग्नौ प्रास्य तावत्प्रतिपरीत्याप्रादक्षिण्येनागत्य आस्तृततृणद्वयमादाय पशुं शिरस उन्मुच्य कण्ठे बद्ध्वा पलाशशाखात उन्मुच्य रशनया वामकरेण धृत्वा दक्षिणेन वपाश्रपणीभ्यामन्वारब्धमुदङ्नयति । तत्रैकं तृणं भूमौ धृत्वा तस्मिन्प्रत्यक्शिरसं प्राक्शिरसं वा उदक्पादं पशुं निपात्य स्वासने उपविशति यजमानः । अपरः कश्चिन्मुखं संगृह्य संज्ञपयति । संज्ञप्यमाने यजमानः पूर्णाहुतिवदाज्यं संस्कृत्य स्वाहा देवेभ्य इत्येकामाहुतिं हुत्वा इदं देवेभ्य इति त्यक्त्वा संज्ञप्ते देवेभ्यः स्वाहेति तेनैवाज्येन द्वितीयामाहुतिं हुत्वा इदं देवेभ्य इति त्यक्त्वा अपराः पञ्चाहुतीस्तूष्णीं जुहोति इदं प्रजापतये इति त्यागः पञ्चसु । तत उत्थाय पशुं मोचयित्वा वपाश्रपणीभ्यां नियोजनीं त्यजति । ततः पात्रेजनीमादाय पशोः प्राणान्स्वयमेव शुन्धति । तद्यथा । पात्रेजनीजलमादाय मुखं दक्षिणोत्तरे नासिके दक्षिणोत्तरे चक्षुषी दक्षिणोत्तरौ कर्णौ नाभिं मेढ्रं पायुमेकीकृत्य पादांश्च क्रमेण शुन्धति । शेषं पशोः पश्चान्निषिञ्चति । ततः पशुमुत्तानं कृत्वा नाभ्यग्रे उदगग्रं तृणं निधायासिधारया तृणमभिनिधाय छिनत्ति । अथ द्विधाभूतस्य तृणस्य मूलमादाय उभयतो लोहितेनाङ्क्त्वा निरस्य वपामुत्खिदति । ततो वपाश्रपण्यावादाय प्रोर्णौति ततश्छिनत्ति वपां तां च प्रक्षाल्याग्नेरुत्तरतः स्थित्वा प्रतप्य शाखाग्न्योरन्तरेणाहृत्याग्नेर्दक्षिणतः स्थित्वा वपां श्रपयति । श्रप्यमाणां च स्रुवेणाज्यं गृहीत्वाऽभिघार्य प्रत्याहृत्य ब्रह्माणं प्रदक्षिणीकृत्य स्वासने उपविश्य स्रुवेणाज्यं गृहीत्वा वपायां प्राणदानं कृत्वा प्लक्षशाखायामासाद्यालभते । ततो ब्रह्मान्वारब्ध आज्यभागौ हुत्वा त्रिंशत्स्वसार इति दशाहुतीरनन्वारब्धो हुत्वा अष्टकाचरुणा शान्तापृथिवीत्यादिचतुर्भिर्मन्त्रैश्चतस्र आहुतीर्हुत्वा वपाहोमाय वामहस्तस्थे स्रुवे आज्यमुपस्तीर्य हिरण्यशकलमवधाय वपां द्विधाऽवदाय गृहीत्वा पुनर्हिरण्यशकलमवधाय द्विरभिघार्य वह वपां जातवेदः पितृभ्य इति प्राचीनावीतिनो दक्षिणामुखस्य वपाहोमः । इदं पितृभ्य इति त्यागः इदं जातवेदस इति वा त्यक्त्वा यज्ञोपवीती भूत्वोदकं स्पृष्ट्वा वपाश्रपण्यौ विपर्यस्ते अग्नौ प्रास्य पशुं विशास्ति । तद्यथा । हृदयं जिह्वां क्रोडं सव्यबाहुं पार्श्वे यकृत् वृक्कौ गुदमध्यं दक्षिण-

श्रोणिमिति सर्वावदानपक्षे। दक्षिणबाहुं गुदतृतीयाणिष्ठं सव्यश्रोणिमिति त्र्यङ्गानि स्विष्टकृद्द्रव्याणि। यदा त्रीणि तदा हृदयं जिह्वां क्रोडमिति त्रीणि। पञ्चावदानपक्षे हृदयं जिह्वां क्रोडं सव्यबाहुं पार्श्वे इति पञ्चावद्यति खण्डयति। तस्मिन्पक्षे शेषान् स्विष्टकृतेऽवद्यति। ततोऽवदानानि प्रक्षाल्य शूलेन हृदयं प्रतप्य उषामग्नावधिश्रित्य अवदानानि प्रक्षिपति स्वल्पमुदकं च। ततश्रि: प्रच्युते हृदयमुपरि कृत्वा पृषदाज्येन हृदयमभिघार्येतराण्यवदानानि त्र्यङ्गवर्जितानि आज्येनाभिघारयति। अथोषामुद्वास्यावदानान्युधृत्य कस्मिंश्चित्पात्रे हृदयादिक्रमेण उदक्संस्थानि निधाय स्रुवेणाज्यमादाय हृदयादीनां त्र्यङ्गवर्जितानां क्रमेण प्राणदानं कृत्वा शाखाग्न्योरन्तरेणाहृत्य प्लक्षशाखासु हृदयादिक्रमेणोदक्संस्थान्यासादयति। ततस्त्र्यङ्गवर्जितान्यालभते। अथ प्रधानहोमार्थं स्रुवेणाज्यमुपस्तीर्य हिरण्यशकलमवधाय हृदयादिभ्य: क्रमेण द्विर्द्विरवदाय स्रुवे क्षिप्त्वा स्थालीपाकाच्च सकृदवदायोपरि क्षिप्त्वा तदुपरि हिरण्यशकलं दत्त्वा सकृदभिघार्य विश्वेभ्यो देवेभ्य: स्वाहेति जुहुयात्। इदं विश्वेभ्यो देवेभ्य इति त्यक्त्वा स्विष्टकृदर्थं स्रुवमुपस्तीर्य हिरण्यशकलं दत्त्वा त्र्यङ्गेभ्यो द्विर्द्विरवदाय स्रुवे कृत्वा चरुद्वयाच्च सकृत्सकृदवदाय हिरण्यशकलमवधाय द्विर्द्विरभिघार्य अग्नये स्विष्टकृते स्वाहेति जुहुयात् इदमग्नये स्विष्टकृते इति त्याग:। असर्वावदानपक्षे प्रधानावदानशेषास्विष्टकृद्धोम इति विशेष:। ततो महाव्याहृत्यादिप्राजापत्यान्ता नवाज्याहुतीर्हुत्वा ब्रह्मान्वारब्धो हुत्वा संस्रवं प्राश्य ब्रह्मणे पश्वङ्गं दक्षिणां दद्यात्। तत: स्मृत्यन्तरोक्तं पञ्चविंशतिब्राह्मणभोजनं च दद्यात्। अस्यैव पशो: सव्यपार्श्वसक्थिभ्यामपरदिनेऽन्वष्टकाकर्म पूर्ववत्। माघ्या ऊर्ध्वं कृष्णाष्टम्यां तृतीयाष्टका प्राजापत्या। सा यथा प्रथमाष्टका। तत्र अपूपस्थाने कालशाकचरुं तदग्निसिद्धमेवामादनकाले आसाद्य प्रोक्षणकाले प्रोक्षयेत्। ततोऽपूपयागस्थाने प्रजापतये स्वाहेति कालशाकं जुहुयात्। शेषं समानम्। कालशाकालाभे वास्तुकम्। अन्येद्यु: पूर्ववदन्वष्टकाकर्मेति। प्रौष्ठपद्या ऊर्ध्वं कृष्णाष्टम्यां चतुर्थी पित्र्या शाकाष्टका। सा च प्रथमाष्टकावत्। एतावान् विशेष:। चरुस्थालीद्वयं तण्डुलानन्तरं कालशाकमासादयेत्। कालशाकचरुसंबद्धमासादनादि होमान्तं कर्म प्राचीनावीती दक्षिणामुख: कुर्यात्। अन्यद्यज्ञोपवीती पूर्वाभिमुख:। कालशाकचरुसंबद्धं कर्म कृत्वोदकमुपस्पृशेत्। अपूपहोमस्थाने पितृभ्य: स्वाहेति शाकचरोरेकामाहुतिं जुहुयात्। प्रातरन्वष्टकाकर्म पूर्ववदिति॥ ३॥

( विश्व० )—'ऊर्ध्वं'''ष्टका:' भवन्तीतिशेष:। विद्यमानत्वेपि चतुर्ध्वास्त्रिषु कृष्णपक्षेषु क्रमेणानुष्ठीयमानत्वात्तिस्र इत्युक्तम्। यद्वा स्वतन्त्रेच्छस्य नियोगपर्यनुयोगानर्हत्वात्तिस्र इत्युक्ति:। अष्टकेति कर्मनामधेयं तच्च पञ्चमहायज्ञपक्षादिवदावृत्तिकर्म संस्कारकर्मत्वात्। नचाभ्यासाश्रवणान्न तथेति वाच्यं, शाङ्खायनसूत्रे नत्वेवेत्येवकारतुशब्दाभ्यामष्टकाप्रतियोगिकावृत्तेर्नियमितत्वात्। नच शाखान्तरीयत्वात्तदकिंचित्करमिति वाच्यम्। उपवीतपरिधानमन्त्रादेरपि शाखान्तरीयत्वादकिंचित्करतापत्तेरित्यलम्। अत्रापि मातृपूजाभ्युदयिके प्रथमप्रयोगे भवत:। केचिन्नेच्छन्ति। आरंभश्चोर्ध्वमाग्रहायण्या इति सूत्रणान्मार्गशिरकृष्णाष्टम्यामेव। तेन तत्र शरीरसमयाद्यशुद्धिप्रयुक्ताऽनारम्भेऽष्टकान्तरकाले तच्छुद्धावपि तदनारम्भ इत्यवसीयते। समयमुक्त्वा तासां द्रव्यदेवते आह 'ऐन्द्री'''संख्यं' पित्र्या चतुर्थी तां वक्ष्यति। अपूपो मण्डक:, माँसं मध्यमा गवेति वक्ष्यति, शाकं कालशाकम्। यथासंख्यं पित्र्यां विहाय यथाक्रमं द्रव्यदेवतासंबन्ध:। देवतानिरूपणं चतुर्थ्यां कृतम्। द्रव्यसमयौ वक्ष्येते। 'प्रथमा'''होति' आग्रहायण्यनन्तरमासदलपक्षस्याष्टम्यां प्रथमाष्टका भवतीत्यर्थ:। कथमत आह स्थालीपाकं श्रपयित्वाज्यभागाविष्ट्वाज्याहुतीर्जुहोति। तत्र विशेष:। पात्रासादने कर्परिका चरुस्थाली पिष्टं तण्डुला:, अपूपग्रहणे इन्द्रायजुष्टं [ पिष्टमयापूप:। ] चरु-

ग्रहणे पृथिव्यै अंतरिक्षायदिवेदिग्भ्यः प्रदिग्भ्यआदिग्भ्योऽहोरात्राभ्यामब्योमरीचिभ्योधात्रेसमुद्राय-ब्रह्मणेविश्वेभ्योदेवेभ्य - आदित्येभ्योवसुभ्योदेवेभ्योरुद्रेभ्योमरुद्भ्यः प्रजापतयेपरमेष्ठिनेऽष्टकायैजुष्टं गृह्णामि। प्रोक्षणे त्वाशब्दः। आज्याधिश्रयणानन्तरं कर्परिकामधिश्रित्य तत्रापूपं स्थाप्य चरुमधिश्रित्य पर्यग्निकरणादि। शेषं परिभाषावत्। तत आज्यभागानन्तरं दशाज्याहुतीर्वक्ष्यमाणैर्मन्त्रैर्जुहोतीत्यर्थः। तानाह। 'त्रिꣳश···मन्य स्वाहेति' त्यागास्तु। इदं त्रिꣳशत्स्वसृभ्यः १ इदं रात्र्यै २ त्रिषु इदमष्टकायै ३—५ पंचसु इदं रात्र्यै ६—१०। आद्याष्टकाया इन्द्रदेवताकत्वादिन्द्रायस्वाहेत्यपूपहोमः। इदमिन्द्राय। केचित्तु स्थालीपाकहोमानन्तरमपूपहोममाहुः। 'स्थाली···कायैस्वाहेति' शान्तापृथिवीत्यादिचतुर्भिर्मन्त्रैश्चतस्र आहुतीः स्थालीपाकस्य जुहोतीत्यर्थः। त्यागास्तु इदं पृथिव्यै अन्तरिक्षाय दिवे दिवेभ्यः प्रदिग्भ्य आदिग्भ्योऽहोरात्राभ्यां च ॥१॥ इदमब्योमरीचिभ्योधात्रेसमुद्रायब्रह्मणे च। इदंविश्वेभ्योदेवेभ्यआदित्येभ्योवसुभ्योदेवेभ्योरुद्रेभ्यो मरुद्भ्यः प्रजापतये (परमेष्ठिने) च। २ इदमष्टकायै। उभयोः स्विष्टकृत्। महाव्याहृत्यादिब्राह्मणभोजनान्तं ततो वैश्वदेवः। इच्छयाष्टकाश्राद्धं, केचिन्नेच्छन्ति (?) ॥ इति प्रथमाष्टका। क्रमेण मध्यमाकर्तव्यतामाह 'मध्यमा गवा' कर्तव्यतां वक्ष्यति पशुश्चेदाप्लाव्येत्यादिना। गोपशुश्च सुराग्रह इति गोपशोर्निषिद्धत्वात्कलौ छागः। तदभावे चरुः। 'तस्यै···तृभ्यइति' चतुर्थी षष्ठ्यर्थे तस्या इत्यर्थः। वपावदानात्प्रागुपरिष्टाच्च हिरण्यशकलोपस्ताराभ्यां पञ्चावत्तता संपाद्या। होमश्चाऽपसव्येन सव्यं जान्वाच्य पितृतीर्थेन वहवपामित्यस्य पैतृकत्वात्। पशोः कर्त्तव्यतां वदिष्यति। चरुपक्षे विश्वेभ्योदेवेभ्यः स्वाहेत्यपूपवच्चरुहोमः। इदं विश्वेभ्योदेवेभ्यः। तत द्वितीयस्थालीपाकहोमादि। अन्यत्सर्वं प्रथमाष्टकावत्। श्रप्यमाणस्य मण्डमुद्धृत्य स्रुवेणापसव्येन वपाहोमः। इदं पितृभ्यः। 'श्वोन्व···वत्' सर्वासामष्टकानां श्वः उत्तरेद्युः। तदर्थमाह अन्वष्टकासु अष्टकायाः पश्चात्क्रियमाणाः अन्वष्टकाः तासु। पार्श्वं च सक्थि च पार्श्वसक्थिनी ते च ते सव्ये च पार्श्वसक्थिसव्ये ताभ्यामन्वष्टकाख्या क्रिया कर्तव्येत्यर्थः। क्वेत्यत आह परिवृते आवसथ्यगृहे सर्वत आच्छादिते। कथं स्यादत आह पिण्डपितृयज्ञवत्। पदार्थक्रमश्चायम्। अपराह्णे परिवृतस्थस्याग्नेः वैश्वदेवानन्तरं परिस्तरणं ततोऽपसव्येन नीवीबन्धनम्। होमवर्जमपसव्येन दक्षिणाभिमुखेन। पात्रासादने स्रुग्वा ?। असिना पार्श्वसक्थ्नोः मांसानिच्छित्वा आसादयेत्। सुरादिपञ्चकम्। चरुपक्षे तण्डुलाः। चरुग्रहणवत् मांसग्रहणश्रपणादि। कण्डननिष्पवनादि न भवति। तेनोलूखलादेरासादनाभावो मांसपक्षे। अन्यत्सर्वं पिण्डपितृयज्ञवदित्यनेनादिष्टपिण्डपितृयज्ञवदतिदिष्टम्। विशेषमाह 'स्त्रीभ्यश्च' मातृपितामहीप्रपितामहीभ्यः पित्रादिभ्यः पिण्डदानानन्तरं पिण्डदानसमुच्चयार्थश्चकारः। 'उप···नच' न केवलं स्त्रीभ्यः पिण्डदानमपितु कर्षुषु सुरया तर्पणेन चोपसेचनम्। काण्डहरीतकीगुडरसेन च सुरा। तर्पणं सक्तुभिः। स्त्री पिण्डेभ्यः पश्चात्कर्षवः दैर्घ्ये प्रादेशमिताः चतुर्भिरङ्गुलैर्विस्तृताः। अङ्गुलखाताः। तेषु सुरायाः सक्तूनां चासेकः। प्राक्सूत्रसंप्रदानसमुच्चयार्थं आद्यश्चकारः। सुरासक्त्वोः समुच्चयार्थो द्वितीयश्चकारः। प्रयोगस्तु—गोत्रे मातः अमुकिदेवि सुरां पिबस्व। मातृद्वयं चेत् पिबेथां, बह्वयश्चेत्पिबध्वमिति दक्षिणसंस्थं प्रत्यवटप्रक्षेपे प्रयोगः। एवं तृप्यस्वतृप्येथांतृप्यध्वमिति प्रत्यवटं मातृपितामहीप्रपितामहीभ्यः सक्तून् क्षिपेत्। 'अञ्ज···जश्च' स्त्रीपिण्डेषु प्रतिपिण्डमञ्जनं सौवीराञ्जनमभावे लौकिकम्। अनुलेपनं चन्दनादि। स्रजः पितृप्रियपुष्पमालाः। चकारः दद्यादितिक्रियासमुच्चयार्थः। प्रयोगस्तु—गोत्रे मातः अमुकिदेविदे अङ्क्ष्व। अञ्जेथाम्। अङ्ग्ध्वं। एवं पितामहीप्रपितामहीभ्याम्। अनुलिम्पस्व। अनुलिम्पेथाम् अनुलिम्पध्वम्। स्रजोऽपिनह्यस्व। स्रजोपिनह्येथाम्। स्रजोपिनह्यध्वम्। अत्रपितरइत्यादि उल्मुकप्रक्षेपान्तं पिण्डपितृयज्ञवत। 'आचा···इच्छन्' पिण्डदानं

कुर्यादिति शेषः । आचार्यादिभ्यो मात्रादिभ्यः पिण्डदानानन्तरमवटखननात्प्राक्पिण्डदानं ध्येयम् । अनुकम्प्याऽनुक्तसमुच्चयार्थश्चकारः । तृतीया कालशाकेन । प्रजापतयेजुष्टं । प्रजापतयेस्वाहेति प्रधानहोमः । शेषं प्रथमाष्टकावत् । एवं मार्गशिरपौषमाघकृष्णाष्टमीषु क्रमेण तिस्रः अष्टका भवन्तीत्युक्तम् । यद्यपि चतुर्थ्या अपि देवता उक्ता तथापि मध्यमा गवेत्युक्तेर्द्वयोर्मध्यमत्वप्रसक्तिन्युदासाय चतुर्थी पृथक्सूत्रयति । 'मध्या'''ष्टका' वर्षे संवत्सरे चैत्रादिरूपे फाल्गुनान्ते । मध्यासंवत्सरमध्ये भाद्रपदापरपक्षेऽष्टम्यां तुरीया चतुर्थी कालशाकेनाष्टका शाकाष्टका कर्तव्येति शेषः । केचित्तु वर्षे वृष्टिकाले मध्या वृष्टिकालमध्यवर्तिनीत्याहुः । तन्मते व्याख्यानभेदेपि व्याख्येयाऽभेद इति द्रष्टव्यम् । तृतीयायाः शाकसाधनत्वदार्ढ्याय चतुर्थ्या शाकसाधनत्वोक्तिः स्वतन्त्रस्य नियोगपर्यनुयोगानर्हत्वादिति । अत्रापि कालशाकचरोरपसव्येन ग्रहणप्रोक्षणादि । पितृभ्यो जुष्टमिति । दशाज्याहुतिहोमानन्तरमपसव्येन पितृभ्यः स्वाहेति कालशाकचरुहोमः । इदं पितृभ्यः । अन्यत्सर्वं प्रथमाष्टकावत् । एवं चतस्र अष्टका अन्वष्टकाश्चोक्ताः । तासु द्रव्यदेवताव्यतिरिक्तविशेषाभावो मांसाभावे । अष्टकानन्तरमन्वष्टकाश्राद्धं सर्वत्र । तृतीयस्य तृतीया ॥ ३ ॥

अथातः शालाकर्म ॥ १ ॥ पुण्याहे शालां कारयेत् ॥ २ ॥ तस्या अवटमभिजुहोत्यच्युताय भौमाय स्वाहेति ॥ ३ ॥ स्तम्भमुच्छ्रयति इमामुच्छ्रयामि भुवनस्य नाभिं वसोर्धारां प्रतरणीं वसूनाम् । इहैव ध्रुवां निमिनोमि शालां क्षेमे तिष्ठतु घृतमुक्षमाणा । अश्वावती गोमती सूनृतावत्युच्छ्रयस्व महते सौभगाय । आत्वा शिशुराक्रन्दत्वा गावो धेनवो वाश्यमानाः । आत्वा कुमारस्तरुण आवत्सो जगदैः सह । आत्वा परिस्रुतः कुम्भ आदध्नः कलशैरुप । क्षेमस्य पत्नी बृहती सुवासा रयिं नो धेहि सुभगे सुवीर्यम् । अश्वावद्गोमदूर्जस्वत् पर्णं वनस्पतेरिव । अभिनः पूर्यताᳬं रयिरिदमनुश्रेयो वसान इति चतुरः प्रपद्यते ॥ ४ ॥ अभ्यन्तरतोऽग्निमुपसमाधाय दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रं प्रतिष्ठाप्य स्थालीपाकᳬं श्रपयित्वा निष्क्रम्य द्वारसमीपे स्थित्वा ब्रह्माणमामन्त्रयते ब्रह्मन् प्रविशामीति ॥ ५ ॥ ब्रह्मानुज्ञातः प्रविशत्यृतं प्रपद्ये शिवं प्रपद्य इति ॥ ६ ॥ आज्यᳬं संस्कृत्येहरतिरित्याज्याहुती हुत्वाऽपरा जुहोति । वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो अनमीवो भवानः । यत्त्वेमहे प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे स्वाहा ॥ वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो । अजरासस्ते सख्ये स्याम पितेव

१ ऋचमिति पाठः ।

पुत्रान्प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे स्वाहा । वास्तोष्पते शग्मया सर्ठ॑सदा ते सक्षीमहि रण्वया गातुमत्या । पाहि क्षेम उत योगे वरन्नो यूयम्पात स्वस्तिभिः सदा नः स्वाहा । अमीवहा वास्तोष्पते विश्वारूपाण्याविशन् । सखा सुशेव एधि नः स्वाहेति ॥ ७ ॥ स्थालीपाकस्य जुहोति । अग्निमिन्द्रं बृहस्पतिं विश्वान्देवानुपह्वये सरस्वतीं च वाजीं च वास्तु मे दत्त वाजिनः स्वाहा । सर्पदेवजनान्त्सर्वान् हिमवन्तर्ठ॑सुदर्शनम् । वसूंश्च रुद्रानादित्यानीशानं जगदैः सह । एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा । पूर्वाह्णमपराह्णं चोभौ मध्यंदिना सह । प्रदोषमर्द्धरात्रं च व्युष्टां देवीं महापथाम् । एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा ॥ कर्तारं च विकर्तारं विश्वकर्माणमोषधींश्च वनस्पतीन् । एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा । धातारं च विधातारं निधीनां च पतिर्ठ॑ सह । एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा । स्योनर्ठ॑ शिवमिदं वास्तु दत्तं ब्रह्मप्रजापती । सर्वाश्च देवताः स्वाहेति ॥ ८ ॥ प्राशनान्ते कार्ठ॑स्ये संभारानोप्यौदुम्बरपलाशानि ससुराणि शाड्वलं गोमयं दधि मधु घृतं कुशान्यवांश्चासनोपस्थानेषु प्रोक्षेत् ॥ ९ ॥ पूर्वे सन्धावभिमृशति । श्रीश्च त्वा यशश्च पूर्वे सन्धौ गोपायेतामिति ॥ १० ॥ दक्षिणे संधावभिमृशति । यज्ञश्च त्वा दक्षिणा च दक्षिणे सन्धौ गोपायेतामिति ॥ ११ ॥ पश्चिमे संधावभिमृशति । अन्न च त्वा ब्राह्मणाश्च पश्चिमे सन्धौ गोपायेतामिति ॥ १२ ॥ उत्तरे संधावभिमृशति । ऊर्क्च त्वा सूनृता चोत्तरे सन्धौ गोपायेतामिति ॥ १३ ॥ निष्क्रम्य दिश उपतिष्ठते । केता च मा सुकेता च पुरस्ताद्गोपायेतामित्यग्निर्वै केतादित्यः सुकेता तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मा पुरस्ताद्गोपायेतामिति ॥ १४ ॥ अथ दक्षिणतो गोपायमानं च मारक्षमाणा च दक्षिणतो गोपायेतामित्यहर्वै गोपायमानर्ठ॑ रात्री रक्षमाणा ते प्रपद्ये ताभ्यां नमोऽस्तु ते मा दक्षिणतो गोपायेतामिति ॥ १५ ॥

१ नगेश्वरमिति पाठः । २ ब्राह्मणश्चेति पाठः ।

अथ पश्चात् दीदिविश्च मा जागृविश्च पश्चाद्गोपायेतामित्यन्नं वै दीदिविः प्राणो जागृविस्तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मा पश्चाद्गोपायेतामिति॥१६॥ अथोत्तरतोऽस्वप्नश्च मानवद्राणश्चोत्तरतो गोपायेतामिति चन्द्रमा वा अस्वप्नो वायुरनवद्राणस्तौ प्रपद्ये ताभ्यां नमोस्तु तौ मोत्तरतो गोपायेतामिति ॥ १७ ॥ निष्ठितां प्रपद्यते धर्मस्थूणा राजꣳ श्रीस्तूपमहोरात्रे द्वारफलके । इन्द्रस्य गृहा वसुमन्तो वरूथिनस्तानहं प्रपद्ये सह प्रजया पशुभिः सह । यन्मे किंचिदस्त्युपहूतः सर्वंगणसखायसाधुसंवृतः । तां त्वा शालेऽरिष्टवीरा गृहान्नः सन्तु सर्वत इति ॥ १८ ॥ ततो ब्राह्मणभोजनम् ॥ १९ ॥ ४ ॥ ❀ ॥

( कर्कः )—' अथा…कर्म ' व्याख्यास्यते इति सूत्रशेषः। शालाशब्देन गृहमभिधीयते। ' पुण्या…येत् ' पुण्याहग्रहणमुदगयनापूर्यमाणपक्षयोरनादरार्थम्। ' तस्या…स्वाहेति ' तस्याः शालायाः यो योऽवटस्तं तमभिजुहोति। अवटसंस्कारत्वात्प्रत्यवटं होमः। चत्वारो ह्यवटा मूलस्तम्भानां प्रसिद्धा इति स्तम्भशालायाम्। धवलगृहे चतुर्षु कोणशिलास्थानेषु होमः स्तम्भस्थानीयत्वाच्छिलानाम्। 'स्तम्भ…मुच्छ्रयति' इमामुच्छ्रयामीत्येभिर्मन्त्रैः 'पूर्यताꣳरयिरिदमनुश्रेयो वसानः' इत्येवमन्तैः। 'इति चतुरः' एवं चतुरः स्तम्भानुच्छ्रयति। इतरगृहे तु शिलान्यास एतैर्मन्त्रैः। ' अभ्य…निष्क्रम्य ' बहिर्निष्क्रमणं तु प्रोक्षण्युत्पवनीयोपयमनकुशादानात्पूर्वं भवति। 'द्वार…शामीति' शालायामभ्यन्तरतोऽग्निमुपसमाधाय ब्रह्मोपवेशनं चोदपात्रावसरविधित्सया। प्रणीतानां ह्यधिकमेतत्। स्थालीपाकꣳश्रपयित्वा निष्क्रम्य द्वारसमीपे स्थित्वा ब्रह्मन्प्रविशामीति ब्रह्माणमामन्त्रयते। 'ब्रह्मानुज्ञातः प्रविशति ' ऋचं प्रपद्ये इत्यनेन मन्त्रेण। 'आज्यꣳ…होति' वास्तोष्पते प्रतिजानीहि० इत्येभिर्मन्त्रैः प्रतिमन्त्रम्। आज्यꣳ संस्कृत्येत्यवसरविधित्सया आज्याहुतीनामुच्यते। तत आघारादि। ' स्थालीपाकस्य जुहोति ' अग्निमिन्द्रमित्येवमादिभिर्मन्त्रैः प्रतिमन्त्रम्। ततः स्विष्टकृदादि। ' प्राश…क्षेत् ' प्राशनोत्तरकालं कांस्ये भाजने संभारानावपेत्। औदुम्बरपत्राणि ससुराणि सक्षीराणि। सह सुरयेत्यपरे। शाद्वलं दूर्वा गोमयं दधिमधुघृतं कुशान्यवांश्च तैरासनोपस्थानेषु प्रोक्षणं करोति। आसनानि जयन्तीनागदन्तकादिस्थानानि। उपस्थानानि देवतास्थानानि तानि च वास्तुशास्त्रे ज्ञेयानि। ' पूर्वे संधावभिमृशति ' श्रीश्च त्वा यशश्चेत्यनेन मन्त्रेण। संधिशब्देन कुड्योऽभिधीयते। ' दक्षिणे संधावभिमृशति' यज्ञश्च त्वा दक्षिणा चेत्यनेन मन्त्रेण। ' पश्चिमे संधावभिमृशति ' अन्नं च त्वा ब्राह्मणाश्चेत्यनेन मन्त्रेण। ' उत्तरे संधावभिमृशति ' ऊर्क्च त्वा सूनृताचेत्यनेन मन्त्रेण। ' निष्क्रम्य दिश उपतिष्ठते ' केता च मा सुकेता च० इत्येभिर्मंत्रैः निगदव्याख्यातमेतत्। ' निष्ठिता प्रपद्यते ' धर्मस्थूणाराजमित्यनेन मन्त्रेण। निष्ठितां परिसमाप्तां शालां प्रविशति। ' ततो ब्राह्मणभोजनम् ' ॥ ४ ॥

( जयरामः )—'अथातः शालाकर्म' वक्ष्यत इति सूत्रशेषः। शाला गृहमित्यनर्थान्तरम्। सा च पुण्याहे कार्या। पुण्याहग्रहणं चोदगयनापूर्यमाणपक्षयोरनादरार्थम्। तस्याः शालायाः यो योऽवटस्तंतमभिजुहोति। अवटसंस्कारत्वात्प्रत्यवटं होमः। स्तम्भशालायां चत्वारोऽवटा मूलस्तम्भानाम्।

धवलगृहे तु चतुर्पु कोणशिलास्थानेषु होमः। स्तम्भस्थानीयत्वाच्छिलानाम्। तत्र होममन्त्रः अच्युतायेति। अस्यार्थः। तत्र प्रजापतिरनुष्टुप् इन्द्रोऽष्टहोमे०। अच्युताय अप्रच्युतस्वरूपाय। भौमाय भूनागायेति। इमामुच्छ्रयामीत्येवमादिमन्त्राणां विश्वामित्रः क्रमेण त्रिष्टुप्पङ्क्तिजगत्यनुष्टुभः स्तम्भोच्छ्रयणे०। इमां स्थूणां शालाधाररूपामुच्छ्रयामि उत्थापयामि। किंभूताम्। भुवनस्य भूर्लोकस्य भुवनैकदेशवर्तिनो गृहस्य वा नाभिमाधारं वसोर्द्धारां वसुनो धनस्य धारां स्रुतिं धरित्रीं वा। वसूनां गोमहिष्यश्वस्वर्णरत्नादिविविधधनानां प्रतरणीं प्लावनीं प्रसारिणीमिति यावत्। इहैव अत्रैव स्थूणायां शालां गृहं निमिनोमि स्थापयामि। कीदृशीं शालां ध्रुवां स्थिराम्। इयं च शाला क्षेमे निरुपद्रवे प्रदेशे घृतं सुखमुक्षमाणा सिञ्चन्ती अस्मान्प्रापयन्ती तिष्ठतु स्थिता भवतु। हे शाले त्वमश्वावती अश्वयुक्ता गोमती गोयुक्ता सूनृतावती प्रियसत्यवाक्यवती उच्छ्रयस्व उत्थिता भव। किमर्थं ? महते सौभगाय भाग्योदयाय। हे शाले त्वा त्वामधिष्ठाय शिशुराक्रन्दतु बालकः क्रीडोत्थहासशब्दं करोतु। जातावेकवचनम्। अथवा बालाः क्रीडार्थम्परस्परमाह्वयन्तु। तथा धेनवः प्रसूताः गावोऽप्रसूताश्च बाध्यमानाः आक्रन्दन्तु इति क्रियां विपरिणमय्य संबन्धः। आ त्वा त्वामाश्रित्य तरुणः समर्थः कुमारो बटुः आक्रन्दतु वेदघोषं करोतु। एवं वत्सः स्तनन्धयः स्तनपानार्थमाक्रन्दतु मातरमाह्वयतु जगदैरतुरैः रक्षकैः सह। तथा परिस्रुतः उदिस्यन्दन् कुम्भो दध्नः कलशोऽन्यैर्नैर्व्यादिकलशैः सह उप मत्समीपे पूर्णशब्दं करोतु। एतैर्युक्ता भवेत्यर्थः। पुनरपि तां स्तुत्वा प्रार्थयते क्षेमस्येति। हे शाले सुभगे सुन्दरि सुसमृद्धे वा त्वं नोऽस्मभ्यं रयिं धनं देहि। अस्मासु धारयेति वा। किंविशिष्टा त्वं ? क्षेमस्य रक्षणस्य पत्नी स्वामिनी। बृहती स्वरूपेण गुणैश्च महती। सुवासाः शोभनवस्त्रादिसमृद्धा शोभनवसतिर्वा। किंच नोऽस्मभ्यं सुवीर्यं शोभनां शक्तिं पुष्कलप्रजाहेतुं वा धेहि। रयिविशेषणं वा। दानादिसुशक्तियुक्तं धनं देहीत्यर्थः। किंच भो शाले नोऽस्मान् अभि अभितः अस्मासु सर्वभावेन रयि धनं पूर्यताम् पूर्णं क्रियताम् धनेनास्मान्पूरयेत्यर्थः। किंविशिष्टा रयिः। अश्वावत् अश्ववती। गोमत् गोमती। ऊर्जस्वत् रसवती विस्तृता वा। वनस्पतेः पर्णमिव। यथा वनस्पतेः पर्णानि वसन्तादौ पूर्यते तथा। एकत्वमत्र जात्या। यद्वा अश्वावदित्यादीनि पर्णविशेषणानि। अश्वावत् अश्वव्यवहारयोग्यमित्यादि। इदं स्थानं वसानः अधिवसन् अहं पूर्यताम् पूर्यै पूर्णो भवानीत्यर्थः। अधिवसाने मयि रयि पूर्यतामिति वा ॥ १ ॥ इति शब्द उभयत्र संबध्यते तन्त्रत्वात्। इति चतुरः एवं चतुरः स्तम्भानुच्छ्रयति। इतरगृहे तु शिलान्यास एवैतेन मन्त्रेण। ब्रह्मोपवेशनग्रहणं तदपात्रावसरज्ञापनार्थम्। प्रणीताभ्योऽधिकमेतत्। प्रविशेति ब्रह्मानुज्ञातः प्रविशति ऋतमितिमन्त्रेण। तदर्थः सुगमः। तत्र परमेष्ठी यजुः शाला तत्प्रवेशे०। ऋतं सत्यभूतं त्वां प्रपद्ये प्राप्नोमि। एवं शिवं कल्याणरूपं त्वां प्रपद्ये। आज्यक्षं संस्कृत्येत्यवसरविधानार्थमाज्याहुतीनाम्। तत आधारादि। अपराश्चतस्रो वास्तोष्पते इत्यादिचतुर्भिर्मन्त्रैः। तदर्थः। तत्र वास्तोष्पते इत्यादिचतसृणां वसिष्ठस्त्रिष्टुप् इन्द्रो नवशालायामाज्यहोमे०। वसतेर्निवासकर्म इतिनिरुक्ताद्वास्तुगृहम्। तस्य वास्तोः पते स्वामिन् इन्द्र। वास्तोष्पतिर्गोष्पतिरितीन्द्रपर्यायः। अस्मान् रक्षितुं प्रतिजानीहि प्रतिज्ञां कुरु। ऊरीकुर्वित्यर्थ.। कथं स्वावेशः सुष्ठुप्रवेशो नोऽस्माकं भवा भव। दीर्घश्छान्दसः। अस्मानुत्तमान्विधाय प्रवेशयेत्यर्थः। किंच अनमीवः अमीवं पापं रोगो वा तद्विरोधी। किंच। यत्किंचिद्द्रव्यं त्वा त्वाम् ईमहे प्रार्थयामहे। तद्वस्तुजातं प्रापय्य नोऽस्मान् जुषस्व प्रीणयस्व प्रीयस्वेति वा। प्रार्थयानानस्मान्प्रीणयित्वा त्वमपि प्रीतो भवेत्यर्थः। किंच। नोऽस्माकं द्विपदे मनुष्यवर्गाय शं सुमङ्गलस्वरूपो भव। चतुष्पदे पशुवर्गाय शं सुखस्वरूपो भव। स्वाहाकारो मन्त्रावसानज्ञापनार्थः प्रदर्शितः सर्वत्र। हे वास्तोष्पते त्वं नोऽस्माकं प्रतरणः आपन्निस्तारकः एधि भव। किंभूतानाम्। गोभिर्गवादिभिर्द्विशफैः

अश्वेभिरश्वादिभिरेकशफैर्युक्तानाम् । किंच हे इन्द्र परमेश्वर गयस्फानः प्राणवर्द्धकश्चैधि। प्राणा वै गया इति श्रुतेः । किंच ते तव सख्ये मैत्र्यां सति वयमजरासः अक्षीणसंपदः स्याम भूयास्म । पुत्रान्प्रति पितेव वर्तमानस्त्वं नोऽस्मान्प्रति जुषस्व प्रीतोभव । हे वास्तोष्पते तव शग्मया सुखरूपया । शिवं शग्ममिति सुखनामनी । संसदा सभया सक्षीमहि संवध्येमहि वयम् । षच समवाये । किंभूतया रण्वया शास्त्रीयं रणनमुपन्यासं कुर्वाणा रण्वा तया । गातुमत्या यज्ञवत्या त्रयीप्रधानया वा । त्वं च नोऽस्मान् योगे अलब्धलाभे उत अपि क्षेमे लब्धरक्षणे निमित्ते वरं यथा स्यात्तथा पाहि रक्ष । हे इन्द्रानुचराः यूयं नोऽस्मान्स्वस्तिभिः अभीष्टफलैः सदा पात आप्याय्य रक्षत ॥ ३ ॥ हे वास्तोष्पते इन्द्र त्वम् अमीवहा पापरोगपीडादिनाशको यतः अतो नो ऽस्माकं सखा इहामुत्र बन्धुरेधि भव । किं कुर्वन् । विश्वा विश्वानि ब्रह्मादिस्तम्बपर्यन्तानि रूपाणि शरीराण्याविशन् प्रविशन् सर्वशरीरिरूपेणास्मासु अनुकूलो भवेत्यर्थः । किंभूतः सुशेवः शोभनसुखहेतुः । अग्निमिन्द्रमित्यादिषण्णां विश्वामित्रोऽनुष्टुप् लिङ्गोक्ता होमे० अहमग्न्यादीन्देवान् हविर्ग्रहणाय उपह्वये मत्समीपमाह्वयामि । न केवलमेतान्। सरस्वतीं वाचं वाजीमन्नमयी सीता च । हे अग्न्यादयो देवा यूयमागत्य मे मह्यं वास्तु गृहं दत्त वर्द्धं मदायत्तं कुरुतेत्यर्थः । किंभूताः वाजिनः अन्नवन्तः वेगवन्तो वा । अनेनोत्तरमन्त्रा अपि व्याकृताः । विशेषास्तूच्यन्ते । एतान्सर्पादीनुपह्वये इत्यनुषङ्गः । उपहूय च तान्प्रपद्ये शरणं व्रजेऽहम् । जगदैरनुचरैः सह वर्त्तमानान् । तत्र व्युष्टासुपसं देवीं द्योतनात्मिकां महापथामनेकमार्गां बहुसुखामित्यर्थः । इदं वास्तु स्योनं सुखसेव्यं सुखरूपत्वात् शिवं कल्याणरूपं शान्तं वा वास्तु गृहं मह्यं हे ब्रह्मप्रजापती वेदब्रह्माणौ युवां दत्तं प्रयच्छतम् । हे सर्वा देवताः यूयमपि चकाराद्दत्तेति क्रियाविपरिणामः । स्वाहेति प्रागुक्तम् । कांस्ये कांस्यपात्रे संभारान् उदुम्बरस्येत्यौदुम्बरपलाशादीन् ओप्य संस्थाप्य । तत्रौदुम्बरपत्राणि ससुराणि क्षीरेण सुरया वा पृक्तानि । तैरुपहारैश्चासनानि गजदन्तादिनिर्मितानि उपस्थानानि देवतायतनादीनि च प्रोक्षेत् । आसनान्युपस्थानानि च वास्तुशास्त्रप्रसिद्धानि शालाभवान्येव । पूर्वसंधौ कुड्यादौ अभिमृशति स्पृशति श्रीश्चत्वेति मन्त्रेण । तस्यार्थः । तदादिचतुर्णां प्रजापतिर्यजुर्लिङ्गोक्ताः स्पर्शने० । हे शाले त्वा त्वां पूर्वे संधौ श्रीर्लक्ष्मीः यशः कीर्त्तिश्च गोपायेतां रक्षेताम् । एवमुत्तरत्रापि व्याख्येयम् । ऊर्क् तेजः प्राणनम् । सूनृता शोभनवाक् । निष्क्रम्य गृहाद्बहिर्निर्गत्य दिश उपतिष्ठते स्तौति केताचमेत्यादिभिर्मन्त्रैः प्रतिमन्त्रम् । तदर्थः सुगमः । तत्र चतुर्णां प्रजापतिस्त्रिष्टुप् लिङ्गोक्ता उपस्थाने० । गोपायेतामित्येतत्पदावृत्तिर्गोपनस्याभीष्टत्वेनात्यादरसूचनार्था । निष्ठिता निष्पन्नां प्रपद्यते प्रविशति धर्मस्थूणाराजमितिमन्त्राभ्याम् । तदर्थः । तत्र द्वयोर्ब्रह्मा जगतीबृहत्यौ लिङ्गोक्ता प्रवेशने० । धर्मस्थूणाराजं धर्मयुक्तं स्थूणाराजं महती स्थूणां श्रीस्तूपं लक्ष्मीस्वरूपम् । चलदण्डिकारूपस्त्रीयुक्तम् । अगारे हि स्तूपो वध्यते । स्तूप इत्युरुषाभिधानम् । अहोरात्रे तद्देवते द्वारफलके द्वारकपाटे लोकालोकरूपत्वात् इन्द्रस्य इमे गृहाः इन्द्रदेवतात्वात् वसुमन्तः धनिनः वरूथिनः रक्षकाः बहुप्रजासो वा तानेतानहं प्रपद्ये अधिवसामि । प्रजया पुत्रादिरूपया सह पशुभिर्गोमहिष्यादिभिश्च सह । यत्किंचिन्मे मम वस्त्वस्ति तेन सह वास्तोष्पतिनोपहूतः सन् हे शाले त्वा त्वां याचे । किम् । नोऽस्मान् गृहान् गृहस्थान्प्राप्य सर्वे देवा इमे गृहा वा अरिष्टवीराः अरिष्टा निराधिव्याधयो वीराः पुत्रादयो येभ्यस्तथा सन्तु सर्वतः सर्वभावेन । किंभूतोऽहम् । सर्वगणसखायसाधुसंवृतः सर्वैर्गणैः परिवारैः सखायैर्मित्रसमूहैः साधुतया अन्यैः साधुभिर्वा संवृत आश्रितः । तत इत्युक्तार्थम् ॥ ४ ॥

( हरिहरः )—' अथा···कर्म ' अथान्वष्टकाकर्मानन्तरं यत आवसथ्याधानादीनि कर्माणि

शालाग्निसाध्यान्यनुविहितानि शालाकरणं च नोक्तम् अतो हेतोः शालाकर्म शालाया गृहस्य क्रिया व्याख्यास्यत इति सूत्रशेषः । तद्यथा । 'पुण्या···येत्' पुण्यं शुभं मलमासबालवृद्धास्तमितगुरुशुक्रगुर्वादित्यसिंहस्थगुरुक्षयमासदिनत्र्यहक्रूरग्रहाक्रान्तभुक्तभोग्यनक्षत्रादिदोषरहितं ज्योतिःशास्त्रादिनोक्तगृहारम्भविहितमासपक्षतिथिवारनक्षत्रयोगकरणमुहूर्तचन्द्रतारावललग्नादिगुणान्वितमहः पुण्याहं तस्मिन्पुण्याहे शालां गृहं कारयेत् निर्मापयेत्। पुनः पुण्याहग्रहणं तूदगयनशुक्लपक्षयोरनियमार्थम्। शालां कारयेदित्युक्तम् । तच्च शालाकरणं देशमन्तरेण न संभवति इति सामान्यतो देशे प्राप्ते— यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् । इतिवचनात् पारस्कराचार्येणानुक्तमपि गोभिलगृह्यसूत्रोक्तदेशविशेषमविरोधादपेक्षितत्वाच्चात्र लिखामः । तद्यथा । कीदृशे देशे शालां कारयेत् । समे लोमशे अविभ्रंशिनि प्राचीनप्रवणे उदक्प्रवणे वा अक्षीराकण्टकाकटुकौषधिविततेे विप्रस्य गौरपांसौ क्षत्रियस्य लोहितपांसौ वैश्यस्य कृष्णपांसौ, वास्तुशास्त्रमते वैश्यस्य पीतपांसौ शूद्रस्य कृष्णपांसौ, स्थिराघाते एकवर्णे अशुष्के अनूपरेऽमरौ मेरुर्निर्जलो देशः । अकिलिने ब्रह्मवर्चसकामस्य दर्भयुक्ते बलकामस्य बृहत्तृणयुते पशुकामस्य मृदुतृणयुते शादासम्मिते मण्डलद्वीपसंमिते वा । स्वयंखातश्च भवति वा । यशस्कामस्य बलकामस्य च प्राग्द्वारां पुत्रपशुकामस्योदग्द्वारां सर्वकामस्य दक्षिणद्वारां न प्रत्यग्द्वारां मुख्याद्वारसंमुखान् द्वाररहितां पूर्वादितः प्रदक्षिणक्रमेणाश्वत्थप्लक्षवटौदुम्बरवृक्षवर्जितां कारयेत् ॥ भवनस्य पूर्वादौ वटौदुम्बराश्वत्थप्लक्षाः सार्वकामिकाः । विपरीतास्त्वसिद्धिदा इति मत्स्यपुराणे । तथा कण्टकी क्षीरवृक्षश्च आसन्नः सफलो द्रुमः । भार्याहानिं प्रजाहानिं कुर्वन्ति क्रमशस्तथा । नछिन्द्याद्यदि तानन्यानन्तरे स्थापयेच्छुभान् । पुन्नागाशोकबकुलशमीतिलकचम्पकान् । दाडिमी पिप्पली द्राक्षा तथा कुसुममण्डपम् । जम्बीरपूगपनसद्रुममञ्जरीभिर्जातीसरोजशतपत्रिकमल्लिकाभिः । पुन्नारिकेलकदलीदलपाटलाभिर्युक्तं तदत्र भवनं श्रियमातनोति । 'तस्या···स्वाहेति' तस्याः शालाया अवटं स्तम्भारोपणार्थं खातमभिमुखेन जुहोति, अच्युताय भौमाय स्वाहेति मन्त्रेण । अत्रावटमित्येकवचनमन्येषां त्रयाणामुपलक्षणार्थं संस्कार्यत्वाविशेषात् ग्रहं संमार्ष्टीतिवदेकवचनम् । अवटाश्चत्वारः कुत इति चेत् धवलगृहस्य स्तम्भशालारूपस्य च चतुर्षु कोणेषु चत्वारो मूलस्तम्भा भवन्ति, ते च शिलासुच्छ्रीयन्ते शिलाश्चावटेष्विति चत्वारः । अतश्चतुर्षु कोणेषु आग्नेयादिषु चत्वारोऽवटा भवन्ति तेष्वेवाज्येन होमः । 'स्तम्भ···मीति' स्तम्भमुच्छ्रयति उत्थापयति अवटे मिनोतीत्यर्थः । केन मन्त्रेण । इमामुच्छ्रयामीत्यादिश्रेयोवसान इत्यन्तेन मन्त्रेण चतुरः । ततोऽनेनैव मन्त्रेण नैर्ऋत्याद्यवटेषु चतुरः स्तम्भानुच्छ्रयति । इतरगृहे तु चतुर्षु कोणेषु शिलान्यास एव भवति अनेनैव मन्त्रेण । 'प्रपद्यते' ततः शालां प्रपद्यते प्रविशति । 'अभ्यन्त···शामीति' । अभ्यन्तरतः अर्द्धनिष्पन्नायाः शालाया मध्ये अग्निमावसथ्यमुपसमाधाय पञ्चभूसंस्कारपूर्वकं स्थापयित्वा दक्षिणतः अग्नेर्दक्षिणपार्श्वे ब्रह्माणमुपवेश्य उत्तरतः अग्नेरुत्तरप्रदेशे उदपात्रं जलपूर्णं ताम्रादिभाजनं प्रतिष्ठाप्य निधाय । अत्र पुनर्ब्रह्मोपवेशनमुदपात्रप्रतिष्ठापनावसरविज्ञापनार्थम् । स्थालीपाकं चरुं श्रपयित्वा यथाविधि पक्त्वा ब्रह्माणं प्रथममृत्विजमामन्त्रयते संबोधयति । कथं, ब्रह्मन्प्रविशामीति । 'ब्रह्मा···पद्य इति' तत आमन्त्रितेन ब्रह्मणा प्रविशस्वेत्यनुज्ञातः प्रसूतः प्रविशति, ऋचं प्रपद्ये शिवं प्रपद्य इति मन्त्रेण शालां प्रपद्यते । 'आज्यर्ठः···होति' वास्तोष्पत इत्यादि । अत्र प्राप्तमप्याज्यसंस्कारविधानमाघारादर्वाक् इहरतिरिति आज्यस्य होमप्राप्त्यर्थम् । आज्यसंस्कारानन्तरं पर्युक्षणान्ते इहरतिरित्यादि इह स्वधृतिः स्वाहेत्यन्तेन मन्त्रेणैकाम् । उपसृजमित्या-

१ सतृणे इत्यर्थः । २ द्वीपमुन्नतमाख्यातं शादा चैवेष्टकाः स्मृताः । किलिन सज्जलं प्रोक्तं दूरखातोदको मरुः ।

दिसुदीधरत्स्वाहेत्यन्तेन मन्त्रेण द्वितीयामाहुतिं हुत्वा वास्तोष्पत इति चतसृभिर्ऋग्भिरपराश्चतस्र आज्याहुतीर्जुहोति। तत आघारावाज्यभागौ हुत्वा। 'स्थाली···त्यादि' ततः स्थालीपाकस्य चरोरग्नि-मिन्द्रमित्यादिभिः षड्भिर्मन्त्रैः षडाहुतीः प्रतिमन्त्रमेकैकां जुहोति। 'प्राश···प्रोक्षेत्' ततःस्विष्टकृदा-दिसंस्रवप्राशनान्ते कांस्ये कांस्यमये पात्रे संभारान् वक्ष्यमाणानोप्य कृत्वा औदुम्बरपत्राणि ससुराणि सक्षीराणि शाड्वलं दुर्वागोमयमरोगिण्यादिगोः शकृत् दधि मधु घृतं यवान् निगदव्याख्यातान् आस-नानिच उपस्थानानि च आसनोपस्थानानि वास्तुशास्त्रोपदिष्टानि तेषु प्रोक्षेत् उदुम्बरपलाशादिसं-भारैस्तान्यभिषिञ्चेदित्यर्थः। तत्रासनानि नागदन्तादिमयस्थानानि उपस्थानानि देवतास्थानानि। 'पूर्वे संधावभिमृशति' श्रीश्च त्वेति। ततः शालायाः पूर्वे संधौ अभिमृशति पुर्वसंधिप्रदेशमालभते श्रीश्च त्वेति मन्त्रेण। एवं दक्षिणे सन्धौ यज्ञस्य त्वेति मन्त्रेण। तथैव पश्चिमे संन्धौ अन्नं च त्वेति। तद्वदुत्तरे सन्धौ ऊर्क्चत्वेति। 'निष्क···ष्ठते' एवं शालायाः पूर्वादिसंधीनभिमृश्य वहिर्निष्क्रम्य दिशः प्राचीप्रमुखाश्चतस्रः केता च मा सुकेता चेत्यादिभिश्चतुर्भिर्मन्त्रैः प्रदक्षिणक्रमेण प्रतिमन्त्रमुपतिष्ठते स्तौति। 'निष्ठितां प्रपद्यते धर्मस्थूणेति' निष्ठितां निर्मितां संपूर्णामिति यावत्। प्रपद्यते प्रविशति धर्म-स्थूणेत्यादिसन्तुसर्वतइत्यन्तेन मन्त्रेण। 'ततो ब्राह्मणभोजनम्' इति सूत्रार्थः॥ ॥ अथ प्रयोगः। अथ शालाकर्मोच्यते। तत्र पुण्याहे मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा पूर्णाहुतिवदाज्यं संस्कृत्य स्तम्भस्थानावटेषु चतुर्षु प्रत्यवटमाग्नेयकोणादारभ्य अच्युताय भौमाय स्वाहेत्यनेन मन्त्रेणैकैकामाज्या-हुतिं जुहुयात्। इदमच्युताय भौमायेति प्रत्याहुति त्यागः। अथ होमक्रमेणावटेषु तूष्णीं शिलाः स्थापयित्वा तदुपरि 'इमामुच्छ्रयामि भुवनस्य नाभिं वसोर्द्धारां प्रतरणीं वसूनाम्। इहैव ध्रुवां निमिनोमि शालां क्षेमे तिष्ठतु घृतमुक्षमाणा। अश्वावती गोमती सूनृतावत्युच्छ्रयस्व महते सौभगाय। आत्वा शिशुराक्रन्दत्वा गावो धेनवो वाश्यमानाः। आत्वा कुमारतस्तरुण आवत्सो जगदैः सह। आत्वा परिस्रुतः कुम्भ आदध्नः कलशैरुप। क्षेमस्य पत्नी बृहती सुवासा रयिं नो धेहि सुभगे सुवी-र्यम्। अश्वावद्गोमदूर्जस्वत्पर्णं वनस्पतेरिव। अभिनः पूर्यताꣳरयिरिदमनुश्रेयो वसान'। इत्यनेन मन्त्रेण होमक्रमेणैव चतुर्षु अवटेषु चतुरः स्तम्भानुच्छ्रयति मिनोति। स्तम्भाभावेऽनेनैव मन्त्रेण प्रत्यवटं शिलां स्थापयेत्। अर्द्धनिष्पन्नायां शालायां तन्मध्यप्रदेशे पञ्चभूसंस्कारपूर्वकमावसथ्याग्निं स्थापयित्वा ब्रह्माणमुपवेश्याग्नेरुत्तरत्त उदपात्रं प्रतिष्ठाप्य प्रणीताप्रणयनं विधाय कुशकण्डिकापूर्वकं चरुं श्रपयित्वा प्रोक्षण्युत्पवनान्ते वहिर्निष्क्रम्य द्वारसमीपे गृहाभिमुखं स्थित्वा ब्रह्मन्प्रविशामीति ब्रह्माणमामन्त्र्य प्रविशस्वेति ब्रह्मणानुज्ञात ऋतं प्रपद्ये शिवं प्रपद्य इति मन्त्रेण शालां प्रविशेत्। अथ स्वासने उपविश्य उपयमनकुशादानसमिदाधानपर्युक्षणानि कृत्वा इह रतिरिह रमध्वमिह धृतिरिह स्वधृतिः स्वाहेत्येकामाज्याहुतिं जुहुयात्, इदमग्नय इति त्यागं विधाय, उपसृजं धरुणं मात्रे धरुणो मातरं धयन्। रायस्पोषमस्मासु दीधरत्स्वाहेति मन्त्रेण द्वितीयामाज्याहुतिं जुहोति। इदमग्नय इति त्यक्त्वा अपराश्चतस्र आज्याहुतीर्जुहोति। वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो अनमीवो भवानः यत्त्वेमहे प्रतितन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे स्वाहेत्येकाम् इदं वास्तोष्पतये०। वास्तो-ष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो। अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति तन्नो जुषस्व स्वाहेति द्वितीयाम् इदं वास्तोष्पतये०। वास्तोष्पते शग्मया सꣳसदा ते सक्षीमहि रण्वया गातुमत्या। पाहि क्षेम उत योगे वरन्नो यूयं पात स्वस्तिभिः सदा नः स्वाहेति तृतीयाम् इदं वास्तोष्पतये० अमीवहा वास्तोष्पते विश्वारूपाण्याविशन्। सखा सुशेव एधि नः स्वाहेत्यनेन चतुर्थीं जुहुयात् इदं वास्तोष्पतय इति चतसृषु त्यागः। तत आघारावाज्यभागौ हुत्वा चरुणा अग्निमिन्द्रमित्यादिभिः षड्भिर्मन्त्रैः षडाहुतीर्जुहुयात्। तद्यथा। अग्निमिन्द्रं बृहस्पतिं विश्वान्देवानुपह्वये। सरस्वतीं च वार्जी

च वास्तु मे दत्त वाजिनः स्वाहेति प्रथमा । इदमग्नये इन्द्राय बृहस्पतये विश्वेभ्यो देवेभ्यः सरस्वत्यै वाज्यै च० । सर्पदेवजनान् सर्वान् हिमवन्तꣳ सुदर्शनम् । वसूंश्च रुद्रानादित्यानीशानं जगदैः सह । एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहेति द्वितीयाम् । इदं सर्पदेवजनेभ्यो हिमवते सुदर्शनाय वसुभ्यो रुद्रेभ्य आदित्येभ्य ईशानाय जगदेभ्यश्च० । पूर्वाह्णमपराह्णं चोभौ मध्यंदिना सह । प्रदोषमर्द्धरात्रं च व्युष्टां देवीं महापथाम् । एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहेति तृतीयाम् । इदं पूर्वाह्णायापराह्णाय मध्यन्दिनाय प्रदोषायार्द्धरात्राय व्युष्टायै देव्यै महापथायै च० । कर्तारं च विकर्तारं विश्वकर्माणमोषधीश्च वनस्पतीन् । एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहेति चतुर्थीम् । इदं कर्त्रे विकर्त्रे विश्वकर्मणे ओषधिभ्यो वनस्पतिभ्यश्च० । धातारं च विधातारं निधीनां च पतिꣳ सह । एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहेति पञ्चमीम् । इदं धात्रे विधात्रे निधीनां पतये च० । स्योनꣳ शिवमिदं वास्तु मे दत्तं ब्रह्मप्रजापती । सर्वाश्चदेवताः स्वाहेति षष्ठीम् । इदं ब्रह्मणे प्रजापतये सर्वाभ्यो देवताभ्यश्च० । ततः स्थालीपाकेन स्विष्टकृतं हुत्वा महाव्याहृत्यादिप्राजापत्यान्ता नवाहुतीर्हुत्वा संस्रवान् प्राश्य ब्रह्मणे दक्षिणां दत्वा कांस्यपात्रेऽनुपहते सक्षीराण्यौदुम्बरपर्णानि दूर्वागोमयदधिमधुघृतकुशयवांश्च संभारान्कृत्वा आसनानि नागदन्तस्थानानि उपस्थानानि च देवतास्थानानि प्रोक्षेत् तैः पत्रादिसम्भारैः । अथ पूर्वे संधौ, श्रीश्च त्वा यशश्च पूर्वे संधौ गोपायेतामिति मन्त्रेणाभिमर्शनं करोति । ततो दक्षिणे संधौ, यज्ञस्य त्वा दक्षिणा च दक्षिणे सन्धौ गोपायेतामिति । अथानन्तरं पश्चिमे सन्धौ, अन्नं च त्वा ब्राह्मणश्च पश्चिमे संधौ गोपायेतामिति । अथोत्तरे संधौ, ऊर्क्च त्वा सूनृता चोत्तरे संधौ गोपायेतामिति । अथ गृहान्निष्क्रम्य वक्ष्यमाणमन्त्रैर्यथालिङ्गं दिश उपतिष्ठते । केता च मा सुकेता च पुरस्ताद्गोपायेतामित्यग्निर्वै केतादित्यः सुकेता तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मा पुरस्ताद्गोपायेतामिति मन्त्रेण प्राचीं दिशमुपस्थाय, अथ दक्षिणतः, गोपायमानं च मा रक्षमाणा च दक्षिणतोगोपायेतामित्यहर्वै गोपायमानꣳ रात्री रक्षमाणा ते प्रपद्ये ताभ्यां नमोऽस्तु ते मा दक्षिणतो गोपायेतामिति दक्षिणां दिशमुपस्थाय, अथ पश्चाद्दीदिविश्च मा जागृविश्च पश्चाद्गोपायेतामित्यन्नं वै दीदिविः प्राणो जागृविस्तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मा पश्चाद्गोपायेतामिति मन्त्रेण पश्चिमामुपस्थाय, अथोत्तरतः, अस्वप्नश्च मानवद्राणश्चोत्तरतो गोपायेतामिति चन्द्रमा वा अस्वप्नो वायुरनवद्राणस्तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मोत्तरतो गोपायेतामिति मन्त्रेणोत्तरामुपतिष्ठते । ततः समाप्तायां शालायां ज्योतिर्विदुपदिष्टे पुण्येऽहनि 'प्रवेशे नववेश्मन' इतिवचनान्मातृपूजाभ्युदयिकश्राद्धे विधाय ब्राह्मणैः कृतस्वस्त्ययनो मङ्गलतूर्यगीतशान्तिपाठेन सजलकलशब्राह्मणपुरःसरः शुक्लमाल्यानुलेपनस्ताद्दशसकलपुत्रपौत्रकलत्रादिसमेतः सुशकुनसूचिताभ्युदयस्तोरणाढ्यां शालां द्वारेण प्रविशति । धर्मस्थूणाराजꣳ श्रीस्तूपमहोरात्रे द्वारफलके इन्द्रस्य गृहावसुमन्तो वरूथिनस्तानहं प्रपद्ये सह प्रजया पशुभिः सह । यन्मेकिंचिदस्त्युपहूतः सर्वगणसखायसाधुसंवृतः तां त्वा शालेऽरिष्टवीरा गृहान्नः सन्तु सर्वत इत्यनेन प्रविशेत् । ततो ब्राह्मणभोजनम् ॥ इति शालाकर्म ॥ ४ ॥ ॥ * ॥

( विश्व० )—'अथातः शालाकर्म' वक्ष्यतइति सूत्रशेषः 'पुण्या···येत्' शिल्पिभिरिति शेषः । अत्रापि मातृपूजाभ्युदयिके । 'तस्या···हेति' पूर्णाहुतिवदाज्यं संस्कृत्य देवस्त्वेत्यभ्रिमादाय शालाया आग्नेयनैर्ऋत्यवायव्यैशानेषु क्रमेणेदमहꣳ रक्षसामित्यवटान्खात्वा प्राचः पांशून्प्रक्षिप्य परिस्तरणपूर्वकं प्रत्यवटं स्रुवेणाभिजुहोति । मन्त्रमाह—अच्युतायभौमायस्वाहेति । इदमच्युतायभौमायेति त्यागः । 'स्तंभ···सानइति' इमामुच्छ्रयामीत्यादिना श्रेयोवसानइत्यन्तेनाग्नेयकोणावटे स्तम्भमुच्छ्रयति । उच्छ्रितं यथा स्यात्तथा मूलांशं स्तंभस्य क्षिपतीत्यर्थः । स्तम्भाभावे शिलाविन्यासः ।

'चतुरः' मन्त्रा इत्यर्थः। चतुर्णामेकमन्त्रता। तथाचानेनैव मन्त्रेण नैर्ऋत्यवायव्यैशान्यावटेषु त्रीन्स्तं-
भानुच्छ्रयति। प्रत्यवटं स्तम्भोच्छ्रयणे मन्त्रावृत्तिः। यथा चतुर इतिपृथक्सूत्रं, प्राक्सूत्रे मन्त्रकरणक-
स्तम्भोच्छ्रयणमुक्तं कियत्संख्यास्त इत्याकाङ्क्षायामेतत्। 'प्रपद्यते' प्रविशति। शालायामिति-
शेषः। 'अभ्य'''पद्य इति' ब्रह्मासनमास्तीर्येत्येतन्मात्रमपवदितुं दक्षिणतो ब्रह्माणमुपवेश्येत्युक्तम्।
उदपात्रस्थापननिरुक्तिश्च प्रणीताप्रणयनप्राक्कालिकप्रणीतेतरोदपात्रस्थापनार्थी। नव्यत्वाच्छालायां
प्रागावसथ्यस्यासत्वादग्निस्थापनोक्तिः। क्रमश्च पदार्थानाम्। पात्रासादनादौ कांस्ये संभारः। सक्षी-
राण्यौदुम्बरपत्राणि दूर्वा पल्लवा गोमयं दधि मधु घृतं कुशा यवा आज्यस्थालीद्वयम्। ग्रहणे अग्नय
इन्द्राय बृहस्पतये विश्वेभ्योदेवेभ्यः सरस्वत्यै वाजिभ्यः सर्पदेवजनेभ्यो हिमवते वसुभ्यो रुद्रेभ्य आदि-
त्येभ्य ईशानाय जगदेभ्यः पूर्वाह्णायाऽपराह्णाय मध्यंदिनाय प्रदोषायार्धरात्राय व्युष्टयैदेव्यै महापथायै
कर्त्रे विकर्त्रे विश्वकर्मणे ओषधीभ्यो वनस्पतिभ्यः धात्रे विधात्रे निधीनांपतये ब्रह्मणे प्रजापतये
सर्वाभ्यो देवताभ्यो जुष्टं गृह्णामि। प्रोक्षणे त्वाशब्दः। प्रकृताज्यस्थाल्यामाज्यनिर्वापः। अन्यत्सर्वं प्रकृ-
तिवत्। एवं स्थालीपाकं श्रपयित्वाभिघार्योद्वास्य शालाया बहिर्निष्क्रम्य द्वारसमीपे स्थित्वा ब्रह्माणं
विलोकयन् प्रार्थयते ब्रह्मन्प्रविशामीति, प्रविशस्वेत्यनुज्ञातो ब्रह्मणा ऋतं प्रपद्ये शिवंप्रपद्य इतिप्रविशति।
ततः प्राणदानादिपर्युक्षणान्ते। 'आज्यं'''भिनः स्वाहेति' ततः द्वितीयामाज्यस्थाल्यां निरुप्याज्य-
मधिश्रित्येत्यादि पूर्णाहुतिवदाज्यं संस्कृत्येहरतिरुपसृजन्निति द्वाभ्यां कण्डिकाभ्यां द्वे आज्याहुती
हुत्वा इदमग्नय इतित्यक्त्वा इदंपशुभ्य इति वा। ततो वास्तोष्पत इति चतसृभिर्ऋग्भिरपराश्चतस्र आ-
हुतीः प्रत्यृचं जुहोतीत्यर्थः। इदंवास्तोष्पतये इति चतसृषु त्यागः। ततो द्वितीयाज्येनाघारयोराज्य-
भागयोश्च होमः। 'स्थाली'''स्वाहेति' एभिः षड्भिर्मन्त्रैः प्रतिमन्त्रं स्थालीपाकेन षडाहुतीर्जुहोति।
त्यागास्तु—इदमग्नय इन्द्रायबृहस्पतयेविश्वेभ्योदेवेभ्यः सरस्वत्यैवाजिभ्यश्च १॥ इदं सर्पदेवजनेभ्योहिमव-
तेवसुभ्योरुद्रेभ्यआदित्येभ्यईशानायजगदेभ्यश्च २॥ इदं पूर्वाह्णायापराह्णायमध्यंदिनायप्रदोषायार्धरात्रा-
यव्युष्टयैदेव्यैमहापथायैच ३॥ इदं कर्त्रेविकर्त्रेविश्वकर्मणे ओषधीभ्योवनस्पतिभ्यश्च ४॥ इदंधात्रे
विधात्रेनिधीनांपतये च ५॥ इदं ब्रह्मणेप्रजापतयेसर्वाभ्योदेवताभ्यः ६॥ 'प्राश'''प्रोक्षेत्' स्विष्ट-
कृद्धोमादिदक्षिणादानान्तं प्राशनान्तं तस्मिन् संजाते कांस्ये पात्रे, सुरा क्षीरं, शाड्वलं दूर्वा पल्लवाः,
आस्यते येषु रम्येषु तानि मञ्चकपीठादीनि आसनानि उपस्थीयते सुखाद्यर्थं येषु तुलारामादीनि
आसनानि। उपस्थानानि च मञ्चकदोलादीनि। तेषु प्रोक्षेत् तेषां प्रोक्षणं कुर्यादित्यर्थः।
'पूर्वे'''येतामिति' पूर्वा प्राची तस्यां वर्तमानो यो दिगन्तरसंधिः तस्मिन्नाग्नेयकोण इत्यर्थः।
नन्वैशानकोणः कुतो नेति वाच्यम्। उत्तरसूत्रे दक्षिणदिक्संधेः सूत्रणात्प्रादक्षिण्याव्यवधानयोश्च
न्याय्यत्वात्। 'दक्षिणे'''येतामिति' संधिपदव्याख्यापूर्ववत्। अन्यत्स्पष्टम्। 'निष्क'''येता-
मिति' निगदव्याख्याता चतुःसूत्री। 'निष्ठि'''वेत इति' निष्ठितां निष्पन्नां प्रपद्यते प्रविशति
धर्मस्थूणाराजमिति मन्त्राभ्यां, प्रवेशनं च सहिरण्यस्य पूर्णोदकुम्भसहितस्य पुण्याहे वेदघोषादि-
ब्राह्मणाशीर्वादपुरस्सरं गृहपतेः। ततः ब्राह्मणेभ्यो दक्षिणां दत्त्वा स्वस्तिवाच्याशिषः प्रतिगृह्य-
बर्हिर्होमादि ब्राह्मणभोजनान्तम्। 'ततो'''जनं' कर्मापवर्गे एकस्मै भोजनं दत्त्वा पुनः कर्मसाद्गु-
ण्यार्थं दश पञ्च वा विप्रान्भोजयेत्। तृतीयस्य चतुर्थी॥ ४॥

अथातो मणिकावधानम्॥ १॥ उत्तरपूर्वस्यां दिशि यूपवदवटं
खात्वा कुशानास्तीर्याक्षतानरिष्टकां( सुमनसः कपर्दिकान् )श्चान्यानि
चाभिमङ्गलानि तस्मिन् मिनोति, मणिकꣳ समुद्रोऽसीति॥ २॥ अप

आसिञ्चति । आपो रेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं बिभृथामृतं च । रायश्च स्थ स्वपत्यस्य पत्नी सरस्वती तद्गृणते वयोधादिति ॥ ३ ॥ आपोहिष्ठेति च तिसृभिः ॥ ४ ॥ ततो ब्राह्मणभोजनम् ॥ ५ ॥ ॥ ५ ॥

( कर्कः )—' अथा···धानं ' व्याख्यास्यत इति शेषः । मणिकशब्देनालिञ्जरोऽभिधीयते तस्यावस्थानं स्थापनम् । ' उत्तर···द्रोऽसीति ' । शालायामेवोत्तरपूर्वस्यांदिशि यूपवदवटं खात्वा तस्मिन्कुशानास्तीर्य अक्षतानरिष्टकांश्चान्यानि चाभिमङ्गलानिऋद्धिवृद्ध्यादीनि तस्मिन्मिनोति मणिकं समुद्रोऽसीत्यनेन मन्त्रेण शंभूरित्येवमन्तेन । एवमन्तता कथं ज्ञायते । वक्ष्यति ह्युपरिष्टान्मयोभूरित्यनुवाकशेषेणेति । ' अप आसिञ्चति ' आपो रेवतीरित्यनेन मन्त्रेण । ' आपो···सृभिः ' अप आसिञ्चति । ततो ब्राह्मणभोजनम् ॥ ५ ॥

( जयरामः )—अथ मणिकस्य अलिञ्जरस्यावधानं स्थापनम् । वक्ष्यत इति सूत्रशेषः । अग्नेरुत्तरपूर्वस्यामीशान्यां दिशि । यूपवदिति देवस्यत्वेत्यभ्यादानम् । आददे नारीत्यवटखननम् । तत्र कुशास्तरणम् । अक्षतादीनां च प्रक्षेपः । तत्र मङ्गलानि ऋद्धिवृद्ध्यादीनि । तस्मिन्नवटे मणिकं मिनोति स्थापयति । समुद्रोऽसीत्यादिना शंभूरित्यन्तेन मन्त्रेण । एतदन्तता मयोभूरित्यनुवाकशेषेणेति वक्ष्यमाणत्वात् । आपोरेवतीरिति मन्त्रेण आपोहिष्ठेत्यादितिसृभिश्चापस्तत्रासिञ्चति प्रक्षिपति । तस्यार्थः । आपो रेवतीरिति परमेष्ठी त्रिष्टुप् आपोऽपामासेचने० । हे आपः यूयं रेवतीः धनवत्यः हि यस्मात् इत्थं वस्वः वसुनो धनस्य क्षयथा निवास भूताः स्थ भवथ । किंच भद्रं श्रेष्ठं क्रतुं यज्ञं बिभृथ धारयथ । अमृतं रसं ब्रह्म वा फलं वा विभृथ धारयथ । किंच रायो धनस्य स्वपत्यस्य शोभनापत्यस्य पत्नीः स्वामिन्यो यूयं तद्दातुं समर्थां इत्यर्थः । तत् युष्मत्स्वरूपं गृणते स्तुवते सरस्वती देवी वय आयुरधात् दधातु ददात्वित्यर्थः ॥ ॥ ५ ॥

( हरिहरः )—' अथा···धानम् ' । अथ शालाकर्मानन्तरं यतः शालायां मणिकेन भवितव्यमतो मणिकावधानं वक्ष्यत इति सूत्रशेषः । ' उत्तर···द्रोऽसीति ' तत्र शालाया उत्तरपूर्वस्यामैशान्यां दिशि यूपवत् अभ्यादानपरिलेखनपूर्वकमवटं मणिकबुध्नावस्थानपर्यन्तं गर्त्तं खात्वा निखाय ततः प्राचः पांसूनपोह्यावटस्योपरि प्रागग्रान् दीर्घान् कुशानास्तीर्य स्तृत्वा अक्षातान्यवान् अरिष्टकफलानि अन्यानि च सुमङ्गलानि ऋद्धिवृद्धिसिद्धार्थकादीनि तान्यथास्तीर्य ओप्य चकारः समुच्चयार्थः । तस्मिन्नवटे मणिकमुदकधानी मिनोति स्थापयति " समुद्रोसि नभस्वानार्द्रदानुः शंभूः" इत्येतावता मन्त्रेण । ' अप···वतीरिति ' तस्मिन्मणिके अप अशूद्राहृतनद्याद्युदकमासिञ्चति प्रक्षिपति आपोरेवतीरितिमन्त्रेण । ' आपो···सृभिः ' आपोहिष्ठा मयोभुव इत्यादिभिस्तिसृभिर्ऋग्भिः पुनर्मणिके सकृदप आसिञ्चति । ततो ब्राह्मणभोजनम् । इतिसूत्रार्थः ॥ ॥ अथ पद्धतिः । ततो मणिकावधाननिमित्तमातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा अग्नेरीशानप्रदेशे ' देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । आददे नार्यसि ' । इति मन्त्रेणाभ्रिमादाय ' इदमहꣳरक्षसां ग्रीवा अपि कृन्तामीत्यवटं भाण्डानुमानं परिलिख्य उदकं स्पृष्ट्वा गर्त्तं खात्वा प्राचः पांसूनपास्य कुशानास्तीर्य अक्षतानरिष्टकान् ऋद्धिवृद्धिहरिद्रादूर्वासितसर्षपादिमङ्गलद्रव्यं निक्षिप्य तदुपरि ' समुद्रोऽसि नभस्वानार्द्रदानुः शंभूरित्येतावता मन्त्रेण मणिकमवटे निधाय, ततः आपोरेवतीः क्षयथाहि वस्वः क्रतुं च भद्रं विभृथामृतं च । रायश्च स्थ स्वपत्यस्य पत्नी सरस्वती तद्गृणते वयोधादित्यनेन मन्त्रेण । तथा आपो हिष्ठामयो भुव इत्यादितृचेन च सकृन्मणिके अप आसिञ्चति । ततो ब्राह्मणमेकं भोजयेत् । इति मणिकावधानम् ॥

( विश्व० )—' अथातोमणिकावधानं ' वक्ष्यते इति सूत्रशेषः । मणिकः शरावाकृतिरुदपात्रम् । एतच्चावसथ्याधानानन्तरं तद्दिन एव भवति । प्रत्यहीयहोमसाधनीभूतपञ्चमहायज्ञपाकपर्युक्षणादेर्मणिकोदकसाध्यत्वात् । ऋषेः स्वातन्त्र्यादिह सूत्रणम् । अत्रादौ मातृपूजापूर्वकमाभ्युदयिकं श्राद्धमग्नौकरणसहितम् । अतऊर्ध्वमपि क्रियमाणसर्वाभ्युदयिकश्राद्धेऽग्नौकरणं भवति । तद्धोमश्चावसथ्ये सव्येन दैवत्वाद्धोमस्य । होमशेषस्य पितृपात्रे पिण्डे च प्रक्षेपः श्राद्धकल्पात् । अपरे तु । अग्न्यभावे तु विप्रस्येत्यादिवाक्यानुरोधाग्निरग्नेरप्यग्नौकरणमिच्छन्ति । आचार्यमते तु साग्निष्याभावः । तथाच होमवद्गृहीताग्नेरेव विप्रकराद्यधिकरणनिर्देशः । नच सूत्रात्तदर्थसिद्धेर्वाक्यानर्थक्यम् । एवकारस्याधिकरणान्तरनिषेधकत्वात् । कथं कर्त्तव्यमत आह । 'उत्त' 'खात्वा' ऐशान्यामग्नेः । यूवदनेन देवस्यत्वेत्यभ्रिमादायावटं परिलिखतीदमहमिति । उदकस्पर्शः । प्राचः पांसूद्रापः । ' कुशा' 'लानि ' कुशान्प्रागग्रानुदगग्रान्वास्तीर्यावटे । अक्षतान्यवान् अरिष्टकफलानि अन्यानि अभिमङ्गलानि ऋद्धिवृद्धिकारीणि । कपर्दकान् पुष्पाणि सर्वौषधीदूर्वाशमीपत्रसर्षपादीनि अवटे प्रक्षिप्येत्यर्थकश्चकारः । ' तस्मि' 'द्रोसीति ' तस्मिन्नवटे मणिकं मिनोति स्थापयति समुद्रोसीत्यारभ्य शंभूरित्यन्तेन मन्त्रेण भ्वन्तता च मयोभूरित्यवाकशेषेणेतिवक्ष्यमाणत्वात् । ' अप' 'योधाइति ' मणिक इति शेषः । ' आपो' 'तृभिः ' मणिके अप आसिञ्चतीति समुच्चयार्थश्चकारः । ' ततो' 'जनं' पञ्च ब्राह्मणान् भोजयेदित्यर्थः । पात्रजलादेर्भङ्गशोषादौ समंत्रकं तत्तदावर्तते । ब्रह्मणभोजनं त्वग्नेः पुनराधाने । तृतीयस्य पञ्चमी ॥ ५ ॥

**अथातः शीर्षरोगभेषजम् ॥ १ ॥ पाणी प्रक्षाल्य भ्रुवौ मिमार्ष्टि । चक्षुर्भ्या࣪ श्रोत्राभ्यां गोदानाच्छुबुकादधि । यक्ष्मꣳ शीर्षण्यꣳरराटाद्विवृहामीममिति ॥ अर्द्धं चेदवभेदक विरूपाक्ष श्वेतपक्ष महायशः । अथो चित्रपक्ष शिरो मास्याभिताप्सीदिति ॥ ३ ॥ क्षेम्यो ह्येव भवति ॥ ४ ॥ ६ ॥**

( कर्कः )—'अथा' 'जम् ' व्याख्यास्यते । 'पाणी' 'मार्ष्टि' पाणिभ्यामेव चक्षुर्भ्यामित्यनेन मन्त्रेण । अर्द्धं चेत् शीर्षरोगेण गृह्यते अवभेद इत्यनेन मन्त्रेण भ्रुवि मार्जनम् । एवंच कृते क्षेम्य एव भवति ॥ ६ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

( जयरामः )—अथातः शिरोरोगस्य भेजषं निवर्तकम् वक्ष्यत इति सूत्रशेषः । प्रक्षालिताभ्यां पाणिभ्यां सव्यासव्याभ्यां भ्रुवोः सव्यासव्ययोर्यथाक्रमं मार्जनं युगपत् चक्षुर्भ्यामिति मन्त्रेण । तस्यार्थः । तत्र परमेष्ठी अनुष्टुप् वायुरपाकरणे० । चक्षुरादङ्गेभ्यः अधि सकाशादिमं यक्ष्मं रोगविशेषम् शीर्षणि भवं शीर्षण्यं विवृहामि पृथक्करोमि निराकरोमीत्यर्थः । तत्र गोदानं शिरोदेशः । शुबुक चिबुकम् । रराटं ललाटम् अर्द्धं चेच्छीर्षं रोगेण गृह्यते तदापि पाणी प्रक्षाल्य पीडितभ्रूपार्श्ववर्तिना हस्तेन तद्भ्रूमार्जनमवभेदकेति मन्त्रेण । तस्यार्थः तत्र प्रजापतिरनुष्टुप् विरूपाक्षः अपाकरणे० । अवअवाचीनं कृत्वाऽर्द्धं भेदयति विदारयति इति हे अवभेदक विरूपे विकृते अक्षिणी यस्मादिति हे विरूपाक्ष । श्वेतपक्षेत्यादीन्यन्वर्थसंबोधनानि । भो एवं भूत शिरोरोग अस्य रोगिणः शिरः मा ताप्सीत् । त्वत्प्रसादात् तापयुक्तं माभूत् । यद्वा भवानस्य शिरो मा संतापयत्विति । इत्येवङ्कृते हि निश्चितं क्षेम्यः क्षेमार्होऽयं भवति । एतेनार्द्धशीर्षरोगस्वरूपं प्रतिपादितम् ॥ ६ ॥

( हरिहरः )—' अथा' 'जम् ' अथ मणिकावधानानन्तरं यतः शिरोरोगवान् किंचित्कर्म कर्तुं न शक्नोति अतो हेतोः शीर्षणि मूर्द्धनि रोगस्तस्य भेषजं प्रतीकारः वक्ष्यत इति सूत्रशेषः ।

'पाणी'''मीममिति' यदि स्वस्य परस्य वा पीडा भवति तत्र पाणी स्वकीयौ हस्तौ प्रक्षाल्य अद्भिरवनेज्य भ्रुवौ युगपत्ताभ्यां पाणिभ्यां विमार्ष्टि प्रोक्षति । अन्यस्य वा स्वयं करोति चक्षुर्भ्यामित्यादिविवृहामीममित्यन्तेन मन्त्रेण । 'अर्द्धं'''ताप्सीदिति' अर्द्धचेत् शीर्षं व्यथते तदा पूर्ववत्पाणी प्रक्षाल्य दक्षिणेन पाणिना यदि शिरसो दक्षिणभागे रुक् तर्हि दक्षिणां वामे वामाम् अवभेदकेत्यादिना मास्याभिताप्सीदित्यन्तेन मन्त्रेणैकां भ्रुवं विमार्ष्टि । 'क्षेम्यो ह्येव भवति' हि ततः क्षेम्यः शिरोरोगरहित एवासौ भवतीति ॥ ६ ॥ ॥ * ॥

( विश्व० )—'अथा ''वर्जं' वक्ष्यत इति सूत्रशेषः । कथमत आह 'पाणी'''ममिति' दक्षिणोत्तरौ पाणी प्रक्षाल्य ताभ्यां दक्षिणोत्तरे भ्रुवौ यथाक्रमं विमार्ष्टि चक्षुर्भ्यामितिमन्त्रेण युगपत् । एतच्च स्वपरसाधारणम् । 'अर्द्धं'''प्सीदिति' अर्द्धचेच्छीर्षं रोगेण पीड्येत तदा पूर्ववत्पाणी प्रक्षाल्य पीडितभ्रूपार्श्ववर्तिना हस्तेन तद्भ्रूप्रोञ्छनमवभेदकेतिमन्त्रेण । 'क्षेम्यो ह्येव भवति' क्षेम्यः शिरोरोगरहितः । तृतीयस्य षष्ठी ॥ ६ ॥

उतूलपरिमेहः ॥ १ ॥ स्वपतो जीवविषाणे स्वं मूत्रमासिच्यापसलवि[1] त्रिः परिषिञ्चन्परीयात् । परि त्वा गिरेरह परिमातुः परिस्वसुः परिपित्रोश्च भ्रात्रोश्च सख्येभ्यो विसृजाम्यहम् । उतूल परिमीढोऽसि परिमीढः क गमिष्यसीति ॥ २ ॥ स यदि भ्रम्याद्दावाग्निमुपसमाधाय घृताक्तानि कुशेण्ड्वानि जुहुयात् । परि त्वा ह्वलनो ह्वलनिर्वृत्तेन्द्रवीरुधः ॥ इन्द्रपाशेन सित्वा मह्यं मुक्त्वाऽथान्यमानयेदिति ॥ ३ ॥ क्षेम्योह्येव भवति ॥ ४ ॥ ७ ॥

( कर्कः )—'उतूलपरिमेहः' उतूलो दास उच्यते । तस्य भ्रमणशीलस्य वशीकरणाय परिमेहः परिषेकः क्रियते । 'स्वपतो'''रीयात्' परि त्वागिरेरहं० इत्यनेन मन्त्रेण । स्वपतो दासस्य जीवतः पशोर्विषाणे स्वं मूत्रमासिच्यापसव्यं तमेव त्रिः परिषिञ्चन्परीयात् परित्वा गिरेरित्यनेन मन्त्रेण । 'स यदि'''हुयात्' स यदि पुनर्भ्रम्यादेव ततो दावाग्निमुपसमाधाय आगन्तुकत्वाच्चतुर्दशाहुतिकान्ते घृताक्तानि कुशेण्ड्वानि जुहुयात् परित्वाह्वलनोह्वलमित्यनेन मन्त्रेण । एवं कृते क्षेम्य एव भवति ॥ ७ ॥ ॥ * ॥

( जयरामः )—उतूलो विवशो दासः तस्य परिमेहो वशीकरणायाभिषेकः । वक्ष्यतइति सूत्रशेषः । स्वपतो दासस्योपचारः । जीवतः पशोर्विषाणे शृङ्गे स्वं मूत्रमासिच्य तेनैव दासमपसलवि अप्रदक्षिणं परिषिञ्चन् त्रिवारं परीयात्परिभ्रमेत् परित्वेतिमन्त्रेण । तस्यार्थः । तत्र प्रजापतिरनुष्टुप् वायुः सेचने० । भो उतूल त्वा त्वां गिरेः पर्वतादपि परि आकृष्य विशिष्टतया सृजामि मय्यनुरक्तं करोमि मात्रादिभ्यश्च । तत्र भगिनीभ्रात्रोर्मातापित्रोश्चेति षष्ठ्यौ पञ्चम्यर्थे । परिशब्दावृत्तिर्मन्त्रशक्तिदार्ढ्याय, सख्येभ्यः सखिभावमापन्नेभ्योऽपि । परिमीढः मन्त्रशक्त्या सेचनरूपैः पाशैर्बद्ध इत्यर्थः । शिष्टं स्पष्टम् । एवं परिमीढोऽपि । पुनर्यदि भ्रम्यात्तदोपायान्तरमाह । दावाग्निमुपस्थाप्य । आगन्तुत्वाच्चतुर्दशाहुत्यन्ते घृताक्तानि कुशेण्ड्वानि कुशकुण्डलानि त्रीणि जुहुयात् परित्वाह्वलनइतिमन्त्रेण । तस्यार्थः । तत्र परमेष्ठी अनुष्टुप् इन्द्रो होमे० । भो ह्वल चञ्चल इन्द्रस्य ईश्वरस्य वीरुधः पाशात् सेवकः स्वामिभक्तः स्यादित्येवंरूपात् परि समन्ततो निर्वृत्त निर्गत्य स्थितः, अथ

---

[1] अपसलमेवेति पाठ. ।

अतः त्वा त्वां ह्वलनो ज्वलनोऽयमग्निरिन्द्रपाशेन तेनैव सित्वा बद्ध्वा अन्यं तव मनसि स्थितमनर्थकारि भूतविशेषं मुक्त्वा मोचयित्वा मह्यं मामाश्रयितुमानयेत् आनयतु । मदायत्तं करोत्वित्यर्थः । यद्वा ह्वलनिर्वायुः । वृत्ता वर्त्तिता रक्षिता इन्द्रवीरुधो वेदा येन सः । सशब्दस्य(?)वाय्वात्मकत्वात् एवं भूतो वायुश्चेति योज्यम् । तत्पक्षे त्वेति दासविशेषणमुपक्रान्तत्वात्(?) । शेषं समानम् ॥ ७ ॥

( हरिहरः )—'उतूलपरिमेह.' उतूलस्य दुर्विनीतस्य दासस्य परि समन्तात् मेहः सेचनं वशीकरणाभिषेक इति यावत् , कर्म कथ्यते । तद्यथा । 'स्वप'''ष्यसीति' यदा स दासः स्वपिति तदा गवादेः पशोः जीवतो विषाणे शृङ्गे स्वं मूत्रमासिच्य सिक्त्वा तस्य स्वपतो दासस्य अपसलवि अप्रादक्षिण्येन विषाणस्थं मूत्रं परि समन्तात्सिञ्चन् उक्षन् त्रिः त्रीन् वारान् परीयात् परिभ्रमेत् परित्वा गिरेरित्यादिकगमिष्यसीत्यन्तेन मन्त्रेण । 'स यदि'''येदिति' स दासो यदि अस्मिन्कर्मणि कृतेऽपि भ्रम्यात् स्वेच्छया विचरेत् तदा तद्वश्यार्थमिदं कर्मान्तरं कुर्यात् । तद्यथा । पञ्चभूसंस्कारपूर्वकं दावाग्निं वनदहनं स्थापयित्वा ब्रह्मोपवेशनादिपर्युक्षणान्ते आघारावाज्यभागौ महाव्याहृतिसर्वप्रायश्चित्तप्राजापत्यस्विष्टकृदन्ताश्चतुर्दशाहुतीर्हुत्वा कुशेण्ड्वानि कुशानामिण्ड्वानि कुण्डलाकाराणि घृताक्तानि त्रीणि परित्वेत्यादिअथान्यमानयेदित्यन्तेन मन्त्रेण सकृदेव जुहुयात् । इदमिन्द्रायेति त्यागः । ततः संस्रवप्राशनादि ब्रह्मणे दक्षिणादानान्तं कर्म कुर्यात् । 'क्षेम्यो ह्येव भवति' अस्मिन्कर्मणि कृते हि स्फुटं क्षेम्यः वश्य एव दासो भवति संपद्यते ॥ इत्युतूलदासवश्यकर्म ॥ ७ ॥ सप्तमी कण्डिका ॥ * ॥ ॥ * ॥

( विश्व० )—'उतूलपरिमेहः' उतूलः दुर्विनीतो दासः । तस्य परिमेहः वशीकरणं वक्ष्यत इति सूत्रशेषः 'स्वपतो'''ष्यसीति' स्वपतः दासस्य वक्ष्यमाणः परिषेकः । कथं कुर्यादत आह जीवविषाणे जीवतः छागस्य विषाणे दक्षिणे [ वामे ] स्वं मूत्रमासिच्य तेन मूत्रेण दासमपसलवि अप्रदक्षिणं परिषिञ्चन् त्रिः वारत्रयं परीयात्परिभ्रमेत्परित्वेतिमन्त्रेण । उदकस्पर्शः । वारत्रयमितरथावृत्तिः । 'सयदि'''येदिति' एवं परिमीढोपि स दासादिर्यदि भ्रान्तः स्यात्तदोपायान्तरमाह । उपलिप्त उद्धतावोक्षिते दावाग्निमुपसमाधाय ब्रह्मासनास्तरणादिचतुर्दशाहुत्यन्ते कुशेण्ड्वानि कुशकुण्डलानि त्रीणि घृतेनाक्तानि परित्वाह्वलन इति मन्त्रेण स्रुवेण जुहुयात् । ततः संस्रवप्राशनादि ब्राह्मणभोजनान्तम् । 'क्षेम्यो ह्येव भवति' वश्योऽभ्रान्तश्च भवतीत्यर्थः ॥ ७ ॥ तृतीयस्य सप्तमी ॥

शूलगवः ॥ १ ॥ स्वर्ग्यः पशव्यः पुत्र्यो धन्यो यशस्य आयुष्यः ॥ २ ॥ औपासनमरण्यꣳ हृत्वा वितानꣳ साधयित्वा रौद्रं पशुमालभेत ॥ ३ ॥ साण्डम् ॥ ४ ॥ गौर्वा शब्दात् ॥ ५ ॥ वपाꣳ श्रपयित्वा स्थालीपाकमवदानानि च रुद्राय वपामन्तरिक्षाय वसाꣳ स्थालीपाकमिश्रान्यवदानानि जुहोत्यग्नये रुद्राय शर्वाय पशुपतये उग्रायाशनये भवाय महादेवायेशानायेति च ॥ ६ ॥ वनस्पतिस्विष्टकृदन्ते ॥ ७ ॥ ८ ॥ दिग्व्याघारणम् ॥ ९ ॥ व्याघारणान्ते पत्नीः संयाजयन्तीन्द्राण्यै रुद्राण्यै शर्वाण्यै भवान्या अग्निं गृहपतिमिति ॥ १० ॥ लोहितं पालाशेषु कूर्चेषु रुद्रायसेनाभ्यो बलिꣳ हरति यास्ते रुद्र पुरस्तात्सेनास्ताभ्य एष बलिस्ता-

भ्यस्ते नमो यास्ते रुद्र दक्षिणतः सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमो यास्ते रुद्र पश्चात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमो यास्ते रुद्रोत्तरतः सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमो यास्ते रुद्रोपरिष्टात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमो यास्ते रुद्राधस्तात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नम इति ॥ ११ ॥ ऊवध्यं लोहितलिप्तमग्नौ प्रास्यत्यधो वा निखनति ॥१२॥ अनुवातं पशुमवस्थाप्य रुद्रैरुपतिष्ठते प्रथमोत्तमाभ्यां वाऽनुवाकाभ्याम् ॥ १३ ॥ नैतस्य पशोर्ग्राममर्ठ हरन्ति ॥ १४ ॥ एतेनैव गोयज्ञो व्याख्यातः ॥ १५ ॥ पायसेनानर्थलुप्तः ॥१६॥ तस्य तुल्यवया गौर्दक्षिणा ॥१७॥ ८ ॥

( कर्कः )—'शूल…युग्यः' शूलगवाख्यं कर्म स्वर्गादिभिः कामैः पर्यायेण संबध्यते, नहि युगपत्सर्वकामानामुत्पत्तिसंभवः । तत्कर्माभिधानायाह 'औपा…साण्डम्' औपासनमग्निमरण्यं नीत्वा विहरणं कृत्वा रुद्रदेवत्यं पशुमालभेत साण्डम् । साण्डशब्देनानपुंसक उच्यते तस्यचान्वयाच्छागपरिहरणप्राप्तौ गौर्वा शब्दादित्याह । गौरेव स्यान्न छागः । कुत एतत् । शूलगव इति शब्दादेव । 'वपाथं…नि च' विहृतश्रपणपरिप्राप्तौ सत्यां सहश्रपणार्थोऽयमारम्भः । विहृतं श्रपणं कथमितिचेच्चोदकपरिप्राप्त्या । आज्यासादनोत्तरकालमन्येषां पशूनां शाखानिखननं हि प्राप्तम् । उत्तराघारान्ते च पशुसमञ्जनादि वपादीनां विहृतमेव श्रपणं प्राप्तमतो वचनात्सहश्रपणमुच्यते । 'रुद्रा…वसां' जुहोतीति शेषः । 'स्थाली…शानाय' इत्येभिर्मन्त्रैः । ततो वनस्पतिहोमः, स च यथादृष्टः पृषदाज्येन । 'स्विष्ट…रणं' कर्तव्यमिति शेषः । तत्र वसया, यथा अग्नीषोमीये दृष्टम् । 'व्याघा…पतिं' एत एव मन्त्राः । अपराग्नौ पत्नीसंयाजहोमः । तथैव दृष्टत्वात् । ततो महाव्याहृत्यादि । 'लोहितं…रति' यास्ते रुद्र पुरस्तात्सेना० इत्येवमादिभिर्मन्त्रैः । 'ऊवध्यं…ष्ठते' अनुवातमिति न प्रतिवातम् । 'प्रथ…भ्याम्' उपतिष्ठते । वाशब्दो विकल्पार्थः । 'नैत…रन्ति' मांसमिति । 'एते…ख्यातः' । 'पायसेन' असौ भवति । 'अनर्थलुप्तः' पायसमात्रसाधनत्वे पाशुको योऽर्थस्तेनालुप्तो भवति । एतदुक्तं भवति । पायसेन देवतामात्रेज्येति । 'तस्य…क्षिणा' ॥ ८ ॥ * *

( जयरामः )—शूलगव इति कर्मनामधेयम् । स्वर्ग्य इति स्वर्गादिकामैः पर्यायेण संबध्यते । नहि युगपत्सर्वकामोत्पत्तिसंभवः । वक्ष्यत इति सूत्रशेषः । औपासनम् आवसथ्याग्निमरण्यं नीत्वा तत्र वितानं साधयित्वा आवसथ्याग्नेराहवनीयदक्षिणाग्न्योरुद्धरणं कृत्वा रुद्रदेवत्यं पशुं साण्डमनपुंसकमालभेत । तस्य चान्वयाच्छागस्य प्राप्तौ गौर्वा । वा शब्द एवार्थे । गौरेव न छागः । कुतः । शब्दाच्छूलगव इति वचनात् । वपां श्रपयित्वेति विहृतश्रपणे प्राप्ते सहश्रपणार्थोऽयमारम्भः । विहृतश्रपणं कथमिति चेत् । चोदकपरिप्राप्त्याऽऽज्यासादनोत्तरकालमन्येषाम् पशूनां शाखानिखननं प्राप्तम् उत्तराघारान्ते च पशुसमञ्जनादि । वपादीनां विहृते शामित्राग्नावबदानानां वपायाश्चाहवनीय एवश्रपणं प्राप्तम् । अतोऽत्र वचनात्सहश्रपणमुच्यते । रुद्रायेत्यादौ जुहोतीति शेष । अवदानानि चरुमिश्राण्यग्न्यादीशानान्तेभ्यो जुहोत्येभिरेव नाममन्त्रैः । ततो वनस्पतिहोमः पृषदाज्येन तेनैव दृष्टत्वात् । [ ततो वनस्पतिहोमः पृषदाज्येन । ] ततः स्विष्टकृते हुत्वा दिशां व्याघारणं कर्तव्यमिति सूत्रशेषः । तत्र वसया भवति । यथाऽग्नीषोमीये । पत्नीसंयाजा अप्येतैर्नाममन्त्रैरपराग्नौ । तत्र

दृष्टत्वात् । ततः प्राशनान्ते पशुना तुल्यवयस्कं गां दत्त्वा लोहितं पशो रक्तं पालाशेपु पलाशपत्रेपु कूर्चेपु च कुशासनेपु बलित्वेन ददाति यास्तेरुद्रेत्यादिपड्भिर्मन्त्रैः प्रतिमन्त्रम् । तदर्थः सुगम. । ते तुभ्यं चेति योज्यम् । तत्र पण्णां परमेष्ठी यजुः रुद्रो बलिहरणे० । ऊवध्यं पुरीषाधानं पोटीतिप्रसिद्धम् आहवनीये प्रक्षिपति अनुवातं वाताभिमुखं पशुमवशिष्टं पशुशरीरम् । रुद्रैः रुद्राध्यायाम्नातमन्त्रैः स्तौति । प्रथमोत्तमौ आद्यन्तौ ताभ्यां वा । पशोरत्र मांसमिति शेषः । एतेनैव विधानेन गोयज्ञः कर्मविशेषः । असौ च पायसेन चरुणा अनर्थलुमश्च भवति । पायसेन शूलगवदेवतामात्रेज्येत्यर्थः । तस्य शूलगवपशोर्वयसा तुल्यवया गौर्दक्षिणा देया ॥ ॥ ८ ॥ ॥ * ॥ ॥ * ॥

( हरिहरः )—' शूल' ' 'पुण्यः ' अथ स्वर्गादिकामस्य शूलगवाख्यं कर्म यागविशेषमनुविधास्यन्नाह शूलगव इति । स च स्वर्ग्यः स्वर्गाय हितः पशव्यः पशुभ्यो हितः पुत्र्यः पुत्रेभ्यो हितः धन्यः धनाय हितः यशस्यः यशसे हितः आयुष्यः आयुषे हितः । अयमर्थः । यदा यजमानः स्वर्गपशुपुत्रधनयशआयुषामन्यतमकामो भवति तदाऽनेन शूलगवाख्येन यागेन यजेत । अनेककामाना युगपदुत्पत्त्यसंभवात् । ' औपा' ' 'साण्डम् ' औपासनमावसथ्याग्निमरण्यमध्यं नीत्वा तत्र वितानं त्रेताग्निविन्यासं साधयित्वा शुल्बोक्तप्रकारेण विरचय्य रौद्रं रुद्रो देवता अस्येतिरौद्रं, तं पशुं छागं आलभेत सञ्ज्ञपयति । कथं भूतं साण्डम् अण्डाभ्यां सह वर्तत इति साण्डस्तम् अनपुंसकमित्यर्थः । ' गौर्वा शब्दात् ' वाशब्दः पक्षव्यावृत्तौ । नैव छागः पशुः रौद्रः अपितु साण्डो गौः, कुतः, शब्दात् शूलगव इत्येतस्माच्छब्दात् । ' वपा' ' 'नायेति ' वपां पक्त्वा स्थालीपाकमवदानानि च हृदयादीनि सहैव श्रपयित्वा । ननु पशुतन्त्रे विहृत्य शामित्रेऽग्नावदानश्रपणं वपाश्रपणं चाहवनीये दृष्टम् । अत्र तन्माभूदिति सहश्रपणमुच्यते स्थालीपाकमवदानानि चेति । तत्र रुद्राय वपां जुहोति अन्तरिक्षाय वसां जुहोति, अत्र जुहोतीत्युभयत्राध्याहारः । स्थालीपाकमिश्राण्यवदानानि । अवदानहोमावसरे हृदयादीन्यवदानानि स्थालीपाकेन चरुणा संयुतानि जुहोति नवकृत्वः अग्नये स्वाहेत्येवमादिभिर्नवभिर्मन्त्रैः प्रतिमन्त्रमग्नौ प्रक्षिपति । कथम् । अग्नये स्वाहा १ । रुद्राय स्वाहा २ । शर्वाय स्वाहा ३ । पशुपतये स्वाहा ४ । उग्राय स्वाहा ५ । अशनये स्वाहा ६ । भवाय स्वाहा ७ । महादेवाय स्वाहा ८ । ईशानाय स्वाहा ९ ॥ यथामन्त्रं त्यागाः । ' वन' ' 'रणम् ' वनस्पतिश्च स्विष्टकृच्च वनस्पतिस्विष्टकृतौ तयोरन्तः वनस्पतिस्विष्टकृदन्तः तस्मिन् दिशां व्याघारणं कर्तव्यमिति सूत्रशेषः । तत्तु व्याघारणं वसयैव भवति । तत्र वनस्पतिहोमः स्विष्टकृद्धोमादर्वाक् पृषदाज्येन भवति, पशौ तथादृष्टत्वात् । स्विष्टकृद्धोमश्च सर्वावदानपक्षे त्र्यङ्गेभ्यः असर्वावदानपक्षे तेभ्य एवावशिष्टेभ्यः । अत्र सूत्रे व्याघारणमेव निबद्धम्, तत्र द्रव्यदेवतापेक्षाया सर्वपशुप्रकृतिभूताग्नीषोमीये दर्शनात् वसाद्रव्यं दिशो देवता व्याघारणधर्मतया लभ्यते । ' व्याघा' ' 'तिमिति ' व्याघारणं दिशामभिघारणं तस्यान्ते अवसाने पत्नीः पञ्च वक्ष्यमाणाः संयाजयन्ति जाघन्या पश्वङ्गेन । कथम्, इन्द्राण्यै रुद्राण्यै इत्यादिपञ्चभिर्मन्त्रैः स्वाहाकारान्तैः प्रतिमन्त्रम् । 'लोहितं' ' 'हरति' यास्ते रुद्रेत्यादि ततो महाव्याहृत्यादि । लोहितं तस्यैव पशो रुधिरं पालाशेपु पलाशपत्रेपु कूर्चेपु आसनेपु प्राक्संस्थेपु उदक्संस्थेपु वा, रुद्रायसेनाभ्यः रुद्रायदेवतायै सेनाः रुद्रायसेनाः अलुक्समासः ताभ्यो बलिमुपहारं हरति ददाति यास्तइत्यादिभिः पड्भिर्मन्त्रैः पट्सु पालाशकूर्चेपु प्रतिमन्त्रमेकैकम् । 'ऊवध्यं ' 'नति' ऊवध्यं पुरीषाधानं पोटीति प्रसिद्धम् । लोहितेन रक्तेन लिप्तं संसृष्टं लोहितलिप्तमग्नौ आहवनीये प्रास्यति प्रक्षिपति अधोभूमौ वा निखनति निदधाति । 'अनु' ' 'काभ्याम्' अनुवातं वातमनु लक्ष्यीकृत्य वाताभिमुखमित्यर्थः पशुमवशिष्टं पशुशरीरमवस्थाप्य निधाय रुद्रैनमस्तइत्यध्यायाम्नातै रुद्रमन्त्रैरुपतिष्ठते स्तौति । यद्वा प्रथमोत्तमाभ्यामनुवाकाभ्या मन्त्रसमुदायाभ्याम् । तत्र प्रथमोऽनुवाको नमस्त इत्यारभ्य षोडशर्चः,

उत्तमोऽन्तिमः द्वापे अन्धसस्पतइत्यारभ्य विंशतिकण्डिकात्मकः । 'नैत'''रन्ति' एतस्य रौद्रस्य पशोर्मांसं ग्रामं न हरन्ति ग्रामं प्रति न नयन्ति याज्ञिकाः, किंतु अरण्य एवोत्सृजन्ति । 'एते'''ख्यातः' एतेनैव शूलगवेनैव यज्ञेन गोयज्ञो गोयज्ञनामधेयो यागो व्याख्यातः कथितः । तत्र द्रव्यविशेषमाह । 'पाय'''लुप्तः' पायसेन पयसा संसिद्धेन चरुणा अनर्थलुप्तः शूलगवप्रधानदेवताहोमलोपरहितः । 'तस्य'''क्षिणा' तस्य शूलगवपशोर्वयसा तुल्यं समं वयो जन्मातिक्रान्तकालो यस्य गोः स तुल्यवया गौः गोपुङ्गवः दक्षिणा परिक्रयद्रव्यं ब्रह्मणे देयमिति सूत्रार्थः ॥ ॥ अथ प्रयोगः । स्वर्गपशुपुत्रधनयशआयुष्कामानां शूलगवपशुबन्धो विहितः, तत्र मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा औपासनाग्निमादायारण्यं गच्छेत् । तत्र शुचौ देशे गार्हपत्यायतनं सप्तविंशत्यङ्गुलं वृत्तं विधाय तन्मध्यनिखातशङ्कोरष्टौ एकादश द्वादश वा स्वकीयपदा प्राचीं दिशं गत्वा तदन्ते शङ्कुं निखाय तयोः शंकोरुभयतः पाशां रज्जुं प्रसार्याहवनीयायतनं रचयेत् । तद्यथा । यावत्प्रमाणा रज्जुः स्यात्तावानेवागमो भवेत् । आगमार्द्धे च शंकुः स्यात्तदर्द्धे च निरञ्छनमिति शुल्ववचनानुसारेण । अत्रायं रचनाप्रकारः । पूर्वस्माच्छङ्कोर्द्वादशाङ्गुष्ठपर्वपरिमितं देशं पूर्वतः पश्चिमतश्च परित्यज्य तत्र शंकुद्वयं निखाय चतुर्विंशत्यङ्गुलां रज्जुं परिमाय तावतीमेवाधिकां गृहीत्वा उभयतः पाशवतीं कृत्वा तस्या रज्जोरागमार्द्धे शंकुस्थानं सूत्रादिनाऽङ्कयित्वा अपरागमार्द्धे निरञ्छनं आकर्षणसूत्रगुणमोप्य पूर्वार्द्धापरार्द्धान्तयोः शंकोः तस्या रज्जोः पाशद्वयं निक्षिप्य निरञ्छनेन गुणेन दक्षिणत आकृष्य शंकुस्थाने शंकुं निखनेत् । ततस्तामेव रज्जुमुत्तरतो नीत्वा तथैवाकृष्य शंकुस्थाने अपरं शंकुं निखनेत् । अथ रज्जोः पाशौ परिवर्त्य पूर्ववन्निरञ्छनगुणेन दक्षिणत आकृष्य शंकुस्थाने शंकुन्निखाय पुनस्तामेव रज्जुमुत्तरतो नीत्वा तथैवाकृष्य शंकुस्थाने शंकुं निखनेत् । एवं चतुरस्रं चतुर्विंशत्यङ्गुलायामविस्तारमाहवनीयायतनं संपद्यते । ततो गार्हपत्याहवनीयान्तरालसंमितां रज्जुमागमय्य तां च षड्गुणां सप्तगुणां वा विधाय षष्ठांशं सप्तमं वा तत्राधिकं निक्षिप्य प्रसार्य त्रिगुणीकृत्य अपरवितृतीये शंकुस्थानज्ञानार्थमङ्कयित्वा गार्हपत्याहवनीयमध्यगतयोः शंकोः पाशौ प्रतिमुच्य गार्हपत्यायतनाद्दक्षिणत आकृष्य अपरवितृतीयाङ्के शंकुं निखाय तस्मिन् शङ्कौ अन्यं रज्जुपाशं प्रतिमुच्य षोडशाङ्गुलानि परिमाय वृत्तं मण्डलं विरचय्य तन्मध्यमशङ्कोश्चत्वार्यङ्गुलान्युत्तरतः परित्यज्य तत्र पूर्वापरायतां मण्डलसंमितां रज्जुं निपात्य रेखामुल्लिखेत् । एवं धनुषाकृति दक्षिणाग्न्यायतनं संपद्यते । तथा तामेव रज्जुं परिवर्त्याहवनीयादुत्तरतो वितृतीयेनाकृष्य वितृतीयस्थाने उत्करं कुर्यात् । एवं वितानं साधयित्वा तेषु पञ्चभूसंस्कारान्कृत्वा गार्हपत्यायतने औपासनाग्निं संस्थाप्य मृन्मयेन पात्रेण गार्हपत्यैकदेशमादायाहवनीयायतने आहवनीयं प्रणयेत् । एवमेव गार्हपत्याद्दक्षिणाग्निम् । आहवनीयस्य दक्षिणतो ब्रह्मासनमास्तीर्य शूलगवेन रौद्रेण पशुनाऽहं यक्ष्ये तत्र मे त्वं ब्रह्मा भवेति सुब्राह्मणं प्रार्थ्य भवामीति तेनोक्त आसने तमुपवेश्य उत्तरतः प्रणीताः प्रणीय पवित्रच्छेदनानि पवित्रे प्रोक्षणीपात्रं वज्रमन्तर्द्धानतृणं चेत्येतानि पञ्च आसादयेत् । ततः रज्जुं शंकुं शम्यामभ्रिं पुरीषाहरणमुदकं सिकताः आच्छादनवस्त्रमित्यष्टौ उपकल्पयेत् । ततः पवित्रे कृत्वा प्रोक्षणीः संस्कृत्य वज्रमन्तर्द्धानतृणं च प्रोक्ष्य प्रोक्षणीं निधाय वज्रमादाय वेदिं मिमीते स्फ्येन । आहवनीयस्य दक्षिणतः प्राचीं त्र्यरत्निं पश्चिमतश्चतुररत्निमुत्तरतस्त्र्यरत्निं पूर्वतश्च त्र्यरत्निमिति एवं परिमितां वेदिं त्रिभिः कुशैः परिसमुह्य उत्तरतो वज्रेणोत्करं परिलिख्य तदन्तिके वज्रं निधाय तदुपरि वेदितृणं कृत्वा सतृणं वज्रमादाय दक्षिणहस्तेन सव्ये पाणावाधाय दक्षिणेनालभ्य तेन वज्रेण पृथिवीमात्मानं वा संस्पृशन् वेद्यामुदगग्रं तृणं निधाय तदुपरि तेन प्रहृत्य तदग्रेण पुरीषमादाय वेदिं प्रेक्ष्य पुरीषमुत्करे कृत्वा पुनस्तथैव प्रहृत्य पुरीषमादाय वेदिं प्रेक्ष्यामुं पुरीषमुत्करे करोति, एवमेव द्वितीयं करोति, पुरीषकरणान्ते दक्षिणोत्तराभ्यां पा-

णिभ्यामुत्करेऽभिन्यासं करोति ततस्तृतीयं प्रहरणादि तथैव चतुर्थं कृत्वा ब्रह्मन् पूर्वं परिग्रहं परिग्रहीष्यामीत्यामन्त्रितेन ब्रह्मणा परिगृहाणेत्यनुज्ञातः स्फ्येन वेदिं दक्षिणतः प्राचीं परिगृह्य पश्चिमत उदीचीमुत्तरतः प्राचीं परिगृह्णाति। अथ वेद्यां प्राचीस्तिस्रो लेखा उल्लिख्य अनामिकाङ्गुष्ठाभ्यां दक्षिणाप्रभृतिभ्यो लेखाभ्यः पृथक् पृथक् पुरीषमादायोत्करे प्रक्षिप्य क्रमेण लेखाः संमृशति। तत्रैते वेदिमानादिपदार्थाः स्वकर्तृका मन्त्ररहिताश्च, ऋत्विगन्तराभावात्सामान्नायाभावाच्च। अथाहवनीयस्य पुरस्तादुत्तरवेदिस्थाने पञ्चभूसंस्कारान्कृत्वा पूर्वार्द्धे शङ्कुं निखाय द्वात्रिंशदङ्गुलां शम्यामादाय चतुरस्रामुत्तरवेदिं शम्यामात्रीं मिमीते, ततस्तथैव शम्यया उत्तरवेदेरुत्तरतश्चात्वालं मिमीते। तद्यथा पश्चादुदीचीं शम्यां निपात्य स्फ्येन तावतीं लेखामुल्लिख्य तथैव पुरस्तादुदीचीं दक्षिणतः प्राचीं उत्तरतः प्राचीं शम्यां निपात्य लेखामुल्लिखेत्। एवं चतुरस्रशम्याप्रमाणं चात्वालं संपद्यते। ततश्चात्वालमध्ये स्फ्याग्रेण प्रहृत्य पुरीषमादायोत्तरवेदौ शङ्कुसमीपे प्रक्षिप्याभिन्यासं विधाय पुनरेवं द्विरपरं प्रहृत्य पुरीषमादायोत्तरवेदौ प्रक्षेपमभिन्यासं च कृत्वा चतुर्थवेलायामभ्र्या चात्वालं खात्वा यावता पुरीषेण शम्यामात्री उत्तरवेदिरूर्द्ध्वा पूर्यते तावत्पुरीषं पुरीषाहरणेन चात्वालादादाय प्रक्षिपेत्। एवमुत्तरवेदिं रचयित्वा मध्ये प्रादेशमात्रीं चतुरस्रां नाभिं कृत्वा प्रोक्षणीभिः प्रोक्ष्य सिकतामुपकीर्य वाससाऽऽच्छादयति। अथ गार्हपत्ये पूर्णाहुतिवदाज्यं संस्कृत्य पञ्चगृहीतं गृहीत्वा आज्यप्रोक्षण्याआहवनीये सोपयमनीकाधिशृते इध्मस्थाग्नीनुद्यम्य उत्तरवेदिसमीपं गत्वा पुरस्तात्पश्चाद्दक्षिणत उत्तरश्चोत्तरवेदिं प्रोक्षणीभिः प्रोक्ष्य प्रोक्षणीशेषमुत्तरवेदेराग्नेयकोणसमीपे बहिर्वेदी निनीय पञ्चगृहीतेनाज्येन नाभिं व्याघारयति कोणे हिरण्यं पश्यन्। यथा पूर्ववद्दक्षिणस्यां स्रक्त्यां आघार्योत्तरापरस्यां ततो दक्षिणापरस्यां ततः पूर्वोत्तरस्यां मध्ये चाभिघार्य शेषमाज्यं स्रुवे उद्यम्योर्द्धमुत्क्षिपति। ततो नाभिं पौतुदारवैः परिधिभिः परिदधाति। तद्यथा प्रथममुदगग्रेण पश्चिमतः ततः प्रागग्रेण दक्षिणतः ततः प्रागग्रेणोत्तरतः। ततो नाभिमध्ये गुग्गुलुसुगन्धितेजनं वृष्णेस्तुकाः शीर्षण्याः तदभावेऽन्या निदधाति। तदुपरि उपयमनीगतमग्निं स्थापयति उपयमनीं च तत्समीपे निवपति चात्वाले वा, प्रणीयमानमग्निं ब्रह्माऽनुगच्छति। ततो यजमानः प्रणीता उत्तरवेदेरुत्तरेण कुशासने प्रणीयाहवनीयं परिस्तीर्य गार्हपत्यं च पात्राण्यासादयति। आज्यस्थाली संमार्गकुशाः संनहनावच्छादनानि परिधयः उपयमनकुशाः समिधः स्रुवः आज्यं वपाश्रपण्यौ चरुस्थाली शूलमुखा तण्डुलाः दक्षिणार्थं तुल्यवया गौश्चेति। अथोपकल्पनीयान्युपकल्पयति। बर्हिः प्लक्षशाखा पलाशशाखा त्रिगुणरशना उपाकरणतृणम् द्विगुणरशना गोपशुः असिः पात्रेजनीः दधि हिरण्यशकलानि षट् पलाशपत्राणि चेति। तत आसादनक्रमेण पात्राणि प्रोक्षति। रुद्राय त्वा जुष्टं प्रोक्षामीति तण्डुलान् प्रोक्षति आज्यस्थाल्यामाज्यं निरुप्य गार्हपत्येऽधिश्रित्य पर्यग्निकुर्यात्। ततो वेदिं मध्यसंगृहीतामभ्र्या खात्वा ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामीति ब्रह्माणमामन्त्र्य परिगृहाणेति ब्रह्मणाऽनुज्ञातः पूर्ववत्स्फ्येन दक्षिणपश्चिमोत्तरतो वेदिं परिगृह्यानुमार्ष्टि। आहवनीयमपरेण प्रोक्षणीरासाद्य प्रणीतोदकेन पाणी अवनिज्य प्रणीतानां पश्चिमतः प्रागग्रं स्फ्यं निधाय तदुपरि इध्माबर्हिषी आसादयति। ततः स्रुवं प्रतप्य सम्मृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात्। आज्यमुद्वास्य प्रोक्षणीनामपरेण कृत्वोत्पूयावेक्ष्य प्रोक्षणीरुत्पूय वेदिं प्रोक्ष्य बर्हिश्च प्रोक्ष्य प्रोक्षण्येकदेशेन बर्हिर्मूलानि सिक्त्वा बर्हिर्विस्रंस्य संनहनं च विस्रंस्य दक्षिणस्यां वेदिश्रोणौ निधाय संनहनावच्छादनैरवच्छाद्य वेदिं स्तृणाति। तद्यथा बर्हिः पुलकं त्रिधा विभज्य प्रथमं भागं दक्षिणेनोत्थाप्याङ्के कृत्वा द्वितीयं भागं दक्षिणेनोत्थाप्याङ्के कृत्वा तृतीयभागं दक्षिणेनोत्थापितं सव्येन संगृह्याङ्कस्थितं प्रथमभागं दक्षिणेनादाय वेद्यां स्तृणात्युदक्संस्थम्, तथैव द्वितीयं भागं दक्षिणेनोत्थाप्याङ्के कृत्वा सव्ये स्थितं दक्षिणेनादायाङ्कगतं सव्येन

संगृह्य पूर्वस्तृतबर्हिर्मूलानि द्वितीयबर्हिर्भागाग्रैश्छादयन् स्तृत्वा तृतीयभागं दक्षिणेनादाय स्फ्योपग्रहेण तथैव स्तृणाति पश्चादपवर्गम्, तदुपरि प्लक्षशाखाः स्तृणाति । अथाहवनीयं कल्पयति । ततो मध्यमदक्षिणोत्तरान्परिधीन् आहवनीये परिदधाति, आहवनीयमवेक्ष्य अग्रेणाहवनीयं परीत्य पलाशशाखां निखनति तां त्रिगुणरशनया त्रिः परिव्ययति तत्र शकलमुपगूहति, रुद्राय त्वोपाकरोमीत्युपाकरणतृणेन पशुमुपाकरोति । ततो द्विगुणरशनया अन्तराशृङ्गं पशुं बद्ध्वा रुद्राय नियुनज्मीति शाखायां नियुनक्ति । अथ रुद्राय त्वा जुष्टं प्रोक्षामीति पशुं प्रोक्षणीभिः प्रोक्ष्य शेषमास्ये उपगृह्याधस्तादुपोक्षति । तत उपयमनकुशानादाय समिधोऽभ्याधाय प्रोक्षणीभिः पर्युक्ष्य पूर्वाघारमाघार्य उत्तराघारान्ते स्रुवाग्रेण ललाटांसश्रोणिषु पशुं समनक्ति । ततः स्रुवाग्राक्ताभ्यां स्वरुस्वधितिभ्यां पशोर्ललाटमुपस्पृशति । स्वरुमवगुह्य असिमेकतो घृतेनाभ्यज्य निदध्यात् । अथ चात्वालस्योत्तरतः स्फ्येन शामित्राय परिलिख्याहवनीयस्योल्मुकेन पश्चाज्यशामित्रदेशशाखाचात्वालाहवनीयान् पर्यग्निकुर्यात् त्रिः । पुनरुल्मुकमाहवनीये प्रक्षिप्य तावत्प्रतिगच्छेत् पुनराहवनीयादुल्मुकमादाय पशुं कण्ठे बद्ध्वा वपाश्रपणीभ्यामन्वारभ्य उदङ्नयेत् । तत्र वेदितृणद्वयमादाय शामित्रे उल्मुकं निधाय शामित्रस्य पश्चादेकं तृणमास्तीर्य तत्र पशुं प्राक्शिरसं प्रत्यक्शिरसमुदक्शिरसमुदक्पादं वा निपात्य अवाश्यमानं मुखं संगृह्य तमनेन शामित्रेण संज्ञपयति, सत्यन्यस्मिन्पुरुषे शमितरि यजमान आहवनीयं प्रत्येत्य पूर्णाहुतिवदाज्यं संस्कृत्य स्वाहा देवेभ्य इत्येकामाज्याहुतिमाहवनीये हुत्वा संज्ञप्ते पशौ देवेभ्यः स्वाहेति तेनैवाज्येनापरां हुत्वा तूष्णीमपराः पञ्च जुहोति । अथ वपाश्रपणीभ्यां नियोजनीं चात्वाले प्रास्य पान्नेजनीभिः पशोः प्राणशोधनं स्वयमेव करोति । तद्यथा । मुखं नासिके चक्षुषी द्वे कर्णौ द्वौ नाभिं मेढ्रं पायुं संहृत्य पादान् एकैकं पान्नेजनीजलेन स्पृशति, शेषेण शिरःप्रभृति कर्णपर्यन्तं पुनस्तथैवाप्याय्य ततोऽङ्गानि निषिच्य शेषं पशोः पश्चाद्भागे निषिञ्चति । तत उत्तानं पशुं कृत्वा नाभ्यग्रे तृणं निधाय घृताभ्यक्तासिधारयाऽभिनिधाय सतृणां त्वचं छित्वा तृणमूलमुभयतो लोहितेनाक्त्वा तृणं भूमौ निरस्य तदुपरि स्वयं पादौ कृत्वा पुनरागत्योपविश्य वपामुत्खिद्य वपाश्रपणीभ्यां प्रोर्णूय छित्वाऽऽज्येनाभिघार्य प्रक्षाल्य पशुं विशास्ति । हृदयादीनि सर्वाणि त्रीणि वा पञ्च वा यथाकाममवदानान्यवद्य जाघनीं चावद्य श्वभ्रे ऊवध्यमवधाय लोहितं चावधाय चरौ तण्डुलानोप्य वपां शामित्रे प्रतप्य आहवनीयस्योत्तरतः स्थित्वा आहवनीये च प्रतप्य शाखाग्न्योरन्तरेणाहृत्य दक्षिणतः स्थित्वा स्रुवेणाज्येनाभिघारयन् श्रपयति गार्हपत्ये स्थालीपाकम् । शामित्रे हृदयाद्यवदानानि प्रतप्य तत्र हृदयं शूले चरुं पर्यग्निकृत्वा वपामभिघारयति, अथ त्रिः प्रच्युते पशोर्हृदयमुपरि कृत्वा पृषदाज्येन हृदयमभिघार्य इतराण्यवदानान्याज्येन सर्वाणि च श्यङ्गवर्जमभिघार्य स्थालीपाकमुद्वास्य उखां च वपाया अङ्गानां च प्राणदानं कृत्वा वपादीनि क्रमेणासाद्य अङ्गानि शाखाग्न्योरन्तरेणाहृत्य वेद्यामासाद्य वपामवदानानि चालभ्य ब्रह्मणाऽन्वारब्ध आज्यभागौ हुत्वा वपाहोमार्थं स्रुवे आज्यमुपस्तीर्य हिरण्यशकलमवधाय वपां गृहीत्वा पुनर्हिरण्यशकलं दत्त्वा द्विरभिघार्य रुद्राय स्वाहेति वपां जुहोति, वपाश्रपण्यौ विपर्यस्ते चाग्नौ प्रास्यति, तत उखातो वसां गृहीत्वा अन्तरिक्षाय स्वाहेति जुहुयात् । अथावदानहोमार्थं स्रुवे आज्यमुपस्तीर्य हिरण्यशकलमवधाय हृदयाद्यङ्गेभ्यः प्रत्येकं द्विर्द्विरवदाय स्रुवे क्षिप्त्वा स्थालीपाकाच्च सकृदवदाय क्षिप्त्वा उपरि हिरण्यशकलं दत्त्वा सकृदभिघार्य असर्वाणि चेत् क्षताभ्यङ्गं कृत्वा अग्नये स्वाहेति जुहोति । एवं पुनः स्रुवे उपस्तरणहिरण्यशकलावधानद्विर्द्विः प्रधानावदानग्रहणसकृत्स्थालीपाकावदानहिरण्यशकलावधानाभिघारणानि कृत्वा अग्नये रुद्राय शर्वाय पशुपतये उग्राय अशनये भवाय महादेवाय ईशानायेत्येतैनाममन्त्रैः स्वाहाकारान्तैरेकैकस्मै जुहोति । एवमग्न्यादयो नव प्रधानहोमाः संपद्यन्ते । ततः पृषदाज्येन वनस्पतये स्वाहेति होमं निधाय स्विष्ट-

कृद्धोमार्थं स्रुवमुपस्तीर्य हिरण्यशकलं दत्त्वा सर्वावदानपक्षे त्र्यङ्गेभ्यो द्विर्द्विरवदाय असर्वावदानपक्षे तेभ्य एव प्रधानार्थेभ्यो द्विर्द्विरवदाय सकृच्चरोरवदाय हिरण्यशकलमवधाय द्विर्द्विरभिघार्य अग्नये स्विष्टकृते स्वाहेत्यग्नेरुत्तरप्रदेशे जुहुयात् । यथामन्त्रं सर्वत्र त्यागाः । ततः स्रुवेण वसां गृहीत्वा आहवनीयस्य पुरस्ताद्दिशः स्वाहा इदं दिग्भ्यः । दक्षिणतः प्रदिशः स्वाहा इदं प्रदिग्भ्यः । पश्चिमत आदिशः स्वाहा इदमादिग्भ्यः । उत्तरतो विदिशः स्वाहा इदं विदिग्भ्यः । मध्यत उद्दिशः स्वाहा इदमुद्दिग्भ्यः । पूर्वार्द्धे दिग्भ्यः स्वाहा इदं दिग्भ्यः । ततो जाघनीं गृहीत्वा गार्हपत्यं प्रत्येत्य जाघन्याः स्रुवेणावदायावदाय इन्द्राण्यै स्वाहा इदमिन्द्राण्यै रुद्राण्यै स्वाहा इदं रुद्राण्यै शर्वाण्यै स्वाहा इदं शर्वाण्यै भवान्यै स्वाहा इदं भवान्यै अग्नये गृहपतये स्वाहा इदमग्नये गृहपतये, एताः पञ्च पत्नीसंयाजाहुतीर्जुहुयात् । तत आहवनीये महाव्याहृत्यादिप्राजापत्यान्ता नवाहुतीर्हुत्वा संस्रवं प्राश्य शूलगवपशुना तुल्यवयसं वृषं ब्रह्मणे दक्षिणां दद्यात् । ततः पलाशपत्रेषु पट्सु प्राक्संस्थेषु उदक्संस्थेषु वा पशुलोहितेन “ यास्ते रुद्र पुरस्तात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमः । यास्ते रुद्र दक्षिणतः सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमः । यास्ते रुद्र पश्चात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमः । यास्ते रुद्रोत्तरतः सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमः । यास्ते रुद्रोपरिष्टात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमः । यास्ते रुद्राधस्तात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमः । इदं रुद्राय सेनाभ्य इति सर्वबलिषु त्यागाः । ऊवध्यस्य लोहितलिप्तस्याग्नौ प्रक्षेपणमधस्तान्निखननं वा कृत्वा अनुवातं पशुमवस्थाप्य रुद्राध्यायेन नमस्त इत्यादिना अस्य प्रथमोत्तमाभ्यामनुवाकाभ्यां वा रुद्रानुपस्थाय उदकमुपस्पृशेत् । एतस्य पशोर्मांसं ग्रामं नानयेत् । इति समाप्तः शूलगवः ॥ ॥ अथ गोयज्ञपद्धतिः । तत्र विहितमातृपूजाभ्युदयिकश्राद्धः स्वर्गपशुपुत्रधनयशआयुष्यफलानामन्यतमफलकाम औपासनमरण्यं नीत्वा तत्र परिसमूहनादिभिः संस्कृतायां भूमौ स्थापयेत् । तत्र ब्रह्मोपवेशनान्ते विशेषः । सक्षीरं प्रणयनं कृत्वा पायसं श्रपयित्वा आज्यभागाविष्ट्वा शूलगवदेवताभ्यः अग्निरुद्रशर्वपशुपत्युग्राशनिभवमहादेवेशानेभ्यः स्वाहाकारान्तैर्नामभिश्चतुर्थ्यन्तैर्नवभिर्मन्त्रैः पायसेन प्रत्येकं जुहुयात् । ततः पायसादेव स्विष्टकृते हुत्वा महाव्याहृत्यादिप्राजापत्यहोमान्ते संस्रवं प्राश्य पूर्णपात्रवरयोरन्यतरं ब्रह्मणे दद्यात् ॥ इति गोयज्ञपद्धतिः ॥ ८ ॥

( विश्व० )—‘ शूल···आयुष्यः ’ स्वर्ग्यः स्वर्गाय हितः । एवं पशुभ्यो हितः । धनाय हितः । यशसे हितः । आयुषे हितः । तथाच स्वर्गादेरुपायः शूलगव इत्यर्थः । विचित्रकार्यस्यानेकसामग्रीनियम्यत्वात्प्रत्यभिलाषं शूलगवावृत्तिः । यत्तु तन्त्रोत्पत्तिर्बाध्यत इति तन्न । समानकालीनानेकसामग्रीवशादनेककार्याणामपि समानसमयोत्पत्तिकत्वात् । अत्रापि प्रतिप्रयोगं मातृपूजाभ्युदयिके भवतः । अत्रापि कथं क वा स्यादत आह ‘ औपा···शब्दात् ’ आवसथ्यमरण्ये नीत्वा तत्र दर्शपौर्णमासेष्टिवद्गार्हपत्यादिखरसाधनम् । गार्हपत्ये पञ्चभूसंस्कारपूर्वकमावसथ्यस्थापनं तत आहवनीये दक्षिणाग्नौ च पञ्चभूसंस्कारान्कृत्वा तयोरुद्धरणम् । आहवनीयं दक्षिणेन ब्रह्मासनास्तरणं, प्रणीताप्रणयनं, पात्रासादनं, पवित्रच्छेदनानि त्रीणि, पवित्रे द्वे, प्रोक्षणीपात्रम्, अन्तर्द्धानतृणं, वज्रः, शम्या च, रज्जुशंकुमुद्गरादि उत्तरवेदिसाधनं, पुरीषाहरणपात्रं, उदकं, सिकताः, आच्छादनकुशाः, ततः पवित्रे कृत्वा प्रोक्षणीः संस्कृत्य वज्रान्तर्द्धानतृणशम्यानां प्रोक्षणम् । ततो गार्हपत्याग्रे प्रोक्षणीनिधानम् । ततो वेदिमानं पशुवत् । चतुररत्निः पश्चात्तिर्यक् षडरत्निर्मध्ये प्राची त्र्यरत्निः पुरस्तात्तिर्यक् । अत्र साधनोपायभूतश्लोकः । द्व्यरत्नौ लक्षणं कुर्याद्द्वे सार्द्धत्रये तथा । अर्द्धेरत्नौ ततः सार्द्धे वेदिः स्यात्पाशुकी शुभा । [ अयं पाशाऽविपर्यासेन साधनोपायः । ] प्रकारान्तरमपि । नवारत्निसितारज्जुर्लक्षिता पट्स्वतः परम् । अर्द्धेऽर्द्धे त्रिषु पाशः स्यात्पशुवेदेः प्रसाधत्तमिति ॥ सम्रहसाध-

ना( नि?दि ) दर्शपौर्णमासवेदिवत् अत्र सर्वं मन्त्ररहितं कर्त्तव्यम् । वेदिपरिसमूहनम् उत्कर-करणं सतृणवज्रादानादि सतृणपुरीषस्योत्करे प्रक्षेपान्तं, पूर्वपरिग्रहः, वेद्यां त्रिरुल्लेखनं, हरणं संमर्शनम् । अत्र स्वकर्तृकमेव सर्वम् । ततः शम्यां स्फ्यं चादाय पूर्वोक्तसंचरं परित्यज्य चात्वालमानादि उत्तरवेदिच्छादनान्तं पशुवत् कात्यायनोक्तं तूष्णीम् । ततः गार्हपत्ये पूर्णाहुतिवदाज्यं संस्कृत्य पञ्चगृहीता ( ? ) ह्यग्निप्रणयनमुपयमन्युपनिवपनान्तं तूष्णी कात्यायनोक्तम् । प्रणीयमानेऽग्नौ ब्रह्मासनमनुनेतव्यम् प्रणीतापि उत्तरवेदिकाहवनीयादुत्तरतः स्थाप्या । तत आहवनीयगार्हपत्ययोः परिस्तरणम् । पात्रासादनम् । आज्यस्थाली प्रोक्षणीपात्रमग्निः, अन्यैरवच्छादनकुशाः, संमार्गकुशाः परिधयः उपयमनकुशाः समिधः स्रुवः आज्यं वपाश्रपण्यौ चरुस्थाली साण्डोवृषभः उखा तण्डुलाः, दक्षिणार्थे तुल्यवया गौः बर्हिः प्लक्षशाखा पलाशशाखा त्रिगुणरशना उपाकरणतृणं द्विगुणरशना शासः पात्नेजनीः दधि हिरण्यशकलानि पलाशपत्राणि षट् । आज्यनिर्वापः । रौद्रस्य पशोर्विहितत्वाद्रोपशोश्च कलौ निषेधाच्चरुकर्तव्यताश्रयणे त्वाज्यनिर्वापानन्तरं चरुग्रहणं रुद्रायजुष्टं गृह्णामीति । प्रोक्षणे त्वाशब्दः । ततः पर्यग्निकरणम् ततोऽभ्याखननोत्तरपरिग्रहादिवपाश्रपणान्तं पशुपक्षे । चरुपक्षे तु मण्डेन वपाहोमः । हिरण्याभावे घृतम् । अन्ये पशुधर्मा न भवन्ति । स्मार्तपशुधर्मान्वक्षति । ' वपाठंश्रपयित्वास्थालीपाकमवदानानिच ' स्थालीपाकावदानेषु श्रपणानुकर्षणार्थश्चकारः । स्थालीपाकश्च पशुपुरोडाशस्थानापन्नः । होमानन्तरं तद्ग्रहणम् अग्नयेरुद्रायशर्वायपशुपतयउग्रायाशनयेभवायमहादेवायेशानायजुष्टंगृह्णामि । प्रोक्षणे त्वाशब्दः । न च समानदेवताकत्वात्पशुपुरोडाशयो रौद्र एव स्थालीपाक इति वाच्यम् । देवताभ्य इति शांखायनसौत्रबहुत्वसामर्थ्यादशेषदेवताकीर्त्तनस्य स्थालीपाकेषु न्याय्यत्वात् । कलौ पशोरनादरणे रौद्रश्चरुः । आज्यनिर्वापानन्तरं तद्ग्रहणम् । प्रोक्षणं च । श्रपणं गार्हपत्ये । तत उपयमनकुशादानादि उत्तराघारानन्तरं पशुसमञ्जनम् तदनु शामित्रोल्लेखनम् । आहवनीयोल्मुकेन त्रिः पर्यग्निकरणम् । इतरथावृत्तिः । उल्मुकस्याहवनीये प्रक्षेपः । ततः पुनः सव्येनोल्मुकमादाय केनचिन्नीयमानस्य पशोर्वपाश्रपणीभ्यामन्वारम्भः । शामित्रेग्निनिधानम् तृणास्तरणादि वपामुत्खिद्य प्रक्षाल्य पशुविशसनम् । हृदयाऽद्यवदानग्रहणम् त्रीणि पञ्च वा । वपायाः शामित्रे प्रतपनादि । अन्तरा शाखाग्न्योराहरणम् । उखायां शामित्रे रौद्रपशुश्रपणम् । शूले प्रवृह्य हृदयश्रपणम् । पर्यग्निकरणं चरोः । त्रिः प्रच्युते हृदयमुपरि कुर्यात् । पृषदाज्येन हृदयाभिघारः अन्येषामाज्येन । चरुं वपामङ्गान्युद्वास्य शाखाग्न्योरन्तरा समानयेत् । प्राणदानं कृत्वा वेद्यामासादनम् । आलम्भनम् । ततः आज्यभागौ । 'रुद्रा'''वसां' जुहुयादिति शेषः । कात्यायनोक्तप्रकारेण वपावदानम् । रुद्रायस्वाहेति वपाहोमः । इदं रुद्राय । अन्तरिक्षायस्वाहेति वसाहोमः । इदमन्तरिक्षायेति त्यागः । 'स्थाली'''नायेति' चरुमिश्रितपश्ववदानहोमः । आदौ स्रुवमभिघार्य प्रतिमांसं द्विर्द्विरवदानम् । स्थालीपाकस्य सकृत् । पुनरभिघारणम् । वपावद्धिरण्यम् । नवाहुतयः । प्रयोगः अग्नयेस्वाहा इदमग्नये । रुद्रायस्वा० इदंरुद्राय । शर्वायस्वाहा इदंशर्वाय । पशुपतयेस्वाहा इदंपशुपतये । उग्रायस्वाहा इदमुग्राय । अशनयेस्वाहा इदमशनये । भवायस्वाहा इदंभवाय । महादेवायस्वाहा इदंमहादेवाय । ईशानायस्वाहा इदमीशानाय । 'वन'''रणं' पृषदाज्येन वनस्पतयेस्वाहा इदंवनस्पतये । अङ्गेभ्यः स्थालीपाकाच्च स्विष्टकृत् । अग्नये स्विष्टकृतेस्वाहा इदमग्नयेस्विष्टकृते । एवं वनस्पतिहोमस्विष्टकृद्धोमयोरन्ते दिग्व्याघारणं वसया । दिशः स्वाहा इदंदिग्भ्यः । प्रदिशः स्वाहा इदंप्रदिग्भ्यः । आदिशः स्वा० इदमादिग्भ्यः । विदिशः स्वाहा इदंविदिग्भ्यः । उद्दिशः स्वाहा इदमुद्दिग्भ्यः ( दिग्भ्यः ? दिशः ) स्वाहा इदं दिग्भ्यः । षडाहुतयः प्रागाद्यारभ्य प्रादक्षिण्येन चतस्रः । अन्ते द्वे मध्ये पूर्वार्द्धे च । एवं षट् । ' व्याघा'''तिमिति ' दिग्भ्यः स्वाहेत्यादिग्व्याघारणान्ते जाघन्या गार्हपत्ये पत्नीसंयाजाः पञ्च चतुरवत्तेन । तद्यथा ।

इंद्राण्यैस्वाहा , इदमिंद्राण्यै । रुद्राण्यैस्वाहा इदंरुद्राण्यै । शर्वाण्यैस्वाहा इदंशर्वाण्यै । भवान्यैस्वाहा इदंभवान्यै । अग्नयेगृहपतयेस्वाहा इदमग्नयेगृहपतये । नात्रसंस्रवः । ततोमहाव्याहृत्यादिप्राजापत्यान्ता नवाहुतीराहवनीये होतव्याः । ततः संस्रवप्राशनादिदक्षिणादानान्तम् । 'लोहि···रति' रुद्रदेवताभ्यः सेनाभ्यः रुद्रसेनाभ्यः । रुधिरेण बलिदानविधानाद्विशसनकाले तद्रक्षणम् । पालाशपत्रनिर्मितेषु पात्रेषु कुशेषु च यथालिङ्गं प्रादक्षिण्येन प्रतिदिशं बलिहरणम् । बलिद्वयमुत्तरतः प्राक्संस्थमथवा प्राक्पश्चात् । बलिदानमन्त्रानाह 'यास्ते···नम इति' कुशानास्तीर्य तत्र पालाशेषु बलिदानं यास्तेरुद्रपुरस्तात्सेनेति प्रतिमन्त्रम् । इदंरुद्रेभ्यः पुरस्तात्सेनाधिपत्येभ्यः । इदं रुद्रेभ्यो दक्षिणतः सेनाधिपत्येभ्यः । इदं रुद्रेभ्यः पश्चिमतः सेनाधिपत्येभ्यः । इदंरुद्रेभ्य उत्तरतः सेना० । इदं उपरिष्टात्सेनाधिपत्येभ्यः । इदंरुद्रेभ्योऽवस्तात्सेनाधिपत्येभ्यः । बर्हिर्होमादिब्राह्मणभोजनान्तम् । 'ऊव···नन्ति' अग्नौ आहवनीये । 'अनु···काभ्यां' अनुवातं वायुम् अनुलक्षीकृत्य पशुमवशिष्टं पशुशरीरम् । रुद्रैः रुद्राध्यायाम्नातमन्त्रैः उपतिष्ठते स्तौति । पक्षान्तरमाह—प्रथमेति । प्रथमोत्तमौ आद्यन्तौ ताभ्यां प्रथमः षोडशर्चः । द्रापेऽअन्धसइत्यारभ्य विंशतिकण्डिकात्मक उत्तमः । नैतस्य पशोर्मांसं हरन्ति । एतस्य पशोर्मांसं ग्रामं प्रति नाहरन्तीत्यर्थः । तत आचम्य गार्हपत्यमादाय गृहमागत्यावसथ्यखरे स्थापयेदिति शूलगवः । 'एते···ख्यातः' एतेनैव शूलगवकर्तव्यताकलापेन गोयज्ञः मधुपर्कार्चनादौक्रियमाणः । तस्यापीतिकर्तव्यताकलाप उक्त इत्यर्थः । विशेषमाह । 'पाय···लुप्तः' अत्रापि मातृपूजाऽभ्युदयिके । परिसमूहनाद्याज्यभागान्ते विशेषः । आसादने तण्डुलानन्तरं पयः । चरुग्रहणप्रोक्षणेऽन्न्यादीशानान्तेन । आज्यभागान्ते शूलगवदेवताभ्यो होमः पूर्ववत् । स्विष्टकृदादिब्राह्मणभोजनान्तं पूर्ववत् । तदनन्तरं वैश्वदेवः । शूलगवेऽत्रापि शूलगवदेवताहोमातिरिक्ता निरर्थिका इतिकर्तव्यता लुप्यत इत्यर्थः । 'तस्य···क्षिणा' आलभ्यमानपशोर्वयसा तुल्यवया गौर्दक्षिणा देया । एवमाचार्यादौ गृहागते आसनमाहार्येत्यादि कुरुतेत्येवमन्तं कृत्वा परिसमूहनाद्याज्यासादनान्ते । वपाश्रपण्यौ शूलमुखा स्थाली तण्डुलाः प्लक्षशाखा त्रिगुणरशना उपाकरणतृणं द्विगुणरशना गोपशुः त्रिगुणरशना पात्रेजनीः असिः हिरण्यशकलानि दधि बर्हिः संस्रवपात्रं दक्षिणार्थे तुल्यवया गौः । शूलगवदेवताभ्यश्चरुग्रहणम् । पवित्रकरणादि । बर्हिस्तरणानन्तरं प्लक्षशाखास्तरणम् । शाखानिखननादिप्रधानहोमान्तं शूलगववत् । आचार्यार्चने बार्हस्पत्यः पशुः । आज्यभागानन्तरं बृहस्पतयेस्वाहेतिवपाहोमः । स्थालीपाकमिश्राङ्गहोमः बृहस्पतयेस्वाहेति । वनस्पतिहोमादि ब्राह्मणभोजनान्तम् । विवाहे प्राजापत्यः पशुः । एवं सर्वत्र पशुषु देवतामात्रे विशेषः । अष्टमीकण्डिका ॥ ८ ॥

अथ वृषोत्सर्गः ॥ १ ॥ गोयज्ञेन व्याख्यातः ॥ २ ॥ कार्तिक्यां पौर्णमास्याᳬरेवत्यां वाश्वयुजस्य ॥ ३ ॥ मध्येगवाᳬ सुसमिद्धमग्निं कृत्वाज्यᳬ संस्कृत्येहरतिरिति षट् जुहोति प्रतिमन्त्रम् ॥ ४ ॥ पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः । पूषा व्वाजᳬ सनोतु नः स्वाहा, इति पौष्णस्य जुहोति ॥ ५ ॥ रुद्रान् जपित्वैकवर्णं द्विवर्णं वा यो वा यूथं छादयति यं वा यूथं छादयेद्रोहितो वैव स्यात्सर्वाङ्गैरुपेतो जीववत्सायाः पयस्विन्याः पुत्रो यूथे च रूपस्वित्तमः स्यात्तमलंकृत्य यूथे मुख्याश्चतस्रो वत्सतर्यस्ता-

श्चालंकृत्य एतं युवानं पतिं वो ददामि तेन क्रीडन्तीश्चरथ प्रियेण ॥ मा नः साप्तजनुषाऽसुभगा रायस्पोषेण समिषा मदेमेत्येतयैवोत्सृजेरन् ॥ ६ ॥ नभ्यस्थमभिमन्त्रयते मयोभूरित्यनुवाकशेषेण ॥ ७ ॥ सर्वासां पयसि पायसꣳ श्रपयित्वा ब्राह्मणान्भोजयेत् ॥ ८ ॥ पशुमप्येके कुर्वन्ति ॥ ९ ॥ तस्य शूलगवेन कल्पो व्याख्यातः ॥ १० ॥ ॥ ९ ॥

( कर्कः )—' अथ वृषोत्सर्गः ' व्याख्यास्यत इति सूत्रशेषः । ' गोय'''ख्यातः ' एतदुक्तं भवति पायसेन शूलगवदेवताभ्यो होमः । कार्तिक्यां पौर्णमास्यां रेवत्यां वाश्वयुज्यां पौर्णमास्यामेव कर्तव्यः । वाशब्दो विकल्पार्थः । ' मध्ये'''न्त्रम् ' आज्यं संस्कृत्येतिग्रहणं प्रागाघारहोमादप्याहुतयो यथा स्युरिति । तत आघारादि, पुनः पायसेन शूलगवदेवताभ्यो होमः । ' पूषा'''होति ' तस्य च श्रपणानुपदेशात्तद्भूतस्योपादानम् । तत उभयोः सकाशात्स्विष्टकृत् व्याहृत्यादि च । ततो ' रुद्रान्'''णं वा ' वृषमुत्सृजेत् । ' यो वा'''येत् ' यो नाम महत्त्वेन गोयूथं छादयति यो वा तेनैव छाद्यते । लघुरित्यर्थः । ' रोहि'''स्यात् ' रोहित एव वा भवति । यथोक्तो वेति विकल्पः । ' सर्वाङ्गैरुपेतः ' अन्यूनाङ्ग इत्यर्थः । जीववत्सायाः पयस्विन्याः पुत्रो भवेत् । ' यूथे'''कृत्य ' रुक्मालादिभिः पतिं वो ददामीत्येतमुत्सृजेत् । ' नभ्य'''शेषेण ' वत्सतरीणां मध्यस्थो नभ्यस्थ इत्युच्यते । इदमन्यत्कर्मान्तरमधुनोच्यते । ' सर्वा'''ख्यातः ' शूलगववत्सर्वं कर्तव्यमित्यर्थः ॥

( जयरामः )—'अथ वृषोत्सर्गः' कर्मविशेषः, वक्ष्यत इति सूत्रशेषः । व्याख्यात इति पायसेन शूलगवदेवताहोमः कथितः । स च कार्तिक्यामाश्वयुज्यां वा पौर्णमास्यां भवति । रेवत्यामिति तद्विशेषणं फलातिशयार्थम् । आज्यं संस्कृत्येतिग्रहणमाघारहोमादपि प्रागाज्याहुतयः स्युरिति । तत आघारावाज्यभागौ हुत्वा पायसेन शूलगवदेवताहोमः ततः पूषागा इत्येकाहुतिः पिष्टचरोः । संख्याऽनुपदेशात् । स च श्रपणानुपदेशात्सिद्ध एवासाद्यते । अथ मन्त्रार्थः । तत्र परमेष्ठी गायत्री पूषा पिष्टहोमे० । पूषा सूर्यो नोऽस्माकङ्गाः धेनूरिन्द्रियाणि च अन्वेतु अनुगृह्णातु । अर्वतः अश्वान् प्राणान् वा रक्षतु । वाजमन्नं सनोतु ददातु । पूषाशब्दावृत्तिरादरार्था । ततः पायसपौष्णाभ्यां स्विष्टकृते हुत्वा प्राशनान्ते रुद्रान् रुद्रमन्त्रान् जपित्वा यो वा महत्त्वेन यूथाच्छादकः तेनैव वा लघुत्वेन छाद्यते । रोहितः लोहित एव स्याद्वा । यथोक्तो वेति विकल्पः । सर्वाङ्गैरुपेत इत्यन्यूनाधिकाङ्ग इत्यर्थः । जीववत्सायाः पुत्र इत्यादिगुणो यः स्यात्तमलंकृत्य स्रगादिभिः यूथे प्रधानाश्चतस्रो वत्सतरीश्चालंकृत्योत्सृजेत् एतमिति मन्त्रेण । तस्यार्थः तत्र प्रजापतिस्त्रिष्टुप् गाव उत्सर्गे० । भो वत्सतर्यः एतं वृषम् पतिं भर्तारं वो युष्मभ्यं ददामि । तेनानेन प्रियेण सह क्रीडन्त्यो यूयं चरथ चरत स्वच्छन्दं विहरतेति यावत् । तृणानि खादतेति वा । नोऽस्माकं स्थाने साप्तजनुषा सप्तजन्मसंबद्धेन पत्या सह असुभगा मा भवतेति शेषः । वयमपि युष्मत्प्रसादाद्रायस्पोषेण धनादिपुष्ट्या सम्यग्भवेन इषा अन्नेन च मदेम तृप्याम । एतया ऋचा वत्सं वत्सतरीश्चोत्सृजेरन् । नभ्यस्थं वत्सतरीमध्यस्थम् । इदं कर्मान्तरम्—सर्वासामिति यावत्यः स्वीया गावस्तावतीनाम् । एकं पशुम् । पायसप्राशनं च कुर्वन्ति तस्य कल्पो व्याख्यातः शूलगववत्सर्वं कर्तव्यमित्यर्थः ॥ ९ ॥ ॥ * ॥

( हरिहरः )—' अथ वृषोत्सर्गः ' अथ शूलगवानन्तरं वृषोत्सर्गः वृषस्य वक्ष्यमाणस्योत्सर्गं उत्सर्जनं वक्ष्यत इति सूत्रशेषः । स च कामाधिकारात्फलस्य वाऽनभिधानात् किं विश्वजिन्न्यायेन

स्वर्गफलः कल्प्यते उत पूर्वोक्तशूलगवानन्तराभिधानात्तत्फल इति संदेहः । तत्र विश्वजिन्न्यायस्य सर्वथाऽश्रुतफलकर्मविषयत्वान्नात्र प्रवृत्तिः । कुतः संनिधिश्रुतस्य शूलगवफलस्य स्वर्गादेरत्रान्वययोग्यत्वात्, तस्मादयमपि पशुः स्वर्गपशुपुत्रधनयशआयुष्कामस्यैवेत्यभिप्रेत्याह 'गोयज्ञेन व्याख्यातः' स च गोयज्ञेन गवा रौद्रेण पशुना यज्ञः गोयज्ञस्तेन व्याख्यातः गोयज्ञसाध्यफलेतिकर्तव्यतावानित्यर्थः । ततश्चास्मिन्नपि स्वर्गपशुपुत्रधनयशआयुष्कामस्याधिकारः । स कदा कर्तव्य इत्यपेक्षायामाह 'कार्ति···जस्य' कार्तिक्यां पूर्णिमायामाश्विनस्य रेवत्यां रेवतीनक्षत्रे वा कर्तव्य इति सूत्रशेषः । शास्त्रान्तरेतु चैत्र्यामाश्वयुज्यां वेति कालान्तरमुक्तम् । 'मध्ये···मन्त्रम्' मध्ये गवां गोष्ठे पञ्चभूसंस्कारपूर्वकमावसथ्याग्निं सुसमिद्धं प्रज्वलितं कृत्वा आज्यं संस्कृत्य पर्युक्षणान्ते इहरतिरित्यादिभिः षड्भिर्मन्त्रैः प्रतिमन्त्रं षडाज्याहुतीर्जुहोति । अत्र मध्येगवामिति देशविशेषनियमानुविधानात् देशान्तरस्येह यागानङ्गत्वम् । 'पूषा···होति' पौष्णस्य पूषा देवता अस्येति पौष्णस्तस्य चरोः पूषागा इत्यादिमन्त्रेण सकृज्जुहोति होमसंख्यानभिधानात् तस्य च श्रपणानुपदेशात् सिद्ध एवोपादीयते । अयं पौष्णश्चरुः पिष्टमयो भवति । कुतः, तस्माद्यं पूष्णे चरुं कुर्वन्ति प्रपिष्टानामेव कुर्वन्तीति श्रुतेः । 'रुद्रान्···जेरन्' रुद्रान्नमस्त इत्यध्यायान्नातान् जपित्वा जपधर्मेण पठित्वा, अत्र शूलगवातिदेशप्राप्तोऽपि रुद्रजपविधिः प्रथमोत्तमानुवाकजपविकल्पनिवृत्त्यर्थः जपावसरज्ञापनार्थो वा । तन्न । अपूर्व एवायम् जप्यत्वेनाप्राप्तत्वात् । प्रकृतौ हि रुद्राणां पशूपस्थाने करणत्वेन विहितत्वात् । एक एव शुक्लादिवर्णो रूपं यस्य स एकवर्णः तम् । अथवा द्वौ वर्णौ यस्य स द्विवर्णः तं वृषम् । एवं वर्णविशेषनियममभिधायाधुना वृषस्य परिमाणविशेषनियममाह । यो वृषो यूथं कृत्स्नं वर्गं छादयति स्वपरिमाणेनाधः करोति तं, वा यं वृषं यूथं वर्गश्छादयेत् अधः कुर्यात् तं वा यूथादधिकपरिमाणं वा न्यूनपरिमाणं वेत्यर्थः । रोहितो लोहित एव वा यः स्यात्, एवकारेण लोहितस्य एकवर्णद्विवर्णाभ्यां प्राशस्त्यमुच्यते, पुनः कीदृक् ? सर्वैरङ्गैरुपेतः समन्वितः न पुनर्हीनाङ्गोऽधिकाङ्गो वा, तथा जीवाः प्राणवन्तो वत्साः प्रसूतिर्यस्याः सा जीववत्सा तस्या गोः पुत्रः । तथा पयः क्षीरं बहुलं विद्यते यस्याः सा पयस्विनी तस्या गोः पुत्रः। तथा यूथे वर्गे विषये रूपमस्यास्तीति रूपस्वी अतिशयेन रूपस्वी रूपस्वितमः वृषः स्यात् तमुक्तगुणविशिष्टं वृषमलंकृत्य वस्त्रमाल्यानुलेपहेमपट्टिकाग्रैवेयकघण्टादिभिर्वृषोचितभूषणैर्भूषयित्वा न केवलं वृषमात्रं ताश्च वत्सतरीरप्यलंकृत्य, कीदृशीः याः यूथे स्ववर्गे मुख्याः गुणैः श्रेष्ठा वत्सतर्यः कति चतस्रः चतुःसंख्योपेतास्ताः, एतं युवानमित्येतयर्चा उत्सृजेरन् त्यजेयुः । 'नभ्य···षेण' नभ्यस्थं वत्सतरीणां मध्ये तिष्ठन्तमभिमन्त्रयते आभिमुख्येन मन्त्रैः स्तौति । केन मयोभूरभिमावाहि स्वाहेत्यारभ्य स्वर्णसूर्यः स्वाहेत्यन्तेनानुवाकशेषेणेति वृषोत्सर्गसूत्रार्थः ॥ ॥ अथ पायसप्राशनं नाम कर्मान्तरम् । 'सर्वा···जयेत्' यस्य यावन्त्यो गावः दोग्ध्र्यः सन्ति स तासां सर्वासां पयसि दुग्धे पायसं परमान्नं श्रपयित्वा पक्त्वा ब्राह्मणान् त्रिप्रभृतीन् यथाशक्ति भोजयेत् तर्पयेत् । 'पशु···ख्यातः' एके आचार्याः पशुमपि छागं च कुर्वन्ति आलभन्ते उक्तविधिना पायसश्रपणपूर्वकं ब्राह्मणान् भोजयन्ति च, तस्य पशोः शूलगवेन शूलगवाख्येन कर्मणा कल्पः इतिकर्तव्यताकलापो व्याख्यातः कथितः। इति सूत्रार्थः ॥ ॥ अथ पद्धतिः । तत्र स्वर्गादीनामन्यतमफलप्राप्तिकामः कार्तिक्यां पौर्णमास्यामाश्वयुजस्य रेवत्यां वा शास्त्रान्तराच्चैत्र्यामाश्वयुज्यां वा मातृपूजापूर्वकमाभ्युदयिकश्राद्धं कृत्वा गोष्ठे गत्वा गवां मध्ये पञ्चभूसंस्कारान् कृत्वा आवसथ्याग्निं स्थापयेत् । प्रणीताप्रणयनकाले प्रणीतापात्रमध्ये पिष्टादिना अन्तर्द्धानं विधाय मूलदेशे पयः इतरत्र जलं प्रक्षिप्य प्रणयेत् । तण्डुलानन्तरं पौष्णं पिष्टमयं चरुं सिद्धमेवासादयेत्, प्रणीतेन पयसा पायसं श्रपयेत्, पर्युक्षणान्ते सुसमिद्धेऽग्नौ 'इहरतिः स्वाहा १ इह

रमध्वꣳस्वाहा २ इहधृतिः स्वाहा ३ इहस्वधृतिः स्वाहा ४ उपसृजं धरुणं मात्रे धरुणो मातरं धयन्स्वाहा ५ । रायस्पोषमस्मासु दीधरत्स्वाहा ६ । इदमग्नये इति षट्सु त्यागाः । एवं षडाहुतीर्हुत्वा आज्यभागान्ते पायसेन शूलगवदेवताभ्योऽन्यादिभ्य ईशानान्ताभ्यो नवाहुतीः प्रत्येकं हुत्वा पिष्टचरोः पूषागाअन्वेतुनइत्यादिसनोतुनइत्यन्तेन स्वाहाकारयुतेन मन्त्रेणैकामाहुतिं हुत्वा इदं पूष्णे इति त्यागं विधाय पायसपौष्णाभ्यां स्विष्टकृते हुत्वा महाव्याहृत्यादिहोमसंस्रवप्राशनान्ते पूर्णपात्रवरयोरन्यतरं ब्रह्मणे दक्षिणां दद्यात् । अथ नमस्तेरुद्रमन्यव इत्यारभ्यासमाप्ते रुद्राञ्जपित्वा एकवर्णादिगुणविशिष्टं वृषभं चतसृभिर्वत्सतरीभिः सहितं वस्त्रमाल्यानुलेपहेमालंकारादिभिरलंकृत्य एतं युवानमित्यादिसमिषामदेमेत्यन्तया ऋचा उत्सृजेरन् । ततो वत्सतरीमध्ये स्वं वृषभं मयोभूरभिमावाहि स्वाहेत्यारभ्य स्वर्णसूर्यः स्वाहेत्यन्तेनानुवाकशेषेणाभिमन्त्रयते । इति वृषोत्सर्गः । अत्र यत्प्रेतकृत्यं तदन्योक्तं लिख्यते । तत्र प्रेतपित्रादिगतनानाविधसमुच्चितस्वर्गादिफलकामस्य स्वगतपुण्यातिशयाशोकमोक्षगतिकामस्य वाऽधिकारः । तत्र प्रथमसंवत्सराभ्यन्तरे कृतसपिण्डीकरणस्याकृतसपिण्डीकरणस्य च मातृस्थापनपूजनाभ्युदयिकश्राद्धानि न भवन्ति । सूतकान्तद्वितीयमहरेवास्य परं वृषोत्सर्गस्य कालो न कार्तिक्यादिः । प्रथमसंवत्सरे काम्यकर्माभ्युदयिकयोरनधिकारात् । कुतः 'तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृते' इतिवचनात् । सूतकान्ते द्वितीयेऽह्नीति यद्वचनं तत्तथैव काम्यं यत्कर्मेति वचनं बाधित्वैव प्रवर्तते अनन्यविषयत्वात् । कार्तिक्यादिवचनं तु संवत्सरोत्तरकालीनकार्तिक्यादौ संकोच्यम्, अन्यथा बाधसापेक्षत्वाभ्यां वैषम्यापत्तेः । ततश्च संवत्सरानन्तरं कार्तिक्यादिकाले पित्रादिगतनानाविधतृप्त्यादिकामेन क्रियमाणो वृषोत्सर्गो मातृस्थापनपूजनश्राद्धपूर्वक एव कर्तव्यः । तस्य च कार्तिकीचैत्र्याश्वयुजीरेवत्यः कालाः । अथ फलश्रुतिः—उत्सृष्टो वृषभो यस्मिन् पिबत्यथ जलाशये । शृङ्गेणोल्लिखते भूमिं यत्र क्वचन दर्पितः । पितॄणामन्नपानं तत्तत्प्रभूत्युपतिष्ठते । वृषोत्सर्गादृतेनान्यत्पुण्यमस्ति महीतले । तथा । वृषभस्य तु शब्देन पितरः सपितामहाः । आवर्तमाना दृश्यन्ते स्वर्गलोके न संशयः। जले प्रक्षिप्य लाङ्गूलं तोयं यद्धरते वृषः । दशवर्षसहस्राणि पितरस्तेन तर्पिताः । कुलात्समुद्धृता यावच्छृङ्गे तिष्ठति मृत्तिका । भक्ष्यभोज्यमयैः शैलैः पितरस्तेन तर्पिताः । गवां मध्ये यदा चैष वृषभः क्रीडते तु यत् । अप्सरौघसहस्रेण क्रीडन्ति पितरस्ततः । लाङ्गूलमुद्यमं यावत्तोयेषु क्रीडते तु सः । अप्सरोगणसंघैश्च क्रीडन्ति पितरः सदा । सहस्ररत्नपात्रेण कनकेन यथाविधि । तृप्तिः स्याद्या पितॄणां वै सा वृषेण समोच्यते । एतानि चार्थवादफलानि समुच्चितान्येव कामनाविषयः । अथ वृषस्वरूपम्—जीववत्सायाः पयस्विन्याः पुत्रो मुखपुच्छपादेषु सर्वेशुक्लो नीलो लोहितो वा वृषः । तथा—उन्नतस्कन्धककुद ऋजुलाङ्गूलभूषणः । महाकटितटस्कन्धो वैडूर्यमणिलोचनः । प्रवालगर्भशृङ्गाग्रः सुदीर्घऋजुवालधिः । नवाष्टदशसंख्यैस्तु तीक्ष्णाग्रैर्दशनैः शुभैः । मल्लिकाख्यश्च मौक्तव्यस्तथा वर्णेन ताम्रकः । कपिलो वृषभः श्रेष्ठो ब्राह्मणस्य प्रशस्यते । श्वेतो रक्तश्च कृष्णश्च गौरः पाटल एव च । तथा—पृथुकर्णो महास्कन्धः सूक्ष्मरोमा च यो भवेत् । रक्ताक्षः कपिलो यश्च रक्तशृङ्गगलस्तथा । श्वेतोदरः कृष्णपृष्ठो ब्राह्मणस्य प्रशस्यते । स्निग्धवर्णेन रक्तेन क्षत्रियस्य प्रशस्यते । काञ्चनाभेन वैश्यस्य कृष्णः शूद्रस्य शस्यते । यस्य प्रागायते शृङ्गे स्वमुखाभिमुखे सदा । सर्वेषामेव वर्णानां स वै सर्वार्थसाधकः । तथा—मार्जारपादः कपिलस्तथा कपिलपिङ्गलः । श्वेतो मार्जारपादः स्यात्तथा मणिनिभेक्षणः । तथा—गौरतित्तिरिकृष्णतित्तिरिसन्निभौ । तथा—आकर्णमूलात् श्वेतं यस्य मुखं स नान्दीमुखः । विशेषतो रक्तवर्णः । तथा—यस्य जठरं श्वेतवर्णं पृष्ठं च स समुद्रनामा । अतसीवर्णो जघन्यः । तथा—भूमौ कर्षति लाङ्गूलं पुनश्च स्थूलवालधिः । पुरस्तादुन्नतो नीलः स श्रेयान्वृषभः स्मृतः । तथा—रक्तशृङ्गाग्रनयनः श्वेतदन्तोदरस्तथा । प्रवालसदृशास्येन वृषो

धन्यतरः स्मृतः । एते सर्वे धनधान्यविवर्द्धनाः । तथा—चरणाग्रमुखं पुच्छं यस्य श्वेतानि गोपतेः । लाक्षारससवर्णश्च तन्नीलमितिनिर्दिशेत् । तथा—लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः । श्वेतः खुरविषाणाभ्यां स वृषो नील उच्यते । तथा नीलाधिकारे—एवं वृषं लक्षणसंप्रयुक्तं गृहोद्भवं क्रीतमथापि राजन् । मुक्त्वा न शोचेन्मरणं महात्मा मोक्षे मतिं चाहमतो विधास्ये । इति । गाथाऽपि तदर्थेयम् । एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् । यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् । अथ वर्जनीया वृषाः—कृष्णताल्वोष्ठदशना रुक्षशृङ्गशफाश्च ये । आसक्तदन्ता ह्रस्वाश्च व्याघ्रभस्मनिभाश्च ये । ध्वांक्षगृध्रसवर्णाश्च तथा मूषकसंनिभाः । कुब्जाः काणाश्च खञ्जाश्च केकराक्षास्तथैव च । अत्यन्तश्वेतपादाश्च उद्भ्रान्तनयनास्तथा । नैते वृषाः प्रमोक्तव्या गृहे धार्याः कथंचन । उपादेयश्च वृषस्त्रिहायनः तथा वत्सतर्योऽपि त्रिहायन्य एव । अथ स्नात आचान्तः प्रेतपुत्रादिरन्यो वा होता ब्रह्मा च, तत्रान्यपक्षे ॐ अद्यामुकमासीयामुकतिथौ पित्रादिगतस्वर्गकामो वृषोत्सर्गमहं करिष्ये इति प्रतिज्ञाय अद्यकर्तव्ये वृषोत्सर्गहोमकर्मणि भवान्मया निमन्त्रितः । तथैव होमकर्मणि कृताकृतावेक्षकत्वेन मया भवान्निमन्त्रित इति वस्त्रचन्दनताम्बूलादिभिः होतृब्रह्माणौ वृणुयात् । ततः स्वयं गवां मध्ये गोष्ठे पञ्च भूसंस्कारान्कृत्वा आवसथ्याग्निं स्थापयेत् । होतृब्रह्मप्रणीतानामासनदानम् । ब्रह्माणमुपवेश्य प्रणीतासु क्षीरोदकप्रणयनम् । उदकमात्रप्रणयनमिति केचित् । आज्यं तण्डुलाः पौष्णः पिष्टमयः सिद्ध एव चरुः । होतुर्वस्त्रयुगं सुवर्णकांस्यादिदक्षिणा च । ब्रह्मणः पूर्णपात्रं वरो वा दक्षिणा ॥ प्रोक्षण्युदकेन पात्रप्रोक्षणम्, पवित्रस्थ च प्रणीतासु निधानं, प्रणीतेन पयसा यथाविधि पायसचरुश्रपणम्, उद्वासनादि, प्रोक्षण्युदकेन पर्युक्षणान्तमाज्येन इहरतिरित्याद्याः षडाहुतयः इदमग्नय इति षड्त्यागाः । तत आघारावाज्यभागौ, ततः पायसेनाग्नय इत्यादीशानान्तः शूलगवदेवताभ्यो होमः । ततः पिष्टचरुणा पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः । पूषा वाजꣳसनोतु नः स्वाहेत्येकाहुतिः पूष्णे । ततः पायसपिष्टचरुभ्यां स्विष्टकृद्धोमः । ततो भूराद्या नवाहुतयः संस्रवप्राशनम् । दक्षिणान्ते रुद्रान् जपित्वा एकस्मिन्पार्श्वे चक्रेणापरस्मिन् शूलेन वृषभमङ्कयित्वा वत्सतरीर्वृषं च हिरण्यवर्णेति चतसृभिः शंनोदेवीरिति च स्नापयित्वा लोहघण्टिकानूपुरकनकपट्टादिभिः पञ्चाप्यलंकृत्य वृषभस्य दक्षिणे कर्णे जपेत् । वृषो हि भगवान्धर्मश्चतुष्पादः प्रकीर्तितः । वृणोमि तमहं भक्त्या स मां रक्षतु सर्वत इति ॥ तत उत्सर्गः ' ॐ अद्यामुकमासीयामुकतिथौ०, एतं युवानं पतिमित्यादिसमिषामदेमेत्यन्तेनैव । पारस्करेण एतयैवोत्सृजेरन्निति एवकारेणान्यनिषेधात् । तथाच ऋगर्थः । हे वत्सतर्यो वो युष्माकं एतं वृषं युवानं तरुणं पतिं भर्तारं ददामि त्यजामीत्यर्थः । हे वत्सतर्यो यूयमपि न मयोपयोक्तव्याः, किंतु तथा त्यक्ताः सत्य उपवनेषु अनेन प्रियेण पत्या सह क्रीडन्ती. क्रीडन्त्यः चरथ स्वच्छन्दं भ्रमत चरत तृणानि खादतेति वा । चर गतिभक्षणयोः । नोऽस्माकं गृहेषु साप्तजनुषा सप्तजन्मपर्यन्तं असुभगा मा चरत, किंच युष्मत्प्रसादाद्वयं रायस्पोषेण धनपुष्ट्या इषा अन्नेन च संमदेम सम्यक् तृप्येम, इत्याशंसा । तदुक्तम्—ततः प्रमुदितास्तेन वृषभेण समन्विताः । वनेषु गावः क्रीडन्ति वृषोत्सर्गप्रसिद्धिषु ॥ ततो वत्सतरीमध्यस्थमभिमन्त्रयते मयोभूरित्यनुवाकशेषेण । ततो यवतिलयुतं जलं पित्रादिभ्यः पितृतीर्थेन दद्यादनेन मन्त्रेण । स्वधा पितृभ्यो मातृभ्यो बन्धुभ्यश्चापि तृप्तये । मातृपक्षाश्च ये केचिद्ये चान्ये पितृपक्षजाः । गुरुश्वशुरबन्धूनां ये कुलेषु समुद्भवाः । ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः ॥ वृषोत्सर्गेण ते सर्वे लभन्तां तृप्तिमुत्तमाम् । दद्यादनेन मन्त्रेण तिलाक्षतयुतं जलम् । उत्सृष्टान्नोपयुञ्जीत स्वामी चान्योऽपि मानव इति । ननु यथा वापीकूपतडागादावुत्सर्गे कृते परस्मिंश्चास्वीकारिते निरिष्टिक(?)तज्जलगोचरतया सर्वेषामौपादानिकं स्वत्वं भवति, तथेहापि त्यक्तानां वृषादीनां केनचिदप्यस्वीकृतानां निरिष्टिकानामौपादानिकं स्वत्वं कुतो न भवति तत्राह—नैवाज्यं न

च तत्क्षीरं पातव्यं केनचित्कचित्। न वाह्योऽसौ वृषश्चैपामृते गोमूत्रगोमये इति॥ ततश्च यथेष्ट-विनियोगनिषेधान्मतिस्तोकत्वेन(?)किंचिदप्युपादानं कार्यम्। ननु औपादानिकस्वत्वानन्तरं विक्रीय कपर्दिकादानमप्यस्त्विति चेन्न। नवाह्य इत्यस्य विनियोगमात्रोपलक्षणत्वात् विक्रयस्यापि यथेष्टवि-नियोगरूपत्वात्, किंतु गोपशुविक्रयस्य निषेधश्रुतेः कथं तदर्थमुपादानम्। उल्लङ्घितमर्यादो विक्रयं करोत्विति चेत्, तस्योच्छृङ्खलत्वेन हेयत्वात्, शास्त्राण्यनधिकृत्य शास्त्राप्रवृत्तेः (?) संकल्पविरोधाच्च, तथाह्यनेन प्रियेण वनेष्वनवच्छिन्नकालं चरथेति संकल्पो ननु परोपेतं गोबलीवर्दरूपं मुच्यतामिति(?)। वाप्यादौ तु सर्वभूतानि स्नानपानावगाहनादि यथेष्टमिह कुर्वन्त्वित्येतावानेव संकल्पः। यदि तु वत्सत-रीणामपत्यानि केनचिदुपादाय दोह्यन्ते तदाऽस्य न दोषः। तत्पर्यन्तमेव दोहनवाहननिषेधवाक्य-स्य तात्पर्यात् भवेद्वचनमिति न्यायाच्च॥ ॥ अथ पायसप्राशनं नाम कर्मान्तरं प्रकरणैक्यात्स्वर्गा-द्यन्यतमकामस्याभिधीयते। तत्र कालविशेषानभिधानात्प्रकृतोत्सर्गकाल एव गृह्यते। ततश्च वृषोत्सर्ग-विहितकार्तिक्याद्यन्यतमसमये मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वाऽऽवसथ्याग्नौ स्वकीयानां सर्वा-सां गवां दोग्ध्रीणां पय आदाय तत्र पयसि तण्डुलान्प्रक्षिप्य पायसं श्रपयित्वा त्रिप्रभृतीन् यथाशक्ति यथासंभवं ब्राह्मणान्भोजयेत्। अथवा शूलगवविधिना छागं पशुं च कुर्यादिति पायसप्राशनम्॥ एष वृषोत्सर्गविधिः स्वर्गादिकामस्यौपासनाग्नौ साग्नेर्भवति। यः पुनः प्रेतगतस्वर्गादिफलसाधनभूतो ब्राह्मणादीनां वर्णानामेकादशत्रयोदशषोडशैकत्रिंशत्तमेष्वस्ति वृषोत्सर्गः स्मृत्यन्तरे विहित, तत्रापि द्विजातीनां साग्निनिरग्नीनां काण्वमाध्यंदिनशाखानुसारिणां लौकिकाग्निनाऽनेनैव विधानेन कर्तव्यो मातृपूजाभ्युदयिकश्राद्धं विना। प्रेतसपिण्डानां प्रथमेऽब्दे काम्याभ्युदयिकयोर्निषेधात्। शूद्रस्य तु मन्त्रवर्जं क्रियामात्रम्। निरग्नीनां तु स्वर्गादिकामानां कार्तिक्याद्यन्यतमकाले लौकिकाग्नौ कर्तव्यो भवतीति विशेषः। अत्र केचिदाहुः—एकादशेऽह्नि संप्राप्ते यस्य नोत्सृज्यते वृषः। प्रेतत्वं हि स्थिरं तस्य दत्तैः श्राद्धशतैरपि, इत्यादिस्मृतिवचनात्, क्षत्रियवैश्यशूद्रैरप्येकादशेऽह्न्येव आशौचमध्ये निय-तकालीनत्वाद्वृषोत्सर्गः कर्तव्य इति। तदयुक्तम्। अत्र प्रकरणे एकादशाहादिशब्दा आशौचसूतका-न्तकालोपलक्षकाः। अन्यथा 'अहन्येकादशे नाम' तथा 'आनन्त्यात्कुलधर्माणामायुषश्च परिक्षयात्। अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते' इत्यादिभिर्वचनैर्नामकरणसपिण्डनादिक्रिया क्षत्रियादीना-मशुद्धावेवापद्येत। न तदिष्यते। शुचिना कर्म कर्तव्यमिति कर्माधिकारे शुद्धेरपेक्षितत्वात्, सा च शुद्धिः क्षत्रियादीनां त्रयोदशे षोडशे एकत्रिंशत्तमे दिने भवति। तस्मादेकादशाहादिशब्दाः सूतका-न्तमुपलक्षयन्ति॥ ९॥ *॥ ॥ *॥

(विश्व०)—गोयज्ञातिदिष्टशूलगवधर्मातिदेशार्थमाह 'अथ वृषोत्सर्गः' उच्यत इति शेषः। अत्रापि स्वर्गपुत्रपशुधनायुःकीर्तिकामानामधिकारः। 'गोय'''ख्यातः' पायसेनाऽग्नये रुद्रायेत्यादि-शूलगवदेवतोद्देश्यकहोमो भवतीत्यर्थः। समयमाह 'कार्ति'''जस्य' कार्तिक्यां पौर्णमास्यामाश्वयु-जस्य वा पौर्णमास्यां भवतीत्यर्थः। रेवत्यामित्याश्वयुज्यां फलातिशयार्थम्। अत्रादौ मातृपूजाभ्युद-यिके। 'मध्ये'''कृत्वा' गोपदं विशेषणम्। उपलक्षणमित्यन्ये। सुसमिद्धमित्येतद्भूसंस्कारनिवृत्त्यर्थं, भूसंस्कारा भवन्तीत्यन्ये। अयं च वृषोत्सर्गः मृतस्य सूतकान्ते प्रेतत्वनिवृत्तये आवश्यकः। सच सा-ग्नेर्दाहदिनादेकादशाहे। निरग्नेस्तु मरणदिनात्। तत्रादौ विष्णुपूजनतत्तर्पणे। तत्र प्रयोगः—विधि-वत्स्नात्वा प्राणानायम्य देशकालौ संकीर्त्यामुकप्रेतस्य प्रेतत्वनिवृत्त्यर्थं वृषोत्सर्गयोग्यताप्राप्त्यर्थं विष्णोः पूजनपूर्वकं तर्पणमहंकरिष्ये इति संकल्प्य कार्यं पुरुषसूक्तेन मन्त्रैर्वा वैष्णवैरपि दक्षिणाभिमुखो भूत्वा प्रेतं विष्णुमिति स्मरन्। अनादिनिधनो देवः शङ्खचक्रगदाधरः। अव्ययः पुण्डरीकाक्षः प्रेतमो-क्षप्रदो भव। अनेनामुकप्रेतस्य प्रेतत्वनिवृत्तिरस्तु। वृषोत्सर्गयोग्यताप्राप्तिरस्तु। इतिविष्णुतर्पणम्

॥ ॥ अथ वृषोत्सर्गः ॥ तत्र देशकालावुच्चार्योऽमुकप्रेतस्य प्रेतत्वनिवृत्त्यर्थमेकादशाहादियोग्यताप्राप्त्यर्थं वृषोत्सर्गं करिष्य इति संकल्प्य मध्ये गवां संस्कृतप्रदेशे सुसमिद्धमग्निं कृत्वा ईशाने रुद्रकलशस्थापनम् । ततोऽग्नेर्दिग्विदिक्ष्वष्टौ कलशान् स्थापयेत् । ततस्तेषां प्रतिष्ठा । ततो दक्षिणतो ब्रह्मासनमास्तीर्येत्यादि सक्षीरं प्रणीताप्रणयनम् । चरुग्रहणे अग्नयेरुद्रायशर्वायपशुपतयउग्रायाशनयेभवायमहादेवायेशानायजुष्टं गृह्णामीति । ततः पूष्णे जुष्टंगृह्णामीति पिष्टग्रहणम् । आचार्यमते तु पौष्णश्चरुराद्यः । पायसश्चरुर्द्वितीयः । विपरीतमेतदिति देवयाज्ञिकाः । अन्येपि । 'आज्यᳬ···जुहोति' प्रतिमन्त्रम् । ततः पर्युक्षणान्ते पुनराज्यᳬ संस्कृत्य इहरतिरिति षड्जुहोति । आघारहोमात्प्रागाज्याहुतिप्रज्ञस्यर्थमाज्यसंस्कारोक्तिः । इहरतिः स्वाहा । इहरमध्वंस्वाहा । इहधृतिः स्वाहा । इहस्वधृतिः स्वाहा । इदंपशुभ्यइति त्यागाः । इहरतिः पशुदैवतमित्युक्तेः उपसृजं धरुणं मात्रे धरुणो मातरंधयन्स्वाहा । रायस्पोषमस्मासुदीधरत्स्वाहा । इदमग्नय इति त्यागौ । उपसृजन्नुष्णिगाग्नेयीत्युक्तेः । तत आघारावाज्यभागौ । ततः पायसचरुहोमः । अग्नये स्वाहा । रुद्रायस्वाहा । शर्वायस्वाहा । पशुपतयेस्वाहा । उग्रायस्वाहा । अशनयेस्वाहा । भवायस्वाहा । महादेवायस्वाहा । ईशानायस्वाहा । इदंपूर्वकाः स्वाहाशून्या मन्त्रा एव त्यागाः । प्रत्याहुत्युदकस्पर्शः । ततः 'पूषा···होति' सनोतुनइत्यनन्तरं स्वाहाकारप्रयोगः । इदंपूष्णे इतित्यागः । ततः पायसपौष्णाभ्यां स्विष्टकृते हुत्वा त्यक्त्वा च । 'रुद्रंजपित्वा' ततः रुद्रं जपित्वा रुद्रकलशे रुद्रमावाह्य गन्धमाल्यादिभिः संपूज्य नमस्त इत्यादिरुद्राध्यायं जपित्वेत्यर्थः । ततः पुराणप्रसिद्धिस्थापिताऽष्टकलशाद्भिर्न वृषस्य स्नपनं । चतुर्भिः कलशैश्चतसृणां वत्सतरीणां स्नपनम् एकैवचेद्वत्सतरी तदा चतुर्भिस्तस्या एव स्नपनम् । एते च कलशस्थापनस्नपने गरुडपुराणादालोच्ये । कीदृशस्य वृषस्योत्सर्गं इत्यपेक्षायामाह 'एक···स्यात्' यः वृषः महत्त्वलघुत्वाद्यूथस्य छादको वा छाद्यो वा रोहितः आरक्तः एकद्विवर्णादिविकल्पः । तमलंकृत्य स्रगादिभिः सौवर्णशृंगादिभिरित्यन्ये । 'यूथे···कृत्य' ग्रीवायांवस्त्रमाल्यादिभिः । सुवर्णशृङ्गादिभिरित्यन्ये । अस्मिन्नवस(रे'र)प्राप्तं वैवाहिकं होममिच्छन्त्येके । ततो वृषवत्सतरीभिः अग्नेः प्रदक्षिणां कारयित्वा वत्सतरीणां मध्ये वृषं स्थाप्य । अयं गावो मया दत्तः सर्वासां पतिरुत्तमः । तुभ्यं चैता मया दत्ताः पत्न्यः सर्वा मनोरमाः । इत्युक्त्वाऽयस्कारमाहूय वामे चक्रं दक्षिणे त्रिशूलं कारयेत् । एवं तप्तायसेन अङ्कयित्वा रुद्रकलशस्थोदकेन तं स्नपयेत् । या काचित्पुत्रकामा सा वृषस्याऽधस्तात्स्नानं करोति काम्ये वृषोत्सर्गे । ततः पुनर्वृषं संपूज्याऽद्येत्यादिदेशकालौ स्मृत्वा काम्ये कामनोल्लेखः नित्ये तु प्रेतस्य प्रेतत्वनिवृत्तय इत्युल्लिख्य पुच्छमादायाऽमुं वृषं रुद्रदैवतं यथाशक्त्यलंकृतं गन्धाद्यर्चितमुत्सृजामीति संकल्प्य पुच्छे पुरुषसूक्तेन प्रेतनाम्ना च तर्पणं, काम्ये तु तर्पणं पौराणिकैर्मन्त्रैर्गयाशीर्षवद्दक्षिणखुरे पिण्डदानं च । 'एतं···जेरन्' एतंयुवानमिति सव्येन हस्तेन पुच्छमादाय दक्षिणहस्तेन सहिरण्याः सतिलाः सकुशाः अप आदायाऽमुकप्रेतस्य प्रेतत्वनिवृत्त्यर्थमेकादशाहश्राद्धयोग्यताप्राप्त्यर्थमुत्सृजामि इत्युक्त्वा सहिरण्यं सतिलमुदकं भूमौ क्षिपेत् । 'नभ्य···षेण' समीपस्थो नभ्यस्थः तं मयोभूरित्यारभ्य सूर्यः स्वाहेत्यनेनाभिमन्त्रणम् । ततः धर्मस्त्वं वृषरूपेण ब्रह्मणा निर्मितः पुरा । तवोत्सर्गादिमं प्रेतं समुद्धर भवार्णवात् । मातृपक्षाश्च ये केचिद्ये चान्ये पितृपक्षतः । गुरुश्वशुरबन्धूनां कुले येषां समुद्भवः । प्रेतभावं समापन्ना ये चान्ये श्राद्धवर्जिताः । वृषोत्सर्गेण ते सर्वे लभन्तां तृप्तिमुत्तमाम् । वृषप्रार्थना । ततो दक्षिणस्कन्धेन वृषस्यैशानीं दिशं प्रति प्रेरणम् यथेष्टं पर्यटेति मन्त्रेण । ततः स्विष्टकृद्धोमादिब्राह्मणभोजनान्तम् । अनन्तरं वैश्वदेवः । इदानीं पाकयज्ञान्तरमाह—'सर्वा···येत्' यावत्यः स्वीया गावः तावतीनां सर्वासामित्यर्थः । अस्य प्राशितपदवाच्यत्वात्पञ्चमहायज्ञादि पाकान्तरेण कार्यम् 'पशुमप्येके कुर्वन्ति' उक्तविधिना पायसेन ब्राह्मणभोजनानन्तरं पशुं चैके कुर्वन्तीत्यर्थः । अस्य पाकयज्ञस्योत्तराङ्गपशुः

कल्पिकः । तन्मते क्रियाबाहुल्यात्फलबाहुल्यम् । केचित्तु पशोः प्रधानत्वेपि नियतसमयकर्तव्यत्वं [द]ाक्षायणयज्ञवदित्याहुः । स कथं स्यादत आह 'तस्य'''ख्यातः' तस्य पशोः कल्पः कर्तव्यताकलापः । नवमीकण्डिका ॥ ९ ॥

अथोदककर्म ॥ १ ॥ अद्विवर्षे प्रेते मातापित्रोराशौचम् ॥ २ ॥ शौचमेवेतरेषाम् ॥ ३ ॥ एकरात्रं त्रिरात्रं वा ॥ ४ ॥ शरीरमदग्ध्वा निखनन्ति ॥ ५ ॥ अन्तःसूतके चेदोत्थानादाशौचꣳ सूतकवत् ॥ ६ ॥ नात्रोदककर्म ॥ ७ ॥ द्विवर्षप्रभृति प्रेतमाश्मशानात्सर्वेऽनुगच्छेयुः ॥ ८ ॥ यमगाथां गायन्तो यमसूक्तं च जपन्त इत्येके ॥ ९ ॥ यद्युपेतो भूमिजोषणादिसमानमाहिताग्नेरोदकान्तस्य गमनात् ॥ १० ॥ शालाग्निना दहन्त्येनमाहितश्चेत् ॥ ११ ॥ तूष्णीं ग्रामाग्निनेतरम् ॥ १२ ॥ संयुक्तं मैथुनं वोदकं याचेरन्नुदकं करिष्यामह इति ॥ १३ ॥ कुरुध्वं मा चैवं पुनरित्यशतवर्षे प्रेते ॥ १४ ॥ कुरुध्वमित्येवेतरस्मिन् ॥ १५ ॥ सर्वे ज्ञातयोऽपोऽभ्यवयन्त्यासप्तमात्पुरुषाद्दशमाद्वा ॥ १६ ॥ समानग्रामवासे यावत्संबन्धमनुस्मरेयुः ॥ १७ ॥ एकवस्त्राः प्राचीनावीतिनः ॥ १८ ॥ सव्यस्यानामिकयाऽपनोद्यापनः शोशुचदघमिति ॥ १९ ॥ दक्षिणामुखा निमज्जन्ति ॥ २० ॥ प्रेतायोदकꣳ सकृत्प्रसिञ्चन्त्यञ्जलिनाऽसावेतत्त उदकमिति ॥ २१ ॥ उत्तीर्णाञ्छुचौ देशे शाड्वलवत्युपविष्टांस्तत्रैतानपवदेयुः ॥ २२ ॥ अनवेक्षमाणा ग्राममायान्ति रीतीभूताः कनिष्ठपूर्वाः ॥ २३ ॥ निवेशनद्वारे पिचुमन्दपत्राणि विदश्याचम्योदकमग्निं गोमयं गौरसर्षपांस्तैलमालभ्याश्मानमाक्रम्य प्रविशन्ति ॥ २४ ॥ त्रिरात्रं ब्रह्मचारिणोऽधःशायिनो न किञ्चन कर्म कु(र्युः? र्वन्ति)र्न प्रकु ( र्वीरन्? र्वन्ति ) ॥ २५ ॥ क्रीत्वा लब्ध्वा वा दिवैवान्नमश्नीयुरमाꣳसम् ॥ २६ ॥ प्रेताय पिण्डं दत्त्वाऽवनेजनदानप्रत्यवनेजनेषु नामग्राहम् ॥ २७ ॥ मृन्मये ताꣳ रात्रीं क्षीरोदके विहायसि निदध्युः प्रेतात्र स्नाहीति ॥ २८ ॥ त्रिरात्रꣳ शावमाशौचम् ॥ २९ ॥ दशरात्रमित्येके ॥ ३० ॥ न स्वाध्यायमधीयीरन् ॥ ३१ ॥ नित्यानि निवर्तेरन्वैतानवर्जम् ॥ ३२ ॥ शालाग्नौ चैके ॥ ३३ ॥

अन्य एतानि कुर्युः ॥ ३४ ॥ प्रेतस्पर्शिनो ग्रामं न प्रविशेयुरानक्षत्रदर्शनात् ॥ ३५ ॥ रात्रौ चेदादित्यस्य ॥ ३६ ॥ प्रवेशनादि समानमितरैः ॥ ३७ ॥ पक्षं द्वौ वाऽऽशौचम् ॥ ३८ ॥ आचार्ये चैवम् ॥ ३९ ॥ मातामहयोश्च ॥ ४० ॥ स्त्रीणां चाप्रत्तानाम् ॥ ४१ ॥ प्रत्तानामितरे कुर्वीरन् ॥ ४२ ॥ ताश्च तेषाम् ॥ ४३ ॥ प्रोषितश्चेत्प्रेयाच्छ्रवणप्रभृति कृतोदकाः कालशेषमासीरन् ॥ ४४ ॥ अतीतश्चेदेकरात्रं त्रिरात्रं वा ॥ ४५ ॥ अथ कामोदकान्यृत्विक्श्वशुरसखिसंबन्धिमातुलभागिनेयानाम् ॥ ४६ ॥ प्रत्तानां च ॥ ४७ ॥ एकादश्यामयुग्मान्ब्राह्मणान्भोजयित्वा माᳬसवत् ॥ ४८ ॥ प्रेतायोद्दिश्य गामप्येके घ्नन्ति ॥ ४९ ॥ पिण्डकरणे प्रथमः पितॄणां प्रेतः स्यात्पुत्रवांश्चेत् ॥ ५० ॥ निवर्तेत चतुर्थः ॥ ५१ ॥ संवत्सरं पृथगेके ॥ ५२ ॥ न्यायस्तु न चतुर्थः पिण्डो भवतीति श्रुतेः ॥ ५३ ॥ अहरहरन्नमस्मै ब्राह्मणायोदकुम्भं च दद्यात् ॥ ५४ ॥ पिण्डमप्येके निपृणन्ति ॥ ५५ ॥ ॥ १० ॥

( कर्कः )—' अथोदककर्म ' व्याख्यास्यत इति सूत्रशेषः । उदककर्मग्रहणेन च आशौचादियमनियमयोरुपलक्षणम् । सर्वमेतदत्र व्याख्यास्यत इति । ' अद्वि'''रात्रं वा ' नेतरेषां सपिण्डानामिति गृह्यकारमतमेतत् । स्मृत्यन्तरे तु सर्वसपिण्डविषयत्वेनैव तदभिहितम् । ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः । अलंकृत्य शुचौ भूमावस्थिसञ्चयनादृते । नास्य कार्योऽग्निसंस्कारो नापि कार्योदकक्रिया । अरण्ये काष्ठवत्त्यक्त्वा क्षपेयुस्त्र्यहमेव तु । एतत्तु सर्वसपिण्डविषयत्वेनाभिहितम् । ते ह्याशौचार्हा इति । अस्थिसञ्चयनाभावानुवाद एव, नहि निखनने सति तत्संभवति, अपिच संचयनं वैतानिकस्यैव विहितम्, तेनेतरस्य उपदेशातिदेशयोरभावादप्राप्तिरेव । तत्रैकरात्रविधानमपि । नृणामकृतचूडानामशुद्धिर्नैशिकी स्मृता । निर्वृत्तचूडकाना तु त्रिरात्राच्छुद्धिरिष्यते । वयोवस्थाविशेषेण चैतद् व्यवस्थानं द्रष्टव्यम् । तथाचाह—दन्तजातेऽनुजाते च कृतचूडे च संस्थिते । अशुद्धा बान्धवाः सर्वे सूतके च तथोच्यते । दन्तजननमवधित्वेन धर्मं सूत्रकार आह । एवञ्च सति प्राक् दन्तजातान्नैशिक्यशुद्धिः उर्ध्वं तु त्रिरात्रमिति । अन्यदपि सद्यःशौचमाम्नातम् । बाले प्रेते च संन्यासे सद्यःशौचं विधीयत इति । एतच्च प्राङ्नामकरणाद् द्रष्टव्यम् । नामकरणं ह्यवधित्वेन दर्शयति । नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया । जातदन्तस्य वा कुर्युर्नाम्नि वाऽपि कृते सतीति नामकरणमवधित्वेनाभिहितम् । अतस्ततः प्राक् सद्यः शौचम् । दन्तजननात्प्राक् नैशिक्यशुद्धिः ऊर्ध्वं तु त्रिरात्रमिति । कृतचूडस्यापि प्रागुपनयनात् त्रिरात्रम् । तत्किमर्थं द्वित्रिरात्रग्रहणं ? कृतचूडस्य ऊनद्विवार्षिकस्य च । यदूनद्विवार्षिकस्य त्रिरात्रग्रहणं तदग्निदाहोदकदानयोर्विकल्पेन । ऊर्ध्वं तु नियम इति । कुत एतदिति चेत् । येनैवमाह । द्विवर्षप्रभृतिप्रेतमाश्मशानात्सर्वेऽनुगच्छेयुरिति । एतच्च पुंविषयम् । येन स्त्रीविषयमन्यद्वचनान्तरम् । स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यन्ति बान्धवाः । यथोक्तेनैव कल्पेन

शुध्यन्ति तु सनाभय इति । तथा । अप्रौढायां तु कन्यायां सद्यः शौचं विधीयते । अप्रौढा चाकृतचूडोच्यते । तथा अहस्त्वदत्तकन्यास्विति वयोवस्थाविशेषेण च सर्ववर्णविषयमाशौचम् । नह्यत्र वर्णविशेषोऽवस्थातुं शक्यते इति । 'शरी'''नन्ति' ऊनद्विवार्षिकं प्रेतम् । गृह्यकारमतमेतत् । मानवे तु विकल्पेन दाहोऽपि भवतीत्युक्तमेव । 'अन्तः'''वत्' अन्तःसूतके चेदिति । अन्तःसूतके चेत्पुनः सूतकमापद्यते । आ उत्थानादशुद्धिः पूर्वस्यैव सूतकाशौचस्य उत्थानेऽन्योत्तरस्य शुद्धिः । अन्तःशावाशौचं च सूतकवद् द्रष्टव्यम् । यदुक्तं भवति—अन्तःशावाशौचे चेत् शावाशौचान्तरमापतति तस्यापि पूर्वेणैव शुद्धिः । तथाच गौतमाचार्यः । तच्चेदन्तः पुनरापतेत शेषेण शुध्येरन्निति । तच्छब्देन च समानजातीयग्रहणात्सूतकोपनिपाते, नतु विजातीये । तच्छब्दोपादानसामर्थ्यात् । शङ्खोऽपि चाह अथ चेदन्तरा म्रियेत जायेत वा शिष्टैरेव दिवसैः शुद्ध्येत । अहःशेषे सति द्वाभ्यां प्रभाते तिसृभिरिति वर्णयन्ति । मरणस्योपक्रान्तत्वात् अन्तः सूतके चेद्बालस्य मरणमापद्येत । आ उत्थानादाशौचं सूतकवद्भवति माभूद्बालत्वात्सद्यःशौचमिति । 'नात्रोदककर्म' अत्रशब्देन ऊनद्विवार्षिकस्य ग्रहणम् । तस्योदककर्म न भवति । उदकदानप्रतिषेधाच्च दाहोऽपि न भवति । संनियोगो ह्यनयोः स्मृत्यन्तरेऽपि । नास्य कार्योऽग्निसंस्कारो नापि कार्योदकक्रियेति । 'द्विव'''च्छेयुः' सर्वशब्दः सपिण्डविषयः सर्वेऽनुगच्छेयुरिति । 'यम'''त्येके' गाथा छन्दोविशेषः । यमसूक्तं तु प्रसिद्धमेव । 'यद्यु'''नात्' यद्युपनीतः प्रेतो भवति ततो भूमिजोषणाद्याहिताग्निविधानेन तुल्यमा उदकान्तस्य गमनात् । 'शाला'''श्चेत्' एनं प्रेतं शालाग्निनाऽऽवसथ्येन दहन्ति यद्यसावाहितः । 'तूष्णीं'''रम्' इतरमकृतावसथ्यं ग्रामाग्निना तूष्णीं दहन्ति । तूष्णीमिति च मन्त्रनिवृत्त्यर्थम् । 'संयु'''मह इति' संयुक्तः प्रसिद्ध एव । मैथुनस्यैकदेशे श्यालके प्रसिद्धः । तमुदकं याचन्ते उदकं करिष्यामह इत्यनेन मन्त्रेण । 'कुरु'' प्रेते' पृष्टः प्रतिवचनं कुरुध्वं माचैवं पुनरित्यशतवर्षे प्रेते । कुरुध्वमेवेतरस्मिन् । शतवर्षप्रभृति कुरुध्वमिति प्रतिवचनम् । 'सर्वे'''माद्वा' ज्ञातयः । सपिण्डाः समानोदकाश्च सर्व एवापोऽभ्यवयन्ति । 'समा'''रेयुः' समानग्रामवासे तु यावदपि संबन्धः स्मर्यते अमुष्मिन्नन्वये संबध्यामह इति तावन्तोऽभ्यवेयुः । 'एक'''ञ्जन्ति' तूष्णीमेव, अपनोदने मन्त्रः । 'प्रेता'''कमिति' असावेतत्त इत्यनेन मन्त्रेण । 'उत्ती'''देयुः' उदकादुत्तीर्णान्सतः शाड्वलवति प्रदेशे उपविष्टानपवदेयुरन्ये लोकयात्रिकाः । प्रेतगुणव्याख्यानेनापवादः । 'अन'''पूर्वाः' पश्चादनवलोकयन्तः पङ्क्तिव्यवस्थानेन कनिष्ठमग्रतः कृत्वा ग्राममागच्छन्ति । 'निवे'''शन्ति' निवेशनस्य गृहफलिकस्य द्वारे पिचुमन्दस्य निम्बस्य पत्राणि विदश्य दन्तैः खण्डयित्वा तत आचम्य उदकादीन्यालभ्याश्मानमाक्रम्य प्रविशन्ति । 'त्रिरा'''वेन्ति' न कारयन्तीत्यर्थः । 'क्रीत्वा'''ग्राहम्' दिवाग्रहणं रात्रिप्रतिषेधार्थम्, त्रिरात्रमयं धर्मः, अवनेजनदानप्रत्यवनेजनेषु नामग्राहं गृहीत्वा नामेत्यर्थः । अमांसं पिण्डं दत्त्वा ततो भोजनम् । 'मृन्म'''स्वाहीति' मृन्मये पात्रे तामेवैकां रात्रीं क्षीरोदके कृत्वा विहायसि आकाशे निदध्युः प्रेतात्र स्नाहीत्यनेन मन्त्रेण । 'त्रिरात्रठं'''मेके' एके च दशरात्रमेके च त्रिरात्रमेके च एकरात्रं शावाशौचमिच्छन्ति । एवं हि स्मृत्यन्तरे । दशाहं शावमाशौचं सपिण्डेषु विधीयते । अर्वाक् संचयनादस्थ्नां त्र्यहमेकाहमेव वा । एतच्चोपनयनप्रभृतिषु द्रष्टव्यम् । पूर्वं हि वयोवस्थाविशेषेणाभिहितम् । व्यवस्थया च विकल्पोऽयं वृत्तस्वाध्यायापेक्षया । वृत्तनिमित्तानि चाध्यापनतदर्थज्ञानानुष्ठानानि । तत्रैकगुणसंयोगेऽर्वाक् संचयनादाशौचम् । गुणद्वययोगात्त्र्यहः । गुणत्रययोगे एकाह इति । अपरे एकीयशब्दात्सद्यः शौचमिच्छन्ति, यदा गुणत्रययोगो भवति वृत्तिसंकोचश्च त्र्यहैकाहिको वेति तदा सद्यः शौचं भवति स्मृत्यन्तरात् । 'न स्वा'''रन्' येषां यावादाशौचम् । प्रातिस्विकाश्चैतेऽशौचकल्पाः न सूतकाशौचवत्सर्वेषां सहेति । तत्र हि—जननेऽप्येवमेव

स्यान्मातापित्रोस्तु सूतकम् । सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिरिति । अपरे दशाहस्यैवातिदेशो न चतुरहत्र्यहैकाहानाम् । कुत एतत् । संचयनकल्पेन व्यवधानात्, अपिच सर्वकल्पातिदेशे सति मातुरप्येकाहेन शुद्धिः प्राप्नोति । तच्च नेष्यते । येन पितुस्त्र्यहमाशौचविधानं वैजिकादभिसंबन्धादनुरुन्ध्यादघं त्र्यहमित्यनेन पितुस्त्र्यहेन शुद्धिर्मातुश्चैकाहेनेति विरोधः । कथं—रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यत इति । तस्मादपि दशाहस्यैवातिदेशः । शावं चानपेक्ष्यैवमेव स्यादिति, एवंसति जननेऽप्येवमेव स्यादिति सपिण्डानां दशाहः । मातापित्रोश्च सूतकमित्यनेन मातापित्रोर्दशाहः । सूतकं मातुरेव स्यादित्यनेन मातुरेव दशाहः । अत्र पक्षत्रितये व्यवस्था युक्तरूपा भवति । सपिण्डानां निर्गुणत्वेन दशाहः वृत्तवत्त्वे पुनः सति मातापित्रोरेव दशाहः । वृत्तवत्त्वे मातुरेव दशाहो भवति । अस्मिंश्च पक्षे वैजिकादभिसंबन्धादित्यनेन पितुस्त्र्यहनियम इति व्यवस्था न्याय्या । शावाशौचेऽपि दशाहादीनां व्यवस्थैव न्याय्येति । यत्पुनरुक्तम्—उपस्पृश्य पिता शुचिरिति तदप्यचेतसो वचनादग्निहोत्रार्थमेव न संव्यवहारार्थम् । तेन सूतकाशौचे पक्षत्रयश्रवणात्तत्र नैवं व्यवस्था युक्तेति । शावे पुनर्वृत्तापेक्षया प्रातिस्विकैव शुद्धिरिति । 'नित्या''' वर्जम्' नित्यानि कर्माणि निवर्तन्ते वैतानिकानि वर्जयित्वा । वैतानिकानि अग्निहोत्रादीनि । 'शालाग्नौ चैके' एके आचार्याः शालाग्निकानां निवृत्तिमिच्छन्ति । एके नेति । यदा चानिवृत्तिस्तदान्य एतानि कुर्युर्न स्वयमिति । 'प्रेत''' नात्' प्रेतस्पर्शिनः सपिण्डाः ग्रामं न प्रविशन्ति नक्षत्रदर्शनादर्वाक् । 'रात्रौ''' स्यस्य' रात्रौ चेत्प्रेतः स्यात् आदित्यदर्शनादर्वाक् न प्रविशेयुः । 'प्रवे''' मितैः' सपिण्डैः प्रवेशनादि तुल्यं भवति । 'पक्षं''' चम्' प्रेतस्पर्शिनामिति केचित् । तत्पुनरनुपपन्नम् नहि प्रेतस्पर्शनमात्रेणेयन्तं कालमाशौचं युक्तम् । तस्माद्वर्णान्तरविषयमेवैतत् । पक्षं वैश्यस्य द्वौ शूद्रस्य वाशब्दाद् द्वादशाहानि क्षत्रियस्य । तथाच स्मृत्यन्तरम्—शुध्येद्विप्रो दशाहेन द्वादशाहेन क्षत्रियः । वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति । 'आचार्ये चैवम्' आचार्ये प्रेते एवमेवोदकदानादि कर्तव्यम् । 'मातामहयोश्च' चशब्दादेवमेवेति । द्विवचनं मातामह्यपेक्षया । 'स्त्रीणां''' नाम्' एपैवेतिकर्तव्यता कार्या । 'प्रत्ता''' पामिति' इतरशब्देन येभ्यः प्रत्तास्ते उच्यन्ते ता अपि च तेषां कुर्वन्ति । 'प्रोपि''' मिसीरन्' अथ यदि प्रोषितश्चेत्प्रेयात् श्रवणकालप्रभृति कृतोदकाः सन्तः आशौचकालशेषमासीरन् । 'अती''' त्रं वा' आशौचकालातिक्रमणे सति एकरात्रं त्रिरात्रं वा । तथाच स्मृत्यन्तरम्—अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत् । संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यति । एकरात्रं तु स्मृत्यन्तरात् अन्यापि स्मृतिः—संवत्सरे व्यतीते तु स्पृष्ट्वापो विशुध्यति । 'अथका''' यानाम्' एषामिच्छयोदकदानम् 'प्रत्तानां च' स्त्रीणामिच्छयेति । 'एका''' घ्नन्ति' एकादशेऽहनि अयुग्मान् ब्राह्मणान् भोजयित्वेति श्राद्धमभिधीयते । तच्च मांसवत् कार्यम् । मांसं च प्रेतायोद्दिश्य । गामप्येके घ्नन्ति । एके आचार्याः प्रेतोद्देशेन गां मारयन्ति । प्रेतोद्देशवचनात् शाखापशुरयम् । तमालभ्य तन्मांसेन श्राद्धं कुर्वन्ति । तच्चोपरिष्टाद्वक्ष्यति । नद्यन्तरे नावं कारयेन्नवेति । 'पिण्डः श्वेत्' एतदेव पिण्डकरणमापतितम् । अत्रच पितॄणां प्रथमः प्रेतो भवति तत्प्रभृति तद्दानमित्यर्थः । स यदि पुत्रवान्भवति ततस्तत्प्रभृति दानमधिकृतविषयमिति । अधिकृतपुत्रेण च पुत्रवत्त्वं, एतदधिकारश्चाग्निमत्त्वे सति, तेनाग्निमतः पुत्रस्य पार्वणमेव भवति । तच्च सपिण्डीकरणानन्तरम् । एकोद्दिष्टं त्वनधिकृतविषयमिति । सपिण्डीकरणे च पितृप्रभृतित्रिभ्यो दानम् । 'निव''' तुर्थः' चतुर्थस्य निवृत्तिः । त्रिषु पिण्डः प्रवर्तते इति श्रुतेः । 'संव''' शेके' एके आचार्याः संवत्सरं पृथगेकस्यैव पिण्डदानमिच्छन्ति । किंकारणम् ? येन संवत्सरे सपिण्डीकरणमिति स्मर्यते । नचासपिण्डीकृतस्येतरैः सह दानं युज्यते । अन्वर्थसंज्ञाह्येषा सपिण्डीकरणमिति । सहपिण्डक्रिया सपिण्डीकरणम् । तेन संवत्सरं यावत्पितुः

प्रेतस्य पृथक् पिण्डदानमिच्छन्त्येके । एवं च संवत्सरे सपिण्डीकरणस्मृतिरनुगृहीता भवति । एवं प्राप्त आह 'न्यायस्तु' तु शब्दः पक्षव्यावृत्तौ, नैतदेवम् । संवत्सरं यावत्पृथग्दानमिति, येन संवत्सरस्मृत्यनुग्रहन्यायेनैतत्परिकल्प्यते तत्र विरोधः । नच श्रुतिविरोधे न्यायो युक्तः । 'न चतुः···ति' हि श्रुतिविरोधः । पृथक्त्वे क्रियमाणे चतुर्णां पिण्डनिर्वपणाधिकारो भवति पृथक् प्रेतस्यामावास्यायां चाधिकृतस्य पार्वणमिति श्रुतिविरोधः । तेनाधिकृतपुत्रस्यैकोद्दिष्टं न भवत्येव । अनधिकृतस्य तु संवत्सरादूर्ध्वमेकोद्दिष्टम् । 'अह···द्यात्' संवत्सरं द्विजे । एतदेव च तस्य भवति । न पिण्डनिर्वपणमिति । त्रिभ्यो दानप्रसङ्गात् । यच्च प्रेतस्य स्मर्यते—मृतेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् । प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि । एतच्च सपिण्डीकरणात्प्रागेकोद्दिष्टम् । ऊर्ध्वञ्च पार्वणमिति । यथा च मनुः—असपिण्डक्रियाकर्म द्विजातेः संस्थितस्य तु । अदैवं भोजयेच्छ्राद्धं पिण्डमेकं तु निर्वपेदिति । यावत्सपिण्डता न क्रियते तावदेव तत्कर्म । तथा चाह—सहपिण्डक्रियायां तु कृतायामस्य धर्मतः । अनयैवावृता कार्यं पिण्डनिर्वपणं सुतैरिति । सपिण्डक्रियोत्तरकालमनयैव सहपिण्डक्रियया कार्यम् पिण्डनिर्वपणं सुतैः । केचित्त्वधस्तनश्लोकोपात्तमावृतमनयैवावृतेति अनेनानुवर्तयन्ति । तत्पुनरनुपपन्नार्थमुपरितनश्लोकारम्भसामर्थ्यात् । अनारब्धेऽपि हि तस्मिन्नेकोद्दिष्टं लभ्यत एव द्विजातेः संस्थितस्य अदैवंभोजयेच्छ्राद्धमित्यनेन । अधस्तनश्लोके च विशेषणार्थं वाक्यप्रसङ्गः । असपिण्डक्रियाकर्मेति । द्विजातेः संस्थितस्येत्येवमादिनैव पादत्रयेणार्थस्य सिद्धत्वात् । यत्पुनरुच्यते अतऊर्ध्वं वर्षे वर्षे प्रेतायान्नं दद्यात् यस्मिन्नहनि प्रेतः स्यादित्येकत्वविशिष्टस्याभिधानादेकत्वविशिष्टस्यैव दानमिति । तन्न । नह्यत्रैकत्वमुपादीयमानविशेषणं येन विवक्षितप्रेतोद्देशेन दानविधानम् । तस्मादविवक्षैकत्वस्य, यथा स्मृत्यन्तरेऽभिहितं तथैव देयमिति । प्रेतायोद्दिश्य गामप्येके घ्नन्तीति शाखापश्वभिधानम् । तेन प्रसङ्गेन यावन्तोऽर्घ्या पश्चादयस्तत्कर्मव्याचिख्यासया इदमभिधीयते ॥१०॥

( जयरामः )—'अथोदककर्म' वक्ष्यत इति सूत्रशेषः । उदककर्मग्रहणं चाशौचादियमनियमोपलक्षणार्थम् । अद्विवर्षे ऊनद्विवर्षे प्रेते मृते मातापित्रोरेकरात्रं त्रिरात्रं वा, एतत्तु गृह्यकारमतम् । स्मृत्यन्तरेतु सर्वसपिण्डविषयत्वेनाभिहितम् । तद्यथा—ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः । अलंकृत्य शुचौ भूमावस्थिसञ्चयनादृते । नास्य कार्योऽग्निसंस्कारो नापि कार्योदकक्रिया । अरण्ये काष्ठवत्त्यक्त्वा क्षपेयुस्त्र्यहमेव त्विति । अस्थिसंचयनाभावोऽनुवाद एव । नहि खनने तत्संभवः । अपिच संचयनं वैतानिकस्यैव विहितं नत्वन्यस्य । उपदेशातिदेशयोरभावात् । एकरात्रादिविधानमपि अकृतकृतचूलत्वेन व्यवस्थापनीयम् । नृणामकृतचूलानामशुद्धिर्नैशिकी स्मृता । निर्वृत्तचूलकानां तु त्रिरात्राच्छुद्धिरिष्यते, इति वचनात् । तथा दन्तजननमप्यवधित्वेनाभिहितम्—दन्तजातेऽनुजाते च कृतचूडे च संस्थिते । अशुद्धा बान्धवाः सर्वे सूतके च तथोच्यत इति वचनात् । एवं च सति प्राग्दन्तजननान्नैशिक्यशुद्धिः ऊर्ध्वं तु त्रिरात्रमपि । अन्यदपि सद्यःशौचमाम्नातम् । बाले प्रेते च संन्यस्ते सद्यः शौचं विधीयत इति । एतत्प्राङ् नामकरणाद् द्रष्टव्यम् । यतः । नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया । जातदन्तस्य वा कार्या नाम्नि वाऽपि कृते सतीति नामकरणमवधित्वेनाभिहितम् । अतो नामकरणात्प्राक् सद्यः शौचम् । तत ऊर्ध्वं दन्तजननात्प्राङ् नैशिक्यशुद्धिः । तत ऊर्ध्वं प्रागुपनयनात्त्रिरात्रम् । अत्रच कृतचूडस्यापि प्रागुपनयनात्त्रिरात्रमेव । तर्हि किमर्थं द्विस्त्रिरात्रग्रहणं कृतचूडस्याद्विवार्षिकस्य चेति । तत्राह—यदूनद्विवार्षिकस्य त्रिरात्रग्रहणं तदग्निदाहोदकदानयोर्विकल्पेन । ऊर्ध्वं तु नियमेनेति । कुत एतत् । येनैवं वक्ष्यति द्विवर्षप्रभृतिप्रेतमाश्मशानात्सर्वेऽनुगच्छेयुरिति । एतच्च पुरुषविषयम्, स्त्रीविषयस्यान्यवचनान्तरस्य सद्भावात् । तदाह—स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यन्ति बान्धवाः । यथोक्तेनैव कल्पेन शुध्यन्ति तु सनाभय इति । संस्कारश्चात्र

वाग्दानम्। तथा—अप्रौढायां तु कन्यायां सद्यः शौचं विधीयत इति। अप्रौढा चात्राकृतचूडोच्यते। तथा अहस्त्वदत्तकन्यास्विति। एतदुक्तं भवति—अकृतचूडासु स्त्रीषु सद्यः शौचम्। चूडाकरणादूर्ध्वं वाग्दानात्प्रागेकाहः। तत उपरि विवाहात्प्राक् त्रिरात्रमिति। एतच्च वयोवस्थाविशेषेण सर्ववर्णसाधारणमवसेयम्। नचात्र वर्णविशेषोऽवसातुं शक्यत इति। ऊनद्विवार्षिकस्य शरीरमदग्ध्वा निखनन्तीति गृह्यकारमतम्। मनुना तु विकल्पेन दाहोऽभिहितः। तेनात्रापि विकल्पोऽवसेय इति। अत्राशौचशब्देन वर्णाश्रमविहितकर्मानुष्ठानसंकोचावस्थोच्यते तत्रापि विशेषो वृत्तस्वाध्यायापेक्षवृत्तिसंकोचनिमित्तो व्याख्यास्यते। अन्तःसूतके सूतकमध्ये चेत्सूतकान्तरमापद्येत तदा उत्थानात् आ पूर्वोत्थानपर्यन्तमशुद्धिः। पूर्वस्यैव सूतकाशौचस्योत्थानेनोत्तरस्यापि शुद्धिरित्यर्थः। आशौचं शावं सूतकवद् द्रष्टव्यम्। पूर्वशावशुद्ध्योत्तरशावस्यापि शुद्धिरित्यर्थः। तथाह गौतमः—तच्चेदन्तः पुनरापतेत्तच्छेषेण शुध्येरन्निति। तच्छब्देनात्र समानजातीयं गृह्यते। सूतकोपनिपाते नतु विजातीयेऽपि। तच्छब्दोपादानसामर्थ्यात्। शङ्खश्च—अथचेदन्तरा म्रियेत जायेत वा शिष्टैरेव दिनैः शुध्येताहशेषे सति द्वाभ्यां प्रभाते तिसृभिरिति। अपरे त्वन्यथा वर्णयन्ति। मरणस्योपक्रान्तत्वात्। अन्तः सूतके चेद्बालस्य मरणमापद्येत तदा आसूतकस्योत्थानादाशौचं सूतकवद्भवति। माभूद्बालत्वात्सद्यः शौचमिति। अत्र ऊनद्विवर्षे उदककर्म उदकदानं न भवति। उदकदानप्रतिषेधाद्दाहोपि निरस्तः, संनियोगित्वात्। संनियोगो ह्यनयोः स्मृत्यन्तरेऽभिहितः—नास्य कार्योऽग्निसंस्कारो नापि कार्योदकक्रियेति। सर्व इति सर्वशब्दः सपिण्डविषयः। तेन ते सर्वेऽनुगच्छेयुः। श्मशानग्रहणाद्दाहमपि च कुर्युः। यमगाथां छन्दोविशेषम्। यमसूक्तं तु प्रसिद्धमेव। यदि उपेतः उपनीतः प्रेतः स्यात्तदा भूमिजोषणादि आ उदकान्तस्य गमनात्सर्वमाहिताग्निविधानेन तुल्यं कार्यम्। शालाग्निना आवसथ्येन एनं प्रेतं दहन्ति यद्यसौ प्रेत आहितः कृतावसथ्याधानः। इतरमकृतावसथ्यं ग्रामाग्निना लौकिकेनाग्निना तूष्णीं मन्त्रं विनैव दहन्ति। संयुक्तः संबन्धादिना। मिथुनस्यैकदेशलक्षणया मिथुनशब्दवाच्यायाः पत्न्याः भ्राता श्यालक इत्यर्थः। तं वा उदकम् उदकदानाज्ञां प्रार्थयेरन्। उदकं करिष्यामह इतिमन्त्रेण। पृष्टप्रतिवचनं कुरुध्वं मा चैवं पुनरिति। इतरः शतवर्षप्रभृतिकः तस्मिन्प्रेते कुरुध्वमित्येव प्रतिवचनम्। ज्ञातयः सपिण्डा आसप्तमात्पुरुषात् समानोदकाश्चादशमात्ते सर्वे एव अपोऽभ्यवयन्ति जलं प्रविशन्ति। समानग्रामे एकत्र वासे यावत्संबन्धः स्मर्यते अमुष्मिन् वयं संवध्यामह इति तावन्तोऽपोऽभ्यवेयुः। अपनः शोशुचदघमित्यघापनोदनमन्त्रः। असावेतत्त इति मन्त्रेण जलाञ्जलिदानम्। असौस्थाने प्रेतनामादेशः। उदकादुत्तीर्णान् सतः शाद्वलं हरिततृणं तद्वति प्रदेशे उपविष्टानपरे लोकयात्रिका अपवदेयुः प्रेतगुणानुख्यापनेन तच्छोकमपाकुर्युः। अनवेक्षमाणाः पश्चादनवलोकयन्तः। रीतीभूताः पङ्क्तिव्यवस्थाः कनिष्ठमग्रतः कृत्वा ग्राममागच्छन्ति। निवेशनं गृहं तस्य द्वारि पिचुमन्दस्य निम्बस्य पत्राणि विदश्य दन्तैः खण्डयित्वाऽऽचम्योदकादीन्यालभ्याश्मानमाक्रम्य गृहं प्रविशन्ति। त्रिरात्रं ब्रह्मचारिणो भवन्ति। अधः आस्तृतभूशायिनश्च। नच किंचित्कर्म स्वयं कुर्वन्ति, नचान्यान्प्रकुर्वन्ति, कारयन्तीत्यर्थः। दिवाग्रहणं त्रिरात्रप्रतिषेधार्थम्। पिण्डदानं चावनेजनदानप्रत्यवनेजनेषु नामग्राहं नाम गृहीत्वेत्यर्थः। भोजनं च पिण्डदानसमनन्तरम्। मृन्मये पात्रे तामेकां रात्रिं क्षीरोदके व्यवहिते निधाय तत्पात्रमाकाशे स्थापयेयुः प्रेतात्र स्नाहीत्येतावता मन्त्रेण। त्रिरात्रमित्यादावेकरात्रमपीच्छन्ति एके। दशाहं शावमाशौचं सपिण्डेषु विधीयते। अर्वाक् संचयनादस्थ्नां त्र्यहमेकाहमेव चेति स्मृतेः। एतच्चोपनयनप्रभृति द्रष्टव्यम्। वयोवस्थाविशेषेण हि पूर्वमभिहितम्। व्यवस्थया च विकल्पोऽयं वृत्तस्वाध्यायापेक्षः। वृत्तनिमित्तानि चाध्ययनतदर्थज्ञानानुष्ठानानि। तत्रैकगुणसंयोगेऽर्वाक् संचयनाद्दशाहमाशौचम्। गुणद्वययोगे त्र्यहम्। गुणत्रययोगे एकाह-

मिति। अपरे त्वेकीयशब्दात्सद्यः शौचमिच्छन्ति। यदा गुणत्रययोगो भवति वृत्तिसंकोचश्च त्र्याहिक ऐकाहिको वा भवति तदा सद्यः शौचमिति स्मृत्यन्तरम्। येषां यावदाशौचं ते तावत्स्वाध्यायं वेदं न-पठेयुः। नच पाठयेयुः। एते चाशौचविकल्पाः प्रातिस्विकाः। ननु सूतकाशौचवत्सर्वेषां सहेति। तत्र हि—जननेऽप्येवमेत्र स्यान्मातापित्रोस्तु सूतकम्। सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः। इत्यनेन दशाहस्यातिदेशो न चतुरहत्र्यहैकाहानाम्। कुत एतत्। संचयनकल्पेन व्यवधानात्। अपिच। सर्वकल्पातिदेशे मातुरप्येकाहेन शुद्धिः प्राप्नोति। तच्च नेष्यते। येन बैजिकादभिसंबन्धा-दनुरुन्ध्यादघं त्र्यहमिति पितुस्त्र्यहेण शुद्धिर्मातुश्चैकाहेनेति विरोधः। कथम्? रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यत इति। तस्मादपि दशाहस्यैवातिदेशः। शावं वाऽनपेक्ष्यैवमेव स्यादिति व्याख्येयम्। एवं च सति जननेऽप्येवमेव स्यादिति सपिण्डानां दशाहम्। माता-पित्रोश्च सूतकमिति तयोश्च दशाहम्। सूतकं मातुरेव स्यादिति मातुश्च दशाहम्। अत्र पक्षत्रयेऽपि व्यवस्था युक्तरूपा भवति। तामाह सपिण्डानां निर्गुणत्वे दशाहम्। वृत्तवत्त्वेऽपि पित्रोश्च दशाहम्। पितुरप्यतिवृत्तवत्त्वे मातुरेव दशाहं भवतीति। अस्मिंश्च पक्षे—बैजिकादभिसंबन्धादनुरुन्ध्यादघं त्र्यहमिति पितुस्त्र्यहनियम इति व्यवस्था न्याय्या। शावाशौचेऽपि दशाहादीनां व्यवस्था च न्याय्येति। यत्पुनरुक्तम् 'उपस्पृश्य पिता शुचिः; इति तदग्निहोत्रार्थं नतु व्यवहारार्थम्। तेन सूत-काशौचे पक्षत्रयस्याश्रवणात्तत्र नैवं व्यवस्था युक्तेति। शावे पुनर्वृत्ताद्यपेक्षया प्रातिस्विकैव शुद्धि-रिति। नित्यानि स्मार्तानि कर्माणि निवर्तेरन्। वैतानान्यग्निहोत्रादीनि वर्जयित्वा। एके आचार्याः शालाग्नौ कर्मनिवृत्तिमिच्छन्ति, एके नेति विकल्पः। यदा चानिवृत्तिस्तदाऽन्य एतानि कुर्युर्न स्वयम्। प्रेतस्पर्शिनः सपिण्डा ग्रामं न प्रविशेयुर्नक्षत्रदर्शनादर्वाक् दिवामरणे। रात्रौ चेत्प्रेतः स्यात्त-दादित्यस्य दर्शनादर्वाक् न प्रविशेयुः। इतरैरसपिण्डैस्तुल्यं प्रवेशनादि भवति। पक्षं द्वौ पक्षौ वेति प्रेतस्पर्शिनामाशौचमिति केचित्। तन्न। नहि प्रेतस्पर्शनमात्रेणैवेयन्तं कालमाशौचस्य युक्तत्वम्। तस्माद्वर्णान्तरविषयमेवैतत्। पक्षं वैश्यस्य। द्वौ पक्षौ शूद्रस्य। वाशब्दात् द्वादशान्यहानि क्षत्रियस्य। शुध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः। वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यतीति वचनात्। आचार्ये च प्रेते एवमेवोदकदानादि कर्म भवति। मातामहीमातामहयोश्च चकारादेवमेव। स्त्रीणां चादत्तानामेवमेवेतिकर्तव्यता भवति। प्रत्तानामितरे येभ्यो दत्तास्ते कुर्वीरन्। ता अपि तेषां कुर्वी-रन्। अथ यदि प्रोषितः प्रेयान्म्रियेत तदा तच्छ्रवणकालप्रभृति कृतोदकाः सन्त आशौचकालशे-षमाशौचविधानेनासीरन्। आशौचकालोऽतीतश्चेदेकरात्रं त्रिरात्रम्। वाशब्दात्सद्यःशौचमपि। अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत्। संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुद्ध्यतीति वचनात्। एकरात्रं तु—अयने समतिक्रान्ते त्वेकाहाच्छुद्धिरिष्यत इति स्मृत्यन्तरात्। ऋत्विगादीनामिच्छ-योदकदानम्। प्रत्तानां च स्त्रीणामिच्छयैव। एकादश्यामेकादशेऽहनि अयुग्मान् त्रिप्रभृतीन् ब्राह्मणान्भोजयेदिति श्राद्धोपलक्षणम्। तच्च श्राद्धं मांसवत्कार्यम्। मांसं च प्रेतोद्देशेनैके आचार्या गां घ्नन्ति आलभन्ते प्रेतोद्देशवचनात्तदीयम्। शाखापशुरयम्। तमालभ्य तन्मा-सेन श्राद्धं कुर्वीत। तच्चोपरिष्टाद्वक्ष्यति नवन्तरे नावं कारयेन्नवेति। एतदेव पिण्डकरणमापति-तम्। तत्र च पितॄणां प्रथमः प्रेतो भवति तत्प्रभृति दानम्। स यदि पुत्रवान्भवति तदा अधिकृ-तविषयमेतत्। अधिकृतपुत्रेण पुत्रवत्त्वम्। एतदधिकारश्चाभिमत्त्वे सति भवति। तेनाभिमतः पुत्रस्य पार्वणमेव। तच्च सपिण्डीकरणानन्तरम्। एकोद्दिष्टं त्वनधिकृतविषयमिति। सपिण्डीकरणे च कृते पितृप्रभृतित्रिभ्यो दानं चतुर्थस्य तु निवृत्तिः। त्रिषु पिण्डः प्रवर्तत इति स्मृतेः। संवत्सरमेके आचार्याः पृथगेकस्यैव पिण्डदानमिच्छन्ति। कुत एतत्। यतः संवत्सरे सपिण्डीकरणं स्मर्यते, न

चासपिण्डीकृतस्येतरैः सह पिण्डदानं युज्यत इति। अन्वर्थसंज्ञा ह्येषा यत्सपिण्डीकरणमिति। सहपिण्डक्रिया सपिण्डीकरणम्। तेन संवत्सरं यावत्पितुः प्रेतस्य पृथक् पिण्डदानमिच्छन्त्येके। एवं च संवत्सरसपिण्डीकरणस्मृतिरनुगृहीता भवति। एवं प्राप्त आह 'न्यायस्तु' तुशब्दः पक्षव्यावृत्तौ। नैतदेवं संवत्सरं यावत्पृथग्दानमिति। येन संवत्सरस्मृत्यनुग्रहन्यायेनैतत्परिकल्प्यते तच्च विरुद्धम्। नच श्रुतिविरोधे न्यायो युक्तः। कोऽसौ विरोधः। न चतुर्थः पिण्डो भवतीति श्रुतेः। पृथक् क्रियमाणे चतुर्णां पिण्डनिर्वपणाधिकारो भवति। पृथक् प्रेतस्य। अमावास्यायां चाधिकृतस्य पार्वणमिति श्रुतिविरोधः। तेनाधिकृतस्य पुत्रस्यैकोद्दिष्टं न भवत्येव। अनधिकृतस्य तु संवत्सरादूर्ध्वमेकोद्दिष्टमिति। अस्मै प्रेतायार्थे ब्राह्मणायान्नं प्रत्यहं दद्यात्संवत्सरम्। कुम्भं च दद्यात्। एके आचार्याः पिण्डनिर्वपणमपीच्छन्ति। एतच्चानधिकृतविषयम्। अधिकृतस्य तु पार्वणमेव भवति नैकः पिण्ड इति। यच्च संवत्सरे सपिण्डीकरणस्मरणं तदूर्ध्वं संवत्सरान्नास्त्येवेति परिज्ञापयितुं, (तस्मात्) प्रागपि भवति। सपिण्डीकरणं प्रकृत्य सूत्रकार आह। यदा वा वृद्धिरापद्यत इति। वृद्धौ ह्याभ्युदयिकं कार्यम्। तच्चासपिण्डीकृतस्य न भवति। अतः संवत्सरात्प्रागपि भवत्यनधिकृतस्य। तथाच स्मृत्यन्तरम्। अर्वाक् संवत्सराद्यस्य सपिण्डीकरणम् भवेत्। तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विज इति। एतदेव च तस्य भवति न पिण्डनिर्वपणमिति। त्रिभ्यो दानप्रसङ्गात्। अधिकृतपुत्रस्य तु द्वादशाह एवेत्युक्तमेव। यच्च प्रेतस्य स्मर्यते। मृतेऽहनि तु कर्तव्य प्रतिमासं तु वत्सरम्। प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि इति। तदेतत्सपिण्डीकरणात्प्रागेकोद्दिष्टम्। ऊर्ध्वं तु पार्वणमेव। तथा च मनुः—असपिण्डक्रियाकर्म द्विजातेः संस्थितस्य च। अदैवं भोजयेच्छ्राद्धं पिण्डमेकं तु निर्वपेदिति। यावत्सपिण्डता न क्रियते तावदेव तत्कर्तव्यमिति। तथाचाह—सहपिण्डक्रियायां तु कृतायामन्यधर्मतः। अनयैवावृता कार्यं पिण्डनिर्वपणं सुतैरिति। सपिण्डक्रियोत्तरकालमनयैव पिण्डक्रियया पिण्डनिर्वपणं सुतैः कार्यम्। केचित्तु अधस्तनश्लोकोपात्तमावृतमनयैवावृतेत्यनेनानुवर्तयन्ति। तत्पुनरनुपपन्नार्थम्। उपरितनश्लोकारम्भसामर्थ्यात्। अनारब्धेऽपि तस्मिन्नेकोद्दिष्टं लभ्यत एव, द्विजातेः संस्थितस्य तु, अदैवं भोजयेच्छ्राद्धमित्यनेन। अधस्तनश्लोके च विशेषणार्थं वाक्यप्रसङ्गः। सहपिण्डक्रियाकर्मेति द्विजातेः संस्थितस्येत्येवमादिनैव पादत्रयेणार्थस्य सिद्धत्वात्। यत्पुनरुच्यते अत ऊर्ध्वं वर्षे वर्षे प्रेतायान्नं दद्यात् यस्मिन्नहनि प्रेतः स्यादिति, तदेकत्वविशिष्टस्याभिधानादेकत्वविशिष्टस्य भवति। तन्न। नह्यत्रैकत्वमुपादीयमानं विशेषणम्। येन प्रेतोद्देशेन दानविधानमेव विवक्ष्यते। तस्मादविवक्षैकत्वस्य। यथा स्मृत्यन्तरेऽभिहितं तथैव देयमिति॥ १०॥

(हरिहरः)—'अथोदककर्म' अथ पुरुषसंस्कारकर्मक्रमप्राप्तमुदककर्म, उदकेन जलेन कर्म क्रिया अञ्जलिदानमित्यर्थः। वक्ष्यत इति सूत्रशेषः। उपलक्षणमेतत्। येनाशौचादियमनियमा अपि वक्ष्यन्ते। 'अद्वि'''रात्रं वा' द्वे वर्षे वयो यस्य स द्विवर्षः न द्विवर्षः अद्विवर्षस्तस्मिन् प्रेते प्रकर्षेण इतो गतः प्रेतो मृतः तस्मिन्निमित्ते माता च पिता च मातापितरौ तयोर्मातापित्रोराशौचमशुद्धिः वर्णाश्रमविहितकर्मानुष्ठानसंकोचावस्थेति यावत्। इतरेषां मातापितृभ्यामन्येषां शौचमेव नाशुद्धिः। पित्रोः कियन्तं कालमाशौचम् एकरात्रमेकमहोरात्रम्। अथवा त्रिरात्रम्। अयं विकल्पः प्रेतस्याकृतचूडत्वेन व्यवस्थितः। इतरेषां सद्यःशौचमिति गृह्यकारस्यैव मतम्। स्मृत्यन्तरे तु तेषामप्याशौचस्य विहितत्वात् आदन्तजननात्सद्य इत्यादिना। यच्च पुंस उपनयनात्प्राक् स्त्रियाश्च विवाहात्प्राक् वयोवस्थाविशेषेण सद्यएकरात्रत्रिरात्रादिकमाशौचमुक्तं तत्सर्ववर्णसाधारणम्। विशेषावगमस्याशक्यत्वात्। 'शरी'''नन्ति' ऊनद्विवर्षस्य प्रेतस्य शरीरं कुणपमदग्ध्वा अग्निदाहमकृत्वा निखनन्ति गर्ते प्रक्षिपन्ति। 'अन्तः'''कवत्' चेद्यदि अन्तः सूतके सूतकस्य जननानिमित्ताशौचस्य अन्तर्मध्ये उरथा-

नात् आ उत्थानं सूतकान्तं यावत् आशौचं जननाशौचान्तरमापतति तदा सूतकवत् पूर्वसूतकशेषेणैवोत्तरस्य शुद्धिः । यद्वा अन्तर्मध्ये सूतके सूतकान्तरे जाते उत्थानात् शुद्धिः आशौचं मरणाशौचं सूतकवत् । मरणाशौचमध्ये मरणाशौचे जाते पूर्वशेषेणोत्तरस्य शुद्धिरित्यर्थः । एतच्च सपिण्डविषयम् । मातापित्रोस्तु विशेषः । मातरि पूर्वमृतायां यद्याशौचमध्ये पिता म्रियेत तदा पितृमरणनिमित्ताशौचान्ते शुद्धिः । यदा पुनः पितरि मृते माता म्रियेत तदा पितृमरणनिमित्ताशौचान्तात्पक्षिण्यन्ते द्वादशप्रहरान्ते शुद्धिः । किंच यदि सूतके रात्रिमात्रावशिष्टे सूतकान्तरमापद्येत शावे वा रात्रिमात्रावशिष्टे शावान्तरमापद्येत तदा द्व्यहमधिकं वर्द्धते । यदि पुनर्यामात्रावशिष्टे सूतके शावे वा सूतकं शावं वा सजातीयमापतति तदा त्र्यहमधिकं वर्द्धते । तथा च स्मृतिः—मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता । न पूर्वशेषाच्छुद्धिः स्यान्मातुः कुर्याच्च पक्षिणीम् । रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहात् इति । अन्ये तु इदं सूत्रमन्यथा व्याचक्षते । अन्तः सूतके चेद्यदि बालस्य मरणमापद्यते तदा आ उत्थानादाशौचमशुद्धिः सूतकवद्भवति नत्वाशौचनिवृत्तिः । बालमरणनिमित्ताशौचस्याल्पकालीनत्वेन बहुकालीनजननिमित्ताशौचशोधनासमर्थत्वात्, यतः समानजातीयस्य समानकालीनस्यैव पूर्वोत्पन्नस्य अन्तरापतितस्य वा शोधकत्वम् । 'नात्रोदककर्म' अत्र ऊनद्विवार्षिके प्रेते उदककर्म उदकाञ्जलिदानं न भवति । 'द्विवर्ष' 'त्येके' द्विवर्षः द्विवर्षवयस्कः तत्प्रभृतिस्तदादिर्यः प्रेतः तमाश्मशानात् श्मशानावधि सर्वे सपिण्डा अनुगच्छेयुः पश्चाद्व्रजेयुः । श्मशानानुगमनविधानात् दाह उपलक्ष्यते । श्मशानशब्देन हि प्रेतदाहभूमिरुच्यते । तस्माद्दाहमपि कुर्युः दाहसंनियोगशिष्टमुदकं च दद्युः । एके आचार्याः यमगाथां यमदैवत्यायामृचि गीतं साम गायन्तः पठन्तः, तथा यमसूक्तं यमदैवत्यानामृचां समुदायं सूक्तशब्दवाच्यं जपन्तोऽनुगच्छेयुरित्याहुः । 'यद्यु' 'नात्' यदि उपेतः उपनीतः प्रेतः स्यात् गृह्योक्तसंस्कारेषु तस्याधिकारात् वैतानिकस्य च मन्त्रब्राह्मणकल्पसूत्रेषु पृथक् संस्काराम्नानात् तदा भूमिजोषणादिकर्म समं तुल्यं केन आहिताग्नेः कर्मणा यथा आहिताग्नेः औपासनिकस्य भवति किंपर्यन्तम् आ उदकान्तस्य उदकसमीपस्य गमनात्, एतदुक्तं भवति—यद्युपनीतः प्रेतो भवति तदाऽस्याहिताग्नेर्भूमिजोषणादि उदकाञ्जलिदानपर्यन्तं कर्म यथा भवति तथैव कुर्यादिति । 'शाला' 'श्चेत्' चेद्यद्यसौ प्रेत आहितः कृतावसथ्याधानः स्यात् तदैनं प्रेतं शालाग्निना औपासनेन दहन्ति पुत्रादयः । 'तूष्णीं' 'तरम्' तूष्णीं मन्त्रवर्जं ग्रामाग्निना लौकिकेन पावकेन इतरमकृतावसथ्याधानं दहन्तीत्यनुषङ्गः । 'संयु' 'ह इति' संयुक्तं केन चित् यौनेन संबन्धेन संबद्धम् । मैथुनः मिथुनस्यैकदेशलक्षणया मैथुनशब्दवाच्याया भार्यायाः भ्राता श्याल इत्यर्थः, तं वोदकं जलं याचेरन् प्रार्थयेरन् उदकं करिष्यामह इत्यनेन मन्त्रेण । 'कुरु' 'प्रेते' एवं पृष्टः संयुक्तः श्यालो वा प्रतिब्रूयात् । किं, कुरुध्वं मा चैवं पुनरिति । क्व अशतवर्षे प्रेते शतवर्षेभ्योऽर्वाक् मृते सति । 'कुरु' 'स्मिन्' इतरः शतवर्षप्रभृतिः तस्मिन्मृते कुरुध्वमित्येव एतावदेव प्रतिब्रूयात् न मा चैवं पुनरिति । 'सर्वे' 'माद्वा' ज्ञातयः सपिण्डाः समानोदकाश्च सर्वे एव अपोऽभ्यवयन्ति स्नानार्थं नद्यादेर्जलं प्रविशन्ति, किं यावत् आसप्तमात्पुरुषात् सप्तमं पुरुषमभिव्याप्य यावन्तः सपिण्डाः दशमाद्वा दशमं पुरुषमभिव्याप्य वा यावन्तः समानोदकाश्च तावन्त इत्यर्थः । 'समा' 'रेयुः' समाने एकस्मिन् ग्रामे वास अवस्थानं समानग्रामवासः तस्मिन् सति यावत्संबन्धम् यदवधिसंबन्धः सापिण्ड्यं समानोदकत्वं सगोत्रत्वं वा अनुस्मरेयुः अस्मिन्पुरुषे वयं संबन्ध्यामहे इति जानीयुः तावन्तः अपोऽभ्यवयन्ति इति संबन्धः ॥ 'एक' 'ज्जन्ति' कथमित्यपेक्षायामाह—एकं परिधानीयमेव वस्त्रं येषां ते एकवस्त्राः । तथा प्राचीनावीतिनः प्राचीनावीतं विद्यते येषां ते प्राचीनावीतिनः कृतापसव्या इत्यर्थः । तथाभूताः सन्तः सव्यस्य वामस्य पाणेरनामिकया

उपकनिष्ठिकया जलमपनोद्य अपनः शोशुचदघमित्येतावता मन्त्रेणापसार्य दक्षिणामुखाः याम्यदिगभिमुखा निमज्जन्ति युगपत्सकृत्स्नान्ति। 'प्रेता…कमिति प्रेताय मृताय उदकं जलं सकृदेकवारं अञ्जलिना प्रसिञ्चन्ति शुद्धायां भूमौ प्रक्षिपन्ति, कथम् असौ अमुकप्रेत एतत्ते उदकमित्यनेन मन्त्रप्रयोगेण। 'उत्ती…देयुः' उत्तीर्णान् जलाद्बहिर्निर्गतान् शुचौ देशे मूत्रपुरीषभस्मतुषाङ्गारास्थ्याद्यशुचिद्रव्यरहिते देशे भूभागे, पुनः कीदृशे शाड्वलवति शाड्वलं हरिततृणमस्ति यस्मिन्निति शाड्वलवांस्तस्मिन् शाड्वलवति उपविष्टानासीनांस्तत्र तदा अन्ये लोकयात्रिकाः सुहृदः एतान् प्रेतस्य पुत्रादीनपवदेयुः प्रेतगुणानुकथनेनेतिहासपुराणादिविचित्रकथाभिः संसारासारताख्यापनेन तान् शोकरहितान् कुर्युः। 'अन…पूर्वाः' अनवेक्षमाणाः पश्चादनवलोकयन्तः रीतीभूताः श्रेणीभूताः पङ्क्तीभूताः कनिष्ठपूर्वाः कनिष्ठो लघीयान् पूर्वं अग्रिमो येषां ते स्वस्वकनिष्ठानुसारिण इत्यर्थः। ग्राममायान्ति आगच्छन्ति। 'निवे…शन्ति' निवेशनस्य प्रेतपतिकस्य गृहस्य द्वारे पिचुमन्दस्य निम्बस्य पत्राणि छदान् विदश्य दन्तैरवखण्ड्य आचम्य स्मार्त्ताचमनं विधाय उदकं जलमग्निं द्वारि घृतं तथा गोमयमार्द्रं सर्षपान् गौरान् तैलं तिलसंभवमेतानि प्रत्येकमालभ्य स्पृष्ट्वा अश्मानं प्रस्तरमाक्रम्य पादेनालभ्य प्रविशन्ति गृहम्॥ 'त्रिरा…रन्' त्रीण्यहोरात्राणि यावद्ब्रह्मचारिणः अकृतस्त्रीप्रसङ्गाः अधः खट्वाव्यतिरेकेण शेरत इत्येवंशीला अधःशायिनः किंचन किमपि कर्म गृहव्यापारादि लौकिकं स्वयं न कुर्युः न प्रकुर्वीरन् अन्यैरपि न कारयेयुः। अन्तर्भूतोऽत्र णिच् ज्ञेयः। 'क्रीत्वा…ग्राहम्' क्रीत्वा मूल्येनान्नं गृहीत्वा लब्ध्वा वा अयाचितमन्यतः प्राप्य दिवैव दिवसे एव न रात्रौ अश्नीयुः भुञ्जीरन्। किंभूतममांसं मांसवर्जितम्, किं कृत्वा प्रेताय पिण्डम्, अवयवपूर्वकं दत्त्वा। कथं नामग्राहं प्रेतस्य नाम गृहीत्वा, कुत्र अवनेजनदानप्रत्यवनेजनेषु अवनेजनं च दानं च प्रत्यवनेजनं च अवनेजनदानप्रत्यवनेजनानि तेषु त्रिरात्रमयं धर्मः। 'मृन्म…हीति' मृन्मये शरावादौ पात्रे कृत्वा ता यस्मिन्दिने प्रेतोऽभूत् तत्संबन्धिनीं रात्रीं क्षीरं च उदकं च क्षीरोदके दुग्धपानीये पात्रैकवचनसामर्थ्यादेकीकृते विहायसि आकाशे निदध्युः स्थापयेयुः। कथं प्रेतात्र स्नाहीत्यनेन मन्त्रेण। विज्ञानेश्वराचार्यास्तु द्रव्यद्वयनिधानसामर्थ्यात् द्वयोः पात्रयोर्भेदेन निधानं मन्यन्ते, मन्त्रं चोहन्ति प्रेतात्र स्नाहि पिब चेदमिति। 'त्रिर…त्येके' एवं प्रेतस्य मरणदिने पुत्रादीनां कृत्यमभिधायाशौचकालनिर्णयार्थमाह। त्रिरात्रं त्रीण्यहोरात्राणि कालाध्वनोरत्यन्तसंयोगे इत्युपपदविभक्तिर्द्वितीया, तेन संततमाशौचमशुचित्वम्। एके आचार्या मन्वादय उपनयनप्रभृति दशाहं दशाहोरात्राणि मन्यन्ते। अत्र प्रकरणे अहःशब्दो रात्रिशब्दश्च अहोरात्रोपलक्षणपरः। एके त्रिरात्रमेके दशरात्रं चेति व्यवस्थितं वृत्तिस्वाध्यायापेक्षया। यथाह—एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः। त्र्यहात्केवलवेदस्तु निर्गुणो दशभिर्दिनैरिति। एतदपि वृत्तिसंकोचे व्यवस्थापकम्। तद्यथा यदा त्र्यहैकोऽश्वस्तनिको वा स्वाध्यायाग्निसंपन्नो भवति तदा तस्य वृत्तिसंपादनाय सद्यः शौचं भवति। यदा तु कुशूलकुम्भीधान्यः केवलस्वाध्यायसंपन्नश्च तदाऽस्य त्रिरात्रम्। यदा पुनर्दशरात्रकुटुम्बवृत्तिपर्याप्तातिरिक्तधान्यो भवति वृत्तस्वाध्यायवांश्च तदाऽस्य दशरात्रं वृत्तस्वाध्यायरहितस्य वृत्तिहीनस्यापि सर्वदा दशरात्रमेव। अयं च वृत्तिसंकोचात् वृत्तस्वाध्यायापेक्षया य आशौचकालसंकोचः स वृत्तिसंपादनविषय एव न पुनः कर्मान्तराधिकारसंपादनपरः, तेन यस्याशौचिनो या आपद्भवति तदपाकरणार्थं वृत्तस्वाध्यायसंपन्नस्य आशौचसंकोचो नेतरेषाम्, जननाशौचेऽप्येवमेव। 'न स्वा…रन्' स्वाध्यायं वेदं नाधीयीरन् न पठेयुः न चाध्यापयेयुः येषां यावदाशौचम्। 'नित्या…वर्जम्' नित्यान्यावश्यकानि संध्यावन्दनादीनि निवर्तेरन् अनधिकारान्न प्रवर्तन्ते। कथम् वैतानवर्जं वितानो गार्हपत्याहवनीयदक्षिणाग्नीनां विस्तारस्तत्र साध्यमग्निहोत्रादि कर्म तद्वैतानम् तद्वर्जयित्वाऽन्यन्निवर्तते इत्यर्थः। 'शाला…कुर्युः' शाला-

ग्निरावसथ्याग्निः तत्र शालाग्नौ साध्यानि सायंप्रातर्होमस्थालीपाकादीनि तानि वर्जयित्वा नित्यानि निवर्तेरन्नित्येक आचार्याः मन्यन्ते, तस्मिन्पक्षे न स्वयं कुर्युः किंत्वन्येन कारयेयुः। गृह्यकारपक्षे न कुर्युर्नेच कारयेयुः। यथाह कात्यायनः—सूतके मृतके चैव स्मार्तं कर्म निवर्तते। पिण्डयज्ञं चरुं होममसगोत्रेण कारयेत्। वैतानिकं स्वयं कुर्यात् तत्त्यागो न प्रशस्यते। तथा—स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके। श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयादिति स्मरणात्। राहुदर्शने तु राहोरन्यत्र सूतके इति वचनात् यावद्राहुदर्शनं तावद्राहुदर्शननिमित्तकं स्नानतर्पणदेवतार्चनजपहोमदानादि स्मार्त्तं कर्म कुर्यात्। 'प्रेत···नात्' प्रेतस्पर्शो विद्यते येषां ते प्रेतस्पर्शिनः सपिण्डा ग्रामं न प्रविशेयुर्नगच्छेयुः, कियावत् आनक्षत्रदर्शनात् नक्षत्राणां दर्शनं नक्षत्रदर्शनम् तस्मात् आ अवधेः। 'रात्रौ···त्यस्य' चेद्यदि रात्रौ निशि प्रेतस्पर्शः स्यात्तदा आदित्यस्य सूर्यस्य दर्शनात्प्राक् न प्रविशेयुरित्यनुषङ्गः। 'प्रवे···तरैः' प्रवेशनमादौ यस्य निम्बपत्रादिदशनस्य तत्प्रवेशनादि कर्म इतरैरसपिण्डैः समानं तुल्यं कार्यम्। अयमसपिण्डानां नियमः। यतोऽसपिण्डानामेव 'प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि। इच्छतां तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात्' इतियाज्ञवल्क्योक्तेरिच्छतां विकल्पः। संयमः प्राणायामः। एवं ब्राह्मणस्याशौचमभिधायेदानीमितरवर्णानामाशौचकालनिर्णयमाह 'पक्षं···चम्' पक्षम् पञ्चदशाहोरात्राणि वैश्यस्याशौचं भवति, द्वौ पक्षौ त्रिंशदहोरात्राणि शूद्रस्य, वाशब्दात् द्वादशाहोरात्राणि क्षत्रियस्याशौचम्। तथाच स्मृत्यन्तरम्। शुध्येद् विप्रो दशाहेन द्वादशाहेन भूमिपः। वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यतीति। 'आचा···योश्च' आचार्ये उपनयनपूर्वकं वेदाध्यापके चैवमेवोदकदानादि कर्तव्यम्, मातामही च मातामहश्च मातामहौ तयोः, द्विवचनं मातामह्यपेक्षया, चकारादेवमेवोदकदानादि सर्वं कर्तव्यम्। 'स्त्रीणां···नाम्' अप्रत्तानामपरिणीतानां स्त्रीणां कन्यानां चकारादेवमेव एषैव निखननदहनोदकदानप्रभृतीतिकर्तव्यता। आशौचेऽपि विशेषो नास्ति गृह्यकारमते। अनभिधानात्। स्मृत्यन्तरे तु पुनर्दृश्यते अहस्त्वदत्तकन्यास्विति। एतच्च चूडाकरणानन्तरं दानात्प्राक्, कुतः, स्त्रीणां चूडात्तथा दानात्संस्कारादप्यधः क्रमात्। सद्यः शौचमथैकाहं त्र्यहं स्यात् पितृबन्धुषु, इतिस्मृतेः। तस्मादपरिणीतानां स्त्रीणां चूडाकरणात्प्राक् सद्यः शौचम्, चूडाकरणादुपरि दानात्प्राक् एकाहम्, तत उपरि विवाहात्प्राक् त्र्यहमिति निर्णयः। 'प्रत्ता···षाम्' प्रत्तानां परिणीतानां स्त्रीणामितरे भर्त्रादयो दाहादि कर्म कुर्युः न पित्रादयः। ताश्च प्रत्ताः स्त्रियः तेषां भर्त्रादीनां यथाधिकारमुदकदानादि कर्म कुर्युः। पित्रादीनामत्र विशेषः—दत्ता नारी पितुर्गेहे सूयते म्रियतेऽपि वा। तद्बन्धुवर्गस्त्वेकेन शुध्यते जनकस्त्रिभिरितिवचनात् प्रत्तानामपि पितुर्बन्धूनां चाशौचापत्तिमात्रम्। 'प्रोषि···सीरन्' प्रोषितः प्रवासंगतश्चेद्यदि प्रेयात् म्रियेत तदा तत्पुत्रादयः तन्मरणश्रवणकालमारभ्य कृतं दत्तं स्नानपूर्वकमुक्तविधिना उदकं यैस्ते कृतोदकाः सन्तः कालशेषमाशौचसमयशेषमासीरन् आशौचधर्मेण वर्तेरन्नित्यर्थः। 'अती···त्रं वा' चेद्यदि आशौचकालोऽतीतः ततः प्रोषितमरणं च श्रुतं तदा एकरात्रमाशौचं त्रिरात्रं वा। अत्र यद्यपि सामान्येनोक्तं तथापि स्मृत्यन्तराद्विशेषोऽवगन्तव्यः। कथम्, मासत्रये त्रिरात्रं स्यात् षण्मासे पक्षिणी भवेत्। अहस्तु नवमादर्वाक् सद्यः शौचमतः परम्। तथा, पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः। श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेदिति। 'अथ का··प्रत्तानां'। अथ नियमेन कृत्यमभिधायाधुना कामतः कृत्यमाह। कामोदकानि कामेन इच्छया उदकानि उदकदानानि भवन्तीति सूत्रशेषः। केषाम्? ऋत्विजः याजकाः श्वशुरौ भार्यायाः मातापितरौ सखायो मित्राणि संबन्धिनो वैवाह्याः मातुला मातृभ्रातरः भागिनेया भगिनीपुत्राः एतेषां प्रत्तानामूढानां दुहितृभगिन्यादीनां स्त्रीणां चकारादिच्छयोदकदानमतोऽदाने प्रत्यवायो नास्ति। 'एका···घ्नन्ति' एकादश्यामेकादशेऽहनि ब्राह्मणः

कर्ता चेत् अयुग्मान् त्रिप्रभृतिविषमसंख्याकान् द्विजोत्तमान् भोजयित्वा भोजनं कारयित्वा एकोद्दिष्टश्राद्धविधिना मांसवत् मांसेन सहितं पायसौदनादि भवति । एके आचार्याः प्रेतमुद्दिश्य गामपि घ्नन्ति इति । शाखापशुविधानेन तन्मांसेन श्राद्धं कुर्वन्ति तच्छ्राद्धमग्रे वक्ष्यति नद्यन्तरे नावं कारयेन्न वेति । ' पिण्ड'''श्चेत् ' पिण्डानां करणं पिण्डकरणं तस्मिन् अमावास्यायां साग्नेः पुत्रस्य पिण्डपितृयज्ञे तत्र पितॄणां प्रथम आद्यः प्रेतः स्यात् तत्प्रभृतिपिण्डदानमित्यर्थः । चेद्यदि स प्रेतः पुत्रवान् अधिकृतेन साग्निना पुत्रेण पुत्री भवति । अयमर्थः—साग्नेः पुत्रस्य यदि पिता म्रियेत तदा पिण्डपितृयज्ञानुष्ठानानुरोधेन द्वादशेऽहनि सपिण्डीकरणं विधाय अमावास्यायां तत्प्रभृति पिण्डपितृयज्ञे पिण्डदानं पिण्डान्वाहार्यके च श्राद्धे; तत्प्रभृति पार्वणमेव श्राद्धं भवतीति । एकोद्दिष्टं तु निरग्निविषयम् । 'निवर्तेत चतुर्थः ' सपिण्डने कृते पित्रादिभ्यस्त्रिभ्यः पिण्डादिदानं चतुर्थः पिण्डो निवर्तेत पिण्डास्त्रिष्विति श्रुतेः । त्रिषु पिण्डः प्रवर्तत इति स्मृतेश्च । ' संव'''गेके ' एके आचार्याः साग्नेरपि पुत्रस्य संवत्सरं यावत् पृथगेकस्यैव पितुः पिण्डदानमिच्छन्ति । संवत्सरे सपिण्डीकरणमिति वचनात् । न वा असपिण्डीकृतस्येतरैः सह दानं युज्यते, सपिण्डीकरणमितिशब्दः पूर्वजैः सह सपिण्डीकरणं मेलनमिति व्युत्पत्त्या अन्वर्थः । तेन संवत्सरं यावदसपिण्डीकृतस्य पितुः प्रेतस्य पृथग्दानमिच्छन्त्येके । एवं सति संवत्सरे सपिण्डीकरणमिति स्मृतेरनुग्रहः कृतो भवति, एवं प्राप्त उच्यते ' न्यायस्तु ' तुशब्देन पूर्वपक्षव्यावृत्तिः, नैतदेवं यत्स्मृत्यनुग्रहन्यायेनेदं परिकल्प्यते, कुतः श्रुतिविरोधात् । काऽसौ श्रुतिः । ' न चतु ''श्रुतिः ' कथं श्रुतिविरोधः, शृणु, अधिकृतस्य पुत्रस्य साग्नेः पृथक् क्रियमाणे चतुर्णामपि पिण्डनिर्वपणेऽधिकारो भवति अमावास्यायां पृथक् प्रेतस्य पार्वणं च त्रयाणामिति भवति श्रुतिविरोधः । तेनाधिकृतस्य साग्नेः पुत्रस्य सपिण्डीकरणादूर्ध्वमेकोद्दिष्टं नैव कर्तव्यं भवति सपिण्डीकरणं तु द्वादशाह एव नियतमनधिकृतस्य निरग्नेस्तु संवत्सरादिषु सपिण्डीकरणकालेषु कृतसपिण्डनस्यापि पितुः संवत्सरादूर्ध्वमपि प्रतिसंवत्सरमेकोद्दिष्टमेव । ' अह'''द्यात् ' अहरहः प्रतिदिनमस्मै प्रेतायोद्दिश्य ब्राह्मणाय संप्रदानभूताय अन्नं भोजनपर्याप्तमुदकुम्भं च जलपूर्णघटं संवत्सरं च यावद्दद्यात् प्रयच्छेत् । ' पिण्ड'''घ्नन्ति ' एके आचार्या अहरहः पिण्डनिर्वपणमपीच्छन्ति तच्चानधिकृतनिरग्निविषयम्, अधिकृतस्य हि साग्नेः पार्वणमेव भवति नैकः पिण्डः । न चैतत्प्रतिदिनमन्नोदककुम्भदानं संवत्सरसपिण्डीकरणपक्ष एव प्रागपि संवत्सरात् यदि वा वृद्धिरापद्यत इत्यादिस्मृतिविहितकालान्तरे सपिण्डीकरणेऽपि तदूर्ध्वं संवत्सरं यावद्भवत्येव । यतः स्मरन्ति । अर्वाक् संवत्सराद्यस्य सपिण्डीकरणं भवेत् । तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजे इति, तस्मात् साग्निना निरग्निना च पुत्रेणाहरहरन्नोदकुम्भदानं कर्तव्यम् । पक्षे यत्पिण्डदानं तन्निरग्नेरेव, इतरस्य तु त्रिभ्यः पिण्डदानं प्रसज्येत एकपिण्डनिर्वपणनिषेधात्, तर्हि त्रिभ्योऽपि ददातु, न, प्रेतस्यहि तत्त स्मर्यते । याज्ञवल्क्यः—मृतेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् । प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि । इत्येतदेकोद्दिष्टं साग्नेः सपिण्डीकरणात्प्राक् ऊर्ध्वं तु पार्वणमेव । यथाहमनुः—असपिण्डक्रिया कर्म द्विजातेः संस्थितस्य तु । अदैवं भोजयेच्छ्राद्धं पिण्डमेकं तु निर्वपेत् । तथा—सहपिण्डक्रियायां तु कृतायामस्य धर्मतः । अनयैवावृता कार्यं पिण्डनिर्वपणं सुतैरिति । स्मृत्यन्तरं च । यः सपिण्डीकृतं प्रेतं पृथक्पिण्डेन योजयेत् । विधिघ्नस्तेन भवति पितृहा चोपजायते इति । एतच्चौरसक्षेत्रजसाग्निपुत्रविषयम् । यतः स्मरन्ति—औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु । दद्यातामितरे कुर्युरेकोद्दिष्टं सुता दशेति । अत्राशौचप्रसङ्गात् स्मृत्यन्तरोक्त आशौचापवादो लिख्यते । ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् । सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा । कारवः शिल्पिनो वैद्या दासीदासास्तथैव च । राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्तिता इति ।

एतच्च यज्ञादौ आरब्ध एव, कुतः ' आरब्धे सूतकं नास्ति अनारब्धे तु सूतकमिति वचनात् । आरम्भश्चैवम् । आरम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः । नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रियेति । इति सूत्रार्थः ॥ ॥ अथ पद्धतिः । तत्र ऊनद्विवार्षिकं प्रेतमरण्यं नीत्वा भूमौ निखनेत् । द्विवर्षप्रभृति उपनयनात्प्राक् प्रेतं श्मशानं नीयमानं सर्वे सपिण्डा यथाज्येष्ठपुरःसरं पङ्क्तीभूता अनुगच्छन्ति । पक्षे यमगाथां गायन्तो यमसूक्तं च जपन्तः । ततस्तत्र तं प्रेतं भूमिजोषणादिरहितं दग्ध्वा वक्ष्यमाणविधिना स्नात्वा उदकाञ्जलिं च दत्त्वा गृहमागता यथोक्तमाशौचमाचरेयुः । उपनयनादूर्ध्वं भूमिजोषणाद्युदकान्तगमनपर्यन्तं यथाहिताग्नेः कर्म तथैव यथासंभवं भवति । अत्र चौपासनिकं पुत्रादिरधिकारी दुर्बलं ज्ञात्वा स्नापयित्वा शुद्धवस्त्रेणाच्छाद्य दक्षिणाशिरसं दर्भवत्यां भूमौ संनिवेशयेत् । पूर्वपक्षे तु रात्रौ चेन्मृत्युशङ्काऽग्निहोत्रिणः । हुतावशिष्टाः पक्षेऽस्मिन् जुहुयात्सकलाहुतीः । दार्शे तत्र पिण्डपितृयज्ञं विना आकृष्य कुर्यान्न तु पौर्णमासं शुक्लपक्षे आकृष्य कुर्यात् । दिवा सायमाहुतिं च । तत्कर्मणोरप्रारब्धत्वात् । अथ तत्र वैतरणीं यथाशक्ति यथाश्रद्धं हिरण्यभूम्यादिकं सर्वपापक्षयार्थं दापयित्वा अथ गतासुं ज्ञात्वा घृतेनाभ्यज्य उदकेनाप्लाव्य सवस्त्रमुपवीतिनं चन्दनोक्षितसर्वाङ्गं पुष्पमालाविभूषितं मुखनासिकाचक्षुःश्रोत्ररन्ध्रेषु निक्षिप्तहिरण्यशकलं वस्त्रेणाच्छाद्य पुत्रादयो निर्हरेयुः । एतच्चावसथ्याग्निसंनिधौ गृहमरणपक्षे । यदा तु गङ्गादितीर्थेऽग्निसंनिधौ अर्द्धजले मरणं तदा तत्राप्येवं स्नपनादि हिरण्यशकलनिधानान्तं कर्म कुर्यात् । निर्हरणपक्षे तु आमपात्रे सन्तापाग्निमादायाग्निपुरःसरं प्रेतं यमगाथां गायन्तो यमसूक्तं च जपन्तः पुत्रादयः श्मशानं नयन्ति, तत्राधिकारी पुत्रादिराप्लुत्य भूमिजोषणपूर्वकं दक्षिणोत्तरायतं दारुचयं विधाय चितौ कृष्णाजिनं प्राग्ग्रीवमुत्तरलोममास्तीर्य तत्रोत्तानं दक्षिणाशिरसमेनं निपात्य दक्षिणनासारन्ध्रे आज्यपूर्णं स्रुवं निधाय पादयोरधरारणिमुरस्युत्तरारणिं च प्रागग्रां पार्श्वयोः सव्यदक्षिणयोः शूर्पचमसौ मुसलमुलूखलं च न्युब्जमूर्वोरन्तराले तत्रैव चात्रमोविलीं च अरुदन् भयरहितो निदध्यात् अपसव्येन वाग्यतो दक्षिणामुखः सन् । अथोपविश्य सव्यं जान्वाच्यौपासनाग्निं गृहीत्वा अस्मात्त्वमधिजातोसीत्यनयर्चा स्वाहान्तया दक्षिणतो मुखे वा शनैरग्निं दद्यात् । अनावसथिकं तु एवमेव ग्रामाग्निना सपिण्डाद्यानीतेनामन्त्रकं दहति । ततो दाहान्ते नद्याद्युदकसमीपं गत्वा समीपस्थितं योनिसंबद्धं श्यालकं वा उदकं करिष्यामहे इत्यनेन मन्त्रेणोदकं याचेरन् सपिण्डादयः । एवं याचिते यदि शतवर्षादर्वाक्प्रेतो भवेत्तदा कुरुध्वं मा चैवं पुनरित्येवं प्रतिवचनं दद्यात्, अथ शतवर्षादूर्ध्वं प्रेतो भवेत्तदा कुरुध्वमित्येतावदेव, ततः सप्तपुरुषसंबन्धिनः सपिण्डा दशपुरुषसंबन्धाः समानोदकाश्चैकग्रामनिवासे यावत्स्मृतं जलं प्रविशन्ति एकवस्त्राः प्राचीनावीतिनः सन्तः, ततः सव्यहस्तस्यानामिकाङ्गुल्या उदकमपनोद्य अपनः शोशुचदघमित्येतावता मन्त्रेण दक्षिणामुखास्तूष्णीं निमज्जन्ति । ततः प्रेतमुद्दिश्यामुकसगोत्रामुकशर्मन् प्रेत एतत्ते उदकमित्युच्चार्य एकैकमञ्जलिं सकृद्भूमौ प्रक्षिपन्ति । तत उदकादुत्तीर्य शुचौ देशे शाड्वलवत्युपविष्टान् सपिण्डादीनन्ये सुहृद इतिहासपुराणादिविदग्धकथाभिः संसारानित्यतां दर्शयन्तोऽपवदेयुः । तथाहि—कृतोदकान्समुत्तीर्णान्मृदुशाड्वलसंस्थितान् । स्नातानपवदेयुस्तानितिहासैः पुरातनैः ॥ मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम् । करोति यः स संमूढो जलबुद्बुदसंनिभे ॥ पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः । कर्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ॥ गन्त्री वसुमती नाशमुदधिर्दैवतानि च । फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति ॥ श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः । अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः ॥ इति संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः । विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः ॥ मा शोकं कुरुतानित्ये सर्वस्मिन्प्राणधारिणि । धर्मं कुरुत यत्नेन यो वः संगतिमेष्यति ॥ तथाच विष्णुः । यदुदगयनं तदहर्दे-

वानां दक्षिणायनं रात्रिः संवत्सरो ह्यहोरात्रं तत्रिंशता मासो द्वादशवर्षं द्वादशवर्षशतानि दिव्यानि कलियुगं, द्विगुणानि द्वापरं, त्रिगुणानि त्रेतायुगं, चतुर्गुणानि कृतयुगम्, एवं द्वादशसहस्राणि दिव्यानि चतुर्युगम्, तत्सहस्रं तु कल्पः, स च पितामहस्याहस्तावती चास्य रात्रिः । एवंविधेनाहोरात्रेण मासवर्षगणनया सर्वश्रेष्ठस्यैव ब्रह्मणो वर्षशतमायुः, एवं ब्रह्मायुषा च परिच्छिन्नः पौरुषो दिवसस्तस्यान्ते महाकल्पः तावत्येव चास्य निशा, पौरुषाणामहोरात्राणामतीतानां संख्यैव नास्ति न च भविष्याणाम् अनाद्यन्तत्वात्कालस्य । एवमस्मिन्निरालम्बे काले संततयायिनि । न तद्भूतं प्रपश्यामि स्थितिर्यस्य भवेद् ध्रुवा ॥ गङ्गायाः सिकता धारास्तथा वर्षति वासवे । शक्या गणयितुं लोके न व्यतीताः पितामहाः ॥ चतुर्दश विनश्यन्ति कल्पे कल्पे सुरेश्वराः । सर्वलोकप्रधानाश्च मनवश्च चतुर्दश ॥ बहूनीन्द्रसहस्राणि दैत्येन्द्रनियुतानि च । विनष्टानीह कालेन मनुष्याणां तु का कथा । राजर्षयश्च बहवः सर्वे समुदिता गुणैः । देवर्षयश्च कालेन सर्वे ते निधनं गताः । ये समर्था जगत्याणे सृष्टिसंहारकारिणः । तेऽपि कालेन नीयन्ते कालो हि बलवत्तरः ॥ आक्रम्य सर्वः कालेन परलोकाय नीयते । कर्मपथ्योदनो जन्तुस्तत्र का परिदेवना । जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च । अर्थे दुःपरिहार्येऽस्मिन् नास्ति शोकसहायता । शोचन्तो नोपकुर्वन्ति मृतस्येह जना यतः । अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः । सुकृतं दुष्कृतं चोभे सहायौ यस्य गच्छतः । बान्धवैस्तस्य किं कार्यं शोचद्भिरथवा तथा । बान्धवैर्नाम शोचद्भिः स्थितिं प्रेतो न विन्दति । अस्वस्थपतितानेष पिण्डतोयप्रदानतः । अर्वाक् सपिण्डीकरणात् प्रेतो भवति वै मृतः । प्रेतलोकं गतस्यान्नं सोदकुम्भं प्रयच्छति ॥ देवतायतनस्थाने तिर्यग्योनौ तथैव च । मनुष्येषु तथा प्रैति श्राद्धं दत्तं स्वबान्धवैः । प्रेतस्य श्राद्धकर्तुश्च पृथक् श्राद्धे कृते शुभम् । तस्माच्छ्राद्धं सदा कार्यं शोकं त्यक्त्वा निरर्थकम् । एतावदेव कर्तव्यं सदा प्रेतस्य बन्धुभिः । नोपकुर्यान्नरः शोचन् प्रेतस्यात्मन एव च । दृष्ट्वा लोकमनानन्दं म्रियमाणांश्च बान्धवान् । धर्ममेकं सहायार्थे वरयध्वं सदा नराः । मृतोऽपि बान्धवः शक्तो नानुगन्तुं मृतं नरम् । जायावर्जं हि सर्वस्य याम्यः पन्था विभिद्यते । धर्म एकोऽनुयात्येनं यत्र क्वचन गामिनम् । ततोऽसारे त्रिलोकेऽस्मिन्धर्मं कुरुत मा चिरम् । श्वः कार्यमद्य कुर्वीत पूर्वाह्णे वापराह्णिकम् । नहि प्रतीक्षते मृत्युः कृतं वाऽस्य न वाऽकृतम् । क्षेत्रापणगृहासक्तमन्यत्र गतमानसम् । वृकीवोरणमासाद्य मृत्युरादाय गच्छति । न कालस्य प्रियः कश्चिदप्रियो वाऽपि विद्यते । आयुष्ये कर्मणि क्षीणे प्रसह्य हरते जनम् नाप्राप्तकालो म्रियते विद्धः शरशतैरपि । कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति । नौषधानि न मन्त्राश्च न होमा न पुनर्जपाः । त्रायन्ते मृत्युनोपेतं जरया वाऽपि मानवम् । यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् । तथा पूर्वकृतं कर्म कर्तारमनुविन्दति । आगामिनमनर्थं हि प्रतिष्ठानशतैरपि । न निवारयितुं शक्तस्तत्र का परिदेवना । भारते—यथा काष्ठं च काष्ठं च समेयातां महोदधौ । समेत्य च व्यपेयातां तद्वद्भूतसमागमः । रामायणे च—शोचमानास्तु सस्नेहा बान्धवाः सुहृदस्तथा । पातयन्ति जनं स्वर्गादश्रुपातेन राघव । श्रूयते हि नरव्याघ्र पुरा परमधार्मिकः । भूरिद्युम्नो गतः स्वर्गं राजा पुण्येन कर्मणा । स पुनर्बन्धुवर्गस्य शोकव्याजेन राघव । कृत्स्ने च क्षयिते धर्मे पुनः स्वर्गान्निपातितः । अतः शोकाग्निना दग्धः पिता ते स्वर्गतः प्रभो । शपेत्त्वां मन्युनाऽऽविष्टः तस्मादुत्तिष्ठ मा शुचः । ततः पश्चादनवलोकयन्तः कनिष्ठानग्रतः कृत्वा पङ्क्तीभूता ग्राममायान्ति । आगम्य च गृहद्वारे स्थित्वा निम्बपात्राणि दन्तैरवखण्ड्याचम्योदकमग्निं गोमयं गौरसर्षपाँस्तैलं चेति क्रमेणालभ्य पादेनाश्मानमाक्रम्य गृहं प्रविशन्ति । ततः प्रभृति त्रिरात्रं यावत् ज्ञातीनां यमनियमा उच्यन्ते । ब्रह्मचर्यमधःशयनं लौकिककर्माकरणमन्येषां कुर्वित्यप्रेरणं क्रीत्वा लब्ध्वा वा दिवैव भोजनं मांसवर्जम् । एते च नियमा ज्ञातीनां पुत्रादीनां यावदाशौचम् । अथ यस्तेषां मध्ये प्रेतक्रियाधिकारी पुत्रादिः स

दशरात्रं यावत्प्रत्यहमेकैकमवयवपूरकं पिण्डं प्रेताय दद्यात् । आशौचदिनहानौ वृद्धौ वा दशैव पिण्डान् दिनानि विभज्य दद्यात् । कथममुकसगोत्रामुकशर्मन् प्रेत अवनेनिक्ष्व, ततो दर्भानास्तीर्य अमुकसगोत्रामुकशर्मन् प्रेत एष ते शिरःपूरकः पिण्डो मया दीयत इति पिण्डं दत्वा पूर्ववत्पुनरवनेजनं दत्त्वा ततोऽनुलेपनं ततो पुष्पधूपदीपशीतलतोयोर्णातन्तुदानं पिण्डे स्मृत्यन्तरोक्तमपि कुर्यात् । अथ यस्मिन्नहोरात्रे स मृतो भवति तस्यां रात्रौ मृन्मये पात्रे क्षीरोदके कृत्वा यष्ट्यादिकमवलम्ब्याकाशे धारयेत् प्रेतात्र स्नाहि पिब चेदमिति मन्त्रेण । ततो द्वितीयादिषु प्रत्यहमनेनैव विधिना एकैकं पिण्डमवयवपूरकं दद्याद् ब्राह्मणः । क्षत्रियश्चेन्नवमेऽहनि नवमं पिण्डं दत्वा द्वादशेऽहनि दशमं पिण्डं दद्यात् । वैश्यश्चेत्पञ्चदशेऽहनि शूद्रश्चेत्रिंशत्तमे इति विशेषः । तथैव एकैकमञ्जलिमेकैकं जलपात्रम् । वृद्धिपक्षे त्वञ्जलीनां पात्राणां च दिनसंख्यया एकैकं वर्द्धयेत् । तत्र वाक्यम्—अमुकसगोत्रामुकशर्मन् प्रेतैष ते तिलतोयाञ्जलिर्मया दत्तस्तवोपतिष्ठताम् । अमुकसगोत्र प्रेत एतत्ते तिलतोयपात्रं मया दत्तं तवोपतिष्ठताम् । सद्यःशौचपक्षे त्वेकस्मिन्दिन एव क्रमेण दशावयवपूरकान् पिण्डान् तथा पञ्चपञ्चाशत्तोयाञ्जलीन् पञ्चपञ्चाशत्तोयपात्राणि च दद्यात् । त्र्यहाशौचपक्षे तु प्रथमदिने त्रीन् पिण्डान् षडञ्जलीन् षट् पात्राणि च दद्यात् । द्वितीयदिने चतुरः पिण्डान् द्वाविंशत्यञ्जलीन् द्वाविंशति पात्राणि तृतीयदिने पुनस्त्रीन् पिण्डान् सप्तविंशत्यञ्जलीन् सप्तविंशतिपात्राणि च दद्यात् । यतः स्मरन्ति—प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः । द्वितीये चतुरो दद्यादस्थिसंचयनं तथा । त्रींस्तु दद्यात्तृतीयेऽह्नि वस्त्रादि क्षालयेत्तत इति । केचित्तु प्रथमेऽह्नि एकं पिण्डमेकमञ्जलिमेकं पात्रं द्वितीयदिने चतुरः पिण्डान् चतुर्दशाञ्जलीन् चतुर्दशपात्राणि तृतीयदिने पञ्चपिण्डान् चत्वारिंशदञ्जलीन् चत्वारिंशत्पात्राणीति मन्यन्ते । एतत्प्रेतकृत्यकरणानन्तरं न पुनः स्नायात् स्मरणाभावात् । पिण्डैरवयवपूरणम् । यथा—शिरः प्रथमेन, कर्णाक्षिनासिका द्वितीयेन, गलांसभुजवक्षांसि तृतीयेन, नाभिलिङ्गगुदानि चतुर्थेन, जानुजङ्घापादाः पञ्चमेन, सर्वमर्माणि षष्ठेन, नाडिकाः सप्तमेन, लोमान्यष्टमेन, वीर्यं नवमेन, शरीरपूर्णत्वं दशमेनेति । एतत् प्रेतनिर्हरणादिकं यतिव्यतिरिक्तानां त्रयाणामाश्रमिणां कुर्यात् । यतेस्तु न किंचित् । तथाच स्मृतिः—त्रयाणामाश्रमाणां च कुर्याद्दाहादिकाः क्रियाः । यतेः किंचिन्न कर्तव्यं न चान्येषां करोति स इति । तथा एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम् । न कुर्यात्पार्वणादन्यद् ब्रह्मीभूताय भिक्षवे । अहन्येकादशे प्राप्ते पार्वणं तु विधीयत इति । ब्रह्मचारी तु आचार्योपाध्यायपितृव्यतिरिक्तानां प्रेतानां निर्हरणादिकं न कुर्यात् । यथाह मनुः—आदिष्टी नोदकं कुर्यादा व्रतस्य समापनात् । समाप्ते तूदकं कृत्वा त्रिरात्रमशुचिर्भवेदिति । तथा, आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रती । सकटान्नं न चाश्नीयान्नच तैः सह संवसेदिति । यदि मोहात्करोति तदा ब्रह्मचर्यव्रताच्च्यवते पुनरुपनयनेन शुध्यति । तथास्थिसंचयनं ब्राह्मणस्य चतुर्थेऽहनि, क्षत्रियस्य पञ्चमे, वैश्यस्य षष्ठे, शूद्रस्यैकादशेऽहनि कुर्यात् । त्र्यहाशौचे द्वितीयेऽहनि सर्वेषाम्, सद्यःशौचे पुनर्दाहानन्तरमेव । तत्रास्थिसंचयननिमित्तमेकोद्दिष्टश्राद्धं विधाय पुष्पधूपदीपनैवेद्यानि संभृत्य ॐ क्रव्यादमुखेभ्यो देवेभ्यो नम इति मन्त्रेणार्घादिना पूजाङ्कुर्यात्, श्मशाने ततो नमः क्रव्यादमुखेभ्यो देवेभ्य इति वलिदानम् । तत्र मन्त्रः—देवा येऽस्मिन् श्मशाने स्युर्भगवन्तः सनातनाः । तेऽस्मत्सकाशाद् गृह्णन्तु वलिमष्टाङ्गमक्षयम् । प्रेतस्यास्य शुभाँल्लोकान्प्रयच्छन्त्वपि शाश्वतान् । अस्माकं चायुरारोग्यं सुखं च ददताक्षयमिति । एवं वलिं दत्वा विसर्जयेत् । ततोऽपसव्यं कृत्वा पलाशवृन्तेनास्थीनि परिवृत्याङ्गुष्ठकनिष्ठाभ्यामादाय पलाशपुटे धारयति । तत्र शर्मी शैवालं कर्दमं च धारयति । ततो घृतेनाक्तसर्वौषधीमिश्राण्यस्थीनि दक्षिणपूर्वायतान्यवाकारान्कपूंस्खात्वा तत्र कुशानास्तीर्य हरिद्रया पीतवस्त्रखण्डमावृत्य तत्र वक्ष्य-

माणमन्त्रेण निक्षिपेत्, ॐ वाचा मनसा आर्तेन ब्रह्मणा त्रय्या विद्यया पृथिव्या मक्षिकायामपाꣳ रसेन निवपाम्यसाविति मन्त्रेण, असौस्थाने प्रेतनामादेशः । ततः कुम्भे तूष्णीं निधाय तं कुम्भमरण्ये वृक्षमूले वा भूमौ खात्वा धारयेत् । चितास्थितं भस्म तोये सर्वमेव प्रक्षिपेत्, चिताभूमिं च गोमयेन विलिप्य तत्र तेनैव पूर्वोक्तबलिमन्त्रेण बलिं दद्यात् । तं च बलिं क्षीरेणाभ्यज्य देवता विसर्जयेत् । चिताभूमिच्छादनार्थं तत्र वृक्षं पट्टकं वा कारयेत् । सभाविश्रामार्थं काष्ठपाषाणविन्यासविशेषः पट्टकः । पट्टहर इति कान्यकुब्जे प्रसिद्धः । लोकाचारादेव कुड्यं वा । ततः कदाचिदस्थिकुम्भमुत्थाप्यादाय तीर्थं गच्छेत् । अस्थीनि मातापितृवंशजानां नयन्ति गङ्गामपि ये कदाचित् । सद्बान्धवोऽस्यापि दयाभिभूतास्तेषां च तीर्थानि फलप्रदानि । ततश्च गङ्गां गत्वा स्नात्वा पञ्चगव्येनास्थीनि सिक्त्वा हिरण्यमध्वाज्यतिलैश्च संयोज्य ततो मृत्पिण्डपुटे निधाय दक्षिणां दिशं पश्यन् नमोस्तु धर्मायेति वदन् जलं प्रविश्य स मे प्रीतोऽस्तु इत्यभिधाय गङ्गाम्भसि प्रक्षिप्य जलादुत्तीर्य सूर्यमवेक्ष्य विप्रमुख्याय यथाशक्ति दक्षिणां दद्यात् । एवं कृते प्रेतक्रियाकर्त्रोः स्वर्गः स्यात् । तथा चोक्तम्—विगाह्य गङ्गां समियाय तोयमिहास्थिराशिं सकलैश्च गव्यैः । हिरण्यमध्वाज्यतिलैस्तु युक्तं ततस्तु मृत्पिण्डपुटे निधाय । यस्यां दिशि प्रेतगणोपगूढो विलोकयँस्तां सलिले क्षिपेत्तम् । उत्तीर्य दृष्ट्वा रविमात्मशक्त्या सुदक्षिणां द्विजमुख्याय दद्यात् । एवं कृते प्रेतपुरःस्थितस्य स्वर्गे गतिः स्याच्च महेन्द्रतुल्या । क्षीणेषु पुण्येष्वपतन्दिविष्ठा नैवं व्युदस्य च्यवनं द्युलोकात् । यावदस्थि मनुष्याणां गङ्गातोयेषु तिष्ठति । तावद्वर्षसहस्राणि ब्रह्मलोके महीयते । तथा यमः । गङ्गातोयेषु यस्यास्थि प्लवते शुभकर्मणः । न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कदाचन । गङ्गातोयेषु यस्यास्थि नीत्वा संक्षिप्यते नरैः । युगानां तु सहस्राणि तस्य स्वर्गगतिर्भवेत् । मातुः कुलं पितृकुलं वर्जयित्वा नराधमः । अस्थीन्यन्यकुलोत्थस्य नीत्वा चान्द्रायणाच्छुचिः । एतच्च द्रव्यादिलोभेन नयतो न श्रेयोर्थिनः । अथ साग्नेः पत्नी यदि जीवद्भर्तृका म्रियेत तदा केचिद्देशाचारात्क्षौरं नाहुः । अन्यो विधिः सर्वोऽप्युक्तो भवति । भर्तरि मृते यदि म्रियेत तदा अरण्यन्तरं संपाद्य ततो निर्मन्थ्येनाग्निना पात्रैर्विना तां दहेत् । तदलाभे लौकिकाग्निना । एवं पश्चान्मृतस्य पुंसो भवति । अन्वारोहणे तु पृथगाहुतिस्तन्मुखे इति विशेषः । पात्रासादनं तु यजमानदेह एव, अथ यदि साग्नेः शवस्य दाहे क्रियमाणे वृष्ट्याद्युपघातेनाग्निनागेऽर्द्धदग्धदेहशेषं वृष्टौ शान्तायामर्धदग्धारणी निर्मन्थ्य तदलाभेऽर्द्धदग्धकाष्ठं निर्मन्थ्य तदलाभे अश्वत्थादिपवित्रकाष्ठमथनोत्थेनाग्निना पुनर्दहेत् । अथ प्रोषिते तु मृतेऽग्निहोत्रिणि तदस्थीन्यानीयोक्तविधिना त्रेतया पुनर्दहेत् । अस्थ्नामप्यलाभे षष्ट्यधिकत्रिशतमितपलाशवृन्तान्युच्चित्य कृष्णसारचर्मणि पुरुषाकारेण प्रसारिते तदुपरि पुरुषाकारं प्रसार्य तत्र पलाशवृन्तानां चत्वारिंशता शिरः दशभिर्ग्रीवा त्रिंशता उरः विंशत्योदरं शतेन भुजद्वयं दशभिर्हस्ताङ्गुलीः षड्भिर्वृषणौ चतुर्भिः शिश्नं शतेनोरुद्वयम् त्रिंशता जानुनी जङ्घे च दशभिः पादाङ्गुलीः परिकल्प्योर्णासूत्रेण सम्यग्बद्ध्वा तेनैव मृगचर्मणा संवेष्ट्य ऊर्णासूत्रैणैव बद्ध्वा यवपिष्टजलेन संप्रलिप्य मन्त्रपूर्वकं पूर्ववत्पात्रैर्दहेत् । एवं पर्णशरे दग्धे त्रिरात्रमशुचिर्भवेत् । द्वितीयेऽहनि तु तदस्थ्नां वृन्तरूपाणां दग्धानां संचयनम् । एवं मृतबुद्ध्या पर्णशरं दग्धे तस्य दैवात्पुनरागमने पुनराधानं कृत्वा आयुष्यार्थामिष्टिं कुर्यात् । पर्णशरदाहानन्तरं तु तदस्थ्नां लाभेऽर्द्धदग्धकाष्ठानामलाभे तस्थ्नां महाजले प्रक्षेपः । बुद्धिपूर्वमात्मघातिनां तु व्यासोक्तनारायणबल्यनन्तरं संस्कारः । एवं साग्नेर्दहनदिनाग्निरग्नेर्मरणदिनाद्गणना । अथैषा प्रेतदेहानां रजस्वलादिरूपर्ष्यनन्तरं संस्कारः ... मृन्मये कुम्भे पूर्णजले पञ्चगव्यं प्रक्षिप्य कृतस्नानं शवं तेनोदकेनाभिषिञ्चते । आपोहिष्ठेत्यादिभिः ऋग्भिर्हैमन्तैर्वामदेव्यादिभिस्त्रिभिस्तिसृभिरभिषिञ्चेत् । एवं सूतिका रजस्वला चापि एकादशे चतुर्थाहनि प्रायश्चित्तं कृत्वा पञ्चगव्येन प्रक्षाल्य वाससा संवेष्ट्य उक्तविधिना दहेदिति ॥ १० ॥

( विश्व० )—'अथोदककर्म' मृतसंस्कारकमुदकादिना कर्म पिण्डाञ्जलिदानादि। उपलक्षणमेतत्। अन्यस्यापि सूतकादेर्वक्ष्यमाणत्वात्। वक्ष्यत इति सूत्रशेषः। 'अद्वि···शौचं' 'शौच··रेषां' द्वे वर्षे जाते यस्यासौ द्विवर्षः न द्विवर्षोऽद्विवर्षः तस्मिन्प्रेते मृते मातापित्रोराशौचम् अशुद्धिः। स्वाश्रमविहितानुष्ठानसंकोच इति यावत्। इतरेषां मातृपितृव्यतिरिक्तानां शौचं सद्यः स्नानमात्राच्छुद्धिरित्यर्थः। एतच्च वाजसनेयान्तर्गतशाखाध्येतॄणामेव। अन्येषां तु स्मृत्यन्तरविहिताशौचाधिकारः। मातापित्रोर्यदाशौचं तत्कियत्कालमत आह 'एक··वा' एतच्चाकृतचूडकृतचूडतया यथाक्रमं बोध्यम् आचूडान्नैशिकीत्युक्तेः। 'शरी···नन्ति' अद्विवर्षप्रेतस्य शरीरं कलेवरमदग्ध्वा दाहमकृत्वा निखनन्ति। अहतवस्त्राच्छादितं चन्दनपुष्पाद्यलंकृतं भूमौ गर्तं कृत्वा क्षिपन्तीत्यर्थः। 'अन्तः···वत्' चेत्सूतकमध्ये तन्नाशादर्वाक् सूतकान्तरापातस्तदा पूर्वशेषेणागन्तुकस्य शुद्धिः। तथाच शङ्खः—अथ चेदन्तरा म्रियेत जायेत वा शिष्टैरेव दिनैः शुध्येताहःशेषे सति द्वाभ्यां प्रभाते तिसृभिरिति। केचित्तु शावाशौचस्य जननाशौचनिवर्तकत्वेपि जननाशौचं न शावमपवदति। सजातीयस्यैव निवर्तकतेत्यन्ये। मातापित्रोस्तु विशेषः। पितुः सूतकं स्वसमयं व्याप्नोत्येव। पितुः सूतकमध्ये चेन्मातुः सूतकं तदा द्वादशप्रहराः सूतकं वर्द्धते। पूर्वसूतके दिवसमात्राऽवशिष्टे दिनद्वयं विनश्यदवस्थे दिनत्रयम्। अयं च समानकालीनयोः समानजातीययोरेव शोध्यशोधकभावः। स्वल्पतरसमयसंबन्धिना प्रचुरतरसमयसंबन्ध्याशौचाशुद्धेः। अपरे तु मरणोपक्रान्तेर्जन्मानन्तरं सूतकान्तर्मरणे न तस्य स्वतन्त्रं सूतकमित्याहुः। 'नात्रोदककर्म' अत्र ऊनद्विवर्षे तर्पणपिण्डादि न। एतच्च सहभूतदाहाभावात्। तदुक्तं—नास्य कार्योऽग्निसंस्कारो नापि कार्योदकक्रियेति। 'द्विवर्ष...च्छेयुः' सर्वे सपिण्डाः। स्मशानपदं स्वसहभूतदाहसूचकम्। दाहविधिश्च वक्ष्यते। 'यम···त्येके'। अहरहर्नीयमानो गामश्वं पुरुषं व्रजम्। वैवस्वतो न तृप्यति सुरापा इव दुर्मतिरिति यमगाथा। अपेतो यन्तु पणय इत्ययमध्यायो यमसूक्तम्। एके गाथादिगानमाहिताग्निविषयमाहुः। 'यद्यु···नात्' उपेतः उपनीतः आहिताग्नेः कृतावसथ्यस्य समानं भूमिजोषणादि दाहभूमिसंस्कारादि उदकाञ्जलिदानावधि। 'शाला···हितश्चेत्' चेच्छालाग्निराहितः॥ ॥ प्रसङ्गाद्दाहविधिर्लिख्यते। सायमाहुत्यां हुतायां चेन्मरणशङ्का तदा प्रातराहुतिस्तदैव। कृष्णपक्षे चेन्मरणशङ्का तदावशिष्टान्होमान्पक्षहोमविधिना हुत्वा दर्शपक्षादि तदैव कुर्यात्। एवं यथासंभवमसमाप्तमारब्धं सर्पबलिदानादि समापयेत्। ततो दुर्बलावस्थं यजमानं संभावितसंनिकृष्टमरणं ज्ञात्वा पुत्रादिः गोमयेन गोमूत्रेण तीर्थोदकेन गङ्गाजलेन कुशोदकेन च स्नापयित्वा शुद्धे वाससी परिधाप्यावसथ्यसंनिधौ गोमयोपलिप्तायां भुवि दक्षिणाग्रान्कुशानास्तीर्य बहुलांस्तिलान्विकीर्य तत्र प्राक्शिरसमुदक्शिरसं वा भूमौ निवेशयेत्। काशीप्रयागादितीर्थसद्भावे मणिकर्णिकादिगङ्गादेस्तटे आवसथ्यं समानीय तत्सन्निधौ पूर्ववद्यजमाननिवेशनम्। मुखे सुवर्णकांस्यमणिविद्रुमान्यतरं निक्षिपेत्। शालिग्रामशिला तुलसी च संनिधौ निधेया। गोपीचन्दनतिलकादि। कण्ठे शिरसि चोत्तमाङ्गच्छिद्रेषु च निर्माल्यतुलसीप्रक्षेपः। प्रदीपोज्ज्वालनं विष्णुपूजनं, ॐ नमोभगवतेवासुदेवायेति जपः। वैतरण्यादिदानम्। तत्र विधिः। वैतरणीदानपात्रभूतब्राह्मण एतत्ते पाद्यम् एषतेऽर्घ्यः पूजा। पादप्रक्षालनम्। ततः पात्रभूतो द्विजः आचामेत्। दानकर्त्रा पादौ प्रक्षाल्याचम्य प्राणायामान् कृत्वा वैतरणीदानाङ्गतया यथासंभवोपचारैर्विष्णोः पूजनं कार्यम्। ततो गवाद्युपहारप्रोक्षणम्। ततो देशकालौ स्मृत्वा यमद्वारस्थितवैतरणीनद्याः सुखोत्तरणकामो वैतरणीधेनुदानमहं करिष्ये इति संकल्प्य पात्रद्विजमर्घचन्दनपुष्पवस्त्रकुण्डलमुद्रिकादिभिः संपूज्य सवत्सां गां च संपूज्यार्चनविधेः परिपूर्णतास्त्विति संप्रार्थ्याचम्य भोजनपर्याप्तमन्नं संकल्प्य ब्राह्मणहस्ते सुप्रोक्षितानि कृत्वा प्रार्थयेत्॥ यमद्वारे महाघोरे

ख्याता वैतरणी नदी। तत्तुंकामो ददाम्येतां तुभ्यं वैतरणीं तु गाम्। ततः पुनर्देशकालावुच्चार्य अमुकसगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यममुकगोत्रोऽमुकशर्माहं यमद्वारस्थितवैतरणीनद्याः सुखोत्तरणार्थमिमां वैतरणीसंज्ञकां धेनुं सवत्सां विष्णुदैवतां सुवर्णशृङ्गीं रौप्यखुरां ताम्रपृष्ठां कांस्यदोहनां कृष्णवस्त्रयुगच्छन्नां सप्तधान्यपटवस्त्रबद्धेक्षुमयोडुपोपरिस्थितां वासच्छत्रोपानत्कांस्यघटोपवीतसंयुक्तां कार्पासद्रोणस्थताम्रभाजनस्योपरिस्थितलोहदण्डहस्तहेममययमसहितां गन्धाद्यर्चितां संप्रददे। भगवान्पापहा महाविष्णुः प्रीयताम्। ततः सुवर्णं तदशक्तौ वस्त्रयुग्मं वा सप्तधान्यानि वा दक्षिणां दद्यात्। ततः स्तुतिः। या लक्ष्मीः सर्वभूतानां या च देवेष्ववस्थिता। धेनुरूपेण सा देवी मम पापं व्यपोहतु। विष्णुरूप द्विजश्रेष्ठ भूदेव पङ्क्तिपावन। सदक्षिणा मया दत्ता तुभ्यं वैतरणी च गौः। ततो धेनुप्रार्थना। धेनुके त्वं प्रतीक्षस्व यावदागमनं मम। त्वद्दानात्पावितो देवि·········। धेनुके त्वं प्रतीक्षस्व यमद्वारे महाभये। उत्तितीर्षुरहं देवि वैतरण्यै नमो नमः। वैतरणीदानं परिपूर्णमस्त्विति प्रार्थ्य द्विजं प्रणमेत्। स्वयं दानाशक्तौ पुत्रादिर्दत्त्वा तस्मै श्रेयो दद्यात्। अथाऽष्टमहादाननिमित्तं विष्णुपूजनम्। तत्राद्यं तिलदानं—तिलाः श्वेतास्तिलाः कृष्णास्तिला गोमूत्रसन्निभाः। ते मे दहंतु पापानि शरीरेण कृतानि वै॥ इमांस्तिलान्सोमदैवतान्गन्धाद्यर्चितान् विष्णोः प्रीत्यर्थं तिलदानफलावाप्त्यर्थं वा कस्मैचिद्गोत्राय ब्राह्मणायेति। एवं सर्वेषु ॥ १॥ ततो लोहदानम्—यस्मादायस कर्माणि तवाधीनानि नित्यशः। लाङ्गलाद्यायुधादीनि ततः शांतिं प्रयच्छ मे। इदंलोहमग्निदैवतं॥ २॥ ततो हिरण्यदानं—हिरण्यगर्भगर्भस्त्वं हेम बीजं विभावसोः। अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे॥ इदं सुवर्णमग्निदैवतं ॥ ३॥ ततः कार्पासदानं—येन दत्तेन प्रीयन्ते भूर्भुवःस्वरिति क्रमात्। ब्रह्माद्या ऋषयः सर्वे शंकराद्या गणास्तथा। इन्द्राद्या देवताः सर्वाः कर्पासेन तु तोषिताः॥ इमं कर्पासं बृहस्पतिदैवतं॥ ४॥ लवणदानं—यस्मादन्नरसाः सर्वे नोत्कृष्टा लवणं विना। पितॄणां च प्रियं नित्यं तस्मात्स्वर्गप्रदं भव ॥ इदं लवणं विष्णुदैवतं यमादभयप्राप्त्यर्थं॥ ५॥ ततः सप्तधान्यदानं—व्रीहयो यवगोधूमा मुद्गा माषाः प्रियंगवः। तिलाश्च सप्तमाः प्रोक्ताः सप्तधान्यमुदाहृतम्। अथवा—यवगोधूमधान्यानि तिला कङ्गुस्तथैव च। श्यामाकं चीनकं चैव सप्तधान्यमुदाहृतम्। अन्नं प्रजापतिः साक्षादन्नमेव जनार्दनः। अन्नाद्भवन्ति भूतानि जगदन्नेन वर्धते। इदं सप्तधान्यं प्रजापतिदैवतं यमदूतप्रीत्यर्थम् ॥ ६॥ ततः भूमिदानं—समुद्रवसना देवी भूतधात्री च वैष्णवी। सा मे दहतु पापानि जन्मान्तरकृतान्यपि। इमां भूमिं विष्णुदैवताम्॥ ७॥ ततस्तिसृणां गवां दानम्। गावो ममाग्रतः संत्विति। इमास्तिस्रो गाः रुद्रदैवताः त्रिविधपापक्षयार्थम्॥ ८॥ तिलादिषु सप्तदानेषु हिरण्यं दक्षिणा, हिरण्यदाने तु रजतमिति। पृथग्दानासंभवे समुदितानां संकल्पः। इमानि तिलादीन्यष्टौ महादानानि नानादेवतानि गन्धाद्यर्चितानि सदक्षिणानि तत्तद्दानफलप्राप्तये विष्णोः प्रीतये वा नानानामगोत्रेभ्य इत्यादि। समभ्यर्च्य हृषीकेशं पुष्पधूपादिभिस्तथा। प्रणिपातैः स्तवैः पुण्यैर्ध्यानयोगेन पूजयेत्। दत्त्वा दानं च विप्रेभ्यो दीनानाथेभ्य एव च। वन्धौ कलत्रे पुत्रे च क्षेत्रधान्यधनादिषु। मित्रवर्गे च सर्वत्र ममत्वं विनिवर्तयेत्। ततः सति संभवे यथाशक्ति तिलधेन्वादिदानम्। अनवरतं विष्णुस्मरणम्। ततः पुत्रादिः पुरुषसूक्तोपनिषदादिकं श्रावयेत्। ततो गतप्राणं ज्ञात्वा पुनः पुत्रादेः स्नानम्। मृतशरीरं प्रक्षाल्याहते परिधानीयोत्तरीये परिधाय चन्दनेन प्रोक्ष्य पुष्पैरलंकुर्यात्। दुर्मरणं चेत्प्रायश्चित्तम्। शृङ्गिदंष्ट्रिनखिसर्पविषविद्युज्जलाग्निब्राह्मणान्त्यजचौरमारितस्य मरणे दोषशक्त्यनुसारेण विष्णुपूजनपूर्वकं त्रीन् षड् द्वादश पञ्चदश वा प्राजापत्यान्विप्राज्ञया कृत्वा गवादितत्प्रत्याम्नायदानेन वा शुद्धिं संपाद्य दाहादि कुर्यात्। एवं मुमूर्षोरपि पापसंभवे तदनुरूपप्रायश्चित्तानन्तरमेव वैतरण्यादिदानाधिकारः। दाहकर्त्रापि स्वपापानुरूपप्रायश्चित्तानन्तरमेव दाहादि कार्यं। लोभादिना चेत्रा-

यश्चितं न कारयति न वा करोति तदा उभावपि नरकं गच्छतः । एवमूर्ध्वाधरान्यतरोच्छिष्टोभयोच्छिष्टास्नातास्पृश्यास्पृष्टस्तरखट्वादौ मरणे शक्तिदोषानुरूपप्रायश्चित्ताचरणम् । अकृतप्रायश्चित्तस्य कृतमप्यन्तरिक्षे नश्यति ॥ ॥ प्रयोगः । अमुकदुर्मरणजनितदोषनिवृत्त्यर्थं दाहाद्यूर्ध्वदेहिकयोग्यतालाभायामुकप्रायश्चित्ताचरणं करिष्ये इति । ततः आवसथ्यं स्थाल्यां कृत्वा प्रेतस्य शिरःप्रदेशनिकटे स्थापयेत् । ततः मरणस्थाने प्रेतायैकोद्दिष्टविधिना पिण्डदानम् । ब्राह्मणाभावे दर्भवटुं स्थाप्य पादौ प्रक्षाल्य तूष्णीं प्राणानायम्याऽपसव्यं कृत्वाऽद्यामुकप्रेतस्य प्रेतत्वनिवृत्त्यर्थं दाहादियोग्यताप्राप्त्यर्थं मरणस्थाने एकोद्दिष्टविधिना श्राद्धमहं करिष्य इति संकल्प्य, ततो नीवीबन्धनं द्वारदेशे च दिक्षु च कुशतिलप्रक्षेपः । दुष्टदृष्टिनिपातादिदूषितः श्राद्धोपहारः पूतो भवत्वित्युपहारप्रोक्षणं कुर्यात् । गोत्रप्रेतैतत्ते आसनमित्यासनदानम् आचमनम् । आमान्नं सघृतं गोत्रप्रेत ते उपतिष्ठतामित्यामान्नसंकल्पः । अद्येत्यादि अमुकप्रेतस्य प्रेतत्वनिवृत्त्यर्थंस्याऽस्य श्राद्धस्यैकोद्दिष्टविधेर्यत्कृतमित्यादिपृच्छा । ततः पिण्डदानम् । समूलान्दक्षिणाग्रान्दर्भानास्तीर्य गोत्र प्रेतैतत्तइतिपिण्डदानम् सूत्रदानम् । ततस्तूष्णीमुदकं वटौ विप्रकरे वा दत्वाऽमुकसगोत्रामुकप्रेत दत्तं श्राद्धं ते उपतिष्ठतामित्यक्षय्योदकं दद्यात् । ततः सव्यं कृत्वा दक्षिणादानं माषान्नजलसंयुक्तकुंभदानं च । अयं कुम्भो माषान्नजलसहितः गोत्र प्रेत ते उपतिष्ठतामिति । पिण्डचालनम् । अस्योत्क्रान्तिश्राद्धस्य यन्न्यूनं यदतिरिक्तं तत्सर्वं विष्णोः प्रसादात्परिपूर्णम् । अनेन श्राद्धेन गोत्रस्य प्रेतस्य प्रेतत्वनिवृत्तिः । दाहादियोग्यताप्राप्तिः । वटुविसर्गः । श्राद्धानन्तरं शवनाम्ना मृतस्थाने पिण्डदानम् । अमुकगोत्रामुकशव एतत्त इतिप्रयोगः । माषान्नसहितकुम्भदानम् । ततः द्वारदेशे पूर्ववच्छ्राद्धमेकोद्दिष्टविधिना । श्राद्धानन्तरं पान्थनाम्ना पिण्डदानम् । पान्थ एतत्त इति । समाप्य कुम्भदानं च । ततः शकटादिना नीयमानं प्रेतं सर्वे सपिण्डाः अनुगच्छेयुर्यमगाथां गायन्तो यमसूक्तं व चप्रसिद्धं जपन्तः श्मशानपर्यन्तम् । ततश्चत्वरे प्रेतनाम्ना पिण्डदानम् । समाषसजलकुम्भदानम् । ततः ग्रामश्मशानयोरर्धमार्गे पूर्ववच्छ्राद्धम् । श्राद्धानन्तरं तत्रैव पुनर्भूतनाम्ना पिण्डदानम् । भूत एतत्त इति प्रयोगः । समाषकुम्भदानं च । धनिष्ठादिपञ्चकमरणे पञ्चरत्नानि मुखे मुक्त्वा वहवपामित्याहुतिद्वयं दत्वा दाहः । रत्नपञ्चकं—वज्रमौक्तिकवैडूर्यपुष्परागेन्द्रनीलकमिति । गरुडपुराणे तु—दर्भमयपुत्तलकचतुष्टयं कृत्वा तैः यातेधामानिपरमाणीत्यादिशिक्षामन्त्राभिमन्त्रितैः सह दग्ध्वा सूतकान्ते पुत्रादिः शान्तिकं कुर्यात् । तत्र च तिलघृतहिरण्यभाजनोपानच्छत्रगवादेः प्रेतोद्देशेन दानम् । ततो निर्हरणानन्तरं श्मशानभूमौ दक्षिणाशिरसं शवं स्थापयेत् । ततश्चितास्थाने पूर्ववदेकोद्दिष्टं कुम्भदानं च । ततः साधकनाम्ना प्रेतनाम्ना वा पिण्डदानम् । कुम्भदानं च । तीर्थाभावे तीर्थानि ध्यायेत् । ततः प्रेतस्य केशश्मश्रुलोमानि छित्वा खनेत् । ततः चितास्थाने सकृत्सकृत्पञ्चभूसंस्कारान्कृत्वा ततः काष्ठादिचितिं संपाद्य तत्र दक्षिणाग्रीवमुत्तरलोमं कृष्णाजिनमास्तीर्य तस्मिन् दक्षिणाशिरसमुत्तानं प्रेतं निधाय प्रेतसंबन्धिवस्त्रं द्विधा कृत्वैकेन प्रेतशरीरमाच्छाद्य द्वितीयं भूमौ श्मशानवास्यर्थं क्षिपेत् । ततः प्रेतस्य करे प्रेतनाम्नैव पिण्डदानं कुम्भदानं च । ततः प्रेतमाज्येनाभ्यज्य मुखे दक्षिणोत्तरनासिकाचक्षुःश्रोत्रेषु च क्रमेण सप्तहिरण्यशकलानि क्षिपेत् । ततः पात्रप्रतिपत्तिः—स्रुचं मुखे, दक्षिणनासिकायां स्रुवः शिरसि चमसं प्रणीताप्रणयनं पार्श्वयोः शूर्पं वृषणयोररणी । प्रोक्षणीपात्रादीनामन्तरोरु प्रक्षेपः । चात्रौविलीकयोश्च । लोहानां मृण्मयानां च ब्राह्मणाय दानमप्सु वा प्रक्षेपः । ततः, कृत्वा सुदुष्करं कर्म जानता वाप्यजानता । मृत्युकालवशं प्राप्य नरं पञ्चत्वमागतम् । धर्माधर्मसमायुक्तं लोभमोहसमावृतम् । दहेयं सर्वगात्राणि दिव्याँल्लोकान्स गच्छतु । ततश्चन्दनपुष्पाक्षतैरग्नेः पूजनम् । तत्र मन्त्रः । त्वं भूतकृज्जगद्योने त्वं लोकपरिपालकः । उक्तसंस्कारकस्तस्मादेनं स्वर्गं मृतं नय । तत आवसथ्येन

चितेर्दक्षिणप्रदेशे आदीपनम् । ततो मृतस्य पुत्रो भ्राता वाऽन्यो वा ब्राह्मणः कृतावसथ्यः आवसथ्ये आज्यसंस्कारं कृत्वा स्रुवेणाऽस्मात्त्वमित्याहुतिं समिद्वर्जं जुहोति । स्रुवं दक्षिणनासिकायां निधाय स्फ्यं दक्षिणहस्ते स्थापयेत् । तत उदकपूर्णं कुम्भं स्कन्धे कृत्वा तेन प्रेतपादादारभ्याऽप्रदक्षिणां धारां दत्त्वा रोदनं कुर्यात् । सूतिका वा रजस्वला वा यदि प्रेतस्पर्शं करोति तदोदकपूर्णे कुम्भे पञ्चगव्यं प्रक्षिप्यापोहिष्ठा इत्यादिभिरभिमन्त्र्य ब्राह्मणानुज्ञया पञ्चदश प्राजापत्यान्कृत्वा तेनोदकुम्भेन शतकृत्वः स्नापयित्वा नव्येन वस्त्रेण संवेष्टय दहेत् । सूतिकामरणे रजस्वलामरणेऽप्येष एव विधिः । स्त्री चेत्सहगमनं कुर्यात्तदा संनिकृष्टमरणं स्वामिनं प्रति वदति । दैवैः संपादितो मह्यं पतिस्त्वं सर्वदैवतम् । त्वया सह गमिष्यामि भर्त्ता त्वं चाग्रजन्मनि ॥ इति संकल्पः । स्नात्वा शक्त्या तिलधेन्वादिदानम् । कुङ्कुमाञ्जनमुकुराद्यैरात्मानमलंकृत्य पायसमाचारतो भुञ्जीत । वैधव्यता न कदापि भूयात्त्वया वियोगो न ममापि चास्तु । वन्ध्यात्वमेतन्न कदापि चास्तु दौर्भाग्यमेतन्न कदापि चास्तु । एवमुक्त्वा समस्तबन्धून् विसृज्य भर्तृगतान्तःकरणा स्वगृहमक्षतैर्वर्द्धाप्य कुङ्कुमाक्तहस्ताङ्कितद्वारं कृत्वा स्मशानं प्रति नीयमानं स्वामिनमनुयाति प्रतिपदमश्वमेधफलं जानती । वडवामारुह्य वा गच्छेत् । ततः सहगमनार्थं स्नास्य इति स्नात्वा नव्यं वस्त्रं परिधायात्मानमलंकृत्य प्रतिनिधिना स्वयं वा पिण्डदानं कृत्वाऽग्नये अर्घ्यं दद्यात् ॥ नानाफलानि हस्ते कृत्वा । चितिस्थो भगवानग्निर्विष्णुरूपी सनातनः । पतिसालोक्यलाभाय गृहाणार्घ्यं नमोस्तु ते । इति । ततस्तुतिः । त्वं ब्रह्मा त्वं च वै विष्णुस्त्वं रुद्रस्त्वं प्रजापतिः । त्वं सूर्यो वसवश्चाष्टौ परमात्मा त्वमेव हि । त्वमेव कारणं विष्णो शरणं तु पतिर्मम । स्वर्गो वा ह्यपवर्गो वा यत्र यत्र गमिष्यसि । तत्र तत्र ह्यहं पृष्टे लग्नमेष्यामि मा शुचः । ब्रह्महत्यादिभिः पापैस्त्वामाकृष्ये यमालयात् । अहं ब्रह्मा तथा विष्णू रुद्रश्चैव प्रजापतिः । आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च । एते च सर्वे मम साहसेन तुष्यन्तु देवा ऋषयश्च सर्वे । ततः प्रदक्षिणासप्तकं कृत्वा चितां प्रविशेत् । तत्र मन्त्रः । इदं शरीरं त्वतिमङ्गलं प्रभो दग्ध्वा कृशानो कुरु भव्यमाशु । तथैव भर्त्तुः कुरु दिव्यदेहं भर्तुः समीपं भगवन्व्रजामि । किमनया कृतं साधु भवेद्यदि तवानघ । इदं शरीरमालिङ्ग्य प्रविशामि हुताशनम् । इति संक्षेपतः सहगमनविधिः । निःशेषस्तु न दग्धव्य इतिवचनात्सशेषो दाहः । ततः सप्त सप्त प्रदक्षिणाः चिताग्नेः कुर्वन्ति प्रतिप्रदक्षिणमेकैकां समिधं क्षिपन्तः । ततः कुठारमादाय उल्मुकोपरि प्रहारसप्तकं दद्यात् । 'तूष्णीं'''तरं' ग्रामाग्निना लौकिकेनाग्निना । अस्मात्त्वमिति मन्त्रं विना इतरमकृतावसथ्यम् । ततः क्रव्यादाय नम इत्यग्निमप्रदक्षिणं त्यक्त्वा कनिष्ठपूर्वाः पूर्ववद्यमगाथा गायन्तो नद्यादौ गच्छन्ति । 'संयु'''ह इति' संयुक्तः संबन्धी तं । संबन्धनिरूपकस्य नानात्वान्नियतं निरूपकमाह 'मैथुनमिति' उत्तरदानाभिज्ञं तं श्यालकमन्यं वा पुरुषमुदकमुदकदानाज्ञाम् । कथमत आह 'उदकं करिष्यामहे' इतिमन्त्रेण । उत्तरमाह 'कुरु'''प्रेते' अतिक्रान्तशतवर्षे तूत्तरमाह । 'कुरु'''स्मिन्' । 'सर्वे'''माद्वा' ज्ञातयः सपिण्डाः समानोदकाश्च सर्वे । सापिण्ड्यमाह आसप्तमात्पुरुषात् । आङ् अभिव्याप्त्यर्थः । समानोदकत्वमाह, दशमादिति । ते सर्वे अपः जलमभ्यवयन्ति प्रविशन्ति । 'समा'''रेयुः' तथाच तद्व्यतिरेकेऽपः प्रवेशाद्व्यतिरेक इत्यर्थः । 'एकवस्त्राः प्राचीनावीतिनः सव्यस्यानामिकयाऽपनोद्याऽपनः शोशुचदघमिति दक्षिणामुखं निमज्जन्ति । अनमन्तोऽसंधावमानाश्चेति शेषः । अपनोदनं तूष्णीं निमज्जनं मन्त्रेण । अशिपाः (?) सर्वमलापहं स्नानं वा कुर्वन्ति । अङ्गोद्वर्तनस्य विकल्पः । 'प्रेता'''तस्त इति' । ततस्तटे आगत्याचम्य शिखां वद्ध्वा; दक्षिणाग्रानृजून् युग्मान् दर्भान् हस्तयोः कृत्वा सतिलपाणिभ्यामुदकमादाय दक्षिणामुखा वाग्यताः पितृतीर्थेन भूमौ पाषाणे वाऽमुकसगोत्राऽमुकप्रेतैतत्ते उदकमित्येकैकमञ्जलिं प्रसिञ्चन्तीत्यर्थः । ततः गरुडपुराणाद्दन्तधावनं कृत्वा-

तत्त्यागः । जलाञ्जलौ कृते पश्चात्कृत्वा वै दन्तधावनम् । त्यजन्ति गोत्रिणः सर्वे दिनानि नव काश्यपेति । 'उत्ती···देयुः' उदकादुत्तीर्णान्परिहितशुष्कवस्त्रान्सकृन्निष्पीडितोद्गदशांप्रसारितस्नानवस्त्रान्पवित्रदेशे तृणवत्युपविष्टान्सुहृदः पुराणेतिहासकथाभिः संसारानित्यतां ख्यापयन्तः शोकापनोदं कुर्युरित्यर्थः । 'अन···ष्ठपूर्वाः' ततो ब्राह्मणानुज्ञया उत्थायाऽनपेक्षमाणाः पश्चादनवलोकयन्तः रीतीभूताः पङ्क्तीभूता अधोमुखाः कनिष्ठाः पूर्वा अग्रे येषां ते तादृशाः ग्रामं प्रत्यायान्ति । 'निवे···शन्ति' निवेशनं गृहं तस्य द्वारि पिचुमन्दस्य निम्बस्य त्रिप्रभृतीनि पत्राणि विदश्य दन्तैः खण्डयित्वा आचम्योदकाद्यालम्भः । तद्यथा । शमी पापं शमयत्विति शमीमालभन्ते । अश्मेव स्थिरो भूयासमित्यश्मानम् । अग्निर्नः शर्मयच्छत्वित्यग्निम् । तूष्णीमुदकं गोमयं गौरसर्षपांस्तैलं च दूर्वाप्रवाला नड्वा(?)न्वृषभं च यथाक्रममालभ्य ततः पादेन पाषाणमाक्रम्य गृहं प्रविशन्तीत्यर्थः । इदानीं पुत्रादिकर्तृकान्नियमानाह 'त्रिरा···वीरन्' त्रिरात्रपदं सूतकोपलक्षणं यावत् सूतकमित्यर्थः । दानाध्ययनवर्जिताः मलिना दीनाऽधोमुखाः सर्वभोगविवर्जिताः अधःशयनोपवेशनकारिणः परस्परमसंस्पृष्टाः अङ्गसंवाहनं केशसंमार्जनं चाकुर्वन्तः शक्त्योपोषितत्रिरात्राः उपोषितैकरात्रा वा किंचन कर्म न कुर्युर्न वा कारयेयुः । उपोषणाऽशक्तिपक्षमाह 'क्रीत्वा···प्राहं' दिवा दिनशेषे । एवकारस्तु रात्रौ भोजनयोगव्यवच्छेदार्थः । अन्नमक्षारालवणं माषान्नापूपपायसवर्जितं व्रीहियवादिकं पत्रावल्यादिषु एकवारम् अल्पं कुतश्चित्क्रयेण प्राप्तं लब्धं वा । एतेन प्रत्यहं भोजनाय परिगृहीतस्य निषेधः । मांसनिषेधस्योपलक्षणत्वादक्षारादिलाभः । भोजनकाले च भोज्यान्नाद्भक्तमुष्टिमादायाऽमुकगोत्रामुकप्रेतैषतेभक्तमुष्टिरिति भूमौ भक्तमुष्टिं दद्यात् अस्थिसंचयनपर्यन्तम् । महागुरौ मृते द्वादशरात्रमेते नियमाः । अत्र प्रथमतृतीयपञ्चमनवमदिनेषु सर्वे सपिण्डाः प्रथमदिनवदुदकदानं स्नानपूर्वकं कुर्वन्ति । तैः सह भोजनं चेति केचित् । प्रेतोपकारायाखण्डदीपप्रज्वालनं पुत्रादिभिः कर्तव्यम् । एतत्सर्वं कथं कार्यमत आह 'प्रेता···प्राहं' अवनेजनदानप्रत्यवनेजनेषु नामग्राहं प्रेतनामग्राहं यथा स्यात्तथा प्रेताय पिण्डं दत्त्वा दिवैवाऽमांसमन्नमश्नीयुरित्यन्वयः । तत्र विधिः । गरुडपुराणे—दशाहं बान्धवाः सर्वे सर्वे चैवार्द्रवाससः । पिण्डं प्रतिदिनं दद्युरिति । देवतायतने तीर्थे गृहद्वारि अरण्ये श्मशाने वा पिण्डदानम् । तत्रादौ केशश्मश्रुवपनं नखलोम्नां निकृन्तनं च ज्येष्ठेन पुत्रेण कर्तव्यं कनिष्ठाः सह यान्ति । तत्राद्यदिने स्नात्वा अहते वाससी परिधाय प्रेतस्य मूर्ध्नो निष्पत्त्यर्थं क्षुत्तृषानिवृत्तये प्रेतत्वनिवृत्तये च पिण्डदानं करिष्य इति संकल्प्य नीवीकरणं, रेखां कृत्वाऽमुकसगोत्रामुकप्रेतावनेनिक्ष्वेत्यवनेजनं समूलदक्षिणाग्रदर्भास्तरणम् । अमुकसगोत्रामुकप्रेतैतत्त इति पिण्डदानम् । प्रत्यवने···नीवीविस्रंसनम् । नीवीबन्धनं विस्रंसनं न भवति वा 'नीवी पितॄणाम्' इति श्रुतिः । प्रेतस्य चापितृत्वात् । प्रतिपिण्डं सूत्रप्रक्षेपः । चन्दनपुष्पधूपदीपशीतोदकदानम् । ऊर्णातन्तुमयवस्त्रदानम् । नैवेद्यदानम् । गोत्र प्रेत इदं ते नैवेद्यं पिण्डार्चनमुपतिष्ठतामिति प्रतिदानं प्रयोगः । ततः प्रेतोद्देशेन समाषसजलकुम्भदानम् । प्रयोगस्तु—अयं कुम्भः माषान्नजलसहितः सोपवीतः गन्धाद्यर्चितः सघृतान्नसहितः कस्मैचिद्ब्राह्मणाय दास्यमानः अमुकसगोत्रामुकप्रेत ते उपतिष्ठतामिति । ततः सलिलाञ्जलिमादायामुकसगोत्रामुकप्रेतैष तोयाञ्जलिस्ते उपतिष्ठतामिति पिण्डसमीपे सतिलं तोयाञ्जलिं दद्यात् । एकतोयपात्रम् । इदं तोयपात्रं तिलपुष्पसहितं गोत्र प्रेत ते उपतिष्ठतामिति । अथवाञ्जलिमात्रदानम् । अनेन पिण्डदानेन कुम्भदानेन तिलोदकदानेन वामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्तिरस्तु । शीर्ष्णो निष्पत्तिरस्तु । क्षुत्तृषानिवृत्तिरस्तु । सद्गतिप्राप्तिरस्तु । ततः पिण्डमुदके प्रक्षिप्य स्नात्वा गर्ते प्रेतोद्देशेन तैलकल्कोदकानां दानम् । मासे पक्षे तिथौ गोत्रस्य प्रेतस्य प्रेतत्वनिवृत्तिपूर्वकश्रमापनयनार्थं गर्तेषु तैलकल्कोदकैः स्नापनमहं करिष्ये । गोत्र प्रेत अत्र तैलेन स्नाहि । अत्र कल्केन स्नाहि । अत्रोदकेन स्नाहि । अनेन

तैलकल्कोदकदानेन गोत्रस्य प्रेतस्य प्रेतत्वनिवृत्तिरस्तु । श्रमापनयनमस्तु । एवं दशाहं कर्तव्यम् । एतच्च पिण्डदानं फलमूलपायसशाकसक्तुगुडौदनानामन्यतमेन तिलघृतमधुक्षीरमिश्रेण भूमिगर्त्ते पाषाणे स्थण्डिले वा कर्तव्यम् । ततः सचैलं कनिष्ठपूर्वाः गृहमागत्य शस्त्रपाषाणावुल्लङ्घ्य गृहप्रवेशः । ततः पूर्वोक्तं शक्त्यपेक्षमभोजनं भोजनं वा । 'मृन्मये···त्येके' योग्यतया पक्के मृन्मये । निधानं च चत्वरादौ वलभ्यां त्रिकाष्ठ्यादौ वा एकस्मिन्क्षीरं पात्रान्तरे चोदकं स्थाप्याऽपसव्यं कृत्वा दक्षिणामुखः उपविश्य गोत्रस्य प्रेतस्य मार्गश्रमनिवृत्त्यर्थं मृन्मये क्षीरोदकयोर्निधानमहं करिष्य इति संकल्प्यामुकसगोत्र प्रेतात्र शीतोदकेन स्नाहि । अमुकसगोत्र प्रेतात्र क्षीरं पिव । मार्गे श्रमनिवृत्तिरस्तु । शावमाशौचं प्राप्य तां रात्रिमित्येके । त्रिरात्रमित्यन्ये । दशरात्रमित्यपरे ॥ केचित्तु त्रिरात्रꣳशावमाशौचं दशरात्रमित्येक इत्येतत्सूत्रं पृथगेव वयोवस्थावृत्तस्वाध्यायाद्यपेक्षया सूतकनिर्णायकमित्याहुः । 'न स्वा···रन्' स्वाध्यायो वेदः । तस्याध्ययनं यावदाशौचं निषिध्यते । 'नित्या···वर्जं' नित्यानि संध्यावन्दनसायंप्रातर्होमादीनि । वैतानमग्निहोत्रम् । 'शालाग्नौ चैके एतानि कुर्युः' विहित प्रतिषिद्धत्वाद्विकल्पः । अनुष्ठानपक्षे अन्ये कुर्युर्न स्वयमित्यर्थः । प्रेतस्पर्शिनो ग्रामं न प्रविशेयुरानक्षत्रदर्शनात् । एतच्च दिवामृतस्य 'रात्रौचेदादित्यस्य' आदर्शनादित्यनुषङ्गः । एतच्च रात्रिमृतस्य । प्रवेशनादि समानमितरैः । इतरे असपिण्डाः तैः प्रेतस्पर्शिभिरिति शेषः । तैस्तुल्यं पिचुमन्दपत्रविदंशनादि पुत्रादेः । तथाच तेषामपि पुत्रादिभिः समानं गृहप्रवेशनादि भवतीत्यर्थः । प्रसंगाद्द्वितीयदिवसादिकृत्यं लिख्यते—द्वितीयेऽन्हि प्रेतस्य कर्णाक्षिनासिकानिष्पत्त्यर्थं प्रथमदिवसवत्पिण्डदानं कुम्भभोजनदानं च । द्वौ अञ्जली । द्वे तोयपात्रे । अथवाञ्जलित्रयं न पात्रे । तृतीयेह्नि ग्रीवामुखभुजवक्षसां निष्पत्तये पिण्डदानं कुम्भभोजनदानं च । त्रयोञ्जलयः त्रीणि तोयपात्राणि । अथवा पञ्चाञ्जलय एव न पात्राणि । चतुर्थेन्हि संचयनम् । तत्र विधिः—पूर्वं स्नात्वा दाहभूमावेकोद्दिष्टं श्राद्धं कृत्वा श्राद्धव्यतिरिक्तानयुग्मांस्त्रिप्रभृतीन् ब्राह्मणान् भोजयित्वा पलाशवटादिपर्णस्य वृन्तेन भस्मगुप्तान्यस्थीनि प्रकटानि कृत्वाऽङ्गुष्ठकनिष्ठिकाभ्यां तान्यस्थीनि गृहीत्वा गृहीत्वा पलाशपुटवटपुटकादौ वा प्रक्षिपति । अस्थिग्रहणक्रमः । शिरसो वक्षसः पाणिभ्यां पार्श्वाभ्यां चापि पादतः । अप्रदक्षिणमस्थीनि गृह्णातीत्याह गोभिलः । शम्यवकाः कर्दमं च भस्मराशौ प्रक्षिपति । शमीशब्दः शाखापरः । अवकाः शैवालाः आर्द्रामृत्तिका कर्दमः । यक्षकर्दम इति केचित् । ततः पत्रपुटस्थान्यस्थीन्याज्येनाक्त्वाऽक्ताः कर्पूरागरुचन्दनकस्तूरिकाकेसरादिसुरभिद्रव्यैर्मिश्रयेत् । ततः दक्षिणपूर्वायतां कर्षूं खात्वा कुशानास्तीर्य तत्र हरिद्रयारक्तं वस्त्रखण्डमास्तीर्य वागित्यनेन मंत्रेण तस्मिन्वस्त्रखण्डेऽस्थीनि प्रक्षिपेत् । ततः संचयनानन्तरं जीवतोऽस्य प्रेतस्य यदिष्टमन्नवस्त्रादि तद्विप्रेभ्यः प्रेतस्य प्रेतत्वनिवृत्तिमुद्दिश्य दद्यात् । ततः सचैलं स्नात्वा । चतुर्थदिवससंबन्धिपिण्डदानं नाभिलिङ्गगुदनिष्पत्त्यर्थं कुम्भभोजनदानं च । चत्वारस्तोयाञ्जलयः । चत्वारि तोयपात्राणि । अथवा सप्ताञ्जलय एव देयाः । न पात्राणि । पञ्चमे ह्यूरुजङ्घापादनिष्पत्त्यर्थं पिण्डदानं कुम्भभोजनदानं च पञ्चतोयाञ्जलयः पञ्चपात्राणि अथवा नवाञ्जलय एव न पात्राणि । षष्ठे सर्वमर्मनिष्पत्त्यर्थं पिण्डदानं षडञ्जलयः पात्राणि च अथवैकादशाञ्जलय एव न पात्राणि । सप्तमे शिरानिष्पत्त्यर्थं पिण्डदानं कुम्भभोजनदानं च । सप्ताञ्जलयः । तावन्ति पात्राणि च अथवा त्रयोदशाञ्जलय एव न पात्राणि । अष्टमे लोमदन्तनिष्पत्तये पिण्डदानं कुम्भभोजनदानं च । अष्टावञ्जलयः । तावन्ति पात्राणि च । अथवा पञ्चदशाञ्जलय एव न पात्राणि । नवमे पूर्णशरीरनिष्पत्त्यर्थं पिण्डदानं कुम्भभोजनदानं च । नवाञ्जलयः पात्राणि च । अथवा सप्तदशाञ्जलय एव न पात्राणि । दशमे क्षुन्निवृत्त्यर्थं पिण्डदानं कुम्भभोजनदानं च । दशाञ्जलयः पात्राणि च अथवैकोनविंशतिसंख्याकास्तोयाञ्जलय एव । अथवा प्रत्यहं दशदशाञ्जलय एव देयाः ।

प्रत्यहं गर्त्ते तैलकल्कोदकानां दानम् । अथवा दशमेहि दशगर्त्तेपु तैलकल्कोदकानां दानं न प्रत्यहम् । अत्र दशाहेष्वयुग्मदिनेपु पिण्डदानात्प्रागुत्तरं वा केचिन्नवश्राद्धमाहुः । तत्र पिण्डद्वयदानं प्रेतोद्देश्यकम् । अक्षय्योदकदानं दक्षिणादानं च । एतद्दशाहपिण्डदानमेकेन कर्त्रा एकेन द्रव्येणैकस्मिन्नेव देशे कर्त्तव्यम् । ततः सूतकनिवृत्त्यर्थं केशश्मश्रुवपनं नखलोमनिकृन्तनं च सर्वे सपिण्डाः कारयेयुः । ततः सचैलं स्नात्वा कर्मसमयपरिहितवस्त्राणि आश्रितेभ्योऽन्त्यजेभ्यो वा दद्यात् । ततस्तिलतैलसंयुक्तगौरसर्पपादिकल्केन स्नात्वा अहतवाससः प्रक्षालितशुक्लवाससो वा सुवर्णदूर्वादीनि मङ्गलानि स्पृष्ट्वा विष्णुस्मरणादिना शुद्धा भवन्ति । गृहेपु स्पृष्टानां मृन्मयादीनां पात्राणां परित्यागः । वस्त्रासनखट्वादीनां क्षालनं गृहस्य संमार्जनलेपनादि । आबालं सचैलस्नानम् । एवं शुद्धिं संपाद्य स्वस्तिवाचनं ब्राह्मणेभ्यः कारयित्वा दानं च तेभ्य एव दद्यात् । ततोऽभ्यङ्गस्नाताभिः सुवासिनीभिराहृतजलेन पाकं कृत्वा भोजनं कुर्युः । दशाहमध्ये त्रिरात्रादूर्ध्वं दर्शपाते दर्शदिन एव सर्वं दशाहसंबन्धिपिण्डोदकदानं समापयेत् । त्रिरात्रादर्वागपि दर्शपाते समापनं केचिदाहुः । एतच्च मातृपितृव्यतिरिक्तविषयम् । इति दशाहकृत्यम् ॥ ॥ अथैकादशाहकृत्यम्—तत्र साग्नेर्दाहदिनादेकादशाहे निरग्नेस्तु मरणदिनादेकादशाहे विधिवत्स्नात्वा षोडशभिरुपचारैर्विष्णुपूजनपूर्वकं विष्णुतर्पणम् । तद्यथा । प्राणानायम्य देशकालौ स्मृत्वामुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्त्यर्थं वृषोत्सर्गादियोग्यताप्राप्त्यर्थं विष्णुपूजनतर्पणे विधास्य इति संकल्प्य पूजां कृत्वा वैष्णवैर्मन्त्रैः पौराणैर्वैदिकैश्च तर्पणं कुर्यात् । कार्यं पुरुषसूक्तेन मंत्रैर्वा वैष्णवैरपि । दक्षिणाभिमुखो भूत्वा प्रेतं विष्णुमिति स्मरन् । अनादिनिधनो देवः शङ्खचक्रगदाधरः । अव्ययः पुण्डरीकाक्ष प्रेतमोक्षप्रदो भवेति । अनेन प्रेतस्य प्रेतत्वनिवृत्तिरस्तु । वृषोत्सर्गयोग्यताप्राप्तिरस्तु ॥ इति विष्णुतर्पणं कृत्वा वृषोत्सर्गः । स च व्याख्यानाऽवसरे लिखितः ॥ ॥ अथैकादशाहश्राद्धम् । तत्रैकादश ब्राह्मणाः यथाशक्त्ययुग्मा वा । एको वा । एकादशाहविहितप्रेतश्राद्धे ब्राह्मणकार्यमित्यादि । विशेषस्तु निमन्त्रणे । गतोसि दिव्यलोकं त्वं कृतान्तविहितान्पथः । मनसा वायुभूतेन विप्रे त्वाहं नियोजये । पूजयिष्यामि भोगेन विप्रे त्वाहं नियोजये । इति निमन्त्रणम् । ततः ब्राह्मणानां श्मश्रुकर्मनखच्छेदौ कारयित्वाऽभ्यङ्गस्नानं कारयेत् । ततः सचैलं स्नात्वा तुष्टेन चेतसा आगतं वः इति पृष्ट्वा विप्रपादयोः पाद्यदानमर्घदानं, ब्राह्मणस्य पादप्रक्षालनमात्मनश्च । आचम्यासने ब्राह्मणमुपवेश्योपरि छत्रं प्रकल्पयेत् । सप्तव्याधाजपोऽवसीदथेत्यन्तः । गयागदाधरयोर्ध्याननमस्कारौ । प्रणववर्जितं प्राणायामास्त्रयः । ब्रह्मभूर्भुवःस्वरित्यन्ताः । तत आचम्य देशकालौ स्मृत्वाऽमुकगोत्रस्याऽमुकप्रेतस्य प्रेतत्वनिवृत्त्यर्थमाद्यमासिकश्राद्धमहं करिष्य इति संकल्प्य नीवीकरणम् । अपहता इति दिग्विदिक्षु तिलप्रक्षेपः । ततो यद्देवा इति तृचेनोदकमभिमन्त्र्य दुष्टदृष्टिनिपातदूषितः श्राद्धोपहारः पूतो भवत्वित्युपहारप्रोक्षणम् । न भूरादिजपः । तूष्णीं तिलविकरणम् । गोत्र प्रेत इदं ते आसनम् अर्घः । तिलोसि प्रेतदेवत्यो गोसवो० पृक्तः प्रेतांल्लोकान्प्रीणाहि न इति तिलावापः । स्मृत्यर्थसारकारमते पितृनमःस्वधाशब्दवतो मन्त्रस्य लोपः । अतस्तन्मते तूष्णीं तिलावापः । अर्घदानम् । पात्रन्युब्जीकरणाभावः । अर्चनम् । गोत्र प्रेत इदं ते चन्दनमुपतिष्ठताम् । इमानि पुष्पाणि । एष धूपः । एष दीपः । इदं बार्हस्पत्यं वासः इमेवाससी इति वा । इदं वारुणं कमण्डलुम् । इमे अङ्गिरोदैवते उपानहौ । प्राजापत्ये उपवीते, छत्रं, प्रेतसंबन्धीनि वस्त्राणि, शय्यां, गाः, गृहम्, आसनं, दासीम्, आयुधानि, उपतिष्ठताम्, उपतिष्ठेताम्, उपतिष्ठन्तामिति यथायथं प्रयोगः । श्राद्धं समाप्य पङ्क्तिमूर्द्धन्याय दद्यात् । अर्चनविधेः परिपूर्णतेति प्रार्थयेत् । आचमनं निहन्मीत्यादि तिलविकरणम् । अद्येत्याद्यमुकप्रेतस्य प्रेतत्वनिवृत्त्यर्थमेकादशाहविहितस्याद्यश्राद्धस्यैकोद्दिष्टविधेर्यत्कृतमित्यादि । संपन्नं, पिण्डदानं, रेखा, अवनेजनं, कुशास्तरणम् । प्रेतैतत्त इति पिण्डदानं

प्रत्यवनेजनं नीवीविस्रंसनमर्घः । तूष्णीं सूत्राणां दानम् । इदं चन्दनं गोत्र प्रेत ते पिण्डार्चनमुपतिष्ठतामिति प्रतिद्रव्यं प्रयोगः । धूपः, दीपः, फलं, ताम्बूलं, नैवेद्यम् । अर्घाच्छादनचन्दनपुष्पधूपदीपनैवेद्यैः पिण्डस्यार्चनं परिपूर्णम् । अनेन पिण्डदानेन गोत्रस्य प्रेतस्य प्रेतत्वनिवृत्तिः कुम्भदानयोग्यताप्राप्तिः । आचमनम् । विप्रहस्ते जलकुशपुष्पाक्षतान् तूष्णीमर्पयित्वाऽक्षय्योदकं दद्यात् । गोत्रस्य प्रेतस्य दत्तं श्राद्धमुपतिष्ठतामिति । यस्योद्दिष्टं तस्योपतिष्ठतामिति । ततः पवित्रं पिण्डस्योपरि दत्त्वाऽवनेजनजलशेषं तस्योपरि निनयेत् तूष्णीम् । ततो दक्षिणादानम् । अस्य श्राद्धस्य समृध्यर्थं रजतं दक्षिणां प्रेतश्राद्धब्राह्मणाय तुभ्यं संप्रददे । ततो हिरण्यदास्युपानच्छत्रोदकुम्भवस्त्राणां दक्षिणात्वेन दानं गुणवते । अन्येभ्यो रजतदानं ताम्बूलदानं गोत्र प्रेत ते उपतिष्ठतामिति । पिण्डोत्थापनं पात्रचालनं संचराभ्युक्षणम् । अस्यैकादशाहविहितस्याद्यमासिकश्राद्धस्यैकोद्दिष्टविधेर्यत्कृतं यन्न कृतं तत्सर्वं विष्णोः प्रसादात्परिपूर्णम् । अनेन श्राद्धेन प्रेतस्य प्रेतत्वनिवृत्तिः । कुम्भदानयोग्यताप्राप्तिः । ततः स्नानम् । अस्य श्राद्धस्य पुराणभेदप्रयोज्यप्रकारभेदा हेमाद्रौ विलोक्याः । ततः रुद्रोद्देशेनैकादशब्राह्मणेभ्यो भोजनदानम् । पुनः स्नात्वा कुम्भदानम् । विष्णोः पूजनम् । ततः प्रेतोद्देशेन सान्नत्रयोदशोदकुम्भदानम् । प्रयोगः । अपसव्यं कृत्वा । इमे त्रयोदशोदकुम्भाः सान्नोदकाः सयज्ञोपवीताः नानानामगोत्रेभ्यो ब्राह्मणेभ्यः दास्यमानाः गोत्र प्रेत ते उपतिष्ठतामिति । एभिः कुम्भदानैः गोत्रस्य प्रेतस्य प्रेतत्वनिवृत्तिः । उत्तरकर्माऽधिकारप्राप्तिः । अष्टविधपददानम् । इमानि पदानि नानादैवतानि गोत्रप्रेततेऽपतिष्ठन्तामिति । एवं सर्वत्र ॥ अश्वरथमहिषीशय्यादानम् । अश्वः यमदैवतः । रथः विष्णुदैवतः । यमदैवता महिषी । इयं शय्या तिलपात्रघृतपात्रे सहिरण्ये । गौः । भूमिः । तिलाः । हिरण्यम् । गन्धादिभिरर्चनं देयस्य पात्रस्य च ॥ चतुर्दशोपदानानि । स्त्रीमरणे वंशपात्री । प्रयोगः । इयं वंशपात्री स्त्र्युपभोगयोग्यवस्तुयुक्ता गन्धाद्यर्चिता कस्मैचिद्ब्राह्मणाय विष्णुरूपाय तुभ्यं० सं० । संवत्सरपर्यन्तं प्रत्यहं सान्नजलकुम्भदानं दीपदानं देवालयादौ । ततः ऋणधेनुदानम् । तत्र प्रयोगः । देशकालौ स्मृत्वा प्रेतस्य ऋणत्रयापाकरणाय इमामृणधेनुसंज्ञकां गां रुद्रदैवतां कस्मैचिद्ब्राह्मणायेत्यादि । ततो विष्णुपूजनम् ॥ गृहमागत्य वैश्वदेवः कार्यः ॥ शान्तिकरणम् ॥ इत्येकादशाहकर्म ॥ ॥ *अथ द्वादशाहसंबन्धिकर्तव्यमुच्यते* । आरब्धे वैश्वदेवे आदौ वैश्वदेवः । ततस्तीर्थे गत्वा विधिवत्स्नात्वा विष्णुं संपूज्याद्येत्यादि गोत्रस्य प्रेतस्य प्रेतत्वनिवृत्त्यर्थमूनमासिकश्राद्धं करिष्य इति संकल्प्य श्राद्धं कुर्यात् । अथवेदमूनमासिकं सप्तविंशतिमे दिनेऽष्टाविंशतिमे वैकोनत्रिंशत्तमेऽहनि कर्तव्यं नन्दादिवर्जिते । ततो मासपूर्तौ मृताहे द्वितीयमासिकमेकादशाहवत् ॥ ततस्तृतीये पक्षे नन्दादिवर्जिते त्रैपक्षिकं श्राद्धं कर्तव्यम् । ततस्तृतीयमासस्यादिमृताहे तृतीयमासिकम् । चतुर्थे मासे चतुर्थमासिकम् । पञ्चमे मासे पञ्चममासिकम् । षष्ठे मासे षाण्मासिकम् । ततः षष्ठे मासे एकेन दिवसेनोने द्वाभ्यां वा दिवसाभ्यामूने त्रिभिर्वा दिवसैरूने ऊनषाण्मासिकम् । ततः सप्तममासादौ सप्तमासिकम् ॥ अष्टममासेऽष्टमासिकम् । नवमे नवममासिकम् । दशमे दशमासिकम् । एकादशे एकादशमासिकम् । द्वादशे द्वादशमासिकम् । अत्राप्येकेन दिनेन द्वाभ्यां त्रिभिर्वोने ऊनाब्दिकम् । अत्रोनमासिकत्रैपक्षिकषाण्मासिकेषु प्रतिश्राद्धं द्वादशकुम्भदानम् । अन्येष्वेकैकः कुम्भः । संवत्सरपर्यन्तं प्रत्यहमपि सान्नोदकुम्भदानं प्रेतस्य प्रेतत्वनिवृत्तिमुद्दिश्य दीपदानं च संवत्सरावधि । ततः प्रथमसंवत्सरस्यान्तिमे दिने सपिण्डीकरणम् । एतच्च संवत्सरसपिण्डीकरणपक्षे । त्रिपक्षद्वादशाहवृद्धिश्राद्धादिनिमित्तापाते तथैकादशेऽह्नि साग्नेर्दर्शपाते तद्दिन एव सपिण्डीकरणकर्तव्यताप्राप्तौ वृषोत्सर्गानन्तरमाद्यश्राद्धादि सर्वं कृत्वा सपिण्डीकरणं कृत्वा पिण्डपितृयज्ञः कार्यः । द्वादशाहादौ कर्तव्यताप्राप्तावूनमासिकादि कृत्वा सपिण्डीकरणम् । एवं

वृद्धिश्राद्धादिनिमित्तापाते त्वकृतानुष्ठानपूर्विका सपिण्डीकरणकर्तव्यता । एवं चैकादशाहादौ सपिण्डनकर्तव्यतायां पृथगनुष्ठानकालासंभवादाद्यश्राद्धादीन्यूनाब्दिकान्तानि सपिण्डीकरणयोग्यतावाप्तये तन्त्रेणाहं करिष्य इति संकल्प्यैकार्घैकपिण्डकरणादपि सर्वेषां श्राद्धानां सिद्धिर्भवतीति विरुद्धविध्वंसे । अपरे तु प्रतिश्राद्धं ब्राह्मणार्घपिण्डानिच्छन्ति । उभयत्रापि मूलसद्भावाद्यथेच्छमनुष्ठानम् । श्राद्धभेदाद्ब्राह्मणार्घपिण्डभेदे त्वेवं प्रयोगः। ऊनमासिकनिमित्तं प्रेतश्राद्धे ब्राह्मणकार्यं० १ द्वितीयमासिक० २ । त्रैपक्षिक० ३ । तृतीयमासिक० ४ । चतुर्थमास० ५ । पञ्चममास० ६ । षष्ठमास० ७ । ऊनषाण्मासि० ८ । सप्तममास० ९ । अष्टममास० १० । नवममास० ११ । दशममास० १२ । एकादशमास० १३ । द्वादशमास० १४ । अधिमासश्चेत् त्रयोदशमास० १५ । तत ऊनाब्दिक० १६ । तथाचाधिमासपक्षे एकादशाहिकमाद्यश्राद्धमादाय सप्तदश श्राद्धानि भवन्ति । अधिमासाभावे षोडशैव श्राद्धानि । अथवा एकादशाहिकाद्यूनाब्दिकान्तेषु ( प्रेत ) श्राद्धेषु ब्राह्मणकार्यमिति वा प्रयोगः । अथवा सर्वाण्युल्लिख्यैतानि सपिण्डीकरणयोग्यताप्राप्त्यर्थमेकतन्त्रेणाहं विधास्य इति वा प्रयोगः । अमीषां श्राद्धानामेकोद्दिष्टविधेर्यत्कृतं यन्नकृतमित्यादि । अमीषां श्राद्धानामेकोद्दिष्टविधिना कृतानां यन्न्यूनं यदतिरिक्तमित्यादि । एभिः श्राद्धैः प्रेतस्य प्रेतत्वनिवृत्तिः । क्षुत्तृषानिवृत्तिः । सापिण्डीकरणयोग्यताप्राप्तिः । ततः स्नात्वा ऐकादशाहिकोनमासिकत्रैपक्षिकोनषाण्मासिकोनसांवत्सरिकेषु विहितकुम्भदानम् ॥ ततः संकल्पविधिना संवत्सरपर्यन्तमनुष्ठीयमानश्राद्धानां तन्त्रेणानुष्ठानम् । सर्वेषु सोदकुम्भान्नसंकल्पः प्रेतस्य प्रेतत्वनिवृत्तिं क्षुत्तृषानिवृत्तिं चोद्दिश्य । एवं देवालयाऽन्यगारादौ प्रत्यहं दास्यमानदीपसंकल्पः । मार्गं गच्छतः प्रेतस्यान्धकारनिवृत्तिमुद्दिश्य दीपदानमासंवत्सरम् ॥ ॥ अथ सपिण्डीकरणम् । तच्चैकोद्दिष्टपार्वणात्मकं, तत्र पार्वणैकोद्दिष्टयोरिदमेव प्रथममिति नियमाभावः । प्रेतपितृपितामहप्रपितामहानां पार्वणम् । तच्चामावास्यासंबन्धिपार्वणवत् । एकोद्दिष्टं तु प्रेतैकोद्दिष्टवत् । तत्र द्वादशाहादौ गोत्रस्य प्रेतत्वनिवृत्त्यर्थं वसुरुद्रादित्यलोकप्राप्त्यर्थं च गोत्राणां प्रेतस्य पितृपितामहप्रपितामहानाममुकामुकशर्मणां वैश्वदेवपूर्वकं सैकोद्दिष्टविधिना युष्मदनुज्ञया सपिण्डीकरणश्राद्धमहं करिष्य इति प्रयोगः । आसनम् । आवाहनम् । अर्घः । वैश्वदेविके कृत्वा पित्र्ये कुर्यात् । प्रेतस्यैकमर्घपात्रं तत्पित्रादीनां त्रीणि । एवमर्घपात्राणि पूरयित्वाऽभ्यर्च्य प्रेतार्घगतचतुर्थांशेन प्रेतायार्घं दत्वा प्रेतपात्रं पितृपात्रे संयोजयिष्य इति पृष्ट्वा संयोजयेत्यनुज्ञातोऽवशिष्टमर्घजलं विभज्य तृतीयांशं पित्रादिपात्रेषु निनयेत् । पवित्रं त्वखण्डमेव पित्रादिपात्रे प्रतिपात्रं संचारयेत् । तत्र येसमानाइतिमन्त्रद्वयं पठित्वाऽमुकगोत्रस्याऽमुकप्रेतस्यार्घः अमुकगोत्रस्यामुकशर्मणः पितुरर्घपात्रेण सह संसृज्यतामित्युक्त्वा पितृपात्रे संयोज्य पितामहप्रपितामहयोः पात्रे संयोजनम् । प्रतिपात्रसंयोजनानन्तरं प्रेतस्य वसुरुद्रादित्यलोकप्राप्तिं क्रमेण प्रार्थयेत् । साग्नेः पुत्रादेः प्रेतपितृविप्रपाणावग्नौकरणहोमः । पितामहप्रपितामहयोः पात्रे शेषपरिवेषणम् । पिण्डदानेपि श्राद्धोपक्रमेण चतुरः पिण्डान्दत्वा । प्रेतपिण्डमर्घादिभिः संपूज्य प्रेतपिण्डं पितृपिण्डेषु संयोजयिष्य इति पृष्ट्वा संयोजयेत्यनुज्ञातः सुवर्णरजतशलाकादर्भैः प्रेतपिण्डं त्रेधा विभज्याद्यं भागमादाय येसमानाइति मन्त्रद्वयं पठित्वाऽमुकगोत्रस्यामुकप्रेतस्य पिण्डः अमुकगोत्रस्यामुकशर्मणः प्रेतपितुः पिण्डेन सह संयुज्यतामित्युक्त्वा संयोजनेन वर्त्तुलं पिण्डं निष्पाद्य प्रेतस्य वसुलोकप्राप्तिं पितृत्वप्राप्तिं च प्रार्थयेत् ॥ अवशिष्टं प्रेतपिण्डभागद्वयमेवमेव पितामहप्रपितामहपिण्डयोः संयोजनीयं प्रेतस्य रुद्रादित्यलोकप्राप्तिं प्रार्थयेत् । केचित्तु पिण्डस्य प्रथमांशो द्वितीयांशस्तृतीयांशः प्रयोग इच्छन्ति । ततोऽत्रपितर इति जपादि पूजनानन्तरं पिण्डानभिमृश्येदं पठेत्, एष वोऽनुगतः प्रेतः पितरस्तं दधामि वः । शिवमस्त्विह शेषाणां जायतां चिरजीवितम् । समानीव आकूतिः समाना हृदयानि वः । समा-

नमस्तु वो मनो यथा वः सुसहासतीति । अत ऊर्ध्वं कदाचिद्भ्रान्त्यापि प्रेतशब्दो न वाच्यः । अक्षय्योदकदानादौ गोत्रस्य पितुरमुकशर्मणः मोक्षप्राप्त्यर्थमिमां मोक्षधेनुसंज्ञकां गां रुद्रदैवतां कस्मैचिद्ब्राह्मणायेत्यादि । ततः दक्षिणां दत्त्वा मोक्षं पितुः प्रार्थयेत् । ततो गृहे गत्वा पितृमातामहपार्वणाभ्यां श्राद्धं तत आभ्युदयिकम् । ततः स्वस्त्ययनं पुण्याहवाचनम् । नन्वमावास्याभ्युदयादौ यत्पार्वणमुक्तं तत्सपिण्डनं यैः सह प्रेतस्य तेषां प्रेतस्यापि भवेदत आह 'पिण्डश्चेत्' । नन्वेवं पिण्डचतुष्टयमापतितं चेत्तत्राह 'निवर्तेत चतुर्थः' प्रेतेन पित्रा सपिण्डतां प्रापितश्चतुर्थः प्रेतप्रपितामहः स निवर्त्तेतेत्यर्थः । एकादशाहादौ सपिण्डीकरणपक्षे अपकृष्य कृतानामूनमासिकादीनां स्वकाले पुनरनुष्ठानं न वेत्याशङ्कयाह 'संवत्सरं पृथगेके' एके आचार्याः अपकृष्यकृतानां संवत्सरं यावत्पृथगनुष्ठानं मन्यन्ते । तच्च क्षयाहवद्भवति एकोद्दिष्टविधिना पार्वणविधिना वा यथाकुलाचारम् । एकादशाहे त्वपकर्षे ऊनमासिकस्याप्यपकृष्टत्वेन पुनरनुष्ठानम् द्वादशाहादौ सपिण्डीकरणे तस्यानपकृष्टत्वेनानुष्ठानाभावः । त्रैपक्षिकादौ सपिण्डीकरणे भाविनामेव मासिकानां पुनः क्रिया न भूतानामिति । यत्तु निरग्नेरेकोद्दिष्टविधायकमेतत्सूत्रमित्याहुः । तन्न । उभयत्रापि शास्त्रसद्भावात् । नन्वेवमपि पार्वणविधौ प्रेतस्येतरेषामपि सपिण्डतां प्राप्तानां कुतो न निक्षेप इत्यत आह 'न्यायस्तु न चतुर्थः पिण्डो भवतीति श्रुतेः' तथाच पार्वणे त्रयाणामेव निक्षेपाच्चतुर्थपिण्डाभावः न्यायप्राप्त इत्यर्थः । 'अहरहरन्नमस्मै ब्राह्मणायोदकुम्भं च दद्यात्' । एतद्दानावसरे लिखितम् । 'पिण्डमप्येके निपृणन्ति' अहरहरित्यनुषङ्गः । सपिण्डनक्रियायाः ऊर्ध्वं प्रेतशब्दो नोच्चार्यः । संकल्पविधिना प्रत्यहं पार्वणमिति निर्णयामृतकारः ॥ १० ॥ ॥ * ॥ दशमीकण्डिका ॥ * ॥

पशुश्चेदाप्लाव्यागामग्रेणाग्नीन्परीत्य पलाशशाखां निहन्ति ॥ १ ॥ परिव्ययणोपाकरणनियोजनप्रोक्षणान्यावृता कुर्याद्यच्चान्यत् ॥ २ ॥ परिपशव्ये हुत्वा तूष्णीमपराः पञ्च ॥ ३ ॥ वपोद्धरणं चाभिघारयेद्देवतां चादिशेत् ॥ ४ ॥ उपाकरणनियोजनप्रोक्षणेषु स्थालीपाके चैवम् ॥ ५ ॥ वपाᳬ हुत्वाऽवदानान्यवद्यति ॥ ६ ॥ सर्वाणि त्रीणि पञ्च वा ॥ ७ ॥ स्थालीपाकमिश्राण्यवदानानि जुहोति ॥ ८ ॥ पश्वङ्गं दक्षिणा ॥ ९ ॥ यद्देवते तद्दैवतं यजेत्तस्मै च भागं कुर्यात्तं च ब्रूयादिममनुप्रापयेति ॥ १० ॥ नद्यन्तरे नावं कारयेन्नवा ॥ ११ ॥ ॥ ११ ॥

( कर्कः )—'पशु···व्यागां' पशुश्चेत् क्रियेत गोपशुवर्जमाप्लाव्य स्नापयित्वा नियुज्यते । 'अग्रे···हन्ति' निखनन्ति । असौ यूपकार्ये निखन्यते । अतश्चाज्यासादनोत्तरकालं निखननम् । 'परि···न्यत्' । किमन्यदिति, पशुसंस्कारकं नियोजनप्रोक्षणपशुसमञ्जनपर्यग्निकरणादिकं तत्र कर्तव्यम् । आवृच्छब्दः क्रियामात्रवाची अतश्च तन्मन्त्रो निवर्तते । 'परिपशव्ये हुत्वा तूष्णीमपराः पञ्च' जुहोतीति सूत्रशेषः । 'वपो···येत्' उद्धृत्य वपां 'देवतां चातिदिशेदुपाकरणनियोजनप्रोक्षणेषु' उपाकरणादिषु । 'स्थाली···वम्' देवतामादिशेत् । 'वपाᳬ···ञ्च वा' वपां हुत्वा अवदानग्रहणे उच्यमाने पशुपुरोडाशो निरस्तो भवति । अत आह—वपां हुत्वाऽवदानान्यवद्यति । असर्वपक्षे तत एव स्विष्टकृत् । क्षताभ्यङ्गश्च देयः । 'स्थाली···होति' तस्य चाज्येनैव सहश्रपणम् । 'पश्व···क्षिणा'

पूर्णपात्रं वरो वेति निवर्तते। 'यद्दे...जेत्' यद्देवत्य ऋत्विग्विशेषस्तद्देवत्य एव पशुरालभ्यतेऽर्घपशुषु। 'तस्मै...येति' तस्मै ऋत्विग्विशेषाय भागं कुर्यात्। 'नद्य...न्न वा' यदुक्तं प्रेतायोद्दिश्य गामप्येके घ्नन्तीति तस्यैव तत्प्रदेशविधानम्। नवश्राद्धं नावमुच्यते। नद्यन्तरे नावं कारयेदित्यनेन नवश्राद्धार्थः पशुरुपक्रान्तः। नवश्राद्धशब्देन प्रथमैकादशाहिकं श्राद्धमुच्यते ॥ ११ ॥

(जयरामः)—प्रेतायोद्दिश्य गामप्येके घ्नन्तीति शाखापश्वभिधानम्। तत्प्रसङ्गेन यावन्तोऽर्घपशवस्तत्कर्मण्याचिख्यासयेदमभिधीयते। स्मार्तः पशुश्चेत्क्रियते तदाऽगां गोपशुवर्जमाप्लाव्य स्नापयित्वा नियुज्यते। कुत्रेत्यपेक्षायामाह। परीत्य प्रादक्षिण्येन गत्वा अग्रेणाग्नीन् अग्निपूर्वभागे निहन्ति निखनन्ति। सा च यूपार्थे। अतश्चाज्यासादनोत्तरकालं निखननम्। परिव्ययणं त्रिगुणरशनया शाखावेष्टनम्। उपाकरणं तृणेन पशोर्नियोजनं द्विगुणरशनया शृङ्गयोर्बद्धस्य पशोः शाखायां बन्धनम्। आवृता पशुप्रकरणोक्तेतिकर्तव्यतया विना मन्त्रम्। आवृद्ग्रहणाच्च पशुसंस्कारकं पशुसमञ्जनपर्यग्निकरणादि तदप्यावृता कार्यम्। परिपशव्ये संज्ञपनस्याद्यन्तयोराहुती द्वे स्वाहा देवेभ्यः देवेभ्यः स्वाहेति हुत्वाऽपराः पञ्च जुहोतीति शेषः। उद्धृत्य वपाभिघारणम्। स्थालीपाकेप्येवं देवतादेशः। वपां हुत्वाऽवदानग्रहणे उच्यमाने पशुपुरोडाशो निरस्तो भवति अत आह 'वपां हुत्वेति' असर्वपक्षे तत एव स्विष्टकृत्। क्षताभ्यङ्गश्च देयः, स्थालीपाकमिश्राणीति ग्रहणात्तस्याज्येन सह श्रपणम्। पञ्चाङ्गं दक्षिणेत्यत्र पूर्णपात्रो वरो वेति निवर्तते। यद्देवत्य ऋत्विग्विशेषस्तद्देवत्यः पशुरालभ्यतेऽर्घपशुषु। तस्यार्घस्य देवतैव देवता यस्य यागस्य स तद्देवत्यस्तस्मिन्। तद्दैवतं तामेव देवतां यजेदित्यर्थः। तस्मै ऋत्विग्विशेषाय। 'नद्यन्तर इति' यदुक्तं प्रेतायोद्दिश्य गामप्येके घ्नन्तीति तस्यैतत्प्रदेशविधानम्। नवश्राद्धार्थं नावमुच्यते। नद्यन्तरे नावं कारयेदित्यनेन नवश्राद्धार्थः पशुरुपक्रान्तः। नवश्राद्धशब्देन प्रथमैकादशाहिकश्राद्धमुच्यते ॥ ११ ॥

(हरिहरः)—एवं तावत्प्रेतायोद्दिश्य गामप्येके घ्नन्तीति सूत्रकृता एकादशेऽहनि प्रेतमुद्दिश्य गोपश्वालम्भोऽभिहितस्तत्प्रसङ्गादन्येऽपि यावन्तोऽर्घ्यपशवस्तत्कर्माभिधातुमिदमारभ्यते। 'पशु...हन्ति' चेद्यदि स्मार्तः पशुः क्रियते तदा तं पशुं गोपशुवर्जमाप्लाव्य स्नापयित्वा नियुञ्ज्यात् गोपशौ आप्लाव्याभावः पशुनियोजनं च यूपे श्रूयते, अस्य तु कुत्रेत्यपेक्षायामाह-अस्य अग्रेण पुरस्तात् अग्नीन् वितानपक्षे गार्हपत्यादीन् आवसथ्यपक्षे एकमग्निं परीत्य प्रादक्षिण्येन गत्वा पलाशस्य ब्रह्मवृक्षस्य शाखां निहन्ति निखनन्ति। आसादनानन्तरं यूपकार्यत्वाच्छाखायाः। 'परि...चान्यत्' परिव्ययणं त्रिगुणरशनया शाखायाः, उपाकरणं तृणेन पशोः स्पर्शनं, नियोजनं द्विगुणरशनया अन्तराशृङ्गबद्धस्य पशोः पलाशशाखायां बन्धनं, प्रोक्षणं प्रोक्षणीभिरद्भिः पशोरासेचनम्। एतानि परिव्ययणोपाकरणनियोजनप्रोक्षणानि आवृता पशुप्रकरणविहितेतिकर्तव्यतया मन्त्रवर्जितया क्रियया कुर्यात् विदधीत, न केवलमेतान्येव अन्यदपि यत्पशुसंस्कारकं पशुसमञ्जनं पर्यग्निकरणादिकं तदपि तथैव कुर्यात्। 'परि...पञ्च' पशुसंज्ञपनं परि उभयतः हूयेते ये द्वे आज्याहुती स्वाहादेवेभ्यः देवेभ्यः स्वाहेति ते परिपशव्ये ते हुत्वा तूष्णीं मन्त्रवर्जमपरा अन्याः पञ्च आज्याहुतीर्जुहुयात्। 'वपो...येत्' पशोर्वपाया उद्धरणं यथोक्तं कृत्वा तां वपामभिघारयेत् उद्धृत्यैव। 'देव...णेषु' उपाकरणं च नियोजनं च प्रोक्षणं च उपाकरणनियोजनप्रोक्षणानि तेषु देवतां यद्देवत्यः पशुर्भवति तां देवतामादिशेत्, अमुष्मै त्वा उपाकरोमि अमुष्मै त्वा नियुनज्मि अमुष्मै त्वा जुष्टं प्रोक्षामीति। 'स्थाली...चैवम्' स्थालीपाके चरौ च एवं देवतामादिशेत्। चरोरुपाकरणनियोजनाभावात्तण्डुलप्रोक्षणे अमुष्मै त्वा जुष्टं प्रोक्षामीति देवतोद्देशः। 'वपाछं...पञ्च वा' वपां यथोक्तेन विधिना

हुत्वा अवदानानि पशोः हृदयादीनि अवद्यति छिनत्ति, कति सर्वाणि हृदयं जिह्वा क्रोडं सव्यबाहुं पार्श्वद्वयं यकृत् वृक्कौ गुदमध्यं दक्षिणां श्रोणिमित्येकादश प्रधानार्थानि, दक्षिणबाहुं गुदतृतीयाणिष्ठम् सव्यां श्रोणिमिति त्रीणि सौविष्टकृतानि। यद्वा त्रीणि हृदयम् जिह्वां क्रोडमिति, अथवा पञ्च हृदयजिह्वाक्रोडसव्यबाहुदक्षिणपार्श्वानि, अत्र पञ्चावदानपक्षे त्र्यवदानपक्षे वा तेभ्य एव स्विष्टकृद्यागः। वपाश्रं हुत्वावदानान्यवद्यतीति वदता सूत्रकृता पशुपुरोडाशो निरस्तः। 'स्थाली' 'होति' स्थालीपाकेन चरुणा मिश्राणि संयुक्तान्यवदानानि हृदयादीनि जुहोति स्थालीपाकस्य च मिश्रणवचनात्सहैव पाकः। 'पश्वङ्गं दक्षिणा' पशोः अङ्गं पश्वङ्गम् अस्य पशुबन्धस्य दक्षिणा। 'यद्दे' 'येति' एतदर्घ्यपशून्प्रकृत्य कर्माभिहितं, तत्र यस्यार्घ्यस्य आचार्यादेर्या देवता तद्दैवतः स पशुयागस्तस्मिँस्तद्दैवते यागे तद्दैवतम् अर्घ्यदैवतं बृहस्पत्यादिकं च यजेत्। तत्रार्घ्यदेवता, आचार्यस्य बृहस्पतिः, ब्रह्मणश्चन्द्रमाः, उद्गातुः पर्जन्यः, अग्निहोतुः, अश्विनावध्वर्योः, विवाह्यस्य प्रजापतिः, राज्ञ इन्द्रः, प्रियस्य मित्रः, स्नातस्य विश्वेदेवा इन्द्राग्नी वेति। तस्मै चार्घ्यायाचार्यादये भागं पशोः किञ्चिदङ्गं कुर्यात् विभजेत्। तं चार्घ्यमाचार्यादिकमिममनुप्रापयेति ब्रूयात्। 'नद्य' 'त्रवा' इदानीं प्रेतोद्देशेन गामप्येके घ्नन्तीति यदुक्तं तत्प्रदेशविधानार्थमाह। नद्यन्तरे नद्या अन्तरे द्वीपे नावं नवम् एकादशाहश्राद्धं तदर्थमिमं नावं गोपशुं कारयेदनुतिष्ठेत्। कोऽर्थः प्रेतोद्देशेन गोपशुमेकादशोऽह्नि नद्यन्तरे आलभेत न वा आलभेत इतिसूत्रार्थः॥ ११॥

( विश्व० )—प्रेतायोद्दिश्य गामप्येके घ्नन्तीति शाखापश्वभिधानम्। तत्प्रसङ्गेन यावन्तोऽर्घपशवस्तत्कर्तव्यताकथनायेदमभिधीयते 'पशु' 'व्याऽगां' गोवर्जं पशुमाप्लाव्य शाखायां यूपस्थानापन्नायां नियोजनम्। चेच्छब्दो विकल्पार्थः। आप्लावनं नाम प्रक्षालनं बन्धनादिविधानं च शूलगवे औपासनमरण्यं हृत्वेत्यादावुक्तं तथापि शाखानिखननमत्र वक्ष्यति। तदर्थं पदार्थक्रम उच्यते। भूसंस्कारपूर्वकं बहिरावसथ्याग्निस्थापनम्। स्मार्तपात्रासादने आज्यासादनोत्तरं वपाश्रपण्यौ शूलमुखा स्थाली तण्डुलाः प्लक्षशाखा पलाशशाखा त्रिगुणरशना उपाकरणतृणं द्विगुणरशना पशुः पात्नेजनीः असिः हिरण्यशकलानि दधि बर्हिः संस्रवपात्रं पश्वङ्गं दक्षिणार्थे। ततः पवित्रकरणादि बर्हिस्तरणान्ते प्लक्षशाखास्तरणं पात्रासादने कृते चरुग्रहणम्। तत्राचार्ये अर्घ्ये बृहस्पतिर्देवता। ऋत्विक्षु—अग्निर्होतुः। आदित्योऽश्विनौ वाध्वर्योः। चन्द्रमा ब्रह्मणः। पर्जन्य उद्गातुः। आकाशः सदस्यस्य। ब्राह्मणाच्छंस्यादयो द्वादशाब्देवता इन्द्रहोत्रादश्विनाध्वर्यू ( ? ) इत्यादयो वा। वैवाह्यस्य प्रजापतिः। राज्ञ इन्द्रः। प्रियस्य मित्रः। स्नातकस्येन्द्राग्नी विश्वेदेवा वा तत्तदर्थे चरुपश्वादौ देवता ज्ञेयाः। ग्रहणे जुष्टम्। त्वा प्रोक्षणे। अग्रेणाग्नीन्परीत्य पलाशशाखां निहन्ति। वेदावाज्यासादनान्ते अग्नीन्प्रादक्षिण्येन परीत्याग्नेः पूर्वभागे पलाशशाखां यूपकार्यार्थे निहन्ति गर्तं खात्वा तस्मिन्स्थापयन्ति। औत्तरवेदिकपशौ अग्नीनिति पदं सार्थकं योज्यम्। अनौत्तरवेदिके अग्निं परीत्येत्यूहितव्यम्। परिव्ययणोपाकरणनियोजनप्रोक्षणान्यावृता कुर्यात्। परिव्ययणं त्रिगुणरशनया शाखावेष्टनम्। उपाकरणं तृणेन पशोः स्पर्शनं बृहस्पतये उपाकरोमीति। नियोजनं द्विगुणरशनयान्तरा शृङ्गे बद्ध्वा बृहस्पतये नियुनज्मीति शाखायां पशुबन्धनम्। प्रोक्षणं प्रोक्षणीभिः पशोर्बृहस्पतये त्वा जुष्टं प्रोक्षामीति। एतानि सर्वाणि आवृता कुर्यात्। आवृच्छब्दः क्रियामात्रपरः तेन पशुप्रकरणे मन्त्रा उक्तास्तद्रहित इत्यर्थः। 'यच्चान्यत्' न केवलमेते एव पदार्थाः, अन्यदपि पशुसंस्कारकं समंजनपर्यग्निकरणादि यत्पदार्थजातं तदपि कुर्यात्। परिपशव्ये हुत्वा तूष्णीमपराः पञ्च स्वाहा देवेभ्य इत्याहुतिर्मारणात्पूर्वं देवेभ्यः स्वाहेति संज्ञप्ते पशौ। एते द्वे आहुती हुत्वा तूष्णीं पञ्चाज्याहुतिहोमः प्रजापतिं ध्यात्वा। इदं प्रजापतय इति पञ्चानां त्यागाः। 'वपो' 'येत्' पशोरुदरं विदार्य

वपोद्धरणं यथोक्तं कृत्वा यथापूर्वमभिघारयेत् । ततो देवतां त्वादिशेदुपाकरणनियोजनप्रोक्षणेषु । उपाकरणनियोजनप्रोक्षणान्युक्तानि । तेषु देवतां तु पुनः आदिशेत् । अमुष्मै त्वोपाकरोमि । अमुष्मै त्वा नियुनज्मि । अमुष्मै त्वा प्रोक्षामीत्येवम् । पूर्वमावृता कुर्यादित्युक्तं तत्रावृच्छब्दोऽमन्त्रवाचकत्वेनाङ्गीकृतस्तेन तूष्णीमेते पदार्था इति प्राप्ते देवतां त्वादिशेदित्यनेन नियुनज्मि प्रोक्षामीत्यादेशः । न केवलं पशौ । 'स्थालीपाकेचैवं' स्थालीपाके चरावप्येवम् । पशौ सहैव स्थालीपाकस्तद्दैवतः कर्तव्यः । तेन सहावदानहोमो वक्ष्यति । तत्राप्येवं ग्रहणप्रोक्षणादौ दैवतादेशः अमुकाय जुष्टं गृह्णामि । अमुकाय त्वा जुष्टं प्रोक्षामि । अमुष्मै स्वाहेत्यादिषु । ततो विशसनश्रपणाञ्जनशणदान(?)- पूर्वकं पाशुकं कृत्वा तत उपयमनकुशादानादि आज्यभागान्तम् । ततो 'वपा९···र्वाणि' बृहस्पतये स्वाहेति वपां हुत्वा अवदानानि हृदयादीन्येकादश अवद्यति अङ्गेभ्यः । पृथक्कृत्वा स्वधितिना एकस्मिन्पात्रे गृह्णाति । अत्र वपाहोमोत्तरमवदानग्रहणेनान्तरा पशुपुरोडाशो निरस्तः स्मार्ते पशौ । एकदेवताकत्वात्तत्स्थानापन्नश्चरुः । 'त्रीणि पञ्च वा' अथवा नैकादशानि न सौविष्टकृतानि । त्रीण्येवादितो ग्राह्याणि । हृदयजिह्वाक्रोडानि । अथवादितः पञ्च हृदयजिह्वाक्रोडसव्यबाहुदक्षिणपार्श्वानि । तत्र सर्वपक्षे एकादशभ्यः प्रधानानि । सौविष्टकृतेभ्यस्त्र्यङ्गेभ्यः स्विष्टकृत् । त्रिपञ्चग्रहणपक्षे तेभ्य एव पुनः स्विष्टकृत्तदा तेषां क्षताभ्यञ्जनम् । 'स्थाली···होति' अवदानेन सह स्थालीपाकश्रपणम् । पशुपुरोडाशस्थानापन्नस्य चरोः पृथग्घोमे प्राप्ते वाचनिकस्थालीपाकस्य होमः सहैव । तन्मिश्राणि सह एकीकृत्य जुहोति स्रुवेण । बृहस्पतये स्वाहेति । ततो वनस्पतये इत्यादि पाशुकम् । एवं स्विष्टकृत् त्र्यङ्गेभ्यश्चरुणा सह । त्रिपञ्चपक्षे तेभ्य एव चरुणा सह स्विष्टकृद्धोम इत्यादि । 'पञ्चाङ्गं दक्षिणा' अस्य पशोः अङ्गमस्य पशुबन्धस्य दक्षिणा । पञ्चाङ्गमिति विशेषात् [पशुर्द्धेनुः]वरादीनां प्रतिषेधः । वपा९हुत्वा त्रीणि पञ्च सर्वाणि वावद्यति सर्वाभावे शेषात् स्विष्टकृत् स्थालीपाकेन सह प्रदानमिति स्मार्तपशुविषये कातीयसूत्रम् । 'तद्दैवतं च यजेत्' व्यक्तिभेदेनार्घपशुदेवताः प्रोक्ताः । तेषां मध्ये यद्दैवतोऽर्घ्यः समागच्छति तद्दैवतं यजेत् बृहस्पतिपदस्थाने तत्तद्दैवतं पदं प्रयोज्यं देवतां त्वादिशेदित्यत्र देवतापदमात्रे विशेषः । 'तस्मै च भागं कुर्यात्' तस्मै आचार्यादेरर्घ्याय किंचिदङ्गभागं कुर्यात् । 'तं च ब्रूयादिममनुप्रापयेति' भागदानसमयेऽर्घ्यं प्रति ब्रूयादिममनुप्रापयेति प्रैषम् । 'नद्यन्तरे नावं कारयेत्' एकादशाहप्रकरणे प्रेतायोद्दिश्य गामप्येके घ्नन्तीत्युक्तं तत्कर्म कुत्र कर्तव्यमित्येतदर्थं नद्यन्तरे नदीमध्यस्थितद्वीपे नावं नवश्राद्धान्तःपातित्वेन एकादशाहश्राद्धं नावमुच्यते । तत्रार्घ्यपशुविधिना प्रेतदैवत्यं पशुं कृत्वा तन्मांसेनावशिष्टेन तच्छ्राद्धं पिण्डदानं च कर्तव्यम् ॥ 'न वा' अथवा पशोरालम्भने विकल्पः । तदा रोपि तच्छ्राद्धे निरस्तः ॥ एकादशी कण्डिका ॥ ११ ॥ ॥ * ॥

अथातोऽवकीर्णिप्रायश्चित्तम् ॥ १ ॥ अमावास्यायां चतुष्पथे गर्दभं पशुमालभते ॥ २ ॥ निर्ऋतिं पाकयज्ञेन यजेत ॥ ३ ॥ अप्स्ववदानहोमः ॥४॥ भूमौ पशुपुरोडाशश्रपणम् ॥ ५ ॥ तां छविं परिदधीत ॥ ६॥ ऊर्ध्वबालामित्येके ॥ ७ ॥ संवत्सरं भिक्षाचर्यं चरेत्स्वकर्म परिकीर्तयन् ॥ ८ ॥ अथापरमाज्याहुती जुहोति ॥ कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वा-

हा। कामाभिद्रुग्धो[1]ऽस्म्यभिद्रुग्धोस्मिकामकामाय स्वाहेति॥ ९॥ अथोपतिष्ठते, सं मा सिञ्चन्तु मरुतः समिन्द्रः संबृहस्पतिः। सं मायमग्निः सिञ्चतु प्रजया च धनेन चेति॥ १०॥ एतदेव प्रायश्चित्तम्॥ १२॥ २॥

( कर्कः )—तेन प्रसङ्गेन नैमित्तिकं पश्वन्तरमभिधातुमिदमाह ' अथा'''श्चित्तम् ' व्याख्यास्यत इति सूत्रशेषः। अवकीर्णी ब्रह्मचारी यः स्त्रियमुपैति सोऽनेनाधिक्रियते। ' अमा'''जेत ' अन्योऽपि हविर्यज्ञरूपोऽवकीर्णिपशुरस्ति अतः पाकयज्ञेनेत्युक्तम्। ' अप्स्व'''होमः ' अग्न्यपवादोऽयमवदानमात्रस्य। आघारादि त्वग्नावेव। भूमौ'''णम् ' शाखापशौ पुरोडाशाभावादिह विधानम्। तस्य चाज्येन सह संस्कारानुष्ठानम् 'तां छविं'''त्येके' तामेव गर्दभच्छविं परिधत्ते। ऊर्ध्ववालामित्येके। वालशब्देन पुच्छमभिधीयते। ऊर्ध्ववालां तिर्यग्वालां वेति विकल्पः। 'संव'''र्तयन्' निरुक्तं वा एनः कनीयो भवतीति श्रुतेः। 'अथापरम् ' प्रायश्चित्तान्तरं व्याख्यास्यत इति सूत्रशेषः। ' आज्याहु'''स्वाहा ' इत्यागन्तुत्वादाहुतिद्वयं चतुर्दशाहुतिकान्ते भवति। 'अथोप'''नेन च' इत्यनेन॥ १२॥

( जयरामः )—एतत्पशुप्रसङ्गेन पश्वन्तरं नैमित्तिकमभिधातुमाह—अथेत्यादि। वक्ष्यत इति सूत्रशेषः। अवकीर्णी ब्रह्मचारी सन् यः स्त्रियमुपैति सोऽनेनाधिक्रियते। पाकयज्ञेन यजेतेत्यनेनान्योपि हविर्यज्ञरूपोऽवकीर्णपशुरस्तीत्युक्तम्। अप्स्वित्ययमग्न्यपवादोऽवदानमात्रस्य। आघारादि त्वग्नावेव। भूमौ पश्विति शाखापशौ पुरोडाशाभावाद्विधानम्। तस्य चाज्येन सह संस्कारानुष्ठानम्। तामेव गर्दभस्य छविं त्वचं परिदधीत। ऊर्ध्ववालां तिर्यग्वालां वेति विकल्पः। वालशब्देन पुच्छमभिधीयते। स्वकर्म अवकीर्णित्वम्। निरुक्तं वा एनः कनीयो भवतीति श्रुतेः। अथापरं प्रायश्चित्तान्तरं वक्ष्यत इति सूत्रशेषः। आज्याहुती द्वे जुहोति। कामावकीर्णोऽस्मि कामाभिद्रुग्धोस्मीत्येताभ्यां मन्त्राभ्याम्। एते आहुती आगन्तुत्वाच्चतुर्दशाहुत्यन्ते भवतः। अथ मन्त्रार्थः। तत्र द्वयोः प्रजापतिरनुष्टुप् काम आज्यहोमे०। हे काम क्षोभक अहं कामेन त्वत्कृतक्षोभेण अवकीर्णः अभिभूतोऽस्मि, अतोऽवकीर्णः क्षतव्रतोऽस्मि। अतः कामाय शोधकत्वेन हविःकामयमानाय तुभ्यं स्वाहा सुहुतमस्तु। एवमभिद्रुग्धो हिंसितः, शिष्टं समानम्। अथोपस्थानमन्त्रार्थः। तत्र प्रजापतिरनुष्टुप् लिङ्गोक्ता उपस्थाने०। मरुतो देवा मा मां सम्यक् सिञ्चन्तु अभीष्टप्रदानेन समर्द्धयन्तु प्रजया च पुत्रादिरूपया तथा धनेन धर्मानुकूलसमृद्ध्या च, चकारात्सिञ्चन्तु। तथेन्द्रः सम्यक् सिञ्चत्वित्युत्तरत्रापि योज्यम्। एतदेव प्रायश्चित्तम्। प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते। तपोनिश्चययुग्वृत्तं प्रायश्चित्तमितीरितम्॥ १२॥

( हरिहरः )— एवं तावन्मध्यन्तरे नावं कारये दित्यनेन नवश्राद्धप्रयोजनपशुरुक्तस्तत्प्रसङ्गान्नैमित्तिकं पश्वन्तरं व्याख्यातुमाह ' अथा ''श्चित्तम् ' अथेदानी यतः पशुरभिहितः अतस्तत्प्रसङ्गात् अवकीर्णिनः स्खलितब्रह्मचर्यस्य ब्रह्मचारिणः प्रायश्चित्तं शुद्धिसंपादकं कर्म वक्ष्यत इति सूत्रशेषः। अमा'''भते ' यो ब्रह्मचारी सन् स्त्रीगमनादवकीर्णी भवति स पुनः प्रायश्चित्तं चिकीर्षुरमावास्यायां कस्यांचित् कृष्णपक्षदश्यां चतुष्पथे चत्वारः पन्थानो यत्र भूभागे स चतुष्पथः तस्मिन् देशे गर्दभं रासभं पशुमालभते संज्ञपयति। ' निर्ऋ' 'जेत् ' निर्ऋतिं देवतां पाकयज्ञेन पाकयज्ञविधानेन पशुना यजेत। अत्रावकीर्णिनो हविर्यज्ञरूपोऽन्योपि पशुरस्ति तेन हेतुना पाकयज्ञेन यजेतेत्युक्तम्। ' अप्स्व''होमः ' अप्सु जले अवदानानामेव होमः देवतोद्देशेन प्रक्षेपो भवति नत्वग्नौ।

[1] द्रुग्धोऽस्म्यभिद्रुग्धोस्मीत्यपि पाठः।

अवदानग्रहणादाघारादीनां लौकिकाग्नावेव होमः । 'भूमौ···पणम्' भूमावेव न कपालेषु पुरोडाशस्य श्रपणं पाको भवति, शाखापशौ पुरोडाशाभावात् । इहापूर्वः पुरोडाशोऽर्थाद्विधीयते तस्य च संस्कार आज्येन सह क्रियते । 'तां छविं ··तेयन्' ताम् आलब्धस्य गर्दभस्य छविं कृत्तिं परिदधीत प्रोर्णुवीत आच्छादयीतेति यावत्, एके आचार्याः तामूर्द्धवालामुपरिपुच्छां परिदधीतेति वर्णयन्ति, अपरे तिर्यग्वालाम् । ततश्च विकल्पः । गर्दभपश्वालम्भानन्तरं तच्छविं परिदधानः संवत्सरं यावद्भिक्षाचर्यं चरेत्, किं कुर्वन् स्वकर्म स्वीयमवकीर्णित्वं परिकीर्तयन् सर्वतः प्रकथयन् अहमवकीर्णी भवति भिक्षां देहीत्येवमादिना । स्वकर्मपरिख्यापनं कुत इति चेत् निरुक्तं वा एनः कनीयो भवतीति श्रुतेः । 'अथापरम्' अथेदानीमपरमन्यत्प्रायश्चित्तान्तरमवकीर्णिनोऽभिधीयते तदाह । 'आज्या···स्वाहेति' कामावकीर्णोऽस्मि कामाभिद्रुग्धोऽस्मीत्येताभ्यां मंत्राभ्यां प्रतिमन्त्रमेकैकामेवमाज्याहुती द्वे जुहोति । इदं कामायेति उभयत्र त्यागः । ते च द्वे आगन्तुत्वाच्चतुर्दशाहुत्यन्ते, आगन्तूनामन्ते निवेश इति न्यायात् । 'अथो···श्चित्तम्' अथ होमानन्तरमुपतिष्ठते ऊर्ध्वीभूय संमासिञ्चन्त्वित्यादिना मन्त्रेण लिङ्गोक्ता देवताः प्रार्थयते, संवत्सरमित्यत्राप्यनुवर्तते अतः प्रतिदिनं पञ्चभूसंस्कारपूर्वकं लौकिकाग्निं स्थापयित्वा आघारादिस्विष्टकृदन्ताश्चतुर्दशाज्याहुतीर्हुत्वा कामावकीर्णोऽस्मि कामाभिद्रुग्धोऽस्मीत्येताभ्यां मन्त्राभ्यां प्रतिमन्त्रमाज्याहुतिद्वयं हुत्वा संमासिञ्चन्त्विति मन्त्रेणोपतिष्ठते संवत्सरं यावत्, एतदेव यदुक्तं गर्दभपश्वालम्भनरूपमाज्याहुतिहोमात्मकं च तदवकीर्णिनः प्रायश्चित्तद्वयं विज्ञेयमिति सूत्रार्थः ॥ १२ ॥ ॥ * ॥

( विश्व० )—अथार्षपशुप्रकरणोपात्तं नावश्राद्धिकं पशुमुक्त्वा अवकीर्णिप्रायश्चित्तार्थं सदैवतं द्विप्रकारकं गर्दभपशुकरणविधिमाह 'अथा···श्चित्तं' तत्राथशब्द आनन्तर्ये । पूर्वोपक्रान्तस्य पशोरुत्तरत्रेति । अतःशब्दो हेत्वर्थे । अवकीर्णिनः पतितप्रायश्चितपश्वालम्भनमन्तरोत्तरत्र कर्मस्वनधिकारः । अतो हेतोस्तस्य प्रायश्चित्तं वक्ष्यत इति । ब्रह्मचारी सन्यः स्त्रियं गच्छति सोऽवकीर्णीत्युच्यते । तस्य प्रायश्चित्तार्थायां गर्दभेज्यायामधिकारः । स कदा कर्तव्य इत्यत आह 'अमावा···स' अमावास्यायां प्रायश्चित्तं पतनोत्तरकालीनायां संनिध्यमावास्यायाम् । चतुष्पथे चत्वारः पन्थानो यत्र तस्मिन् गर्दभं गर्दभजातिसंबन्धिनं पशुमालभते पशुहननप्रकारेणाग्निस्थापनपूर्वकम् । 'निर्ऋ···जेत्' तत्र तत्कर्म केन विधिना कुत्र कथं कर्तव्यमितिसंशये निर्ऋतिदेवताकं पाकयज्ञविधिना कर्तव्यः पूर्वोक्तप्रकारेण । अ[थी त्र न]श्रौतविधिना नापि हविर्यज्ञविधिना पशुरुक्तः श्रौते प्राशित्रावदानदर्शनात् । पाकयज्ञोक्तविधिनोच्यते । पश्ववदानहोमे पशुपुरोडाशे च निर्ऋतिर्देवता । वपाया अभावाद्वपाहोमाभावः ॥ 'अप्स्ववदानहोमः' गर्दभस्यावदानहोम उदके कर्तव्यः । तदर्थमग्निस्थापनवेलायां तद्धर्मेण तदुत्तरत उदपात्रस्थापनमवदानहोमार्थम् । अन्यद्धोमः स्थापितेऽग्नौपशुपुरोडाश आघारावाज्यभागादि । 'भूमौ पशुपुरोडाशश्रपणं' न कपालेषु । इदं स्मार्त्तपशौ विशेषविधानम् स्मार्त्ते कर्मणि पशुपुरोडाशाभावः । तत्पुरोडाशश्रपणं भूमावेव कर्तव्यं । एतावतैव सूत्रेण पूर्वोक्तः पशुः सूचितः । श्रौतविधिश्चेत्तदा तदीयैर्धर्मैः पशुर्भवति । तत्र प्राशित्रावदानं गर्दभशिश्नात् [प्रजनना]द्वदेयम् । अथ पशुसमाप्त्यनन्तरं पापक्षयाय भिक्षाटनप्रकारमाह 'तां छविं परिदधीत' तस्यैव गर्दभस्य त्वचं परिदधीत । छविस्त्वक् । कथं परिदधीत दक्षिणेंसे शिरः उत्तरेंसे पुच्छः अध ऊर्द्ध्वौ पादौ । शरीरलग्नवालाम् ऊर्द्ध्ववालामित्येके । परिधाने विकल्पः । उपरिवालाम् । अथवा वालशब्देन पुच्छमुच्यते । ऊर्द्ध्वपुच्छामधस्तनग्रीवां परिदधीत । तत्र मस्तकभागे पुच्छं पादसमीपे ग्रीवा दक्षिणसव्यांसयोः पादौ एवं परिधाय । 'संव···यन्' सावनसंवत्सरं यावद्गृहे गृहे स्वकर्मकथनपूर्वकं भिक्षां चरेत् अहमवकीर्णी भिक्षां देहीत्येवम् । निरुक्तं वा एनः कनीयो भवतीति श्रुतेः । पापं क्षरति कीर्तना-

दिति स्मृतेश्च । एवं कृते तस्य कर्मान्तरे अधिकारः । इति स्वेच्छया बलाद्वा व्यभिचरितस्य ब्रह्मचारिणः प्रायश्चित्तमुक्त्वा प्रकारान्तरेणाहुतिद्वयरूपं प्रायश्चितान्तरमाह । 'अथा'''स्मीत्यादि' अथ पश्चनन्तरमपरं प्रायश्चितं वैकल्पिकमुच्यते । अपरशब्दो विकल्पार्थे सूत्रसामाधिकरण्यात् । तथाच सूत्रं वावकीर्णिनो गर्दभेज्येति । वाशब्दो व्यवस्थितविकल्पार्थः । संकटपतितस्य बलात् स्त्रिया इच्छया व्यभिचरितस्य स्वल्पं प्रायश्चित्तमाह । संवत्सरपर्यन्तं नित्यमग्निस्थापनं कृत्वा कुशंडीपूर्वकमाज्यतन्त्रेणाघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चितं प्राजापत्यं स्विष्टकृच्चेति चतुर्दशाहुतीर्हुत्वा ततः कामावकीर्णोऽस्मि कामाभिदुग्धोस्मि इत्याहुतिद्वयं हुत्वा । 'अथो'''त्विति' एवं षोडशाहुतिहोमान्ते अग्निमुपतिष्ठते प्रत्यहम् । 'एतदेव प्रायश्चित्तं' एतत्पूर्वोक्तं द्विप्रकारकमवकीर्णिप्रायश्चित्तं भवति ॥ द्वादशी कण्डिका ॥ १२ ॥ ॥ * ॥

अथातः सभाप्रवेशनम् ॥ १ ॥ सभामभ्येति सभाङ्गिरासि नादिर्नामासि त्विषिर्नामासि तस्यै ते नम इति ॥ २ ॥ अथ प्रविशति सभा च मासमितिश्चोभे प्रजापतेर्दुहितरौ सचेतसौ । यो मा न विद्यादुप मा स तिष्ठेत्स चेतनो भवतु शꣳसथे जन इति ॥ ३ ॥ पर्षदमेत्य जपेदभिभूरहमागमविराडप्रतिवाश्याः । अस्याः पर्षद ईशानः सहसा सुदुष्टरो जन इति ॥ ४ ॥ स यदि मन्येत क्रुद्धोऽयमिति तमभिमन्त्रयते, या त एषा रराट्या तनूर्मन्योः क्रोधस्य नाशनी । तान्देवा ब्रह्मचारिणो विनयन्तु सुमेधसः ॥ द्यौरहं पृथिवी चाहं तौ ते क्रोधं नयामसि गर्भमश्वतर्यसहासाविति ॥ ५ ॥ अथ यदि मन्येत द्रुग्धोऽयमिति तमभिमन्त्रयते तां ते वाचमास्य आदत्ते हृदय आदधे यत्र यत्र निहिता वाक्तां ततस्तत आददे यदहं ब्रवीमि तत्सत्यमधरो मत्तांद्यस्वेति ॥ ६ ॥ एतदेव वशीकरणम् ॥ ॥ ७ ॥ ॥ १३ ॥

( कर्कः )—अथातः सभाप्रवेशनमित्येवमादि यत्तत्सर्वं निगदव्याख्यातमेव ।

इति श्री कर्कोपाध्यायकृतौ गृह्यसूत्रभाष्ये तृतीयकाण्डविवरण सपूर्णम् ॥

( जयरामः )—सभाप्रवेशनम् । वक्ष्यत इति सूत्रशेषः । तत्र सभां प्रति अभ्येति अभिमुखं गच्छति सभाङ्गिरसीत्यनेन मन्त्रेण । तस्यार्थः । तत्राङ्गिरा गायत्री सभा तत्प्रवेशने० । सह धर्मेण सद्भि र्वा भातीति सभा । तथा नादिर्नदनशीला नाम नाम्नासि । हे आङ्गिरसि आङ्गिरोदेवत्ते बृहस्पत्यधिष्ठिते वा त्विषिर्दीप्ता नाम प्रसिद्धमसि । धर्मनिरूपणात् । तस्यै उक्तगुणवत्यै ते तुभ्यं नमो ऽस्तु । अथ प्रवेशनमन्त्रार्थः । तत्र प्रजापतिस्त्रिष्टुप् सभा समितिश्च प्रवेशने० । सभा च संसत् समितिश्च संगरः ते उभे प्रजापतेर्ब्रह्मणो दुहितरौ पुत्र्यौ मा मामवतामिति शेषः । यत एते सचेतसौ शोभनज्ञानदात्र्यौ । अथ सभावचनं सभासदः प्रति । यः पुमान् मां न विद्यात् मद्व्यवहारं न जानीयात् स पुमान् मा मामुपतिष्ठेत् उपासीत । ततो ऽसौ शंसथे संभाषणाय सचेतनः सुबुद्धिः वादकुशल इत्यर्थः । भवतु मत्प्रभावादित्याशंसा । पर्षदं सभामेत्यागत्य जपेदभिभूरहमिति मन्त्रम् ।

१ 'मन्यो, इत्यपि क्वचित्पाठः ।

अस्यार्थः । तत्र प्रजापतिरनुष्टुप् पर्षत्सभोपस्थाने० । अभिभूः परेषामभिभवनशीलोऽहमागतोऽस्मि । किंभूतः । अविराट् विरुद्धतया राजते स विराट् रुद्धवीर्यः न विराट् अविराट् । तथा अप्रतिवाशी प्रतिवादिशून्यः आः इत्यव्ययं संबुद्ध्यर्थम् । यद्वा अप्रतिवाश्या इति पर्षदो विशेषणम् अप्रतिक्षेपाया अस्याः पर्षदः सभाया ईशानः स्वामी स्वासु प्रजासु दुष्टरोऽपि स मयि सुजनः अस्त्विति शेषः । दुष्टरश्चोग्रः । समाधको यदि सभेशं क्रुद्धं जानीयात्तदा तमभिमन्त्रयते क्रोधापनोदाय यातएषेति मन्त्रेण । अस्यार्थः । तत्र प्रजापतिरनुष्टुप् लिङ्गोक्ता क्रोधापनयने० । हे असौ अमुकनामन् सभेश ते तव रराटं ललाटं तत्र भवा रराट्या या क्रोधस्य तनूः शरीरं तान्देवा इन्द्राद्याः ब्रह्मचारिणश्च सनकाद्या विनयन्तु अपनयन्तु कथं भूतस्य क्रोधस्य मन्योर्दीप्तस्य । किंभूता देवाः । सुमेधसः स्वबुद्ध्या क्रोधमपाकर्तुं शक्ताः । किंभूता तनूः नाशनी चतुर्वर्गस्येत्यर्थात् । एषा ललाटत्रिवलिरूपा । मन्त्राभ्यासेनात्मनोप्युत्कर्षमाह । द्यौराकाशरूपोऽहमिति क्रोधावरकत्वमुक्तम् । पृथिवी च क्षितिरूपश्चाहमिति क्रोधाधारत्वेन स्वातन्त्र्यञ्चोक्तम् । अतस्तौ तत्स्वरूपो भूत्वा ते तव क्रोधं नयामसि मन्त्रबलेनापनयामि । कथम् । यथा अश्वतरी गर्भपुष्टिमसहमाना अमार्गेण मुञ्चन्ती तथेति व्याख्येयम् । अथ साधको यदि मन्येतायं सभेशो द्रुग्धो द्रोहकारीति तदा तमभिमन्त्रयते तां त इति मन्त्रेण । अस्यार्थः । तत्र प्रजापतिरनुष्टुप् ईशो वशीकरणे० । हे सभेश भवान् मद्द्रोहकारिणीं वाचमास्ये मुखे वर्तमानामादत्ते उपक्रामति । तामहं ते तव हृदय एवादधे स्थापयामि । किंच । यत्र यत्र स्थाने वाक् वायुवशान्निहिता तां ततस्ततः स्थानात् आददे मद्वश्यां करोमि । किंच । यदहं ब्रवीमि तत्सत्यमस्तु । त्वं च मत् मत्तः अधरो नीचः । च अद्य इदानीं स्व भव ॥ अद्येत्यत्र वर्णलोपः । अधरउ इति छेदः । तत्र उ इति दार्ढ्यार्थम् । अतिशयेन स्व भूयाः । यद्वा । तां मद्द्रोहकारिणीं वाचम् तव हृदय एव अतिशयेन घस्व अवखण्डय । शिष्टं समानम् ॥ १३ ॥

( हरिहरः )—'अथा ''नम् ' अथावसथ्याग्निसाध्यकर्मविधानानन्तरं साधारणानि कर्माणि अनुविधेयानि यतः, अतो हेतोः सभाप्रवेशनं कर्म वक्ष्यत इति सूत्रशेषः । ' सभा ''नम इति ' यदा द्विजः सभां गच्छति तदा सभामभि आभिमुख्येन एति गच्छति । केन मन्त्रेण सभाङ्गिरसीत्यादिना मन्त्रेण । ' अथ '''जन इति ' अथाभिमुखमेत्य सभाचमासमित्यादिना मन्त्रेण सभां प्रविशति । ' परि '''जन इति ' परिषदं सभामेत्य प्रविश्य अभिभूरहमिति मन्त्रं जपेत् । ' स यदि '''साविति ' स सभां प्रविष्टः यदि चेन्मन्येत जानीयात् अयं सभापतिः क्रुद्ध इति तं क्रुद्धमभिलक्षीकृत्य क्रोधापनयनाय मन्त्रयते यातएषेत्यादिना मन्त्रेण । असाविति क्रुद्धस्य नाम । ' अथ '''घस्वेति ' अथ यदि द्रुग्धो द्रोहकर्ताऽयमिति मन्येत तर्हि तमभिमन्त्रयते तां तेवाचमित्यादिमन्त्रेण । एतदेवं अवशस्य वशीकरणम् । इति सूत्रार्थः ॥ ॥ १३ ॥

( विश्व० )—'अथातः सभाप्रवेशनं' । ' उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये ' इति मत्वा सभायां प्रत्यहं गन्तव्यं भवति । तदीयविधानमाह । 'सभा'''रसीति' सभामाभिमुख्येन एति गच्छति सभांगिरसीति मन्त्रेण । अथ प्रविशति सभाचमासमिति । ततोऽनन्तरं ' सभाचमासमितिश्चोभेप्रजापतेर्दुहितरौ सचेतसौ । योमानविद्यादुपमासतिष्ठेत्सचेतनो भवतु संगथे जन इतिमन्त्रेण सभां प्रविशति' । परिषदमेत्य जपेदभिभूरहमागमः विराडप्रतिवाश्याः । अस्याः परिषद ईशानः स्वासु दुष्टरो जन इति। सभाप्रवेशनोत्तरं सभां प्राप्याभिभूरिति मन्त्रं जपेत् परिषत्सभा । 'स यदि मन्येत क्रुद्धोयमिति तमभिमन्त्रयते या त एषा रराट्या तनूर्मन्योः क्रोधस्य नाशनी । तां देवा ब्रह्मचारिणो विनयन्तु सुमेधसः । द्यौरहं पृथिवीचाहं तौ ते क्रोधं नयामसि गर्भमश्वतर्यासहासाविति '

सभां प्रविष्टः सः यदि अयं सभापतिः क्रुद्धो मन्येत जानीयात् तदा तं सभापतिम् अभिमन्त्रयते यात इति मन्त्रेण । अथ यदि मन्येत दुग्धोयमिति तमभिमन्त्रयते तां ते वाचमास्य आदत्ते हृदयमादधे । यत्र यत्र निहिता वाक्तां ततस्तत आददे यदहं ब्रवीमि तत्सत्यमधरो मत्पद्यस्वेति । अथ यदा सभां प्रविष्टः सः अयं सभापतिर्द्रुग्धो मन्येत जानाति अयं द्रोहकर्त्ता तं सभापतिं तां ते वाचमितिमन्त्रेणाभिमन्त्रयते । 'एतदेव वशीकरणं' अथातः सभाप्रवेशनमित्यादि एतावत्पर्यन्तं सभावशीकरणविधानम् ॥ १३ ॥

अथातो रथारोहणम् ॥१॥ युङ्क्तेति रथं संप्रेष्य युक्त इति प्रोक्ते साविराडित्येत्य चक्रे अभिमृशति ॥ २ ॥ रथन्तरमसीति दक्षिणम् ॥ ३ ॥ बृहदसीत्युत्तरम् ॥ ४ ॥ वामदेव्यमसीति कूबरीम् ॥ ५ ॥ हस्तेनोपस्थमभिमृशति अङ्कौ न्यङ्कावभितो रथं यौ ध्वान्तं वाताग्रमनुसंचरन्तम् । दूरेहेतिरिन्द्रियवान्पतत्रि ते नोऽग्नयः पप्रयः पारयन्त्विति ॥ ६ ॥ नमो माणिचरायेति दक्षिणं धुर्यं प्राजति ॥ ७ ॥ अप्राप्य देवताः प्रत्यवरोहेत्संप्रति ब्राह्मणान्मध्ये गा अभिक्रम्य पितॄन् ॥ ८ ॥ न स्त्रीब्रह्मचारिणौ सारथी स्याताम् ॥ ९ ॥ मुहूर्तमतीयाय जपेदिहरतिरिहरमध्वम् ॥ १० ॥ एके मारिस्वहरतिरिति च ॥ ११ ॥ स यदि दुर्बलो रथः स्यात्तमास्थाय जपेदयं वामश्विना रथो मा दुर्गे मास्तरोरिषदिति ॥ १२ ॥ स यदि भ्रश्यात्स्तम्भमुपस्पृश्य भूमिं वा जपेदेष वामश्विना रथो मा दुर्गे मास्तरोरिषदिति ॥ १३ ॥ तस्य न काचनार्त्तिर्न रिष्टिर्भवति ॥ १४ ॥ यात्वाऽध्वानं विमुच्य रथं यवसोदके दापयेदेष उ ह वाहनस्यापन्हव इति श्रुतेः ॥ १५ ॥ ॥ १४ ॥

( जयरामः )—अथातो रथारोहणम् । वक्ष्यत इति सूत्रशेषः । ततः स्वामी रथं युङ्क्तेतिप्रैषेण सारथिं प्रेषयित्वा प्रेषितेन तेनैव युक्त इति निवेदिते साविराडित्येतावता मन्त्रेण रथमेत्यागत्य चक्रे रथाङ्गे हस्तेनाभिमृशति । तत्र रथन्तरमसीत्येतावता मन्त्रेण दक्षिणं चक्रम् । बृहदसीत्येतावता वामम् । अथ मन्त्रार्थः । तत्र त्रयाणां परमेष्ठी यजूंषि अङ्गान्यभिमर्शने० । योऽयं रथः सा विराड् अन्नदात्री देवता । रथन्तरादीनि सामानि । कूबरीं युगन्धरम् । उपस्थं नीडम् । हस्तेनेति सर्वत्र संबध्यते । तत्र मन्त्रः । अङ्कौन्यङ्काविति । तस्यार्थः । तत्र प्रजापतिस्त्रिष्टुप् अङ्गं तदभिमर्शने० । अङ्कौ द्वौ अङ्काख्यगणपावग्निविशेषौ । एवं न्यङ्कावपि। एवं भूतौ यावग्नी अभितो रथं रथस्य सर्वतो रक्षकत्वेन ध्वान्तं दुर्गमं प्राप्य वातस्याग्रं मुखमनु अनुसृत्य संचरन्तौ सम्यग्गच्छन्तौ वर्तेते ये चापरे दूरेहेतिः बृहज्ज्वालः तथा इन्द्रियं चात्रेन्द्ररथः । तथा इन्द्रियानुग्राहकः पतत्रि पक्षिकुलानुग्राहकमग्निवृन्दम् । एतेऽग्नयः नोऽस्मान्पारयन्तु निर्विघ्नेनाभीष्टं देशं प्रापयन्तु । किंभूताः । पप्रयः अस्मन्मनोरथपूरणशीलाः । ततो दक्षिणं धुर्यं धुरि युक्तं वाहं प्राजति प्रकर्षेणाजयति गमनाय प्रेरयति । अज गताविति धातुः । नमो माणिचरायेति मन्त्रेण । तस्यार्थः । तत्र प्रजापतिरुष्णिक् माणिचरः प्रेरणे० । माणिचरो रथा-

धिष्ठात्री देवता । तूष्णी वामप्राजनम् । देवता अप्राप्य तद्दर्शनात्प्राक् यावच्छक्ति प्रत्यवरोहेत् रथा-दवतरेत् । पदातिर्भूत्वा गच्छेदित्यर्थः । संप्रति दृष्ट्वा ब्राह्मणान्प्रत्यवरोहेदित्यनुषङ्गः सर्वत्र । गाः प्राप्य तन्मध्यं गत्वा । पितृनभ्यागच्छतः पित्रादिमान्यानभिक्रम्य प्रह्वत्वेनाभिपत्य उत्तीर्य च मुहूर्त-मतीयाय अतिवाह्य जपेदिहरतिरित्यमुं मन्त्रम् । तस्यार्थः । तत्र प्रजापतिर्यजुरग्निः रमणे० । हे अग्नयः यूयम् एके मुख्या इह रथे रमध्वं क्रीडध्वम्, यतो मम इह रथे रतिरस्ति अतो मा मां प्राप्य भवतामपि इह मद्रथे सुशोभना रतिरस्तु । स साधको यदि दुर्बलरथः दुर्बलो रथो यस्य स तथा स्यात्तदा तं रथमास्थाय जपेदयं वामिति मन्त्रम् । तस्यार्थः । तत्र द्वयोः प्रजापतिरनुष्टुप् अश्विनौ जपे० । हे अश्विना अश्विनौ अयं वां युवयो रथः दुर्गे विषमस्थाने स्तुरः हिंसकाद्धेतोर्मा मां मारिषन् माहिंसिष्ट । स्तृस्तुरिषौ हिंसार्थौ । एतेनोत्तरोऽपि व्याख्यातः । स रथो यद्येवमभिम-न्त्रितोऽपि भ्रम्यात् कुटिलङ्गच्छेत्तदा तद्ध्वजस्तम्भं भूमिञ्चोपस्पृश्य जपेदेष वामित्यमुं मन्त्रम् । अर्तिः पीडा । रिष्टिर्विघ्नः । उ निश्चये । एष घासोदकदानरूपोऽपह्नवः अपराधमार्जनम् ॥ १४ ॥

( हरिहरः )—'अथा···हणम्' अथेदानीं कार्यार्थं जिगमिषोर्द्विजस्य यतो यानमपेक्षितमतो हेतो रथारोहणाख्यं कर्म वक्ष्यत इति सूत्रशेषः । 'युङ्क्ष्वे···त्तरम्' तत्र युङ्क्ष्वेति सारथिं संप्रेष्याज्ञाप्य ततः प्रेषितेन सारथिना युक्तो रथ इति प्रोक्ते सति साविराडित्येतेन मन्त्रेण एत्य रथसमीपमागत्य चक्रे रथाङ्गे अभिमृशति, कथं रथन्तरमसीत्यनेन मन्त्रेण दक्षिणं, वृहदसीत्यनेनोत्तरं चक्रं वृहद्रथन्तरे सामनी । 'वाम···वरीम्' वामदेव्यमसीत्यनेन मन्त्रेण कूवरीमीषदण्डाग्रमभिमृशतीत्यनुवर्तते । 'हस्ते···शति' उपस्थं रथमध्यं उपवेशनस्थानमिति यावत् । अभिमृशति आलभते हस्तेनेति सर्वत्र संबध्यते । अत्र मन्त्रः 'अङ्कौ···पयति' नमो माणिचरायेत्यनेन दक्षिणं धुर्यं दक्षिणधुरायां युक्तमश्वं वृषभं वा प्राजति प्रतोदेन प्रेरयति तूष्णीं वामम् । एवं गवां मध्ये रथं स्थापयति । 'अप्रा···पितॄन्' अ-प्राप्य अनासाद्य दूरत एव देवता हरिहरब्रह्मादिकाः प्रत्यवरोहेत् रथादवतरेत् । संप्रति ब्राह्मणान् वि-प्रान् संप्रति निकटे प्रत्यवरोहेत् मध्ये गाः सुरभीः प्राप्य मध्ये प्रत्यवरोहेत् । अभिक्रम्य पितॄन् पित्रा-दीन् मान्यान् अभिक्रम्य अभिमुखमेत्य प्रत्यवरोहेत् । 'न स्त्री···स्याताम्' स्त्री नारी ब्रह्मचारी उपकु-र्वाणको नैष्ठिकश्च स्त्रीब्रह्मचारिणौ सारथी न स्यातां न भवेताम् । 'मुहू···रितिच' मुहूर्तं क्षणमतीयाय अत्येत्य जपेत् इहरतिरित्यादिकं मन्त्रम् । 'स यदि ··पेत्' स रथी यदि चेदध्वानं गच्छन् दुर्बलः क्षीणो रथोऽस्येति दुर्बलरथः स्याद्भवेत् तदा तं रथमास्थायारुह्य वक्ष्यमाणमन्त्रं जपेत् । 'अयं···षदिति' स रथो यदि पुनर्भ्रम्यात् चलने कुटिलो भवेत्तदा स्तम्भम् रथध्वजदण्डं भूमिं वा उपस्पृश्य जपेत् एष वामश्विना रथ इति मन्त्रम् । 'तस्य वति' तस्य रथिनः न काचन अर्तिः पीडा नच रिष्टिरुपसर्गो भवति य एवं दुर्बलरथ उद्भ्रान्तरथो वा जपति । 'यात्वा···श्रुतेः' यात्वा गत्वा अध्वानं मार्गं विमुच्य मुक्त्वा किं, रथं रथयुक्तं वाहं यवसं च उदकं च यवसोदके घासपानीये ते दापयेत् अश्वेभ्यो यवसो-दके दीयेतामिति भृत्यान् प्रेषयेत् । कुतः एष उ वाहनस्य अश्वादेरपन्हवः क्षमापनमिति श्रुतेः श्रव-णात्, एष कः तस्माद्येन वाहनेन धावयेत्तद्विमुच्य ब्रूयात् पाययतैनं सुहितं कुरुतेति सूत्रार्थः ॥ १४ ॥

( विश्व० )—'अथातो रथारोहणं' अथानन्तर्ये । इतस्ततो गमनेच्छोः यानापेक्षा भवत्यतो हेतो रथारोहणविधिरुच्यते । युङ्क्ष्वेति संप्रेष्य । रथयोक्तारं सारथिनं रथपतिः सम्यक् युङ्क्ष्वेति प्रैषं ददाति । ततः स रथं युक्त्वा । 'युक्त इति प्रोक्तेऽसा विराडिति' रथयोजनोत्तरं स्वामिनं सारथिना युक्त इति प्रतिप्रोक्ते स्वामी असाविराडितिवक्ति । 'एत्य चक्रे अभिमृशति रथन्तरमसीति दक्षिणं वृहदसीत्युत्तरं' ततो रथसमीपमागत्य रथंतरमसीति मन्त्रेण दक्षिणं चक्रमभिमृशति । ततो वृहदसी-त्युत्तरं चक्रम् । 'वामदेव्यमसीति कूवरी कूवरं रथाग्रमर्थादीषाग्रमभिमृश्य वामदेव्यमसीति मन्त्रं जपति ।

'हस्तेनोपस्थमभिमृशत्यङ्कौन्यङ्कावभितो रथं यौ ध्वान्तं वाताग्रमनुसंचरन्तौ । दूरे हेतिरिंद्रियावान्पतत्रि तेनोग्नयः पप्रयः पारयन्त्विति । चक्राभिमन्त्रणोत्तरं हस्तेनोपवेशनस्थानमभिमृशति अङ्कौन्यङ्काविति मन्त्रेण । उपस्थं रथमध्यम् । 'नमोमाणिचरायेति दक्षिणधुर्यं प्राजति' रथे उपवेशनानन्तरं नमोमाणीतिमन्त्रेण दक्षिणधुरि युक्तं बलीवर्दमश्वं वा प्राजनेन कशया वा प्राजति प्रेरयति गमनाय । 'गवां मध्ये स्थापयति रथम् अप्राप्य देवताः प्रत्यवरोहेत्' गमने क्रियमाणे दूरतो देवालयदर्शने देवालयमप्राप्य रथादवतरेद्भूमौ । 'संप्रति ब्राह्मणान्' ब्राह्मणान् प्राप्य समीपे प्रत्यवरोहेत् । न दूरतः । 'मध्ये गाः' गाः सुरभीः प्राप्य गवां मध्ये रथादवतरेत् । 'अभिक्रम्य पितॄन्' पित्रादीन् वृद्धान् प्राप्य रथादवतीर्य अभिक्रम्य आभिमुख्येन गत्वा नमस्कृत्यारुह्य गच्छेदिति सर्वत्र योज्यम् । ' न स्त्रीब्रह्मचारिणौ सारथिनौ स्यातां' स्त्रीशब्देन नारी । ब्रह्मचारी द्विविधोऽपि स्त्रीब्रह्मचारिणौ सारथ्ये कर्मणि न प्रयोज्यौ । 'मुहूर्तमतीयाय जपेदिहरतिरिहरमध्वमेकेमास्त्विहरतिरिरिति च' [अभ्यवाय मुहूर्तमभ्यवायघिमन्य तत इहरतिरिहरंमासु इहरतिरिहरमतामिति ?] जपेत् । ईयाय आगत्य ततस्ततः । 'स यदि दुर्बलो रथः स्यात्तमास्थाय जपेदयं वामश्विनारथो मादुर्गे मास्तरोरिषदिति' सः रथी दुर्बलरथः स्यात् भवेत् अयं रथोऽध्वानं न पारयिष्यतीति एवंशीलं रथं मत्वा तं रथमास्थाय आरुह्य अयं वेति मन्त्रं जपेत् । 'स यदि अन्याद्भूम्याछंस्तंभमुपस्पृश्य भूमिं वा जपेदेष वामश्विनारथो मादुर्गे मास्तरोरिपदिति' स रथः यदि अन्याद्भूम्यां न्युब्जीभूतो भवेत् अथवा कुटिलो वक्रो भवेत् । तदा रथस्य ध्वजास्तम्भमुपस्पृश्य कुटिले अधः पतिते भूमिमुपस्पृश्य एष वामिति मन्त्रं जपेत् । 'तस्य न काचनार्त्तिर्न रिष्टिर्भवति' एवं कृते तस्य रथस्वामिनः काचन आर्तिः पीडा न भवति । रिष्टिरपि न भवति । रिष्टिरुपसर्गः । यात्वाऽध्वानं विमुच्य यवसोदके दापयेत्' यात्वा गत्वाध्वानं स्थानं प्राप्य विमुच्य रथं रथाद्बलीवर्दौ अश्वौ वा पृथक्कृत्य यवसोदके दापयेत् यवसं च उदकं च यवसोदके दापयेत् प्रयच्छेद्भक्षाय पानाय च । यवसं तृणानि उदकं प्रसिद्धम् । 'एष उ वाहनस्यापह्नव इति श्रुतेः' एषः वाहनस्य घासपानीयदानं श्रमापनयनम् । तस्मायेन वाहनेन धावयेत्तद्विमुच्य ब्रूयात्पाययतैनं सुहितं कुरुतेत्येव उअपह्नवः इति श्रुतेः । कुरुतेति बहुत्वं बहुभृत्यविषयम् । इति ब्रूयात् सेवकान्प्रति ॥ १४ ॥

अथातो हस्त्यारोहणम् ॥ १ ॥ एत्य हस्तिनमभिमृशति हस्तियशसमसि हस्तिवर्चसमसीति ॥ २ ॥ अथारोहतीन्द्रस्य त्वा वज्रेणाभितिष्ठामि स्वस्ति मा संपारयेति ॥ ३ ॥ एतेनैवाश्वारोहणं व्याख्यातम् ॥ ४ ॥ उष्ट्रमारोक्ष्यन्नभिमन्त्रयते त्वाष्ट्रोऽसि त्वष्टृदैवत्यः स्वस्ति मा संपारयेति ॥ ५ ॥ रासभमारोक्ष्यन्नभिमन्त्रयते शूद्रोऽसि शूद्रजन्माग्नेयो वै द्विरेताः स्वस्ति मा संपारयेति ॥ ६ ॥ चतुष्पथमभिमन्त्रयते नमो रुद्राय पथिषदे स्वस्ति मा संपारयेति ॥ ७ ॥ नदीमुत्तरिष्यन्नभिमन्त्रयते नमो रुद्रायाप्सुषदे स्वस्ति मा संपारयेति ॥ ८ ॥ नावमारोक्ष्यन्नभिमन्त्रयते सुनावमिति ॥ ९ ॥ उत्तरिष्यन्नभिमन्त्रयते सुत्रामाणमिति ॥ १० ॥ वनमभिमन्त्रयते नमो रुद्राय वनसदे स्वस्ति मा संपारयेति ॥ ११ ॥ गिरिमभिमन्त्रयते नमो रुद्राय गिरि

षदेस्वस्ति मा संपारयेति ॥ १२ ॥ श्मशानमभिमन्त्रयते नमो रुद्राय पितृषदे स्वस्ति मा संपारयेति ॥ १३ ॥ गोष्ठमभिमन्त्रयते मनो रुद्राय शकृत्पिण्डसदे स्वस्ति मा संपारयेति ॥ १४ ॥ यत्र चान्यत्रापि नमो रुद्रायेत्येव ब्रूयाद्रुद्रो ह्येवेदꣳसर्वमिति श्रुतेः ॥ १५ ॥ सिचाऽवधूतोऽभिमन्त्रयते सिगसि न वज्रोऽसि नमस्तेऽअस्तु मा माहिꣳसीरिति ॥ १६ ॥ स्तनयित्नुमभिमन्त्रयते शिवा नो वर्षाः सन्तु शिवा नः सन्तु हेतयः । शिवा नस्ताः सन्तु यास्त्वꣳ सृजसि वृत्रहन्निति ॥ १७ ॥ शिवां वाश्यमानामभिमन्त्रयते शिवो नामेति ॥ १८ ॥ शकुनिं वाश्यमानमभिमन्त्रयते हिरण्यपर्ण शकुने देवानां प्रहितंगम । यमदूत नमस्तेऽस्तु किंत्वाकाक्कोरिणो ब्रवीदिति ॥१९॥ लक्षण्यं वृक्षमभिमन्त्रयते मा त्वाऽशनिर्मा परशुर्मा वातो मा राजप्रेषितो दण्डः । अङ्कुरास्ते प्ररोहन्तु निवाते त्वाऽभिवर्षतु । अग्निष्टेमूलं माहिꣳसीत्स्वस्ति तेऽस्तु वनस्पते स्वस्तिमेऽस्तु वनस्पत इति ॥ २० ॥ स यदि किंचिल्लभेत तत्प्रतिगृह्णाति द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णात्विति साऽस्य न ददतः क्षीयते भूयसी च प्रतिगृहीता भवति । अथ यद्योदनं लभेत तत्प्रतिगृह्य द्यौस्त्वेति तस्य द्विः प्राश्नाति ब्रह्मा त्वाऽश्नातु ब्रह्मा त्वा प्राश्नात्विति ॥ २१ ॥ अथ यदि मन्थं लभेत तं प्रतिगृह्य द्यौस्त्वेति तस्य त्रिः प्राश्नाति ब्रह्मा त्वाऽश्नातु ब्रह्मा त्वा प्राश्नातु ब्रह्मा त्वा पिबत्विति ॥ २२ ॥ अथातोऽधीत्याधीत्यानिराकरणं प्रतीकं मे विचक्षण जिह्वा मे मधु यद्वचः । कर्णाभ्यां भूरिशुश्रुवे मा त्वꣳ हार्षीः श्रुतं मयि । ब्रह्मणः प्रवचनमसि ब्रह्मणः प्रतिष्ठानमसि ब्रह्मकोशोसि सनिरसि शान्तिरस्यनिराकरणमसि ब्रह्मकोशं मे विश । वाचा त्वा पिदधामि वाचा त्वा पिदधामीति [तिष्ठ प्रतिष्ठ] स्वरकरणकण्ठ्यौरसदन्त्यौष्ठ्यग्रहणधारणोच्चारणशक्तिर्मयि भवतु आप्यायन्तु मेऽङ्गानि वाक् प्राणश्चक्षुः श्रोत्रं यशो बलम् ॥ यन्मे श्रुतमधीतं तन्मे मनसि तिष्ठतु तिष्ठतु ॥ २३ ॥ १५ ॥

( जयरामः )—अथातो हस्त्यारोहणं वक्ष्यत इति शेषः । हस्तिनमेत्य तं स्पृशति हस्तियशसमसीत्यनेन मन्त्रेण । तस्यार्थः । तत्र द्वयोर्ब्रह्मा यजुषी हस्तीन्द्रौ देवते स्पर्शनारोहणयोः । हस्ति-

नामैरावतत्वेन प्रसिद्धं यश एव हस्तियशसं तद्रूपोऽसि। तथा तेषां वर्चो दीप्तिरेव हस्तिवर्चसं तद्रूपश्चासीति। अथ तमारोहति इन्द्रस्य त्वेति मन्त्रेण। तस्यार्थः इन्द्रस्य वज्रेणायुधेन सहाहमिन्द्रो भूत्वा त्वा त्वामधितिष्ठामि सर्वशत्रुजयार्थमारोहामि, त्वं च मा मां स्वस्ति कल्याणं यथा तथा पारयेत्युक्तार्थम्। एवमेवाश्वारोहणं कर्तव्यम्। तत्र मन्त्रोहः। ऊहश्च हस्तिस्थाने अश्वाभिधानम्। उष्ट्रमारोक्ष्यन् आरोढुमिच्छन् तं दृष्ट्वाऽभिमन्त्रयते त्वाष्ट्रोऽसि इति मन्त्रेण। एतदाद्यर्थः सुगमः। तत्र परमेष्ठी यजुरुष्ट्रस्तदारोहणे०। रासभं चाश्वतरं मन्त्रलिङ्गात्। तदर्थः। तत्र विश्वामित्रः पङ्क्तिः रासभस्तदारोहणे०। हे रासभ त्वं शूद्रः हीनः असि। यतः शूद्रं शोकावहं जन्म यस्य स आग्नेयः। अग्निदेवत्यः अश्वाद्गर्दभ्यामुद्भूतत्वाद् द्विरेताः। चतुष्पथं गच्छंस्तमभिमन्त्रयते नमो रुद्रायेति मन्त्रेण। तत्र परमेष्ठी अनुष्टुप् रुद्रो रक्षणे०। पथिषु सीदति तिष्ठतीति पथिषत्तस्मै। एवमुत्तरत्रापि। सुत्रावमिति मन्त्रेण नावमारुह्यावतर्तुमिच्छन् सुत्रामाणमिति मन्त्रेणावतरेत्। पितृपदे पितृवनवासिने। यत्रेत्यनुक्तप्रसङ्गेष्वपि नमोरुद्रायेत्येव ब्रूयात्। कुतः। हि यत इदं सर्वं रुद्रमेवेति श्रुतेः। एवं कृते निर्विघ्नता विध्यनुष्ठानफलं च स्यात्। सिच्शब्देन वस्त्रप्रान्तैकदेशो दशेति प्रसिद्धः, तदुत्थो वायुरमङ्गलः। तथाचापस्तम्बसूत्रम्। यदा वाऽपहतं सिचा वा शुना वा अन्नमभोज्यं स्यादिति। तथा सिचाऽवधूतो वीजितस्तदा तामभिमन्त्रयते सिगसीति मन्त्रेण। तत्र त्रयाणां प्रजापतिरनुष्टुप् लिङ्गोक्ता अभिमन्त्रणे०। स्तनयित्नुर्मेघगर्जितं श्रुत्वाऽभिमन्त्रयते शिवान इति मन्त्रेण। अस्यार्थः। हे इन्द्र शिवाः कल्याणकारिण्यो नोऽस्माकं वर्षा वृष्टयः सन्तु। तथा हेतयः ऐन्द्राण्यायुधानि शिवा नोऽस्माकं सन्तु। हे वृत्रहन् याश्च हेतीस्त्वं शत्रुषु सृजसि क्षिपसि ता अपि नः शिवाः सन्तु। शिवां शृगालीं वाश्यमानां शब्दं कुर्वाणामभिमन्त्रयते शिवो नामेति मन्त्रेण। यद्यप्ययं मन्त्रः क्षुरादाने विनियुक्तस्तथापि नानाशक्तित्वादत्रापि विनियुज्यते। शकुनिं कृष्णकाकम्। अथ मन्त्रार्थः। प्रागुक्तमृष्यादि। हे हिरण्यपर्ण शीघ्रग हे शकुने देवानां प्रहितं प्रेषितं स्थानं गच्छतीति देवादिष्टं शुभाशुभं गमयतीति वा भो यमस्य दूत ते तुभ्यंनमोऽस्तु। त्वा त्वां कार्कारिण इति द्वितीयार्थे षष्ठी। कार्कारं काकजात्यनुरूपं शब्दं कुर्वन्तं प्रति यमः किमब्रवीत्। यद्वा। कार्कारिणस्तव स्वामी यमस्त्वां किमब्रवीत् माब्रवीदित्यर्थः। लक्षण्यं प्रसिद्धं यत्प्रसिद्ध्या ग्रामस्यापि प्रसिद्धिर्भवति तं वृक्षं दृष्ट्वाऽभिमन्त्रयते मा त्वेति मन्त्रेण। अस्यार्थः। तत्र प्रजापतिरनुष्टुप् वनस्पतिस्तद्रक्षणे०। हे वृक्ष त्वा त्वां अशनिर्वज्रो मा हिंसीत् मा नाशयतु। एवमुत्तरत्रापि योज्यम्। परशुः कुठारः राजप्रेषितो दण्डो राजोपद्रवः अग्निश्च ते तव मूलं माहिंसीत्। ते तवांकुराश्च प्ररोहन्तु पल्लवा उद्गच्छन्तु। निवाते निर्वाते अल्पवायौ त्वा त्वाप्राप्य देवेन्द्रोऽभिवर्षतु। ते तव स्वस्ति कल्याणमस्तु। हे वनस्पते तथा हे वनस्पते मे ममापि स्वस्त्यस्तु। स स्नातको यदि किंचिद् गवादिकं लभेत तत्प्रतिगृह्णाति द्यौस्त्वेति मन्त्रेण, प्रतिग्रहः स्वीकारः। अस्यार्थः। तत्र प्रजापतिरुष्णिक् दक्षिणा स्वीकारे०। हे दक्षिणे द्यौराकाशाभिमानिनी देवता त्वा त्वां ददातु यजमानो देवरूपो भूत्वा ददात्वित्यर्थः। पृथिवी सर्वसहा त्वा त्वां प्रतिगृह्णातु पृथिवीरूपो मानुषो भूत्वा प्रतिगृह्णात्वित्यर्थः। त्वत्पदावृत्तिर्दक्षिणायाः कर्मसाद्गुण्यकर्तृत्वख्यापनार्था। एवं संस्कृता दक्षिणा दातृप्रतिग्राहिणोः सिद्धिकरी भवति। तत्र दातुः सिद्धिरपूर्वोत्पादकत्वेन। प्रतिग्राहिणोऽपि कर्मानुष्ठानयोग्यत्वात्। प्रतिग्रहधना विप्रा इत्यादिवचनात्। सा एवं संस्कृता सती अस्य ददतो न क्षीयते वर्द्धत इत्यर्थः। एवं प्रतिगृहीता सती प्रतिग्रहीतुर्भूयसी प्रचुरतरा भवति, अयं च सर्वप्रतिग्रहे मन्त्रः स्नातकस्य। ओदनं भक्तं तस्य लब्धस्य। अवयवलक्षणा षष्ठीयम्। द्विः द्विवारं प्राश्नाति ब्रह्मात्वेति मन्त्रभेदाभ्याम्। प्रशब्देन मन्त्रभेदः। दधिदुग्धजलानामन्थतमभिश्राः सक्तवो मन्थशब्देनाभिधीयन्ते। तं लभेत तदा द्यौस्त्वेति मन्त्रेण

प्रतिगृह्य तस्य त्रिःप्राशनम् ब्रह्मात्वेति प्रतिमन्त्रम्। अस्यार्थः सुगमः। एवं प्रतिग्रहेण दोषाभावोऽपि भवति। दोषश्च, प्रतिग्रहेण विप्राणां ब्राह्मं तेजो विनश्यतीति। यो न धर्मविधिं वेदेत्यादिवचनाद्यो दाता प्रतिग्राही वा न विधिज्ञः स स्तेनः तद्दण्डेन दण्ड्य इत्यर्थः। अथातोऽधीत्याधीत्य आवृत्या-वृत्य अनिराकरणम् अविस्मरणं कर्म कर्तव्यम्, प्रतीकंमे विचक्षणमिति मन्त्रेणाङ्गालम्भनम्। तस्यार्थः। तत्र परमेष्ठी गायत्री अङ्गानि तदालम्भने० । प्रतीकं मुखम् मे मम विचक्षणं विशिष्ट-वर्णोच्चारणसमर्थम्। अस्त्विति शेषः। मधु मधुरं यद्वचस्तद्वदत्विति शेषः। भूरि बहु बहुकालं वा शुश्रुवे शृणवानि। भो ब्रह्मन् वेदपुरुष मयि विषये यच्छ्रुतं शास्त्रं तज्ज्ञानं च त्वं माहार्षीः माहर। तदर्थं स्तौति। ब्रह्मणो वेदस्य प्रवचनमध्ययनं त्वमसि। ब्रह्मणः अधीतस्य वेदस्य प्रतिष्ठानं स्थिति-राधार इति यावत्। ब्रह्मणस्तस्य कोशो गोपनगृहम्। सनिः संभजनीयम्। शान्तिरनिष्टनिवृत्तिः। अनिराकरणमप्रमादः अविस्मरणमिति यावत्। किंच। मे मम ब्रह्मकोशं वेदाशयं विश प्रविश। सर्वेषां वेदानाच्छं हृदयमेकायनमिति श्रुतेः। अहं च वाचा सत्यवाण्या त्वा त्वाम् पिदधामि गोपाये छादयामीति वा। यथा मत्तो नापैषि। आवृत्तिर्दार्ढ्यार्था। स्वरा उदात्तादयः, करणानि संवृता-दीनि, कण्ठ्याः कण्ठे भवा अकुहविसर्जनीयाः, औरसाः सहकारा वर्गपञ्चमान्तस्थाः, दन्त्याः लुतुलसाः, ओष्ठ्याः उपूपध्मानीयाः, तेषां ग्रहणमुपादानम्, धारणं स्थिरीकरणम्, उच्चारणं प्रयोगः, तेषु शक्तिर्मेऽस्तु। अङ्गानि गात्राणि आप्यायन्तु। तान्याह। वाक् गीः, प्राणो वायुः प्रधानभूत, चक्षुर्नेत्रबलम्, श्रोत्रं तत्पाटवम्, यशः कीर्तिः, बलं शारीरम्, एतान्यङ्गानि आप्यायन्त्विति संबन्धः। परस्मैपदं छान्दसम्। यन्मे मया श्रुतं मीमांसादि, अधीतमृगादि। यद्वा श्रुतं गुरुमु-खात् अधीतम् अभ्यस्तम् अविगतं वा तत्सर्वं मे मम मनसि हृदये तिष्ठतु स्थिरमस्तु मापयात्वि-त्यर्थः। वीप्सा ग्रन्थसमाप्त्यवद्योतनार्था ॥ ॥ १५ ॥ ॥ * ॥

क्षन्तव्यं तव विद्वद्भिर्यन्मया चापलं कृतम्। गृह्यभाष्यमलेखीदं दृष्ट्वा कर्कादिकौशलम् ॥१॥ शोधनीयमिदं सद्भिर्मम त्वापत्यचापलम्। बाल्यप्रोत्साहितस्यात्र यदत्र स्खलितं मम ॥ २ ॥ श्रीमन्मान्त्रिकमाधवश्रुतिसुधासिन्धोर्विगाहाप्ततद्वेद्यस्तत्कृपयाऽभवद् द्विजवरः श्रीकेशवस्तादृशः। तस्याङ्घ्रिद्वयकस्पृशा कृतमिदं कातीयसूत्रस्य सद्भाष्यं सज्जनवल्लभं सुविदुषां प्रेष्ठं शिवप्रीतये ॥ ३ ॥ आचार्यापरनामधेय इति यो दामोदरोऽभूद् द्विजो भारद्वाजसुगोत्र आत्मरतिरप्यस्यात्मजस्तादृशः। नाम्ना श्रीबलभद्र आप्तसुयशास्तत्सूनुनैतत्कृतं भाष्यं सज्जनवल्लभं जययुजा रामेण मत्यै शुभम् ॥ ४ ॥ कर्कादिद्विजवर्याणां दृष्ट्वा भाष्याणि भूरिशः। उपचेतुं तदुच्छिष्टं जयरामोऽलिख-त्स्फुटम् ॥ ॥ ५ ॥ ॥ * ॥

इति श्रीमत्कातीयगृह्यसूत्रभाष्ये सज्जनवल्लभाख्ये जयरामकृतौ तृतीयकाण्डविवरणं समाप्तम् ॥

( हरिहरः )—'अथा···हणम्' अथ रथारोहणानन्तरं यतोऽधिकृतस्य हस्त्यारोहणमप्य-पेक्षितं भवति अतो हेतोः हस्त्यारोहणं वक्ष्यत इति सूत्रशेषः। 'एत्य···सीति' एत्य हस्तिसमी-पमागत्य हस्तिनं गजम् अभिमृशति आलभते हस्तियशसमसीति मन्त्रेण। 'अथा···रयेति' अथाभिमर्शनानन्तरमारोहति हस्तिनं इन्द्रस्यत्वेति मन्त्रेण। 'एते···स्यातम्' एतेनैव हस्त्या-रोहणेनैव अश्वारोहणं व्याख्यातं कथितम् अतश्चाश्वसमीपं गत्वाऽश्वमभिमृशति अश्वयशसमस्य-श्ववर्चसमसीति मन्त्रेण। ततोऽश्वमारोहति, इन्द्रस्य त्वा वज्रेणाभितिष्ठामि स्वस्ति मा संपारये-त्यनेन मन्त्रेण। 'उष्ट्र···रयेति' उष्ट्रं क्रमेलकम् आरोढुमिच्छन्नभिमन्त्रयते त्वाष्ट्रोसीत्यादिना मन्त्रेण। 'रास···रयेति' रासभं गर्दभमारोढुमिच्छन् शूद्रोऽसीत्यादिना मन्त्रेणाभिमन्त्रयते

अभिमुखः सन् मन्त्रं पठति । रासभोऽश्वाश्वतरः प्रतीयते मन्त्रलिङ्गात् । 'चतु···रयेति ' चतुष्पथम् चत्वारः पन्थानो यस्मिन्स चतुष्पथः चतुर्मार्गाभिसरणप्रदेशस्तमभिमन्त्रयते नमो रुद्राय पथिषदे इत्यादिमन्त्रेण । 'नदी···रयेति ' नदीं स्रवन्तीमुत्तरिष्यन् पारं जिगमिषन् नमो रुद्रायाप्सुषद इति मन्त्रेणाभिमन्त्रयते । 'नाव···मिति ' नावं तरीम् आरोढुमिच्छन् सुनावमारोहेत्यनयर्चाऽभिमन्त्रयते । 'उत्त···णमिति ' उत्तरिष्यन्नुत्तर्तुं प्रत्यवरोढुमिच्छन् तामेवाभिमन्त्रयते सुत्रामाणमित्यनयर्चा । 'वन···रयेति ' वनं काननं प्रवेष्टुमिच्छन् नमो रुद्राय वनसद इत्यादिनाऽभिमन्त्रयते । 'गिरि···रयेति ' गिरिं पर्वतमारोढुकामोऽभिमन्त्रयते नमो रुद्राय गिरिषद इति मन्त्रेण । 'श्मशा···रयेति ' श्मशानं प्रेतदहनभूमिं कार्यवशात्प्राप्य नमो रुद्राय पितृषदे इति मन्त्रेणाभिमन्त्रयते । 'गोष्ठ ··रयेति ' गोष्ठं गोवाटं कार्यवशात्प्राप्य नमो रुद्राय शकृत्पिण्डसद इत्यादिमन्त्रेणाभिमन्त्रयते । 'यत्र···श्रुतेः ' यत्र च येषु अन्यत्रापि अन्येष्वपि अनुक्तकार्येषु पूर्ववन्नमो रुद्रायेत्येव ब्रूयात् । पश्चात्तानि कर्माणि कुर्यात् । कुतः, हि यतः इदं विश्वं रुद्र एवेति श्रुतेर्वेदवचनात् । 'सिचा···सीरिति ' सिचा वस्त्रप्रान्तेनावधूतः तद्वाताहतस्तदा तां सिचमभिमन्त्रयते सिगसीत्यादिमन्त्रेण । 'शिवा···न्निति ' स्तनयित्नुं मेघं गर्जन्तं शिवानो वर्षा इत्यादिमन्त्रेणाभिमन्त्रयते । 'शिवां ··नामेति' शिवां शृगालीं वाश्यमानां शब्दं कुर्वाणां शिवो नामेत्यादिमामाहिंसीरित्यन्तेन मन्त्रेणाभिमन्त्रयते । 'शकु···वीदिति ' शकुनिं पक्षिणं कृष्णकाकमिति यावत् । वाश्यमानं कूजन्तं हिरण्यपर्णेत्यादिमन्त्रेणाभिमन्त्रयते । 'लक्ष···स्पत इति' लक्षण्यं वृक्षं मङ्गल्यं तरुमाम्रादिकमभिमन्त्रयते मात्वाशनिरित्यादिमन्त्रेण । 'स यदि ··त्विति ' स द्विजः यदि चेत् किंचित् गोभूहिरण्यादिकं लभेत प्राप्नुयात् तदा द्यौस्त्वेति मन्त्रेण तत्प्रतिगृह्णाति स्वीकुरुते । 'साऽस्य···वति ' सा दक्षिणा एवंविधाय दीयमाना अस्य ददतः दातुः उपयुज्यमानाऽपि न क्षीयते न ह्रसति प्रत्युत एवं प्रगृहीता सती भूयसी च उत्तरोत्तरमभिवर्धमाना भवति । 'अथ ··त्विति ' अथ कदाचित् ओदनं भक्तं यदि लभेत प्राप्नुयात्तदा तत्प्रतिगृह्य आदाय द्यौस्त्वा ददात्विति मन्त्रं पठेत् मन्त्रपाठस्तु आदानानन्तरं सर्वत्र स्वसत्तापत्तये । तस्य लब्धस्यौदनस्य द्विः द्विवारं प्राश्नाति भक्षयति । कथं ब्रह्मा त्वाऽश्नात्विति प्रथमम् ब्रह्मा त्वा प्राश्नात्विति द्वितीयम् । 'स यदि ··त्विति ' स द्विजः यदि मन्थं दधिमन्थं लभेत प्राप्नुयात्तदा तं प्रतिगृह्यादाय द्यौस्त्वा ददात्विति मन्त्रेण स्वीकृत्य तस्य दधिमन्थस्य त्रिस्त्रिवारं प्राश्नाति, कथम् ब्रह्मा त्वाऽश्नातु इति प्रथमं, ब्रह्मा त्वा प्राश्नात्विति द्वितीयं, ब्रह्मा त्वा पिबत्विति तृतीयमिति त्रिभिर्मन्त्रैः । 'अथा ··णम् ' अथेदानीं यतो द्विजानां प्रतिदिनमध्ययनं विहितमतः कारणात् अधीत्याधीत्य पठित्वा पठित्वा अनिराकरणम् अपरित्यागः कर्तव्यः वक्ष्यमाणनिगदेन । तद्यथा । 'प्रती···ष्ठतु ' अस्यार्थः । प्रतीकं मुखं मे मम विचक्षणं साधुशब्दोच्चारणसमर्थमस्त्विति सूत्रशेषः । मे मम जिह्वा यद्वचो वचनं मधु मधुरं रसवत् तद्वदत्विति शेषः । एवमभीप्सितः शेषः सर्वत्र पूरणीयः । कर्णाभ्यां भूरि बहु शुश्रुवे शृणुयाम् । मयि विषये यत् श्रुतमधीतं पठितं वर्तते तत्त्वं मा हार्षीः मापनय । मयि विषये ब्रह्मणो वेदस्य प्रवचनं पाठनं व्याख्यानं वा असि भवेत्यर्थः । तथा ब्रह्मणो वेदस्य प्रतिष्ठानं प्रतिष्ठा स्थितिरित्यर्थः असि । मयीत्यनुवर्तते । ब्रह्मकोशोऽसि ब्रह्मणः शब्दरूपस्य कोशः गोपनगृहं गुप्तिस्थानं मयि असि । तथा सनिः समं जीवनमसि । तथा शान्तिः अनिष्टस्य अनिष्टहेतोश्च शमनमसि । तथा निराकरणं परित्यागः न निराकरणमनिराकरणमसि । मे मम ब्रह्मकोशं हृदयं विश । सर्वेषां वेदानाᳬं हृदयमेकायनमिति श्रुतेः । वाचा गिरा त्वा त्वामपिदधामि छादयामि । आवृत्तिरादरार्था । स्वरा उदात्तानुदात्तस्वरिताः करणानि शब्दस्य उत्पत्तेरभिव्यक्तेर्वा साधनानि उरःकण्ठशिरोजिह्वामूलदन्तनासिकोष्ठताल्व-

निर्वापवर्जितम्। मघायुगादौ भरण्यां संक्रान्तौ रविवासरे। पिण्डदानं न कुर्वीत यदीच्छेज्जीवितान् सुतान्। मघायां पिण्डदानेन ज्येष्ठः पुत्रो विनश्यति। कनीयांस्तु त्रयोदश्यां क्षयादभ्युदयादृते। मघायुगादौ भरण्यां श्राद्धं कुर्यादतन्द्रितः। पिण्डदानं न कुर्वीत तत्र स्यात्क्षयवासरे। वैशाखस्य तृतीयायां नवम्यां कार्तिकस्य च। श्राद्धं संक्रान्तिवत्कुर्यात् पिण्डनिर्वपणं विना। युगादौ पितृनक्षत्रे तथा मन्वन्तरादिषु। अर्घपिण्डं न कुर्वीत वैष्णवं श्राद्धमाचरेदित्यादीनि। सत्यम्। एतानि वचनानि तिथिवारनक्षत्रसंक्रान्तियुगादिनिमित्तक्रियमाणेषु काम्यश्राद्धेषु पिण्डदानं निषेधन्ति न पुनः पक्षश्राद्धतिथ्याश्रयादिनिमित्तश्राद्धेष्वित्यविरोधः। अन्यथा वारे पाते च संक्रान्तावित्यादिभिर्विरोधात्। अथ पार्वणेनैव विधिनेत्युक्तं तत्रैकपार्वणं वा किं वा द्विपार्वणमुत चतुःपार्वणं वेति। [पक्षश्राद्धे तु पार्वणैकोद्दिष्टयोरप्राप्तत्वात्। सर्वत्रापि पार्वणधर्मत्वात्त्रयाणां विहितत्वाच्चेति।?] तथा ह्येकपार्वणे मत्स्यपुराणम्—ततः प्रभृति संक्रान्तावुपरागादिकर्मसु। त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टं मृतेऽहनि। प्रजापतिरपि—संक्रान्तावुपरागे च वर्षोत्सवमहालये। निर्वपेदिति पिण्डांस्त्रीनिति प्राह प्रजापतिरिति। द्विपार्वणे तु कात्यायनः—कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशम्। प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिति स्थितिः। इति। चतुःपार्वणे तु कात्यायनः—कुर्याद्द्वादशदैवत्यं प्रेतपक्षे तु सर्वदा। तथा तीर्थे गयायां च एष धर्मः सनातनः। आदौ पिता ततो माता ततो मातामहस्तथा। मातामह्यस्ततो दद्यात्प्रेतपक्षे तु सर्वदा। सुमन्तुः—पितृभ्यः प्रथमं दद्यान्मातृभ्यस्तदनन्तरम्। ततो मातामहेभ्यश्च तत्पत्नीभ्यस्तथैव च। गयायां च तथा तीर्थे प्रेतपक्षे विशेषतः। कुर्याद्द्वादशदैवत्यमेकोद्दिष्टमतः परम्। एवं वचनविप्रतिपत्तौ व्यवस्थोच्यते। तत्रैकपार्वणचतुःपार्वणयोर्यथाक्रमं क्षयाहनवमीविषयत्वेन पारिशेष्याद्द्विपार्वणमेव पक्षश्राद्धेष्ववतिष्ठते। तथा च वृद्धयाज्ञवल्क्यः—पिता पितामहश्चैव तथैव प्रपितामहः। समीहन्ते सुताः सर्वे मातृपक्षे विशेषतः। भुञ्जन्ति विप्रकायेषु पितरोऽन्तर्हिताः सदा। तस्माद्विप्रान् पितॄन् विद्यात्पितृवत्तान् प्रपूजयेत्। द्विपार्वणं प्रकर्तव्यं विना श्राद्धं क्षयाहनि। पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्। अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेदिति ऋष्यशृङ्गवचनाच्च। व्यासोऽपि—पितॄन्मातामहांश्चैव द्विजः श्राद्धेन तर्पयेदिति। पुलस्त्यः—मातुःपितरमारभ्य त्रयो मातामहाः स्मृताः। तेषां तु पितृवच्छ्राद्धं कुर्युर्दुहितृसूनवः। इति स्कन्दपुराणे—पार्वणं कुरुते यस्तु केवलं पितृहेतुतः। मातामहं न कुरुते पितृहा सोऽपजायते। इति सूत्रकारोऽपि। त्रींस्त्रीन्पिण्डानिति। एकचतुःपार्वणे तु क्षयाहनवमीविषये। तथा च पाराशरः—पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषम्। सर्वत्रानेकगोत्राणामेकस्य च मृतेऽहनि। नवम्यां तु वृद्धयाज्ञवल्क्यः—गयायां पुष्करे चैव तथैवान्वष्टकासु च। पितृमुख्येन कर्तव्यं पार्वणानां चतुष्टयमिति। एवं तर्हि—अन्वष्टकासु नवभिः पिण्डैः श्राद्धमुदाहृतम्। पित्रादि मातृमध्यं तु ततो मातामहान्तिकम्। इत्यादिवचनविहितं नवदैवत्यं विरुध्येत। मैवम्—अन्वष्टकास्विति बहुत्वयुक्तस्य त्रित्वे पर्यवसितत्वात्साग्निकर्तृकं नवदैवत्यमन्वष्टकात्रयविषयं भवितुमर्हति नापरपक्षनवमीविषयम्। अतो द्वादशदैवत्यमपरपक्षनवमीविषयमिति सिद्धम्। अन्यथा नवदैवत्ये मा णां पृथक्त्वेन मातामह्यादीनामपृथक्त्वे नार्धजरतीयापत्तेः। तथा च पुराणसमुच्चये—सर्वासामेवमातृणां श्राद्धं कन्यागते रवौ। नवम्यां च प्रदातव्यं ब्रह्मलब्धवरा यतः। पितृमातृकुले नार्यो याः काश्चित्प्रमृता स्त्रियः। श्राद्धार्हा मातरो ज्ञेयास्तासां श्राद्धं प्रदापयेत्। वृद्धौ तु मातृपूर्वं वै श्राद्धं कुर्वीत बुद्धिमान्। अन्वष्टकासु सर्वासु पितृपूर्वं समाचरेत्। तमिस्रपक्षे नवमी या पुण्या तु नभस्यके। चत्वारः पार्वणाः कार्याः पितृपूर्वा मनीषिभिः। पितॄणां तु त्रयः पिंडा मातृपूर्वास्तथा त्रयः। मातामहानामप्येवं त्रयो मातामहीषु च। एवं कुर्वन् ततः श्राद्धं मातृणां च न दोषभाक्। भवत्येव नरो विप्रा इति ब्रह्मानुशासनमिति। कात्यायनोऽपि

नवानां नवकं वृद्धौ तथैवान्वष्टके विदुः । कुर्याद्द्वादशदैवत्यं प्रेततीर्थे गयासु च । तथा—उपप्लवे चन्द्रमसो रवेश्च वृद्धौ गयायां गमनागमेषु । अन्वष्टकायां च महोत्सवेषु श्राद्धक्रिया द्वादशदैवता स्यात् । वृद्धयाज्ञवल्क्योऽपि—गयायां च कुरुक्षेत्रे राहुग्रस्ते दिवाकरे । कुर्याद्द्वादशदैवत्यं पार्वणानां चतुष्टयमिति । ननु च दिनानि दशपञ्च चेत्यत्र तिथिषोडशकं प्रति विरोधः । तथा च शाट्यायनिः—नभस्यस्यापरे पक्षे तिथिषोडशकं तु यत् । कन्यागतान्वितं चेत् स्यात्स कालः पितृकर्मसु । ब्रह्माण्डेऽपि—कन्यां गते सवितरि यान्यहानि तु षोडश । क्रतुभिस्तानि तुल्यानि तेषु दत्तमथाक्षयम् । कन्यां गत एकदेशेऽपि । तथा च कार्ष्णाजिनिः—आदौ मध्येऽवसाने वा यत्र कन्यां व्रजेद्रविः । स पक्षः सकलः पूज्यः श्राद्धषोडशकं प्रतीति । उच्यते—द्वादशकपालेष्वष्टकपालवत् षोडशदिनेषु पञ्चदशदिनानुवाद इत्यविरोधः । श्राद्धषोडशके तु संदेहः । तत्रैके शुक्लप्रतिपदा सह तिथिषोडशकमाहुः । तथा च देवलः—अहःषोडशकं यत्तु शुक्लप्रतिपदा सह । चन्द्रक्षयाविशेषेण साऽपि दर्शात्मिका स्मृता । इति । तदयुक्तं—शुक्लप्रतिपदो दौहित्रकर्तृकमातामहश्राद्धविषयत्वात् । तथा च—मातॄणां नवमी यद्वद्धतानां च चतुर्दशी । तद्वन्मातामहानां च शुक्लेऽथ प्रतिपन्मतेति । अन्ये त्वाहुः—तिथिवृद्धिविषयं श्राद्धषोडशकमिति । तदपि न । तथा सति त्रुटिवृद्ध्योः पञ्चदशसप्तदशश्राद्धसंभवात् षोडशकविधिबाधापत्तेः । तथा च पठन्ति—तिथयः पञ्चदश स्युः प्रेतपक्षे तु षोडश । अनुमत्यादिकं कुर्यात्पितॄणां दत्तमक्षयम् । नातः पञ्चदशे कुर्यान्नातः सप्तदशे तथा । ऊने तु नरके यान्ति ह्यधिके स्याद्धनक्षयः । इति । तस्मात्त्रुटिवृद्ध्योरभावे षोडशश्राद्धविधिरिति चेत् । एतदपि नोपपद्यते । तथा सति श्राद्धषोडशकस्य कादाचित्कत्वेन नित्यत्वानुपपत्तेः । अतः प्रौष्ठपदीमारभ्य त्रुटौ प्रतिपदमभिव्याप्य, वृद्धौ बहिःकृत्य श्राद्धषोडशकं कर्तव्यमिति व्यवस्थापनं युक्तम् । एवं तर्हि प्रतिपदो दौहित्रविषयत्वमित्युक्तिर्विरुध्येत । मैवम् । त्रुटिविषयत्वात्तया षोडशपूरणोपपत्तेः । अथवा—एकाहे तिथिद्वयसंभवे श्राद्धद्वयकरणात्षोडशपूरणम् । ततश्च उभयथाऽपि प्रौष्ठपद्यामारम्भ इति सिद्धम् । तथा च सूतः—पूर्णिमाप्रभृति श्राद्धं तस्मात्कुर्याद्विचक्षणः । दिने दिने यज्ञफलं लभते श्राद्धतो नरः । ब्रह्माण्डपुराणेऽपि—श्राद्धं च पूर्णिमायां च कृत्वा पूर्णफलं लभेत् । प्रतिपद्धर्मलाभाय द्वितीयार्थाय चापरे । पुराणसमुच्चयेऽपि । प्रशस्ताः पूर्णिमामुख्यास्तिथयः षोडशैव ताः । यथा तिलानां तैलं च तुल्यं वै श्वेतकृष्णयोः । पूर्णमास्याममायां च समं पुण्यफलं द्वयोः । पूर्णपक्षे नभस्यैव पूर्णिमैषा पितृप्रिया ॥ अस्यां दत्तं पितॄणां वै तृप्तिः सांवत्सरी भवेत् । सर्वान्कामानवाप्नोति अमायां च यथा यथा । पौर्णमास्यां तथा कुर्वन् श्राद्धं पितृपरायणः । पूर्वापराह्णयोरन्ते यः श्राद्धं कुरुते नरः । नभस्यस्य द्विजश्रेष्ठाः पितरस्तेन पुत्रिणः । पौर्वाह्णिकी पौर्णमासी ह्यमा चैवापराह्णिकीति । वृद्धयाज्ञवल्क्योऽपि—काम्यकं तिथिकर्तव्यं श्राद्धकर्म द्विजातिभिः । पूर्णिमाश्राद्धदानेन संपूर्णफलमश्नुते कुर्वन्वै प्रतिपच्छ्राद्धं धनमानन्त्यमश्नुते । इत्यादिषोडशकम् । वायुपुराणेऽपि—पुष्टिं प्रजां स्मृतिं मेधामित्याद्युपक्रम्य पौर्णमास्याद्यमावास्यान्ततिथिषोडशकमुक्तमित्यलम् । ननु च—श्राद्धं पिण्डप्रदानं कर्मेति कथमुक्तम्—स्मृतिष्वनेकधा श्राद्धशब्दप्रयोगात् । तथा हि—श्राद्धभुगष्ट वर्जयेत्, श्राद्धभुक् प्रातरुत्थाय, अपि स्यात्स कुले जन्तुर्भोजयेद्यस्तु योगिन इत्यादिना भोजने । श्रद्धा अस्ति यत्र तच्छ्राद्धं प्रज्ञाश्रद्धार्चाभ्यो णः, श्रद्धया दीयते यस्माच्छ्राद्धं तेन निगद्यते, इति, पाणिनियमादिवचनाच्छ्रद्धायोगे । त्रींस्त्रीन्पिण्डानवनेज्य दद्यात् नंदायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि । तेषु श्राद्धं न कुर्वीतेत्यादिवचनात्पिंडदाने । अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाचेत्यादिना कर्मणि । एवं विप्रतिपत्तौ ह्येक आहुः—पिंडदानस्य प्राधान्यात्तद्दाने शंतनोर्हस्तोत्थानाच्च गयादौ पिंडदान श्राद्धम् । ब्राह्मणपरीक्षाप्रयत्नादपांक्तेयभोजने दोषश्रवणात्पिंडराहित्येऽपि श्राद्धसंभवाच्च

युगादौ ब्राह्मणभोजनमेव श्राद्धम् । दर्शादौ तूभयसमुच्चयः श्राद्धमिति । तदपरे न क्षमन्ते । अव्याप्त्यतिव्याप्त्यादिलक्षणदोषैः पराहतत्वाच्छ्रद्धया दीयत इत्यादावव्यापकत्वाच्च । तथा चोक्तम्—पुराणं मानवो धर्मः सांगो वेदश्चिकित्सितम् । आज्ञासिद्धानि चत्वारि न हंतव्यानि हेतुभिरिति । तस्मात्सर्वत्र कर्मत्वाविशेषादाश्रयभेदेन कर्मव्यवस्थापनं युक्तम् । तथा च धर्मप्रदीपे—यजुषां पिंडदानं तु बह्वृचां द्विजतर्पणम् । श्राद्धशब्दाभिधेयं स्यादुभयं सामवेदिनामिति । आपस्तंबोऽपि—श्राद्धशब्दं कर्म प्रोवाच, पितरो देवता ब्राह्मणस्त्वाहवनीयार्थे इति । देवतोद्देशेन यथाहवनीये होमस्तथा पित्रुद्देशेन ब्राह्मणे दत्तं श्राद्धमित्यर्थः । ततश्च कर्मैवोपपन्नमिति सिद्धम् । तथा च ब्रह्मांडे—देशे काले च पात्रे च श्रद्धया विधिना च यत् । पितॄनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम् । इति । मरीचिरपि—प्रेतपितॄंश्च निर्दिश्य भोज्यं यत्प्रियमात्मनः । श्रद्धया दीयते यच्च तच्छ्राद्धं परिकीर्तितम् इति । बृहद्याज्ञवल्क्योऽपि—'पात्रं पत्नी विधिः श्रद्धा देशकालक्षमादयः । एतदेवोच्यते श्राद्धं हविःकर्तृसमन्वितम्' इति । अथवा एकत्र पारिभाषिकमितरत्रौपचारिकं श्राद्धम् । तथा च श्रीधरपद्धतौ—होमश्च पिंडदानं च तथा ब्राह्मणभोजनम् । श्राद्धशब्दाभिधानं स्यादेकस्मिन्नौपचारिकः । प्रयोगो दृश्यते लोके नियमस्तत्त्रये सतीति । प्रधानं प्रयोगे यदकरणेऽभ्यावृत्तिः । प्रधानस्याक्रिया यत्र सांगं तत्क्रियत पुनरिति वचनात् । यदुक्तं प्रतिपदो दौहित्रकर्तृकश्राद्धविषयत्वमिति तत्र किं जीवत्पितृको दौहित्र आहोस्विन्मृतपितृक इति । उभयविधोऽपीति ब्रूमः । तथा च—जातमात्रस्तु दौहित्रो विद्यमानेऽपि मातुले । कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते । नन्वेवं तर्हि त्रिपिंडं षट्पिण्डं वेति । उच्यते । पित्रादित्रिके जीवति त्रिपिंडं मृते षट्पिंडमिति । तथा च कात्यायनः—मातामहानां दातव्यं प्रतिपद्येव मुख्यकम् । त्रीणि हित्वा(?)प्रयत्नेन श्राद्धं कुर्यात्सपिंडकम् । गौतमोऽपि—मातृपक्षे मृतानां च देयं भक्त्या तु मुख्यकम् । सर्वेषां पार्वणं कुर्याद्यथाशक्त्यानुपिंडदः(?) । जातमात्रस्तु दौहित्रो विद्यमानेषु पार्वणम् । कुर्यान्मातामहश्राद्धं प्रतिपद्येव सर्वदेति । मृतपित्रादित्रिके तु गोभिलः—मातामहानां प्रतिपद्दौहित्रः स्वयमाचरेत् । तत्र पित्रे स्वयं देयं विशेषात्प्रीतिरिष्यते । प्रतिपत् प्रतिपच्छ्राद्धं, पित्र इति मातामहाद्युपलक्षणम् । प्रत्यक्षं पितरं त्यक्त्वा ह्यन्यथा तु ददाति यः । स याति नरकं घोरं यावन्तः सागरा नगा इति । मृते पित्रादिके पितृपंक्तिपरित्यागो न । प्रत्यवायजनकत्वात् । पंचमीपर्यंतं श्राद्धकालत्वाच्च । तथा च यमः—हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन् । पंचम्योरंतरे दद्यादुभयोरपि पक्षयोः । एकादशीचतुर्दश्यादितिथिश्राद्धानि(?)क्षयाहश्राद्धानि तूत्तरत्र प्रपंचयिष्यंते । इह त्वपरपक्षाधिकप्रपंचेनालम् । एवं पक्षश्राद्धमुक्त्वा पक्षांतरमाह—'ऊर्ध्वं वा चतुर्थ्याः' वाशब्द उत्तरोत्तरप्राशस्त्यं सूचयन्स्मृत्यंतरोक्तपक्षान् द्योतयति । ततश्च शक्ततमेन शक्ततरेण शक्तेन पूर्णिमां पंचमीमष्टमीमारभ्य शेषदिनेषु यथाक्रमं शक्त्या श्राद्धं कर्तव्यमित्यर्थः । तथा च ब्रह्मपुराणे—अश्वयुक्कृष्णपक्षे तु श्राद्धं कार्यं दिने दिने । त्रिभागहीनं पक्षं वा त्रिभागं त्वर्धमेव वा । विष्णुधर्मोत्तरेऽपि—उत्तरे त्वयने श्राद्धे श्रेष्ठं स्याद्दक्षिणायनम् । चातुर्मास्यं च तत्रापि प्रसुप्ते केशवेऽधिकम् । प्रौष्ठपद्याः परः पक्षस्तत्रापि च विशेषतः । पंचम्यूर्ध्वं ततश्चापि दशम्यूर्ध्वं ततोऽप्यतीति । ननु चोर्ध्वं वा चतुर्थ्या इति पंचमी सूत्रोक्ता, पंचम्यूर्ध्वमिति च षष्ठी स्मृत्यंतरेणेति विरोध. । उच्यते । पंचमीप्रभृति श्राद्धं सूत्रयता मुनिना पूर्णिमामारभ्य त्रिभागहीनत्वं पक्षस्यांगीकृतम् । षष्ठीप्रभृति विदधता स्मृत्यंतरेण प्रतिपदमारभ्येत्यविरोधः । अत एव पूर्णिमामारभ्य श्राद्धमित्युक्तम् । एवं तर्हि त्रिभागपक्षे दशम्यूर्ध्वं ततोऽप्यतीत्येकादशीमारभ्य श्राद्धं विदधता वाक्येन 'कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्' इति दशमीप्रभृति श्राद्धविधायकं मनुवचनं विरुध्येत । मैवम् । पितुः शस्त्रहतत्वे दशमीप्रभृति त्रिभागत्वं पक्षस्येतरस्यैकादशीप्रभृतीत्यविरोधोपपत्तेः । अत एव 'प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम्' इति चतुर्दश्या

पार्वणनिषेधस्य त्रिभागादिपक्षेष्वेव पर्यवसानमित्युक्तम्। तिथिविषयपक्षांतरमाह—'यदहः संपद्येत तदह-र्ब्राह्मणानामंत्र्य पूर्वेद्युर्वा' यदहरिति विभक्त्यर्थाव्ययीभावे नपुंसकादन्यतरस्यामिति टजभावः। क्षत्रियादिप्रतिषेधार्थं ब्राह्मणानित्युक्तम्। पूर्वेद्युरिति निपातः। ततश्च यद्दिने मृताहसंज्ञकतिथिरपर-पक्षे स्यात्तदहे पूर्वाह्णे ब्राह्मणानामन्त्र्य श्राद्धं कुर्यादिति शेषः। पूर्वेद्युरसंभवे तदहर्निमन्त्रयेदिति वा-शब्दार्थः। तथा च कूर्मे:—श्वो भविष्यति मे श्राद्धं पूर्वेद्युरभिपूजयेत्। असंभवे परेद्युर्वा यथोक्तैर्ल-क्षणैर्युतान्। देवलोऽपि—श्वः कर्तास्मीति निश्चित्य दाता विप्रान्निमन्त्रयेत्। असंभवे परेद्युर्वा ब्राह्म-णांस्तान्निमन्त्रयेत्। इति। अथवा वाशब्दो व्यवस्थायां, योषित्प्रसंगिनः पूर्वेद्युरितरांस्तदह इत्यर्थः। तथा च मार्कण्डेयः—निमन्त्रयेत पूर्वेद्युः पूर्वोक्तांस्तु द्विजोत्तमान्। अप्राप्तौ तद्दिने वाऽपि हित्वा योषित्प्रसंगिनम्। कात्यायनोऽपि—न विना ब्रह्मचर्येण ब्राह्मणः श्राद्धमर्हति। ब्रह्मचारियतींश्चैव तद्दिने वै निमन्त्रये(दि)ति। दिनद्वये निमन्त्रयेदिति समुच्चयार्थो वा। तथा च वृद्धयाज्ञवल्क्यः—चरणक्षालनादूर्ध्वं पुनर्विप्रनिमन्त्रणम्। आसनार्चनसंयुक्तमर्घं च प्रतिपाद्यते। इति। अत्रैक आहुर्यदहः संपद्येतेति संपत्त्यर्थवाचकत्वाद्यदहरेव यथोक्तद्विजद्रव्यादिलाभस्तदहरेव श्राद्धं न तु मृततिथाविति। तदयुक्तम्—तस्य लब्धेन नित्यत्वात् (?) मृततिथेर्वाचकत्वात्सदाचरितत्वाच्च। न च संपत्तिः पुरुष प्रयत्नसाध्यत्वादन्यतन्त्रा। तस्मान्मृततिथावेव सर्वं संपाद्य श्राद्धं कर्तव्यमिति युक्तम्। अत एव गोभिलसूत्रे यदह उपपद्यते इत्युपपन्नार्थमुक्तम्(?)। तथा च पुराणसमुच्चये—या तिथिर्यस्य मासस्य मृताहे तु प्रवर्तते। सा तिथिः प्रेतपक्षस्य पूजनीया प्रयत्नतः। इति। तिथिच्छेदो न कर्तव्यो विना-शौचं यदृच्छया। पिण्डश्राद्धं च दातव्यं विच्छित्तिर्नैव कारयेत्। इति। मृताहविषयस्य ऋष्यशृङ्ग-वचनस्यात्रापि सदाचारेण संगतत्वात्तिथिविषयत्वमप्यविरुद्धम्। एतच्चापुत्रभ्रातृपत्न्यादिव्यतिरिक्त-विषयम्। तेषामेकादशीद्वादश्योः श्राद्धवचनात्। तथा च वायुपुराणम्—संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथातिथि। महालये तु यच्छ्राद्धं द्वादश्यां पार्वणेन तु। इति पिण्डश्राद्धं च दातव्यमिति। निषिद्धदिनेऽपीत्यर्थः। तथा च कात्यायनः—अशक्तः पक्षमध्ये तु करोत्येकदिने यदि। निषिद्धेऽपि दिने कुर्यात्पिण्डदानं यथाविधीति। एवं तर्हि—पौर्णमास्यां मृतस्य कुत्र तिथाविति। तत्रामावास्याया-मित्येके। तन्न, तिथ्याश्रयाभावात् दर्शमृतस्यैव तत्रोचितत्वाच्च। अतो भाद्रपद्यामेव युक्तम्। तथा च वृद्धयाज्ञवल्क्यः—पूर्णिमायाममायां वा सदा कन्यां गते रवौ। पूर्णिमादर्शयोः क्षयाहसंज्ञकत्वात्प्रौ-ष्ठपद्यामपरपक्षदर्शे च पार्वणं कर्तव्यमित्यर्थः। तथा च—'प्रौष्ठपद्याममायां च कन्यां प्राप्ते रवौ सदा। सर्वस्वेनापि कर्तव्यं श्राद्धं वा इंदुलोचने' इति। एकोद्दिष्टं तु मातुः स्यादित्यस्य विषयमुपरिष्टाद्व-क्ष्यामः [इत्युक्तम्]। अत्रैके भणन्ति—दैवपूर्वं निमन्त्रयेदिति। तदयुक्तम्। पितृपूर्वस्य विहितत्वात्। तथा च देवलः—श्वः कर्तास्मीति निश्चित्य दाता विप्रान्निमन्त्रयेत्। कृतापसव्यः पूर्वेद्युः पितृपूर्वं निमन्त्रयेत्। प्रचेता अपि–कृतापसव्यः पूर्वेद्युः पितृ(तॄन्पू)पूर्वं निमन्त्रयेत्' इति। स्मृत्यन्तरेऽपि—प्रार्थयीत प्रदोषांते प्रभुक्तानशयितान्द्विजान्। आयुष्मानपसव्येन पितॄन्पूर्वं निमन्त्रयेत्। इति। यत्तु वृहस्पतिवचनम्—उपवीती ततो भूत्वा देवतार्थान्द्विजोत्तमान्। अपसव्येन पित्र्ये च स्वयं शिष्योऽथ वा सुतः। इति। तत्पूर्वपश्चाद्भावयोरश्रवणादस्मिन्नेव क्रमे योज्यमित्यविरोधः। एतच्च पूर्वेद्युर्निमन्त्रणं गृहलेपाद्युपलक्षणम्। तथा च वाराहपुराणे—वस्त्रशौचादि कर्तव्यं श्वः कर्तास्मीति जानता। स्थानोपलेपने भूमेः कृत्वा विप्रान्निमन्त्रयेदिति शेषः। तथा च यमः—विद्यातपोभयस्नाता ब्राह्मणाः पङ्क्तिपावनाः। इति अयं चापत्नीकनिमन्त्रणप्रतिषेधे प्रसवः। विभार्यो वृषलीपतिरित्यत्रिणा निषि-द्धत्वात्। एके यतीन्निमन्त्रयेयुर्न कात्यायनादय इति विकल्पः। तथा च वायवीये—गृहस्थानां सहस्रेण वानप्रस्थशतेन च। ब्रह्मचारिसहस्रेण एको योगी विशिष्यते। विष्णुरपि—अपि नः स कुले

जायाद्भोजयेद्यस्तु योगिनः । विप्रांश्छ्राद्धे प्रयत्नेन तेन तृप्यामहे वयमिति । इतरे कात्यायनादयो नेत्याहुः । तथा च गृह्यसंग्रहः—आचार्यानुमतं वाक्यमेकीयं गृह्यते क्वचित् । शेषाण्येकीयवाक्यानि आचार्यो न प्रशंसति । अपि च वसिष्ठः—श्रुतिस्मृती अतिक्रम्य मांसमश्नाति मूढधीः । न तं दुर्ब्राह्मणं प्राज्ञः श्राद्धार्थमुपवेशयेत् । यो दद्यादन्नमस्माकं तत्सर्वं मधुना सह । आपेवेण समायुक्तं शस्तानां मृगपक्षिणाम् । जातूकर्ण्यः—दारवान्यो द्विजः श्राद्धे दद्यान्नो मांसमध्वरे । स दुरात्मा दुराचारो वेदमार्गस्य दूषकः । तर्पणं तिलहीनं यच्छ्राद्धं यच्च निरामिषम् । विना दर्भैश्च या संध्या त्रयं शशविषाणवत् । यत्र मातुलजोद्वाही यत्र वा वृषलीपतिः । श्राद्धं धिनोति नह्येतान् कृतं यच्च निरामिषम् । विश्वामित्रः—निमंत्रितस्तु यः श्राद्धे यज्ञे वाऽपि द्विजाधमः । मांसं नाश्नाति निरयं याति वै पशुतां नरः । इत्याद्यंगबाधभयाद्यतिपक्षः कात्यायनेन व्युदस्त इत्येक इत्युक्तम् । त्रिदंडिनामेव विहितत्वात् । तथा च वायुपुराणम्—संति वेदविरोधेन केचिद्विज्ञानमानिनः । अयज्ञयतयोनाम ते ध्वंसंति यथा रजः । मुण्डान्जटिलकाष्ठायां(?)श्राद्धे यत्नेन वर्जयेत् । ब्रह्मांडेऽपि—एभिर्निर्धूतदृष्टं च श्राद्धं गच्छति दानवान् । शिखिभ्यो धातुरक्तेभ्यस्त्रिदंडिभ्यः प्रदापयेदिति । मुंडो विशिखः । जटिलो भस्माङ्कः । श्रुतिरपि—अशुचिर्वा एष यन्मुंडस्तस्मै तदपि धनं यच्छिपेति(?) । अन्ये त्वाहुः—उभावप्यज्ञातकुलशीलत्वान्न निमंत्रयेदिति । तथा च कात्यायनः—यस्य शीलं न जानीते स्थानं त्रिपुरुषं कुलम् । कन्यादाने तथा श्राद्धे न वृणीयात्कदाचन । मनुः—न स्वगोत्रे हविर्दद्यात्समानप्रवरे तथा । नाविज्ञातकुले चैव यथा कन्या तथा हविः । पुराणसमुच्चयेऽपि—येषां न ज्ञायते स्थानं नष्टस्थानाश्च ये द्विजाः । न ज्ञातिर्ज्ञायते येषां न संबंधी न बांधवः । कुधर्माचरणा ये तु न तान् श्राद्धे निवेशयेदिति । एतदप्यहृद्यम् । विज्ञातकुलशीलादीनां विधानोपपत्तेर्मांसमधुदक्षिणादाने पंक्तिभेदादिदोषापत्तेः । तस्मादुभयोरप्यातिथ्यरूपेण भोज्यत्वं न पंक्तौ निवेश इति युक्तम् । तथा च वाराहपुराणे—वैश्वदेवे नियुंजीत ब्रह्मचारिं शुचिं सदा । भिक्षुकान्देवतीर्थेषु पूजयेदतिथिं यदा । आतिथ्यानुवृत्तौ छागलेयोऽपि—गंधमाल्यफलैश्चैव भोजनैः क्षीरसंस्कृतैः । संपूजयेद्यतिं श्राद्धे पितॄणां तुष्टिकारकम् । ब्रह्मचारी यतिश्चैव पूजनीयो हि नित्यशः । तत्कृतं सुकृतं यत्स्यात्तस्य षड्भागमाप्नुयात् । मार्कण्डेयोऽपि—भिक्षार्थमागतान्वाऽपि काले संयमिनो यतीन् । भोजयेत्प्रणिपाताद्यैः सद्यः संयतमानसः । कल्पतरावपि—पूजयेच्छ्राद्धकालेऽपि यतिं सब्रह्मचारिणम् । विप्रानुद्धरते पापात्पितृमातृगणानपि । भुंजते यत्र कुत्रापि यतयो ब्रह्मचारिणः । गृह्णन्ति पितरो देवाः स च याति परां गतिम् । तारयन्ति च दातारं पुत्रान्दारान्पितॄँस्तथा । तस्मात्सर्वप्रयत्नेन पूजयेदाश्रमागतम् । अलाभेन हि भिक्षूणां पूजयेद्ब्रह्मचारिणम् । तदलाभेऽप्युदासीनं गृहस्थमपि भोजयेत् । विश्वामित्रोऽपि—यती वा ब्रह्मचारी वा भुञ्जानानां द्विजन्मनाम् । श्राद्धे यत्र भवेत्साक्षी महालयसमं हि तत् । महालयो गया । यतिधर्मेष्वत्रिः—पित्रर्थकल्पितं पूर्वमन्नं देवादिकारणात् । वर्जयेत्तादृशीं भिक्षां परबाधाकरीं तथा । यमोऽपि—भिक्षुको ब्रह्मचारी वा भोजनार्थमुपस्थितः । उपविष्टेषु तु प्राप्तः कामं तमपि भोजयेदित्येवमादिवचनपर्यालोचनया यतीनां साक्षित्वभोज्यत्वयोरेव प्राप्तिर्न पंक्तौ निवेश इति । तथा च स्मृतिः—भुक्तशेषं न भुञ्जीत पीतशेषं न संपिबेत् । न चैवोपविशेत्पंक्तौ यतेर्वा तापसस्य च । इति । यतिस्तु सर्वविप्राणां सर्वेषामग्रभुग्भवेदिति वायुपुराणोक्तेः । किंच—यदि पंक्त्युपवेशः स्यात्तदा द्विजेभ्यो मांसादिदानेन तेषां तदभावेन पंक्तिवैषम्यं भवतीति नैतद्युक्तम् । न पङ्क्तौ विषमं दद्यादिति वचनात् । वृद्धहारीतोऽपि—पङ्क्तिभेदी वृथापाकी नरकं प्रतिपद्यते । कामाल्लोभाद्भयाद्वापि यः पङ्क्तिं दूषयेद्द्विजः । नरकादवतीर्णस्तु जायते ग्रामसूकरः । इति । अपि च दक्षिणायामपि वैषम्यम् । तथा विश्वामित्रः—हेम वा रजतं वाऽपि यतये ब्रह्मचारिणे । यो ददाति ऋते वस्त्रं स

भवेद्ब्रह्मघातकः। इति उक्तमिति सूक्तम्। अथवा एकग्रहणं व्यवस्थितविकल्पार्थम्। दैवश्राद्धे यतयः पित्र्ये गृहस्थाः इति। तथा च वृद्धवसिष्ठः—चत्वार आश्रमाः पूज्या दैवश्राद्धेन सर्वदा। चतुराश्रमबाह्येभ्यः श्राद्धे नैव प्रदापयेत्। मार्कण्डेयोऽपि—ब्राह्मणानां सहस्रेभ्यो योगी त्वमाशने यदि। यजमानं च भोक्तृंश्च नौरिवांभसि तारयेत्। यमोऽपि—न ब्राह्मणं परीक्षेत दैवे कर्मणि सर्वदा। पित्र्ये कर्मणि संप्राप्ते परीक्षेत प्रयत्नतः। वैश्वदेवे नियुञ्जीतेति वाराहपुराणवचनाच्चेत्यलमतिप्रपंचेन। 'गृहस्थान् साधून्वा' वाशब्दः पाक्षिकयतिनिमंत्रणनिषेधार्थः। तथा च जावालः—अश्नंति ये न मांसानि भार्याहीनाश्च ये द्विजाः। ये च मातुलसंबंधा न तान् श्राद्धे निवेशयेत्। ऋष्यशृंगोऽपि—नाश्नाति यो द्विजो मांसं यस्य नो दारसङ्ग्रहः। तावेतौ मुनिभिः प्रोक्तावनर्हौ मखदूषकाविति। ननु चासाधुगृहस्थनिषेधार्थः कथं न स्यात् ? उच्यते—साधुशब्देनैव तन्निषेधसिद्धेः। न चात्र वाशब्दाभावः शंकनीयः। शाखान्तरे दृश्यमानत्वात्। तथा च गोभिलः—गृहस्थान्साधून्वेति। वसिष्ठोऽपि यतीन् गृहस्थान् साधून्वेति। अतश्च गृहाः पत्नी तत्सहिताः गृहस्थास्तान्निमंत्रयेदित्यर्थः। न चैवं विभार्यनिमन्त्रणमभ्यनुज्ञातम्। विभार्यो वृषलीपतिरित्यत्रिणा प्रतिषिद्धत्वात्। साधूनाहादित्यपुराणे—साधून्वक्ष्यामि सांप्रतमित्युपक्रम्य गङ्गायमुनयोर्मध्ये मध्यदेशः प्रकीर्तितः। तत्रोत्पन्ना द्विजा ये वै साधवस्ते प्रकीर्तिताः। इति। अथवा म्लेच्छदेशव्यतिरिक्तदेशस्थाः सद्वृत्ताः, म्लेच्छदेशनिवासिनो वर्जयेदिति मत्स्यवचनात्। 'श्रोत्रियान्' निमंत्रयेदिति। श्रोत्रियमाह देवलः—एकशाखां सकल्पां च षड्भिरङ्गैरधीत्य च। षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित्। जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते। विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते। इति वा। 'वृद्धाननवद्यान्' विकलेन्द्रियदुराचारादिदोषराहित्यमनवद्यशब्देनोच्यते। ततश्चाग्र्याः सर्वेषु ··· श्रोत्रियो ब्रह्मविद्युवेति युवत्वेन वृद्धनिषेधे वृद्धानिति प्रतिप्रसवः। अथवा युववृद्धविधिभ्यां तद्व्यतिरिक्तस्याल्पवयस्कस्य भोक्तृनियमाक्षमस्य प्रतिषेधः। अनवद्यपदमुत्तरत्रानुषज्य स्वकर्मस्थद्विजविशेषणं कृत्वा केवलवृद्धशब्देन ज्ञानवयस्तपोवृद्धांस्त्रिविधानिति हलायुधः। 'स्वकर्मस्थान्' स्वजात्युक्तकर्मानुष्ठातॄन्विप्रानित्यर्थः। अतश्च श्रोत्रियादिवैलक्षण्यमनेनोक्तमित्यपुनरुक्तिः। तथा च पुराणसमुच्चये—गृहस्थाः कुलसंपन्नाः प्रख्याताः कुलगोत्रतः। स्वदारनिरताः शांता विज्ञेयाः पङ्क्तिपावनाः। इति। एवं मुख्यकल्पं प्रदर्श्यानुकल्पं दर्शयति। 'अभावेऽपि शिष्यान्सदाचारान्'। अपिशब्दः स्मृत्यंतरोक्तानुकल्पसमुच्चये। ततश्च पूर्वोक्तमुख्यकल्पाभावे सद्वृत्तशिष्यादीनपि निमन्त्रयेदित्यर्थः। तथा च याज्ञवल्क्यः—स्वस्रीयऋत्विग्जामातृयाज्यश्वशुरमातुलाः। त्रिणाचिकेतदौहित्रशिष्यसंबंधिबान्धवाः। इति। अनुकल्पःस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः। मातामहं मातुलं च स्वस्रीयं श्वशुरं गुरुम्। दौहित्रं विट्पतिं बंधुं ऋत्विग्याज्यौ च भोजयेदिति मनुः। आपस्तंबोऽपि गुणवदलाभे सोदर्योऽप्येतेनान्तेवासिनो व्याख्याता इति। अयं चानुकल्पो दैवश्राद्ध एव न पित्र्ये। तथा चात्रिः—पिता पितामहो भ्राता शिष्यो वाऽप्यसपिण्डकः। न परस्परमर्घ्याः स्युर्न श्राद्धे ऋत्विजस्तथा। ऋत्विक्पुत्रादयो ह्येते सकुल्या ब्राह्मणा द्विजाः। वैश्वदेवे नियोक्तव्या यद्येते गुणवत्तराः। इति। अपिरत्र भिन्नक्रम इति हलायुधः। स्वाचारानित्यनेनाचार्यधनहारित्वाभाव उक्तः। ते हि कदाचिद्धनहारिणो विहिताः, दद्यात्पिण्डं हरेद्धनमित्यादिना। अतस्तथात्वे शिष्यादयो न निमन्त्रणीयाः। पिण्डदोंशहर इति पिंडदातृत्वसंभवात्। वर्ज्यानाह—'द्विर्नग्नशुक्लविक्लिधश्यावदंतविद्धप्रजननव्याधितव्यंगिश्वित्रिकुष्ठिकुनखिवर्जं' द्विरिति पित्रोर्वंशे त्रिपुरुषं वेदाग्न्योर्विच्छेदान्नग्नः शून्यो द्विर्नग्नः। तथा च सुमन्तुः—यस्य त्रिपुरुषादासीदुभयोर्गोत्रयोरपि। वेदस्याग्नेश्च विच्छेदो द्विर्नग्नः परिकीर्त्तितः। दुश्चर्माधिकशुक्लोतिकपिलांगकेशः। तथा च कात्यायनः—द्विर्नग्नः किल दुश्चर्मा शुक्लोऽतिकपिलः स्मृतः। विचर्चिकादित्वग्दोषी विक्लिधः परिकीर्तितः।

संग्रहकारोऽपि—खल्वाटकश्च दुर्वालः कपिलश्चंड एव चेति । विक्लिध ओष्ठाभ्यामनावृतदन्तः । विद्धप्रजननश्छिन्नलिंगचर्मा दाक्षिण्यात्यप्रसिद्धः । तथा च कल्पलतायां—विद्धप्रजननश्चैव कृतशिश्नविकारवान् । ते हि कामोपभोगार्थं दाक्षिणात्याः प्रकुर्वते । वंध्यावीजो वा । मृतापत्य इत्यन्ये । व्याधितो रोगी । महारोगोपसृष्ट इति कश्चित् । व्यंगो—विगतं विविधं वांगमस्त्यस्येति सः । हीनाङ्गोऽधिकाङ्गश्च हीनातिरिक्ताङ्ग इति स्मृतेः। श्वित्री श्वेतकुष्ठी । कुष्ठी कुत्सितगलिताङ्गः । व्याधितग्रहणादेव तन्निषेधे सिद्धे तद्ग्रहणं दोषाधिक्यद्योतनार्थम् । अजीर्णाद्यल्परोगिदोषाल्पत्वज्ञापनार्थं वा । स्वभावात्कुत्सितनखः कुनखी । एतान् वर्जयित्वा निमन्त्रयेदित्यर्थः । अत्र स्नातकादिविहितग्रहणादेवेतरनिषेधे सिद्धे द्विर्नग्नादिनिषेधो मुन्यन्तरोक्तान्तरालिकद्विजोपवेशनार्थः ते च ग्रन्थगौरवभयान्नेह लिखिताः । अन्यथा द्विर्नग्नादिवर्जनमनर्थकं स्यात् । 'अनिन्द्येनामन्त्रितो नापक्रामेत् । अनिन्द्यो निर्दोषस्तेनामन्त्रितो न व्यतिक्रमेत् । तथा च श्रुतिः—स होवाचानिन्द्या वै मा वृषत सोऽनिन्द्यैर्वृतो नाशकमतिक्रमितुमिति तस्मादुहानिन्द्यस्य वृतो नापक्रामेदिति । अग्निवेश्योऽपि । नैकदाऽपि परान्नं यो भुङ्क्ते मूढमतिर्द्विजः । संवत्सराभ्यंतरे स न पूज्यो वत्सरं भवेदिति, निर्दोषस्येति शेषः । 'आमन्त्रितो वाऽन्यदन्नं न प्रतिगृह्णीयात्' निमंत्रितो विप्रोऽन्यदन्नं सिद्धमामं वा परस्य न गृह्णीयादित्यर्थः । अथवाऽन्यस्यान्नमन्यदन्नम् । अन्यस्य दुगागमश्छान्दसः । वाशब्दो निमन्त्रिते दातृभोक्त्रोः परस्परत्यागनिषेधं द्योतयति । तथा च यमः—आमन्त्रितश्च यो विप्रो भोक्तुमन्यत्र गच्छति । नरकाणां शतं गत्वा चाण्डालेष्वभिजायते । केतनं कारयित्वा तु निवारयति दुर्मतिः । ब्रह्महत्यामवाप्नोति शूद्रयोनौ च जायते । आदित्यपुराणे—आमन्त्रितश्चिरं नैव कुर्याद्विप्रः कदाचन । देवतानां पितॄणां च दातुरन्यस्य चैव हि । चिरकारी भवेद्द्रोही पच्यते नरकाग्निनेति । 'स्नाताञ्छुचीनाचांतान्' ईदृशानुपवेश्य श्राद्धं कुर्वीतेति वक्ष्यमाणेन संबन्धः । स्नानशौचाचमनानि स्मृतिप्राप्तान्येवात्र सार्थकत्वेनानुवदति । तेन स्नानशौचाचमनेष्वत्र विशिष्टविधिरित्यर्थः । तथा च देवलः—ततो निवृत्ते मध्याह्ने कृत्तलोमनखान् द्विजान् । अभिगम्य यथापूर्वं प्रयच्छेद्दन्तधावनम् । तैलमुद्वर्तनं स्नानं स्नानीयं च पृथग्विधम् । पात्रैरौदुम्बरैर्दद्याद्वैश्वदेवत्यपूर्वकम् । ततः स्नात्वा निवृत्तेभ्यः प्रत्युत्थाय कृताञ्जलिः । पाद्यमाचमनीयं च संप्रयच्छेद्यथाक्रममिति । अत्रामन्त्रितानां स्निग्धस्नानदंतधावनविधाने कर्तुस्तत्प्रतिषेधाद्विशेषः । तथा च—'दन्तधावनताम्बूलं स्निग्धस्नानमभोजनम् । रत्यौषधपरान्नानि श्राद्धकृत्सप्त वर्जयेत्' इति । अत्रैके आहुरनिषिद्धतिथिविषयं तैलादिप्रेषणमिति । तदभद्रम् । श्राद्धीयेऽह्नि विशिष्टविधित्वात् । तथा च कात्यायनः—तैलमुद्वर्तनं देयं ब्राह्मणेभ्यः प्रयत्नतः । तैरभ्यङ्गः प्रकर्तव्यो वर्ज्यकालान्न चिन्तयेत् । अभ्यङ्गप्रकरणे सुरेश्वरोऽपि—पुत्रजन्मनि सङ्क्रान्तौ श्राद्धे जन्मदिने तथा । नित्यस्नाने च कर्तव्ये तिथिदोषो न विद्यते । इति । निषेधस्य मलापकर्षविषयत्वाच्च । एवं व्रणादिव्याधिसंभवे रक्तस्रावादौ च कृते अशुद्धत्वाच्छुचीनिति विशेषः । तथा च पुराणसमुच्चये—कृत्वा तु रुधिरस्नानं न विद्वांच्छ्राद्धमाचरेत् । एकं द्वे त्रीणि वा विद्वान् दिनानि परिवर्जयेत् । वमने वातिरेके वा तद्दिनं परिवर्जयेत् । यथा रजस्वला नारी ह्यशुचिस्त्रिदिनं भवेत् । रक्तस्रावे तथा नृणामशुचित्वं प्रजायते इति । एवमाचमनेऽपि विशेषः । तथा च विष्णुपुराणे—उपस्पर्शस्तु कर्तव्यो मण्डलस्योत्तरे दिशि । कर्त्रांथ वा द्विजैर्वापि विधिवद्वाग्यतैः सदा । मण्डलस्योत्तरे भागे कुर्यादाचमनं द्विजः । सोमपानफलं प्राहुर्गर्गकाश्यपगौतमाः । आपस्तंबोऽपि—कुर्युराचमनं विप्रा उदीच्यां मण्डलाद्बहिः । अन्यदिक्षु यथा कुर्यान्निराशाः पितरो गताः इति । तथा—विप्रपादोदकस्थाने कुर्यादाचमनं द्विजः । रुधिरं तद्भवेत्तोयं निराशाः पितरो गताः । इति । पादोदकोच्छिष्टवारिद्वयोश्चेत्संगतिर्भवेत् । उच्छिष्टाः

पितरो यान्ति शुद्ध्यन्ति च गयाशिर इति । मण्डलादिकरणं गोमूत्रेणाह बृहस्पतिः—गोमूत्रमण्डले कृत्वा दक्षिणे चोत्तरे शुभे । श्राद्धीयाहनि संप्राप्ते रेणुभिर्न जलेन च । गृहकुड्यादिलेपेषु गोमूत्रे रेणुरुच्यते । इति । 'प्राङ्मुखानुपवेश्य दैवे युग्मानयुग्मान्यथाशक्ति पित्र्य एकैकस्योदङ्मुखान्' यथाशक्त्येकैकस्येति पदे उभयत्र संबध्येते। युग्मा द्विचतुरादयः । अयुग्मास्त्रिपञ्चादयः । ततश्चैकैकस्य पित्रादेर्दैवश्राद्धे यथाशक्ति युग्मान् प्राङ्मुखान् पित्र्येऽप्येकैकस्य पित्रादेरयुग्मान् यथाशक्त्युदङ्मुखान्विप्रान्वामेनासनं स्पृष्ट्वा दक्षिणकरेण द्विजकरं धृत्वा भूर्भुवःस्वः इदमासनमास्यतामित्युक्त्वोपवेश्य श्राद्धं कुर्यादिति शेषः। तथा च कात्यायनः—सव्येनैवासनं धृत्वा दक्षिणे दक्षिणं करम् । ओं भूर्भुवः स्वरित्युक्त्वा आसनेषूपवेशयेत् । तथा—आस्यतामिति तान् ब्रूयादासनं संस्पृशन्नपि । समस्ताभिर्व्याहृतिभिरासनेषूपवेशयेत् । इति । एवं चात्र प्रतिपुरुषं दैवश्राद्धं भवतीति अवगम्यते । यथाशक्तीतिपदस्यानियतवाचकत्वात् । अयुग्मत्वं च नवभ्योर्वाग्वेदितव्यम् । तथा च गौतमः—नवावरान्भोजयेदयुजो यथोत्साहं चेति । ब्रह्मांडेऽपि—सामर्थ्येऽपि नवभ्योर्वाग्भोजयीत सति द्विजान् । नोर्ध्वं कर्तव्यमित्याहुः केचिद्दोषस्य दर्शिन इति । एवं बहुतरप्राप्तौ संख्यामाह—'द्वौ वा दैवे त्रीन्पित्र्ये' वाशब्दः प्रतिपुरुषं दैवश्राद्धं निषेधति । दैवे द्वौ पित्र्ये त्रीनिति पितृपङ्क्तौ दैवे द्वावेव पित्र्ये प्रतिपुरुषं त्रिकत्रिकभेदेन नव । एवमुभयत्राप्येकादशैवेत्यर्थः । अतश्च प्रतिपंक्त्येव दैवश्राद्धं न प्रतिपुरुषमिति पूर्वसूत्रापवादः । तथा च वृद्धयाज्ञवल्क्यः—दशैकं पञ्च वा विप्रान्पार्वणे विनियोजयेत् । द्वौ दैवे प्रागुदक्पित्राद्येकैकस्यापि ते त्रयः । एवमेकादश प्रोक्ता यथोक्ता एकपार्वणे । इति । अथ चैकादश पञ्च वेति पक्षद्वयावधारणार्थौ वा शब्दः । विस्तरस्य निषिद्धत्वात् । तथाच स एव द्वौ दैवे पितृकृत्ये त्रीन्पंच चैवं प्रकल्पयेदिति । मनुरपि । सत्क्रियां देशकालौ च द्रव्यं ब्राह्मणसंपदः । पंचैतान्विस्तरो हंति तस्मान्नेहेत विस्तरम् । बृहस्पतिरपि—एकैकमथवा द्वौ त्रीन्दैवे पित्र्ये च भोजयेत् । सत्क्रियाकालपात्रादिर्न संपद्येत विस्तरम् । ब्राह्मेऽपि—यस्माद्ब्राह्मणबाहुल्याद्दोषो बहुतरो भवेत् । श्राद्धनाशो मौननाशः श्राद्धतंत्रस्य विस्मृतिः । उच्छिष्टोच्छिष्टसंसर्गो निंदा दातृषु भोक्तृषु । वितंडया चापवादो जल्पास्ते ते पृथग्विधाः । इति । 'एकैकमुभयत्र वा' वाशब्दोऽभावे । ततश्च देशकालधनाद्यभावे दैवे पित्र्ये चैकैकं ब्राह्मणद्वयमेवोपवेशयेदित्यर्थः । तथा च वृद्धयाज्ञवल्क्यः—एकं दैवे तथा पित्र्ये धनविप्राद्यभावतः । योजयेच्छ्राद्धदाने च पितृयज्ञं न लोपयेदिति । नन्वेवं सति न त्वेकैकं सर्वेषामिति निषेधोऽनुपपन्न इति । मैवम् । संभवविषयत्वान्निषेधस्येत्यदोषः । तथा च—ब्राह्मणा विप्रसंपत्तावेकैकस्य त्रयस्त्रयः । एको वैकस्य भोक्तव्यस्त्रयाणामेक एव चेति । अत्र दैवे पित्र्ये चेत्यनुवृत्तौ उभयत्रेतिग्रहणं सर्वत्र समविभागार्थम् । समं स्यादश्रुतत्वादिति न्यायात् । 'मातामहानां चैवं' मातामहानामप्येवं सर्वे पक्षा भवेयुरित्यर्थः । अतश्च मातामहश्राद्धमपि पितृश्राद्धवन्नित्यमित्युक्तम् । विज्ञानेश्वरस्तु—मातामहादिभिर्मातुः सापिंड्य एव मातामहश्राद्धं नित्यमन्यथा नेत्याह । अत एवातिदेशान्न पृथक्कार्यमित्यन्ये । तदेतत्कर्कादिभिरनादृतमित्युपेक्षणीयम् । तथा च स्कंदपुराणे—पार्वणं कुरुते यस्तु केवलं पितृहेतुतः । मातामहं न कुरुते पितृहा चोपजायते । चकारो नवद्वादशदैवत्ये मातृमातामह्योरतिदेशार्थः । वैश्वदेवे विशेषमाह—'तंत्रं वा वैश्वदेविकम्' विश्वेदेवाः संत्यत्रेति वैश्वदेविकं श्राद्धं तंत्रमुभयपंक्त्योरेकं भवेदिति शेषः। अत इनिठनौ । साधारणं भवेत्तंत्रमिति वचनात् अयं च पक्षः सर्वपक्षेषु विकल्पेनावतिष्ठते । ततश्चैकप्रयोगापूर्वसाधकत्वं भिन्नप्रयोगापूर्वसाधकत्वं च वैश्वदेवश्राद्धस्य भवतीत्यर्थः । अत्रावसरे चमसं पूरयित्वाऽभिमंत्रयेत् । तथा च कात्यायनः—कूश्मांडमंत्रसूक्तेन कुर्यात्तोयाभिमन्त्रणम् । अन्नानि प्रोक्षयेत्तेन तेनैव श्राद्धमाचरेदिति । कूश्मांडमंत्रा यद्देवादेवहेडनमित्यादयस्त्रयः । श्रद्धान्वितः श्राद्धं कुर्वीतेत्यर्थः । श्रद्धा धर्मकार्येषु फलावाप्तिनिश्चयः । तथा

च मनुः—प्रत्ययो धर्मकार्येषु सद्भिः श्रद्धेत्युदाहृतेति । सा च स्मृत्युक्तधर्मोपलक्षणम् । अतस्तद्धर्मे युक्तः श्राद्धं कुर्यात् । विधिहीनमनुष्ठानं मन्त्रहीनमदक्षिणम् । अश्रद्धया कृतं दत्तं तद्वै रक्षांसि भुञ्जते । तथा—विभक्तिभिस्तु यत्किंचिद्दीयते पितृदैवते । तत्सर्वं सफलं ह्याहुर्विपरीतं निरर्थकमिति । अत्र श्रद्धा अस्ति यत्र तच्छ्राद्धमिति श्राद्धग्रहणेनैव तदन्वितत्वे लब्धे श्रद्धान्वितग्रहणं पितृकार्येषु स्मृत्युक्तधर्माणामत्यादरज्ञापनार्थम् । तथा च मनुः—दैवकार्याद्द्विजातीनां पितृकार्यं विशिष्यते । इति । अतश्च पितृकार्येषु स्मृत्युक्तधर्मादरेण प्रयोगकुशलः स्यादिति । एतदुक्तं भवति । संवन्धनामगोत्ररूपाणां यथावत्प्रयोगेण पुत्रादिदत्तं हविः पितॄणां तृप्तिकरं भवतीति । तथा च—नामगोत्रं स्वकं शर्मप्रापकं हव्यकव्ययोः । इति । ज्ञातिश्रैष्ठ्यमवाप्नोति प्रयोगकुशलो नरः । इति च । नामादिप्रयोगो धर्मप्रदीपे—आवाहनार्घ्यसंकल्पे पिण्डदाने तिलोदके । अक्षय्ये चासने पाद्ये नामगोत्रे प्रकाशयेत् । अत्रैतच्चिन्त्यते—किं संवन्धादीनामुच्चारणक्रमोऽस्ति नवेति । तत्रैक आहुः—संवन्धादीनां हविःप्रापकत्वमेव नोच्चारक्रम इति । अन्ये त्वाहुरमुकगोत्रास्मत्पितरमुकशर्मन्निति क्रम इति । वसुरुद्रादित्यध्यानमेव नोच्चार इत्यपरे । तत्र नाद्यः—स्मृत्युक्तक्रमस्य वैयर्थ्यात् । न द्वितीयः—गोत्रप्रयोगस्याद्यावविहितत्वात् । नापि तृतीयः—वस्वाद्युच्चार इत्यस्यैवोक्तत्वात् । तथा च—संवन्धं प्रथमं ब्रूयान्नामगोत्रमतः परम् । रूपं ततो विजानीयादेष धर्मः सनातनः । अन्यत्र—मृतनाम समुच्चार्य तस्य गोत्रमुदीरयेत् । वृहस्पतिरपि—आसनेचार्घदाने च पिण्डदानेऽवनेजने । संवन्धनामगोत्राणि यथार्हमनुकीर्तयेत् । वसू रुद्रस्तथाऽऽदित्यः पित्रादित्रितये क्रमात् । मातामहादिमात्रादित्रये च स्मृतिमर्हतीति । तथा च वसुरुद्रादित्यरूपाञ्छ्राद्धार्थे तर्पयेत्पितॄन् । नामगोत्रे समुच्चार्य तिलैस्तीर्थेषु संयतः इति । तीर्थे पितृतीर्थम् । ततश्चास्मत्पितरमुकशर्मन्नमुकगोत्रवसुरूपेति प्रयोगः । पाद्ये तु विरोध आभासते । विधिनिषेधयोर्दर्शनात् । तथा च पाद्ये नामगोत्रे प्रकाशयेदित्युक्तम् । तथा च—आसनावाहने पाद्ये अन्नदाने तिलोदके । अक्षय्ये पिण्डदाने च नामगोत्रे प्रकीर्तयेदिति । मनुस्तु निषेधति—वहिर्मण्डलभूमेस्तु गोत्रमुच्चारयेद्यदि । अकृतं तद्भवेदर्घं पितॄणा नोपतिष्ठते इति । अत्र व्यवस्था—स्वागतार्थे गोत्रादिनिषेधः । पादार्थे तु विधिरित्यविरोधः । अस्ति च स्वागतार्घ्यविधिः पादार्घ्यात्पूर्वभावी । तथा च वृद्धयाज्ञवल्क्यः—दत्त्वार्घं क्षालयेत्पादावाचम्य क्षालयेत्पुनः । पूजयेत्पुनराचम्य विप्रानभ्यन्तरे विशेत् । पुराणसमुच्चयेऽपि—दत्त्वार्घं क्षालयेत्पादौ विष्टरेषु निवेशयेत् । पूर्वं यः क्षालयेत्पादौ पादार्घं च ततो नयेत् । विप्रपादोदकोद्भूता पितृतृप्तिं निहन्ति सः इति । तस्माद्विप्रानाहूय सव्येन तूष्णीं स्वागतार्घं दत्त्वा पादौ प्रक्षाल्याचम्य मण्डले उपवेश्य यथाविधि पुनः प्रक्षाल्याचम्य पादार्घं गोत्राद्युच्चार्य दद्यादिति । नामगोत्रादिकं च कया विभक्त्या कुत्र प्रकाश्यत इत्युच्यते । तत्र संवन्धे च भवेत् षष्ठी चतुर्थी संप्रदानतः इति सामान्येन षष्ठी चतुर्थ्योः प्राप्तयोर्विशेषमाह स्मृतिः—पृच्छाक्षय्यासने षष्ठी चतुर्थी चैव कल्पने । आवाहने द्वितीया च शेषाः संवुद्धयः स्मृताः इति । कल्पने संकल्पे । एतच्चान्नसंकल्पादन्यत्र । तथा च ब्रह्माण्डपुराणे—पितृभ्यश्च ततो दद्यादन्नमामन्त्रणेन तु । अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधानमः । इति । शाङ्खायनोऽपि—अन्नं वासे(?) च तत्त इत्युद्दिश्य भोजयेदिति । आमन्त्रणे प्रतिज्ञायामक्षय्ये दक्षिणाविधौ । संपूर्णपृच्छासनयोः षष्ठीं कुर्यात्सदैव हि । इति । आसने चतुर्थी विकल्पिता । तथा पृच्छाक्षय्यासने षष्ठी चतुर्थी वासने मता । अर्घावनेजनन्पिण्डसन्नं(?) प्रत्यवनेजनम् । संवुद्ध्यैतानि कुर्वीत शब्दशास्त्रविशारदः । व्यासोऽपि—चतुर्थी वासने नित्यं संकल्पे च विधीयते । प्रथमा तर्पणे प्रोक्ता संवुद्धिमपरे जगुरिति । देशभेदेन चतुर्थी व्यवस्थितेति रत्नावलीकारः । यत्तु संग्रहकारवचनम् । अक्षय्यासनयोः षष्ठी द्वितीयावाहने स्मृता । अन्नदाने चतुर्थी स्याच्छेषाः संवुद्धयः स्मृताः ।

इत्यन्नदाने चतुर्थी विधानं तच्छेपान्नदानविपयम् । शेपाः संकल्पव्यतिरिक्तार्घदानावनेजनादयः संकल्पे चतुर्थ्या एव विधानात् । तथा च धर्मप्रदीपे—गोत्राणामासनेऽक्षय्ये गोत्रानावाहने तथा । अर्घे गोत्रपितस्तद्वत्पिण्डदानेऽवनेजने । अन्नसंकल्पने गोत्रा मह्यः शर्माण एव च । त्यागे दाने च गोत्रेभ्यो दैवेऽप्येतदुदाहृतमिति । त्यागे संकल्पे । दाने दक्षिणायाः । एतदुपरिष्टात्तदवसरे वक्ष्यामः । अपरं स्मृतिभ्य उपलब्धव्यमतः श्रद्धान्वितः इत्युक्तमलं बहुना । 'शाकेनापि नापरपक्षमतिक्रामेत्' । अनेनावश्यं श्राद्धमपरपक्षे कुर्यादित्यर्थः । तथा च पुराणोच्चये—नहि पिण्डप्रदानेन श्राद्धं भवति केवलम् । पत्रं पुष्पं फलं तोयं यच्चान्यदपि किंचन । पितॄनुद्दिश्य कर्तव्यं श्रद्धया पितृतत्परैः । तत्सर्वं श्राद्धमित्युक्तं श्रद्धया श्राद्धमुच्यते । इति । एवं च सति पक्षश्राद्धमुपक्रम्य सूतकादौ कर्तव्यमुत नेति—तत्रैके नेत्याहुः, अन्ये प्रतिज्ञातत्वात्कुर्वीतेति वदन्ति । तत्रैवं विचार्यते । यदि नेति तदारम्भानियमो दोपश्चापरिसमाप्तावित्यस्य वैयर्थ्यमुपक्रमभङ्गश्च स्यात् । अथ कुर्यादिति तर्हि द्रव्याद्यशुद्धौ द्विजभुक्तादिवैपम्याद्येनैवारम्भस्तेनैव समाप्तिरिति न्यायबाधश्च स्यात् । तस्मात्सूतकादिव्यतिरेकेण मया पक्षश्राद्धं कर्तव्यमिति प्रतिज्ञातेन सूतकाद्यन्ते कर्तव्यम् । अथ गृहसाधारणद्रव्येभ्यः पक्षश्राद्धपर्याप्तद्रव्यमुद्धृत्य कृतनियमेन मया कर्तव्यमेवेति ज्ञातेन सूतकादिमध्ये श्राद्धं कर्तव्यमित्युक्तम् । यथारब्धपाके निमन्त्रितेषु च करणं यथा वा नवरात्रे कृतप्रतिज्ञेन सूतकमध्येऽपि पूजादि कर्तव्यमेवमेवेहापीति । तथा च पुराणसमुच्चये—पक्षश्राद्धे समारब्धे सूतकं निपतेद्यदि । समाहूता हि पितरः सूतकान्ते विसर्जयेत् । अथ वा केचनेच्छन्ति श्राद्धं तु मृतसूतके । जन्मसूतकमासाद्य पश्चाच्छ्राद्धं समाचरेत् । यदि नैवं नरः कुर्यात्सूतकान्ते समापनम् । प्राग्दत्तानि मनुष्येण श्राद्धान्यसुरतृप्तये । इति । इदं चाशौचान्ते तन्मध्ये वा समापनं पूर्वोक्तविपयकल्पनेन व्यवस्थेयमित्यविरोधः । आवश्यकत्वे हेतुमाह—'मासि मासि वोशनमिति श्रुतेः' प्रजापतिः पितॄनाह स्म वो युष्माकं प्रतिमासमशनं दत्तमतोऽपरपक्षेऽवश्यमेव कर्तव्यतेत्यर्थः । तथा च श्रुतिः—अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्योपासीदंस्तानब्रवीन्मासि मासि वोशनं स्वधा वो मनोजवो वश्चन्द्रमा वो ज्योतिरिति । अनेन श्रुत्युक्तहेतुनाऽपरपक्षेऽमावास्यायामवश्यकर्तव्यमुक्तम् । तेनापरपक्षातिक्रमोऽपि नेत्यर्थाद्रुक्तम् । तदतिक्रमे चोभयातिक्रमात्प्रत्यवायस्मृतेः । तथा च—एतान्येव हि हिंसन्ति पञ्चमं यो व्यतिक्रमेत् । तस्मान्नातिक्रमेद्विद्वान् पञ्चमे पितृमेधिकम् । एतानि पुत्रायुर्धनधान्यादिफलानि । पञ्चममपरपक्षं पैतृमेधिकं श्राद्धं, तथा—न निर्वपति यः श्राद्धं प्रमीतपितृको द्विजः । इन्दुक्षये मासि मासि प्रायश्चित्तीयते तु सः । इति । विधिनिषेधमाह—'तदहः शुचिरक्रोधनोऽत्वरितोऽप्रमत्तः सत्यवादी स्यादध्वमैथुनश्रमस्वाध्यायान्वर्जयेत्' तदहरिति पूर्ववदिति भावः । श्राद्धदिने एतौ सूत्रोक्तविधिनिषेधावनुतिष्ठेदित्यर्थः । शुचिर्बाह्याभ्यन्तरवमनविरेकरक्तस्रावाद्यशुद्धिरहितः । अथवा शुचिः शुक्लवासाः स्यात् । कपायादेः प्रतिषिद्धत्वात् । तथा चाह मरीचिः—शुचयः शुचिवाससः स्युरिति । शङ्खोऽपि—शुचिशुक्लवासा दर्भहस्तः स्वागतमिति ब्रूयात् । श्राद्धकृच्छुक्लवासाः स्यादिति च । पुराणोच्चयेऽपि—एकवासास्तु यः कुर्यात्पिण्डनिर्वपणं नरः । कापायवस्त्रसंवीतस्तद्वै रक्षांसि भुञ्जते । धर्मप्रदीपे—कापायं खण्डवस्त्रं च रक्तवस्त्रं तथैव च । एवंविधानि वस्त्राणि वर्जयेच्छ्राद्धकर्मणि । अप्रमत्त इति स्मृत्युक्तकालादिषु सावधानः । तथा च—कालहीनं क्रियाहीनं मन्त्रहीनं च यद्भवेत् । पात्रहीनं च यच्छ्राद्धं भागं तं राक्षसं विदुः । इति । स्वाध्यायः श्राद्धमन्त्रजपादिव्यतिरिक्तपाठः, मैथुनं पूर्वदिनेऽपि । शेपं स्पष्टम् । नेयं विधिनिषेधेयत्ताऽपितु प्रदर्शनम् । अतोऽन्यदपि विधिनिषेधरूपं स्मृत्युक्तं ग्राह्यमित्यर्थः । तथा च दातृभोक्त्रोर्नियमः । न चाश्रु पातयेज्जातु न शुक्तां(?)गिरमीरयेत् । न चोद्वीक्षेत भुञ्जानं न च कुर्वीत मत्सरम् । न दीनो-

ऽपि न वा क्रुद्धो न चैवान्यमना नरः। एकाग्रमाधाय मनः श्राद्धं कुर्यात्सदा बुधः। इत्यादि। अत्रैतच्चिन्त्यते—विधवापरस्त्र्यादीनां श्राद्धपाके कर्तुश्च तिलके किमधिकारः स्यादुत नेति। तत्रैक आहुः—समाचारत्वादधिकार इति। तदयुक्तम्। स्मृतिविरुद्धाचारस्याप्रमाणत्वात्। तथा च व्यासः—गृहिणी चैव सुस्नाता पाकं कुर्यात्प्रयत्नतः। निष्पन्नेषु च पाकेषु पुनः स्नानं समाचरेत्। रजस्वलां च पाषण्डीं पुंश्चली पतितां तथा। त्यजेच्छूद्रां तथा वन्ध्यां विधवा(?)मन्यां तथैव च। रजस्वला त्रिदिनादूर्ध्वमनिवृत्तरजस्काम्। यत्तु ब्रह्मपुराणवचनम्—व्यङ्गकर्णां चतुर्थाहस्नातामपि रजस्वलाम्। वर्जयेच्छ्राद्धपाकार्थममातृपितृवंशजाम्। इत्यन्यस्त्रीविषयं तदत्यासंभवविषयम् (?)। अत एव पठन्ति—मातृष्वसा वधूकन्या शूद्राग्नौ च परस्त्रियः। पितृपाकं न कुर्वीत निराशाः पितरो गताः। तथा श्राद्धस्यपाके विधवा स्त्री न तृप्तिमन्तः पितरो न देवा इत्यादि। व्यङ्गकर्णा त्रुटितकर्णी। तिलके तु आपस्तम्बः। ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे माल्यं तथैव च। निराशाः पितरो यांति शापं दत्वा सुदारुणम्। इति। एवं च सकलशिष्टाचारविरोधमवलोक्य केचिदाहुः—पुण्ड्रकमिति वर्तुलतिलकं निषेधति। तदपरे न क्षमन्ते। तिर्यक्पुण्ड्रं तथा दृष्ट्वा स्कन्धे माल्यं तथैव च। निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिम्। इति वचनात्। अतस्तिर्यक्पुण्ड्रनिषेध इत्यन्ये। तदपि न सामान्येन तिलकमात्रनिषेधात्। तथा च पठति—वामहस्तेषु ये दर्भा गृहेरङ्गवलिस्तथा। ललाटे तिलकं दृष्ट्वा निराशाः पितरो गताः। इति। रङ्गवलिश्चतुष्कम्। स्मृत्यन्तरम्—ललाटे तिलकं दृष्ट्वा स्कन्धे मालांकितं तथा। कांस्यपात्रे हविर्दृष्ट्वा निराशाः पितरो गताः। सत्यव्रतोऽपि—वर्जयेत्तिलकं भाले श्राद्धकाले कदाचन। तिर्यग्वाप्यूर्ध्वपुण्ड्रं वा धारयेच्छ्राद्धकर्मणि। एवं च सति श्राद्धदिने तिलकमात्रस्यैव निषेध इति युक्तम्। प्रयोगेष्वाशीःप्रार्थनानन्तरं तिलकविधानस्य दृश्यत्वात्। तथा च याज्ञवल्क्यः—याचितारश्च नः सन्तु मास्म याचिष्म कंचन। ततस्तु तिलकं कुर्यान्मन्त्रेणानेन भक्तितः। नित्यानुष्ठानसंनिष्ठाः सर्वदा यज्ञबुद्धयः। पितृमातृपराः सन्तः सन्त्वस्मत्कुलजा नराः। इति। न चानालोचितपरंपरानुष्ठान ग्राह्यम्। तथा चतुर्विंशतिमतम्—स्मृतिर्वेदविरोधेन परित्याज्या यथा भवेत्। तथैव लौकिकं वाक्यं स्मृतिबाधात्परित्यजेत्। अपि च पठन्ति—ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं वा चन्द्राकारमथापि वा। श्राद्धकर्त्रा न कर्तव्यं यावत्पिण्डान्न निर्वपेत्। इति। यच्च—भस्मीभवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम् इति। सन्ध्यादिकर्मविषयं तिलकं तच्छ्राद्धदिनादन्यत्र वेदितव्यमित्यविरोधः। 'आवाहनादिवाग्यत ओपस्पर्शनात्' आ उपस्पर्शनादिति छेदः। ततश्चावाहनमारभ्य चुलुकदानपर्यन्तं मन्त्रवर्जं श्राद्धकृद्वाग्यमनमाचरेदित्यर्थः। तल्लोपे तु—वैष्णवमन्त्रजपो वा विष्णुस्मरणं प्रायश्चित्तम्। 'आमन्त्रिताश्चैवम्' आमन्त्रिता विप्रा अप्येवं कर्तेवाक्रोधादिस्मृत्युक्तविधिनिषेधानाचरेयुरित्यर्थः। तथा च शङ्खः—हुङ्कारेणापि यो ब्रूयाद्धस्ताद्वापि गुणान्वदेत्। भूतलाच्चोद्धरेत्पात्रं मुञ्चद्धस्तेन वा पिबेत्। प्रौढपादो बहिः कच्छो बहिर्जानुकरोऽथवा। अङ्गुष्ठेन विनाश्नाति मुखशब्देन वा पुनः। पीतावशिष्टं तोयादि पुनरुद्धृत्य वा पिबेत्। खादितार्थं पुनः खादेन्मोदकानि फलानि च। मुखेन वाधमेदन्नं निष्ठीवेद्भाजनेऽपि वा। इत्थमन्नं द्विजः श्राद्धं हत्वा गच्छत्यधोगतिम्। पवित्रपाणयः सर्वे ते च मौनव्रतान्विताः। उच्छिष्टोच्छिष्टसंसर्गं वर्जयन्तः परस्परम्। न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन। न पादौ न शिरो नास्थि न पदा भाजनं स्पृशेदित्यादि। एवमित्यतिदेशेन भोक्तृणामपि कर्तृवन्मन्त्रोच्चारे प्राप्ते तन्निषेधार्थश्चकारः। तथा च—आसनेषु समारूढो मन्त्रमुच्चरते द्विजः। स चौरः स च पापिष्ठो ब्रह्महा स च उच्यते। तथा—आसनस्थो यदा विप्रो मन्त्रमुच्चरते यदि। त्रयस्ते नरकं यान्ति दाता भोक्ता पिता तथेति। अत्र मन्त्रोच्चारनिषेधादग्नौकरणादि कुरुष्वेत्यादिप्रतिवचनमनुज्ञातम्॥ १॥

देवपूर्वᳬं श्राद्धं पिण्डपितृयज्ञवदुपचारः पित्र्ये द्विगुणास्तु दर्भाः पवित्रपाणिर्दद्यादासीनः सर्वत्र प्रश्नेषु पङ्क्तिमूर्द्धन्यं पृच्छति सर्वान्वासनेषु दर्भानास्तीर्य विश्वान्देवानावाहयिष्य इति पृच्छत्यावाहयेत्यनुज्ञातो विश्वेदेवास आगतेत्यनयाऽऽवाह्यावकीर्य विश्वेदेवाः शृणुतेममिति जपित्वा पितॄनावाहयिष्य इति पृच्छत्यावाहयेत्यनुज्ञात उशन्तस्त्वेत्यनयाऽऽवाह्यावकीर्यायन्तु न इति जपित्वा यज्ञियवृक्षचमसेषु पवित्रान्तर्हितेष्वेकैकस्मिन्नप आसिञ्चति शन्नोदेवीरित्येकैकस्मिन्नेव तिलानावपति तिलोऽसि सोमदैवत्यो गोसवो देवनिर्मितः । प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान् प्रीणाहि नः स्वाहेति सौवर्णराजतौदुम्बरखड्गमणिमयानां पात्राणामन्यतमेषु यानि वा विद्यन्ते पत्रपुटेषु वैकैकस्यैकैकेन ददाति सपवित्रेषु हस्तेषु या दिव्या आपः पयसा संबभूवुर्या आन्तरिक्षा उत पार्थवीर्याः । हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः शᳬंस्योनाः सुहवा भवन्त्वित्यसावेषतेऽर्घ इति प्रथमे पात्रे सᳬंस्रवान्समवनीय पितृभ्यः स्थानमसीति न्युब्जं पात्रं निदधात्यत्र गन्धपुष्पधूपदीपवाससां च प्रदानम् ॥ २ ॥

( कर्कः )—'देवपूर्वᳬंश्राद्धम्' यत्किंचित्क्रियते तत्सर्वं दैवपूर्वम् । 'पिण्डपितृयज्ञवदुपचारः पित्र्ये' पित्र्ये पिण्डपितृयज्ञवत् क्रिया । अपसव्यं दक्षिणामुखेन कर्तव्यं दक्षिणसंस्थमिति यावत् । 'द्विगुणास्तु दर्भाः' प्रकृतत्वात्पित्र्य एव । 'पवित्रपाणिर्दद्यादासीनः सर्वत्र' यद्ददाति तत्सर्वमासीनः पवित्रपाणिश्च दैवे पित्र्ये च, सर्वत्रग्रहणात् । 'प्रश्नेषु पङ्क्तिमूर्द्धन्यं पृच्छति सर्वान्वा' प्रश्नेषु पङ्क्तेराद्यः प्रष्टव्यः सर्वे वा । आद्ये पक्षे सामर्थ्यात्तस्यैव प्रतिप्रश्नः । 'आसनेषु दर्भानास्तीर्य' तदास्तरणं सामर्थ्यात्पूर्वमुपवेशनाद् द्रष्टव्यम् । तत्र केचिदस्मिन्नेवावसरे विप्रानुत्थाप्य दर्भास्तरणं कुर्वन्ति तदयुक्तं प्रागास्तरणादुपवेशनस्य धर्ममात्रप्रसङ्गात् । प्रथमं यदुपवेशनं तस्माददृष्टं परिकल्पयेत् । न च तत् । तथाच स्मृत्यन्तरे । कुशोत्तरेष्वासनेषु उपवेशयेदिति । 'विश्वान्देवानावाहयिष्य इति पृच्छति' पङ्क्तिमूर्द्धन्यं सर्वान् वा । 'आवाहये'''देवीरिति' आवाहयेत्यनुज्ञातः सन् विश्वेदेवास आगतेत्यनया आवाहयेत् । अवकिरणं प्रकिरणम् । तच्च तिलैः कर्तव्यम् । दैवे केचिद्यवैः कुर्वन्ति । तदयुक्तम् । अनुपदेशात् । न च तिलैः क्रियमाणमदैवं भवति, तस्मात्प्रकरणानुग्रहात्तिलैरेव कर्तव्यं दैवेऽपीति । विकरणानन्तरं विश्वेदेवाः शृणुतेममिति जपेत् । तत् उदङ्मुखान् पितॄनावाहयिष्य इति पृच्छति, पङ्क्तिमूर्द्धन्यं सर्वान्वा । आवाहयेत्यनुज्ञात उशन्तस्त्वेत्यनया आवाहयेत् । अत्र पितॄन् पितामहान् प्रपितामहानावाहयिष्य इति पितॄणां मातामहानामप्येवमित्यतिदेशाच्च मातामहान् प्रमातामहान् वृद्धप्रमातामहानावाहयिष्य इत्युक्तं पितृभूतिना । तदयुक्तम् । पितृशब्दस्तु सपिण्डीकरणान्तसंस्कारजन्यपितृभावापत्तिरूपः । यथा पितृभ्यो दद्यात्, पितॄनावाहयिष्ये, पितॄन्हविषे अत्तवे, आयन्तु नः पितर इति, अत्र पितरो मादयध्वमिति, अमी मदन्तपितर इति, नमोवः पितर इति, एतद्वः पितर इति,

तर्पयत मे पितृनित्यादि । तस्य पित्रादिषु मातामहादिषु मातृभ्रातृपितृव्यादिषु च तुल्यत्वान्नोह्यते । अतः पितॄनावाहयिष्य इत्येवावाहनप्रश्नः । अवकीर्य आयन्तुन इति जपेत् । यज्ञियवृक्षचमसाः पालाशवैकङ्कतकाश्मर्यबैल्वखादिरौदुम्बराणामन्यतमाः । तेषु प्रत्येकं पवित्रान्तर्हितेषु शंनोदेवीरित्यनेन मन्त्रेणाप आसिञ्चति । 'एकैकस्मिन्नेव तिलानावपति तिलोऽसीति' अनेन मन्त्रेण प्रत्येकं पात्रेषु तिलानावपति । दैवे पात्रे केचिद्यवानावपन्ति । तदयुक्तम् उक्तहेतुत्वात् । यदि स्मृत्यन्तरे स्पष्टं वचनं भविष्यति, ततो विकल्पेन भवितव्यम् । न पुनरेकान्तेन यवानामावपनमिति । 'सौवर्णराजतौदुम्बरखड्गमणिमयानां पात्राणामन्यतमेषु यानि वा विद्यन्ते' उदुम्बरं ताम्रमुच्यते प्रायोवचनात् धातुमत्सन्निधानाच्च । तेनावाक्यर्यमौदुम्बरम् । तस्य तु यज्ञियत्वादेव प्राप्तत्वात् यज्ञियवृक्षचमसेष्वित्यनेन । तस्मादौदुम्बरं ताम्रमुच्यते । यानि वा विद्यन्ते, मृन्मयादीन्युच्यन्ते । 'पत्रपुटेषु वेति' अर्थात्पत्रपुटा मृन्मयादिषु विकल्पन्ते । तानि च पात्राणि पितृभ्यो मातामहेभ्यश्च त्रीणि त्रीणि क्रियन्ते । यत आह 'एकैकस्यैकैकेन ददाति' एकैकस्य पित्रादेः, यत्संबन्धि दानं तदेकैकेन पात्रेण निर्वर्तयितव्यम् । केचिद्विश्वदेविके ब्राह्मणसंख्यया पात्राणि कुर्वन्ति । तदयुक्तम् । यतो न ब्राह्मणसंबन्धेन पात्राणां श्रवणं, किं तर्हि देवतासंबन्धेन । तस्मादेकदेवताकत्वादेकमेव दैविकं पात्रमिति । 'सपवित्रेषु हस्तेषु या दिव्या आप असावेष तेऽर्घ' इत्येवमन्तं सूत्रम् । ब्राह्मणहस्तेषु सपवित्रेषु ददाति या दिव्या आप इत्यनेन । पवित्राणि यान्यन्तर्धायोदकमासिक्तं तानि प्रकृतत्वाद्भवन्ति केचित्कृतप्रयोजनत्वादेव तेभ्योऽन्यान्युत्पादयन्ति । तदयुक्तम् । स्मर्यते हि दर्भाणामन्यत्र विनियुक्तानामन्यत्रापि विनियोगः । तस्मात्प्रकरणात्तान्येव भवन्ति । आसावित्यत्र यथादैवतं नामादेशः । एकदेवतासंबन्धेन यावन्तो ब्राह्मणास्तावतां हस्तेषु तत्पात्रगतोऽर्घः प्रतिपाद्यः । तत्र केचित्सकृन्मन्त्रवचनमिच्छन्ति । एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रवचनं कृतत्वादित्यनेन न्यायेन यत्रैकद्रव्यविषयः कर्माभ्यासः तत्र सकृन्मन्त्रवचनं कृतत्वादभिधानस्य, मन्त्रेण च देवता द्रव्यं कर्माभिधेयम् । तदभिहितं सकृदप्युच्यमाने न पुनरभिधानमपेक्षते । स चायं या दिव्या इति द्रव्याभिधायको मन्त्रः अनेन द्रव्यमभिधीयते, तच्च सकृद्द्रव्यमभिहितमेव भवति तस्मात्सकृन्मन्त्र इति । तदेतदन्याय्यम् । एकदेशप्रतिपत्तेः एकदेशो ह्यस्य द्रव्यस्य प्रतिपाद्यते । प्रतिब्राह्मणं यावत् प्रतिपाद्यते तावन्मन्त्राभिधानेन संस्क्रियते । तस्मात् प्रत्यर्घमयं मन्त्रो ग्रहणवत् । अत्र केचित् दैवपात्रं पूरयित्वा तदनन्तरञ्च दत्वा ततः पितृपात्रजातस्य पूरणादि कुर्वन्ति । तदसत् । नहि काण्डानुसमयस्यात्र प्रमाणमस्ति पदार्थानुसमयोऽयम् । तस्मात्समानं पूरणम् । ततो दानम् । स्मृत्यन्तरसंभवेऽपि प्रवाहो यदि त्वस्ति ततो विकल्प इति । 'प्रथमे पात्रे सᳪस्रवान्त्समवनीय पितृभ्यः स्थानमसीति न्युब्जं पात्रंनिदधाति' संस्रवाः पात्रसँलग्नाः । 'अत्र गन्धपुष्पधूपदीपवाससाञ्च प्रदानम्' अस्मिन्नवसरे विप्रेभ्यो गन्धादिदानम् । केचित्प्रकृतत्वात् अत्रेति सर्वनाम्नो निर्देशात्पात्रे गन्धादीनीच्छन्ति । तदसत् । अदृष्टप्रसङ्गात् । तस्मादत्रशब्दोऽवसरार्थो द्रष्टव्यः ॥ २ ॥ ॥ * ॥ ॥ * ॥

(गदाधरः)—'दैवपूर्वᳪश्राद्धम्' आ उपस्पर्शनादित्यनुवर्तते निमन्त्रणादि आचमनपर्यन्तं श्राद्धे यत्किंचित्क्रियते तत्सर्वं दैवपूर्वकं कर्तव्यमित्यर्थः । तथा च देवलः । यद्यत्र क्रियते कर्म पैतृकं ब्राह्मणान्प्रति । तत्सर्वं तत्र कर्तव्यं वैश्वदेवस्य पूर्वकमिति । 'पिण्डपितृयज्ञवदुपचारः पित्र्ये' पितृकर्मणि पिण्डपितृयज्ञवत्करणं भवतीत्यर्थः । अनेनापसव्यदक्षिणामुखवामजानुपाताद्यतिदिष्टम् । अतश्च नीवीबन्धनादिपिण्डोत्थापनपर्यन्तं पिण्डपितृयज्ञोक्तधर्मो भवतीति । एतदपवादः—अपसव्येन कर्तव्यं सर्वं श्राद्धं यथाविधि । सूक्तस्तोत्रजपं मुक्त्वा विप्राणां च विसर्जनम् । अपि च । सूक्तस्तो-

न्नजपं मुक्त्वा पिण्डाघ्राणं च दक्षिणाम् । आह्वानस्वागते चैव विना च परिवेषणम् । विसर्जनं सौमनस्यमाशिषां प्रार्थनं तथा । विप्रप्रदक्षिणाश्चैव स्वस्तिवाचनकं विना । पित्र्यमन्यत्प्रकर्तव्यं प्राचीनावीतिना सदेति जमदग्निः । 'द्विगुणास्तुदर्भाः' पित्र्ये इत्यनुवर्तते, तु पुनः पित्र्ये हविरुत्सर्गादौ द्विगुणीकृता दर्भा भवन्ति, अर्थाद्दैवे ऋजव इति । अत्राह बौधायनः, प्रदक्षिणं तु देवानां पितृणामप्रदक्षिणम् । देवानामृजवो दर्भाः पितृणां द्विगुणाः स्मृताः । कात्यायनस्मृतौ विशेषः, सपिण्डीकरणं यावदृजुदर्भैः पितृक्रिया । सपिण्डीकरणादूर्ध्वं द्विगुणैर्विधिवद्भवेदिति । दर्भलक्षणं चोक्तं यज्ञपार्श्वे— कीदृशा यज्ञिया दर्भाः कीदृशाः पाकयज्ञियाः । कीदृशाः पितृदेवत्याः कीदृशा वैश्वदेविकाः । हरिता यज्ञिया दर्भाः पीतकाः पाकयज्ञियाः । समूला पितृदेवत्याः कल्माषा वैश्वदेविकाः । अप्रसूताः स्मृता दर्भाः प्रसूतास्तु कुशाः स्मृताः । अमूलाः कुतपा ज्ञेया इत्येषा नैगमी श्रुतिः । प्रादेशादधिका दर्भास्त्रिपत्रादियुताश्च ये । कुशास्ते याज्ञिकैः प्रोक्ताः स्नानादिषु पवित्रकाः । दर्भाः किमर्थं दीयन्ते श्राद्धकालेषु किं तिलाः । किमर्थं वेदविच्छ्राद्धे किमर्थं यतिरुच्यते । रक्षन्ति राक्षसान्दर्भास्तिला रक्षन्ति चासुरान् । वेदविद्रक्षयेच्छ्राद्धं यतीनां दत्तमक्षयमिति । दर्भाभावे काशादि गृहीत्वा कर्म कुर्यात् । तथा च स्मृतौ—दर्भाभावे तु काशाः स्युः काशाः कुशसमाः स्मृताः । काशाभावे ग्रहीतव्या अन्ये दर्भा यथोचिताः । दर्भाभावे स्वर्णरूप्यताम्रैः कर्मक्रिया सदा । कुशकाशशरा दूर्वा यवगोधूमबल्वजाः । सुवर्णं रजतं ताम्रं दश दर्भाः प्रकीर्तिताः । स्नाने दाने तथा होमे स्वाध्याये तर्पणेऽपि च, इति । 'पवित्रपाणिर्दद्यादासीनः सर्वत्र' सर्वत्रग्रहणाद्दैवे पित्र्ये च यत्किंचिद्ददाति तत्सर्वमासीनः पवित्रपाणिः सन्दद्यात् । पवित्रपाणिः कुशपाणिः पवित्रशब्दोऽत्र कुशवचनः पवित्रेस्थ इति मन्त्रलिङ्गात् । अथ वा स्मृतिप्राप्तं पवित्रपाणित्वमासीनत्वं चात्र सार्थकत्वेनानुवदति । तेन वामहस्ते कुशादानं पितृणामावाहनेष्वासीनत्वं निषेधतीत्यर्थः । तथा च पठन्ति—वामहस्तधृतान्दर्भान् गृहे रङ्गवलींस्तथा । ललाटे तिलकं दृष्ट्वा निराशाः पितरो गता इति । किंचावाहनेनागच्छत्सु पितृषु कर्तुरासीनत्वं न युक्तम् । तथा च पुराणोक्तं लिङ्गम् । अथ प्राञ्जलिरुत्थाय स्थित्वा चावाहयेत्पितृनिति । 'प्रश्नेषु पङ्क्तिमूर्द्धन्यं पृच्छति सर्वान्वा' वाशब्दो विकल्पार्थः, वक्ष्यमाणेषु आवाहनादिप्रश्नेषु पङ्क्तिमूर्द्धन्यं पङ्क्तेराद्यं ब्राह्मणं पृच्छेत् सर्वान्वा पृच्छेत् । तुल्यविकल्पस्याष्टदोषदुष्टत्वाद् व्यवस्थितविकल्पोयमिति श्राद्धकाशिकाकारः । तुल्यविकल्पएवायमिति कर्काचार्यादयः । 'आसनेषु दर्भानास्तीर्य विश्वान्देवानावाहयिष्य इति पृच्छति' आसनेऽत्र पीठेषु दर्भानास्तीर्याच्छादनं कृत्वा विश्वान्देवानावाहयिष्ये इति पृच्छेत् पङ्क्तिमूर्द्धन्यं सर्वान्वा । आसनान्याह स्मृतिः—शमीकाश्मर्यशल्लाश्च कदम्बो वारणस्तथा । पञ्चासनानि शस्तानि श्राद्धे वा देवतार्चने । तथा च "श्रीपर्णी वरुणक्षीरी जम्बूकाम्रकदम्बजम् । सप्तमं बाकुलं पीठं पितृणां दत्तमक्षयमिति" । आसनेषु दर्भानास्तीर्येति वदता हस्ते विष्टरवदानं निराकृतम् । कर्काचार्यास्त्वेवमाहुः—एतदास्तरणं सामर्थ्यात्पूर्वमुपवेशनाद् द्रष्टव्यम् । पाठक्रमादर्थक्रमस्य बलिष्ठत्वात् । 'आवाह' 'पृच्छति' ततो ब्राह्मणैरावाहयेत्यनुज्ञातो विश्वेदेवास आगतेत्यनया ऋचा आवाह्य वैश्वदेवब्राह्मणपुरतो यवान्प्रादक्षिण्येनावकीर्य विश्वेदेवाः शृणुतेममितीमं मन्त्रं पठित्वा पितॄनावाहयिष्य इति पृच्छति । अत्र तिलैरवकिरणमिति कर्काचार्या आहुः । अन्ये तु यवैरन्ववकीर्येति याज्ञवल्क्यवचनाद्यवैः कुर्वन्ति । द्विजानेकत्वेऽपि न प्रतिद्विजमावाहनावृत्तिः, सकृदावाहनेनैवानेकब्राह्मणाधिष्ठाने देवताध्यासनसंभवात् । 'आवाह' 'देवीरिति' आवाहयेति ब्राह्मणैराज्ञापित उशन्तस्त्वेति मन्त्रेण पितॄनावाह्य पितृब्राह्मणानामग्रतस्तिलानप्रादक्षिण्येनावकीर्यायन्तु नः पितर इति पठेत् । यज्ञमर्हन्तीति यज्ञियाः पालाशादयः, यज्ञर्त्विग्भ्यां घखञाविति घप्रत्ययः । ते वै पालाशाः स्युरित्युपक्रम्य एते हि वृक्षा यज्ञिया

इति हविर्यज्ञकाण्डे श्रुतिः । एषामन्यतमेषु चमसेषु अनन्तर्गर्भसाग्रप्रादेशमात्रकुशद्वयसहितेषु शन्नो देवीरभिष्टय इत्यनेन एकैकस्मिन्नपो निषिञ्चेत् । चमसानां लक्षणं चोक्तं यज्ञपार्श्वे । चमसानां तु वक्ष्यामि दण्डाः स्युश्चतुरङ्गुलाः । त्र्यङ्गुलन्तु भवेत्खातं विस्तारश्चतुरङ्गुलः । वैकङ्कतमयाः श्लक्ष्णास्त्वग्बिलाश्चमसाः स्मृताः । अन्योन्यावपि[1] कार्याः स्युरिति । तत्रैवोक्तम् । प्रादेशायामा इति च । पवित्रलक्षणं छन्दोगपरिशिष्टे । अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचिदिति । अत्र देवपात्रे द्वे पवित्रे पितृपात्रे त्रीणि त्रीणि भवन्ति । तदुक्तं चतुर्विंशतिमते । द्वे द्वे शलाके देवानां तिस्रस्तिस्रस्तु पार्वणे । एकोद्दिष्टे शलाकैका श्राद्धेष्वर्घेषु निक्षिपेदिति । अत्र याज्ञवल्क्यवचनेनावाहनार्घपूरणदानानां यद्यपि काण्डानुसमयः प्रतीयते, तथापि पदार्थानुसमयो बोद्धव्यः । तुल्यसमवाये सामान्यपूर्वमानुपूर्व्ययोगादिति परिभाषितत्वात् । अस्यार्थः । तुल्यानां प्रधानानां समवाये एकप्रयोगानुष्ठाने यत्साधारणमङ्गजातं तत्सर्वेषां पूर्वं भवति, तथासत्यानुपूर्व्येण पदार्थाः कृता भवन्ति । यथा । श्राद्धे पित्रादिषड्यागा एकत्र प्रयोगे क्रियन्ते तत्र निमन्त्रणादयः सर्वेषां क्रमेण पदार्था अनुष्ठिता भवन्ति । अन्यथा एकैकस्य पित्रादेः सर्वयागस्य परिसमाप्तौ द्वितीयोपक्रमे क्रमभङ्गः स्यात् । प्रथमस्य विसर्जने द्वितीयस्यामन्त्रणमापद्येत, तथासत्यानुपूर्वीभङ्गः प्रसज्येत । तच्च निषिद्धम् । तस्मादेकैकं पदार्थजातं सर्वेषामपि निर्वाह्य द्वितीयादिनिर्वाहः कार्यः । एवमपि बहुभिः पदार्थैर्व्यवधानं भवति, तच्च न दोषाय । न हि सजातीयैर्व्यवधानमिष्यते । तस्मात्सर्वेषां निमन्त्रणपाद्यादि । एवमावाहनेऽपि, आवाहनावकिरणजपसमुदायरूपम् । जपेऽप्यायन्तुन इति मन्त्रलिङ्गात् । अत एव हि एकोद्दिष्टतीर्थश्राद्धनित्यश्राद्धसांकल्पिकश्राद्धेषु आवाहननिवृत्तौ त्रयमपि निवर्तते । कात्यायनस्य पदार्थानुसमय एवाभिमतः, देवावाहनानन्तरं पित्रावाहनोक्तेः । एकैकस्मिन्नप आसिञ्चतीति सर्वपात्रेषु जलप्रक्षेपावगमात् । तदनन्तरमेकैकस्मिन्नेव तिलानावपतीति विधानात् । अत एकैकत्रार्घपात्रे जलादिपुष्पान्तं प्रक्षिप्यार्घदानान्तं वा निर्वर्त्य पात्रान्तरपूरणमिति मतं न युक्तम् । किंच पदार्थानां क्रमानुरोधादपि पदार्थानुसमय एवार्हति । अतो निमन्त्रणादावपि पदार्थानुसमय एव । 'एकैक' 'स्वाहेति' तिलोसीत्यनेन एकैकस्मिन्पात्रे तिलानावपति प्रक्षिपति आदौ देवपात्रे प्रक्षिप्य ततः पितृपात्रेषु प्रक्षेपः । ननु एकैकस्मिन्नित्यनुवर्तमाने पुनरेकैकस्मिन्निति ग्रहणं किमर्थम् । उच्यते । तिलोऽसीति मन्त्रे पितृन्प्रीणाहीति बहुवचनान्तेन पितृशब्देनैकद्रव्यत्वादनूहितः सकृन्मन्त्रः प्राप्नोति, तन्माभूदित्येकैकस्मिन्निति पुनर्ग्रहणम् । 'सौवर्ण' 'विद्यन्ते' उदुम्बरं ताम्रमुच्यते । उदुम्बरवृक्षस्य तु यज्ञियवृक्षचमसेष्वित्यनेनैवोक्तत्वात् । मणिमयानि शङ्खशुक्तिस्फटिकादिपात्राणि । एषां मध्ये एकस्य पात्राणि क्रियन्ते यानि वा विद्यन्ते इति निषिद्धेतराणि मृन्मयादीन्युच्यन्ते । तथा च छन्दोगपरिशिष्टे—आसुरेण तु पात्रेण यस्तु दद्यात्तिलोदकम् । पितरस्तस्य नाश्नन्ति दशवर्षाणि पञ्च च । कुलालचक्रनिष्पन्नमासुरं मृन्मयं स्मृतम् । तदेव हस्तघटितं स्थाल्यादि दैविकं भवेदिति । राजतं तु पित्र्य एव । तदुक्तं वायुपुराणे । तथाऽर्घपिण्डभोज्येषु पितृणा राजतं मतं । अमङ्गल्यं तु यत्नेन देवकार्येषु वर्जयेदिति । 'पत्रपुटेषु वा' वा शब्दो विकल्पार्थः । पूर्वसूत्रोक्तविहितप्रतिषिद्धनिषेधार्थ इति श्राद्धकाशिकाकारः । पूर्वोक्तानामलाभे पालाशादियज्ञियवृक्षपत्रपुटेषु वाऽर्घं पूरयेत् । तथाचोक्तं ब्रह्मपुराणे । अथ पत्रपुटे दत्वा मुनीनां वल्लभो भवेदिति । तानि च पात्राणि पितृभ्यो मातामहेभ्यश्च त्रीणि त्रीणि क्रियन्ते । यत आह । 'एकैक' 'तेऽर्घ इति' अत्र 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः' इति चतुर्थ्यर्थे षष्ठी विभक्तिः । एकैकस्य पित्रादेः संबन्धिब्राह्मणहस्तेषु

1 अन्येभ्योऽपि हि कार्याः स्युरिति क्वचित्पाठः ।

सपवित्रेषु या दिव्या इति मन्त्रेण अमुकशर्मन् एष ते अर्घ इति अर्घं दद्यात् । असावित्यत्र यथादैवतं नामग्रहणं कार्यम् । 'असावित्यपनोदे' इति परिभाषायामुक्तत्वात् । तस्यायमर्थः—यत्र मन्त्रमध्ये असावित्येवं सर्वनामपदं पठितं भवति तत्र तत्सर्वनामपदमपनोदे अपनये वर्तते, तस्यापनोदमपनयं निष्कासनं कृत्वा तस्य स्थाने यद्विवक्षितं तस्य नाम्नः प्रक्षेपः कार्यः । सपवित्रेष्वित्यनेन तन्त्रेण सर्वब्राह्मणहस्तेषु सूचितम् । न प्रतिहस्तं मन्त्रावृत्तिः । एकैकस्येत्यनेन प्रतिपुरुषं हस्तार्घदानमिति सूचितम् । अत्राह कात्यायनः—अर्घेऽक्षय्योदके चैव पिण्डदानावनेजने । तन्त्रस्य तु निवृत्तिः स्यात्स्वधावाचन एव चेति । अत्रायं प्रकारः—पितुर्यावन्तो ब्राह्मणास्तेषां सपवित्रेषु ज्येष्ठोत्तरहस्तेषु पितुरेकस्यैकोऽर्घो दातव्यः । एवं पितामहप्रपितामहयोः । मातामहानामप्येवं ज्ञेयम् । पवित्राणि यान्यन्तर्द्धायोदकमासिक्तं तान्येव भवन्ति, प्रकृतत्वात् । अत्रैके पवित्रान्तरमुत्पादयन्ति । एषामेकत्र विनियुक्तानां विनियोगान्तराभावात् । तदयुक्ततरम् ॥ यथा मन्त्राणां क्रियया पुनः पुनर्विनियोगः, एवं कुशानामपि । तथाहि । दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणाश्च विशेषतः । न ते निर्माल्यतां यान्ति योज्यमानाः पुनः पुनरिति । तस्मात्तान्येव भवन्ति । अत्र केचिदेकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रवचनं कृतत्वादितिन्यायेन सकृन्मन्त्रवचनमिच्छन्ति । कर्कमते तु प्रतिप्रक्षेपं मन्त्रो ग्रहणवत् । तथाऽस्माकमपि । अत्र केचिद्दैवं पूरयित्वा तदनन्तरं चार्घं दत्वा ततः पित्र्यस्य पात्रजातस्य पूरणादि कुर्वन्ति । तदसत् । नहि काण्डानुसमयस्यात्र प्रमाणमस्ति, पदार्थानुसमयोऽयम्, तस्मात् समानं पूरणम् । ततो दानम् । स्मृत्यन्तरसंभवेऽपि प्रवाहो यद्यस्ति ततो विकल्पोऽयमिति । अत्रैके 'पूरयेत् पात्रयुग्मं तु' इति मत्स्यपुराणोक्तेः 'एकैकस्य तु विप्रस्य अर्घं पात्रे विनिक्षिपेत्' इति प्राचेतसोक्तेश्च वैश्वदेविके ब्राह्मणसंख्यया पात्राणि कुर्वन्ति । कर्कमते त्वेकमेव पात्रं दैवे । केचिद् द्विजहस्तधृतं पवित्रं पुनरर्घपात्रे गृह्णन्ति । तदतीव मन्दम् । दत्तस्योपादाने प्रमाणाभावात् । यादिव्या इत्यस्यार्थः—आपः पानीयानि पयसा संबभूवुः सङ्गमना बभूवुः । माधुर्यशीतत्वादिना एकीभूताः । कस्ता आपः या दिव्याः दिवि स्वर्गे भूताः उत अपि या आन्तरिक्षाः आकाशे भूताः । उत अपि पार्थवीर्याः पृथिव्यां भूताः उतशब्द उभाभ्यां संबध्यते । किंभूताः हिरण्यवर्णाः हिरण्यं रजतं तत्समानवर्णाः शुक्लवर्णा इत्यर्थः । पुनः किंभूताः यज्ञियाः यज्ञार्हाः । ता आपः नः अस्माकं शिवाः क्षेमा भवन्तु न केवलं क्षेमाः, अपि शं कल्याण्यो भवन्तु । स्योनाः सुखदा भवन्तु । सुहवाः सुष्ठु ब्राह्मणहस्ते कृता भवन्त्वित्यनेनैव संबन्धः । स्योना इति सुखस्य नाम इति यास्कः । एकैकमुभयत्र वेत्यस्मिन्पक्षेऽपि पित्र्यपात्रत्रयं कार्यम् । 'प्रथमे···धाति' संस्रवशब्देनार्घपात्रलग्ना अववयवा अभिधीयन्ते । सर्वंस्रवो ह्येव खलु परिशिष्टो भवतीति श्रुतिवाक्यात् । प्रथमे पात्रे पितुः प्रथमे अर्घपात्रे संस्रवान् समवनीय निक्षिप्य पितृभ्यः स्थानमसीत्यनेन मन्त्रेण तत्प्रथमं पात्रं न्युब्जमधोमुखन्निदध्यात् । अत्राह यमः । पैतृकं प्रथमं पात्रं तस्मिन्पैतामहं न्यसेत् । प्रपितामहं ततो न्यस्य नोद्धरेन्न विचालयेत् । पैतामहं संस्रवमित्यर्थः । पुराणे विशेषाः—आसिच्य प्रथमे पात्रे सर्वपात्रस्थसंस्रवान् । ताभिरद्भिर्मुखं सिञ्चेद्यदि पुत्रमभीप्सति । चतुर्विंशतिमते—संस्रवान्प्रथमे पात्रे निर्णीयाद्भिर्मुखं स्पृशेत् । अद्भिर्मुखस्पर्शनस्य पुरुषार्थत्वाद्विकृतावप्रवृत्तिः । तच्च न्युब्जीकरणं पित्र्यब्राह्मणस्य वामपार्श्वे । तथा मत्स्यपुराणे—या दिव्येत्यर्घमुत्सृज्य दद्याद्गन्धादिकं ततः । वस्त्रोत्तरं चानुपूर्व्या दत्वा संस्रवमादितः । पितृपात्रे प्रदायाथ न्युब्जमुत्तरतो न्यसेदिति । उत्तरशब्दो वामवचनः, स चाचाराद् भोक्तुरेव । ब्राह्मणहस्तगलितार्घोदकानि पितृपात्रे प्रसिच्य दक्षिणाग्रेषु कुशेषु पितृभ्यः स्थानमसीति सपवित्रं न्युब्जं कृत्वा तस्योपर्यर्घ्यपात्रपवित्राणि क्षिप्त्वा तिलपुष्पादि क्षिप्त्वा तत्पात्रमासमाप्तेर्न चालयेत् । मातामहेषु चैवमिति स्मृत्यर्थसारे । 'अत्र गन्धपुष्पधूपदीपवाससां

च प्रदानम्' अत्रास्मिन्नवसरे विप्रेभ्यो गन्धादिकं दद्यात् । गन्धादीनां स्मृत्यन्तरोक्तो विशेषो द्रष्टव्यः । चन्दनकुङ्कुमकर्पूरागुरुपद्मकाष्ठान्यनुलेपनार्थे इति विष्णुनोक्तम् । पुष्पे पद्मोत्पलमल्लिकायूथिकाशतपत्रचम्पकानि गन्धरूपरसपन्नान्यपि श्वेतानि, धूपे घृतमधुसंयुक्तं गुग्गुलं श्रीखण्डागुरुरसादि दद्यात् । प्राण्यङ्गं सर्वं धूपार्थे न दद्यात् । दीपे शङ्खः—घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः । वसामेदोद्भवं दीपं प्रयत्नेन विवर्जयेत् । वस्त्रे । शुक्लं शुद्धमहतं सदशं वस्त्रं दद्यात् । चकारोऽनुक्तसमुच्चयार्थः । तेन सत्यां संपत्तौ सूत्रोक्तेभ्योऽन्यदपि दातव्यम् । तथा वायुपुराणे । लोके श्रेष्ठतमं सर्वमात्मनश्चापि यत्प्रियम् । सर्वं पितॄणां दातव्यं तदेवाक्षयमिच्छतेति । यज्ञोपवीतं यो दद्याच्छ्राद्धकाले तु धर्मवित् । पावनं सर्वविप्राणां ब्रह्मदानस्य तत्फलम् । दानं च पितृसंप्रदानकम् । प्रतिपत्तिस्तु ब्राह्मणेषु । अत्र यद्यपि गन्धपुष्पधूपदीपाच्छादनानां मिलितानां प्रदानं प्रतीयते, तथापि स्मृत्यन्तरदर्शनाद् गन्धादीनामेकैकं देवादिमातामहाद्यन्तमुत्सृज्य दद्यात् । तथा च छन्दोगपरिशिष्टे—गन्धोदकं च दातव्यं संनिकर्षक्रमेण तु । गन्धान्ब्राह्मणसात्कृत्वा पुष्पाण्यृतुभवानि च । धूपं चैवानुपूर्व्येण अग्नौ कुर्यादतः परमिति । वस्त्राभावे मूल्यं वा अलाभे उत्तरीयं यज्ञोपवीतं वा दद्यादिति स्मृत्यर्थसारे । अस्मिन्नवसरे ब्राह्मणाग्रे भोजनानि निधाय मण्डलानि कुर्यात् । अत्राह शङ्खः—चतुःकोणं द्विजाग्र्यस्य त्रिकोणं क्षत्रियस्य तु । मण्डलाकृति वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतमिति । ब्रह्मपुराणे । मण्डलानि च कार्याणि नैवारैश्चूर्णकैः शुभैः । गौरमृत्तिकया वापि प्राणीतेन च भस्मना । प्रणीत आवसथ्याग्निस्तदीयेन भस्मना । तत्र मन्त्रः—यथा चक्रायुधो विष्णुस्त्रैलोक्यम्परिरक्षति । एवं मण्डलभस्मैतत्सर्वभूतानि रक्षत्विति । द्वितीया कण्डिका ॥ २ ॥ ॥ * ॥

( श्राद्धका० ) इदानीं प्रयोगमुपक्रममाणः परिभाषते । 'दैवपूर्वं श्राद्धम्' परिभाषेयमपवादव्यतिरिक्तेष्ववतिष्ठते । श्राद्धमिति पित्र्यं कर्म । दैवपूर्वमिति पदार्थानुसमयोक्तिः । अतश्च स्मृत्यन्तरोक्तः काण्डानुसमयोऽस्यानभिप्रेतः । एवं च सति सोऽनर्थक इति चेत् । न । पदार्थानुसमयानुक्तिविषयत्वेन सार्थकत्वात् । आह च—सकलो गुणकाण्डश्चेदेकैकस्य प्रयुज्यते । सहत्वप्रापको नैव प्रयोगवचनो भवेदिति । अतश्चात्रापवादवर्जं पादप्रक्षालनादि सर्वं कर्म दैवपूर्वं भवतीत्यर्थः । तथा च—दैवपूर्वं भवेच्छ्राद्धं वर्जयित्वा विसर्जनम् । प्रश्नं च दक्षिणां चैव भुक्ते चाचमनं विना । तथा—हस्तोच्छिष्टापनयनमाह्वानं च विसर्जनम् । दक्षिणां सौमनस्यं च विनान्यद्दैवपूर्वकम् । धर्मप्रदीपेऽपि, विसर्गश्चुलुकाश्चाग्नौकरणं पङ्क्तिवाचनम् । करशुद्धिरपोशानं पितृपूर्वाणि षड् भवेदिति । देवलोऽपि—यत्र यत्क्रियते कर्म पैतृकं ब्राह्मणान्प्रति । तत्सर्वं तत्र कर्तव्यं वैश्वदेवस्य पूर्वकमिति । 'पिण्डपितृयज्ञवदुपचारः पित्र्ये' पितरो देवताऽस्येति पित्र्यं वाय्वृतुपित्रुषसो यदिति यत्प्रत्ययः । ततश्च पितृकर्मणि पिण्डपितृयज्ञवत्करणं भवतीत्यर्थः । अनेनापसव्यदक्षिणामुखवामजानुपाताद्यतिदिष्टम् । अतश्च नीवीबन्धनादि पिण्डोत्थापनपर्यन्तं पिण्डपितृयज्ञोक्तधर्मो भवतीति । तत्रैतत्संदिह्यते । किं नीवीबन्धनं वामाङ्गे दक्षिणे वेति । तत्रोभयथाचारदर्शनाद्यथासंप्रदायं व्यवस्थेति पारिजातः । तदेतद्विचारणीयम्—किं नीवी दैविकं कर्म पित्र्यं वेति । यदि दैवं तदा पिण्डपितृयज्ञेऽनुष्ठानविरोधः । अथ पित्र्यं तर्ह्युपवीतवदपसव्याङ्ग उचितेति । तथा च मनुः—प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा । पित्र्यमानिधनात्कार्यं विधिवद्दर्भपाणिनेति । अत्र प्राचीनावीतिनेत्यपसव्यत्वे प्राप्ते अपसव्यग्रहणं नीवीबन्धनवामजानुपातादिधर्मप्राप्त्यर्थम् । अपि च—सर्वं कर्मापसव्येन दक्षिणादानवर्जितमिति स्मृतिः । पिण्डपितृयज्ञातिदेशोऽपि । यत्तु कात्यायनवचनम्—नीवीकार्या दशागुप्तिर्वामकुक्षौ कुशैः सदा । पितृकर्मणि चैवोक्ता वेदवेदाङ्गवेदिभिरिति । तदाभ्युदयिकविषयकम् । तथा च पठन्ति—दशासंगोपनं नीवी साराग्रे(?) मानुषी स्मृता । पितॄणां दक्षिणे पार्श्वे विपरीता च दैविके । वृद्धयाज्ञवल्क्योऽपि—दक्षिणे कटिदेशे तु

तिलैः सह कुशत्रयम्। तर्जयन्तीह दैत्यानां यथा नृणामयस्तथेति। नन्वेवमपि—नीवीकार्येत्यत्र वचने सदाशब्दान्नैवं विषय इति चेत्। नैवम्। नीवीबन्धस्य रक्षोघ्नत्वाद्देवपितृमानुषकर्मसु यथोचितं गोपनस्य विहितत्वेन सदाशब्दस्यैवमर्थत्वात्। तथा च श्रुतिः—दक्षिणत इव हीयं नीविरिति लिङ्गम्। लिङ्गादेरपि विधेय इति वचनात्। न च श्रुतिविरुद्धा स्मृतिः प्रमाणम्। श्रुतिस्मृतिविरोधे तु श्रुतिरेव बलीयसीति वचनात्। तस्माद्दक्षिणाङ्ग एव नीवीबन्ध इति सिद्धम्। पिण्डब्राह्मणभाष्यकारोऽपि, अथ नीवीमुद्धृत्य नमस्करोतीति कण्डिकाव्याख्याने नाभेर्दक्षिणत एव नीवीस्थानमित्यमंस्त। तद्बन्धमन्त्रश्च पाराशरोक्तः। यथा—निहन्मि सर्वं यदमेध्यकृद्भवेद्धताश्च सर्वेऽसुरदानवा मया। यक्षांसि रक्षांसि पिशाचगुह्यका हता मया यातुधानाश्च सर्वे। 'द्विगुणास्तु दर्भाः' सर्वसामग्र्युपलक्षणं चैतत्। तथा च पुराणम्—उपमूलसकृल्लूनान्कुशांस्तत्रोपकल्पयेत्। यवांस्तिलान्बृसीः कांस्यमपः शुद्धौ समाकृत(?)। पार्णराजतताम्राणि पात्राणि स्युः समिन्मधु। पुष्पधूपसुगन्धादि क्षौमसूत्रं च मेक्षणमिति। बृसीरासनानि। एतदाहरणमाह—उदपात्रं च कांस्यं च मेक्षणं च स्रुवादिकम्। आहरेदपसव्येन दार्वं दक्षिणतः शनैः। इति। दर्भाः समूलकुशाः स्मृत्युक्ताः। तथा च यमः—सुमूलस्तु भवेद्दर्भः पितॄणां श्राद्धकर्मणि। मूलेन लोकाञ्जयति शक्रस्य तु महात्मनः। हारीतोऽपि—दक्षिणां दिशं गत्वा समूलान् कुशानाहरेदिति। तुशब्दो विशेषार्थः। तेन पिण्डाधस्तरणकुशवर्जं समूलद्विगुणाः कुशाः पित्र्ये, दैवप्रेतश्राद्धयोस्तु ऋजवो भवन्तीत्यर्थः। तथा च श्रुतिः—अथ सकृदाच्छिन्नान्युपमूलानि भवन्ति। स्मृतिरपि—उपमूलं सकृल्लूनं बर्हिः पिण्डेषु शस्यते। कात्यायनोऽपि—सपिण्डीकरणं यावदृजुदर्भैः पितृक्रिया सपिण्डीकरणादूर्ध्वं द्विगुणैर्विधिवद्भवेत्। देवानामृजवो दर्भाः पितॄणां द्विगुणाः स्मृताः। इति। 'पवित्रपाणिर्दद्यादासीनः सर्वत्र' पवित्रमुपग्रहोपलक्षणम्। सर्वत्रेति दैवे पित्र्ये च। तेनोभयत्र पवित्रोपग्रहणपाणिरासीनश्च दद्यादित्यर्थः। तथा मनुः—पित्र्यमा निधनात्कार्यं विधिवद्दर्भपाणिनेति। अथ वा पवित्रपाणिरासीनत्वं च स्मृतिप्राप्तमेवात्र सार्थकत्वेनानुवदति। तेन वामहस्ते कुशादानमावाहने चासीनत्वं निषेधतीत्यर्थः। तथा च पठन्ति—वामहस्ते यदा दर्भा गृहे रंगवलिस्तथा। ललाटे तिलकं दृष्ट्वा निराशाः पितरो गताः। इति। किं चावाहने चागच्छन्तु पितृपु कर्तुरासीनत्वं न युक्तम्। तथा च पिण्डदानावाहने पुराणोक्तलिङ्गम्। अथ प्राञ्जलिरुत्थाय स्थित्वा चावाहयेत्पितॄनिति। मन्त्रार्थानुग्रहोऽपि—'आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः' इति। अपि चासीनो दद्यात् इति दाने आसीनत्वं न पुनरावाहनाद्युपस्थानेऽपीति सूत्रार्थः। 'प्रश्नेषु पङ्क्तिमूर्धन्यं पृच्छति सर्वान्वा' पङ्क्तिमूर्धन्यः पित्र्ये प्रथमो विप्रः। लिङ्र्थे लट्, वाशब्दो व्यवस्थितविकल्पे तुल्यस्याष्टदोषदुष्टत्वात्। पृच्छातृप्त्याशीःप्रार्थनादिषु सर्वेन्यत्र पङ्क्तिमूर्धन्य इत्यर्थः। तथा च पुराणम्—द्वौ हस्तौ युग्मतः कृत्वा जानुभ्यामन्तरे स्थितौ। सप्रश्रयश्चोपविष्टः सर्वान्पृच्छेद्द्विजोत्तमानिति। तुल्यविकल्प एवायमिति कर्कादयः। अत्र प्रश्नेषु पङ्क्तिमूर्धन्यः सर्वे वेत्येतावति वाच्ये पृच्छतीति गौरवं स्मृत्यन्तरोक्तक्रमविध्यर्थं प्रश्नेनैव तच्छब्देः। तथा च वृद्धयाज्ञवल्क्यः—पृच्छाद्यासनमर्घपूरणमतश्चावाहनार्घे क्रमान्युज्जं चार्चनभाजनाग्निवहनं शेषो जपः कल्पनम्। दत्त्वान्नं जपतृप्तिपिण्डयजने सुप्रोक्षिताक्षय्यके आशीः पुण्ड्रकवाचनार्घचलनं दानं विसर्गः स्तुतिः(?)इति। आदिशब्देन देशकालगोत्रादिस्मरणम्। पिण्डयजनं विकरादि पिण्डार्चनपर्यन्तम्। अत्रान्योऽपि स्मृत्युक्तक्रमो ज्ञेयः। वचनस्य मापेक्त्वात् (?)। तथा च—श्राद्धारम्भे गयां ध्यात्वा ध्यात्वा देवं जनार्दनम्। स्वपितॄन्मनसा ध्यात्वा ततः श्राद्धं समारभेत्। अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम्। तथा बर्हिषदः पान्तु याम्यां ये पितरः स्थिताः। प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः। रक्षोभूतपिशाचेभ्यस्तथैवासुरदूषकाः। सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु ते। प्राणायामं ततः कुर्याद्गायत्र्याः स्मरणं तथा। श्राद्धं कर्ता-

स्मीति वदेद्विप्रैर्वाच्यं कुरुष्व च । देवताभ्यः पितृभ्यश्चेत्यादि । देवताभ्य इत्यस्यादिमध्यावसानेषु जपः आदिमध्यावसानेषु त्रिरावृत्तं जपेद्बुधः इति वचनात् । एवं परिभाष्य 'कर्मोपक्रमे आसनेषु दर्भानास्तीर्य' पादासनदीपोपलक्षणं चैतत् । तथा च कात्यायनः—विष्टरार्थं कुशान्दद्याद्विप्राणा पादमूलतः । ब्राह्मं च—पृथक् पृथग् वासनेषु तिलतैलेन दीपकाः । अविच्छिन्नार्चिषो देयास्ते तु रक्ष्या द्विजोत्तमैः ।। इति । आसनान्याह स्मृतिः । शमीकाश्मर्यशल्लाश्च कदंबो वरणस्तथा । पञ्चासनानि शस्तानि श्राद्धे देवार्चने तथा । श्रीपर्णीवरणक्षीरिजम्बूकाम्रकदम्बजम् । सप्तमं वाकुलं पीठं पितॄणां दत्तमक्षयमिति । ततश्च सदीपेष्वासनेषु पादासनं दत्वाऽसनेषु दर्भान्दद्यादित्यर्थः । द्वितीयमेतदास्तरणम् अतोऽस्मात्पूर्वमपि दर्भानास्तीर्योपवेशयेदिति । तथा च देवीपुराणम्—कुशोत्तरे तिलास्तीर्णे आसने लोहवर्जिते । दाता च स्वासने पूते विप्रानावेशयेत्सुधीरिति । नन्वास्तृतेषु पुनरास्तरणं किमर्थम् । तत्रैके पूर्वास्तरणस्य धर्ममात्रत्वादित्याहुः । अपरे पुनरत्र नासिकां संकोचयन्तो विप्रानुत्थाप्य कर्तव्यमित्यास्थिषत । तदहृद्यम् । उपवेशितानामुत्थापनापत्तेः । तस्मात्पूर्वमास्तरणमात्रमिह तु तद्दानमित्यपौनरुक्त्यम् । अतश्चास्तीर्य दत्त्वेत्यर्थः । संकल्पपरत्वात् । तथा च शांबपुराणम्—कृत्वाद्भिः शौचमाचम्य सूपविष्टान्यथाविधि । दद्याद्दर्भासनं तेभ्यो वैश्वदेवत्यपूर्वकम् । आसनेष्विति हस्ते कुशान्न दद्यादिति सप्तम्यर्थः । दर्भांश्चैवासने दद्यान्न तु पाणौ कदाचनेत्युक्तेः । एते च वैश्वदेवे दक्षिणतः पित्र्ये वामतो द्रष्टव्याः । पितॄणामासनं दद्याद्वामपार्श्वे कुशान्सुधीः । दक्षिणे चैव देवानां सर्वदा श्राद्धकर्मणि । इति वचनात् । अथैक आसनदाने स्वधां प्रयुञ्जते स्वधाशब्दस्य प्रवर्तकत्वात् । तदयुक्तम् । तस्यासनादौ निषिद्धत्वात् तथा च हेमाद्रिपद्धतौ। पितृभ्यो निखिलं दद्यात्स्वधाकारेण धर्मवित् । अक्षय्यमासनं चैव वर्जयित्वार्घमेव च । धर्मप्रदीपेऽपि—आसनावाहनयोरर्घे तथाक्षय्येवनेजने । क्षणे स्वाहास्वधावाणी न कुर्यादब्रवीन्मनुः । तेनास्मत्पितुरमुकशर्मणोऽमुकसगोत्रस्य वसुरूपस्येदमासनमस्त्विति प्रयोगः । अत्रैके सकारवर्जं गोत्रमुच्चरन्ते । तदयुक्तम्—तत्सहितस्यैवोक्तत्वात् । तथा च—सकारेण हि वक्तव्यं गोत्रं सर्वत्र धीमता । सकारः कुतपो ज्ञेयस्तस्माद्यत्नेन संवदेदिति । ' विश्वान्देवानावाहयिष्य इति पृच्छति ' स्पष्टमेतत् । एतच्च यवानादायोङ्कृत्य निरङ्गुष्ठं द्विजहस्तं गृहीत्वा कर्तव्यम् । तथा च यमः—यवहस्तं ततो देवान्विज्ञाप्यावाहनं प्रति । शाट्यायनोऽपि—आवाहनं द्विजेचोंकारपूर्वकम् । गोभिलोऽपि—यवानादायोंकारं कृत्वेति । अत्रैकेऽङ्गुष्ठं गृहीत्वाऽऽवाहयन्ति । तदयुक्तम् । निरङ्गुष्ठं गृहीत्वा तु विश्वान् देवान् समाह्वयेदिति ब्रह्माण्डोक्तेः । ततश्च सव्योदङ्मुखो दक्षिणं जान्वाच्य ऋजुकुशानादायोमित्युक्त्वा पुरूरवार्द्रवादिविप्रयोगं कुर्यादित्यर्थः । अत्रेतत्संदिह्यते । किमर्घान्पूरयित्वावाहयेदुतावाह्य पूरयेदिति । उभयथा वचनदर्शनात् । तथा हि उमामहेश्वरसंवादे—कुशाम्बुनाभ्युक्ष्य गृहं दत्त्वासनमनुक्रमात् । निवेश्य तत्र विप्रान्वै कुर्यादर्घाभिपूरणम् । शन्नोदेव्या पयः क्षिप्त्वा यवोऽसीति यवानपि । गन्धपुष्पं च तूष्णीं स्यादथ देवान्समाह्वयेदिति पुराणसमुच्चयेऽप्यर्घपूरणं कृत्वाऽऽवाहनमुक्तम् । याज्ञवल्क्यस्त्वावाह्यार्घान्पूरयति । पाणिप्रक्षालनं दत्त्वा विष्टरार्थान्कुशानपि । आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा । यवैरन्वत्रकीर्याथ भाजने सपवित्रके । शन्नोदेव्या पयः क्षिप्त्वा यवोऽसीति यवांस्तथेति । या दिव्या इति मन्त्रेण हस्तेष्वर्घं विनिक्षिपेत् । अपसव्यं ततः कृत्वेत्यादि । सूत्रकारोऽप्यावाह्यार्घं पूरयति । अत्र विरोधः स्मृतिपुराणयोः । स्मृतेः प्राबल्यात्सूत्रोक्तत्वाच्चावाह्यार्घपूरणमित्येके । तदपरे न क्षमन्ते । स्मृतावेवार्थपूरणस्य पूर्वमुक्तत्वात् । तथा च क्रमपरा वृद्धयाज्ञवल्क्यस्मृतिः । पृच्छाद्यासनमर्घपूरणमतश्चावाहनार्घे क्रमादिति । एवं च सति दर्भानास्तीर्य विश्वान्देवानावाहयिष्य इति सूत्रयता याज्ञवल्क्यवचनेनैकवाक्यतां सूचयता मुनिनासनार्घदानानन्तरं याज्ञवल्क्योक्तकाण्डानुसमय, स्वीकृतोऽन्यत्र पदार्थानुसमय इति ज्ञापितम् । अन्यथा वाजसनेयिपरया वृद्धयाज्ञवल्क्यस्मृत्या सूत्रं विरुद्ध्येत । तथा

न्यासनं दत्त्वा वृद्धयाज्ञवल्क्यः—अर्घपात्रं समानीय कुशद्वयसमन्वितम्। शन्नोदेव्या पयः क्षिप्त्वा यवोऽसीति यवान् क्षिपेत्। गन्धपुष्पादिसंपूर्णपृच्छां कुर्याद्विचक्षणः। पूर्णमस्त्विति तैरुक्ते विश्वान्देवान् समाह्वयेत्। ततस्तु क्रमयोगेन पित्रर्थं तु नियोजयेत्। कुशाम्बुतिलसंयुक्तं तिलोसीति तिलान् क्षिपेत्। शन्नोदेव्या पयः क्षिप्त्वा शेषं पूर्ववदाचरेत्। स्वनामशर्मगोत्रैस्तु उशंतस्त्वेति वै ततः। आवाहयेत्पितॄन् भक्त्या जपेदायं तु नः पुनरिति। ततश्चासनं दत्त्वार्घं पूरयित्वा संपूर्णपृच्छां कृत्वाऽऽवाह्यार्घं दत्त्वेति वैश्वदेवकाण्डं कृत्वाऽऽसनादि पितृकाण्डं कुर्यादिति क्रमः। तथा च वैजवापोऽप्यर्घानन्तरं पदार्थानुसमयमाह—तस्योपरि कुशान्दत्त्वा प्रदद्याद्दैवपूर्वकम्। गन्धपुष्पाणि धूपं च दीपवस्त्रोपवीतकम्। इति। अन्यथा कथं दैवपूर्वमिति पदार्थानुसमयमुपक्रम्य विश्वान्देवानावाहयिष्य इत्यादिना तमेव पुनरवत्या(?)दित्यलमनल्पप्रलापेन। अथ पदार्थानुसमयकाण्डानुसमययोर्विकल्पः। विश्वान्देवानाह्वादित्यपुराणम्—विश्वेदेवाः क्रतुर्दक्षः सर्वास्विष्टिपु कीर्तितौ। नित्यं नान्दीमुखश्राद्धे वसुसत्यौ च पैतृके। नवान्नलभने देवौ कालकामौ सदैव हि। अपि कन्यागते सूर्ये श्राद्धे च धुरिलोचनौ। पुरूरवार्द्रवौ चैव विश्वेदेवाश्च पार्वणे। इति पैतृके नवान्नं लभत इति नवान्ननिमित्ते श्राद्धे, कन्यागते सूर्ये इति केवलकाम्यबुद्ध्या क्रियमाणे, उभयबुद्ध्या कृते तु पुरूरवार्द्रवावेव गोदोहनेन पशुकामस्येतिवन्नित्यकर्माश्रयणेन गुणफलविधेरिति पारिजातः। 'आवाहयेत्यनुज्ञातो विश्वेदेवास आगतेत्यनयाऽऽवाह्यावकीर्य विश्वेदेवाः शृणुतेममिति जपित्वा' आवाहयेति द्विजैराज्ञप्तो विश्वेदेवास आगतेत्यनयर्चावाह्यावकीर्य विश्वेदेवाः शृणुतेममित्यृचं जपेदित्यर्थः। अत्रावकीर्येति यद्यपि द्रव्यमन्त्रयोरनुपदेशस्तथाऽपि यवैरोषधयः समवदन्तेति मन्त्रेण च प्रदक्षिणमुदङ्मुखेनावकिरणं द्रष्टव्यम्। यथाह यमः—यवहस्तस्ततो देवान्विज्ञाप्यावाहनं प्रति। आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा। विश्वेदेवाः शृणुतेममिति जप्त्वा ततोऽक्षतान् ओषधय इति मन्त्रेण विकिरेत्तान्प्रदक्षिणमिति। अत्रावाह्य यवान्विकिरेत्ततो जप इति क्रमः। उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः। प्रदक्षिणं तु देवानां पितॄणामप्रदक्षिणमिति च। नन्वपहता इति तिलानवकीर्येत्यवकिरणेऽपहतेति मन्त्रस्य विहितत्वात्कथमोषधय इति? उच्यते, वैश्वदेवस्य स्वत एव रक्षोघ्नत्वादपहता इत्यस्य मिथ्याप्रयुक्तत्वात्। तथा च गोभिलसूत्रम्—ओषधयः समवदन्तेति। अथ मन्त्रानुपदेशात्तूष्णीमेवावकिरणम्। तथा च खादिरगृह्यम्—तूष्णीं यवानवकीर्येति। 'पितॄनावाहयिष्य इति पृष्ट्वाऽऽवाहयेति द्विजैराज्ञप्त उशन्तस्त्वेत्यनयर्चाऽऽवाह्यापहता इति तिलान् प्रदक्षिणमवकीर्यायंतुन इति जपित्वा' पितॄनिति मातामहानामप्युपलक्षणम्। ततश्चापसव्येन दक्षिणामुखो द्विगुणकुशतिलानादाय वामं जानु पातयन्नोमित्युक्त्वाऽस्मत्पितृपितामहप्रपितामहानमुकामुकशर्मणोऽमुकामुकगोत्रान्वसुरुद्रादित्यरूपानावाहयिष्य इति पृष्ट्वावाहयेति द्विजैराज्ञप्त उशन्तस्त्वेत्यनयर्चावाह्यापहता इति तिलानवकीर्यायंतु न इत्यृचं तिष्ठन् जपेदित्यर्थः। नन्वत्रापि तूष्णीमोषधय इति मन्त्रेण वावकिरणमिति चेत्, न। रक्षोघ्नत्वादवकिरणेऽपहतेति मन्त्रस्यैव ज्ञापितत्वात्। वैश्वदेवे तु स्वत एव रक्षोघ्नत्वान्नेत्युक्तम्। अत्रोदकस्पर्शः राक्षसत्वात्। अत्रैके विप्रबहुत्वे प्रतिद्विजमेकवचनप्रयोगेन पित्रादीनावाहयन्ति तत्पितॄनावाहयिष्य इति सूत्रोपदेशात्पितॄन्हविष अत्तव इति मन्त्रलिङ्गाच्चोपेक्षणीयम्। अत्रैतच्चिन्त्यते—किं मातामहश्राद्धे मन्त्रोहो भवति नवेति। तत्रैक आहुः। पितृभ्यः स्वधायिभ्यः, अत्र पितरो मादयध्वम्, आयन्तु नः पितर इत्यादि, एवं प्रदक्षिणावृत्को वृद्धौ नान्दीमुखान् पितॄन्, स्वपितृभ्यः पिता दद्यात्, नमस्येहं पितॄञ्छ्राद्ध इत्यादिश्रुतिस्मृतिवाक्येषु पितृशब्दस्यैव प्रयोगान्मातामहश्राद्धे पितृशब्दप्रयोग एव न मन्त्रोह इति। तदेतद्विचारणीयम्। यदिश्रुत्यादिवाक्यस्थपितृशब्दप्रयोगेणैव सिद्धिस्तर्ह्यस्मन्मातरस्मन्मातामहेत्यादिप्रयोगेष्वपि पितृशब्दोच्चारणमेवास्तु। अथ मन्त्रेष्वन्यथावृत्तिनिषेधो नैतेषु

प्रयोगेष्विति तर्हि मन्त्रोहप्रतिपादकानां वचनानां वैयर्थ्यापत्तिर्मन्त्राणां वान्यथाप्रयुक्तत्वमित्युभयथाऽपि मन्त्रोहसिद्धिरिति। तस्माद्यथाविहितमन्त्रोह एवेति सिद्धम्। तथा च कात्यायनः—यथार्थमूहश्चोदिते न प्रकृतावपूर्वत्वाद्विकृतौ वचनादिति । विष्णुरपि—आवाहने स्वधाकारे मन्त्रा ऊह्या विसर्जने। अन्यकर्मण्यनूह्याः स्युरेष श्राद्धविधिः स्मृतः। मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः। मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्जितमिति । अपि चैकोद्दिष्टेऽपि स एव एवं मन्त्रानूहेतैकोद्दिष्ट इति। शेषाणां मन्त्रवर्जितमिति पितृमातृमातामहव्यतिरिक्तपितृव्यभ्रात्रादीनामूह्यमन्त्रवर्जितमित्यर्थः। 'यज्ञियवृक्षचमसेषु पवित्रान्तर्हितेष्वेकैकस्मिन्नप आसिञ्चति शन्नो देवीरिति' यज्ञमर्हन्ति यज्ञियाः पलाशादयः यज्ञर्त्विग्भ्यां घखञाविति घप्रत्ययः। तथा च श्रुतिः—ते वै पलाशाः स्युरित्युपक्रम्य यदि पलाशान्न विन्देदथो अपि वैल्वाः स्युरथो खादिरा अथो औदुम्बरा एते हि वृक्षा यज्ञिया इति। ब्रह्मपुराणेऽपि—पलाशाश्वत्थन्यग्रोधप्लक्षवैकंकतोद्भवाः । काश्मर्योदुम्बरौ बिल्वाश्चन्दनः सरलस्तथा। शालश्च देवदारुश्च खदिरश्चेति यज्ञियाः। चमसाः पात्राणि अम्भसः, प्रमाणमेषां प्रयोजनापेक्षम्। अर्थात्परिमाणमिति पारिभाषकसूत्रात्। धातुमयपरिमाणं वा हीननिषेधात्। पवित्राण्यनन्तर्गर्भिणं साग्रमिति कात्यायनोक्तानि। 'पवित्रान्तर्हितेष्विति' अर्घपात्रे पवित्रं निधायोदकं क्षिपेदिति ज्ञापयति। कुशं विनोदकस्याप्रयतत्वात्। तथा च श्रुतिः—वृत्रो हवा इदं सर्वंवृत्वाशिष्य इत्युपक्रम्य तदेवासामेताभ्यां पवित्राभ्यामपहन्तीत्युपसंहारः । एकैकस्मिन्निति मन्त्रावृत्तिं दर्शयति। ततश्च पलाशादिषु पात्रेषु यथादैवतसंख्येषु दैवप्रागग्रे सव्यादिना प्रागग्रं पवित्रद्वयं पित्र्ये दक्षिणाग्रेषु दक्षिणासंस्थेष्वपसव्यादिना पवित्रत्रयं दक्षिणाग्रं निधाय शन्नोदेवीरिति मन्त्रेण प्रतिचमसं मन्त्रावृत्त्या ऋगन्ते अप आसिञ्चेदित्यर्थः। तथा च विष्णुः—दक्षिणाग्रेषु दक्षिणासंस्थेष्वपसव्यादिना आसिञ्चेच्छन्नो देवीरिति । अत्र केचिद्विवदन्ते—पवित्रकरणमनुपदेशात्तूष्णीमिति । तदयुक्तम्। मन्त्रेण विहितत्वात्। तथा च याज्ञवल्क्यः—पवित्रे स्थ इति मन्त्रेण द्वे पवित्रे च कारयेत्। नन्तर्गर्भकुशच्छिन्ने कौशे प्रादेशसंमिते । अत्रैक आहुः—पवित्रेस्थ इति मन्त्रलिङ्गस्य पवित्रे करोति कुशैः समावकीर्णाग्रैः कुशैश्छिनत्ति पवित्राभ्यामुत्पुनातीत्यादिवचनानां च पवित्रत्रये वैयर्थ्यात्पवित्रत्रये पवित्रद्वयमेव पित्र्येऽपीति। तदयुक्तम्। अथ पवित्राणिस्युरिति श्रुत्यैव प्रदेशान्तरे पवित्रत्रयस्य ज्ञापितत्वात्। चतुर्विंशतिमतेऽपि। द्वे द्वे शलाके देवानां तिस्रस्तिस्रस्तु पार्वणे। एकोद्दिष्टे शलाकैका श्राद्धेष्वर्घेषु निक्षिपेत्। यत्तु माध्यंदिनीयानां द्वे द्वे तु पवित्रे पितृकर्मणीति वचनं तन्मन्त्रेण पवित्रद्वयच्छेदनपरं न त्वर्घे पवित्रद्वयनिधानपरम्। अतश्च पवित्रेस्थ इतिमन्त्रेण द्वे पवित्रे कुशैश्छित्वान्यतृतीयेन सहार्घे निधानमिति सिद्धम्। तथा च हेमाद्रिपद्धतौ स्मृतिः—पवित्रेस्थ इति छिन्नमगर्भं यत्कुशद्वयम्। कुशत्रयेण प्रादेशमात्रं तत्स्यात्पवित्रकम् इति। अत्र यज्ञपार्श्वः। ओषधीमन्तरे कृत्वा अङ्गुष्ठाङ्गुलिपार्वणे(?)। छिन्द्यात्प्रादेशमात्रं तु पवित्रं विष्णुदैवतम्। इति। 'एकैकस्मिन्नेव तिलानावपति तिलोऽसीति' तिलानिति गन्धाद्युपलक्षणम्। एकैकस्मिन्निति प्रतिपात्रं तिलोसीति मन्त्रेण तिलानावपेदित्यर्थः। अत्र यवानामनुपदेशात्तिलप्रक्षेपो दैवपात्रेऽपीति कर्कोपाध्यायाः। नन्वेकैकस्मिन्नित्यनुवर्तमाने पुनरेकैकस्मिन्ग्रहणं किमर्थम्। उच्यते। तिलोऽसीति मन्त्रो पितॄन्प्रीणाहीति बहुवचनान्तेन पितृशब्देनैकद्रव्यत्वादनूहितः सकृन्मन्त्रः प्राप्नोतीति तन्माभूदित्येकैकस्मिन्निति पुनरुक्तम् । तथाच—शन्नो देव्या पयः क्षिप्त्वा तिलोऽसीत्यावपेत्तिलान्। आवृत्तिः प्रतिपात्रं स्यान्मन्त्रस्यात्रोह इष्यते। अतश्च मन्त्रोहोऽपि स्यादिति। निश्चितमेतदित्येवंशब्दार्थः। न च गन्धादिप्रक्षेपोऽपि मन्त्रेणेति वाच्यम्। गन्धं पुष्पं च तूष्णीं स्यादिति वचनात्। अत्र मन्त्रस्य स्वाहान्तत्वात्पित्रेऽपि स्वाहा प्रयोगः। एवमभिन्नदारुपात्राण्युक्त्वा भिन्नप्रतिप्रसवार्थमपि धातुमयपात्राण्याह—'सौवर्णराजतौदुम्बरखड्गमणिमयाना

पात्राणामन्यतमेषु' । मणिमयानि शङ्खशुक्त्यादीनि। एषां मध्ये येषु केषुचिदित्यर्थः। तथा च ब्रह्म-पुराणे, सौवर्णरौप्यताम्राणां स्फटिकं शङ्खशुक्तयः । भिन्नान्यपि नियोज्यानि पात्राणि पितृकर्मणि । हारीतोऽपि—काञ्चनेन तु पात्रेण रजतौदुम्बरेण वा। दत्तमक्षयतां याति खड्गेनार्यकृतेन तु । आर्या-स्त्रैवर्णिकाः। प्रमाणं चाह बृहस्पतिः—अष्टाङ्गुलं भवेत्पात्रं पितॄणां राजतं शुभम्। दशाङ्गुलं तु देवानां सौवर्णं ताम्रमेव चेति। औदुम्बरं ताम्रमयं संनिधानसामर्थ्यात् । तदुक्तम्—प्रसिद्धार्थस्य सांनिध्ये योऽप्रसिद्धार्थ उच्यते। यत्संनिधानसामर्थ्यात्तज्जातं योऽनुगम्यते(?)। इति वार्क्षीयस्य तु यज्ञियत्वेनैव सिद्धत्वात्। अत्र सुवर्णादिभ्यो विकारार्थेऽन्मयटौ। राजतं तु पित्र्य एव। तथा च वायुपुराणम्—तथाऽर्घपिण्डभोज्येषु पितॄणां राजतं मतम्। अमङ्गल्यं तु यत्नेन देवकार्येषु वर्जयेत्। तथा–शिव-नेत्रोद्भवं यस्मादतस्तत्पितृवल्लभम् । अमङ्गल्यं तु यत्नेन देवकार्येषु वर्जितमिति । 'यानि वा विद्यन्ते'। वाशब्दः सौवर्णाद्यभावविकल्पे। सौवर्णादिविहिताभावे विहितप्रतिषिद्धानि कांस्याश्म-मृन्मयादीनीत्यर्थः। तेषां यानि वा विद्यन्ते इति सानुशयमभ्यनुज्ञानात्। विहितप्रतिषिद्धत्वं च तेषां स्मृतिषु विस्पष्टमुक्तम्। तथा हि ब्रह्मपुराणे—कांस्यभाण्डानि वर्ज्याणि पितृदैवतकर्मणि। इति पैठी-नसिः। लोहसीसकांस्यपाषाणहीनपात्राणि भग्नपात्राणि वर्जयेदिति। तथा कांस्यरजतपर्णताम्रपात्राणि भोजनार्थमर्घार्थं चोपकल्प्याणि। बैजवापोऽपि–अश्ममृन्मयानि स्युरपि पर्णपुटास्तथेति । यानि वा विद्यन्त इति प्रतिषिद्धेतराणीति वा। एवं विहितप्रतिषिद्धानि पूर्वपक्षयित्वा सिद्धान्तमाह–'पत्रपु-टेषु वा ' वाशब्दः पूर्वसूत्रोक्तविहितप्रतिषिद्धनिषेधार्थः। तथा च वृद्धयाज्ञवल्क्यः—मृदश्मनी तथा कांस्यमारकूटादिसंभवम्। त्रपुसीसकलोहानामर्घपात्रं विवर्जयेदिति । धर्मप्रदीपेऽपि—मृत्पात्रगत-मर्घं च मृत्तिकागन्धलेपनम्। घृतधूपं च यो दद्यान्निराशाः पितरो गताः। कात्यायनोऽपि—आसु-रेण तु पात्रेण यस्तु दद्यात्तिलोदकम्। पितरस्तस्य नाश्नन्ति दशवर्षाणि पञ्चचेति। ततश्च विहित-प्रतिषिद्धेभ्यः पत्रपुटपात्राण्येव श्रेयस्कराणीत्यर्थः। यत्तु कर्कोपाध्यायैर्मृन्मयमर्घे गृहीतं तद्धस्तघटित-विषयम्। कुलालचक्रनिष्पन्नमासुरं मृन्मयं स्मृतम्। तदेव हस्तघटितं स्थाल्यादि दैविकं भवेदिति वचनात्। 'एकैकस्यैकैकेन ददाति सपवित्रेषु हस्तेषु या दिव्या इति' एकैकस्येति पित्रादिनिर्देश एकै-केनेति च पात्राणाम्। एकैकस्येत्येतावत्युक्ते एकेनैवार्घेण त्रयाणां दानं प्रसज्यते तन्निवृत्त्यर्थमाहै-कैकेनेति। अतश्चैकैकस्यैकैकेनेति न तंत्र इत्यर्थः। तथा च कात्यायनः—अर्घे क्षय्योदकेचैव पिण्ड-दानेऽवनेजने। तन्त्रस्य विनिवृत्तिः स्यात्स्वधावाचनिके जपे। एवं च सति त्रयाणामेकद्विजोपवेशन एकस्य वा त्रयोपवेशनेऽर्घपात्राणि त्रीण्येव न द्विजसंख्ययेत्युक्तम्। तथा च स्मृतिः—अर्घः स्यात्प्रार्घ-हेतुत्वाद्दातुः स्वपितृसंख्यया। पूरयेदर्घपात्राणि न विप्राणां तु संख्यया। अपि च बैजवापः—स्तीर्त्वा पितॄणां त्रीण्येव कुर्यात्पात्राणि धर्मवित्। एकैकस्मिन्वा बहुषु वा ब्राह्मणेषु यथाविधीति । स्तीर्त्वा पवित्रादिकमिति शेषः। अत्रैतत्संदिह्यते—वैश्वदेविक एकार्घः किं वा द्वाविति। उभयथा वचनदर्श-नात्। तथा हि—यज्ञियवृक्षचमसे सपवित्रक इति शाट्यायनेनैकमुक्तम्। याज्ञवल्क्येनापि—यवैर-न्ववकीर्याथ भाजने सपवित्रके इत्येकमेव। मत्स्यपुराणे तु—विश्वान् देवान् यवैः पुष्पैरभ्यर्च्यासन-पूर्वकम्। पूरयेत्पात्रयुग्मं तु स्थाप्य दर्भपवित्रके इति द्वयमुक्तम्। प्रचेतसाऽपि—एकैकस्य तु विप्राणां संख्यया विप्रस्य अर्घे पात्रे विनिक्षिपेत्। यवोऽसीति यवान् कीर्त्वा गन्धपुष्पैः सुपूजितमिति द्वय-मेव। अत्रैके कर्कादय आहुः—एकदेवताकत्वादेकमेव पात्रं दैवमिति। अन्ये तु मातामहश्राद्धे वैश्व-देवस्य पृथक्पात्रद्वयमिति। तदेतद्विचारणीयं किमत्र विकल्पः किं वा व्यवस्थेति ?। तत्र व्यवस्थेति ब्रूमः। तथा हि—वैश्वदेवश्राद्धे पक्षद्वयमुक्तम्। तन्त्रपक्षो भेदपक्षश्चेति। तत्र यदि भिन्नपक्ष एक-मित्युच्येत तदा मत्स्यपुराणवचनमनर्थकं स्यात् । अथ तन्त्रपक्ष एकमिति तदोभयवचनसार्थक्यं

स्यात् । ततश्च तन्त्रपक्ष एकं भिन्नपक्षे द्वयमिति व्यवस्थापनेन निबन्धकर्तृणामविरोध इति सिद्धम् । सपवित्रेष्विति अर्घपवित्राण्येवोच्यन्ते । हस्तपवित्राणां तु पवित्रपाणयः सर्वे इति स्मृत्यैव प्राप्तत्वात् । असाविति संबुध्यन्तनामाद्युपलक्षणम् । एष तेऽर्घ इति प्रयोगं दर्शयता स्वधानिषेधो दर्शितः । एतच्चोक्तमासनदाने । ततश्च यथाविहितसव्यादिना वामहस्ते अर्घं धृत्वा पवित्रे प्रागग्रे देवद्विजकरे दत्त्वा पादप्रभृति मूर्धान्तं प्रदक्षिणं पूजां कृत्वा यादिव्या मन्त्रेण पुरूरवार्द्रवसनामानो विश्वेदेवा एष वोऽर्घो नमम इत्यर्घं दत्त्वा, एवं पित्र्येऽपि दक्षिणाग्रपवित्राणि द्विजकरे दत्त्वा शिरःप्रभृतिपादान्तमप्रदक्षिणं पूजयित्वा या दिव्या इति मन्त्रेणार्घं पितृतीर्थेन संबन्धनामादिभिः पितरं संबोध्य दक्षिणहस्तेनैष ते अर्घोऽस्त्विति अर्घं दद्यादित्यर्थः । तथा च प्रचेताः—दत्त्वा हस्ते पवित्रं तु कृत्वा पूजां च पादतः । पादप्रभृतिमूर्धान्तं देवानां पुष्पपूजनम् । या दिव्या इति मन्त्रेण हस्तेष्वर्घं विनिक्षिपेत् । ततो वामेन हस्तेन गृहीत्वा चमसान् क्रमात् । शिरःप्रभृतिपादान्तं नमो व इति पैतृके । पितृतीर्थेन तत्तोयं दद्याद्दक्षिणपाणिनेति । अत्रैक एकद्रव्यत्वादर्घदानकर्मावृत्तौ सकृन्मन्त्रमिच्छन्ति । तत्कर्कोपाध्यायैर्निराकृतमिति उपेक्षणीयम् । 'प्रथमे पात्रे संस्रवान्समवनीय पितृभ्यः स्थानमसीति न्युब्जं पात्रं निदधाति' प्रथमं पात्रं पितृपात्रं त्रिदैवतम् । तथा च स्मृतिः—प्रथमे पितृपात्रे तु सर्वान्संभृत्य संस्रवान् । पितृभ्यः स्थानमित्युक्त्वा कुर्याद्भूम्यामधोमुखम् । दैवपात्रमिति केचित् । तन्न । पितृपात्र इति शेषात् । कात्यायनोऽपि—पितृपात्रं तदुत्तानं कृत्वा विप्रान्विसर्जयेत् । इति । संस्रवः पात्रलग्ना अवशिष्टोदकादयः । तथा च श्रुतिः—स॰ंस्रवो ह्येष खलु परिशिष्टो भवतीति । बहुत्वं कुशतिलाद्यपेक्षम् । अत्रैके देवपात्रं पितृभ्यः स्थानमसीति उत्तानं निधाय पितृपात्रं न्युब्जं विधेयमित्याहुः । अन्ये तु पितृपात्रमेवेति । तदेतद्विचारणीयम् । किं प्रतिश्राद्धं पात्रन्युब्जीकरणमुत पितृश्राद्ध एव इति । तत्र यदि प्रतिश्राद्धं तदा द्वादशदैवत्ये पात्रपञ्चकं मन्त्रविरोधश्च स्यात् । अत्र मन्त्रोहेनाविरोध इति तर्हि पितृपात्रविधानमनर्थकं स्यात् । यत्तु—प्रथमं पैतृकं पात्रं तस्मिन् पैतामहं न्यसेत् । प्रपितामहं ततो न्यस्य नोद्धरेन्न विचालयेदिति यमवचने पात्रत्रयस्यैवैकीकरणं तन्मातामहश्राद्धाभावपक्षविषयम् । दृश्यते च शाखाभेदे तच्छ्राद्धम् । तथा च विष्णुपुराणम्—प्राङ्मुखान् भोजयेद्विप्रान् देवानामुभयात्मकान् । पितृमातामहानां च भोजयेच्चेदुदङ्मुखान् । पृथक्तयोः केचिदाहुः श्राद्धस्य करणं नृप । एकत्रैकेन पाकेन वदन्त्यन्ये महर्षय इति । तदेतच्छाखाभेदेन व्यवस्थितम् । तस्मात्पितृश्राद्ध एव सर्वसंस्रवशब्दस्यासंकुचितवृत्तित्वेन सर्वसंस्रववाचकत्वात्पितृभ्यः स्थानमसीति पितृशब्दस्य पितृविषयत्वाच्च पितृपात्रमेकमेव न्युब्जमिति सिद्धम् । ततश्च पितृपात्रे देवादिसर्वपात्राणां संस्रवान्निक्षिप्य पितृद्विजवामपार्श्वे पवित्रोपर्यधोमुखं निदध्यादित्यर्थः । तथा च वृद्धयाज्ञवल्क्यः—सपवित्रं पितुः पात्रं दक्षिणाधोमुखं न्यसेत् । कात्यायनोऽपि—कुशावत्यां भूमावधोमुखं कुर्यात्तस्योपरि च कुशानिति । शौनकोऽपि—नोद्धरेत्प्रथमं पात्रं पितृणां यच्च पातितम् । आवृतास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत् । इति । उद्धरेद्यदि तत्पात्रं ब्राह्मणोऽज्ञानदुर्बलः । अभोज्यं तद्भवेच्छ्राद्धं क्रुद्धे पितृगणे गत इति । मत्स्यपुराणे—पितृपात्रं निधायाथ न्युब्जमुत्तरतो न्यसेत् । अत्रोत्तर इत्युत्तरस्यां दिशि इति कल्पतरुः । तन्न । उत्तरशब्दस्य वामवाचकत्वात् । तथा च लिङ्गम् । उत्तरतआयतना हि स्त्रीति । अपि च कात्यायनः—कुर्यान्न्युब्जं तिलैर्युक्तं दक्षिणाग्रमतः परम् । पितृपात्रं निदध्यात्तु देवपित्रोश्च मध्यतः । इति । अत्राहोशनाः—तद्गन्धादिभिः पूजयेदिति तन्न्युब्जपात्रम् । वैजवापोऽपि—तस्योपरि कुशान् दत्त्वेति । 'अत्र गन्धपुष्पधूपदीपवाससां च दानम्' अत्रेति कोऽर्थः । तत्रार्थान्तरासंभवादवसरार्थ इति कर्कादयः । तत्कथं संगतम् । अवसरस्य पाठादेव लब्धेः ।

तस्मादत्रेति पात्रेष्वित्यन्ये । तदपि कर्कादिभिरनादृतम् । अर्घानन्तरं विप्रपूजनस्य विहितत्वात् । तथा च वृद्धयाज्ञवल्क्यः—दत्त्वार्घं पूजयेच्छक्त्या गन्धधूपानुलेपनैः । मात्स्येऽपि—या दिव्ये-त्यर्घमुत्सृज्य दद्याद्गन्धादिकं ततः । इति । तस्मादत्रेति काण्डानुसमयमर्घे संसृज्य गन्धादिदाने पदार्थानुसमयं द्योतयति । ततश्चात्र गन्धादिदानं दैवपूर्वं भवतीत्यर्थः । तथा च वैजवापः—तस्योपरि कुशान्दत्वा प्रदद्याद्दैवपूर्वकम् । गन्धं पुष्पं च धूपं च दीपं वस्त्रोपवीतकम् । इति । गन्ध-श्चन्दनादिः । तथा च—चन्दनागरुकर्पूरपद्मकं कुङ्कुमं तथा । कस्तूरिकादयो गन्धाः पितॄणां तुष्टि-कारकाः । पुष्पाणि मल्लिकादीनि । तथा च स्मृतिचन्द्रिका—मल्लिकामालतीश्वेतयूथिका चम्पकं शुभम् । पिण्डीतकं कुङ्कुमं च पद्मानि जलजान्यपि । उत्पलादीनि देयानि वर्णगन्धयुतानि च । मल्लिका विचकिलः । पिण्डीतको मरुवकः । मार्कण्डेयः—जात्यश्च सर्वा दातव्या मल्लिका श्वेतयू-थिका । जलोद्भवानि सर्वाणि कुसुमानि च चम्पकम् । इति । ब्रह्माण्डेऽपि—शुक्लाः सुमनसः श्रेष्ठा-स्तथा पद्मोत्पलानि च । गन्धरूपोपपन्नानि यानि चान्यानि कृत्स्नशः । जातीविषये विरोधः । जात्यश्च सर्वा दातव्या इति । तथा च—'श्राद्धे जात्यः प्रशस्तास्युर्मल्लिका श्वेतयूथिका । तगरं मातु-लुङ्गं च पितॄणां दत्तमक्षयम् । क्रतुस्तु निषेधति—असुराणां कुले जाता जाती पूर्वपरिग्रहे । तस्या दर्शनमात्रेण निराशाः पितरो गताः । अङ्गिरा अपि—न जातीकुसुमानि न कदलीपत्रमिति । अत्रैके विकल्प इत्याहुः—विप्रपूजादौ विधिः पिण्डदानेनिषेधः पीतजातीविषयो वा निषेधः इति व्यवस्थेत्यस्मन्मतिः । तथा च वृद्धयाज्ञवल्क्यः—कुन्दं शम्भोस्तु नो दद्यान्नोन्मत्तं गरुडध्वजे । पिण्डे जातिं च नो दद्यादेवाचार्के न पूजयेत् । जातीपुष्पं तथाऽर्के वा किंशुकं करवीरकम् । पितृमूर्धनि यो दद्यात्स एव पितृघातकः । इति । वर्ज्यान्याह मत्स्यः—पद्मबिल्वकधत्तूरपारिभद्राटरूपकाः । न देयाः पितृकेष्विति । पारिभद्रो मन्दारः । अटरूपो वाशकः । शङ्खोऽपि—उग्रगन्धीन्यगन्धीनि चैत्यवृ-क्षोद्भवानि च । पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि चेति । रक्तवर्णानि जलोद्भवव्यतिरिक्तानि । जलोद्भवानि देयानि रक्तान्यपि विशेषतः । इति तेनैवोक्तत्वात् । विष्णुः—वर्जयेदुग्रगन्धीन्यग-न्धीनि कण्टकिजातानि रक्तानि पुष्पाणि सितानि सुगन्धीनि कण्टकिजान्यपि दद्यादिति । जवा-दिकुसुमं झिंटी रूपकाः सकुरुण्टकाः । पुष्पाणि वर्जनीयानि श्राद्धकर्मणि नित्यशः । जव इन्द्रपु-ष्पम् । आदिशब्दाच्छलाल्यादिरक्तानि । रुधिकार्कवर्णः । कुरुण्टिका पीताम्लानः । स्मृतिमञ्जूषा-याम्—शिरीषबिल्वधत्तूरकाञ्चनाराटरूपकम् । कर्कं च पारिभद्रं च पीतां जातिं च वर्जयेत् । धूपो गुग्गुलादिः । तथा च विष्णुधर्मोत्तरे—धूपो गुग्गुलको देयस्तथा चन्दनसारजः । अगरुश्च सकर्पूरः सतुरुष्कस्तथैव च । तुरुष्कः सिह्लकः । लवङ्गकं मरीचिः । चन्दनागुरुणी चोभे तमालोशीरपद्म-कम् । घृताक्तं मधुनाक्तं च गुग्गुलं धूपमेव च । तथा—तुरुष्कं गुग्गुलं चैव घृताक्तं युग-पद्दहेत् । घृतं न केवलं दद्याद्दुष्टं वा तृणगुग्गुलम् । तृणगुग्गुलुः सर्जरसः । घृतधूपं च यो दद्यान्नि-राशाः पितरो गताः । कात्यायनः—श्राद्धे धूपं प्रयत्नेन दद्याङ्गं मधुमिश्रितम् । यद्वादगुरुजं वापि पद्मकं देवदारुजमिति । वर्ज्यान्याह विष्णुः—जीवजं च सर्वत्र धूपार्थे इति । जीवजं कस्तूर्यादि । दीपो घृतादिद्रव्येण । तथा च मरीचिः—घृताद्वा तिलतैलाद्वा नान्यद्रव्यात्तु दीपकम् । नान्यद्रव्येति वसादिद्रव्यनिषेधो न कुसुम्भादितैलानाम् । घृतेन दीपो दातव्यस्त्वथवाऽप्यौषधीरसैः । वसामेदो-द्भवं दीपं प्रयत्नेन विवर्जयेदिति वचनात् । वासः कार्पासादि । तथा च—कौशेयं क्षौमकार्पासं दुकूलमहतं तथा । श्राद्धेष्वेतानि यो दद्यात्कामानाप्नोति पुष्कलानिति । चकारो यज्ञोपवीततु-लस्यादिपत्रसमुच्चयार्थः । तथा च—चम्पकं शतपत्रं च भृङ्गराजं च वालकम् । तुलसीमालतीपत्रं पितॄणां तुष्टिकारकम् । तुलसी निषिद्धेति स्मृत्यर्थसारः । तत्रार्घादौ निषेधः, पिण्डार्चायां विधि-

रित्यविरोधः इति। कश्चित्प्रेतश्राद्धशाकविषयो निषेध इत्यर्थः। दीपवस्त्रोपवीतकमित्युक्तम्। वस्त्रालाभे यज्ञोपवीतकमिति खादिरम्। वृद्धयाज्ञवल्क्योऽपि—तुलसीं भृङ्गराजं च अपामार्गं शमी तथा। पितृमूर्धनि यो दद्यात्स याति परमां गतिमिति। अन्यत्स्मृत्यन्तरेभ्यो द्रष्टव्यम्। अत्रैतत्संदिह्यते—किं गन्धादिदानं तन्त्रेणोत प्रतिपुरुषमिति। उभयथा वचनदर्शनात्। तथा हि शाट्यायनः—एष ते गन्ध एतत्ते पुष्पमेष ते धूप एतत्ते आच्छादनम्। विष्णुरपि—नमो विश्वेभ्यो देवेभ्यः इत्येवमादौ प्राङ्मुखयोर्निवेद्य पित्रेपितामहायप्रपितामहाय नामगोत्रेभ्य उदङ्मुखेभ्य इति। ब्रह्मपुराणे—इदं वः पुष्पमित्युक्त्वा पुष्पाणि च निवेदयेत्। अयं वो धूप इत्युक्त्वा तदग्रे तु दहेत्ततः। अयं वो दीप इत्युक्त्वा हृद्यं दीपं निवेदयेत्। अनडुल्ग्नं यद्वस्त्रं विभवे सति तद्युगम्। शांवोऽपि—इदं वो ज्योतिरित्युक्त्वा दीपं तेषां प्रदर्शयेत्। नो ज्योतिरस्ति ते सर्वे वक्तव्यं तदनन्तरम्। इति। अत्र गन्धपुष्पेत्यादिसूत्रम्। अर्घेऽक्षय्योदक इति कात्यायनेनार्घोदिव्यतिरिक्त-गन्धादौ तन्त्रमेवोक्तम्। एवं वचनविप्रतिपत्तौ ह्येक आहुः। सूत्रोक्तत्वादयं वो धूप इति वःशब्द-निर्देशाच्च गन्धादौ तन्त्रप्रतीतिरस्मत्पितामहामुकशर्मन्नस्मत्पितरमुकशर्मन्नित्येवं गोत्राद्युच्चार्य एष वो गन्धः स्वधेति वाक्यं सूचितमित्यन्ये। तदेतद्विचारणीयम् यद्यग्नीषोमवन्मिलितदेवतात्वभयात्पार्थक्ये-न सर्वत्र दानमित्युच्येत तदार्घोदिव्यतिरिक्तपदार्थेषु विहितस्य तन्त्रस्य गोत्राणामासने प्रोक्तमि-त्यादिवाक्यानां च वैयर्थ्यं स्यात्। अथासनादिदानेषु तन्त्रस्य विहितत्वात् गन्धादिदानेऽपि तन्त्र-मित्युच्यते तर्हि शाट्यायनाद्युक्तपदार्थे तस्य गोत्राणामासने प्रोक्तमित्यादिवाक्यानां च वैयर्थ्यमित्यु-भयथाऽपि संदेह आपद्यते। तस्माद्यत्रान्याय(?)स्तंत्रविधानं तत्र तन्त्रं यत्र पार्थक्यं तत्र तथैवेत्युभय-विध्योः सिद्धिरिति। गन्धादिपूभयविधानस्य दृश्यमानत्वादुभयविधं वाक्यं कर्तव्यं गन्धादिव्यति-रिक्तेषु तन्त्रमिति युक्तम्। अतश्चास्मत्पितरमुकशर्मन्नस्मत्पितामहामुकशर्मन्नस्मत्प्रपितामहामुकशर्म-न्नित्याद्युच्चारणेन पृथगुद्दिश्य वाक्यान्ते एष वो गन्धः स्वधेत्युभयविधं वाक्यं युक्तमित्याभाति। गन्धादयश्च पृथक्पृथक् देया इत्याह कात्यायनः। गन्धान्ब्राह्मणसात्कृत्वा पुष्पाण्यृतुभवानि च। धूपं चैवानुपूर्व्येण अग्नौकुर्यादतः परम्। इदं वः पुष्पमित्युक्त्वेत्यादिब्रह्मपुराणवचनं दर्शितम्। एवं गन्धादि दत्त्वाचम्य संपूर्णपृच्छां कृत्वा संस्रवोदकेन पुत्रादिकामो मुखं प्रमार्ष्टि। तथा च कात्यायनः—श्रा-द्धारम्भावसाने च पादशौचे तथाऽर्चने। विकिरे पिण्डदाने च षट्सु चाचमनं स्मृतम्। कात्यायनः—संस्रवान्समवनीयपुत्रकामो मुखमनक्तीति ॥ २ ॥ ॥ * ॥ ॥ * ॥

उद्धृत्य घृताक्तमन्नं पृच्छत्यग्नौ करिष्य इति कुरुष्वेत्यनुज्ञातः पिण्डपितृ-यज्ञवद्धुत्वा हुतशेषं दत्त्वा पात्रमालभ्य जपति पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहेति वैष्णव्यर्चा यजुषा वाऽङ्गु-ष्ठमन्नेऽवगाह्यापहता इति तिलान्प्रकीर्योष्णꣳ स्विष्टमन्नं दद्याच्छक्त्या वाऽश्नत्सु जपेद्व्याहृतिपूर्वां गायत्रीꣳ सप्रणवाꣳ सकृत्त्रिर्वा राक्षोघ्नीः पित्र्य-मन्त्रान्पुरुषसूक्तमप्रतिरथमन्यानि च पवित्राणि तृप्तान् ज्ञात्वाऽन्नं प्रकीर्य सकृत्सकृदपो दत्त्वा पूर्ववद्गायत्रीं जपित्वा मधुमतीर्मधु मध्विति च तृप्ताः स्थेति पृच्छति तृप्ताः स्म इत्यनुज्ञातः शेषमन्नमनुज्ञाप्य सर्वमन्नमेकतो-

द्धृत्योच्छिष्टसमीपे दर्भेषु त्रींस्त्रीन् पिण्डानवनेज्य दद्यादाचान्तेष्वित्येक आचान्तेषूदकं पुष्पाण्यक्षतानक्षय्योदकं च दद्यादघोराः पितरः सन्तु सन्त्वित्युक्ते गोत्रं नो वर्धतां वर्धतामित्युक्ते दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च । श्रद्धा च नो माव्यगमद्बहुधेयं च नोऽस्त्वित्याशिषः प्रतिगृह्य स्वधावाचनीयान्त्सपवित्रान् कुशानास्तीर्य स्वधां वाचयिष्य इति पृच्छति वाच्यतामित्यनुज्ञातः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्यतामित्यस्तु स्वधेत्युच्यमाने स्वधावाचनीयेष्वपो निषिञ्चति ऊर्ज्जमित्युत्तानं पात्रं कृत्वा यथाशक्ति दक्षिणां दद्याद् ब्राह्मणेभ्यो विश्वेदेवाः प्रीयन्तामिति दैवे वाचयित्वा वाजेवाजेवतेति विसृज्यामावाजस्येत्यनुव्रज्य प्रदक्षिणीकृत्योपविशेत् ॥ ३ ॥ ॥ ❀ ॥

( कर्कः )—'उद्धृत्य…रिष्य इति' वैश्वदेवादन्नादुद्धृत्य घृतेनाक्तं, ततः पृच्छति अग्नौ करिष्य इत्यनेन मन्त्रेण । श्राद्धार्थं पृथक्पाकमिच्छन्त्यपरे । पिण्डदानेऽनुज्ञावचनात् । स्मृत्यन्तरेऽपि दर्शयति श्राद्धोत्तरकालं, ततो गृहबलिं कुर्यादिति । एतश्च पृथक् पाक एवोपपद्यते, यदि वैश्वदेवान्नेन श्राद्धमपि स्यात् ततः पूर्वं गृहबलिना भवितव्यम् । तस्मात् पृथक्पाक इति, तदेतदपेशलम् । सर्वार्थस्य विद्यमानत्वात् । पृथक्पाकस्यावचनात् । तथा च स्मृतिः—पितृयज्ञं तु निर्वृत्य विप्रश्चन्द्रक्षयेऽग्निमान् । पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकमिति । पितृयज्ञशब्देनोदकतर्पणादि पञ्चमहायज्ञाख्यं कर्मोच्यते । तदेकदेशवचनात् तत्संबन्धित्वादितरेऽपि लक्ष्यन्ते । केचित्तु पितृयज्ञं दार्शिकमभिवदन्ति । तदसत् । न हि पितृयज्ञः सः । किं तर्हि पिण्डपितृयज्ञः सः । तस्मात् पितृयज्ञं निर्वर्त्येति पञ्चमहायज्ञान् कृत्वेत्यर्थः । अतो वैश्वदेवादन्नात श्राद्धमपि कर्तव्यम् । यत्त्वनुज्ञावचनं, सोऽदृष्टार्थोऽन्नसंस्कारः । तृप्तिप्रश्नवत् । यच्च श्राद्धोत्तरकालं गृहबलिर्न स वैश्वदेवः । किं तर्हि अन्य एव वास्तुदेवताभ्यो वैश्वदेवव्यतिरेकेणेति । 'कुरु…पात्रमिति' कुरुष्वेति ब्राह्मणैरनुज्ञातः पिण्डपितृयज्ञवदावसथ्ये जुहोति । पिण्डपितृयज्ञवद्ग्रहणं न कर्तव्यम् । पिण्डपितृयज्ञवदुपचार इत्युक्तत्वात्, तस्मात्परिस्तरणादि यथासंभवेतिकर्तव्यतापरिसंख्यानार्थं द्रष्टव्यम् । हुतशेषं दत्वा, विशेषानवगमात्सर्वेभ्यो देयम् । पात्रमालभ्य पृथिवी त इत्यमुं मन्त्रं जपेत् । आलभ्य मन्त्रः । न मन्त्रान्ते आलम्भनम् । पात्रस्यैवोद्दिश्यमानत्वात् प्रतिपात्रमालम्भनम् । 'वैष्णव्य…दद्यात्' नियताक्षरपादावसाना ऋगित्युच्यते । अनियताक्षरपादावसानं यजुः । तयोरन्यतरेण पात्रस्थितेऽन्ने अङ्गुष्ठावगाहनं कर्तव्यम् । अपहता इत्यनेन मन्त्रेण ब्राह्मणानामग्रतस्तिलान् प्रकिरेत् । रक्षोघ्नत्वात्, उदङ्मुखानाम् । अविशेषादितरेषामपीतिचेत् । न । स्वत एव रक्षोघ्नत्वात्तेषाम् । उष्णं स्विष्टमन्नं देयम् उष्णग्रहणं न कर्तव्यं प्रतिषिद्धत्वादितरस्य । तस्माद्यत्पर्युषितमन्नाद्यं तत्प्रतिषेधायेदमुच्यते । तच्चैतत् । यवगोधूमजं सर्वं पयसश्चैव विक्रिया । तत्पर्युषितमप्याद्यं स्नेहाक्तं चैव यद्भवेत् । अपरे त्वन्यथा वर्णयन्ति, यावदुष्णं भवेदन्नं तावद्देयमिति । 'शक्त्या वा' स्विष्टाभावे शक्त्या दद्यात् । 'अश्न…त्राणि' प्रणवेन महाव्याहृतिभिश्च त्रिर्जपेद्गायत्रीं सकृद्वा, कृणुष्व पाज इति

रक्षोघ्नीः पञ्च, पित्र्यमन्त्रान् अग्नये कव्यवाहनायेत्यादीन् । पुरुषसूक्तं सहस्रशीर्षा इति षोडशर्चम् । अप्रतिरथम् आशुः शिशान इति सप्तदश । अन्यानि च पवित्राणि जपेत् रुद्रप्रभृतीनीति । 'तृप्ता…ष्विति च' तृप्तान् ज्ञात्वा ब्राह्मणानामग्रतोऽन्नं प्रकिरेत् । सकृत्सकृदपो दद्यात् । वीप्सा ब्राह्मणापेक्षया । गायत्रीं सप्रणवां सव्याहृतिकां सकृत् त्रिर्वा जपित्वा । मधुमतीरिति मधुवाता इति तिस्र ऋच उच्यन्ते । मधु मध्विति च त्रिः । एतच्च केचित् द्विरुच्चारयन्ति, एतावदुपदेशात् । तदयुक्तम् । यतः प्रावर्गिकस्य मन्त्रस्यायमुपदेश इति । तस्मात् त्रिरुच्चारणम् । 'तृप्ताः स्थेति पृच्छति' ब्राह्मणान् पङ्क्तिमूर्धन्यं वा । केचित् तृप्तिप्रश्नस्य तृप्तिसंवेदनार्थत्वात्सर्वे प्रष्टव्या इति मन्यन्ते । तदन्याय्यम् । अदृष्टार्थत्वात् प्रश्नस्य । कथमदृष्टार्थता । तृप्तिसंवेदनस्य प्रयोजनाभावात् । अतृप्तेभ्यः पुनर्दीयत इति चेन्न । उन्मुक्तपात्रत्वात् । यच्च सकृत्सकृदपोदानं तत्पात्रोन्मोचनायैव । तस्मादनियम इत्यपरे । तस्मिन्पक्षे तृप्ताः स्थेति बहुवचनं पूजार्थं द्रष्टव्यम् । अत्रोच्यते । सत्यपि धर्ममात्रत्वे बहुवचनान्तोपदेशात्सर्वे प्रष्टव्याः, अवगमात् । अवगम्यते हि मन्त्रोच्चारणबलाद्बहुत्वम् । नचावगम्यमानोऽर्थः शक्योऽपनेतुम् । तस्मात्सर्वे प्रष्टव्याः । यत्तु पङ्क्तिमूर्धन्यं पृच्छतीति तदबहुवचनान्तेषु कृतार्थम्, अग्नौ करिष्य इत्येवमादौ । चिन्तायाः प्रयोजनं सर्वेषां प्रतिप्रश्नः । 'तृप्ताः…द्यात्' तृप्ताः स्म इति ब्राह्मणैरनुज्ञातः शेषमन्नमनुज्ञाप्य शेषस्यान्नस्यानुज्ञां दापयित्वा सर्वमन्नमेकस्मिन्पात्रे उद्धरेत् । स चायं सर्वशब्दः शालिसूपापूपापेक्षया, न तु यावत्परिमाणं किंचित्सिद्धं तत्सर्वमिति । उच्छिष्टसमीप इति स देशो लक्ष्यते, नोच्छिष्टमेव प्रतिषिद्धत्वात्तस्य । दर्भेषु त्रींस्त्रीन् पिण्डानवनेज्य दद्यादिति दर्भग्रहणमिहोपमूलसकृदाच्छिन्नोपलक्षणार्थम् । पिण्डपितृयज्ञवदुपचार इति सूत्रितत्वात् । परिसंख्यानार्थमिति चेन्न । उच्छिष्टसमीपोपदेशात् । त्रींस्त्रीन् पिण्डानिति वीप्सा मातामहविषया । 'आचान्तेष्वित्येके' उभयशास्त्रत्वाद्विकल्पः । 'आचान्तेषूदकं पुष्पाण्यक्षतानक्षय्योदकञ्च दद्यादित्येवमादि—बहुदेयञ्च नोऽस्तु' इत्येवमन्तं सूत्रम् । आचान्तेषु ब्राह्मणेषु तेभ्य उदकादिदानम् । तत्र पूर्वं दैवे । ततोऽपसव्यं पित्र्ये । पित्र्ये अपि केचित्सव्येनेच्छन्ति दानसंयोगात् । तन्न । पिण्डपितृयज्ञवदुपचार इति ह्युपदेशात् । अक्षय्योदकदानं तु पित्र्य एव औचित्यात् । दैवस्य स्वत एव रक्षोघ्नत्वात् । अघोराः पितरः सन्त्वितीमं मन्त्रमुदाहरेत् । सन्त्विति प्रत्युक्ते गोत्रं नो वर्धतामित्याह वर्धतामित्युक्ते दातारो नोऽभिवर्धन्तामिति ब्रूयात् । 'आशि…च्छति' स्वधावाचनीया नाम कुशाः, ते च सपवित्राः साग्रा भवन्तीत्यर्थः । 'वाच्य…तृभ्य इति' इमं मन्त्रमुदीरयेत् । 'अस्तु स्व…त्यूर्जमिति' अस्तु स्वधेति ब्राह्मणैरुच्यमाने स्वधावाचनीयेषु कुशेष्वपो निषिञ्चेत् ऊर्जमितिमन्त्रेण । 'उत्तानं…णेभ्यः' निगदव्याख्यातम् । 'विश्वेदे…सृज्य' वाजे वाजे वत इत्यनेन मन्त्रेण विप्रान् विसर्जयेत् । 'आमावाजस्येति' अनेन अनुव्रजेत् । 'प्रदक्षिणीकृत्य' नमस्कृत्य च 'उपविशेत्' ॥ ३ ॥

(गदाधरः)—'उद्धृ…रिष्य इति' वैश्वदेवादन्नादुद्धृत्य घृताक्तमन्नं घृतप्लुतं पात्रान्तरे कृत्वा ततः पृच्छति, अग्नौ करिष्य इत्यनेन मन्त्रेण । प्रश्नस्वरूपनिर्देशार्थं इतिकारः । अतश्च पर्यायान्तरेण प्रश्नाभावः । घृताक्तमिति निष्ठा भूतेऽर्थे । ततश्चाधिश्रितस्यैवाभिघारणम् । श्रुतिः । ताधिश्रयति तस्मिन्नधिश्रित आज्यं प्रत्यानयत्यग्नौ वै देवेभ्यो जुह्वत्युद्धरन्ति मनुष्येभ्योऽथैवम्पितॄणामिति पिण्डपितृयज्ञे हेतूपन्यासात् पित्र्यत्वस्यात्रापि तुल्यत्वात् । घृताक्तग्रहणं सूपशाकादिनिवृत्त्यर्थम् । तथा च विष्णुपुराणे—जुहुयाद्व्यञ्जनक्षारवर्जमिति । 'कुरुष्वे…स्वाहेति' ततः पङ्क्तिमूर्धन्येन सर्वैर्वा कुरुष्वेत्यनुज्ञातः पिण्डपितृयज्ञवद्धुत्वा हुतशेषं ब्राह्मणभाजनेषु दत्त्वा पात्रमालभ्य समन्तात्स्पृष्ट्वा पृथिवीतइति मन्त्रं जपेत् । पात्रमालभ्य जपः, न तु मन्त्रान्ते आलभेत, पात्रस्योद्देश्यमानत्वात्प्रतिपात्रमालम्भनम् ।

पिण्डपितृयज्ञवदुपचार इत्यनेन पिण्डपितृयज्ञातिदेशश्चोक्तः, पुनः पिण्डपितृयज्ञग्रहणं परिस्तरणादिपदार्थनिवृत्त्यर्थं द्रष्टव्यम्। होममात्रस्यात्रातिदेशः। स चायमग्नौकरणहोमः साग्निनाऽऽवसथ्येऽग्नौ कर्तव्यः। तथा च याज्ञवल्क्यः—कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही। दायकालाहृते वाऽपि श्रौतं वैतानिकाग्निष्विति। स्मार्तमत्र श्राद्धं तदङ्गभूतः अग्नौकरणहोम आवसथ्येऽग्नौ भवति। न च प्रकृतिविकृतिभावेनास्य श्रौतत्वम्। कार्यातिदेशात्। स्वरूपातिदेशे तु अवहननफलीकरणपूर्वकचर्वादिप्रवृत्तिरपि स्यात्। कार्यातिदेशे तु पुनरितिकर्तव्यतामात्रमेव प्राप्नुयात्। अतः स्मार्तत्वादावसथ्याग्नावेव होमः। आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः, इति यन्मार्कण्डेयेनोक्तं तत्सर्वाधानपक्षे ज्ञातव्यम्। आहृत्य दक्षिणाग्निं तु होमार्थं वै प्रयत्नतः। अग्न्यर्थं लौकिकं वापि जुहुयात्कर्मसिद्धये, इति वायुपुराणीयमपि औपवसथ्याहरणपक्षे वेदितव्यम्। अग्न्यभावे मनुराह। अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्। यो ह्यग्निः स द्विजो विप्रैर्मन्त्रदर्शिभिरुच्यत इति। कात्यायनः—पित्र्ये यः पङ्क्तिमूर्द्धन्यस्तस्य पाणावनग्निकः। कृत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निक्षिपेदिति। द्विजाभावे मत्स्यपुराणे। अग्न्यभावे तु विप्रस्य पाणौ वाऽथ जलेऽपि वा। अजकर्णेऽश्वकर्णे वा गोष्ठे वाऽथ शिवान्तिके इति। पाणिहोमपक्षे अनुज्ञावचने न स्तः प्रतिकृतित्वात्। हुतशेषदाने विप्रतिपत्तिः। हुतशेषानुल्लेखात्साधारण्याद्दैवे पित्र्ये च देयमिति कर्काचार्यमतम्। कल्पतरुहेमाद्रिमिताक्षराकाराणां मते पित्र्य एव। एतदुभयं समूलम्। शाट्यायनिः। हुतशेषं पूर्वं दैवे दत्वा पश्चात्पित्र्ये दद्यादिति। यमः। अग्नौकरणशेषं तु पित्र्ये तु प्रतिपादयेत्। प्रतिपाद्य पितॄणां तु न दद्याद्वैश्वदेविके इति। धर्मप्रदीपके—अग्न्यभावे तु विप्रस्य हस्ते हुत्वा तु दक्षिणे। शेषयेत्पितृविप्रार्थं पिण्डार्थं शेषयेत्तत इति। पात्रमालभ्य जपतीत्यत्र पात्रस्थान्नालम्भ इति केचित्। तदतीवमन्दम्। यथा 'गार्हपत्यमुत्तरेणोदपात्रं निधायालभते' इत्यत्र कर्काचार्यैः पात्रालम्भ उक्तस्तथाऽत्रापि पात्रालम्भ एव। ब्रह्मपुराणे विशेषः। दक्षिणं तु करं कृत्वा वामोपरि निधापयेत्। दैवं पात्रमथालभ्य पृथिवी ते पात्रमुच्चरन्। दक्षिणोपरि वामं च कृत्वा पित्र्यपात्रस्यालम्भनमिति। पृथिवी ते पात्रमित्यस्यार्थः। हे अग्नौकरणशेष ते तव पात्रम् आधारः पृथिवी विश्वाधारभूता अपिधानं द्यौः आकाशं त्वाममृतं हुतशेषं ब्राह्मणस्य मुखे जुहोमि। किंलक्षणे अमृते अभक्ष्यभक्षणादिभिरदूषित इत्यर्थः। ब्राह्मणस्य मुखे अग्निसदृशे त्वाममृतञ्जुहोमीति वाक्यार्थः। ब्राह्मणस्याग्निसदृशत्वमाहापस्तम्बः। पितरोऽत्र देवता ब्राह्मणस्त्वाहवनीयार्थे इति। 'वैष्ण' 'न्विकीर्य' वाशब्दो विकल्पार्थः। नियताक्षरपादावसाना ऋक्। अनियताक्षरपादावसानं यजुरुच्यते। अत्र ऋग् इदं विष्णुः। विष्णो हव्यं रक्षस्वेति यजुः। इदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेदिति वचनात् तयोरन्यतरेण ब्राह्मणभाजनस्थिते अन्ने द्विजाङ्गुष्ठमधोमुखं निवेश्यापहता इति मन्त्रेण ब्राह्मणानामग्रतो भूमावेव तिलान्प्रकिरेत्। रक्षोघ्नत्वादुदङ्मुखानामिति कर्कः। अविशेषादितरेषामपीति केचित्। तन्न। स्वत एव रक्षोघ्नत्वात्तेषाम्। परिवेषणमाह—'उष्णमन्नं स्विष्टमन्नं दद्यात्' यावदुष्णं भवेदन्नं तावद्देयम्। स्विष्टं यद् ब्राह्मणाय प्रेताय कर्त्रे वा रोचते। अन्नं भक्ष्यभोज्यलेह्यचोष्यपेयात्मकं पञ्चविधम्। यद्यप्यत्र सूत्रकृता सामान्येनोक्तमन्नं दद्यादिति, तथापि स्मृत्यन्तराद्वविष्यं, व्रीहिशालियवगोधूममुद्गमाषमुन्यन्नकालशाकशुण्ठीमरिचहिङ्गुगुडशर्कराकर्पूरसैन्धवसंभारपनसनारिकेलकदलीवदरगव्यपयोदधिघृतपायसमधुमांसप्रभृतीनि दद्यात्। सस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते। आमान्नं वितुषं ज्ञेयं पक्वमन्नमुदाहृतमिति परिभाषणात्केचिदत्र पक्वमेवान्नमित्याहुः। परिवेषणं तूभाभ्यामपि हस्ताभ्यामादाय कुर्यात्। तदुक्तं मनुना—उभाभ्यामुपसंगृह्य स्वयमन्नस्य वर्द्धितमिति। विशेषमाह—कार्ष्णाजिनिः—अपसव्येन कर्तव्यं पित्र्यं कृत्यमशेषतः। अन्नदानादृते सर्वमेवं मातामहेष्वपीति। अपसव्येन यस्त्वन्नं ब्राह्मणेभ्यः प्रयच्छति।

विप्रामश्नन्ति पितरस्ते च सर्वे द्विजोत्तमा इति । तदेतद्दानं परिवेषणमेव । 'शक्त्या वा' स्विष्टान्नाभावे यदन्नमेव शक्त्या दातुं शक्यते तद्देयमित्यर्थः । अस्मिन्समये अन्नसंकल्पः कार्यः । तत्रैवं प्रयोगः । इदमन्नं यद्दत्तं यच्च दास्यमानं तृप्तिपर्यन्तं तत्सर्वं विश्वेभ्यो देवेभ्यः स्वाहा । ततोऽमुकसगोत्रेभ्योऽस्मत्पितृपितामहप्रपितामहेभ्योऽमुकामुकशर्मभ्यो वसुरुद्रादित्यस्वरूपेभ्यः इदमन्नं यद्दत्तं यच्च दास्यमानं तृप्तिपर्यन्तं तत्सर्वं तेभ्यः स्वधेति । मातामहानामप्येवं संकल्पं कुर्यात् । यद्यप्यत्र ब्राह्मणहस्तेषूदकदानमाम्नातं नास्ति, तथापि शाखान्तरसूत्रात्कर्तव्यम् । द्विजैश्च पर्युक्षणादिप्राणाहुत्यन्ताः सर्वेऽपि भोजननियमा विधेयाः । केवलं भूमौ बलिहरणमेव न कार्यम् । तत्र बलिहरणे महादोषश्रवणात् । 'अश्नत्सु...चित्राणि' एकवारमिति सकृत्, वारत्रयमिति त्रिः । अत्र संख्याभ्यावृत्तिगणनेऽर्थे द्वित्रिचतुर्भ्यः सुच् इति सूत्रेण कृत्वसुचोऽपवादत्वेन त्रीत्यस्याग्रे सुच् प्रत्ययः । एकस्य सकृच्चेति सूत्रेणैकस्य सकृदादेशः । सुच् प्रत्ययश्चोक्तार्थे । अश्नत्सु ब्राह्मणेषु व्याहृतिपूर्वां गायत्रीं सप्रणवां सकृत्त्रिर्वा जपेत् संहितास्वरेण पठेत् । तत्रायं क्रमः । प्रणवं प्राक् प्रयुञ्जीत व्याहृतीस्तदनन्तरम् । सावित्रीं चानुपूर्व्येण ततो वर्णान्समुच्चरेत् राक्षोघ्नीः कृणुष्व पाज इत्याद्याः पञ्चर्चः । पित्र्यमन्त्रानुदीरतामवर इत्यादिकास्त्रयोदशर्चः । पुरुषसूक्तं सहस्रशीऽर्षेत्यादिकाः षोडशर्चः । अप्रतिरथम् आशुः शिशान इत्याद्याः सप्तदशर्चः द्वादशर्चो वा । अन्यानि रुद्रप्रभृतीनि । अग्नये कव्यवाहनाय स्वाहेत्यादीन्पित्र्यमन्त्रान् जपेत् । अत्र च व्यपदेशस्तानस्वरबाधनार्थः । मनुः—स्वाध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैवहीति । मत्स्यपुराणे विशेषः—ब्रह्मविष्ण्वर्करुद्राणा स्तोत्राणि विविधानि च । इन्द्रेशसोमसूक्तानि पावमानीश्च शक्तितः । बृहद्रथन्तरं तद्वज्ज्येष्ठसाम सरौरवम् । मण्डलब्राह्मणं तद्वत्प्रीतिकारि च यत्पुनः । विप्राणामात्मनश्चैव तत्सर्वं समुदीरयेत् । इन्द्रादिसूक्तानि च ऋग्वेदे प्रसिद्धानि । पुनन्तुमेत्याद्याः पावमान्यः । त्वामिद्धि हवामह इत्यस्यामृचि गीयते यत्तद् बृहत्साम । अभित्वाशूरनोनुम इति रथन्तरम् । मूर्द्धानन्दिव इति ज्येष्ठसाम । पुनानः सोमेति रौरवम् । ऋचं वाचमिति शान्तिकाध्यायः । यदेतन्मण्डलमित्यग्निरहस्ये मण्डलब्राह्मणं प्रसिद्धम् । इयं पृथिवीति बृहदारण्यके मधुब्राह्मणम् । गरुडपुराणे—यो विष्णुहृदयं मन्त्रं श्राद्धेषु नियतः पठेत् । पितरस्तर्पितास्तेन पयसा च घृतेन च । चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु । यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम्, इति विष्णुहृदयमन्त्रः । ओ श्रावयेति चत्वारि अक्षराणि, अस्तु श्रौषडिति चत्वारि, यजेति द्वे, ये यजामहे इति पञ्च, वौषडिति द्वे, एतैर्यो हूयते स यज्ञपुरुषो विष्णुर्मम प्रसीदत्वित्यर्थः । एतदनुसारि शतपथे वाक्यम् । तदेतदद्य ज्ञानस्यायातयामो श्रावयेत्यारभ्य ओश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहे इति पञ्चाक्षरं द्व्यक्षरो वषट्कार इति । उक्तजपासंभवे मत्स्यपुराणे । अभावे सर्वविद्यानां गायत्रीजपमाचरेदिति । 'तृप्तान्...श्विति च' तृप्तान्ब्राह्मणान् ज्ञात्वा ब्राह्मणानामग्रतोऽन्नं विकिरेदिति । मनुः—सार्ववर्णिकमन्नाद्यं सन्नीयाप्लाव्य वारिणा । परिक्षिपेद् भुक्तवतामग्रतो विकिरन् भुवि । बृहस्पतिः । सोदकं विकिरेदन्नं मन्त्रं चेमं समुच्चरेत् । अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम । भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिमिति । तत्रैवं सर्वमन्नमेकत्र पात्रे कृत्वोदकं निषिच्याचामेत् । ब्राह्मणानामग्रतोऽन्नं प्रकिरेदिति कर्काचार्याः । पङ्क्तिमूर्द्धन्यस्योत्तरदिग्भागे अरत्निमात्रे विकिरं दद्यादिति हेमाद्रिः । तीर्थश्राद्धे विकिराभावः । सकृत्सकृदिति वीप्सा ब्राह्मणापेक्षया, तेन वैश्वदेविकद्विजपूर्वकमेकैकस्य पाणौ तु उत्तरापोशनार्थं सकृत्सकृदुदकं दद्यात् । पूर्ववदिति प्रणवेन व्याहृतिभिश्च सर्वां गायत्रीं सकृत्त्रिर्वा जपेत् । मधुमतीरिति मधुवाता इति तिस्र ऋच उच्यन्ते, मधुमध्विति चेति च मधुमधुमध्वित्येवं त्रिरुच्चारणं कर्त-

व्यम् । 'तृप्ताः स्थेति पृच्छति' तृप्ताः स्थ इत्येवं ब्राह्मणान्प्रति पृच्छति प्रश्नं करोति । अत्र बहुवचनात्सर्वे प्रष्टव्याः । 'तृप्ताः⋯दद्यात्' ततस्तैर्द्विजैस्तृप्ताः स्म इत्यनुज्ञातः शेषमन्नमनुज्ञाप्य उर्वरितस्यान्नस्यानुज्ञां दापयित्वा सर्वमन्नं सर्वप्रकारं माषान्नवर्जं पिण्डपर्याप्तमेकस्मिन्पात्रे उद्धरेत् दर्भेषु त्रींस्त्रीन्पिण्डानिति दर्भग्रहणमुपमूलसकृदाच्छिन्नोपलक्षणार्थम् । त्रींस्त्रीनिति वीप्सा मातामहाभिप्रायेण । पिण्डपितृयज्ञवदुपचार इति सूत्रितत्वादत्र पिण्डपितृयज्ञवत्पिण्डदानम् । तेनोल्लिखत्यपहता इत्यपरेण चोल्मुकं परस्तात्करोतीत्यारभ्य वयस्युत्तरे यजमानलोमानि वेत्यन्तं लभ्यते । अत्राह याज्ञवल्क्यः—सर्वमन्नमुपादाय सतिलं दक्षिणामुखः । उच्छिष्टसन्निधौ पिण्डान्दद्याद्वै पितृयज्ञवदिति ॥ ॥ अत्र पदार्थक्रमः । उल्लेखनम् उदकालम्भः उल्मुकनिधानम् अवनेजनं सकृदाच्छिन्नास्तरणम् पिण्डदानम् । अत्र पितर इत्युक्त्वोदङ्ङातमनम् । आवृत्यजपः । पुनरवनेजनम् । नीवीविसर्गः । नमो व इति षण्णमस्काराः । सूत्रदानम् । स्मृत्युक्तं पूजनम् । इति क्रमः ॥ ॥ 'आचान्तेष्वित्येके' एके आचार्याः आचान्तेषु ब्राह्मणेषु पिण्डदानमिच्छन्ति । 'आचा⋯दद्यात्' ब्राह्मणेषु सत्सु तेभ्य उदकादिकं च दद्यात् । पुष्पाणि चाप्रतिषिद्धानि पद्मोत्पलमल्लिकायूथिकाशतपत्रचम्पकाद्यानि गन्धरूपसंपन्नान्यन्यान्यपि दद्यात् । तत्रायं प्रयोग उक्तश्छन्दोगपरिशिष्टे । अथात्र भूमिमासिञ्चेत्प्रोक्षितमिति । शिवा आपः सन्त्विति युग्मानेवोदकेन च सौमनस्यमस्त्विति पुष्पदानमनन्तरम् । अक्षतं चारिष्टं चास्त्वित्यक्षतान्प्रतिपादयेत् । अक्षय्योदकदानं तु अर्घदानवदिष्यते । षष्ठ्यैव नियतं कुर्यान्न चतुर्थ्या कदाचन ॥ युग्मानिति वृद्धिपरं प्रकरणात् । पित्राद्युल्लेखाभावाद्धस्ते प्रक्षेपमात्रस्य विधानादिदं जलादित्रिकं दैवे पित्र्ये च कार्यम् । यज्ञोपवीतिना देयमिति शङ्खधराचार्यः । तथा शातातपोऽपि । ततः पुष्पाणि सव्येन उदकानि पृथक् पृथगिति । इदं जलादिदानं दैवे सव्येनेति, पित्र्ये त्वपसव्येनेति कर्काचार्याः । हस्ते प्रतिपादितानामपां चिरधारणे प्रयोजनाभावाच्छुचौ देशे स्थापनमेव । पुष्पाणां त्वत्र ब्राह्मणा यजमानायाशिषं प्रयच्छन्ति । मत्स्यपुराणे—आचान्तेषु पुनर्दद्याज्जलपुष्पाक्षतोदकम् । दत्वाशीः प्रतिगृह्णीयाद् द्विजेभ्यः प्राङ्मुखो द्विजः । अक्षय्योदकशब्देन दत्तान्नपानादेरानन्त्यप्रार्थनसंबन्धि जलमभिधीयते । तच्च पितृब्राह्मणेभ्य एवेति कर्कः । सर्वेभ्यो दद्यादिति स्मृत्यर्थसारे । 'अघोराः⋯स्त्विति' आशीःप्रार्थनं प्रपञ्चयति । तत्र यजमानः अघोराः पितरः सन्त्विति ब्रूयात् । ब्राह्मणाश्च सन्त्विति ब्रूयुः । तैस्तथोक्ते यजमानो गोत्रन्नो वर्द्धतामित्याह । ब्राह्मणैश्च वर्द्धतामित्युक्ते यजमानो दातारो नोऽभिवर्द्धन्तामिति ब्रूयात्, द्विजैर्वर्द्धन्तामित्युक्ते कर्ता वेदा वर्द्धन्तामिति ब्रूयात् । तैर्वर्द्धन्तामित्युक्ते यजमानः सन्ततिर्वर्द्धतामिति । वर्द्धतामिति ब्राह्मणाः । श्रद्धा च नो मा व्यगमदिति यजमानः, मागादिति ब्राह्मणाः । बहुदेयं च नोऽस्त्विति कर्ता । अस्त्विति ते ब्रूयुः । अत्र मनुराह—दक्षिणां दिशमाकाङ्क्षन्याचेतेमान्वरान्पितृनिति । 'आशिषः⋯पृच्छति' उक्तप्रकारेणाशीर्ग्रहणं कृत्वा स्वधावाचनीयसंज्ञकान्सपवित्रान्कुशानास्तीर्य पिण्डसमीपे भूमौ स्तृत्वा स्वधां वाचयिष्य इति पङ्क्तिमूर्द्धन्यं सर्वान्वा पृच्छेत् । सपवित्रान्सामानित्यर्थः । न्युब्जपात्रोपरिस्थितपवित्राण्यर्घपवित्रैः सह समानीय पिण्डानां पश्चिमतो दक्षिणाग्राणि निधाय स्वधां वाचयिष्य इति पृच्छेदिति हेमाद्रिः । सकुशानि पवित्राणि पिण्डानामुपर्यास्तीर्य स्वधां वाचयिष्य इति पृच्छेदिति देवयाज्ञिकाः । 'वाच्य⋯च्यतामिति' ततस्तैर्द्विजैर्वाच्यतामित्यनुज्ञातः पितृभ्य इत्यादि स्वधोच्यतामित्येवं मन्त्रमुदाहरेत् । 'अस्तु⋯र्जमिति' अस्तु स्वधेत्युच्यमाने सति स्वधावाचनीयेषूदकं निषिञ्चत्यूर्जमित्यनेन मन्त्रेण । आसेचनप्रयोगानामङ्गाङ्गीभावः । अवसरनिर्देशकत्वाच्छानचः । अतो वृद्धिश्राद्धेऽपि भवति । मन्त्रश्चायं समवेतार्थः । अतोऽस्य मातृश्राद्धे मातृभ्यः पितामहीभ्य इत्याद्यूहः संख्यासमवेतार्थः । अतश्चैकोद्दिष्टे नोहः । 'उत्ता⋯दद्यात्'

शक्तिमनतिक्रम्येति यथाशक्ति। अत्र शातपथीश्रुतिः। स एष यज्ञो हतो न ददक्षे। तं देवा दक्षिणाभिरदक्षयँस्तद्यदेनं दक्षिणाभिरदक्षयंस्तस्माद्दक्षिणा नामेति। स्मृतौ॥ गोभूहिरण्यवासांसि कन्याभवनभूषणम्। दद्याद्यदिष्टं विप्राणामात्मनः पितुरेव चेति। अदक्षिणं च श्राद्धं न कुर्यात्। तथा च श्राद्धकल्पे—न कुर्याद्दक्षिणाहीनं दहेच्छ्राद्धमदक्षिणमिति। तथा च शतपथब्राह्मणे। तस्मान्नादक्षिणः हविः स्यादिति। 'विश्वे'''सृज्य' वाचयित्वेति कारितत्वादध्येषणा भवति 'विश्वेदेवाः प्रीयन्तामिति ब्रूहीति। दैवब्राह्मणाश्च विश्वेदेवाः प्रीयन्तामिति ब्रूयुः। ततो वाजे वाजे वत इति मन्त्रेण विप्रान्विसर्जयेत्। विसर्जनं तु पितृपूर्वकम्। तथा च याज्ञवल्क्यः—वाजेवाजे इति प्रीतः पितृपूर्वं विसर्जयेदिति। निमन्त्रणादिपदार्थजातं देवपूर्वं भवति। विसर्जनं तु पितृपूर्वमिति मेधातिथिः। देवलोऽपि—पूर्वमुत्थापयेत्पितॄन्वाच्यतामिति च ब्रुवन्। उत्थितानुगच्छेत्तु तेभ्यः शेषं च संहरेत्। पश्चात्तु वैश्वदेविकान्विप्रानुत्थापयेत्तथा। एते हि पूर्वमासीनाः समुत्तिष्ठन्ति पश्चिमा इति। 'आमा'''विशेत्' आमावाजस्येति मन्त्रेणानुव्रज्यानुपश्चात् द्विजान्सीमान्तं गत्वा प्रदक्षिणीकृत्य स्वगृहं प्रविशेत्। इति तृतीयकण्डिका॥ ३॥

अथ प्रयोगपद्धतिः—तत्र कालाः। अमावास्याऽष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम्। विषुवत्सूर्यसंक्रमो व्यतीपातो गजच्छाया ग्रहणयुगादिमन्वादयश्च। तथा विशिष्टे देशे गयादौ विशिष्टे काले च मृताहादौ द्रव्यब्राह्मणसंपत्सु चात्मरुचिश्चेत्याद्याः कालाः। अथ श्राद्धाधिकारिनिर्णयः—प्रमीतयोः पित्रोर्मुख्यो गौणाश्च पुत्राः श्राद्धं कुर्युः। तदभावे दायहरः। पौत्रः पुत्रिकापुत्रो वा तदभावे सहोदराः तत्सन्ततिर्वा तदभावे पुरोहितः तदभावे भृत्याः सुहृदश्च कुर्युः। सर्वाभावे नरपतिस्तज्जातीयैः कारयेत्। नरपतिः सर्ववर्णानां बान्धव इति स्मरणात्। ब्राह्मविवाहोढा साध्वी चेत्पुत्राभावे पत्न्येवाधिकारिणी यदि क्रयक्रीता न भवति। क्रयक्रीता च या नारी न सा पत्नी विधीयते। न सा दैवे न सा पित्र्ये दासीं तां केवलां विदुः। सर्वाभावे स्त्रस्या अप्यमन्त्रके श्राद्धेऽधिकारः। एक एव चेत्पुत्रस्तदाऽसावनुपनीतोऽपि कृतचौलश्चेदमन्त्रकं श्राद्धं कुर्यात्। अपुत्रायाः पतिर्दद्यात्सपुत्रायाश्च न क्वचित्। पित्रा श्राद्धं न कर्तव्यं पुत्राणां च कदाचन। भ्रात्रा चैव न कर्तव्यं भ्रातॄणां च कनीयसाम्। अपि स्नेहेन कुर्याच्चेत्सपिण्डीकरणं विना। गयायां तु विशेषेण ज्यायानपि समाचरेत्। धनहारित्वादिनियमाभावे प्रीत्या यस्य कस्यापि वर्णस्य श्राद्धे कृते महत्फलमाह शातातपः। प्रीत्या श्राद्धं तु कर्तव्यं सर्वेषां वर्णलिङ्गिनाम्। एवं कुर्वन्नरः सम्यङ् महतीं श्रियमाप्नुयात्। ब्राह्मणो ह्यसवर्णस्य यः करोत्यौर्ध्वदेहिकम्। तद्वर्णत्वमवाप्नोति इह लोके परत्र च। दौहित्रेण तु सपिण्डीकरणादिव्यतिरेकेण यदा यदा पितृश्राद्धं तदा तदा मातामहश्राद्धं कर्तव्यमेव। पितरो यत्र पूज्यन्ते तत्र मातामहा अपि। अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत्। तत्पिण्डपितृयज्ञव्यतिरिक्तविषयम्। अन्वष्टकासु पूर्वं सुरातर्पणेन तथैव पश्चादन्वष्टक्यां त्रिपार्वणं सपिण्डीकरणम्। यः पुनर्धनहारी दौहित्रस्तेन त्ववश्यं नवश्राद्धाद्यपि कार्यमेव। क्षयाहे तु एकपार्वणमेव साग्निकानामेकोद्दिष्टं वा। यो यत आददीत स तस्यैव श्राद्धं कुर्यादिति स्मरणात्। मातामह्यं नवश्राद्धमवश्यं धनहारिणा दौहित्रेण कार्यम्। दौहित्रेणार्थनिष्कृत्यै कर्तव्यं विधिवत्सदा। आदेहपतनात्कुर्यात्तस्य पिण्डोदकक्रियाम्। यस्तु केवलं मातामहेन संबद्धः पुत्रिकापुत्रः स मातामहस्यैव नियमेन श्राद्धं कुर्यात्। पुत्रिकापुत्रश्राद्धे विशेषमाह मनुः—मातुः प्रथमतः पिण्डं निर्वपेत्पुत्रिकासुतः। द्वितीयं तु पितुस्तस्यास्तृतीयमपि तत्पितुः। द्व्यामुष्यायणे पुत्रिकापुत्रे उशनसोक्तो विशेषः—मातामह्यं तु मात्रादि

१ न ददक्षे फलं जनयितुं न शशाक इति सायणाचार्यभाष्ये।

पैतृकं पितृपूर्वकम्। मातृतः पितृतो यस्मादधिकारोऽस्ति धर्मत इति। क्षेत्रजे तु द्व्यामुष्यायणे देवलोक्तम्। द्व्यामुष्यायणका दद्युर्द्वाभ्यां पिण्डोदकं पृथगिति। द्वाभ्यां पितृवर्गाभ्यामित्यर्थः। द्विपितुः पिण्डदानं स्यात्पिण्डे पिण्डे द्विनामता। पण्णामत्र त्रयः पिण्डा एकैकं तु क्षयेऽहनि। पोषकः प्रथमः ततो जनकः। अत्र क्रमविशेषमाह। मरीचिः—सगोत्रो वाऽन्यगोत्रो वा यो भवेद्विधवासुतः। पिण्डश्राद्धविधानं च क्षेत्रिणे प्राग्विनिर्वपेत्। वीजिने तु ततः पश्चात्क्षेत्री जीवति चेत्क्वचित्। वीजिने दद्युरादौ तु मृते पश्चात्प्रदीयत इति। जीवत्पितृकस्यापि क्वचित्क्वचिच्छ्राद्धाधिकारः। तत्र मैत्रायणीयपरिशिष्टे विशेषो दर्शितः—उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे। तीर्थे ब्राह्मण आयाते पडेते जीवतः पितुः। पुत्रस्य श्राद्धकाला इतिशेषः। जीवत्पितृकेण आश्विनप्रतिपदि मातामहश्राद्धं फलातिशयप्राप्तये नियमेन कार्यम्। जातमात्रोऽपि दौहित्रो विद्यमानेऽपि मातुले। कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते इति। अथ श्राद्धार्हब्राह्मणलक्षणम्। तत्र महाभारते—विद्यावेदव्रतस्नाता ब्राह्मणाः सर्व एव हि। सदाचारपराश्चैव विज्ञेयाः सर्वपावनाः। पाङ्क्तेयांस्तु प्रवक्ष्यामि ज्ञेयास्ते पङ्क्तिपावनाः। तृणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः पडङ्गवित्। ब्रह्मदेयानुसंतानश्छन्दोगो ज्येष्ठसामगः। मातापित्रोर्यश्च वश्यः श्रोत्रियो दशपूरुषः। ऋतुकालाभिगामी च धर्मपत्नीषु यः सदा। वेदविद्याव्रतस्नातो विप्रः पङ्क्तिं पुनात्युत। अथर्वशिरसोऽध्येता ब्रह्मचारी यतव्रतः। सत्यवादी धर्मशीलः स्वकर्मनिरतश्च यः। ये च पुण्येषु तीर्थेषु अभिषेककृतश्रमाः। मखेषु च समन्त्रेषु भवन्त्यवभृथप्लुताः। अक्रोधना ह्यचपलाः क्षान्ता दान्ता जितेन्द्रियाः। सर्वभूतहिता ये च श्राद्धेष्वेतान्निमन्त्रयेत इति। यथोक्तगुणाभावे किंचिद्धीनगुणाश्च वैश्वदेविकार्थमुपवेशनीयाः। पित्र्ये तु यथोक्तगुणा एव भोज्याः। गयायां तु निर्गुणा अपि तत्रस्था एव द्विजा भोज्याः। यथोक्तद्विजाभावे मातामहमातुलस्वस्रीयश्वशुरदौहित्रजामातृऋत्विग्याज्यशिष्या अपि गुणवन्तश्चेच्छ्राद्धे भोजनीयाः। अथैकस्यापि ब्राह्मणस्यालाभे अनुकल्पान्तरमुक्तं प्रभासखण्डे—अलाभे ब्राह्मणस्यैव कौशः कार्यो बटुः प्रिये। एवमप्याचरेच्छ्राद्धं पड्दैवत्यं समाहितः। विभक्तिङ्कारयेद्यस्तु पितृहा स प्रजायते। कौशः कुशमयो बटुः लवुमनुष्यप्रकृतिः तं बटुं ब्राह्मणत्वेन परिकल्प्य सर्वं श्राद्धं समाचरेत्। विभक्तिः कर्मणश्छेदो लोप इति यावत्, तन्न कुर्यात्। "पात्राभावेऽखिलं कृत्वा पितृयज्ञविधिं नरः। निधाय वा दर्भवटूनासनेषु समाहितः। प्रेषानुप्रेषसंयुक्तं विधानं प्रतिपादयेत्। सर्वाभावे क्षिपेदग्नौ गवे दद्यादथाप्सु वा। नैव प्राप्तस्य लोपोऽस्ति पैतृकस्य विशेषतः" इति देवलः। प्रैषानुप्रैषसंयुक्तमिति श्राद्धं संपन्नमित्यादिप्रैषप्रतिवचने स्वयमेव वदेदित्यर्थः॥ अथ नियमाः॥ मनोवाक्कर्मभिरहिंसा निमन्त्रितब्राह्मणापरित्यागस्ताम्बूलक्षुरकर्माभ्यञ्जनदन्तधावनपरित्यागश्चेति कर्तृनियमाः। निमन्त्रणमभ्युपगम्यानपक्रमणमन्यत्राभोजनमेकत्रनिमन्त्रितस्यान्येपामन्नादेरप्यग्रहणम्। आहूतस्य कुतपकालाद्यनतिक्रमणम्। इति द्विजनियमाः। निमन्त्रणादुपरि श्राद्धान्नव्यतिरिक्तभोजनपुनर्भोजनासत्यवादिताशौचमत्वरितत्वमृतौ स्वदारेष्वपि नियुक्तस्यापि मैथुनाकरणं विशेषतः शूद्रायाः परिहरणम्। श्रमस्वाध्यायक्रोधक्रौर्यकलहद्यूतभारोद्वहनप्रतिग्रहप्रमादमुदमोहलोभाहङ्कारकार्पण्यस्तेयवर्जनम्। इत्युभयनियमाः। अथ श्राद्धदिनात्प्राचीनदिनकृत्यम्। तत्र कर्ता स्वगृहे निरामिषं भुक्त्वा ब्राह्मणनिमन्त्रणं प्रदोषान्ते करोति। विष्णुस्मरणं प्राणायामत्रयं कृत्वा यज्ञोपवीती उदङ्मुखः प्राङ्मुखस्य द्विजस्य दक्षिणजानूपस्पृश्य ॐ दैवे क्षणः क्रियतामिति वदेत्। ॐ तथेति प्रत्युक्तिः। प्राप्नोतु भवानित्युक्ते प्राप्नवानीति प्रत्युक्तिः। तत अक्रोधनैरित्यादि श्रावयेत्। एवं मातामहविश्वदेवसंबन्धिनिमन्त्रणम्। ततः प्राचीनावीती दक्षिणाभिमुख उदङ्मुखद्विजस्य दक्षिणजानूपस्पृश्य ॐ अमुकगोत्रस्यामुकशर्मणोऽस्मत्पितुः सपत्नीकस्य श्राद्धे क्षणः क्रियतामित्यादि। एवमयं

पितुरयं पितामहस्यायं प्रपितामहस्येत्यादिनिर्द्धारणं कृत्वा मातामहद्विजान्निमन्त्रयेत् । यावत्संख्याश्च पितृद्विजास्तावत्संख्या एव मातामहद्विजास्तथैव निमन्त्रणीयाः । ततः 'अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः । भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा' इति नियमाञ्छ्रावयेत् । तन्त्रेण वा वैश्वदेविकम् ॥ इति श्राद्धदिनात्प्राचीनदिनकृत्यम् । पूर्वदिने निमन्त्रणासंभवे श्राद्धदिने प्रातर्निमन्त्रणम् । अथ श्राद्धदिनकृत्यम् । तत्र दन्तधावनवर्जं प्रातःकालिकं कर्म कृत्वा उद्वर्त्तनद्रव्यस्नानीयतिलामलककल्कांस्ताम्रपात्रे संभृतान्कृत्तश्मश्रुनखेभ्यो निमन्त्रितद्विजेभ्यो देवपूर्वकं प्रेष्यद्वारा दापयेत् । ततः पाकभूमेर्गोमयोपलेपादिसंस्कारकरणं महानसे च । सचैलस्नातः सपत्नीको यजमानः स्वयं पाकमारभेत । असंभवे तु शुचिभिः स्नातैः सवर्णैर्वा कारयेत् । ततः श्राद्धसंभारोपकल्पनम् । अथाह्नः षष्ठे मुहूर्ते नद्यादौ नित्यस्नानं ततः कर्माङ्गस्नानम् । ततः श्राद्धार्थमुदकमानीय पत्न्या सह शुचिः शुक्लवासाः श्राद्धदेशमागत्योदकं स्थापयेत् । अथापराह्णकृत्यम् । तत्रागतान्द्विजान्दृष्ट्वा भवतां स्वागतमिति प्रत्येकं ब्रूयात् । सुस्वागतमिति द्विजैर्वक्तव्यम् । ततस्तेभ्य उदकदानम् । मण्डलकरणम् आचमनार्थं जलदानम् । तैश्चाचमनकरणम् । ततो यजमानस्य पादप्रक्षालनपूर्वकं द्विराचमनम् । ब्राह्मणानामुपवेशनम् । अस्मिन्नवसरे दीपानां स्थापनम् । ततः कर्तोपविश्य "गङ्गायै नमः । गदाधराय नमः" इति वदेत् । पुण्डरीकाक्षं स्मृत्वा "देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वधायै नित्यमेव नमोनमः ॥ इति त्रिः पठेत् । ततः अद्येत्यादिकालज्ञानं कृत्वा, अमुकसगोत्राणामस्मत्पितृपितामहप्रपितामहानां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां तथा मातामहादीनां संकीर्तनं कृत्वा पार्वणद्वयविधिनाऽमुकनिमित्तं श्राद्धं करिष्य इति संकल्पं कुर्यात् । ततो "निहन्मि सर्वं यदमेध्यमत्र निहन्मि सर्वानपि दानवासुरान् । यक्षाश्च रक्षांसि पिशाचगुह्यका हता मया यातुधानाश्च सर्वे" इति पठेत् । नीवीबन्धनम् । ततस्तिला रक्षन्त्वसुरान्दर्भा रक्षन्तु राक्षसान् । पङ्क्तिं वै श्रोत्रियो रक्षेदतिथिः सर्वरक्षकः । इति द्वारि तिलकुशनिक्षेपः । अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम् । तथा बर्हिषदः पान्तु याम्यां ये पितरस्तथा ॥ प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः । ऊर्ध्वतस्त्वर्यमा रक्षेत्कव्यवाडनलोऽप्यधः ॥ रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः । सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे ॥ इति यथालिङ्गं दिशि दिशि तिलान्प्रकिरेत् । रक्षोभूतेति सर्वतः प्रकिरणम् । ततः कर्मार्थं जलाभिमन्त्रणं दर्भैरालोडयन् यद्देवा इति तृचेन । अत ऊर्ध्वं जलकार्यमनेन । दुष्टदृष्टिनिपातनादिदूषितः पाकः पूतो भवत्विति पाकप्रोक्षणम् । सव्यम् । पुरूरवार्द्रवसञ्ज्ञकाना विश्वेपान्देवानामिदमासनम् । हस्तप्रक्षालनम् । अपसव्यम् । गोत्राणाम्पितृपितामहप्रपितामहानाममुकामुकशर्मणामिदमासनम् । हस्तप्रक्षालनम् । एवं मातामहादीनाम् । सव्यं पुरूरवार्द्रवसंज्ञकान्विश्वान्देवानावाहयिष्ये, इति प्रश्नः । आवाहयेति प्रत्युक्तिः । दक्षिणं जान्वालभ्य विश्वेदेवास इत्यावाहनम् । यवविकरणम् । विश्वेदेवाः शृणुतेममिति जपः । आगच्छन्त्वित्यपि जपेत् । अपसव्यम् । अमुकगोत्रान्पितॄनावाहयिष्ये, इति प्रश्नः । आवाहयेति प्रत्युक्तिः । उशन्तस्त्वेत्यावाहनम् । तिलविकरणम् । आयन्तु न इति जपः । एवं मातामहादीनामावाहनम् । ततः सव्यं कृत्वा वैश्वदेविकं पात्रं निधाय पवित्रान्तर्हिते शन्नोदेवीरिति जलमासिच्यापसव्यं कृत्वा पितृपात्राणि निधाय पवित्रान्तर्हितेषु शन्नोदेवीरिति जलासेकः । सव्यम् । यवोऽसि धान्यराजो वा वारुणो मधुसंयुतः । निर्णोदः सर्वपापाना पवित्रमृषिभिः स्मृतः । इति देवपात्रे यवप्रक्षेपः । यवोसि यवयेति मन्त्रेण वा यवप्रक्षेपः । तिलपक्षे तु तिलोसीति मन्त्रेण । तिलोसीति पितृपात्रेषु मन्त्रावृत्त्या तिलप्रक्षेपः । सर्वपात्रे चन्दनपुष्पप्रक्षेपो देवपितृधर्मेण । सव्यम् वैश्वदेविकपवित्रदानम् । पूजनम् । यादिव्या इत्यर्घदानम् । एवं सर्वत्र । प्रथमे पात्रे संस्रवान्समवनीय पितृभ्यः स्थानमसीति पात्रन्युब्जी-

करणम् । तदुपरि कुशनिधानम् । पुत्रकामश्चेत्संस्रववन्दनम् " आपः शिवा " इति । ततो गन्धादिदानम् । तत्रैवम् । सव्यम् । यथादत्तं गन्धाद्यर्चनं पुरूरवार्द्रवसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यः स्वाहा । अपसव्यं कृत्वैवं पितृभ्यो दानम् । आचमनं प्राणायामः । ब्राह्मणाग्रे भाजनानि निधाय उक्तप्रकारेण मण्डलानि कुर्यात् । अपसव्यम् । अन्नमुद्धृत्य " अग्नौकरिष्ये " इति प्रश्नः । कुरुष्वेति प्रत्युक्तिः । ॐ अग्नये कव्यवाहनाय स्वाहा । इदमग्नये कव्यवाहनाय नमम । ॐ सोमाय पितृमते स्वाहा । इदं सोमाय पितृमते न ममेति द्वयोस्त्यागौ । स्वयंकर्तृके त्यागाभाव इति हेमाद्रिपद्धतौ । हुतशेषं पात्रे दत्वा पात्रमालभ्य जपति " पृथिवी त " इति प्रतिपात्रं मन्त्रावृत्तिः । वैष्णव्यर्चा यजुषा वाऽन्नेऽङ्गुष्ठावगाहनम् । तिलविकिरणम् । परिवेषणम् । संकल्पः पूर्वोक्तप्रकारेण । सकृत्सकृदुदकदानं विप्रहस्तेषु । ततोऽश्नत्सु जपो यथोक्तः । तृप्तान् ज्ञात्वोक्तप्रकारेणान्नप्रकिरणम् । आचमनम् । सकृत्सकृदुदकदानं विप्रहस्तेषु । पूर्ववद्गायत्रीजपः । मधु वाता० भवन्तु नः, मधु मधु मधु, इति जपेत् । तृप्ताः स्थेति प्रश्नः, तृप्ताः स्म इति प्रत्युक्ते शेषमन्नमप्यस्तीति ब्रूयात् । इष्टैः सह भुज्यतामिति प्रतिवचनम् । हेमाद्रिणा कर्कमते पिण्डार्थमुपयुज्यतामिति प्रयोगो दर्शितः । सर्वमन्नमेकत उद्धृत्य उल्लेखनमपहता इति । साग्निकस्य वज्रेण । इतरस्य तु कुशमूलेन । जलस्पर्शः । अग्निमत उल्मुकनिधानम् प्रतिपार्वणम् । अमुकगोत्र पितरमुकशर्मन्नित्यवनेजनम् । एवं पितामहप्रपितामहयोर्मातामहादीनां च । सकृच्छिन्नास्तरणम् । अमुकगोत्र पितरमुकशर्मन्नेतत्तेऽन्नं स्वधेति पिण्डदानम् । इदममुकाय नममेत्येवमुभयत्र । सर्वत्र मातामहानामप्येवमेव विधेयम् । अत्र पितर इत्युक्त्वा उदङ्ङावर्तनम् । आवृत्त्यामीमदन्तेति जपः । पूर्ववदवनेजनम् । नीवीविसर्गः । नमोव इति षडञ्जलिकरणम् । एतद्व इति सूत्रदानम् । पञ्चाशद्वर्षादूर्ध्वं यजमानहृदयलोम्नां वा दानम् । पिण्डपूजनम् । चन्दनपुष्पधूपदीपनैवेद्यानि गोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः स्वधेति । एभिः पिण्डदानैरस्मत्पितॄणामक्षय्या तृप्तिरस्तु । काले श्राद्धं भवतु इति प्रार्थना ॥ आचमनम् । सुप्रोक्षितोऽयं देशोऽस्त्विति जलेन भूमिं सिञ्चेत् । शिवा आपः सन्त्विति उदकदानं ब्राह्मणेभ्यः । सौमनस्यमस्त्विति पुष्पदानम् । अक्षतं चारिष्टं चास्त्वित्यक्षतदानम् । अमुकगोत्रस्य पितुरमुकशर्मणो दत्तं श्राद्धमुदकं चाक्षय्यमस्तु । एवं पितामहप्रपितामहयोः । ततो द्विजानां प्रार्थना । येषामुद्दिष्टं तेषामक्षय्यमस्तु । अस्त्विति प्रत्युक्तिः, अघोराः पितरः सन्त्विति प्रश्नः । सन्त्विति प्रत्युक्तिः । गोत्रन्नो वर्द्धतामिति प्रश्नः । वर्द्धतामिति प्रत्युक्तिः । दातारो नोऽभिवर्द्धन्तामिति प्रश्नः । वर्द्धन्तामिति प्रत्युक्तिः । वेदा वर्द्धन्तामिति प्रश्नः । वर्द्धन्तामिति प्रत्युक्तिः । संततिर्वर्द्धतामिति प्रश्नः । वर्धतामिति प्रत्युक्तिः । श्रद्धा च नो माव्यगमत् । मागादिति प्रत्युक्तिः । वहुदेयं च नोऽस्तु, अस्त्विति प्रत्युक्तिः । पात्रोपरि स्थापितकुशानां भूमावास्तरणम् । ततः स्वधापितॄन्वाचयिष्ये इति प्रश्नः । वाच्यतामित्युक्ते । पितृभ्यः स्वधोच्यतां पितामहेभ्यः स्वधोच्यतां प्रपितामहेभ्यः स्वधोच्यतां मातामहेभ्यः स्वधोच्यतां प्रमातामहेभ्यः स्वधोच्यता वृद्धप्रमातामहेभ्यः स्वधोच्यताम् इति मन्त्रं पठेत् । अस्तु स्वधेति प्रत्युक्ते । आस्तृतकुशेषु ऊर्जमित्युदकासेकः । पात्रोत्तानकरणम् । ततः श्राद्धस्य प्रतिष्ठाभिवृद्ध्यर्थं दक्षिणां मुखवासताम्बूलं च विश्वेभ्यो देवेभ्यः स्वाहा इदं वि० नमम । अस्य श्राद्धस्य प्रतिष्ठासिद्ध्यर्थं दक्षिणां मुखवासताम्बूलं चामुकगोत्रेभ्य इत्यादि स्वधा नममेति त्यागः । विश्वेदेवाः प्रीयन्तामिति वदेत् । प्रीयन्तामिति प्रत्युक्तिः । विश्वेदेवाः शान्तिदाः पुष्टिदा वरदा भवन्तु । भवन्त्विति द्विजाः अन्नं च नो वहु भवेत् । वहु भूयात् । अतिथींश्च लभेमहि, लभध्वम् । याचितारश्च नः सन्तु, सन्तु । मा च याचिष्म कंचन । मा याचेथाः एता एवाशिषः सन्तु । इति प्रार्थना । ततः स्वयमेव तिलककरणम् । पिण्डानां प्रत्यवधानम् । सव्यम् । पिण्डावघ्राणम् । सकृदाच्छिन्नानामग्नौ प्रक्षेपः । पश्चादुल्मुकस्य च । भोज-

नपात्राणि चालयित्वा संचराभ्युक्षणम् । कालज्ञानं कृत्वा अमुकपितॄणां कृतस्य श्राद्धविधेर्न्यूनातिरिक्तं तत्परिपूर्णमस्तु । अस्तु परिपूर्णमिति ब्राह्मणोक्तिः । वाजे वाजे इति पितृपूर्वं विसर्जनम् । आमावाजस्येत्यनुव्रज्य प्रदक्षिणीकृत्य नमस्कृत्य गृहप्रवेशः ॥ ॥ * ॥

अथ साग्निकनिरग्निकादीनां दर्शाष्टकादिश्राद्धे निमित्ततः पिण्डाभाव उच्यते । तदाह कार्ष्णाजिनिः । मौञ्जीबन्धाद्विवाहाच्च वर्षोर्ध्वं वर्षमेव वा । पिण्डान्सपिण्डा नो दद्युः सपिण्डीकरणादृते । अत्र सपिण्डीकरणे पिण्डविधानात्तत्पूर्वेषामुत्क्रान्तप्रभृतीनां श्राद्धानामर्थात्पिण्डदानमनुज्ञातमिति । उद्वाहे कृतेऽपि महालयगयाश्राद्धमृताहेषु पिण्डान्दद्युः । तदुक्तं—महालये गयाश्राद्धे मातापित्रोर्मृतेऽहनि । कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सुत इति । गयाशब्देन तीर्थान्युपलक्ष्यन्ते । मृतेऽहनीति मातापित्रोस्तद्व्यतिरिक्तानामपि च मृताहेऽनुमासिकेषु च । संग्रहेऽपि—विवाहोपनयादूर्ध्वं वर्षार्द्धं वर्षमेव वा । न कुर्यात्पिण्डनिर्वापं न दद्यात्करणानि च । करणान्यावाहनार्घादीनि । विवाहादिनिमित्तेनोक्तकालपर्यन्तममावास्याष्टकासु सांकल्पिकं श्राद्धं कुर्यात् । श्रुतिबलात्पिण्डपितृयज्ञस्तु भवत्येव । अथ सांवत्सरिके विशेषः । तत्र विभक्ताश्चेत्सर्वे नो चेज्ज्येष्ठपुत्र एव । मातृसांवत्सरिके यथोचित ऊहः कार्यः । यत्र च मात्रा स्वामिचित्यारोहणं कृतं तत्रैकमेव पाकं कृत्वा पितृश्राद्धं पृथक् कृत्वैकबर्हिषि षट् पिण्डान्दद्यात् । विप्रपङ्क्तौ सुवासिनीं चाधिकां भोजयेदिति श्राद्धभास्करे । एकदिनेऽनेकश्राद्धप्रसक्तौ पूर्वं पितुः पश्चात्पितृव्यादीनां श्राद्धं कार्यम् । मृताहे ग्रहणं चेदामेन हेम्ना वा आब्दिकं कार्यम् । क्षयाहे आशौचादिप्रतिबन्धे तदन्ते कर्तव्यम् । मातृपितृक्षयाहे श्राद्धकर्तुः स्त्री स्त्रीकर्तृके वा श्राद्धे सा रजस्वला चेत्पञ्चमेऽहनि श्राद्धं कुर्यात् । अथ महालये विशेषः—तत्रोद्देश्या उच्यन्ते । पितृव्यभ्रातृपुत्रपितृपुत्रपितृष्वसृमातुलमातृष्वसृभार्यापितृव्यपुत्रभ्रातृपुत्रभगिनीदुहितृभागिनेयाचार्यश्वशुरश्वश्रूपाध्यायगुरुसखिद्रव्यदशिष्यादय इति । संन्यासविषये वायुपुराणे विशेषो दर्शितः । संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथाविधि । महालये तु यच्छ्राद्धं द्वादश्यां पार्वणेन तु । अथ भाद्रपदापरपक्षभरणीश्राद्धे विशेषः । तदुक्तं मात्स्ये—भरणी पितृपक्षे तु महती परिकीर्तिता । तस्यां श्राद्धं कृतं येन स गयाश्राद्धकृद्भवेत् । तत्र सपत्नीकपितृपितामहप्रपितामहान्सपत्नीकमातामहादींश्चोद्दिश्य सांकल्पिकं श्राद्धं कुर्यात् । भविष्यपुराणे । अग्नौकरणमर्घं चावाहनं चावनेजनम् । पिण्डश्राद्धे प्रकुर्वीत पिण्डहीने निवर्तते । पिण्डनिर्वापरहितं यत्र श्राद्धं विधीयते । स्वधावाचनलोपोऽस्ति विकिरस्तु न लुप्यते । अक्षय्यप्रदक्षिणास्वस्तिसौमनस्यं यथा स्थितमिति । चतुर्दश्यां पित्रादित्रयमध्ये एकस्य द्वयोर्वा विषशस्त्राद्युपघातैर्मृतयोः पितृश्राद्धैर्वा तथाविधस्यैकोद्दिष्टविधिना श्राद्धं कुर्यात् । इदं चैकोद्दिष्टं सदैवम् । तथाच संग्रहे । चतुर्दश्यामेकोद्दिष्टविधानतः । दैवयुक्तं तु यच्छ्राद्धं पितॄणामक्षयं भवेदिति ॥ ॥ अथ तीर्थश्राद्धे विशेषः । तत्र षट्पुरुषोद्देशेन । तत्र दिग्बन्धनावाहनार्घद्विजाङ्गुष्ठनिवेशनतृप्तिप्रश्नविकिरा न कर्तव्याः । ब्राह्मणपरीक्षा च न कार्या । न च दृष्टिदोषादिविचारः । षट्पुरुषपिण्डदानानन्तरं किंचिद्दूरे हविःशेषेण मातृपितामहीप्रपितामहीभ्यः पिण्डदानमात्रम् । तदनन्तरं मात्रादिपिण्डपूर्वतः कुशेषु ज्ञातिवर्गमुद्दिश्यैको बृहत्पिण्डो दातव्यः । पिण्डानां तीर्थसलिले प्रक्षेपः ॥ ॥ अथ नित्यश्राद्धे विशेषः । संकल्पः । पुष्पाक्षतादिभिरासनादिदीपान्तोपचारैर्ब्राह्मणपूजनम् । मण्डलं कृत्वा भाजनानि निधाय परिवेषणम् । पात्रालम्भादिब्राह्मणभोजनान्तं कृत्वा किंचिद्दद्यात् । नात्र कर्तृभोक्तृनियमाः । भोज्याद्यशक्तावन्नमुद्धृत्य स्वशक्तितः षोढा विभज्य पितॄनुद्दिश्य त्यजेदिति नित्यश्राद्धम् । इति पार्वणश्राद्धविधिः ॥

( श्राद्धका० ) ' उद्धृत्य घृताक्तमन्नं पृच्छत्यग्नौ करिष्य इति ' घृतग्रहणं शाकादिव्यञ्जन-

निवृत्त्यर्थम् । तथा च हविष्यं व्यञ्जनक्षाररहितं ह्यपसव्यवदिति । घृताक्तमन्नमुद्धृत्येत्यन्वयोऽभिघारणं रन्धनपात्र एव स्यात् । अभिघार्य दक्षिणत उद्वास्येति पिण्डपितृयज्ञसूत्रादिति केचित् । तन्न । तस्यापसव्यादिविधिना साग्नेश्चरुश्रपणविषयत्वात् । अतश्चोद्धृत्य घृताक्तं कृत्वान्नं पङ्क्तिमूर्धन्यमग्नौकरिष्य इति पृच्छेदित्यन्वयः । पृच्छेर्द्विकर्मकत्वात् । एवं च पात्रान्तरेऽभिघारणं सूचितम् । तथा च कात्यायनः—अग्नौकरणस्यग्निवै मधुसूक्तं जपेत्ततः । शेषमाज्येनाभिघार्य भाजनानि विशोधयेदिति । ननु च दत्त्वा पात्राणि विप्रेभ्यो जपेदोदनभाजने । आप्यायस्व समे तुत इति पात्रे सुपाचिते । क्षिपेदन्नं तु सघृतं ततोऽग्नौकरणं भवेदिति पुराणवचनात्कथं मधुसूक्तमिति उच्यते । आप्यायस्वेति मन्त्रस्य रन्धनपात्रजपविषयत्वात् । ततश्च रन्धनपात्रे आप्यायस्वेति जपित्वा पात्रान्तरे उद्धृत्य घृतेनाभिघार्योद्धरणपात्रे मधुसूक्तं जपेदित्यर्थः । अत्रैक अपसव्येनाग्नौकरिष्य इति पृच्छेदित्याहुः । तन्न । सव्येनैव तु पृष्ट्वा तमपसव्येन होमयेत् । पितृपङ्क्तिषु मूर्धन्यस्तस्य पाणावनभिमानिनिति पैठीनसिवचनात् । अत्रैतत्संदिह्यते । किं श्राद्धार्थं पृथक्पाक उतैक एव । तत्रैके कर्कादय आहुः । देवपितृमनुष्यादीनां सर्वार्थं एक एवेति । अन्ये तु पृथगिति । तदेतद्विचारणीयम् । तत्र यद्येक एवेत्युच्येत तदा सर्वसामान्येन श्राद्धपाकस्य वैशिष्ट्यानुपपत्तिः परिश्रितादियत्नविधायकवचनानां च वैयर्थ्यं स्यात् । अथ पृथगुच्येत तदा वैशिष्ट्यं प्रच्छन्नादिपरिश्रितादियत्नविधायकवचनसार्थक्यं स्यात् । तस्मात्पृथक् पाक इति युक्तम् । तथा च वायुपुराणम्—पितॄणां निर्वपेद्भूमौ कूर्चे वा दर्भसंस्कृते । व्यासोऽपि—चाण्डालश्वपचौ वर्ज्यौ निर्वापे समुपस्थिते । लौगाक्षिरपि—पित्र्यर्थं निर्वपेत्पाकं वैश्वदेवार्थमेव च । वैश्वदेवं न पित्र्यर्थं न दर्शं वैश्वदेविकम् । देवलोऽपि, तथैव यन्त्रितो दाता स्नात्वा प्रातः सहाम्बरः । आरभेत नवैर्भाण्डैरन्वारब्धस्तु बान्धवैः । तिलांश्च विकिरेत्तत्र सर्वतो बन्धयेदजान् । असुरोपहतं सर्वं तिलैः शुध्यत्यजेन च । ततोऽन्नं बहुसंस्कारं नैकव्यञ्जनभक्ष्यवत् । चोष्यपेयसमृद्धं च यथाशक्त्युपकल्पयेदिति । मार्कण्डेयोऽपि—पृथक्पाकेन नेत्यन्ये केचिदिच्छन्ति पूर्ववत् । नित्यश्राद्धं पृथक्पाकेन केचिदिच्छन्ति । केचिच्छ्राद्धपाकादेवेत्यर्थः । अपि च मातामहपृथक्श्राद्धपक्षे पैठीनसिः—विधिहीने यतः श्राद्धे नाश्नन्ति पितृदेवताः । पृथक्पाकेनैव तस्माच्छ्राद्धं मातामहं भवेदिति । तस्मात्पृथक्पाक एव । 'कुरुष्वेत्यनुज्ञातः पिण्डपितृयज्ञवद्धुत्वा' द्विजैः कुरुष्वेत्यनुज्ञातः पिण्डपितृयज्ञवद्धोमं कुर्यादित्यर्थः । अत्र पिण्डपितृयज्ञवदुपचारः पित्र्य इति परिभाषितेऽपि पिण्डपितृयज्ञवदिति पुनर्वचनं परिसंख्यानार्थम् । तेन साग्नेर्यथा पिण्डपितृयज्ञे परिस्तरणपात्रासादनादिकर्मकलापस्तथा श्राद्धे न भवति किं तु अपसव्यादिना पर्युक्ष्य मेक्षणेनाहुतिद्वयमात्रमाहिताग्नेर्दक्षिणाग्नौ स्मार्ताग्नेरौपासने यथोपदेशं भवतीत्यर्थः । अत्रैके विवदन्ते—अग्नौकरणहोमश्च कर्तव्यमुपवीतिना । प्राङ्मुखेनैव देवेभ्यो जुहोतीति श्रुतिः''' । अपसव्येन वा कार्यो दक्षिणाभिमुखेन च । निरुप्य हविरन्यस्मा अन्यस्मै नहि हूयते । इति कात्यायनवचनात्सव्येन जुहुयादग्नावग्नौकरण आहुती इति वृद्धयाज्ञवल्क्योक्तेश्चोभयथावचनदर्शनात् साग्निः सव्येन निरग्निरपसव्येनेति । तदयुक्तम् । स जघनेन गार्हपत्यं प्राचीनावीती भूत्वेति श्रुत्या पिण्डपितृयज्ञवदिति सूत्रकृता च साग्निनिरग्न्योरपसव्येनैव विहितत्वात् । अन्ये त्वाहुः—उपवीतित्वविधायकवचनस्य पूर्वपक्षरूपत्वादपसव्येनेति वचनस्य च सिद्धान्तरूपत्वादपसव्येनैव सर्वेषामिति । एतदप्यहृद्यम् । अथातो गोभिलोक्तानामन्येषां चैव कर्मणामिति कात्यायनेन प्रतिज्ञातत्वात्सामगानां सव्येन यजुषामपसव्येनेति यथासंख्यं व्यवस्थेति सिद्धम् । तथा च कात्यायनः—स्वाहा स्वधा नमः सव्यमपसव्यं तथैव च । आहुतीनां यथा संख्या सावगम्या स्वसूत्रत. । वृद्धयाज्ञवल्क्यः—छन्दोगा जुहुयुः सव्येनापसव्येन याजुषा इति । [ अत्रैतत्संदिह्यते—किं स द्विजेऽप्स्विति । अत्र तुशब्दद्वयं सर्वाधानार्धाधानपक्षौ सूचयति । तेनाहिताग्निः सर्वाधाने दक्षिणाग्नावेवार्धाधाने त्वौपासन एव जुहुयादित्यर्थः ।

औपासने गृह्याग्नौ अग्न्यभावो वक्ष्यमाणः । ? ] तथा—हस्तेऽग्नौकरणं कुर्यादग्नौ वा साग्निको द्विजः । इति । अत्रैके माधवस्मृतिचन्द्रिकाकारादयो अग्नेरसंनिधानाद्यभावे हस्ते लौकिकाग्नौ वाऽग्नौकरणं साग्निकः कुर्यादित्याहुः । तथा चोदाहरन्ति—आहृत्य दक्षिणाग्निं तु होमार्थं वै प्रयत्नतः । अग्न्यर्थं लौकिकं वाऽपि जुहुयात्कर्मसिद्धये । अग्न्यर्थं सोमपानाग्निकार्यार्थं (?) लौकिकाग्निमाहृत्य । अन्ये तु कल्पतरुकारादयो लौकिकमावसथ्याग्निमाहुः । तदेतद्विचारणीयम् । यद्यग्नेरसंनिधानाद्यभावे साग्नेर्लौकिकाग्निस्वीकरणं स्यात्तदा—न पैतृयज्ञियो होमो लौकिकेऽग्नौ विधीयते, इति मनुवचनमनर्थकम्, अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेदिति नियमभङ्गश्च स्यात् । यथाऽग्नौकरणमिति यौगिकत्वाद्धस्तजलादिभ्यो लौकिकाग्नौ विशिष्टत्वाच्च साग्नेर्लौकिकाग्नावेवेति । तदा प्रासङ्गिकतीर्थादावपि श्राद्धप्रसक्तौ लौकिकाग्नावग्नौकरणमतिप्रसज्येत । किं च—लौकिकेऽग्नौ सुसंपादत्वादग्न्यभाव एव न संभवतीत्यग्न्यभावे तु विप्रस्येत्यसंगतं स्यात् । तस्मात् लौकिक आवसथ्याग्निरिति युक्तम् । ततश्च हस्तेऽग्नौकरणं कुर्यादग्नौ वा साग्निको द्विजः, इत्यत्र वाशब्दो व्यवस्थितविकल्पे । तेन विद्यमाने श्रौते स्मार्ते वाग्नावग्नौ होमस्तदसंनिधाने हस्ते न लौकिक इत्यर्थः । अग्न्यभावश्च पञ्चविधः । प्रागभावः प्रध्वंसाभावः संनिहिताभावोऽधिकाराभावोऽत्यन्ताभावश्चेति । तत्र विवाहात्पूर्वं प्रागभावः । तदूर्ध्वमाहितस्याग्नेः प्रमादादिना नाशे सति पुनराधानात्पूर्वं प्रध्वंसाभावः । देशभ्रंशादनवकाशेऽरणिसमारोपणादौ कृते संनिधानाभावः । अशुद्धद्रव्यादिस्पृष्टेऽग्नौ प्रायश्चित्तं विनाधिकाराभावः । नैष्ठिकब्रह्मचर्येऽग्न्यभावेनात्यन्ताभाव इति । यस्त्वग्न्यभावस्मृतस्तावद्यावज्जायां न विदन्तीत्यभाव उक्तः सोऽयमप्येको भावः पृथग्दर्शनार्थं न त्वयमेवाभाव इति नियमार्थं, पूर्वोक्तपञ्चविधाभावोपपत्तेः । तत्राग्नेः प्रागभावेऽत्यन्ताभावे चाग्न्यभावादग्नौ होमाभावः । प्रध्वंसाभावाधिकाराभावयोश्चावश्यकविधौ सांकल्पिकमेव श्राद्धं नाग्नौकरणम् । अरणिसमारोपणादौ संनिध्यभावे त्वावश्यकश्राद्धे साग्नेरपि द्विजहस्त एवाग्नौकरणमिति । तथा च व्यासः—त्यक्ताग्नेः पार्वणं नास्ति नैकोद्दिष्टं सपिण्डनम् । त्यक्ताग्नेस्तु न पिण्डोक्तिस्तस्मात्संकल्प्य भोजयेत् । आलस्येन नास्तिक्यादिना वा योऽग्निं त्यजति तस्यैकोद्दिष्टपार्वणसपिण्डीकरणादिसर्वश्राद्धेष्वनधिकारोऽतः संकल्प्य भोजयेत् । तद्व्यतिरिक्तस्यात्यक्ताग्नेरग्न्यसंनिधानेऽपि साङ्गपिण्डश्राद्धेऽधिकार इत्यर्थः । ततश्च हस्तेऽग्नौकरणमिति संकल्पयेत् । संकल्पं च यदा कुर्यात् न कुर्यात्पात्रपूरणम् । नावाहनाग्नौकरणं पिण्डांश्चैव न दापयेत् । संकल्प्य तु यदा श्राद्धं न कुर्यात्पात्रपूरणम् । विकिरश्च न दातव्यमिति स्पष्टमिहोदितम् । इति । अतो लौकिकेऽग्नौ इति सिद्धम् । अथवा विधुरादीनामग्नौकरणमिध्माधानाज्यभागपूर्वकं विहितं तस्य च हस्तेऽनुपयुक्तत्वात्तद्विषयं लौकिकाग्निस्वीकरणम् । यदुक्तं—हस्तेऽग्नौकरणमिति तत्किं देवद्विजकरे किं वा पित्र्यकरे इति । उभयथाऽपि नानावचनदर्शनात् । तथाहि यमः—नाग्नौकरणवत्तत्र होमे दैवकरो भवेत् । पर्यस्तदैवनाद्दर्भानास्तीर्य यतो ह्यग्निसमो द्विजः (?) । इति । कात्यायनोऽपि—मातामहस्य भेदेऽपि कुर्यात्तन्त्रस्य साग्निकः । भेदे पृथग्वैश्वदेवश्राद्धे तत्र च साग्निकः । (?) मातामहस्यापि मातामहद्विजकरेऽपि अग्नौकरणं कुर्यादिति पित्र्यकरेऽप्यर्थादुक्तम् । तथा—अनग्निकस्य विप्रस्य हस्तेऽग्नौकरणं भवेत् । दैवे पूर्वं हि तत्कुर्यात्पितृभ्यस्तदनन्तरम् । अन्यदपि—अनग्निकस्तु यो विप्रः श्राद्धं कुर्वीत पार्वणम् । दैवपाणौ हुत्वा शेषं दद्यात्तु पैतृके । यमोऽपि—देवविप्रकरेऽनग्निः कृत्वाग्नौकरणं द्विजः । इति । एवं वचनविप्रतिपत्तौ ह्येक आहुः दैवपित्र्यकरयोर्विकल्प इति । साग्निः पितृकरे निरग्निर्दैवकर इति । तदुभयमप्यविचारितरमणीयम् । तत्र साग्नेरग्न्यसंनिधानादौ हस्तेऽग्नौकरणं स्यादनुकल्पविधित्वेन पित्र्यद्विजहस्त एव विहितत्वात् । द्वितीये तु श्राद्धविशेषेष्वेव हस्तेऽग्नौकरणस्य व्यवस्थितत्वादसार्वत्रिकत्वात् । किंच—पिण्डपितृयज्ञवदित्यतिदेशेन प्राचीनावी-

तादिधर्मप्राप्तौ दैवद्विजकरे तद्धर्मानुपपत्तेः । तस्मात्साग्नीनामग्न्यसंनिधानादौ काम्यादिचतुःश्राद्धेषु पित्र्यद्विजहस्त इतरत्राग्नाविति सिद्धम् । तथा च गृह्यकारः—आन्वष्टक्यं च पूर्वेद्युर्मासिमास्यथ पार्वणम् । काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टकम् । चतुर्ष्वाद्येषु साग्नीनां वह्नौ होमो विधीयते । पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपीति । आन्वष्टक्यं नवमीश्राद्धम् । एकोद्दिष्टं लक्षणया सपिण्डीकरणश्राद्धम् । तथा चायमर्थः—आहिताग्नेः सर्वाधानपक्षे दक्षिणाग्नौ अर्धाधान औपासने स्मार्ताग्नेः सत्यग्नौ तत्रैव । उभयोरप्यग्न्यसंनिधाने चाऽऽवश्यकश्राद्धे संनिहितेऽप्यग्नौ काम्यादिचतुर्षु श्राद्धेषु च पित्र्यद्विजहस्त एव । निरग्नीनां वा(ज)सनेयिप्रभृतीनां पिण्डयज्ञादावपसव्यादिना पित्र्यद्विजहस्त एव । साग्निसामगादीनामग्न्यसंनिधौ सव्यादिना दैवपित्र्यकरयोर्विकल्पः । निरग्नीनां तेषां सव्यादिना दैवद्विजकर एवेति । यत्तु पित्र्ये यः पङ्क्तिमूर्धन्यस्तस्य पाणावनग्निमानिति कात्यायनवचनं तत्र सामगपरतयाऽयमर्थः—पित्र्ये देवपितृमातामहश्राद्धे यः पङ्क्तिमूर्धन्यः प्रथमोपवेशितो दैविकद्विज इत्यर्थः । अन्यशाखिविषये तु पैठीनसिः—पितृपङ्क्तिषु मूर्धन्यस्तस्य पाणावनग्निमानिति प्राक्प्रदर्शितमिति सर्वमनवद्यम् । ननु चाग्नौकरणं किं प्रतिश्राद्धं किं वैकपङ्क्ताविति । तथा ह्युक्तम्—दैवपूर्वं हि तत्कुर्यात्पितृभ्यस्तदनन्तरम् । कात्यायनोऽपि—मातामहस्य भेदेऽपि कुर्यात्तन्त्रेण साग्निक इति । अस्यार्थः पूर्वमेवोक्तः । अत्र माधवीये दैवद्विजकरपक्षे पितृमातामहद्वयार्थं सकृदेवाग्नौकरणं पित्र्यद्विजकरपक्षे मातामहपङ्क्तावपि पृथक् द्वितीयमग्नौकरणमिति । पारिजाते तु मातामहपृथक्श्राद्धपक्षे मातामहपङ्क्तावग्नौकरणमग्निसंनिधौ साग्निकः कुर्यादिति । एतदुभयमपि सदाचाराभावाचिन्त्यम् । अथवाश्वलायनशाखिविषयं होमद्वयम् । वाजसनेयिनां त्वेक होम एव । तथा च वैश्वदेवे यद्येकस्मिन्भवेयुर्ब्राह्मयो द्विजाः । तदैकपाणौ होतव्यं स्याद्विधिर्विहितस्तदेतिवाक्ये वैश्वदेव इत्यस्य पित्र्योपलक्षणत्वेनैकपाणावेव होमव्यवस्थेत्यविरोधः । 'हुतशेषं दत्त्वा पात्रमालभ्य जपति पृथिवीत इति' पात्रमित्युद्देश्यगतमेकत्वमित्यविवक्षितम् । ज्योतिष्टोमे दशापवित्रेण ग्रहं संमार्ष्टीतिवत् । अतश्च सर्वपात्रालम्भः । कांस्यपात्रपरिमाणमाह स्मृतिः—पञ्चाशत्पलिकं कांस्यं ह्यधिकं भोजनाय वै । गृहस्थैस्तु सदा कार्यमभावे हेमरौप्ययोरिति । आलभ्य जपतीति मन्त्रान्त आलम्भ इत्युक्तम् । अत्रैतत्संदिह्यते—किं हुतशेषमात्रं दत्त्वा पात्रालम्भ उताहो सर्वान्नं परिविष्येति । उभयथा वचनदर्शनात् । तथा हि स्कन्देश्वरसंवादे—विप्रपात्रेऽथ पृथ्वीत इति पात्राभिमन्त्रणम् । इदमन्नं च साङ्गुष्ठं ततोऽन्नपरिवेषणम् । याज्ञवल्क्योऽपि—हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः । यथालाभोपपन्नेषु रौप्येषु तु विशेषतः । दत्त्वान्नं पृथिवीपात्रमिति पात्राभिमन्त्रणमिति । अत्रैक आहुः—साग्निः पूर्वं परिविष्य हुतशेषं दद्यात्पात्रमालभेत निरग्निस्तु हुतशेषं दत्त्वाऽन्नं परिविष्य पात्रमालभेत । अन्नेषु परिविष्टेषु हुतशेषं ददात्यथेति वचनादिति । तदयुक्तम् । साग्निर्हुतशेषं दत्त्वैव परिवेषयेदिति क्रमस्य शौनकेन दर्शितत्वात् । तथा च हुत्वाऽग्नौ परिशिष्टं तु पितृपात्रेष्वनन्तरम् । निवेद्यैवापसव्येन परिवेषणमाचरेदिति । हुतशेषमपसव्येन निवेद्येत्यन्वयः । यत्तूक्तं—निरग्निर्हुतशेषं दत्त्वान्नं परिविष्य पात्रमालभेतेति । तदसंगतम् । अन्नेषु परिविष्टेष्विति वचनस्य वैयर्थ्यापत्तेः । ततश्च साग्निर्हुतशेषं दत्त्वान्नं परिविष्य व्यस्तपाणिभ्यां पात्रमालभेत, निरग्निरन्नं परिविष्य हुतशेषं दत्त्वा तथैव पात्रमालभेतेत्यर्थः । यत्तु विप्रपात्रेऽथ पृथिवी इति वचने ततोऽन्नपरिवेषणमित्यन्नपरिवेषणस्य पात्रालम्भानन्तर्यं प्रतीयते तदन्नशब्दो व्यञ्जनपर इत्यविरोधः । अद्यतेऽनेनेत्यन्नमिति व्युत्पत्तेः । तथा च पुराणसमुच्चये—भाजनालम्भनं कुर्याद्दत्त्वा चान्नं यथाविधीति । व्यस्तपाणित्वमाह पद्मपुराणम्—दक्षिणं तु करं कृत्वा वामोपरि विधानवत् । दैवं पात्रमथालभ्य पृथ्वीते पात्रमुच्चरेत् । दक्षिणोपरि वामं च पित्र्यपात्रस्य ल-

म्भने। इति। अत्रैके विवदन्ते—हुतशेषं दैवपात्रेषु न देयमिति। तथा च यमः—अग्नौकरणशेषं तु पित्र्येऽपि प्रतिपादयेत्। पितृपाद्य पितॄणां तु न दद्याद्वैश्वदेविके इति। हुत्वाग्नौ परिशिष्टं त्विति प्रागुक्तम्। वायुपुराणेऽपि—हुत्वा दैवकरे साग्निः शेषं पित्र्ये निवेदयेत्। नहि स्मृताः शेषभाजो विश्वेदेवाः पुराणगैरिति। अन्ये त्वाहुरविशेषात्सर्वेभ्यो देयमिति। तथा च याज्ञवल्क्यः—हुतशेषं प्रदद्यात्तु भाजनेषु समाहित इत्यादि(र)विशेषः। देवलोऽपि—यत्र यत्क्रियते कर्म पैतृके ब्राह्मणान्प्रति। तत्सर्वं तत्र कर्तव्यं वैश्वदेवत्वपूर्वकम्। इति। सूत्रकारोऽपि—दैवपूर्वं श्राद्धमिति। अत्रोच्यते—आद्ये यदुक्तं न देयमिति तदयुक्तम्, वचनार्थानवबोधात्। तथाहि—अग्नौकरणशेषं तु पित्र्येऽपि प्रतिपादयेदित्यपिशब्दाद्दैवेऽपि शेषदानोपपत्तेः। किं च पितॄणां प्रतिपाद्य वैश्वदेवे न दद्यादपि तु पूर्वं दैवे तदनु पित्र्य इत्यर्थोपलब्धेः। यत्तूक्तम्—हुत्वाग्नाविति वचनं तत्साग्निविषयम्। यच्चाभिहितं हुत्वा दैवकरे साग्निरिति तत्र दैवकरे हुत्वा शेषं पित्र्ये दद्यान्न तु पित्र्ये हुत्वा शेषं देवेषु दद्यादित्यर्थः। अतोऽर्थानवबोधादयुक्तमित्युक्तम्। द्वितीयोऽपि नातीव शोभते। उक्तहेतुत्वात्साग्निनिरग्न्योर्विशेषावगतेः। न चोभयोर्वचनव्यक्तौ सत्यामविशेषो युक्तः [ कुत्रचिद्विषयान्तरस्य दृश्यमानत्वात्?]। ततश्चायमर्थः साग्नेरग्निहोमाद्देवपूर्वहुतशेषदानं पितृपात्रेष्वेव। निरग्निर्दैवकरहोमे पितृपात्रेष्वेव पित्र्यकरहोमे तु निरग्नेर्देवादिसर्वपात्रेषु हुतशेषदानमिति। तथा च शाट्यायनः। हुतशेषं पूर्वं दैवे दत्त्वा पश्चात्पित्र्ये दद्यादिति। कात्यायनोऽपि—विप्रपाणौ ततो हुत्वा दद्याच्छेषं पृथक् पृथक्। देवानामादितः कृत्वा पितृपात्रेषु च क्रमात्। वृद्धमनुः—दैवपूर्वं यतः श्राद्धं तस्माद्दद्यात्प्रयत्नतः। अग्नौकरणशेषं च देवानामादितः क्रमात्। वैश्वदेवादितः सर्वं विकिरं पिण्डवर्जितम्। अग्नौकरणशेषं यत्प्रदद्याद्वैश्वदेविके। धर्मप्रदीपेऽपि—कुशेषूत्तानपाणिस्तु जुहुयाद्वै घृतप्लुतम्। शेषं देवाय दातव्यं पितृभ्यस्तदनन्तरम्। इति। साग्निर्दैवपूर्वं दद्यान्निरग्निर्नेत्यविरोध इति कश्चित्। एवं दत्त्वा पिण्डार्थमवशेषयत्। तथा च हारीतः—हुतोच्छिष्टं ब्राह्मणेभ्यः प्रदाय पिण्डार्थमवशेषयेत्। धर्मप्रदीपेऽपि—अग्न्यभावे तु विप्रस्य हस्ते हुत्वा तु दक्षिणे। शेषयेत्पितृविप्रार्थं पिण्डार्थं शेषयेत्तथेति। 'वैष्णव्यर्चा यजुषा वाङ्गुष्ठमन्नेवगाह्यापहता इति तिलानवकीर्येति' वाशब्दः समुच्चयनिवृत्तौ। वैष्णवी ऋगिदं विष्णुरित्यादिका, यजुश्च विष्णो हव्यं रक्षेति तयोरेकतरमन्त्रेणानखं द्विजाङ्गुष्ठमन्ने निवेश्यापहता इति मन्त्रेण तिलानां समन्तात्प्रदक्षिणादि यथोपदेशं विकिरेदित्यर्थः। निरङ्गुष्ठं प्रदत्तं हि पितॄणां नोपतिष्ठते इति वचनात्। नोपतिष्ठत इत्यासुरं भवतीत्यर्थः। तथा च यमः—निरङ्गुष्ठं तु यच्छ्राद्धं बहिर्जानु च यद्धुतम्। बहिर्जानु च यद्धुतं सर्वमेवासुरं भवेदिति। अत्रैके तिलानन्नपात्रेष्वप्यवकिरन्ति। तन्न। तिलान्सर्वत्र निक्षिप्य पितृपात्रेषु वर्जयेत्। पितृपात्रे तिलान्दद्यान्निराशाः पितरो गताः इति वचनात्। पाराशरोऽपि—सर्वदा च तिला ग्राह्याः श्राद्धकाले विशेषतः। पात्रेषु पतितान्दृष्ट्वा निराशाः पितरो गताः इति। यत्तु ततो मधुघृताक्तं तु सोष्णमन्नं तिलान्वितम्। गृहीत्वा देवतीर्थेन प्रणवेनैव तत्पुनः। एतद्वोऽन्नमित्युक्त्वा विश्वेदेवांस्तु भोजयेदित्यत्र तिलान्वितत्वमन्नस्योक्तं तद्वैश्वदेवविषयम्। परिवेषणे तिलाक्षेपविषयं वा। तथा च मत्स्यपुराणे—उभाभ्यामपि हस्ताभ्यामाहृत्य परिवेषयेत्। प्रशान्तचित्तः सतिलं दर्भपाणिरशेषतः, इति सतिलमन्नमुभाभ्यां हस्ताभ्यां परिवेषयेन्नैकहस्तेनेत्यर्थः। तथा च—एकेन पाणिना दत्तं शूद्रादन्नं न भक्षयेत्। पुराणेऽपि—नापवित्रेण हस्तेन नैकेन न विना कुशान्। नायसे नायसेनैव श्राद्धे तु परिवर्जयेदिति। एकायसशब्दे सप्तमी। तत्पात्रेऽन्नं न धार्यमित्यर्थः। सौवर्णरजताभ्यां च खड्गेनौदुम्बरेण वा। दत्तमक्षय्यतां याति फल्गुपात्रेण चान्यथेति वचनात्। फल्गु उदुम्बरः। नापवित्रेणेति सपवित्रकरः स्वयं परिवेषयेदित्यर्थः। फलस्यानन्तता प्रोक्ता स्वयं तु परिवेषण इति वायुपुराणवचनात्। यत्त—परिवेषणं प्रशस्तं हि भार्यया पितृतृप्तये।

पितृदेवमनुष्याणां स्त्री सहाये यतः स्मृतेति तदन्यापेक्षया स्वाशक्तौ वा वेदितव्यम् । न विना कुशानिति केवलप्रतिषेधः, हस्त दत्तं तु यत्स्नेहव्यञ्जनं लवणादिकम् । दातारं नोपतिष्ठन्ते भोक्ता भुङ्क्ते तु किल्बिषम् । घृतं वा यदि वा तैलं विप्रो दद्यान्नखच्युतम् । यमस्तदशुचिं प्राह तुल्यं गोमांसभक्षणमिति वचनात् । कात्यायनोऽपि—चतुःस्रोतःसमायुक्तो हस्तेनोन्मार्जयेद्घृतम् । उभावधो व्रजेयातां दाता भोक्ता न संशयः । उन्मार्जयेच्छोधयेत् । क्वतन्नखैश्चतुर्भिश्च यो दद्यात्पाणिना घृतम् । दाता पुण्यं न चाप्नोति भोक्ता पापशतं व्रजेदिति । अपहता इति मन्त्रः पित्र्य एव न वैश्वदेवे स्वत एव रक्षोघ्नत्वादिति कर्कः । तूष्णीं यवानित्यन्ये । अत्र यद्यप्यन्नादिकल्पनं नोक्तं तथा पीदमन्नमिमा आप इदमाज्यं इदं हव्यमित्यन्नादिकल्पनं कार्यम् । तथा च कात्यायनः—उभाभ्यामपि हस्ताभ्यां पात्रं कृत्वा तु तद्दृढम् । मोचयेद्दक्षिणं हस्तमन्ने तत्कल्पयेत्सदा । तथा—स्पर्शनान्ते स्पृशेदन्नं कल्पनान्ते बलिं हरेदिति । अत्र कश्चिदाह कव्यादि नोच्चरेदिति । तदयुक्तम् । विष्णो हव्यं च कव्यं च ब्रूयाद्रक्षेति वै क्रमादिति मनूक्तेः । पुराणसमुच्चये—हव्यं दैवे समुच्चार्य पितॄणां कव्यमेव च । कव्यस्योच्चारणादेव प्राप्नुयुस्तृप्तिमुत्तमाम् । कव्यादाः पितरः प्रोक्तास्तस्मात्कव्यं प्रकीर्तयेत् । इति । अत्रैतच्चिन्त्यते—किं परिवेषणे सव्यापसव्यविधिरस्ति न वेति । अत्रैक आहुरस्तीति । तदयुक्तम् । उभयत्र सव्येन विहितत्वात् । तथा च कार्ष्णाजिनिः—अपसव्येन कर्तव्यं पित्र्यं कृत्यं विशेषतः । अन्नदानादृते सव्यमेवं मातामहेष्वपि । भरद्वाजोऽपि—सर्वं कर्मापसव्येन पितृकर्मणि कुर्वता । अन्नदानादृते कार्यं तद्वद्विप्रविसर्जनमिति । तथा—एकपङ्क्त्युपविष्टानां विप्राणां श्राद्धकर्मणि । भक्ष्यं भोज्यं समं दद्याद्विपरीतं तु निष्फलम् । तथा न पङ्क्त्यां विषमं दद्यादिति । 'उष्णꣳस्विष्टमन्नं दद्यात्' उष्णमिति पर्युषितापूपादिव्युदासार्थम् । तेन स्मृत्युक्तमपि पर्युषितमपूपादि श्राद्धेषु न दद्यादित्यर्थः । तद्विधिश्च—यवगोधूमजं सर्वं पयसश्चैव विक्रिया । तत्पर्युषितमप्याद्यं स्नेहाक्तं चैव यद्भवेदित्यादि । अत्रैके पर्युषितमशुक्तं देयमित्याहुः । तथा च यमः—अपूपाश्च करम्भाश्च धानावटकसक्तवः । शाकं मांसमपूपं च घृतं केशरमेव च । यवागूः पायसं चैव यच्चान्यत्स्नेहसंयुम् । सर्वं पर्युषितं भोज्यं शुक्तं चेत्परिवर्जयेत् । देवलोऽपि—अभोज्यं प्राहुराहारं शुक्तं पर्युषितं च यत् । अत्र व्रीह्या(दिपि)ष्टापूपभक्षणार्थं पुनरपूपोक्तिः । शङ्खोऽपि—दधि भक्ष्यं च शुक्तेषु सर्वं च दधिसंभवम् । ऋजीषपक्वं भक्ष्यं स्यात्सर्पिर्युक्तमिति स्थितिः इति । तन्नातीव शोभते । अशुक्तपर्युषितस्य दृष्ट्यादिदोषोपहतत्वेन नित्यभोजनविषयत्वात् । तेषामप्युष्णानामेव श्राद्धोपयुक्तत्वाच्च । तथा चादित्यपुराणे—विविधं पायसं दद्याद्भक्ष्याणि सुबहूनि च । स्निग्धोष्णानि च यो दद्यादग्निष्टोमफलं लभेदिति । करम्भो दधियुक्तसक्तवः इष्टका कासारखण्डः कृशरस्तिलकल्कमिश्रितौदनः । सुबहूनीति सुशब्देन नैर्मल्यं विविधत्वं च दर्शयति । तथा च यमः—ततो विशदमन्नाद्यं भोजयेत्प्रयतो द्विजान् । अन्नं सूपं घृतं शाकं मांसं दधि पयो मधु । धानांश्च मधुसंयुक्तानिक्षूंश्चैव सगोरसान् । शर्कराफलमूलं च सर्वं दद्यादमत्सरीति । मनुरपि—भक्ष्यं भोज्यं च विविधं मूलानि च फलानि च । हृद्यानि चैव मांसानि पानानि सुरभीणि च । विविधमित्येकान्ननिषेधः । तथा च—ततोऽन्नं बहुसंस्कारं नैकव्यञ्जनभक्ष्यवत् । चोष्यपेयसमृद्धं तु यथाशक्त्युपकल्पयेदिति वचनात् । अन्नमित्यदनीयम् । अथवान्नमिति पक्वस्य संज्ञा । सस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते । आमान्नं वितुषं ज्ञेयं पक्वमन्नमुदाहृतम् । इति वचनात् । तेन संभवे सत्यामान्नादिकं न देयमित्यर्थः । दद्यादिति यथोक्तसंकल्पवाक्यं दर्शयति । अत्रैके अर्घेऽक्षय्योदके चैवेति कात्यायनेनान्नदाने तत्रस्य दर्शितत्वादस्मत्पितृपितामहप्रपितामहा अमुकामुकशर्माण इत्याद्युच्चार्य तृतीयांशस्तेभ्यः स्वधेति तन्त्रेण दद्यादित्याहुः । अन्ये तु अन्नमसावेतत्त इत्युद्दिश्य भोजयेदिति शाङ्खायनोक्तेरमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नम इति ब्रह्मपुराणोक्तत्वाच्च

पृथगुपदिश्य दद्यान्न तन्त्रेणेति। एवं च सति अस्मत्पितरमुकशर्मन्नस्मत्पितामहामुकशर्मन्नस्मत्प्रपितामहामुकशर्मन्नित्यादि पृथक् पृथगुद्दिश्य वाक्यान्ते इदमन्नं घृतादिसहितं वः स्वधानम इत्युभयविधं वाक्यमुचितमित्याभाति तत्र पृथग्भावयोरुपदेशात्। अथ च—ब्राह्मणा विप्रसंपत्तावेकैकस्यापि ते त्रयः। एको वैकस्य भोक्तव्यस्त्रयाणामेक एव वेति वचनात्पृथग्द्विजपक्षे पृथगुपदेशः। त्रयाणामेकद्विजपक्षे तन्त्रेणेत्यविरोधः। अत्रैके इदमन्नं वः स्वधेति संकल्पे न ममेति स्वस्वत्वपरित्यागं न कुर्वन्ति। तदयुक्तम्। स्वसत्तानिवर्तनस्योक्तत्वात्। तथा चात्रिः—हस्तेन भुक्तमन्नाद्यमिदमन्नमुदीरयेत्। स्वाहेति च ततः कुर्यात्स्वसत्ताविनिवर्तनम्। संबन्धगोत्रनामानि इदमन्नं ततः स्वधा। पितृक्रमादुदीर्यन्ते स्वसत्तां विनिवर्तयेत्। धर्मप्रदीपेऽपि—सिद्धान्नस्य तु संकल्पो भूमावेव प्रदीयते। हस्तेषु दीयमानं यत् पितॄणां नोपतिष्ठते। भूमिर्जनित्री सर्वेषां भूतानां च विशेषतः। तत्रोपतिष्ठतेऽन्नं तु न च हस्ते कदाचन। मञ्जरिकारोऽपि—दीपमन्नं च पिण्डं च भूमौ दद्याद्विचक्षणः। पूर्वदानानि विप्राणां करे दद्याच्च दक्षिणे। तथा—तिलदर्भसमायुक्तं तोयं भूमौ प्रदापयेत्। पात्रस्य संनिधौ पित्र्ये दैवेऽपि च समन्वितम्। वैश्वदेवस्य वामे तु पितृपात्रस्य दक्षिणे। संकल्पोदकदानं स्यात् नित्यं श्राद्धे यथाविधीति। अकृते संकल्पेऽन्नं द्विजा न स्पृशेयुः। पात्रं च नोद्धरेयुः। असंकल्पितमन्नाद्यं पाणिभ्यां यदुपस्पृशेत्। अभोज्यं तद्भवेदन्नं पितॄणां नोपतिष्ठते। धर्मप्रदीपेऽपि—अकृते अन्नसंकल्पे यः पात्रं चोद्धरेद्द्विजः। वृथा श्राद्धमवाप्नोति दाता च नरकं व्रजेदिति। संकल्पानन्तरं प्रागपोशनादन्नं न गृह्णीयात्। तथा च तत्रैव—अन्नं दत्तं न गृह्णीयाद्यावत्तोयं न संपिबेत्। अपीत्वा मर्दितं चान्नं भुञ्जते किल राक्षसाः। तथा—हस्तेनान्नं न गृह्णीयाद्यावत्तोयं न संपिबेत्। अपीत्वा मर्दयेदन्नं निराशाः पितरो गताः। 'शक्त्या वा' वाशब्दोऽभावे न विकल्पे। स्विष्टाभावे शक्त्यनुसारेण दद्यादित्यर्थः। यद्यप्यशक्तस्तथाऽपि मांसगोधूमादेरवश्यकत्वमवगन्तव्यम्। तथा च स्कन्दसंवादे—श्राद्धे मांसं न यो दद्यान्न वाश्नाति कुतर्कतः। नरकार्हावुभौ श्रौतस्मार्तधर्मस्य लोपनात्। वृद्धयाज्ञवल्क्योऽपि—विना मांसेन यच्छ्राद्धं कृतमप्यकृतं भवेत्। क्रव्यादाः पितरो यस्मादलाभे पायसादयः। जातूकर्ण्योऽपि—द्रव्यवान् यो द्विजः श्राद्धे दद्यान्नो मांसवत्सरे?। स दुरात्मा दुराचारो वेदमार्गस्य दूषकः। तत्रैव संवादे—रोमाणि कूर्मपृष्ठे चेन्नृणां चेच्छृङ्गसंभवः। व्योम्नश्च मुष्टिना घातः सरिथतेद्रक्तपा वपुः। तदोपतिष्ठते स्कन्द दत्तं श्राद्धं निरामिषम्। तस्मात्सर्वप्रयत्नेन श्राद्धं देयं हि सामिषम्। अभोज्य विप्रान्यः श्राद्धे मांसमन्यांस्तु भोजयेत्। स्वयमश्नाति वा मूढः स याति नरकं ध्रुवम्। अत्रिः—अगोधूमं च यच्छ्राद्धं कृतमप्यकृतं भवेदिति। अत्रैके विवदन्ते। फलमूलाशनैर्मेध्यैर्मुन्यन्नानां च भोजनैः। न तत्फलमवाप्नोति यन्मांसपरिवर्जनादिति मनुवचनात्, मुन्यन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः। मधुप्रधानं शूद्रस्य सर्वेषांऽवाविशेषतः। इति पुलस्त्यवचनाच्च मुन्यन्नप्राधान्यावगतेर्मांसं क्षत्रविड्विषयं न ब्राह्मणस्येति। अन्ये त्वाहुः—क्रयादिलब्धमांसेन श्राद्धं न प्राणिहिंसनपूर्वकम्। इति। तथा च मनुः—नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित्। न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्जयेत्। समुत्पत्तिं च मांसस्य वधबन्धाय देहिनाम्। प्रसमीक्ष्य निवर्तेत सर्वमांसस्य वर्जनात्। भीष्मोऽपि—न हि मांसं तृणात्काष्ठादुपलाद्वापि जायते। हत्वा जन्तून्भवेन्मांसं तस्मात्तत्परिवर्जयेत्। एकस्य क्षणिका तृप्तिरन्यः प्राणैर्वियुज्यते। अहो मांसस्य दौरात्म्यं प्रत्यक्षमिह दृश्यते। अन्यच्च, यूपं छित्त्वा पशुं हत्वा कृत्वा रुधिरकर्दमम्। यद्येवं गम्यते स्वर्गो नरके केन गम्यते इति। अपर आहुः—कलिविषये मांसनिषेधो विधिस्त्वन्यविषय इति। तथा च—अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु। देवरेण सुतोत्पत्तिः कलौ पञ्च विवर्जयेदिति। देशाचारविषयो निषेध इत्यन्ये। तस्मान्मांसं श्राद्धे न देयमिति। अत्रोच्यते—यदुक्तं मुन्यन्नं ब्राह्मणस्येति प्राधान्यं

मुन्यन्नस्य मांसं क्षत्रविड्विषयम् न ब्राह्मणस्येति । तन्न । मांसाद्युक्तवस्तुनोऽभाव एव मुन्यन्नादिप्राधान्योपपत्तेः । तथा चात्रेयः—मुन्यन्नामिषमाध्वीकैर्विप्रद्विजजघन्यजाः । श्राद्धं विदध्युरसति द्रव्ये तु सति चापरैः । माध्वीकं मधु द्विजौ क्षत्रविशौ जघन्यजाः शूद्राः । मांसादिद्रव्येऽसति मुन्यन्नादिभिः क्रमाद्विप्रादयः श्राद्धं कुर्युः सति तु मांसादिद्रव्ये तेनापरैश्च मेध्यैः कुर्युरित्यर्थः । तथा च वृद्धशातातपः—मुन्यन्नामिषमध्वाज्यैरभावे प्रोक्तवस्तुनः । क्रमाद्विप्रादिभिर्वर्णैर्विधेयमिति शुश्रुमः । परमान्नेन मांसेन शाकैर्मधुघृतादिभिः । सर्ववर्णैः प्रकर्तव्यं श्राद्धं वै वित्तशाठ्यतः । वृद्धमनुरपि—मुन्यन्नैर्ब्राह्मणाः श्राद्धं सामिषं बाहुसंभवाः । ऊरव्या मधुना कुर्युः शूद्रा मूलफलादिना । असंभवे प्रकर्तव्यमेतैरेव हि केवलम् । सर्ववर्णैस्तु कर्तव्यं सामिषं सति संभव इति । यच्चाभिहितं प्राणिहिंसापूर्वक एव श्राद्धे मांसनिषेध इति । तदप्ययुक्तम् । सामान्यहिंसाया अग्नीषोमीयपशुहिंसयेव विधिविहितहिंसया बाधोपपत्तेः । तथा च जाबालः—हिनस्ति यः पशून् स्वार्थमुद्दिश्यैव स पापभाक् । श्राद्धापदेशतो हिंसन्नपि स्वार्थे न दुष्यति । स्कन्दसंवादेऽपि—अर्थे देवपितॄणां हि यो हिनस्ति पशून् द्विजः । स यज्ञफलमाप्नोति ते च यान्ति परां गतिम् । स्वार्थमन्नं पचेद्यस्तु यो हिनस्ति वृथा पशून् । एकाकी मिष्टमश्नाति यश्च याति स रौरवम् । भीष्मोऽपि—योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया । कृष्णद्वैपायनः प्राह स्थावरत्वं स गच्छति । अत्रिरपि—मधुपर्के च सोमे च दैवे पित्र्ये च कर्मणि । अत्रैव पशवो हिंस्या नान्यत्रेति कथंचन । तथा—यज्ञार्थं पशवः सृष्टाः पुत्रार्थं वरयोषितः । इत्यादिवचनात् । यच्चाभ्यधायि—कलियुगविषयो मांसनिषेध इति तदप्यसंगतम् । कलिविषयविधायकवचनैकपूर्वपक्षरूपत्वे तद्वचनस्य बधित्वात् । तथा च जातूकर्ण्यः—मांसं युगेषु सर्वेषु यज्ञश्राद्धार्थमाहृतम् । श्राद्धोपयमनो यज्ञे कलौ तच्च विशिष्यते । समन्तुरपि—कुतर्कोपहता विप्राः कलावश्नन्निरामिषम् । तृप्तिं नाश्नन्ति पितरस्तस्य श्राद्धे कदाचन । पैठीनसिः—परमान्नं कालशाकं मधु मांसं घृतं पयः । मुन्यन्नानि तिला विप्राः प्रकृत्या हविरष्टधा । शस्तान्यष्टौ तु सर्वेषु युगेषु मुनिसत्तमाः । पितॄणां देवतानां च दुर्लभानि कलावतीति । निबन्धान्तरे तद्वचनस्य निर्मूलत्वप्रतिपादनाच्च । तथा—गोमेधो नरमेधश्च अक्षता गोपशुस्तथा । देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेदिति पराशरपाठात् । यत्तूदाहृतं देशविषयो निषेध इति । तदप्यसुन्दरम् । मध्यदेशादौ जिह्वालोलुपतया विहितेतरमांसभक्षणस्य प्राचुर्योपलब्धेः । न च देशविषयः शक्यते वक्तुम् । देशभेदविपर्यस्य निरस्तत्वात् । तथा च वृद्धप्रचेताः—न युगानां न देशानां न विप्राणां द्विजोत्तमाः । धर्मशास्त्रेषु वै भेदो दृश्यते मांसभक्षणे । देशभेदे श्राद्धे दृश्यमानत्वाच्च । तस्माद्विहितहिंसादौ श्राद्धादिकर्मसु च मांसभक्षणविधिरितरत्र निषेध इति सिद्धम् । तथा च मनुः—प्रोक्षितं भक्षयेन्मांसं ब्राह्मणस्य च काम्यया । यथाविधि नियुक्तश्च प्राणानामेव चात्यये । याज्ञवल्क्योऽपि—प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विजकाम्ययेति । भक्ष्यत्वं छागादिविहितपशुमांसस्य । देवलः—पञ्च पञ्चनखा भक्ष्या धर्मतः परिकीर्तिताः । गोधा कूर्मस्तथा विच्छल्लकश्चेति ते स्मृताः । धर्मत इति प्रोक्षितम् । न चायमपूर्वविधिः रागप्राप्तत्वात् । नापि नियमः पक्षप्राप्त्यभावात् । अतोऽत्र गोधादिपञ्चकव्यतिरिक्तपञ्चनखनिषेधाधिकारपरिसंख्येति । तथा च रामायणे—शशकः शल्लको गोधा खड्गी कूर्मश्च पञ्चमः । पञ्च पञ्चनखा भक्ष्या न भक्ष्या वानरा नराः । इति । एतच्चाप्युपलक्षणम् । अत्रैतदुच्यते—किं प्रोक्षितादौ नियम उत परिसंख्येति । तत्र परिसंख्येति ब्रूमः । नियमस्य पक्षप्राप्तौ विधायकत्वात् । यत्तु—स्वरुच्या क्रियमाणे तु यत्रावश्यक्रिया भवेत् । नियमः सोऽत्र विज्ञेयः श्राद्धे मांसाशनं यथेत्यत्र नियमत्वमङ्गीकृतं तच्छब्दार्थरूपनिवृत्तिफलत्वादेकरूपत्वमेव तयोरित्यविरोधः । अतोऽत्र श्राद्धशब्दस्योपलक्षणपरत्वेन प्राणात्ययादिचतुष्टये परिसंख्यैव युक्ता । तथा च बृहस्पतिः—रोगी नियुक्तो विविवद्धुतं विप्रवृत्तस्तथा । मांसमद्या-

श्चतुर्थैषा परिसंख्या प्रकीर्तिता । अतोऽन्यथा तु योऽश्नीयाद्विधिं हित्वा पिशाचवत्। यावन्ति पशुरोमाणि तावत्प्राप्नोति रौरवमिति । रोगी प्राणात्ययोपलक्षितः । नियुक्तः श्राद्धे । विधिवद्धुतं प्रोक्षितादि । विप्रवृतो द्विजकामनयाभ्यर्थितः । परिसंख्येत्यभक्षणसंकल्पव्यावृत्तिः । तेन यथोक्तकृताभक्षणनियमस्यापि निवृतिरित्यर्थः । तथा च—यथाविधि नियुक्तो यो मांसं नाश्नाति मानवः । स प्रेत्य पशुतां याति संभवानेकविंशतिमिति वचनात् । संकल्पश्च—श्राद्धवर्जं मया मांसं न भोक्तव्यं कदाचन । त्यजेच्चेदिति संध्यायापरथा पतनं भवेदिति कार्ष्णाजिनिनोक्तः । तथेश्वरसंवादेऽपि—ब्रह्मचारी यतिर्मांसं त्यजेत्स्त्री पतिना विना । श्राद्धवर्जमथान्योऽपि संत्यजेत्तपसः कृते । इति । अतश्च श्राद्धादिषु मांसं भक्ष्यमेवेत्युक्तम् । यत्तु—प्रोक्षिताभ्युक्षितं मांसं तथा ब्राह्मणकाम्यया । अल्पदोषमिति ज्ञेयं विपरीते तु लिप्यते । इति महाभारतवचनं तदविहितसंकल्पविषयम् । तथा च बृहस्पतिः—मद्यं मासं मैथुनं च भूतानां लालनं स्मृतम् । तदेव विधिना कुर्यात्स्वर्गं प्राप्नोति मानवः। इति । महाभारते—हविर्यत्प्रोक्षितं मन्त्रैः प्रोक्षिताभिक्षुतं शुचि । वेदोक्तेन प्रकारेण पितृणां प्रक्रियासु च । पितृदैवतयज्ञेषु प्रोक्षितं हविरुच्यते । विधिना वेददृष्टेन तदुक्तान्येन दुष्यतीति । यत्पुनर्धर्मवचनम्—सर्वेषामेव मांसानां महादोषस्तु भक्षणे । निवर्तने महापुण्यमिति प्राह प्रजापतिरिति । यच्च महाभारते वचनं—भक्षणे तु महान्दोषो निवृत्त्या पुण्यमुच्यते । इति । तदुभयमपि श्राद्धादेरन्यत्र जिह्वालयाभक्षणविषयम् । तथा च स्कन्दसंवादे—यत्र यत्र निषेधो हि श्रूयते मांसभक्षणे । जिह्वालान्प्रति स ज्ञेयो न तूक्तविधिनाश्नत इति । तथा—प्रयान्ति नरकं घोरं मांसमश्नन्ति ये नराः । जिह्वालान्प्रति दोषोऽयं न दोषो विधिनाश्नतामिति । यच्च बृहस्पतिवचनं—रोगार्तोऽभ्यर्थितो वाऽपि यो मांसं नात्त्यलोलुपः । फलं प्राप्नोत्ययत्नेन सोऽश्वमेधफलस्य चेति । तच्छ्राद्धे ब्रह्मचारिविषयम् । तथा च मनुः—व्रतवद्देवदैवत्ये पित्र्ये कर्मण्यथर्षिवत् । काममभ्यर्थितोऽश्नीयाद्व्रतमस्य न लुप्यते । इत्येकभिक्षायां व्रतदृष्टिवशादनदनस्य विहितत्वात् । अलोलुप इत्यनेन तद्विषयावगमाच्च । तथा च—स तप्यति तपोऽजस्रं यजते च ददाति च । मधुमांसनिवृत्तो यः प्रोवाचेदं बृहस्पतिः । यावज्जीवं तु यो मांसं विषवत्परिवर्जयेत् । वसिष्ठो भगवानाह स्वर्गलोकं स गच्छति । जैमिनिरपि—ब्रह्मचर्यमुपास्यैव योऽकृत्वा दारसंग्रहम् । संन्यसेन्नाधिकारः स्यान्मांसे विधिवदन्यतः । इति । अन्यतः दारसंग्रहादूर्ध्वं विधिवन्मांसभक्षणाधिकार इत्यर्थः । तथा च मनुः—न मांसभक्षणे दोषो न मद्ये न च मैथुने। प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला । इति । मांसमद्यमैथुनेषु विहितेषु भक्षणपानाभिगमनैर्भूतप्रवृत्तित्वान्न दोषः । निवृत्तिस्तु महाऽफलप्रापिकेत्यर्थः । महती चासावफला चेति व्युत्पत्तेः । न चेयं व्युत्पत्तिर्न साधुरिति वाच्यम् । फलाफलशब्दयोः परयोरुभयथाऽपि महाशब्दस्याकारादेशस्य घटमानत्वात् । तथा च बृहस्पतिः—अमूमांसपुरोडाशे भक्षणं मृगपक्षिणाम् । पुराणेष्वेव यज्ञेषु ब्रह्मक्षत्रसवेषु च । सौत्रामण्यां तथा मद्यं श्रुतौ भक्ष्यमुदाहृतम् । ऋतौ च मैथुनं धर्म्यं पुत्रोत्पत्तिनिमित्ततः । स्वर्गं प्राप्नोति नैवं तु प्रत्यवायेन युज्यत इति । ततश्चायमर्थः । प्रोक्षितादिचतुर्षु स्मृत्युक्तसंकल्पेन मांसत्यागिनामपि गृहस्थानां भक्ष्यमेव मांसं न कोऽपि दोषः । अविहितसंकल्पेन मांसत्यागिना तु प्रोक्षणादिभक्षणे अल्पदोषः । रोगार्तानामभ्यर्थितानां च ब्रह्मचारिणां श्राद्धादिष्वपि भक्षणे महान् दोष एवेति । अतश्च त्यक्तमांसादेरपि श्राद्धे भक्षणमेवोचितमित्युक्तम् । तथा चोशनाः—नियुक्तश्चैव यः श्राद्धे यत्किंचित्परिवर्जयेत् । पितरस्तस्य तन्मासं नैराश्यं प्रतिपेदिरे । देवलोऽपि—नियुक्तस्तु यदि श्राद्धे दैवे मांसं समुत्सृजेत् । यावंति पशुरोमाणि तावन्निरयमृच्छति । स्कन्दसंवादेऽपि, निवेशितस्तु यः श्राद्धे यज्ञे वाऽपि द्विजाधमः । मासं नाश्नाति निरयं याति वै पशुतां ततः । इत्यलं बहुना । अन्यद्विहितप्रतिषिद्धं स्मृत्यन्तरनिबन्धेभ्य उपलब्धव्यं ग्रन्थगौरवभयान्नेह लिखितम्।

'एवमन्नं संकल्प्यापोशनं दत्त्वोङ्कारव्याहृतिपूर्वं गायत्र्यादि जपेत्' तथा च याज्ञवल्क्यः—सव्याहृतिकां गायत्रीं मधुवाता इति तृचं, जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः। इति। एके मधुमध्विति त्रिर्जपं वारिघृतधारां च न कुर्वन्ति। तदयुक्तम्। उभयोरपि विहितत्वात्। तथा च प्रचेताः—अपोशानमथो दत्त्वा सावित्रीं त्रिर्जपेद्बुधः। मधुवाता इति तृचं मध्वित्येतत्त्रिकं तथा। स्कन्दसंवादेऽपि—अपोशानमथो दत्त्वा वारिधारां क्षिपेद्बुधः। नमो देवेभ्य इति च सव्येनोदङ्मुखो द्विजः। अपसव्यं पितृभ्यस्तु घृतधारां वदेत्स्वधामिति। एवं जप्त्वाऽच्छिद्रीकरणं कृत्वा ये देवास येचेह इत्यादि पठित्वा यथासुखममृतं जुषध्वमित्युक्त्वा भोजयेत्। तथा च यमः—अन्नहीनं क्रियाहीनं मन्त्रहीनं च यद्भवेत्। तत् सर्वमच्छिद्रमित्युक्त्वा ततो यत्नेन भोजयेत्। कात्यायनः—ये देवासश्च ये चेह मन्त्रद्वयमुदीरयेत्। मन्त्रान्ते तु ततो ब्रूयादमृतं भोज्यतामिति। दैवे ये देवासः पित्र्ये येचेहेति विवेकः। वृद्धयाज्ञवल्क्योऽपि—यथासुखं जुषध्वं भो इति वाच्यमनिष्ठुरम्। इति। अत्रैके बलिदानमिच्छन्ति नेत्यन्ये। एवं सति वैश्वदेवे बलिः पित्र्ये नेत्यविरोधः। तथा च—स्पर्शनान्ते स्पृशेदन्नं कल्पनान्ते बलिं हरेत्। होमस्तु मधु वातेति होमान्त उदकं पिबेदिति वैश्वदेवविषयम्। अत्रिः—दत्ते वाप्यथवाऽदत्ते भूमौ यो निक्षिपेद्बलिम्। तदेतन्निष्फलं याति निराशैः पितृभिर्गतैः। इति पित्र्यविषयम्। पितृणामन्न उत्सृष्टे बलिं कुर्वन्ति ये द्विजाः। आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठत इति वसिष्ठोक्तेः। 'अश्नत्सु जपेद्व्याहृतिपूर्वां गायत्रीं सप्रणवां सकृत्त्रिर्वा राक्षोघ्नीः पित्र्यमन्त्रान्पुरुषसूक्तमप्रतिरथमन्यानि च पवित्राणि' सप्रणवां व्याहृतिपूर्विकां गायत्रीमित्यन्वयः। पातार्थेन बाध्यते वाशब्दस्तु विकल्पार्थः। अशनात्पूर्वं त्रिरश्नत्सु च सकृदिति व्यवस्थार्थो वा। पूर्वस्याष्टदोषदुष्टत्वात्। तथा च प्रचेताः—अपोशानमथो दत्त्वा सावित्रीं त्रिर्जपेद्बुधः। मधुव्वाता इतितृचं मध्वित्येतत्त्रिकं तथा। इति। अत्राह हलायुधः—सकृत्त्रिर्वा मधुमतीर्मधु मध्विति चेति पाठ इति। तत्कर्कादिभिरनादृतत्वात्तज्जपस्याशनात्पूर्वं विहितत्वाच्च चिन्त्यम्। रक्षांसि घ्नन्तीति रक्षोघ्नाः। मूलविभुजादित्वात् कप्रत्ययस्ता एव राक्षोघ्नीः, कृणुष्व पाज इत्यादयः पञ्चर्चः। ऋग्विशेषणत्वात्स्त्रीत्वम्। तथा च श्रुतिः। एतान्रक्षोघ्नान्प्रतिसरानपश्यत्कृणुष्वपाजः प्रसितिन्नपृथ्वीमिति रक्षोघ्ना वै प्रतिसरा इति। पित्र्यमन्त्रा उदीरतामित्यादित्रयोदशर्चः। अत्रैके सुरावन्तं वर्हिषदमित्यादिपञ्चदशर्चः पितृमन्त्रा इत्याहुः। तन्न। पितरो देवतात्वेन यत्र स्तूयन्ते ते पित्र्या इति तद्धितेन उदीरतामित्यादीनामेव पित्र्यमन्त्रत्वावगतेः। तथा च भट्टपादाः—तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन चेष्यते। देवतासंगतिस्तत्र दुर्बलं तु परं परमिति। कृणुष्व पाज यत इति च अग्नेष्वाजेवर्चसमुच्चरेत्। सुरावन्तादिकां सर्वां जपेच्च पितृसंहितामित्यनेन सुरावन्तमित्यादीनां पितृसंहितासंज्ञकत्वात्। पुरुषसूक्तं सहस्रशीर्षेत्यादिषोडशर्चः। अप्रतिरथमाशुः शिशान इत्यादि सप्तदशर्चोऽनुवाक इति केचित्। द्वादशर्च इत्यन्ये। तदेतद्विचारणीयम्। यदि सर्वस्यापि शान्तिपाठस्याप्रतिरथसंज्ञा तदा सप्तदशद्वादशसंख्यावच्छेदकप्रमाणं न स्यात्। अथ संख्यावच्छेदकप्रमाणं तर्ह्याचार्यमतभेदात्सप्तदशद्वादशसंख्याया मूलस्य दर्शनाभावादनिश्चयापत्तिः स्यात्। तस्माच्छ्रुतिमूलत्वेन द्वादशर्च एवेति गम्यते। तथा च श्रुतिः—ब्रह्मन्नप्रतिरथं जपेत्युपक्रम्य तस्माद्ब्रह्माप्रतिरथं जपित्वा शुभिरूपाद्द्वादश भवन्तीत्युपसंहारः। अन्यानि पिण्डब्राह्मणादीनि। तथा च वृद्धयाज्ञवल्क्यः—पुरुषसूक्तं यजुषां पिण्डब्राह्मणशन्त्यर्थम्। पितृस्तवं च पश्चैवं गायत्रीं मधुब्राह्मणमिति। चकारो ब्रह्मादिस्तोत्रसमुच्चयार्थः। तथा च मत्स्यपुराणम्—ब्रह्मविष्ण्वर्करुद्राणां स्तोत्राणि विविधानि च। इन्द्रस्य सोमसूक्तानि पावमानीश्च शक्तित इति। अत्रैकेऽस्य जपस्य पित्र्यत्वादपसव्येन जपन्ति। तदयुक्तम्। सव्येनैव विहितत्वात्। तथा च जमदग्निः—अपसव्येन कर्तव्यं सर्वं श्राद्धं यथाविधि। सूक्तस्तोत्रजपं मुक्त्वा विप्राणां च विसर्जनम्। अपि च—सूक्तस्तोत्रजपं त्यक्त्वा पिण्डघ्राणं च दक्षिणाम्। आह्वानस्वाग-

तानां च विना च परिवेषणम्। विसर्जनं सौमनस्यमाशिषांप्रार्थनं तथा। विप्रप्रदक्षिणां चैव स्वस्तिवाचनकं विना। पित्र्यमन्त्रप्रकर्त्तव्यं प्राचीनावीतिना सहेति। अत्र यद्यप्यश्नीयादिति सामान्येनोक्तं तथाऽपि यथोपदेशं भोक्तव्यम्। तथा च प्रचेताः—पीत्वाऽपोऽशानमश्नीयात्पात्रे दत्तमगर्हितम्। सर्वेन्द्रियाणां चापल्यं न कुर्यात्पाणिपादयोः। बौधायनः—पादेन पादमाक्रम्य यो भुङ्क्तेऽनापदि द्विजः। नैवासौ भोज्यते श्राद्धे निराशाः पितरो गताः। प्रचेताः—भोजनं तु न निःशेषं कुर्यात्प्राज्ञः कथंचन। अन्यत्र दध्नः क्षीराद्वा क्षौद्रात्सक्तुभ्य एव च। शेषत्यागस्य नित्यत्वात्। तथा च जमदग्निः—भुक्त्वा पीत्वा तु यः कश्चिद्रिक्तपात्रं समुत्सृजेत्। स नरः क्षुत्पिपासार्तो भूत्वा जन्मनि जन्मनि। यत्तु न निन्द्येयुर्नावशेषयेयुरिति तेनैवोक्तं तदधिकोच्छिष्टत्यागविषयम्। तृप्यन्ते मासमात्रं तु यो विप्रो न त्यजेत्तदा। यच्छ्राद्धे पिण्डदानादौ तद्वै रक्षांसि गच्छतीति वचनात्। मनुः—अत्युष्णं सर्वमन्नं स्याद्भुञ्जीरंश्चैव वाग्यताः। न च द्विजातयो ब्रूयुर्दात्रा पृष्टा हविर्गुणान्। दात्रा हविर्गुणान्पृष्टा वाग्यता द्विजा इत्यनेनैव कथनेन प्राप्तौ न ब्रूयुरिति पौनरुक्त्यं हस्तसंज्ञयापि कथननिषेधार्थम्। हुङ्कारेणापि यो ब्रूयाद्धस्तेनापि गुणान्वदेदिति शङ्खेन प्रतिषिद्धत्वात्। एतच्च श्राद्धासमाप्तौ वेदितव्यम्। निर्वृत्ते तु तथा श्राद्धे वक्तव्यं शोभनं हविरिति वचनात्। भोक्तृणां निषेधाद्दात्रा हविः प्रशंसनीयमेव रुचिजननार्थम्। तथा च भक्ष्यभोज्यगुणानुक्त्वा भोजयेद्ब्राह्मणान् शनैः। पृथक् पृथक् च संवेद्य कुर्यादेभ्यः प्ररोचनमिति। भुञ्जीरंश्चैवेत्येवकारः परस्परस्पर्शेऽपि भोजनार्थः। तथा च शङ्खः—श्राद्धपङ्क्तिषु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत्। भुक्त्वा तदन्नमत्याज्यं गायत्र्यष्टशतं जपेत्। कात्यायनोऽपि—एकपङ्क्तौ तु यो भुङ्क्ते विप्रो विप्रं स्पृशेद्यदि। तदन्नं न त्यजेद् भुक्त्वा गायत्र्यष्टशतं जपेत्। इति। हारीतः—पात्रे पात्रं प्रतिष्ठाप्य येऽज्ञानाद्भुञ्जते द्विजाः। आसुरं तद्भवेच्छ्राद्धं पितृणां नोपतिष्ठते। मार्कण्डेयः—कटिभुग्नस्तु यो भुङ्क्तेऽनन्तर्जानुकरस्तथा। हसते वदते चैव निराशाः पितरो गताः। शङ्खलिखितौ—नात्यन्ताधिकं दद्यान्न प्रतिगृह्णीयादिति। दातृधर्ममाह शङ्खः—श्राद्धे नियुक्ते भुञ्जानान्न पृच्छेल्लवणादिषु। उच्छिष्टाः पितरो यान्ति पृच्छतो नात्र संशयः। दातुः पतति वै बाहुर्जिह्वा भोक्तुश्च भिद्यते। अत्रैतत्संदिह्यते—किं मृष्टव्यञ्जनादिकं भोक्ता याचेत न वेति। उभयथा च दर्शनात्। तथा हि वृद्धशातातपः—अपेक्षितं यो न दद्याच्छ्राद्धार्थमुपकल्पितम्। न याचते स्मृतो मूढः स भवेद्ब्रह्मघातकः। इति। वायुपुराणं तु निषेधति—याचते यदि दातारं ब्राह्मणो ज्ञानदुर्बलः। पितरस्तु न तुष्यन्ति दातुर्भोक्तुर्न संशयः। इति। तथा—कृच्छ्रद्वादशरात्रेण मुच्यते कर्मणस्ततः। तस्माद्विद्वांश्चैव दद्यान्न याचेत न दापयेदिति। अन्यच्च—न पङ्क्त्यां विषमं दद्यान्न याचेत न दापयेदिति। अत्र विरोधे, उपकल्पितं याचेत न त्वनुपकल्पितमिति व्यवस्थेत्यविरोधः। निषेधस्यानुकल्पित(विषय)त्वात्। यमः—यावद्धविष्यं भवति यावदिष्टं प्रदीयते। तावदश्नन्ति पितरो यावन्नाह ददाम्यहम्। अहं ददामीति यावन्नाह तावदश्नन्तीत्यर्थः। एतच्च नापेक्षितविषयम्। अपेक्षितं यो न दद्यादिति वचनात्। ननु मौनित्वनियमात्कथं याचनं कथं वा नियमनमिति हस्तादिसंज्ञाप्रतिषेधात्। उच्यते—हस्तादिसंज्ञानिषेधो हविर्गुणाख्यानविषयो न तु याचनादिविषय इत्यविरोधः। तथा च यमः—नान्नपानादिकं श्राद्धे वारयेन्मुखतः क्वचित्। अनिष्टत्वादहुत्वाद्वा वारणं हस्तसंज्ञया। देवलोऽपि—अन्नपानकशीतोददधिभ्योऽप्यवलोकितः। वक्तव्ये कारणे संज्ञां कुर्वन्भुञ्जीत पाणिनेति। दात्रा व्यञ्जनक्रमादायावलोकितः वक्तव्ये हस्तेन संज्ञां कुर्यादित्यर्थः। अन्यदामन्त्रिताश्चैवमिर्त्यत्रोक्तं प्राक्। शेषं स्मृतिभ्योऽनुसन्धेयम्। 'तृप्तान् ज्ञात्वाऽन्नं प्रकीर्य' ब्राह्मणांस्तृप्तान् ज्ञात्वा सर्वान्नमुदकेनाप्लाव्याग्निदग्धेतिमन्त्रेण प्रकिरेदित्यर्थः। तथा च याज्ञवल्क्यः—सार्ववर्णिकमन्नाद्यं सन्नीयाप्लाव्य वारिणा। समुत्सृजेद्भुक्तवतामग्रतो विकिरन्भुवि। सार्ववर्णिकं सर्वव्यञ्जनसहितम्। अत्राह कश्चित्—असंस्कृत-

भागधेयत्वाद्विकिरेद्दध्योदनमेव केवलमिति । तदयुक्तम्—यदन्नं पिण्डदानेषु तदन्नं विकरे न्यसेदिति । वृद्धयाज्ञवल्क्योक्तेः । अतृप्तेष्वन्नं न च विकिरेदिति तृप्तान् ज्ञात्वेत्युक्तम् । तथा चेश्वरसंवादे—ज्ञात्वा तृप्तांस्ततो विप्रान्प्रकुर्याद्विकरासनमिति । तृप्तिज्ञानं चान्नाग्रहे आहारानुमानेन प्रतिपन्नम् । अत्र यद्यप्यवकीर्येत्युक्तं तथाऽपि प्रदेशपरिमाणं स्मृत्यन्तरादवगन्तव्यम् । तथा च वृद्धयाज्ञवल्क्यः—विकिरं भुवि दातव्यं उच्छिष्टेभ्यः षडङ्गुलम् । पठन्ति च—उच्छिष्टस्योत्तरे भागे पिण्डं दद्यात्षडङ्गुलम् । इति । यत्तु पुराणसमुच्चये—विश्वदेवपितॄणां च अन्तरे च क्षिपेत्कुशान् । तत्रावकिरणं कुर्याद्गाथामेतामुदीरयेत् । यच्च तत्समं विकिरं दद्याद्दैवपित्र्यान्तरे भुवीति तद्विजाग्रस्थानबोधकमित्यविरोधः । भुक्तवतामग्रत इति योगीशोक्तः । ननु चास्य विकिरसंज्ञकत्वाद्विकीर्येति वाच्यं न प्रकीर्येति । उच्यते । विकिरं विना श्राद्धं व्यर्थमिति प्रशब्देन द्योतितमित्यदोषः । तथा च गोभिलः—विकिरेण विना श्राद्धं निष्फलं परिकीर्तितम् । एकोद्दिष्टं विशेषेण प्रेतश्राद्धेषु वर्जयेदिति । यो मोहात्कुरुते श्राद्धं विकिरेण विना क्वचित् । तत्सर्वं व्यर्थतां याति पितृपिण्डोदकादिकमिति । अत्रैतत्संदिह्यते—किमपिण्डकश्राद्धे विकरः स्यादुत नेति, उभयथाऽपि वचनदर्शनात् । तथा हि—पिण्डनिर्वापरहितं यत्र श्राद्धं विधीयते । स्वधावाचनलोपोऽस्ति विकरस्तु न लुप्यते । तथा—न चाग्नौकरणं कुर्यान्नार्घदानं कथंचन । न पिण्डं कल्पनाश्राद्धे विकिरान्नं न चोत्सृजेदिति । अत्रैक आहुरुभयशास्त्रत्वाद्विकल्प इति । अन्ये त्वाहुः—यत्र पिण्डदानं न निषिद्धं तत्र चेद्देशकालाद्यसंभवेन पिण्डवर्जं करोति तदा विकिरः स्यान्न तु युगाद्यादिषु पिण्डदाननिषेधेऽपीति । तदेतद्विचारणीयम्—विकरः प्रधानमुताङ्गमिति । तत्र यदि प्रधानं तर्हि पिण्डप्राधान्यं विरुध्येत । अथाङ्गं तर्ह्यङ्गानां प्रधानधर्मानुरोधित्वात् पिण्डाभावे तदभाव इति किमत्राश्चर्यम् । यच्च विकल्प इत्युक्तम् । तदसत् । विषयकल्पनस्य सद्भावात् । तदुक्तं—स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथगिति । तस्माद्देशकालाद्यसंभवे पिण्डाभावेऽपि विकिरेन्न पिण्डनिषेधेऽपीति चतुरस्रम् । तथा च मोक्षेश्वरनिबन्धे—मघायुगादिभरणीश्राद्धे पिण्डं विवर्जयेत् । अवनेजनपूजान्तमुल्मुकास्तरणानि च । निःशेषमग्नौकरणं विकिरं च षडङ्गुलानिति । ततश्च युगाद्यादिषु पिण्डनिषेधे आवाहनाद्यग्नौकरणविकिरवेद्यादिपूजान्तस्वधावाचनादीनां निषेध इति सिद्धम् । एवं विकीर्याचामेत् । तथा च मरीचिः—श्राद्धेषु विकिरं दत्त्वा यो नाचामति भ्रमात् । पितरस्तस्य षण्मासान्भवन्त्युच्छिष्टभोजिनः । इति । तथा—विकिरे पिण्डदाने च तर्पणे भोजने तथा । कृते आचमनं प्रोक्तं दर्भत्यागो विधीयते । इति अत्रानग्निदग्धा इत्यपिपाठः । येषां दाहो न क्रियते येऽग्निदग्धास्तथा पर इति ब्रह्मपुराणवचनात् । 'सकृत्सकृदपो दत्त्वा पूर्ववद्गायत्रीं जपित्वा मधुमतीर्मधुमध्विति च' ब्राह्मणेभ्यश्चुलुकार्थं सकृत्सकृदपो दत्त्वा पूर्ववत्सप्रणवव्याहृतिं गायत्रीं सकृत्त्रिर्वा मधुमतीर्मधुमध्विति जपेदित्यर्थः । तथा च मार्कण्डेयः—ततस्त्वाचमनार्थाय दद्याच्चापः सकृत्सकृदिति । वीप्सा पित्र्यदैवद्विजार्था । चकारोऽपोशानेऽपो दत्त्वा गायत्र्यादिजपं द्योतयति । तथा च गोभिलसूत्रं—अङ्गुष्ठमन्ने निधाय सकृत्सकृदपो दत्त्वाऽन्वप्सुदिति । मधुशब्दोऽस्ति यासु ता मधुमत्यो मधुवाता इत्यादितृचम् । मधुमध्विति द्विरुच्चारणं मन्त्रप्रदर्शनार्थं संहितायां मधु मधुमध्विति प्रवर्ग्ये मन्त्रदर्शनात् । अत्रैके देवपूर्वमपोशानमाहुः । तदयुक्तं पितृपूर्वं विहितत्वात् । तथा च विष्णुः—उदङ्मुखेष्वाचमनमादौ ततः प्राङ्मुखेषु दद्यादिति । विसर्गश्चुलुकश्चाग्नौकरणं पङ्क्तिवापनम् । करशुद्धिरपोशानं पितृपूर्वाणि षड् भवेदित्युक्तम् । 'तृप्ताः स्थेति पृच्छति' अनन्तरं तृप्ताः स्थेति ब्राह्मणान्पृच्छेदित्यर्थः । अत्रैक आहुः—पङ्क्तिमूर्धन्यप्रश्ने तृप्ताः स्थेति बहुवचनं पूजार्थमिति । तन्न । तृप्ताः स्म इति प्रतिवचने बहुत्वानुपपत्तेः । न चाग्नौकरणादिष्विवात्रैकस्य प्रश्ने दृष्टार्थत्वसंभवः । तस्मात्पङ्क्तिमूर्धन्यं पृच्छति, सर्वान्वेत्यत्र व्यवस्थितविकल्प इत्युक्तम् । ततश्च

सर्वे प्रष्टव्या इति । तथा च यमः—यथा ब्रूयुस्तथा कुर्यादनुज्ञातस्तु वैर्द्विजैरिति । अत्रैतच्चिन्त्यते—भोक्तृविप्राणां वमने किं श्राद्धं समापनीयमुत किं कर्तव्यमिति । अत्रैके समापनीयमित्याहुः । तदयुक्तम् । तस्य स्मृतिविरुद्धत्वात् । तथा च हेमाद्रिकल्पे—अकृते पिण्डदाने तु ब्राह्मणो वमते यदि । पुनः पाकं प्रकुर्वीत श्राद्धं कुर्याद्यथाविधि । धर्मप्रदीपेऽपि—अकृते पिण्डदाने तु भुञ्जानो ब्राह्मणो वमेत् । पाकं कृत्वा पुनः श्राद्धं कर्तव्यं तु यथाविधीति । आत्राकृत इत्युपादानात्कृते समापनमिति चेत्, मैवम् । वमनस्य श्राद्धविघ्नरूपोपपातकत्वात् । अतश्चोत्तरेद्युरेव पुनः श्राद्धमित्युचितम् । तथा च स्मार्तलिङ्गम्—वमने वा विरेके वा तद्दिनं परिवर्जयेदिति । न चैतन्निमन्त्रणानन्तरं श्राद्धात्पूर्वं वमनविषयमिति वाच्यम् । श्राद्धविघ्ने समुत्पन्ने अन्तरा मृतसूतके । वदन्ति शुद्धौ तत्कार्यं दर्शे वापि विचक्षणाः । इति उत्तरेद्युर्विधानोपपत्तेः । दाक्षिणात्याः पुनरत्र प्रायश्चित्तमाहुः । तथा च पठन्ति—पित्र्यद्विजानां मध्ये तु पितुश्च वमनं यदि । तद्दिने चोपवासश्च पुनः श्राद्धं परेऽहनीति । सर्वमन्नं समादाय मन्त्रैः प्राणादि पञ्चकैः । द्वात्रिंशदाहुतीर्हुत्वा शेषं कर्म समाचरेदिति । अत्रानूचानाः प्रमाणम् । 'तृप्ताः स्म इत्यनुज्ञातः शेषमन्नमनुज्ञाप्य' ततस्तृप्ताः स्मेति द्विजैरुक्त्वा शेषमन्नं किं क्रियतामिति भोक्तॄन्पृष्ट्वा इष्टैः सह भुज्यतामिति अनुज्ञापयेदित्यर्थः । एतदपि सर्वापेक्षं न पङ्क्तिमूर्धन्यस्यैव । ननु च श्राद्धार्थोद्धृतपाक एव शेषशब्दः न पाकान्तरे तत्कथं पाकांतरभोजनं तद्दानं चेति । उच्यते—गृहसिद्धस्य सर्वस्यापि शेषत्वेन दानभोजनत्वापत्तेः । तथा च यमः—भक्ष्यं भोज्यं तथा पेयं यत्किंचित्पच्यते गृहे । न भोक्तव्यं पितॄणां तदनिवेद्य कथंचनेति । अतश्च शेषस्यापि पितुरुद्देशेन दानमित्युक्तम् । अत्रैतच्चिन्त्यते—किं निरग्नेरुल्मुकनिधानं स्यादुत नेति । अत्रैक आहुः—उल्मुकस्य दक्षिणाग्निसंभूतत्वात्तदभाव उल्मुकं नेति । अन्येत्वाहुः—पिण्डपितृयज्ञस्य विहितत्वात्स्मार्ताग्नेर्न, न च निरग्नेरिति । अपर आहुः—न देवताग्निशब्दक्रियाः परार्थत्वादिति पारिभाषिकसूत्राग्निषिद्धत्वादग्न्यन्तरेण न स्यादिति । निरग्नेरपि श्राद्धाधिकारित्वान्निषादस्थपतीष्टिवल्लौकिकाग्नेरविरुद्धत्वात्तदग्निनेत्येके । एवं च सति उल्मुकनिधानमनियतमिति । अत्रोच्यते—यदुक्तं दक्षिणाग्नेरभावे तन्नेति तदयुक्तम् । पिण्डपितृयज्ञवदुपचार इत्यनेन स्मार्ताग्नेः प्राप्तत्वात् । यच्चोक्तं—पितृयज्ञेऽस्य विहितत्वान्निरग्नेर्नेति । तदप्यसारम् । अकरणे प्रत्यवायस्मरणान्नित्यत्वोपलब्धेः । यच्चाभिहितं न देवताग्नीत्यादिनाग्नेः प्रतिनिधिर्नेति तदप्यनुचितम् । पिण्डपितृयज्ञवदित्यतिदेशेन लौकिकाग्न्युपादानस्य वैयर्थ्यापत्तेः । यच्चाम्नायि निषादस्थपतीष्टिवदविरुद्धमिति तदपि नित्यत्वानुपलब्धेर्न संतुष्टिकरम् । तस्माद्गुणफलविधेरुल्मुकनिधानं साग्निनिरग्न्योर्नित्यमिति सिद्धम् । तथा च वृद्धयाज्ञवल्क्यः—पितृरूपास्त असुराः पिशाचा राक्षसाश्च ये । तेषां वै रक्षणार्थाय क्षिपेदग्निं तु नैर्ऋते । मण्डलेष्वग्निदाहं ये न कुर्वन्ति द्विजोत्तमाः । निराशाः पितरस्तेषां पैशाचं श्राद्धमुच्यते । स्कन्दसंवादे—ये रूपाणीतिमन्त्रेण न्यसेदुल्मुकमन्तिके । शुष्कगोमयसंभूतं यावच्छ्राद्धं समाप्यते । अजीर्णदोषनाशाय पितॄणामग्निवर्धनम् । श्रुतिरपि—स यदनिधायोल्मुकमथैतत्पितृभ्यो दद्यादसुरक्षसानि हैषामेतद्विरमीरं तथोहैतत्पितॄणामसुररक्षसानि न विमथ्नते, तस्मात्पुरस्तादुल्मुकं निदधातीति । 'सर्वमन्नमेकतोद्धृत्योच्छिष्टसमीपे दर्भेषु त्रींस्त्रीन्पिण्डानवनेज्य दद्यात्' एकतोद्धृत्येति छान्दसः सन्धिः । सर्वशब्दः सूपाद्यपेक्षो न यावद्वाचकः । उच्छिष्टसमीप इति सदेशोपलक्षणं पारिभाषिकम् । तथा चात्रिः—पितॄणामासनस्थानादग्रतस्त्रिरनिच्छुर । उच्छिष्टसंनिधाने नोच्छिष्टासनसंनिधौ । व्यासोऽपि—अरत्निमात्रमुत्सृज्य पिण्डांस्तत्र प्रदापयेत् । यत्रोपस्पृशतां वापि प्राप्नुवन्ति न विन्दव इति । अत्र यथासंभवं विकल्पः—विकरपिण्डविवक्षयासनस्थानाततोदुच्छिष्टं ततो विकरस्ततः पिण्डा वा त्रिरात्रिव्यवस्था वा । व्याममात्रं समुत्सृज्य पिण्डांस्तत्र प्रदापयेदिति जातूकर्ण्यवचनात् । वीप्सा मातामहविषया ।

अवनेज्येति स्वार्थिको णिच् । दद्यादिति स्मृत्युक्तवाक्यं दर्शयति गोत्रादिप्रकाशकम् । ततश्च सर्वमदनीयमेकपात्र उद्धृत्य पत्न्या पिण्डास्तु मुद्गीयात्त्रिवर्गस्य सहायिनीति । अत्र यद्यपि सामान्येन सर्वमित्युक्तं तथापि माषान्नवर्जं द्रष्टव्यम् । तथा च वृद्धयाज्ञवल्क्यः—माषान् सर्वत्र नैवेद्ये पिण्डेऽग्नौ च विवर्जयेत् । यथा मद्यं तथा माषा निषिद्धाश्चाग्निपिण्डयोरिति । अत्रैतत्संदिह्यते—पिण्डपितृयज्ञवदुपचारः पित्र्य इत्यवनेजयत्यपसव्यथं सव्येन वोद्धरणसामर्थ्यादसाववनेनिक्ष्वेति यजमानस्य पितृप्रभृतित्रीनुपमूलथं सकृदाच्छिन्नानि रेखायां कृत्वा यथावनिक्तं पिण्डान्ददात्यसावेतत्त इत्यादि । अत्रैक आहुः—पिण्डपितृयज्ञे लेखायामेवावनिज्य दर्भेषु पिण्डदानमिह तु दर्भेष्वेवावनेजनमित्येतदर्थमिति । तथाच—अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति पात्रतः । परिसंख्योपलक्षणे न स्याताम् । ततश्च पिण्डपितृयज्ञवदेव पिण्डदानमिति हलायुधाभिप्रायः । कर्कोपाध्यायास्तु—उच्छिष्टसामीप्योपदेशाच्च परिसंख्येत्याहुः । एवं च सति कथमियं पुनरुक्तिः सूक्तेति । अत्रोच्यते—यदुक्तं कुशोपर्यवनेजनार्थं पुनरुक्तिरिति तदयुक्तं तथाविधावनेजनस्य छन्दोगविषयत्वात् । तथा च तत्परिशिष्टम्—प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र्य पूर्ववत् । अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति निस्तिलाः । इति । प्रागग्रत्वं निस्तिलत्वं च वृद्धिश्राद्धविषयम् । न च तथा शङ्कनीयम् । अवनेज्य दर्भेषु दद्यादित्यन्वयप्रतिभानात् । तथा च पिण्डपितृयज्ञसूत्रम्—असाववनेनिक्ष्वेत्यादि । अपि च कात्यायनस्कन्दसंवादवचनम्—नामगोत्रे समुच्चार्य प्रदद्यादवनेजनम् । कुशैरास्तरणं कुर्याद्दक्षिणाग्रैस्ततः परम् । द्विगुणांस्तु कुशान्कृत्वा सतिलानर्घसंयुतान् । अवनेनिक्ष्व चोक्त्वाथ कुशान् भूमौ परिस्तरेदिति । यत्त्वभिहितमुपलक्षणपरिसंख्ये इति तदुभयमपि हलायुधेनैव दूषितमित्युपेक्षणीयम् । न च तथेष्टम् । वेद्यादिकरणोपपत्तेः । तथा च देवलः—मण्डलं चतुरस्रं वा दक्षिणावर्तकं महत् । एकदर्भेण तन्मध्य उल्लिखेत्त्रिश्च तं त्यजेत् । ब्रह्माण्डेऽपि—सव्योत्तराभ्यां पाणिभ्यां कुर्यादुल्लेखनं बुधः । वज्रेणाथ कुशैर्वापि उल्लिखेत्तु महीं द्विजः । इति । यच्च हलायुधेनैव पिण्डपितृयज्ञवत्पिण्डदानविधिरित्युक्तं तत्पौनरुक्त्यापरिहाराद्विषयान्तरानुपलब्धेश्च मन्दमिवाभाति । पिण्डपितृयवदुपचार इत्यनेनैव तद्विधेः प्राप्तत्वात् । तस्माद्विषयान्तरबोधनेन पौनरुक्त्यं परिहर्तव्यम् । तद्यथा—पिण्डपितृयज्ञवदित्यतिदेशो यद्यपि साग्निनिरग्न्योरविशेषेण प्राप्तस्तथाऽपि निरग्नेर्विषयान्तरदर्शनाद्यथोचितं साग्निपर एव । तस्यैव सर्वाङ्गोपसंहारस्य न्याय्यत्वात् । निरग्नेस्तु हस्ताग्नौकरणादिविषयान्तरदर्शनात्तदर्थमेवैतत्सूत्रारम्भ इत्यपुनरुक्तिः । अतश्च निरग्नेरुपमूललूनकुशादिप्रतिषेधार्थमिदं सूत्रमिति सिद्धम् । तेन निरग्नेर्महालयादिश्राद्धेषूपमूललूनकुशास्तरणं हस्तद्वयेनावनेजनमेतत्तेऽन्नं स्वधेति प्रयोगश्च न भवतीत्यर्थः । तथा च श्रुतिः—साग्नेरासनादौ समूलता पिण्डेषु सकृदाच्छिन्नतेति । किं च समूलस्तु भवेद्दर्भ इति प्रागुक्तम् । यत्तु शातपथश्रुतौ—सकृदाच्छिन्नान्युपमूलं दितानि भवन्तीत्युक्तं तदपि साग्निपरमेव । सुमन्तुरपि—असाववनेनिक्ष्वेति प्रतिपुरुषं त्रिस्त्रिरेकेन हस्तेन विदधीतावनेजनम् । अपसव्येन हस्तेन निर्वपेदुदकं भुवीति मनूक्तेश्च । तथा—श्राद्धे पिण्डे विवाहे च दाने चैकेन दीयते । तर्पणे तूभयेनैव जलं देयं तु नान्यथेति । धर्मप्रदीपेऽपि—गङ्गायां दशपिण्डे च पिण्डशब्दो विधीयते । अतोऽन्यत्रान्नशब्दः स्याद्गङ्गादिषु सरित्सु च । चशब्दो महालयादिसमुच्चयार्थः । तथा च हेमाद्रिपद्धतौ—महालये गयाश्राद्धे प्रेतश्राद्धे दशाहिके । पिण्डशब्दप्रयोगः स्यादन्नमन्यत्र कीर्तयेदिति । अत्रैक आहुः—असावेतत्त इति श्रुत्या सूत्रकृता चैतत्त इत्युक्तत्वाद्वाजसनेयिनां पिण्डेषु नपुंसकप्रयोगः । अन्ये तु पिण्डशब्ददर्शनादेष ते पिण्ड. स्वधेति सर्वत्र प्रयोग इत्याहुः । तदुभयमपि विषयानवलोकननिबन्धनमित्यवगन्तव्यम् । अतश्च विहितेषु पिण्डशब्दस्तदतिरिक्तेष्वन्नशब्द इति सूक्तम् । यदि तु श्रुतिविरुद्धभियैतस्मिन् विषये विचिकित्सा तर्ह्येवं प्रयोगोऽस्तु—एतत्ते पिण्डान्नं स्वधेति । तथाच श्राद्धकल्पलतायां—

एतत्ते, पिण्डान्नमित्यलं प्रपञ्चेन । एतच्च पिण्डदानं प्रत्येकमेकश्वासेन कार्यम् । यावदेवोच्चरेन्मन्त्रांस्तावत्प्राणान्निरोधयेदिति वचनात् । अत्रैतच्चिन्त्यते—किं पिण्डपङ्क्तयः प्रागुपक्रमाः पश्चादपवर्गा उत पश्चादुपक्रमाः प्रागपवर्गा इति । अत्रैक आहुः—पूर्वभागे पित्रादिवर्गार्थास्तरणं पश्चाद्भागे तु मात्रादिवर्गार्थमित्यास्तम्बगृह्यवचनात्स्त्रीभ्यश्च पिण्डा इह पश्चिमाः स्युरिति भाष्यार्थसंग्रहकारवचनाच्च पश्चादपवर्गा इति । तथा पिण्डान्पश्चिमेन तत्पत्नीनां किंचिदन्तर्धायेति शाङ्खायनगृह्यादपीति । अन्ये त्वाहुः—पित्र्यकर्मत्वात्पङ्क्तीनां प्राक् संस्थताया अनुपपत्तेः प्रत्यक्संस्थैवेति । अत्रोच्यते—यदुक्तं प्रागुपक्रमा इति तत्र तथा सति पित्र्यकर्मणि प्रदक्षिणोपचारः स्यात् । पितॄणामप्रदक्षिणमित्यादिवचनानां च वैयर्थ्यापत्तेः । द्वितीयेऽपि स एव दोषः । न चैवमिष्टं 'प्रत्यगुपक्रमाः प्रागपवर्गाः पितृब्राह्मणसंस्था भवन्ति दक्षिणदिगुपक्रमा उदगपवर्गा वैश्वदेवद्विजसंस्था भवन्ति' इति बौधायनेन ब्राह्मणोपवेशनस्मृत्या पङ्क्तीनामपि तथैव ज्ञापितत्वात् । अन्यथा वैपम्यथाव्युत्क्रमोपपत्तेः । सदाचारादपि प्राक्संस्थतैवेति । यत्त्वापस्तम्बादिगृह्यद्वयं यच्च अग्नेर्दक्षिणदेशे तु स्थानं कुर्वीत सैकतम् । मण्डलं चतुरस्रं वा दक्षिणावनतं तथा । तत्र स्थाने ततो दर्भानेकमूलाञ्छिवान्बहून् । दक्षिणाग्रानुदक्स्यान्द्विधा तांस्तृणुयात्समम् । पूर्वभागस्थदर्भेषु पितृपिण्डान्विनिक्षिपेत् । पश्चात्स्तृतेषु दर्भेषु मातृपिण्डान्विचक्षणः । इति वृद्धवसिष्ठवचनं तत्तच्छाखिनामेवेत्यविरोधः । पुनश्चिन्त्यते—किं पिण्डानां प्रमाणं नियतमुतानियतमिति । अत्रैक आहुः—कपित्थबिल्वमात्रांश्च दद्यादामलकैः समान् । कुक्कुटाण्डप्रमाणं वा बदरेण समानथ । नालिकेरसमान्वापि अधिकान्न प्रदापयेत् । प्रमाणमेतत्पिण्डानामङ्गिरा मुनिरब्रवीत् । इत्यनेन विकल्पितत्वादनियतमिति । तदयुक्तम् । अस्य वचनस्य श्राद्धविशेषविषयत्वेन व्यवस्थितत्वात् । तथा च मरीचिः—आर्द्रामलकमात्रांस्तु पिण्डान् कुर्वीत पार्वणे । एकोद्दिष्टे बिल्वमात्रं पिण्डमेकं तु निर्वपेत् । नवश्राद्धे स्थूलतरं तस्मादपि तु निर्वपेत् । तस्मादपि स्थूलतरमाशौचे प्रतिवासरमिति । अत्रैक आक्षिपन्ति—पिण्डदानं केवलपिण्डैरेव न भुग्नकुशैरिति । तदयुक्तम् । अंशभागिपत्नीनां कुशैरेव श्वशुरान्तर्धानोपपत्तेः । तथा—श्वशुरस्याग्रतो यस्माच्छिरःप्रच्छादनक्रिया । पुत्रैर्दर्भेण सा कार्या मातुरभ्युदयार्थिभिरिति । मत्स्यपुराणेऽपि—ततः कृत्वान्तरे दद्यात्तत्पत्नीभ्यः कुशान्बुधः । इति । 'आचान्तेष्वित्येके' एकग्रहणं स्वस्वशाखोक्तविधिज्ञापनार्थम् । मुनिभिर्भिन्नकालं तु पिण्डदाने तु यत्स्मृतम् । तत्स्वशाखागतं यत्र तत्तत्कुर्याद्विचक्षणः । इति वचनात् । संग्रहकारोऽपि—यान्यत्र कालभेदेन कर्माणि मुनयो जगुः । स्वस्वगृह्यानुसारेण विकल्पं तेषु युज्यते । इति । ततश्चाचान्तेषु द्विजेषु पिण्डदानमित्येके मन्यन्ते । न कात्यायन इत्यर्थः । विकल्प एवायमिति कर्कादयः । अत्रैतत्संदिह्यते—किं लेपभुजां दर्भमूलेषु दद्यादुत दर्भाग्रेष्विति । अत्रैक आहुः—दर्भमूले लेपभुजः प्रीणयेल्लेपघर्षणैरित्यादिवचनाद्दर्भमूलेष्विति । तदयुक्तम् । लेपभाजश्चतुर्थाद्या इति मात्स्यवचनेन चतुर्थपुरुषादीना लेपभागित्वेन दर्भमूले वैपम्योपपत्तेः । मार्कण्डेयोऽपि—लेपसंबन्धिनश्चान्ये पितामहपितामहादिति । एवं तर्हि तद्दर्भमूले लेपं भुञ्जत इत्यर्थकमिति चेत् । न । अतश्च करावघर्षणविषयत्वात् । तथा च विष्णुः—दर्भमूलेषु करावघर्षणमिति । अतश्च दर्भाग्रेषु लेपभुजां दत्वा दर्भमूलेषु करप्रोञ्छनमित्यविरोधः । तथा च याज्ञवल्क्यः—दत्ते पिण्डे ततो हस्तं निर्मृज्याल्लेपभागिनाम् । कुशाग्रे संप्रदातव्यं प्रीयन्तां लेपभागिनः इति । पठन्ति च—उत्तरे कुशमूलं तु पितृमूलं तु दक्षिणे । कुशमूलेषु यो दद्यान्निराशाः पितरो गताः । ददाति लेपभागेभ्यः पिण्डानामग्रतः सदा । प्रपितान्ते च यो दद्यात्तृप्तिः पञ्चदशाहिकीति । 'आचान्तेषूदकं पुष्पाण्यक्षतानक्षय्योदकं च दद्यात्' चकारः शाखान्तरोक्तमन्त्रैरुदकादिदानार्थः । तथा च पुराणम्—अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम् । ब्राह्मणस्य करं न्यस्ताः शिवा आपो भवन्तु मे । इत्युदकदानम् । लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे । लक्ष्मीर्वसति

गोष्ठेषु सौमनस्यं सदाऽस्तु मे । इत्यादिना पुष्पादिदानम् । अक्षतं चास्तु मे पुण्यं शान्तिः पुष्टिर्धृतिर्मम । यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा ममेत्यक्षतदानम् । एतच्च यज्ञोपवीतिना बोध्यम् । आशीरूपत्वात् । तथा सुप्रोक्षितादि यत्कर्म तत्कर्तव्यं यवादिना । सव्येनेत्यर्थः, तथा विसर्जनं सौमनस्यमाशिषां प्रार्थनं विना । पित्र्यमन्यत्प्रकर्तव्यं प्राचीनावीतिना सदेत्युक्तम् । अत्राचान्तेष्वित्यनुवृत्तौ पुनस्तद्ग्रहणं वेत्यासंकल्पान्तं पिण्डोपयुक्तं कर्माचमनात्पूर्वमेवेति ज्ञापनार्थम् । अतश्च अनाचान्तेषु तत्सर्वं कृत्वाचान्तेषु उदकादिकं दत्त्वाऽक्षय्योदकं दद्यादित्यर्थः । तच्चोक्तं पिण्डयज्ञसूत्रे—तथा च पिण्डान्ददातीत्युपक्रम्यात्र पितर इत्युक्त्वोदङ्ङास्त आतमनादमीमदन्त इति अवनेज्य पूर्ववन्नीवीं विस्रस्य नमो व इत्यञ्जलिं करोत्येतद्व इत्युपास्यति सूत्राणि प्रतिपिण्डमूर्णादशां वा वयस्युत्तरे यजमानहृल्लोमानि वोर्जमित्यपो निषिञ्चत्यवधायावजिघ्रति यजमान उल्मुकं सकृदाच्छिन्नान्यग्नावाधत्त इति मध्यमं पिण्डं पत्नी प्राश्नाति पुत्रकामेति । अस्यार्थः—पिण्डान्दत्त्वाऽऽचम्य यवानादायात्र पितर इत्यादि वृषायध्वमित्यन्तं मन्त्रं जपित्वाऽप्रदक्षिणं वामेनावृत्योदङ्मुखो यथाशक्ति श्वासमनुरुन्धञ्छुभं ध्यायेत् । तथा च परिशिष्टम्—वामेनावर्तनं केचिदुदगन्तं प्रचक्षते । स्कन्दसंवादेऽपि—प्रक्षाल्य हस्तावाचम्य शुभं ध्यायेदुदङ्मुख इति । अत्रैके शुभध्यानं सव्येनेत्याहुः । तन्न, प्रमाणाभावात् । आवृत्य तेनैव प्रदक्षिणमावृत्यामीमदन्तेत्यादिमन्त्रं जपित्वाक्षतान् भुवि पिण्डमूले क्षिपेदित्यर्थः । प्रदक्षिणमथावृत्य पूजयेदक्षतैर्यवैरिति वचनात् । पिण्डांश्च मनसा ध्यात्वा अक्षतान्निक्षिपेद्भुवीति वृद्धयाज्ञवल्क्योक्तेश्च । अवनेज्य पूर्ववदिति गोत्राद्युच्चारविधिनेत्यर्थः । तथा च श्रुतिः—अथोदपात्रमादायावनेजयत्यसाववनेनिक्ष्वेत्येव यजमानस्य पितर इत्यादि । यत्तु तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेदिति वचनं यच्च हस्तान्न वारिणा कार्यं पुनः प्रत्यवनेजनमिति स्कन्दसंवादवचनं तदन्यशाखिविषयम् । इह तु पूर्ववद्वनेज्येत्यतिदेशात्, अतिदेशविधेरनित्यत्वादत्रापि प्रक्षालनजलेनैवेति वा । नीवीं विस्रस्य नमो व इति मन्त्रेण षडञ्जलीन्करोतीत्यर्थः । नन्वञ्जलिमित्येकत्वात्कथं षडञ्जलीनिति । षड्ऋतुनमस्काररूपत्वादञ्जलेरित्यदोषः । तथा च श्रुतिः—षट्कृत्वो नमस्करोति षड्वा ऋतवः पितर इत्यादि । एतद्व इत्यनेन मन्त्रेण प्रतिपिण्डं सूत्राण्युपास्यति ददातीत्यर्थः । ननु च प्रतिपिण्डमिति पृथग्विधेरेतद्व इति कथं तन्त्रविधिः । एकग्रहणेनैव त्रिषु दानेन सकृन्मन्त्रविधानार्थमित्यदोषः । एकद्रव्ये कर्मावृत्तौ इति परिभाषितत्वात् । केचित्प्रतिपिण्डमित्युक्तत्वान्मन्त्रावृत्त्यैव सूत्रदानमित्याहुः । ऊर्णादशां वेति सूत्राभाव इत्यर्थः । यत्तु दशांतु वर्जयेत्प्राज्ञो यद्यप्यहतवस्त्रजामिति तत्सूत्रसंभवे द्रष्टव्यम् । दशाया अभावविषयत्वात् । तथा च शौनकः—सूत्राभावे दशामूर्णां वेति । यत्तु नमो वः पितरो मन्त्रं जपन्सूत्रं प्रदापयेदिति सूत्रे मन्त्रान्तरमुक्तं तदन्यशाखिविषयम् । वाजसनेयिनां त्वेतद्व इति कात्यायनोक्तत्वात् । तथा च व्याघ्रोऽपि—एतद्वः पितरो वासो दशां दद्यात्पृथक्पृथगिति । दशाद्यभावे सूतवाक्यम्—ततः सूत्रं प्रदातव्यं कार्पासमथवाननम् (?)। दुकूलपट्टवस्त्रं वा तदभावे कुशान्न्यसेदिति । स्कंदसंवादेऽपि—कुशानभावे वयसि तूत्तरे लोम वा स्वकमिति । उत्तरे वयसि, पंचाशदूर्ध्वं हृल्लोमेति विशिष्टविधिः । ऊर्जमित्यपो निषिंचतीत्यत्र गोत्राद्युच्चारपूर्वकं तिलोदकदानमित्येके । ऊर्जदाने तिलादिद्रव्यस्य गोत्राद्युच्चारस्य चानुक्तत्वात् केवलजलेनेत्यन्ये । तथा च बृहस्पतिः—अन्यच्चोदपात्रं(?)तु तेषामुपरि निक्षिपेत् । पठन्ति च । सर्वत्रैव पवित्राणि पयो मधु तिलास्तथा । ऊर्जकाले न दातव्याः केवलं चोदकं क्षिपेदिति । अत्रभवंतो भूदेवाः प्रमाणम् । अवधायेत्यत्र यजमानग्रहणं ऋत्विग्व्युदासार्थम् । अवधायेति पात्र इति शेषः । पात्रे पिण्डान्समुद्धृत्य आघ्राय पितृपिण्डवदिति वृद्धयाज्ञवल्क्योक्तेः । उल्मुकं सकृदाच्छिन्नान्यग्नावाधत्त इति क्षिपतीत्यर्थः । सकृदाच्छिन्नानीति साग्निपरमिति प्रागुक्तम् । एवं पिण्डोपयुक्तं पूजनांतं कृत्वा चतुर्थ्यन्तसंकल्पेन धूपादिकं निवेदयेत् । तथा च

स्कंदसंवादे—समभ्यर्च्य धूपदीपनैवेद्यानि निवेदयेत् । प्रकुर्यादथ संकल्पं कृत्वाक्षय्योदकं ततः इति । ततः सुप्रोक्षितमस्त्वित्यादिनोदकादिकं दत्त्वाऽक्षय्योदकं तन्त्रेण दद्यात् । तथा च कात्यायनः—अक्षय्योदकदानं तु अर्घदानं विशिष्यते । षष्ठ्यैव नित्यं तत्कुर्यान्न चतुर्थ्यां कदाचनेति । अतिदेशस्तन्त्रनिषेधार्थः । अक्षय्यमस्त्विति प्रोक्तः प्रत्येकं पितृतः क्रमात् । इति शङ्खवचनात् । अघोराः पितरः सन्तु सन्तु इत्युक्ते गोत्रं नो वर्धतां वर्धतामित्युक्ते दातारो नोऽभिवर्धतां वेदाः सन्ततिरेव च । श्रद्धा-च नो मा व्यगमद्बहु देयं च नोऽस्त्वित्याशिषः प्रतिगृह्य । इतिशब्द आद्यर्थे । तेन स्मृत्युक्तमन्यदप्याशीः-प्रार्थनमिति श्लोककरणमित्यर्थः । सन्त्वित्युक्त इति प्रतिवचनग्रहणं सर्वत्रप्राप्त्यर्थम् । तथा च स्कन्दसंवादे—अघोराः पितरः सन्तु सन्त्वित्युक्ते पुनर्द्विजैः । गोत्रं तथा वर्धतां नस्तथेत्युक्तश्च तैः पुनः ॥ दातारो नोऽभिवर्धतां वेदाः संततिरेव च । श्रद्धा च नो मा व्यगमद्बहुदेयं च नोऽस्त्विति । अन्नं च नो बहु भवेदतिथींश्च लभेमहि । याचितारश्च नः सन्तु मा च याचिष्म कंचन । इत्येता आशिषः सर्वा गृहीयात्प्रतिभाषितमिति । अथ चेतिशब्दः प्रकारे । तेन तिलकमूर्धाभिषेकसव्यपूजादिप्रकारेणाशीःप्रार्थनं कर्तव्यमित्यर्थः । तथा च वृद्धयाज्ञवल्क्यः—ततश्च तिलकं कुर्यान्मन्त्रेणानेन यत्नतः । मन्त्रश्च नित्यानुष्ठानेत्यागि (?) प्रागेव दर्शितः । एतच्चाशीःप्रार्थनं पित्र्येष्वेव यज्ञोपवीतिना कार्यमिति प्रागुक्तम् । दक्षिणां दिशमाकाङ्क्षन्याचेतेमान्वरान्पितॄनिति मनुवचनात् । स्कंदसंवादेऽपि—अक्षय्यं सर्वमेवास्त्वित्युक्त्वा भूयः समर्चयेदिति मूर्धाभिषेकश्चाक्षय्यदानात्पूर्वमिति केचित् । 'स्वधावाचनीयान्सपवित्रान्कुशानास्तीर्य स्वधां वाचयिष्य इति पृच्छति' स्वधावाचनीया न्युब्जोपरिस्थापिताः कुशाः पवित्राणि तदधःस्थापितानि । तेषां कृतप्रयोजनत्वादन्यानि पवित्राणि कार्याणीत्यन्ये । तत्कर्कादिभिरनादृतमित्युपेक्षणीयम् । ततश्च सपवित्रान्स्वधावाचनीयकुशानादायास्तीर्य स्वधां वाचयिष्य इति पङ्क्तिमूर्धन्यं सर्वान्वा पृच्छेदित्यर्थः । अत्रैतत्संदिह्यते—किमेषामास्तरणं पङ्क्तिमध्ये उत पार्श्व इति । अत्रैक आहुः पिण्डपुरस्तादिति । पिण्डान्तराल इत्यन्ये । एतदुभयमप्ययुक्तं, प्रमाणाभावात् । अतश्च पिण्डोपरि परिस्तीर्यापोऽभिनिषिञ्चेदित्यर्थः । तथा च गोभिलसूत्रम्—स्वधावाचनीयान्पिण्डोपरि समास्तीर्येति । परिशिष्टेऽपि—पवित्रान्तर्हितान्पिण्डान्सिञ्चेदुत्तानपात्रकृदिति । न चैतस्य पारशाखिकत्वान्नैवमिति वाच्यम् । स्वधावाचनिकं सर्वं पिण्डोपरि समाचरेदिति मत्स्यपुराणोक्तेः । स्वधावाचनमेष्विति स्वधावाचनीया इति छप्रत्ययान्तेन परप्रयुक्तास्तन्नाशे प्रतिनिधिः कर्तव्य इत्युक्तं मुख्यद्रव्यापचारत्वात् । तथा ह्युत्तरं सूत्रं—स्वधावाचनीयेष्वपो निषिञ्चतीति । 'वाच्यतामित्यनुज्ञातः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्यतामित्यस्तुस्वधेत्युच्यमाने स्वधावाचनीयेष्वपो निषिञ्चति' चकारो मात्रादिसमुच्चयार्थः । पृथङ्निर्देशस्तन्त्राभावप्रदर्शनार्थः । स्वधावाचन एव चेत्युक्तेः वाच्यतामिति । 'उत्तानं पात्रं कृत्वा यथाशक्ति दक्षिणां दद्याद्ब्राह्मणेभ्यो विश्वेदेवाः प्रीयन्तामिति दैवैर्वाचयित्वा' पात्रं न्युब्जम्, यथाशक्तीति ग्रहणं समापनदक्षिणाया अपि विध्यर्थं, ब्राह्मणेभ्य इति स्मृत्यन्तरोक्तपित्रुद्देशव्युदासार्थम् । तेन ब्राह्मणोद्देशेनैव दक्षिणादानं सूत्रकृदभिप्रेतम् । तथा च देवलः—आचान्तेभ्यो द्विजेभ्यश्च प्रयच्छेद्दक्षिणामिति । पित्रुद्देशपक्षस्तु—पितृभ्यः प्रथमं भक्त्या तन्मनस्कः समाहितः । सुस्वधेत्याशिषा युक्तो दद्याच्छक्त्या तु दक्षिणामित्यादि विष्णुपुराणाद्युक्तोऽन्यशाखिविषयः । वाचयित्वेति कारितार्थनिर्देशाद्विश्वेदेवाः प्रीयन्तामिति ब्रूतेति द्विजान्प्रत्यध्येषणमुक्तम् । अत्रायं प्रयोगः—अस्मत्पितुरमुकशर्मणोऽमुकसगोत्रस्य वसुरूपस्य श्राद्धप्रतिष्ठार्थममुकगोत्रायामुकशर्मणे ब्राह्मणायेत्यादि तुभ्यमहं संप्रददे इति । तन्त्रत्वे त्वस्मत्पितॄणामिति षष्ठीबहुवचनम् । पित्रुद्देशपक्षे तु अस्मत्पित्रे पितृभ्य इति वा चतुर्थ्योद्दिश्य न ब्राह्मणोद्देश इति विशेषः । सतिलं नामगोत्राभ्यां दद्याच्छक्त्या तु दक्षिणाम् । स्व-

स्तिवाचनकं कुर्यात्पिण्डानुद्धृत्य भक्तितः। इति वचनात्। सूत्रे यद्यपि दक्षिणामिति सामान्येनोक्तं तथापि पित्र्ये रजतं दैवे स्वर्णमिति द्रष्टव्यम्। कनकं निर्जराणां तु पितॄणां रजतं स्मृतमिति वचनात्। अत्रैक आहुः—समं स्यादश्रुतत्वादिति न्यायाद्दक्षिणादानं सर्वेषां समानमिति। अन्ये त्वाहुः दैवपूर्वं श्राद्धमित्युक्तत्वात्पूर्वं दैवे दक्षिणादानं पश्चात्पित्र्य इति। अपरे त्वाहुः—पित्रुद्देशपक्षे दक्षिणादानमपसव्येन दैवपूर्वं ब्राह्मणोद्देशे तु सव्येनेति। अपसव्यं तु तत्रापि। मत्स्यो हि भगवांस्त्वे न इत्यादिस्मृतेः। इतरे पुनरन्यथाऽऽहुः—उभयशास्त्रत्वात्संकल्पादिकमपसव्येन त्यागमात्रं तु सव्येनेति। अत्रोच्यते—यदुक्तं सर्वेषां समानमेव दक्षिणादानमिति। तदहृद्यम्। पात्रानुसारेण दक्षिणावैषम्यस्योक्तत्वात्। तथा च—एकपङ्क्त्युपविष्टानां विप्राणां श्राद्धकर्मणि। भक्ष्यं भोज्यं समं देयं दक्षिणा त्वनुसारतः इति। अनुसारतः पात्रविशेषानुसारेणेत्यर्थः। यच्चोक्तं—दैवपूर्वं दक्षिणादानमिति। तदप्यसारम्। पित्रुद्देश एव दैवपूर्वमित्यस्य पूर्ववाचित्वात्, न ब्राह्मणोद्देश इति। तथा च देवलः—दक्षिणां पितृविप्रेभ्यो दद्याद्विप्रं ततो द्वयोरिति। यदप्यभिहितं—पित्रुद्देशे अपसव्येन ब्राह्मणोद्देशे सव्येनेति तदप्ययुक्तम्। पित्रुद्देशेऽपि पितृपूर्वकं सव्येनैवोक्तत्वात्। तथा च देवल एव—सर्वं कर्मापसव्येन दक्षिणादानवर्जितमिति। न च दक्षिणादानं दैवे पूर्वमुचितम्। तस्य विसर्गरूपत्वात्। तथा च वृद्धयाज्ञवल्क्यः—पूर्वं पितृभ्यो दद्यात्तु देवेभ्यस्तदनन्तरम्। असुराः पितृरूपेण दत्तं हिंसन्ति दानवाः। तेषां वै रक्षणार्थाय पश्चाद्दैवे विसर्जयेत्। याज्ञवल्क्योऽपि—पितृपात्रे तदुत्तानं कृत्वा विप्रान्विसर्जयेदिति। यत्त्वपसव्यं तु तत्रापीत्युक्तं तदन्यशाखिविषयत्वेन यथागृह्यं व्यवस्थापनीयम्। यच्चाम्नातं संकल्पादिकमपसव्येन त्यागमात्रं सव्येनेति। तन्न शोभनम्। प्रमाणाभावात्। तस्मादुभयपक्षेऽपि कात्यायनमतानुसारिणां दक्षिणादानं पितृपूर्वकं सव्येनैवेति सिद्धम्। तथा च हेमाद्रिपद्धतौ—सूक्तस्तोत्रजपं त्यक्त्वा पिण्डाघ्राणं च दक्षिणाम्। आह्वानं स्वागतान्नं(?) च विनाच परिवेषणम्। विसर्जनं सौमनस्यमाशिषां प्रार्थनं तथा। विप्रप्रदक्षिणां चैव स्वस्तिवाचनकं विना। पित्र्यमन्यत्प्रकर्तव्यं प्राचीनावीतिना सदेति। स्मृतिरन्यापि—उपवीती पितृप्रीत्यै वित्तशाठ्यविवर्जितः। दक्षिणां पितृविप्रेभ्यो पूर्वं दैविकयोस्ततः। पठन्ति च—स्वागतं स्वस्तिवाचनं दक्षिणा च प्रदक्षिणम्। गोत्रवादनमर्घं च षडेते उपवीतिनः। इति। गोत्रवादनं गोत्रं नो वर्धतामित्यादि। विधानमाकलय्याह संग्रहकारोऽपि—याज्ञवल्क्यो विसर्गात्प्राक्पात्रमुत्तानमिच्छति। यतो विसर्जनं कृत्वा गृह्यकर्ताऽपि शौनकः। प्रीतिः पश्चात्तु देवानामिति कात्यायनादयः। सर्वेषामपि पक्षाणां स्वगृह्योक्तं विधीयते। स्वगृह्योक्तस्य चाभावे ग्रहणं स्वेच्छया भवेदिति। अत्रान्यदपि विसर्गरूपं प्रतिज्ञापात्रचालनं ऋतुपूजनदेवद्विजवचनादिकं (न) कुर्यात्। दक्षिणाया उपलक्षणार्थत्वात्। तथा च—मन्त्रहीनं क्रियाहीनं भक्तिहीनं द्विजोत्तमाः। श्राद्धं संपूर्णतां यातु प्रसादाद्भवतामिति। गोभिलोऽपि—दैवे वाचयित्वा पिण्डपात्राणि चालयित्वा दक्षिणां दद्यादिति। पिण्डांश्च पात्राणि चेति विग्रहः। नित्यत्वात्। अचालयित्वा तत्पात्रं स्वस्तिकुर्वन्ति ये द्विजाः। निराशाः पितरस्तेषां शप्त्वा यान्ति यथागतम्। अत्रैके ऋतुपूजनं सव्येनेत्याहुः। तन्न। आचम्योदक्परावृत्य नियम्य च शनैरसून्। षड्तून्नमस्कुर्यात्पितृनिव च मन्त्रवदिति वचनात्। जातूकर्ण्यः—पात्राणि चालयेच्छ्राद्धे स्वयं शिष्योऽथवा सुतः। न स्त्रीभिर्नच बालेन नासजात्या कथंचनेति। बृहस्पतिरपि—भाजनेषु च तिष्ठत्सु स्वस्तिकुर्वन्ति ये द्विजाः। तद्दत्तमसुरैर्भुक्तं निराशैः पितृभिर्गतम्। भाजनानि भोजनपात्राणि। स्वस्तीति भगवन्तो ब्रूहि इति वचनमिति पारस्करः। अपरं स्मृत्युक्तमुपलब्धव्यम्। अत्र च ब्राह्मणेभ्यो दद्यादिति सूत्रयता चतुर्थ्या गोत्रानुच्चारो ब्राह्मणानां सूचितः। ततश्चैवं प्रयोगः। अस्मत्पितुरमुकशर्मणोऽमुकगोत्रस्य वसुरूपस्य प्रतिष्ठार्थममुकगोत्रायामुकशर्मण इत्यादि तुभ्यमहं संप्रदद इति। तन्त्रपक्षे षष्ठीबहुवचनेन। पित्रुद्देश

अस्मदित्यादौ चतुर्थ्या प्रयोगः। संकल्पत्वात्। विसर्जनमन्त्रमाह—'वाजेवाजेवतेति विसृज्यानुव्रज्या-मावाजस्येति प्रदक्षिणीकृत्य प्रविशेत्' ततो वाजेवाजेवत इत्यृचा कुशमूलैः पित्र्यविप्रान् पूर्वं पश्चात्कुशाग्रैर्देवद्विजान्विसृज्य ताननुव्रज्यामावाजस्येत्यनयर्चा वहिर्यज्ञोपवीती तान्प्रदक्षिणीकृत्य नमस्कृत्य प्रविशेद्गृहमिति शेषः। अत्रैके कुशाग्रैरेव सर्वान्विसर्जयन्ति। वाजेवाजेति मन्त्रेण कुशमूलेन तान्पितॄन्। देवांस्तेनैव मन्त्रेण कुशाग्रेण विसर्जयेदिति। मनुरपि—आमावाजस्यमन्त्रेण कर्तव्यं हि प्रदक्षिणम्। नमस्कृत्य ततो विप्रानासनेपूपवेशयेत्। ताम्बूलं हि ततो दद्यात्पादप्रक्षालनं ततः। पादाभ्यङ्गं ततः कुर्यात्पादमर्दनमेव च। इति। अत्रैके विसर्जनं प्रदक्षिणां चापसव्येन कुर्वन्ति तदयुक्तम्—स्वागतं स्वस्तिवचनं दक्षिणा च प्रदक्षिणम्। इत्युक्तत्वात्। वृद्धयाज्ञवल्क्यः—वाजे वाजे जपन्मन्त्रमामावाजस्य वै पुनः। वहिः प्रदक्षिणं कुर्यादच्छिन्नजलधारया। वन्धुवर्गेण सहितः सभार्यः सकुटुम्बकः। पुनराचम्य तत्रैव स्वादुपथंप्रजपेच्छुचिः। ब्राह्मणाः संपठेयुस्ते श्राद्धभोक्तृद्विजोत्तमाः। श्राद्धारम्भे पादशौचे विकिरे पिण्डदानके। ऊर्जे विसर्जने चैव पट्सु चाचमनं मतम्। अर्चेति पाठः। श्राद्धारम्भेऽवसाने च पादशौचे द्विजार्चने। विकिरे पिण्डदाने च पट्सु चाचमनं स्मृतम्। इति कात्यायनस्मृतेरेकमूलत्वात्। विसर्जयेत्ततो विप्रान्प्रणिपत्य पुनः पुनः। आद्वारमुपगच्छेयुः पुनराचमनं ततः। वैश्वदेवं ततः कुर्यात्स्वशाखोक्तविधानतः। इति। द्वारमा गमनासंभवे तु—वहिः प्रदक्षिणं कुर्यात्पदान्यष्टावनुव्रजेत्। वन्धुवर्गेण सहितः पुत्रभार्यासमन्वितः। इति। अथोर्ध्वकृत्यम्—तत्रोच्छिष्टमार्जनतत्प्रतिपत्तिपिण्डविकिरप्रतिपत्तिवैश्वदेवनित्यश्राद्धशेषभोजननियमादीनि क्रमेणोच्यन्ते। तत्र पैठीनसिः—न स्पृशन्ति यथा दुष्टास्तथैवोच्छिष्टमार्जनम्। तैस्तु स्पर्शे तदुच्छिष्टे पितरो यान्त्यधोगतिम्। प्रचेताः—खनित्वा निक्षेपेद्भूमावन्यथा स्पर्शनं भवेत्। निषिद्धं स्पर्शनं तेषां तस्मात्खननमुत्तमम्। तत्रोच्छिष्टमार्जने विरुद्धानीव वाक्यानि दृश्यन्ते। तथा हि वसिष्ठः—श्राद्धे नोद्वासनीयानि उच्छिष्टान्या दिनक्षयात्। च्योतन्ते वै स्वधाकारास्ते पिबन्त्यकृतोदकाः। ब्रह्मपुराणेऽपि—अस्तं याते ततः सूर्ये विप्रपात्राणि चाम्भसि। अधोमुखानि प्रयतो भूत्वा सर्वाणि निक्षिपेत्। याज्ञवल्क्यः—निक्षिपेत्तस्तु विप्रेषु द्विजोच्छिष्टं न मार्जयेत्। श्राद्धदेशोपविष्टेषु विप्रेषु न मार्जयेदिति विज्ञानेश्वरः। अत्रैके व्यवस्थापयन्ति—दैवपात्राणि तद्दिने मार्जयेन्न पित्र्याणीति। तथा च देवलः—एवं तृप्तेषु पानीयं दद्यादाचमनं तथा। उच्छिष्टं वाऽप्यनयेत्पितॄणां नापमार्जयेत्। इति। अन्येत्वाहुः—अस्तं यात इत्यनेन रात्रौ मार्जनविधानाद्रात्रावेवेति। तत्र नाद्यः—पितॄणामुच्छिष्टमपनयेन्नापमार्जयेद्वेत्यनया द्विकल्पोपपत्तेः। द्वितीयेऽहनि सर्वेषां भाण्डानां क्षालनं स्मृतम् इति ब्रह्मवचने सर्वेषामेव मार्जनोपपत्तेश्च। द्वितीयोऽपि न सम्यगिव भाति। उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः। इति मनूक्तावधिवैयर्थ्यात्। तस्माद्यथासंभवं विकल्प इति युक्तम्। यत्तु 'द्वितीयेऽहनि' इति ब्रह्मवचनं तदप्यशुचिस्पर्शरहितगृहान्तरसंभवविषयम्। तथा च प्रचेताः—भृत्यवर्गवृतो भुङ्क्ते कव्यशेषं स्वगोत्रजैः। अन्यस्यां श्राद्धशालायां द्विजोच्छिष्टं न मार्जयेदिति। तस्माद्गृहान्तरे संभवति न मार्जनं तदसंभवे द्विजान्प्रेष्य पिण्डप्रतिपत्त्यनन्तरं मार्जनमिति व्यवस्थेति सिद्धम्। पिण्डप्रतिपत्तिमाह याज्ञवल्क्यः—पिण्डांस्तु गोजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा। गोशब्दो गतवीर्यवृषभपरः। तथा च वायवीये—गतवीर्यस्तु यो ह्यश्वोऽनड्वांश्चैव तथाविधः। तयोः पिण्डः प्रदातव्यो यतो वीर्यं न रोहति। एतत्कामनाविशेषे व्यवस्थितम्। तथा च वायुपुराणम्—पिण्डमग्नौ सदा दद्याद्गोत्रार्थी संततं नरः। पत्न्यै प्रजार्थी दद्यात्तु मध्यमं मन्त्रपूर्वकम्। उत्तमां गतिमन्विच्छन्गोभ्यो नित्यं प्रयच्छति। आज्ञां प्रज्ञां यशः कीर्तिमप्सु नित्यं निधापयेत्। प्रार्थयन्दीर्घमायुस्तु वायसेभ्यः प्रयच्छति। आकाशं गमनेयप्सु स्थितो वा दक्षिणामुखः। पितॄणां स्थानमाकाशं दक्षिणादिक् तथैव च। यथागृह्यं पिण्डप्रतिपत्तिरि-

त्यन्ये । तत्र कात्यायनः—आधत्त इति मध्यमं पत्नी प्राश्नाति पुत्रकामेति। आधत्त इति प्राशनमन्त्रः। समर्पणे त्वन्यः । अपां त्वौषधीनां रसं प्राशयामि भूतकृतं गर्भं धत्स्वेति । पत्नीति पुत्रकामस्त्रीमात्रो-पलक्षणमित्येके । पुत्रकामा पतिव्रतेत्यसमन्मतम् । तथा च मनुः—पतिव्रता धर्मपत्नी पितृपूजनतत्परा । मध्यमं तु ततः पिण्डमद्यात्सम्यक्सुतार्थिनी इति । अत्रैतत्संदिह्यते—किं विकिरमुच्छिष्टे निक्षिपेत्किंवा पिण्डेष्विति । अत्रैक आहुः—तस्यास्पृश्यत्वादुच्छिष्ट एवेति । अन्ये त्वाहुः—उच्छिष्टपिण्डत्वात्पिण्डे क्षिपेतार्थे समाहिता । दक्षिणामुखो भूत्वा पित्र्या दिक् साहि कीर्तिता । इति । वैश्वदेवस्तूत्तरत्र प्रपञ्चयिष्यते । नित्यश्राद्धे तु मार्कण्डेयः—नित्यक्रियां पितॄणां तु केचिदिच्छन्ति सत्तमाः । न पितॄणां तथैवान्ये शेषं पूर्ववदाचरेत् । नित्यक्रिया नित्यश्राद्धम् । तुल्यविकल्प एवायमित्येके । करणे उपकारातिशयोऽकरणे प्रत्यवायो नेत्यन्ये । तदुभयमपि न सम्यक् । पूर्वत्र व्यवस्थोपपत्तेः । तथा च—नित्यश्राद्धं न कर्तव्यं प्रसङ्गाद्यत्र सिद्ध्यति । श्राद्धान्तरे कृतेऽन्यत्र नित्यत्वान्नैव हापयेदिति । एकोद्दिष्टादौ पितामहादितृप्त्यसंभवात्कर्तव्यं पार्वणादौ प्रासङ्गिकतृप्तेर्नेति व्यवस्थेत्यर्थः । आह च—दर्शादिश्राद्धनिष्पत्तौ न नित्यस्य पृथक् क्रिया । तेनैव तस्य सिद्धिः स्यात्काम्ये नित्याग्निहोत्रवदिति । एवमेकपार्वणादावपि । द्वितीये तु नित्यत्वानुपपत्तेः । शेषभोजनेऽपि विवदन्ते—एकादश्यादावाघ्राण-स्योक्तत्वाच्छेषभोजनमनित्यमिति केचित् । शेषमन्नमनुज्ञातं भुञ्जीत तदनन्तरम् । इष्टैः सार्धं तु वि-धिवद्बुद्धिमान्सुसमाहितः । इति शातातपोक्तेरनुज्ञापितमेव पितृसेवितभक्षणं नित्यमन्यथा नेत्यन्ये । तद्द्वयमपि नातीव शोभते । पूर्वत्र नित्यत्वेन प्राप्तायविध्युपपत्तेः(?) । तथा च—उपवासं तदा कुर्यादाघ्राय पितृसेवितमिति । द्वितीयेऽप्यनुज्ञानाभावे तीर्थादावभोजनं प्राप्नोतीति नैतदुचितम् । भोजनाभावे प्र-त्यवायश्रुतेः । तथा च देवलः—श्राद्धं कृत्वा तु यो विप्रो न भुङ्क्तेऽथ कदाचन । हव्यं देवा न गृह्णन्ति कव्यानि पितरस्तथा । जैमिनिरपि—श्राद्धं कृत्वा तु यो विप्रो नाश्नाति पितृसेवितम् । स याति नरकं घोरं यावदाभूतसंप्लवम् । ब्रह्मवैवर्तेऽपि—पितृद्विजेभ्यः पितृभ्यो यद्यदत्र निवेदितम् । अश्नन्नेव हि तत्सर्वं पितॄन्प्रीणाति मानवः । इति । भोजनक्रममाह देवलः—निवृत्ते पितृमेधे तु दीपं प्रच्छाद्य पाणिना । आचम्य पाणिं प्रक्षाल्य ज्ञातीन्शेषेण भोजयेत् । ततो ज्ञातिषु तृप्तेषु स्वभृत्यान्प्रतिभोजयेत् । पश्चात्स्वयं च पत्नीभिः पितृशेषमुदाहरेत् । दीपं प्रच्छाद्य हस्तेन श्राद्धदीपं शमयेदित्यर्थः । उदाहरेद्भु-ञ्जीत । तथा चोशनाः—शेषमिष्टेभ्यो दद्यात्स्वयं भुञ्जीत । आपस्तम्बः—सर्वतः समवदाय ग्रासावरार्धं प्राश्नीयाद्यथोक्तम् । ग्रासावरार्धं ग्रासान्न्यूनं समवदायेत्यन्वयः । यथोक्तमिति मांसभक्षणे नियमो नेति केचित् । सर्वतः समवदायेति सर्वावदानस्योक्तत्वान्मांसभक्षणमपीत्यन्ये । एवं सति श्राद्धे विप्रान्मांसं भोजयित्वा भुञ्जीतान्यथा नेति । तथा च प्रचेताः—विप्रानभोज्य यो मांसं अश्नात्यन्यांश्च भोजयेत् । वृथा भवति तच्छ्राद्धं भुक्त्वा च नरकं व्रजेदिति । तथा च—ततश्च वैश्वदेवान्ते सभृत्यैः सह बान्धवैः । भुञ्जीतातिथिसंयुक्तः सर्वं पितृनिषेवितमिति । त्यक्तमांसस्याभक्षणमन्यस्य भक्षण-मित्यविरोधो वा । तथा च जातूकर्ण्यः—मधुमांसनिवृत्तस्तु श्राद्धकर्मणि चाचरन् । पात्रस्थं गन्ध-माघ्राय पितॄणामनृणो भवेत् इति । पात्रस्थं भोजनपात्रस्थम् । पितॄणामनृण इति, तदाघ्राणादपि पितृतृप्तिर्भवतीति दर्शितम् । ब्रह्मपुराणे—भगिन्यो बान्धवाः पूज्याः श्राद्धेषु च सदैव हि । अश्री-पण्डकषण्ढाश्च तथाऽन्ये दीर्घरोगिणः । अश्रीरकिंचनः । पण्डो नपुंसकः । षण्ढः क्लीववृत्तिः । शाता-तपः—श्राद्धं कृत्वा परश्राद्धे भुञ्जते ये तु विह्वलाः । पतन्ति पितरस्तेषां लुप्तपिण्डोदकक्रियाः । अत्रैके पश्चात्स्वयं भुञ्जीतेत्यनेन प्रदोषपर्यन्तं सर्वान्संतोष्य रात्रौ श्राद्धकृद्भुञ्जीतेत्याहुः । तदयुक्तम् । रात्रिभोजनस्य प्रतिषिद्धत्वात् । अतश्च दिवैव सर्वैः सह भुञ्जीत । तथा च जातूकर्ण्यः—अहन्येव भोक्तव्यं कृते श्राद्धे द्विजन्मभिः । अन्यथा ह्यासुरं श्राद्धं परपाके च सेविते । नागरखण्डेऽपि

वलिं च निक्षिपेत्तस्माद्भोजनं च समाचरेत्। मौनेन दृश्यते सूर्यो यावत्तावन्नराधिप। यश्चैवास्तमिते सूर्ये भुङ्क्ते च श्राद्धकृन्नरः। व्यर्थतां याति तच्छ्राद्धं तस्माद्रात्रौ न भोजयेदिति। नियमानाह बृहस्पतिः—तां निशां ब्रह्मचारी स्याच्छ्राद्धकृच्छ्राद्धिकैः सह। अन्यथावर्तमानौ तौ स्यातां निरयगामिनाविति। पुनर्भोजनमध्वानं यानमायासमैथुनम्। श्राद्धकृच्छ्राद्धभुक् चैव सर्वमेतद्विवर्जयेत्। स्वाध्यायं कलहं चैव दिवा स्वप्नं च स्वेच्छया। श्राद्धिनो विशेषमाह यमः—पुनर्भोजनमध्वानं भारमायासमैथुनम्। सन्ध्यां प्रतिग्रहं होमं श्राद्धभुक्त्वष्ट वर्जयेत्। सन्ध्याहोमप्रतिषेधावकृतप्रायश्चित्तविषयौ। दशकृत्वः पिबेच्चापो गायत्र्या श्राद्धभुग् द्विजः। ततः सन्ध्यामुपासीत जपेच्च जुहुयादपीति भविष्यत्पुराणवचनात्। वृद्धयाज्ञवल्क्यः—अध्वनीनो भवेदश्वः पुनर्भोजी तु वायसः। होमकृन्नेत्ररोगी स्यात्पाठादायुः प्रहीयते। दानं निष्फलतामेति प्रतिग्राही दरिद्रताम्। कर्मकृज्जायते दासो मैथुनी सूकरो भवेदिति। स्वबुद्धिकल्पितं नेह वचनं लिखितं मया। दृष्टं श्रुतं समूलं वा न वा स्यान्मे न दूषणम्। दृष्टं यत्स्वल्पदीर्घेषु निबन्धेषु तदाहृतम्। श्रुतं स्मृत्यविरुद्धं यत्तत्पठन्तीत्युदाहृतम्। प्रमाणमप्रमाणं वा सर्वज्ञः कर्तुमर्हति। दृष्टे (?) श्रुते न विश्वासो मादृशैः कर्तुमिष्यते ॥ ३ ॥

इत्यावसथिकश्रीमदग्निसुखात्मजश्रीविष्णुमिश्रात्मजन्मनः कृष्णमिश्रस्य कृतौ श्राद्धकाशिकायामापरपक्षिकं पार्वणश्राद्धम् ॥

अथैकोद्दिष्टमेकोऽर्घ एकं पवित्रमेकः पिण्डो नावाहनं नाग्नौकरणं नात्र विश्वेदेवाः स्वदितमिति तृप्तिप्रश्नः। सुस्वदितमितीतरे ब्रूयुरुपतिष्ठतामित्यक्षय्यस्थानेऽभिरम्यतामिति विसर्गोऽभिरताः स्म इतीतरे ॥ ४ ॥

( कर्कः )—'अथैकोद्दिष्टम्' व्याख्यास्यत इति सूत्रशेषः। तच्चैकमेवोद्दिश्य क्रियत इत्यन्वर्थसंज्ञैषा। 'एकोऽर्घः' एक एवार्घः स्यात्। एकार्घश्रवणात् पात्रमेकमिति गम्यते। अतः प्रथमशब्दानुपपत्तेः पितृभ्यः स्थानमसीत्यस्यानुपपन्नत्वात् संस्रवबहुत्वाभावाच्च न पात्रन्युब्जता। 'एकं पवित्रमेकः पिण्डः' एकदेवताकत्वात्। पवित्रं तु शास्त्रात्। 'नावाह···तीतरे' इतरशब्देन ब्राह्मणा अभिधीयन्ते। शेषं निगदव्याख्यातम्। तच्चैतददैवं स्यात्। स्मृत्यन्तरात्। अदैवं भोजयेच्छ्राद्धमिति स्मृतेः। तथा च एकादश्यामयुग्मान् ब्राह्मणान् भोजयेदित्ययुग्मता प्राप्तैव पुनरयुग्मताग्रहणाददैवमिति गम्यते। तत्र यावत्सपिण्डीकरणात्प्राक् श्राद्धं तत्सर्वमेकोद्दिष्टम्, ऊर्ध्वं तु पार्वणश्राद्धमन्यत्राभ्युदयात्। स्मृत्यन्तरात् "प्रदानं यत्र यत्रैषां सपिण्डीकरणात्परम्। तत्र पार्वणवत्सर्वमन्यत्राभ्युदयादृते" इति। तथाऽपरम्—सहपिण्डक्रियायां तु कृतायामस्य धर्मतः। अनयैवावृता कार्यं पिण्डनिर्वपणं सुतैरिति। अनयैवेति प्रकृतत्वात् सपिण्डक्रिययोच्यते। तथा च हारीतः—सहपिण्डे कृते प्रेते पृथक्त्वन्नोपपद्यते। पृथक्त्वे तु कृते तस्य पुनः कार्या सपिण्डता। तथोशनाश्च। अर्वाक् संवत्सराद् वृद्धेः पूर्णे संवत्सरेऽपि वा। ये सपिण्डीकृताः प्रेता न तेषां हि पृथक्क्रिया ॥ ४ ॥

( गदाधरः )—सर्वश्राद्धप्रकृतिभूतं पार्वणमुक्त्वाऽधुना विकृतिभूतमेकोद्दिष्टमारभ्यते। अथैकोद्दिष्टम्। अथ पार्वणानन्तरमेकोद्दिष्टं व्याख्यास्यते। अथान्वर्थसंज्ञा चैषा। एकमुद्दिश्य यत्क्रियते तदेकोद्दिष्टमिति। 'एकोऽर्घ एकं पवित्रमेकः पिण्डः' अस्मिन्नेकोद्दिष्टे एकोऽर्घः एकं पवित्रमेकः पिण्डश्च स्यात्। अर्घस्यैकत्वश्रवणात्पात्रमप्येकमिति ज्ञायते। अतः प्रथमशब्दस्यानुपपत्तेः पितृभ्यः स्थानमसीत्यस्यानुपपन्नत्वात्संस्रवस्य बहुत्वाभावाच्चात्र पात्रन्युब्जीकरणाभावः। 'नावाहनं नाग्नौकरणं नात्र विश्वेदेवाः स्वदितमिति तृप्तिप्रश्नः। सुस्वदितमितीतरे ब्रूयुरुपतिष्ठतामित्यक्षय्यस्थानेऽभिरम्यता-

मिति विसर्गोऽभिरताः स्म इतीतरे ' स्पष्टमेतत् । अत्राग्नौकरणनिषेधादेव पात्रालम्भनिषेधो हुतशेषदानानन्तरं तस्य विहितत्वात् । अमृतंजुहोमीति मन्त्रलिङ्गाद्धुतशेषस्यैव परामर्शात् । हुतशेषाभावे पात्रालम्भाभाव इति निश्चीयते । इति हलायुधभाष्ये ॥ चतुर्थी कण्डिका ॥

अथ प्रयोगः । निमन्त्रणम् । ततो मध्याह्नस्नानम् । ततः कर्माङ्गस्नानम् । द्विजेभ्य उदकदानम् । मण्डलकरणम् । द्विजैराचमनकरणम् । पादप्रक्षालनम् । ब्राह्मणस्योपवेशनम् । दीपस्थापनम् । देवताभ्यश्चेति पाठः । सङ्कल्पः । ततो निहन्मि सर्वमिति पाठः । नीवीबन्धनम् । तिला रक्षन्त्वित्यारभ्य दिशि दिशि प्रकिरणान्तम् । जलाभिमन्त्रणम् । पाकप्रोक्षणम् । आसनदानम् । हस्तप्रक्षालनम् । नावाहनम् । नावकिरणम् । जपः एकस्यार्घस्य पूरणम् दानम् । न पात्रन्युब्जीकरणं न संस्रवदानम् । ततो गन्धादिदानम् । नाग्नौकरणम् । पात्रालम्भो न भवतीति हलायुधमतम् । अन्येषां मते तु भवत्येव । अङ्गुष्ठस्यान्नेऽवगाहनम् । तिलविकिरणम् । परिवेषणम् । सङ्कल्पः । उदकदानम् । जपः । अन्नप्रकिरणम् । आचमनम् । उदकदानम् । जपो यथोक्तः । न स्वदितमिति तृप्तिप्रश्नः । सुस्वदितमिति ब्राह्मणा ब्रूयुः । शेषान्नस्यानुज्ञापनादि पिण्डपूजान्तं च पूर्ववत् । एकः पिण्डो देयः । ततः सुप्रोक्षितताद्यक्षतदानान्तम् । अक्षय्योदकदानम् । उपतिष्ठतामित्यक्षय्यस्थाने । प्रार्थनादि उदकासेकान्तम् । दक्षिणादानम् । न विश्वेदेवाः प्रीयन्तामिति प्रैषः । प्रार्थनापि न । तिलकम् । पिण्डप्रत्यवधानम् । सव्यम् । अवघ्राणम् । अग्निमत उल्मुकसकृदाच्छिन्नयोरग्नौ प्रक्षेपः । पात्रचालनम् । सम्बराभ्युक्षणम् । ततोऽद्य पूर्वोच्चरितेत्यादि । अभिरम्यतामिति विसर्जनम् । अभिरताः स्म इति प्रत्युक्तिः । अनुगमनम् । गृहप्रवेशः ॥ इति नवकण्डिकागदाधरभाष्ये एकोद्दिष्टपद्धतिः ।

अथैकोद्दिष्टप्रसङ्गात्क्रियापद्धतिर्लिख्यते—तत्र सायमाहुत्यां हुतायां यजमानस्य मरणशङ्का चेत्तदैव प्रातराहुतिर्दातव्या । जीवेत्पुनः काले प्रातराहुतिर्नैव होतव्या । पौर्णमासेष्ट्यनन्तरं प्राग्दर्शाद्यदा यजमानस्य मरणशङ्का स्यात्तदैव पिण्डपितृयज्ञवर्जिताममावास्येष्टिं कुर्यात् । तत्पर्यन्तं पक्षहोमः । आह्रियमाणे हविषि चेन्म्रियेत तदा हविषो दक्षिणाग्नौ प्रक्षेपः । ग्रहणप्रभृतिप्राग्बर्हिरासादनान्मरणं चेद्गार्हपत्ये हविषां दहनम् । आसादनोत्तरकालमाहवनीये । एवं वैश्वदेवपर्वणि कृते यजमानस्य मरणशङ्कायामवशिष्टपर्वणां समापनं कार्यम् । सकलेष्ट्यसंभवे वाऽऽज्यं संस्कृत्य पुरोनुवाक्यायाज्याभ्यां स्वस्वहविषा यागः कार्यः । तदसंभवे च केवलेनाज्येन चतुर्गृहीतेन प्रधानदेवतायागमात्रं कुर्यात् । तस्याप्यसंभवे प्रतिदैवतं पूर्णाहुतिंजुहुयात् । अग्नये स्वाहा विष्णवे स्वाहा इन्द्राय स्वाहेति । असन्नयतस्तु अग्नये विष्णवे इन्द्राग्निभ्यामिति । एवं स्मार्ते पक्षादि सकलङ्कर्म ज्ञेयम् । चरुहोमासंभवे देवतानामाज्याहुतिमात्रं वा । यद्यमावास्यापर्यन्तं यजमानो जीवति तदाऽमावास्यायां दक्षिणाग्निमुद्धृत्य पिण्डपितृयज्ञः कार्यो नाप्यन्वाधानम् । न ब्रह्मासनम् । न चामावास्येष्टिः । कृतत्वात् । सर्वङ्कर्म मरणान्तं भवति । कर्तुरसंभवात् । हविःप्रतिपत्तिविधानाच्च । अग्निहोत्रहोमेऽप्याहृते हविषि दक्षिणाग्नौ ग्रहणादिप्रागासादनाद्गार्हपत्ये दहनम् । आसादनाद्याहवनीये, एवमेव पशुयागसोमयागादावारब्धेऽन्तरा मरणशङ्कायां यथासंभवं समापनङ्कार्यम् । मृते पुत्रादिः स्नातः कृतापसव्यः सकृत्सकृत्परिसमूहनादिसंस्कारान्कुर्यात् । गार्हपत्यादाहवनीयदक्षिणाग्न्योर्विहरणम् । तिस्र एव स्थालीरेष्टवै इत्यध्वर्युराह । गार्हपत्याहवनीयदक्षिणाग्निषु तिसृणां गोमयशंवलवतीनां मृन्मयीनामुखानामधिश्रयणम् । अत्र सर्वङ्कर्मापसव्येन दक्षिणामुखेन कर्तव्यम् । सभ्यावसथ्ययोरुखाधिश्रयणं न कुर्यात् । तौ प्रत्यक्षावेव स्थाल्योर्मध्ये निधाय नीयेते । सर्वासु स्थालीषु चिह्नकरणम् । अथ मरणस्थाने एकोद्दिष्टविधिना श्राद्धम्—तत्र सङ्कल्प. । मरणस्थाने एकोद्दिष्टश्राद्धमहङ्करिष्ये । उपहारप्रोक्षणम् । अ

मनम् । आमान्नसङ्कल्पः । पिण्डदानम् । आवाहनार्घार्चनपात्रालम्भनावगाहनविकिरावनेजनरेखाप्रत्यवनेजनगन्धाद्यर्चनाक्षय्योदकदानाशीःस्वधावाचनीयनिषेकाभावः । सव्येन दक्षिणादानम् । दक्षिणाकाले मापान्नजलसंयुक्तकुम्भदानम् । इति मरणस्थाने एकोद्दिष्टविधिना श्राद्धम् । ततो मृतस्थाने शवनाम्ना पिण्डदानम् । अमुकगोत्र अमुकशव इति प्रयोगः । सजलमापान्नकुम्भदानम् । ततः पूर्ववदेकोद्दिष्टविधिना द्वितीयं द्वारदेशे श्राद्धम् । श्राद्धान्ते तत्रैव पान्थनाम्ना पिण्डदानम् । पान्थ एतत्ते इति प्रयोगः । मापान्नजलसंयुक्तकुम्भदानम् । सन्तापजानग्नीनादायानसि शरीरमारोप्य दक्षिणागमनम् । यमगाथाङ्गायन्तो यमसूक्तं च जपन्त इत्येके आहुः । अहरहर्नीयमानो गामश्वं पुरुषं ह्यजम् । वैवस्वतो न तृप्यति सुराप इव दुर्मतिः । इति यमगाथा । अपेतो यन्तु पणय इत्ययमध्यायो यमसूक्तम् । ततश्चत्वरे प्रेतनाम्ना पिण्डदानम् । मापान्नजलयुक्तघटदानम् । ग्रामश्मशानयोरर्द्धमार्गे नीते तत्र पूर्ववदेकोद्दिष्टविधिना श्राद्धम् । अमुकप्रेतस्य दाहार्थं श्मशानं नीयमानस्य अर्द्धमार्गे विश्रामस्थाने श्राद्धमहङ्करिष्ये, इति सङ्कल्पः । श्राद्धान्ते भूतनाम्ना पिण्डदानम् । अमुकभूत एप ते पिण्डः । मापान्नजलसंयुक्तकुम्भदानम् । समे बहुलतृणे देशे क्षीरिण्याद्या उद्धृत्य वितानसाधनम् । गार्हपत्याहवनीयदक्षिणाग्निषु सक्तुसक्तुसंस्कारकरणम् । तत्र गार्हपत्यादीनां स्थापनम् । सभ्यावसथ्ययोश्चितेरुत्तरतः सप्तसु प्रक्रमेषु स्थापनम् । ततो गार्हपत्याहवनीययोर्मध्ये काष्ठैश्चितिं संचिनुयात् । ततः प्रेतस्य केशश्मश्रुनखलोम्नां छेदनम् । केशादीनान्निखननम् । प्राग्ग्रीवमुत्तरलोमं कृष्णाजिनं चितायामास्तीर्य तस्मिन् यजमानं प्राक्शिरसमादधाति । ततः प्रेतस्य करे प्रेतनाम्ना पिण्डदानम् । अमुकप्रेत एतत्तइति । मापान्नजलयुक्तकुम्भदानम् । तत. प्रेतस्याज्येनाभ्यञ्जनम् । मुखे दक्षिणोत्तरनासिकाचक्षुःश्रोत्रेषु हिरण्यशकलप्रासनम् । श्रुतौ चितिचयनात्प्राक् हिरण्यशकलप्रासनमाम्नातम् । सूत्रे तु शाखान्तरादयङ्क्रमोऽवस्तितः । चितिचयनात्पूर्वं वा कर्तव्यम् । प्रेतस्य वस्त्रैकदेशं सञ्चयनार्थं गृहीत्वा सुगुप्तन्निदधाति । सर्वाणि पात्राणि प्रागग्राण्युत्तानानि वक्ष्यमाणविधिना प्रेतशरीरे निदधाति । जुहूं घृतेन पूरयित्वा दक्षिणे हस्ते सादयति । सव्ये पाणौ रिक्तामुपभृतम् । हृदये ध्रुवां रिक्ताम् । दक्षिणनासिकायां वैकङ्कतं स्रुवम् । कर्णयोः प्राशित्रहरणे । शिरसि रिक्तं प्रणीताप्रणयनं चमसम् । कपालानि वा शिरसि, अप्सु वा प्रक्षेपः कपालानाम् । पार्श्वयो. शूर्पे दक्षिणपार्श्वे ऐष्टिकम्, उत्तरपार्श्वे प्रतिप्रस्थातृकर्तृकवरुणप्रघासिकमैष्टिकम् । अकृतवरुणप्रघासस्य ऐष्टिकमेव द्विधा कृत्वा पार्श्वयोरेकैकं खण्डमासादयेत् । उदरे पृषदाज्यवतीमिडापात्रीम् । शिश्नसमीपे शम्याम् । अण्डयोः समीपे अरणी । तत्समीपे अधोमुखमुलूखलं मुसलं च । उपवेषाग्निश्रृतावदानपुरोडाशपात्रीपूर्णपात्रषडवत्तकूर्चप्रमुखानि सर्वाणि पात्राणि ऊर्वोर्मध्ये आसादयेत् । स्मार्तपात्राण्यप्यरणीसहितानि वरुणप्रघासिकानि च तत्रैवासादयेत् । मृन्मयाश्ममयानामप्सु प्रक्षेपः । लोहमयानां च ब्राह्मणाय दानमप्सु प्रक्षेपो वा । त्रेताग्निभिश्चितेरादीपनम् । तत्रैवम् । अग्निचितिपर्यन्तं तृणैराच्छादनं कृत्वा ततस्तान्प्रदीपयेत् । आहवनीयगार्हपत्यदक्षिणाग्न्युत्पन्नज्वालया चितेरादीपनं यथा भवति तथा विधेयम् । पुत्रो वा भ्राता वाऽन्यो वा ब्राह्मण आहुतिं जुहुयात् । ब्राह्मण एव क्षत्रियवैश्ययोराहुतिंजुहुयात् न पुत्रो भ्राता वा । गार्हपत्ये आज्यसंस्कारः । अग्निहोत्रहवण्यां सकृद्गृहीत्वा आहवनीये समित्पूर्वकं जुहोति । तत्र मन्त्रः । अस्मात्त्वमधिजातोऽसि त्वदयं जायता पुनः । असौ स्वर्गाय लोकाय स्वाहा इत्यनेन मन्त्रेण होमः । ॐ इदमग्नये नममेति त्यागः । असौस्थाने प्रेतस्य प्रथमान्तं नामग्रहणम् । अस्य मन्त्रस्य स्त्रियामप्यूहः । ततोऽग्निहोत्रहवणी मुखे प्रागग्रामासादयेत् । खादिरं स्रुवं सव्यनासिकायाम् । स्फ्यं दक्षिणहस्ते । आज्यस्थाल्या ऊर्वोरन्तरे प्रक्षेपः । पात्रत्वाविशेषात् । मृन्मयी चेदप्सु प्रासनम् । अथ प्रसङ्गादावसथ्यसंबन्धिपात्रप्रतिपत्तिरु-

च्यते । उक्तं च—आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः । अनाहिताग्निरेकेन लौकिकेनेतरे जनाः । अथ पुत्रादिराप्लुत्य कुर्याद्दारुचयं बहु । भूप्रदेशे शुचौ युक्ते पश्चाच्चित्यादिलक्षणम् । तत्रोत्तानं निपात्यैनं दक्षिणाशिरसं मुखे । हिरण्यं न्यस्य शिरसि प्रणीताचमसं तथा । शूर्पं तत्पार्श्वयोरेकच्चेद्विधा पूर्ववन्न्यसेत् । श्रवणाकर्मसंबन्धि द्वितीयं पिण्डयज्ञियम् । अण्डयोररणी तद्वत्प्रोक्षणीपात्रमादितः । पात्राणि चान्तरे ऊर्वोर्मृन्मयान्यम्भसि क्षिपेत् । अथाद्यंसजात्वक्तो(?) दद्यादक्षिणतः शनैः । पूर्ववज्जुहुयाद्वह्नौ समिद्वर्जं स्रुवेण सः । दक्षिणायां स्रुवं दद्यान्नसि स्यं दक्षिणे करे । समिधो वा ततो बर्हिः शेषं स्यादाहिताग्निवत् । उखाधिश्रयणाद्यूर्वोरन्तरे पात्रप्रक्षेपान्तं सर्वमाहिताग्निवत् । केवलोपासनाग्नि चितौ मृतं दक्षिणाशिरसं निदध्यान्न प्राक्शिरसमिति विशेषः । इत्यावसथ्यसंबन्धिपात्राणां प्रतिपत्तिः । अथ सूतिकामरणे विशेषः । सूतिकायां मृतायां कुम्भे उदकं कृत्वा तत्र पञ्चगव्यं प्रक्षिप्य आपोहिष्ठा इदमाप इत्यादिपुण्यर्ग्भिरभिमन्त्र्य ब्राह्मणानुज्ञया पञ्चदश प्राजापत्यान्कृत्वा तेन कुम्भोदकेन शतकृत्वस्तां स्नापयित्वा वस्त्रान्तरेण सर्वां वेष्टयित्वा दाहः कार्यः । रजस्वलामरणेऽप्येवम् । उदक्या सूतकी वा यं स्पृशति तस्याप्येष एव विधिः । दाहे जाते किञ्चित्परिशेषणीयम् । निःशेषस्तु न दग्धव्य इति वचनात् ॥ ॥ अथ स्मार्तमुदककर्मोच्यते । नद्याद्युदकसमीपे गमनम् । समीपे स्थितं योनिसम्बन्धिशालकं वा उदकं करिष्यामह इति मन्त्रेणोदकं याचयेयुः सपिण्डादयः । यदि शतवर्षादर्वाक् प्रेतो भवेत् तदा कुरुध्वमिति वचनमित्युक्ते सप्तपुरुषसंबन्धिनः सपिण्डाः दशपुरुषसंबन्धिनः समानोदकाश्चैकग्रामनिवासे यावत्स्मृतं जलं प्रविशन्त्येकवस्त्राः । अशिखाः प्राचीनावीतिनः सन्तः । ततः सव्यपाणेरनामिकयाङ्गुल्या जलम् अपनःशोशुचदघमित्येतावता मन्त्रेणापनोद्य दक्षिणाभिमुखास्तूष्णीं निमज्जन्ति । कर्कादिभाष्यकाराणां मतेऽपनोदने मन्त्रः । देवयाज्ञिकादिमते निमज्जने । ततः प्रेतमुद्दिश्यैकैकमञ्जलिं सकृद्भूमौ प्रक्षिपन्ति । अमुकसगोत्रामुकशर्मन्प्रेत एतत्ते उदकमित्यनेन मन्त्रेण । तत उदकादुत्तीर्य शुचौ देशे शाद्वलवत्युपविष्टान्सपिण्डादीनन्ये सुहृद इतिहासपुराणादिकथाभिः संसारस्यानित्यतां दर्शयन्तो वदेयुः । शाद्वलं हरिततृणमस्ति यस्मिन्निति शाद्वलवान् तस्मिन् शाद्वलवति भूमौ उपविष्टानित्यर्थः । रोदनं न कर्तव्यम् । तदुक्तम्—श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः । अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः इति । ततः पश्चादनवलोकयन्तः पङ्क्तिव्यवस्थानेन कनिष्ठानग्रतः कृत्वा ग्राममागच्छन्ति । गृहद्वारसमीपे आगत्य सर्वे त्रीणि त्रीणि निम्बपत्राणि दन्तैरवखण्ड्याचम्योदकमग्निं गोमयं गौरसर्षपांस्तैलमित्येतानि प्रत्येकं स्पृष्ट्वा पादेन पाषाणमाक्रम्य गृहं प्रविशन्ति । ततः प्रभृति ब्रह्मचारिणोऽधःशायिनो न किञ्चन कर्म कुर्वन्ति न कारयन्ति । क्रीत्वा लब्ध्वा वा दिवा प्राश्नीयुः । अमांसं पिण्डं दत्वा ततो भोजनम् । भोजनकाले भोज्यादन्नाद्भक्तमुष्टिञ्च प्रेतोद्देशेन भूमौ निक्षिपेत् । अमुकसगोत्रामुकप्रेत भक्तमुष्टिरुपतिष्ठतामिति । यावत्प्रत्यहमेकैकमवयवपूरकं पिण्डं प्रेताय दद्यात् । तत्र विधिः । स्नानं कृत्वाऽहते आर्द्रे वाससी परिधाय पिण्डपितृयज्ञवत्तूष्णीं पिण्डदानम् । तूष्णीं प्राणायामः । आचमनम् । देशकालौ स्मृत्वाऽमुकसगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्त्यर्थं क्षुत्तृषानिवृत्त्यर्थं शिरोनिष्पत्त्यर्थं च पिण्डदानं कुम्भभोजनदानमुदकदानं चाहं करिष्ये, इति सङ्कल्पः । अवनेजनम् । अमुकसगोत्रामुकप्रेतावनेनिक्ष्वेति । दर्भास्तरणम् । पिण्डदानम् । अमुकसगोत्रामुक प्रेतैष ते शिरःपूरकपिण्डो मया दत्त इति । पूर्ववत्पुनरवनेजनम् । अनुलेपनपुष्पधूपदीपशीतलतोयकुम्भोर्णातन्तुदानं पिण्डे स्मृत्यन्तरोक्तमपि कुर्यात् । ततः पिण्डसमीपे भूमौ एकाञ्जलितोयदानम् । अमुकसगोत्रामुकप्रेत एष ते तोयाञ्जलिरुपतिष्ठताम् । इदं तोयपात्रं ते उपतिष्ठताम् । अमुकसगोत्रस्यामुकप्रेतस्यानेन प्रेतत्वनिवृत्तिरस्तु । क्षुत्तृषानिवृत्तिरस्तु । शिरोनिष्पत्तिरस्तु । पिण्डमुदके प्रक्षिप्य स्नात्वा नव-

श्राद्धं कुर्यात् । ततस्तूष्णीं पूर्ववत्कर्म । युग्मा विप्राः । तूष्णीं निमन्त्रणादि । पादप्रक्षालनम् । आचमनम् । उपवेशनम् । तूष्णी प्राणायामः । द्विराचमनम् । देशकालौ स्मृत्वाऽमुकसगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्त्यर्थमेकोद्दिष्टविधिना प्रथमदिवसनिमित्तं नवश्राद्धमहं करिष्ये । उपहारप्रोक्षणम् । तिलदर्भविकिरणम् । आचमनम् । आमान्नसङ्कल्पः । इदमामान्नं ते उपतिष्ठतु । तिलविकिरणम् । दक्षिणाग्रदर्भास्तरणम् । अमुकसगोत्रामुकप्रेतैप ते पिण्ड इति पिण्डद्वयं दद्यात् । अवनेजनप्रत्यवनेजने न स्तः । प्रत्येकं गोत्रोच्चारणादि सूत्रदानम् । न पूजनम् । आचम० । आमान्नसं० । अक्षय्योदकदानम् । अमुकसगोत्रस्यामुकप्रेतस्य दत्तमुपतिष्ठताम् । दक्षिणादानम् । पिण्डोद्धरणम् । कृतस्य नवश्राद्धविधेर्यन्न्यूनं यदतिरिक्तं तत्सर्वमित्यादि । पिण्डयोरुदके प्रक्षेपः । एत एव पदार्था अत्र भवन्ति नान्ये । पूर्वन्नवश्राद्धं वा पश्चात्पिण्डदानम् । गर्ते तैलकल्कोष्णोदकानां प्रेतोद्देशेन प्रक्षेपः । अमुकसगोत्रामुकप्रेतात्र जलेन स्नाहीत्यादि । अथ यस्मिन्नहोरात्रे स मृतो भवति [ तस्य वा ] तस्मिन्नेकस्मिन्मृन्मये पात्रे उदकं द्वितीये क्षीरं कृत्वा यष्ट्यादिकमवलम्ब्याकाशे धारयेत् । अमुकसगोत्रामुकप्रेतात्र स्नाहि पिबेदमिति मन्त्रेण । इति प्रथमदिनकृत्यम् । अथ द्वितीयदिने प्रेतस्य कर्णाक्षिनासिकानिष्पत्त्यर्थं पिण्डदानम् । कुम्भभोजनदानम् । द्वावञ्जली द्वे तोयपात्रे । त्रय उदकाञ्जलय एव वा देया न पात्रे । इति द्वितीयदिनकृत्यम् । तृतीये गलांसभुजवक्षोनिष्पत्त्यर्थं पिण्डदानम् । त्रयोऽञ्जलयः । त्रीणि तोयपात्राणि । अथ वा पञ्चोदकाञ्जलय एव । प्रथमदिवसवन्नवश्राद्धम् । इति तृतीयदिनकृत्यम् ॥ ॥ अथ चतुर्थेऽहनि सञ्चयननिमित्तमेकोद्दिष्टश्राद्धम् । तच्च प्रथमदिनवत् । अत्रैक एव पिण्डः । श्मशानवासिदेवतानां बलिहरणम् । पुष्पधूपदीपनैवेद्यानि संभृत्य ॐ क्रव्यादमुखेभ्यो देवेभ्यो नम इति मन्त्रेणार्घादिना पूजां कुर्यात् । ततः क्रव्यादमुखेभ्यो देवेभ्यो बलिदानम् । तत्र मन्त्रः । देवा येऽस्मिन् श्मशाने स्थुर्भगवन्तः सनातनाः । तेऽस्मत्सकाशाद् गृह्णन्तु बलिमष्टाङ्गमक्षयम् । प्रेतस्यास्य शुभांल्लोकान्प्रयच्छन्त्वपि शाश्वतान् । अस्माकमायुरारोग्यं सुखञ्च श्रियमुत्तमामिति । एवं बलिं दत्वा विसर्जयेत् । पलाशवृन्तेनास्थीनि प्रकटानि कृत्वा अङ्गुष्ठकनिष्ठिकाभ्यामादाय पलाशपुटे प्रासनम् । तत्र शमीशैवालकर्दमानां च प्रासनम् । ततो घृतेनाभ्यज्य सर्वसुरभिभिश्चन्दनागुरुकर्पूरकेसरकस्तूरिकाभिर्मिश्रणम् । दक्षिणपूर्वायतां कर्षूं खात्वा तत्र कुशास्तरणम् । हरिद्रालापितवस्त्रखण्डमास्तृत्य तस्मिन्वस्त्रे वाङ्निवपामि इत्यनेन मन्त्रेणास्थिप्रक्षेपः । ॐ आत्वा मनसानार्तेन वाचा ब्रह्मणा त्रय्या विद्यया पृथिव्यामक्षिकायामपाᳪं रसे निवपाम्यसावित्यनेन मन्त्रेण वा । असौस्थाने प्रेतनामोद्देशः । पितृमेधं चिकीर्षतः कुम्भे अस्थिसञ्चयनं कर्तव्यम् । अस्मिन्पक्षे कुशास्तरणं हरिद्रालापितवस्त्रास्तरणं कुम्भे एव कर्तव्यमस्थिसंस्कारस्थात् । क्वचिद्भूप्रदेशे कुम्भनिधानं तूष्णीम् । कुम्भमध्येऽस्थिप्रक्षेपे मन्त्रो भवत्येव । इत्यस्थिसञ्चयनम् ॥ चिताभूमिङ्गोमयेनोपलिप्य तत्र तेनैव पूर्वोक्तबलिमन्त्रेण बलिं दद्यात् । ततश्चतुर्थदिवससंबन्धिपिण्डदानम् । नाभिलिङ्गगुदनिष्पत्त्यर्थंकुम्भभोजनदानम् । जलाञ्जलयश्चत्वारः चत्वारि जलपात्राणि च । अथ वा सप्ताञ्जलय एव । इति चतुर्थदिनकृत्यम् । पञ्चमेऽहनि जानुजङ्घापादनिष्पत्त्यर्थं पिण्डदानम् । कुम्भो जलपूरितः, पञ्च जलाञ्जलयः पञ्च पात्राणि च, नवाञ्जलय एव वा । ततो नवश्राद्धं प्रथमदिनवत् । इति पञ्चमदिनकृत्यम् । षष्ठे सर्वमर्मनिष्पत्त्यर्थं पिण्डदानम् । कुम्भदानम्, षट् जलाञ्जलयः षट् तोयपात्राणि । अथ एकादशाञ्जलय एव वा । इति षष्ठदिनकृत्यम् । सप्तमेऽहनि नाडिकानिष्पत्त्यर्थं पिण्डदानम् । कुम्भभोजनदानम् । सप्ताञ्जलयः सप्त पात्राणि, त्रयोदशाञ्जलय एव वा । प्रथमदिनवन्नवश्राद्धम् । इति सप्तमदिनकृत्यम् । अष्टमेऽहनि लोमदन्तनिष्पत्त्यर्थं पिण्डदानम् । कुम्भभोजनदानम् । अष्टाञ्जलयः अष्टौ पात्राणि । पञ्चदशाञ्जलय एव वा । इत्यष्टमदिनकृत्यम् । नवमेऽहनि वीर्यनिष्पत्त्यर्थं पिण्डदानम् । कुम्भभोजनदानम् । नवाञ्जलयो नवपात्राणि, सप्तदशाञ्जलय एव वा । ततो

नवश्राद्धंप्रथमदिनवत्। इति नवमदिनकृत्यम्। दशमेऽहनि शरीरपूरणार्थं पिण्डदानम् कुम्भभोजनदानम्। दशाञ्जलयो दशपात्राणि, एकोनविंशतिर्जलाञ्जलयो वा। अथ वा दशाहमध्ये प्रत्यहंदशाञ्जलय एव देयाः न पात्राणि । अत्र पिण्डत्रयदानम् । एकं तत्सखिभ्यो द्वितीयं प्रेताय तृतीयं यमाय। तत्र देशकालौ स्मृत्वा प्रेतस्य प्रेतत्वनिवृत्त्यर्थं पिण्डदानमहङ्करिष्ये। प्रेतसखायः अवनेनिग्ध्वम्। गोत्र प्रेत अवनेनिक्ष्व यम अवनेनिक्ष्व दर्भास्तरणम्। अवनेजनक्रमेण पिण्डदानं प्रत्यवनेजनञ्च। पिण्डानामुदके प्रक्षेपः। ततः सूतकनिवृत्त्यर्थं सर्वे केशश्मश्रुवपन कारयेयुः नखलोमनिकृन्तनञ्च। ततः सर्वेषां सचैलस्नानम्। इति दशाहसम्बन्धि कर्म समाप्तम् ॥ ॥ दशाहमध्ये दर्शपाते दर्शदिन एव सर्वं दशाहिकं कर्म समापनीयम्, न त्रिरात्रादर्वागिति केचित् । पित्रोस्तु यावदाशौचं दशाहे एवेति मदनपारिजातकारः। अन्येषांतु मातृपितृव्यतिरिक्तानां प्रथमदिनप्रभृतिदर्शपाते सर्वं समापनीयमेव। एतच्च प्रेतनिर्हरणादिकं यतिव्यतिरिक्तानां प्रथमत्रयाणामाश्रमाणां कुर्यात्। तथा च स्मृतिः—त्रयाणामाश्रमाणाञ्च कुर्याद्दाहादिकाः क्रियाः। यतेः किञ्चिन्न कर्तव्यं न चान्येषाङ्करोति स इति। तथा। एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम्। न कुर्यात्पार्वणादन्यद्ब्रह्मीभूताय भिक्षवे। अहन्येकादशे प्राप्ते पार्वणं तु विधीयत इति। ब्रह्मचारी त्वाचार्योपाध्यायमातृपितृव्यतिरिक्तानां निर्हरणादिकं न कुर्यात्। यथाह याज्ञवल्क्यः—आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात्। समाप्ते तूदकं दत्वा त्रिरात्रमशुचिर्भवेत् । इति । आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रती। सूतकान्नं च नाश्नीयान्न च तैः सह संवसेत् इति। यदि च मोहात्करोति तदा ब्रह्मचर्यव्रतात्प्रच्यवते। पुनरुपनयनेन शुद्ध्यतीति। सपिण्डीकरणान्तानि श्राद्धानि लौकिकाग्निना कार्याणि। तदुक्तम्—सपिण्डीकरणान्तानि प्रेतश्राद्धानि यानि वै। तानि स्युर्लौकिके वह्नावित्याह चाश्वलायनः ॥ ॥ अथैकादशाहविधिः। तत्र साग्नेर्दाहदिनादारभ्यैकादशाहे निरग्निकस्य तु मरणदिनादारभ्यैकादशाहे कर्ता विधिवत्स्नात्वा षोडशोपचारैर्विष्णोः पूजनं तर्पणं च कुर्यात्। तत्र समन्त्रकप्राणायामत्रयं विधाय देशकालौ संकीर्त्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्त्यर्थं श्रीविष्णोः षोडशभिरुपचारैः पूजनपूर्वकं तर्पणमहङ्करिष्ये। तत्र सर्वौषधितुलसीदुग्धमिश्रमञ्जलिं कृत्वा दक्षिणाभिमुखो यज्ञोपवीती ऋजुदर्भैर्देवतीर्थेन हस्तेनैव तर्पणं कुर्यान्न शङ्खेन। सहस्रशीर्षा पुरुषः इतिषोडशभिः प्रत्यृचं तर्पणम्। अनादिनिधनो देवः शङ्खचक्रगदाधरः । अक्षय्य पुण्डरीकाक्ष प्रेतमोक्षप्रदो भव। पापहा महाविष्णुस्तृप्यतु। गोविन्दस्तृप्यतु। नारायणस्तृ०। युञ्जते मनः। इदं विष्णुः। इरावती०। देवश्रुतौ देवेषु०। विष्णोर्नुकं०। दिवोवा०। प्रतत्। विष्णोरराटम्। इत्यष्टौ । अदित्यै० । दिवि विष्णुः। अग्नेस्तनूः रक्षोहणं०। रक्षोहणोवो०। अत्यन्याम्। विष्णोः कर्माणि। तद्विष्णोः। वाचस्पतये। उपयामगृहीतोस्यादित्येभ्यस्त्वा। विष्णोः क्रमोसि। तद्विप्रासः। त्रीणिपदा। अनेन विष्णुतर्पणेन प्रेतत्वनिवृत्तिरस्तु। इति पुराणोक्तं विष्णुतर्पणम् ॥ ॥ अथ वृषोत्सर्गः। तत्र देशकालौ स्मृत्वा प्रेतस्य प्रेतत्वनिवृत्त्यर्थमेकादशाहश्राद्धादिकर्तृयोग्यताप्राप्त्यर्थं च वृषोत्सर्गङ्करिष्ये, इति सङ्कल्पः। ततो वस्त्रचन्दनपुष्पताम्बूलादिना होतृब्रह्माणौ वृणुयात्। कर्कमते तु ब्रह्मवरणमात्रम् । होमस्य स्वकर्तृकत्वात्। अस्माकं तु पुराणे दृष्टत्वादुभयवरणमत्र। ततः स्वयं पञ्चभूसंस्कारान्कृत्वा आवसथ्याग्नेः स्थापनम्। ततोऽष्टानां कलशानां स्थापनम्। ततः प्रतिष्ठा । इमे कलशाः सुप्रतिष्ठिता भवन्तु। होतृब्रह्मप्रणीतानामासनदानम् । ब्रह्मोपवेशनम् । प्रणीतापात्रमध्ये पिष्टादिना व्यवधानं कृत्वा मूलदेशे पय इतरत्र जलं प्रक्षिप्य प्रणयनमग्नेरुत्तरतो निधानं परिस्तरणमग्नेरुत्तरतः पश्चाद्वा पात्रासादनम् । तद्यथा। पवित्रच्छेदनानि। पवित्रे द्वे। प्रोक्षणीपात्रम् । आज्यस्थाली। संमार्गकुशाः। उपयमनकुशाः। समिधस्तिस्रः। स्रुवः। आज्यम्। तण्डुलाः। पौष्णश्चरुः पिष्टमयः।

तस्य च अपणानुपदेशात्सिद्ध एवोपादीयते। होतुर्वस्त्रयुग्मं सुवर्णकांस्यादिदक्षिणा च। ब्रह्मणः पूर्णपात्रं वरो वा दक्षिणा। इति पात्रासादनम्। चरुस्थालीमेक्षणयोरुपकल्पनम्। पवित्रकरणम्। प्रोक्षणीसंस्कारः। ततो यथाऽऽसादितानां प्रात्राणां प्रोक्षणम्। असञ्चरे प्रोक्षणीनान्निधानम्। आज्यस्थाल्यामाज्यनिर्वापः। चरुस्थाल्यां प्रणीतोदकं पय आसिच्य सपवित्रायां तण्डुलावापः। ब्रह्मण आज्याधिश्रयणम्। स्वयमेव चरोरधिश्रयणम्। उभयोः पर्यग्निकरणम् स्रुवप्रतपनम्। स्रुवं संमृज्य पुनः प्रतपनम्। प्रणीतोदकेनाभ्युक्ष्य देशे निधानम् आज्योद्वासनम्। उत्पूयावेक्षणम्। प्रोक्षण्युत्पवनम्। उपयमनकुशादानम्। समिधोऽभ्याधानम्। प्रोक्षण्युदकेन पर्युक्षणम्। तत इहरतिरिति षडाहुतीर्जुहुयात्। ॐ इहरति स्वाहा ॐ इह रमध्वं स्वाहा ॐ इहधृतिः स्वाहा ॐ इह स्वधृतिः स्वाहा। एतेषामिदं पशुभ्यः इति त्यागः। इहरतिः पशुदेवत्य इति सर्वामुक्रमण्यामुक्तत्वात्। ॐ उपसृजन्धरुणम्मात्रे धरुणो मातरं धयन्स्वाहा। इदमग्नये। ॐ रायस्पोषमस्मासुदीधरत् स्वाहा। इदमग्नये। तत आघारावाज्यभागौ। ॐ प्रजापतये स्वाहा। ॐ इन्द्राय स्वाहा। ॐ अग्नये स्वाहा। ॐ सोमाय स्वाहा। ततः पायसचरोर्होमः। ॐ अग्नये स्वाहा ॐ रुद्राय स्वाहा। ॐ शर्वाय स्वाहा ॐ पशुपतये स्वाहा ॐ उग्राय स्वाहा ॐ अशनये स्वाहा ॐ भवाय स्वाहा ॐ महादेवाय स्वाहा ॐ ईशानाय स्वाहा। यथा दैवतं त्यागाः। ततः पिष्टचरुहोमः। ॐ पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः। पूषा वाजान्सनोतु नः स्वाहा। इत्येकामाहुतिं जुहुयात्। इदं पूष्णे०। ततः पायसपिष्टचरुभ्यां स्विष्टकृत्। ॐ अग्नये स्विष्टकृते स्वाहा। इदमग्नये स्विष्टकृते०। ततो भूराद्या नवाहुतयः। ॐ भूः स्वाहा ॐ भुवः स्वाहा ॐ स्वः स्वाहा ॐ त्वन्नो अग्ने० ॐ सत्वन्नो अग्ने० ॐ अयाश्चाग्ने० ॐ ये ते शतं० ॐ उदुत्तमम्० ॐ भवतन्न०। ॐ प्रजापतये स्वाहा। संस्रवप्राशनम्। आ० पवित्राभ्यां मार्जनम्। अग्नौ पवित्रप्रतिपत्तिः। ब्रह्मणे पूर्णपात्रवरयोरन्यतरस्य दक्षिणात्वेन दानम्। प्रणीताविमोकः। ततोऽश्वत्थपत्रयुक्तकलशे रुद्रमावाह्य गन्धमाल्यादिभिः संपूज्य हस्तेन कलशं स्पृशन् रुद्राध्यायं जपेत् ततः पुरुषसूक्तम्। कुष्माण्डीसंज्ञिकम्। यद्देवादेवहेडनमिति तिस्रऋचः। षडङ्गरुद्रजपो वा। गरुडपुराणवचनात्। ततो वृषवत्सतरीणां स्नापनम् अलङ्करणम्। चक्रत्रिशूलकरणम्। अङ्कनम्। वृषस्य कर्णे जपः। वृषो हि भगवान्धर्मश्चतुष्पादः प्रकीर्तितः। वृणे हितमहं भक्त्या स मा रक्षतु सर्वतः। ततो गृहीतपुष्पाञ्जलिर्वृषं त्रिः प्रदक्षिणीकृत्य नमस्कुर्यात्। ततो वृषवत्सतरीणां वस्त्रेण संश्लेषः। अयं हि वो मया दत्तः सर्वासां पतिरुत्तमः। तुभ्यं चैता मया दत्ता पत्न्यः सर्वा मनोरमाः। ततश्चतुःकृत्वोऽग्निं प्रदक्षिणीकृत्य वत्सतरीणामग्निप्रदक्षिणाश्चतस्रः कारयित्वा पुच्छे पुरुषसूक्तेन प्रेतनाम्ना च तर्पणं कार्यम्। तत उत्सर्गः। अद्येत्यादिदेशकालौ स्मृत्वा एतं वृषं रुद्रदैवतं यथाशक्त्यलंकृतं गन्धाद्यर्चितमेवंविधवत्सतरीसहितममुकगोत्रस्यामुकप्रेतस्य प्रेतत्वमुक्तयेऽहमुत्सृजामि। एवं युवानं पतिं वो ददामि तेन क्रीडन्तीश्चरथ प्रियेण। मा नः साप्तजनुषा सुभगा रायस्पोषेण समिषा मदेमेति सव्येन पाणिना वृषपुच्छं गृहीत्वा दक्षिणेन कुशातिलसहिता अप आदाय अमुकगोत्रायामुकप्रेताय एष एवं मया दत्तः सन्तारयितुं सर्वदा इत्युच्चार्य तिलहिरण्यसहितमुदकं भूमौ निक्षिपेत्। ततो वत्सतरीमध्यस्थितस्य वृषस्य मयोभूरभिमा वाहिस्वाहेत्यादि स्वर्णसूर्यः स्वाहेत्यन्तेनानुवाकशेषेणाभिमन्त्रणम्। ततो दक्षिणस्कन्धेन वृषप्रेरणम्। यथेष्टपथं पर्यटेति। ततः शक्त्यनुसारेण पायसेन ब्राह्मणानां भोजनम्। सहिरण्यस्य रुद्रकुम्भस्य धेनोश्च होत्रे प्रदानम्। इति वृषोत्सर्गः॥ ॥ ततस्तन्त्रेण चत्वारि श्राद्धानि। आद्यन्नवश्राद्धं प्रथमदिनवत्। तदुक्तङ्गरुडपुराणे स्मृतौ च—प्रथमेऽह्नि तृतीये वा पञ्चमे सप्तमेऽपि वा। नवमैकादशे चैव नवश्राद्धानि कारयेत् इति। पूर्वदिवसमारभ्य न कृतश्चेदेकादशेह्नि कुर्यात्। नवश्राद्धानामन्त्यमासिकानामाद्यं स्वतन्त्रमेकोद्दिष्टमेवेति तत्र स्वतन्त्रैकोद्दिष्टे क्रियमाणे

देशकालकर्त्रैक्यात्तन्त्रेणानुष्ठानसिद्धिः । पृथगनुष्ठानपक्षे त्वादौ स्वतन्त्रेणैकोद्दिष्टं ततो नवश्राद्धं ततो मासिकमिति स्मृत्यर्थसारे । तत्रैकादशाहे आद्यमासिकश्राद्धे एकादशब्राह्मणानामामन्त्रणम् । पूर्वेद्युः स्नात्वा विप्रेषु प्रेतनियोजनम् । गतोऽसि दिव्यलोके त्वं कृतान्तविहितात्पथः । मनसा वायुभूतेन विप्रे त्वाऽहन्नियोजये । पूजयिष्यामि भोगेन एवं विप्रे निवेदयेत् । अस्तमिते विप्रनिवेशनम् । पाद्यं दत्वा नमस्कृत्य तैलेन पादौ प्रक्षालयेत् । उदिते विप्रस्य केशश्मश्रुनखच्छेदं कारयित्वा स्नानाभ्यञ्जनं च दद्यात् । ततो भूमिभागग्रहणम् । महास्थण्डिलस्य करणम् । नद्यादौ सचैलं स्नात्वा तीर्थानि मनसा ध्यात्वा आत्मनोऽभ्युक्षणम् । एवं शुद्धिङ्कृत्वा ब्राह्मणानामावाहनम् । आगतं दृष्ट्वा स्वागतकरणम् । अर्घ्यपाद्यदानम् । आसनोपकल्पनम् । आसने उपवेशनम् । छत्रोपानहद्दानम् । तिलोपचारकरणम् । नामगोत्रमुदाहृत्य प्रेताय तदनन्तरम् । शीघ्रमावाहयेद्विप्रे दर्भहस्तोऽथ भूतले । तत्र मन्त्रः—इहलोकं परित्यज्य गतोऽसि परमाङ्गतिम् । मनसा वायुरूपेण विप्रे त्वां योजयाम्यहम् । एवमावाह्य तं गन्धपुष्पधूपैः समर्चयेत् । ततो वस्त्राभरणदानम् । पक्वान्नदानम् । अष्टादशपदार्थवर्जितं सकलं श्राद्धम् । वासोहिरण्यवास्युपानच्छत्रोदकुम्भानां गुणवते ब्राह्मणाय दानम् । ततः स्नानम् । तत एकादशभिर्ब्राह्मणै रुद्रश्राद्धम् । ततः स्नानम् । विष्णुपूजनम् । प्रेतोद्देशेन त्रयोदशकुम्भदानम् । त्रयोदशपददानम् । भाजनानि सतिलानि त्रयोदश देयानि । मुद्रिकावस्त्रयुग्मच्छत्रोपानहदानम् । अश्वरथगजमहिषीशय्यादानम् । गोभूतिलहिरण्यादिदानम् । ताम्बूलपूगदानम् । एकादशाहादारभ्याब्दं यावत्सान्नघटदानम् । देवालये पाषाणे वा उपदानदानम् । ऋणधेनुदानम् । ततो वैश्वदेवः ॥ ॥ इति क्रियापद्धतिः ॥ ४ ॥ ॥ * ॥

इति नवकण्डिकागदाधरभाष्ये एकोद्दिष्टप्रकरणम् ।

( श्राद्ध० )—उक्तं प्रकृतिश्राद्धमिदानीं विकृतिश्राद्धमुपक्रमते ' अथैकोद्दिष्टम् ' अथशब्दः आनन्तर्ये । प्रकृतिश्राद्धानन्तरं विकृतिश्राद्धमेकोद्दिष्टमुच्यत इति शेषः । अथवा अथशब्दोऽधिकारार्थः । एकोद्दिष्टमिति विकृतिश्राद्धोपलक्षणम् । ततश्च प्रकृतिवद्विकृतिन्यायात्सर्वाङ्गप्राप्तौ विकृतिश्राद्धानि यथोपदेशं प्रधानाङ्गहीनानि भवन्तीत्यधिक्रियन्त इत्यर्थः । तानि च युगादिमन्वादिसंक्रान्तिमघाभरणीरविवारप्रेतषोडशकनवनित्यतीर्थविवाहोपनयोर्ध्वक्षयाहामहेमापिण्डकसंकल्पश्राद्धानि । तथा हि मत्स्यपुराणादिषु—अयनद्वितये श्राद्धं विषुवद्वितये तथा । संक्रान्तिषु च सर्वासु पिण्डनिर्वपणादृते । पुलस्त्यः—युगादिषु च कुर्वीत पिण्डनिर्वपणादृते । तथा—युगादौ पितृनक्षत्रे तथा मन्वन्तरादिषु । अर्घपिण्डं न कुर्वीत वैष्णवं श्राद्धमाचरेत् । वैशाखस्य तृतीयायां नवम्यां कार्तिकस्य च । श्राद्धं संक्रान्तिवत्कुर्यात्पिण्डनिर्वपणं विना । मघायुगादौ भरण्यां संक्रान्तौ रविवासरे । पिण्डदानं न कुर्वीत यदीच्छेत्सुतजीवितम् । सूतः—मघायां पिण्डदानेन ज्येष्ठः पुत्रो विनश्यति । कनीयांस्तु त्रयोदश्यां क्षयादभ्युदयादृते । प्रेतश्राद्धेषु सुमन्तुः—विकिरं नैव दातव्यं न कुर्यादाशिषं जपम् । षडञ्जलीन्न कुर्वीत एकोद्दिष्टेषु सर्वदा । आशिषो द्विगुणा दर्भा जपाशीःस्वस्तिवाचनम् । पितृशब्दः ससंबन्धः शर्मशब्दस्तथैव च । पात्रारम्भोऽवगाहश्च उल्मुकोल्लेखनादिकम् । तृप्तप्रश्नश्च विकिरः शेषमन्नं तथैव च । प्रदक्षिणा विसर्गश्च सीमान्तानुव्रजस्तथा । अष्टादश पदार्थांश्च प्रेतश्राद्धे विवर्जयेत् । सत्यव्रतः—अनूदकमधूपं च गन्धमाल्यादिवर्जितम् । नवश्राद्धममन्त्रं तु पिण्डोदकविवर्जितम् । अनूदकमिति दीर्घं छान्दसम् । अवनेजनोदकरहितम् । अनूदकं पिण्डोदकविवर्जितम् । अवनेजनप्रत्यवनेजनरहितमिति कश्चित् । तन्नोचितम् । स्मृत्यन्तरे तयोः सद्भावप्रतीतेः । तथा च—अनूदकमधूपं च गन्धमाल्यविवर्जितम् । निनयेदश्मनि पूर्वं ततः श्राद्धं प्रकल्पयेत् । पश्चाच्च निनयेत्पूर्वं तस्मिन्नेव

यथाविधीति । अस्यार्थः—पूर्वमश्मन्यवनेजनं निनयेत्ततस्तत्रापि पिण्डनिर्वपणाख्यं श्राद्धं कुर्यात्पश्चाच्च तत्रैव पिण्डप्रत्यवनेजनं दद्यात् । पूर्वमिति प्रत्यवनेजनमुच्यते । पुर्वपूरण इतिधातोराप्यायनार्थत्वात् । एवं च सत्यनूदकं पिण्डोदकविवर्जितं चेति पदद्वयं ऊर्जस्वधावाचनाभ्यां प्राप्तावुदकनिषेधकमित्युचित-मित्यर्थः । रेणुरपि—अन्नं न विकिरेद्भूमौ गृहीयान्नाशिषोऽत्र तु । पात्रालम्भो न चाक्षय्यमासना-दिप्रयोगतः । नामगोत्रेण संबन्धरहितं प्रेतशब्दवत् । नवश्राद्धं गृहे कार्यं भार्या यत्राग्नयोऽपि वै इति । तथा—आसीमान्तं स्वस्तिवाच्यं पिण्डाना च नमस्कृतिः । न पुष्पं पिण्डमूर्धस्थं वन्देद्विप्रकरच्युतम् । सर्ववर्णेषु सर्वत्र प्रेष्यसाधारणो विधिरिति । मत्स्यपुराणे—नित्यं तावत्प्रवक्ष्येऽहमर्घावाहनवर्जितम् । दैवहीनं भवेत्तत्तु नियमादिविवर्जितम् । तीर्थश्राद्धं प्रकुर्वीत पाकान्नेन विशेषतः । आमान्नेन हिरण्येन कन्दमूलफलैरपि । एषामभावे कुर्वीत श्रद्धया च जलेन च । तथा—ब्राह्मणान्न परीक्षेत तीर्थे कालं न चिन्तयेत् । प्राप्ततीर्थो यदा विद्वांस्तदा श्राद्धं समाचरेत् । आवाहनं न तीर्थे स्यादर्घदानं न वा भवेत् । आहूताः पितरस्तीर्थे कृतार्थाः सन्ति वै द्विजाः । तथा—आवाहनं न दिग्बन्धो न दोषो दृष्टिसंभवः । सकारुण्यं च कर्तव्यं तीर्थश्राद्धं विचक्षणैः । भविष्येऽपि—देवाश्च पितरो यस्माद्गङ्गायां तु सदा स्थिताः । आवाहनं विसृष्टिश्च तत्र तेषां न विद्यते । सकारुण्यमित्यनेन पितृ-व्यभ्रात्रादीनां पुत्रिणामपि तीर्थे श्राद्धं यथोपदेशं कर्तव्यमित्यर्थः । कार्ष्णाजिनिः—मौञ्जीबन्धा-द्विवाहाच्च वर्षार्धं वर्षमेव वा । पिण्डान्सपिण्डा नोदद्युः सपिण्डीकरणादृते । इति । सपिण्डी-करणं षोडशश्राद्धोपलक्षणम् । संग्रहकारोऽपि—विवाहोपनयादूर्ध्वं वर्षं वर्षार्धमेव वा । न कुर्या-त्पिण्डनिर्वापं न दद्यात्कारणादि(?)वै । अत्रापवादस्तेनैवोक्तः । महालये गयाश्राद्धे मातापित्रो-र्मृतेऽहनि । कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सुतः । इति । क्षयाहैकोद्दिष्टं तूक्तं सूत्र-कृता नावाहनमित्यादि । आमश्राद्धं तु आचारतिलके । आमश्राद्धमनङ्गुष्ठमग्नौकरणवर्जितम् । तृप्तप्रश्नविहीनं तु कर्तव्यं मानवैर्ध्रुवम् । धर्मप्रदीपे—आवाहनाग्नौकरणं विकिरं पात्रपूरणम् । तृप्तप्रश्नं न कुर्वीत आमहेम्नोः कदाचन । इति । एतद्विषयमुपरिष्टाद्वक्ष्यामः । अपिण्डके तु अग्नौकरणमर्घं च आवाहनावनेजनम् । पिण्डश्राद्धेषु कुर्वीत पिण्डहीने निवर्तते । पिण्डनिर्वा-परहितं यत्र श्राद्धं विधीयते । स्वधावाचनलोपोऽस्ति विकिरस्तु न लुप्यते । अक्षय्यदक्षिणास्वस्ति-सौमनस्यं यथास्थितम् । धर्मप्रदीपेऽपि—आवाहनं तथाऽर्घं वै अग्नौकरणमेव च । अक्षय्यापोस्य विकरं पिण्डहीने विवर्जयेदिति । इदं चाक्षय्यवर्जनमशक्तया पिण्डाकरणविषयम् । शक्तौ तु यथा-स्थिति विहितत्वात् । स्मृतिसंग्रहे—अङ्गानि पितृयज्ञस्य यदा कर्तुं न शक्नुयात् । संकल्पश्राद्धमे-वासौ कुर्यादर्घादिवर्जितम् । आपस्तम्बोऽपि—संकल्पश्राद्धे अर्घावाहनाग्नौकरणपिण्डस्वधावाचनानि वर्जयेदिति । व्याध्यादिना यथावद्विस्तृतं पार्वणं कर्तुमशक्तः संकल्पश्राद्धमेव कुर्यादित्यर्थः । विकि-रव्यवस्था च तदभाव एवोक्ता । हेमश्राद्धे तु बौधायनः—संक्रमेऽन्नद्विजाभावे प्रवासे पुत्रजन्मनि । हेम-श्राद्धं संग्रहे(?)च द्विजः शूद्रः समाचरेत् । आर्तवेऽन्नद्विजाभावे ग्रहणे देशविप्लवे । आमश्राद्धं द्विजः कुर्याच्छूद्रः कुर्यात्सदैव हीति । गालवः—तीर्थेऽनग्नावापदि च देशभ्रंशे रजस्यपि । हेमश्राद्धं द्विजः कुर्याच्छूद्रः कुर्यात्सदैव हीति । अन्यत्स्मृतिभ्यो ज्ञेयम् । अत्रैतच्चिन्त्यते—किमामश्राद्धेऽग्नौकरणं स्यादुत नेति । अत्रैक आहुः—सिद्धान्नेन विधिर्यस्मादामश्राद्धेऽप्यसौ विधिः । आवाहनादि सर्वं स्यात्पि-ण्डदानं च भारत । दद्यादद्यद्द्विजातिभ्यः शृतं वा यदि वाऽशृतम् । तेनाग्नौकरणं कुर्यात्पिण्डांस्ते-नैव निर्वपेदित्यतिदेशेनाग्नौकरणं भवतीति । तदयुक्तम्—अतिदेशस्य ब्राह्मणविषयत्वात् । तथा च कल्पलतायां—आमश्राद्धं यदा कुर्याद्विधिज्ञः श्राद्धदस्तदा । हस्तेऽग्नौकरणं कुर्याद्ब्राह्मणस्तु विशेषतः । इति । अतश्चामश्राद्धेऽग्नौकरणनिषेधः शूद्रविषयो भवितुमर्हति । किं च भविष्यत्पुराणे धर्मसं-

वादे—धर्मज्ञा यदि शूद्राः प्रकुर्वते । अग्नौकरणमन्त्रोऽस्य नमस्कारो विधीयते इत्यग्नौकरणनिषेधान्नमस्कारविधानात् । अथवा विहितप्रतिषिद्धत्वात् सपिण्डकापिण्डकविषयौ विधिनिषेधौ । प्रकृतमधुनोच्यते । अत्रैक उद्दिष्टो यत्र तदिति व्युत्पत्तेर्नवं नवमिश्रं पुराणं चेति त्रिधैकोद्दिष्टम् । तत्रैकोद्दिष्टमित्यनेन किमुच्यते । तथा चाङ्गिराः—प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमे तथा । नवमैकादशे चैव नवश्राद्धानि षट् तथा । इति। आश्वलायनगृह्यपरिशिष्टम्—नवश्राद्धं दशाहानि नवमिश्रं तुषड्ऋतु । अतः परं पुराणं वै त्रिविधं श्राद्धमुच्यते । हारीतोऽपि प्रायश्चित्तेष्वाह्—चान्द्रायणं नवश्राद्धे प्राजापत्यं तु मासिके । एकाहस्तु पुराणेषु प्रायश्चित्तं विधीयत इति । तत्रैक आहुः—क्षयाहे पार्वणस्यैवोक्तत्वात्प्रेतैकोद्दिष्टमेवैतदिति । तदयुक्तम् । स्वदितमिति तृप्तप्रश्न इत्याद्यङ्गस्य प्रेतश्राद्धेषु निरस्तत्वात् । न चैतन्मासिकादि नवश्राद्धं भवितुमर्हति । पित्रादिशब्दप्रयोगाभावात् । तस्मात्पुराणैकोद्दिष्टमेवैतदिति युक्तम् । अतश्चावाहनादिनिषेधविशेषवर्जं सर्वाङ्गमत्र भवतीति विशेषविधिनिषेधयोः शेषाभ्यनुज्ञाफलकत्वादिति न्यायात् । 'एकोऽर्घ एकं पवित्रमेकः पिण्डः' कर्तव्य इति यथालिङ्गं वाक्यशेषः । पवित्रविशेषणत्वाल्लिङ्गव्यत्ययः । पूजाविधिर्वा प्रकृतितस्त्वनेकप्रसक्तौ विकृतित्वात्प्रतिषेधः । तदुक्तम्—प्रसज्यमानः प्रतिषिध्यत इति । भट्टोऽपि—इष्टा सर्वत्र शास्त्रेषु निवृत्तिः प्राप्तिपूर्विका । तदभाव(?)विशेषोऽत्र नहि दृष्टो द्वयोरपि । इति । पवित्रं प्रादेशमात्रं कुशैकदलम् । अत्र केचित्प्रत्यवतिष्ठन्ते—दर्भैः पवित्रमित्युक्तमिति वचनात् । त्रिशाखस्तु भवेद्दर्भश्चतुःशाखः कुशः स्मृतः । पञ्चशाखस्तु निधिपः षट्शाखं तु पवित्रकमिति । पारिभाषिकत्वाच्च पवित्रं षट्शाखैककुशमिति । तदयुक्तम्—पार्वणेषु च सर्वेषु पवित्रं द्विदलं स्मृतम् । एकोद्दिष्टे तु तत्प्रोक्तं पवित्रं द्विदलं नृप ।एकोद्दिष्टे शलाकैकेति भगवतश्चतुर्विंशतिमतवचनाभ्यामुल्लेखोपपत्तेः । एकशब्दपौनरुक्त्यं विस्पष्टार्थम् । ननु चैकोद्दिष्टमित्यनेनैव पिण्डैकोपलब्धेः एकग्रहणं किमर्थम् । उच्यते—पिण्डविच्छित्तिनिषेधार्थमष्टाङ्गपिण्डविध्यर्थं चेत्यदोषः । तदुक्तम्—तिथिच्छेदेन कर्तव्यं विनाश्राद्धं यदृच्छया । पिण्डश्राद्धं च दातव्यं विच्छिन्नं नैव कारयेत् । निषिद्धदिनेऽपीति शेषः । श्राद्धशब्देन ब्राह्मणभोजनम्, पिण्डशब्दस्य पृथगुपादानात् । चकारोऽग्नौकरणार्थः । तेन सति संभवे ब्राह्मणभोजनं पिण्डदानं च क्षयाहे कार्यम् । भोजनाभावे तु पिण्डमात्रमपि कार्यमिति विच्छित्तिशब्दार्थ इति माधवीये । आहिताग्नेः पित्रर्चनं पिण्डैरेव ब्राह्मणानपि वा भोजयेदिति निगमस्मृतौ वाशब्दस्य संभवासंभवेन व्यवस्थितत्वात् । एवं च सत्याब्दिकमन्नेनैव कर्तव्यं नामान्नेनेत्युक्तं भवति । तथा च मरीचिः—अनग्निकः प्रवासी च यस्य भार्या रजस्वला । आमश्राद्धं प्रकुर्वीत न तत्कुर्यान्मृताहनीति । लौगाक्षिरपि—पुष्पवत्स्वपि दारेषु विदेशस्थोऽप्यनग्निकः । अन्नेनैवाब्दिकं कुर्याद्धेम्ना वामेन वा क्वचित् । क्वचिदिति दर्शे रविग्रहे क्षयाहे सतीत्यर्थः । तथा च गोभिलः—दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितम् । अन्नेनासंभवे हेम्ना कुर्यादामेन वा सुतः । इति । अत्राप्यसंभव इति विशेषणात्संभवे अन्नेनैवेत्युक्तम् । श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् । अमावास्यादिनियतं माससंवत्सरादृत । इति हारीतोक्तेः । अष्टाङ्गत्वमाह वृद्धयाज्ञवल्क्यः—मधुवातं गव्यघृतं पानीयं पायसं तथा । कुतपतिलसंयुक्तं ज्योतिश्चैवाष्टमी तथा । कपित्थश्रीफलाकारः पिण्डोऽष्टाङ्गः स उच्यते । तिलैरुत्पाद्यते मूर्धा क्षीरैर्बाहू घृतेन हृत् । मधुना चैव नासा च तोयैर्हस्तौ तथा परौ । ज्योतिश्चैवारुजीवः(?)स्यात्पिण्डनिर्वपणं स्मृतम् । यत्तु—मधु चाज्यं जलं चार्घ्यं पुष्पधूपविलेपनम् । बलिं दत्त्वा तु विधिवत्पिण्डोऽष्टाङ्गो भवेद्यथेति ब्राह्मवचनं तत्पार्वणविषयम् । पूर्ववचनस्य क्षयाहप्रकरणोक्तत्वात् । नावाहनाग्नौकरणं नात्र विश्वेदेवाः। अत्रैकोद्दिष्टे विकृतित्वादावाहनाद्यङ्गं न भवतीत्यर्थः । नन्वयं विशेषनिषेधार्थम् । अत्राह पद्धतिकृद्यज्ञदत्तः—एकोद्दिष्टे स्वधावाचनं न भवतीति । तन्न । पिण्ड-

रहितश्राद्धे तन्निषेधात् । तदुक्तं—स्वधावाचनलोपोऽस्तीति प्राक् । अतश्चास्मत्पित्रे अमुकशर्मणे अमुकगोत्राय स्वधोच्यतामिति प्रयोगः । अत्रैक आहुः—प्रथमपात्राभावात्संस्रवबहुत्वाभावाच्च पितृभ्यः स्थानमसीति मन्त्रानुपयुक्तत्वाच्च नात्र तत्पात्रमिति । तदयुक्तम् । एकोद्दिष्टे अस्य विहितत्वात् । यत्तु कर्कोपाध्यायैर्न पात्रन्युब्जीकरणमित्युक्तं तदन्यथैवोपपाद्यते । पात्रं न्युब्जं न कर्तव्यं किन्तूत्तानमेव निधेयमिति । अस्ति च पात्राभावन्युब्जत्वाभावयोर्महान् भेदः । अतो अर्थानवबोधात्तदयुक्तमित्युक्तम् । तथा च स्कन्दसंवादे—एकोद्दिष्टे न कुर्वीत स्कन्द पात्रमधोमुखम् । नोत्थापयेच्च तत्पात्रं यावच्छ्राद्धविसर्जनम् । अन्तरोत्थापिते पात्रे श्राद्धं संपद्यते तथेति । तस्मात्स्वधावाचनीयानास्तीर्य स्वधावाचनं कर्तव्यमिति सूक्तम् । स्वदितमिति तृप्तप्रश्न उपतिष्ठतामित्यक्षय्यस्थाने अभिरम्यतामिति विसर्गः । अत्र नेत्यनुवृत्तौ मण्डूकप्लुतिन्यायेन पूर्वसूत्रोक्तो विधिरेवात्रानुपज्यते । तेन तृप्ताः स्थेति प्रश्ने स्वदितमक्षय्यमस्त्वित्यत्रोपतिष्ठतां वाजे वाजे वतेत्यत्राभिरम्यतामिति विसर्गो भवतीति वाक्यशेषः । अतश्चैतत्पुराणैकोद्दिष्टमित्युक्तं प्रेतैकोद्दिष्टे तदभावात् । अथ क्षयाहे किं पार्वणं कार्यमेकोद्दिष्टं वेति संदिह्यते । उभयथा वचनदर्शनात् । तथा हि जातूकर्ण्यः—पितुः पितृगणस्थस्य कुर्यात्पार्वणवत्सुतः । सर्वदा दर्शवच्छ्राद्धं मातापित्रोः क्षयेऽहनीति । शातातपः—प्रदानं यत्र यत्रैषा सपिण्डीकरणात्परम् । तत्र पार्वणवच्छ्राद्धं ज्ञेयमभ्युदयादृते । तथा—अर्वाक् संवत्सराद्वृद्धौ पूर्णे संवत्सरेऽपि वा । ये सपिण्डीकृताः प्रेता न तेषां तु पृथक् क्रियेति । एकोद्दिष्टे तु यमः—सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः । मातापित्रोः पृथक् कार्यमेकोद्दिष्टं मृतेऽहनि । व्यासोऽपि—एकोद्दिष्टं परित्यज्य पार्वणं कुरुते नरः । अकृतं तद्विजानीयाद्भवेच्च पितृघातकः । एकोद्दिष्टं परित्यज्य पार्वणं यः समाचरेत् । सदैव पितृहा स स्यान्मातृभ्रातृविनाशकः । मृताहे पार्वणं कुर्वन्नधोऽधो याति मानवः । संपृक्तेष्वाकुलीभावः प्रेतेषु तु ततो भवेदिति । अत्र विरोधे ह्येक आहुः—द्वादशपुत्रेष्वौरसक्षेत्रजपुत्रौ पार्वणं कुर्यातामन्ये दशैकोद्दिष्टमिति । तथा च जातूकर्ण्यः—प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ । कुर्यातामितरं कुर्युरेकोद्दिष्टं सुता दश । औरसः क्षेत्रजः पुत्रो विधिना पार्वणेन तु । प्रत्यब्दमितरं कुर्युरेकोद्दिष्टं सुता दश ॥ इति विशेषोल्लेखादिति । तदयुक्तम्—प्रत्यब्दमित्यनेन क्षयाहव्यतिरिक्ताक्षयतृतीयादिविषयत्वावगतेः । एकोद्दिष्टं तु कर्तव्यमौरसेन मृतेऽहनि । सपिण्डीकरणादूर्ध्वं मातापित्रोर्न पार्वणमिति पैठीनसिवचनविरोधाच्च । एवं च सति मृताहे पार्वणैकोद्दिष्टयोरुभयोरपि पक्षप्राप्तत्वात्—अमायां वा क्षयो यस्य प्रेतपक्षेऽथवा भवेत् । सपिण्डीकरणादूर्ध्वं तस्योक्तः पार्वणो विधिरिति शङ्खवचनेन दर्शप्रेतपक्षमृतयोरेव पार्वणस्य नियतत्वात्तत्र मृतयोरेव पार्वणमन्यत्र मृतयोरेकोद्दिष्टमिति विज्ञानेश्वरप्रभृतयः । अन्ये तु द्वादशविधपुत्रेष्वौरसक्षेत्रजपुत्रौ विशेषस्तत्रापि साग्नित्वं तत्रापि दर्शापरपक्षमृतिरित्येवं विशेषोपसंहारपरंपरया पुरोडाशाग्नेयवद्विशेषोपसंहारपर्यवसानाद्दर्शापरपक्षमृतावपि साग्न्यौरसक्षेत्रजावेव पार्वणं कुर्यातां न निरग्निपुत्रा इति वर्णयन्ति । तदेतद्विचारणीयम् । किं नियमप्रतिपादनं न्याय्यमुत विशेषोपसंहार इति । तत्र यदि नियमप्रतिपादनं न्याय्यमित्युच्यते तदा दर्शापरपक्षमृतिं विनाऽपि साग्नेः पार्वणविधानमनर्थकं स्यात् । यथाह सुमन्तुः—प्रत्यब्दमितरे कुर्युरेकोद्दिष्टं सुता दश । अनग्निमानौरसश्च कुर्यात्साग्निस्तु पार्वणम् । पुलस्त्योऽपि—अनग्नेरौरसस्योक्तमेकोद्दिष्टं मृतेऽहनि । प्रत्यब्दं पार्वणं साग्नेरन्येषां तु न पार्वणमिति । अथ विशेषोपसंहारो न्याय्यस्तर्हि साग्नेरेव पार्वणस्य विहितत्वात् । दर्शापरपक्षमृतावपि तस्यैव पार्वणं निरग्नेर्नातोऽमायां वा क्षयो यस्येति वाक्यं साग्निविषयमेवोपसंहरणीयमिति विशेषोपसंहार एव युक्तः प्रतिभाति । तथा च श्राद्धकल्पलतायां—इन्दुक्षये प्रेतपक्षे विपत्तिश्चेद्द्विजन्मनः । साग्निकः पार्वणं कुर्याद्देकोद्दिष्टं निरग्निकः । इति । तस्मादौरसस्यैव कलौ प्रचुरत्वात्स एव साग्निर्दर्शापरपक्षमृतौ पार्वणं

कुर्यादन्यथैकोद्दिष्टमेवेति राद्धान्तः । तथा च मत्स्यपुराणम्—प्रदानं यत्र तत्रैषां सपिण्डीकरणात्परम् । पार्वणेन विधानेन देयमग्निमता सदा । वृद्धयाज्ञवल्क्योऽपि—वैतानाग्निगृहे येषां मातापित्रोः क्षयेऽहनि । न तेषामधिकारः स्यादेकोद्दिष्टे कदाचन । सपिण्डीकरणादूर्ध्वमग्नियुक्तस्य पार्वणम् । अनग्नेस्तु क्रिया नान्या एकोद्दिष्टमृते क्वचित् । एकोद्दिष्टं विधिस्तेषां मन्त्रे वाजसनेयिनाम् । येषां माध्यन्दिनी शाखा ये द्विजा अग्निवर्जिताः । इति । नन्वे (वं) तर्हि बह्वग्नयस्तु ये विप्रा ये चै(का)ग्नय एव वा । तेषां सपिण्डनादूर्ध्वमेकोद्दिष्टं न पार्वणमिति स्मृत्यन्तरवचनं विरुध्येत । मैवम् । अस्य वचनस्यान्यथार्थोपपत्तेः । तथा हि ये पितरः साग्नयो मृता भवन्ति तेषां निरग्निः सपिण्डनादूर्ध्वमेकोद्दिष्टं कुर्यात्तथा निरग्नयः पितरो मृताः साग्निपुत्रस्तदा सपिण्डनादूर्ध्वं मृताहे पार्वणं कुर्यादिति । तथा च मरीचिः—साग्निकौ तु पितापुत्रावमायां स्यात्पिता मृतः । पार्वणो हि विधिस्तस्य प्रतिसंवत्सरं भवेत् । तथा—साग्निकस्य पितुः पुत्रोऽमावास्यायां मृतस्य च । पार्वणो हि विधिस्तस्य प्रतिसंवत्सरं भवेत् । ततः साग्निकः ततः न कश्चिद्विरोधः । अभिरम्यतामिति कर्त्रोक्तेऽभिरताः स्मइति श्राद्धिनः प्रतिवदेयुरित्यर्थः । अत्रैक आहुः—एक एव द्विजो भोज्यः पिण्डोऽप्येको विधीयत इति वचनादेक एव श्राद्धथेकोद्दिष्ट इति । तदयुक्तम् । तस्य वचनस्य प्रेतैकोद्दिष्टविषयत्वात् । अभिरम्यतामिति वदेद्ब्रूयुस्तेऽभिरताः स्म हेति याज्ञवल्क्येन बहुत्वाभिधानात् । इतर इति सूत्रोपदेशाच्च । अत्रैतच्चिन्त्यते—किं क्षयाहश्राद्धं नित्यं कर्म कृत्वा कर्तव्यमुताकृत्वेति । तत्र नित्यं कृत्वैव श्राद्धमाचरन्तीति सदाचारः । वृद्धयाज्ञवल्क्येन तु श्राद्धानन्तरं नित्यं कर्म कुर्यादिति उक्तम् । तथा च—क्षयेऽहनि समासाद्य स स्नात्वा विधिपूर्वकम् । स्नानं सन्ध्यां प्रकुर्वीत नित्यकर्म न कारयेत् । नित्यं नैमित्तिकं काम्यं त्रिविधं धर्मलक्षणम् । निमित्तं तु व्यतिक्रम्य नित्यं कर्म न कारयेत् ॥ जपं होमं तथा दानं तर्पणं देवतार्चनम् । क्षयेऽहनि समासाद्य न कुर्यात्पूर्वमेव हि । क्षयाहं तु समासाद्य न कुर्यात् प्राक् तर्पणम् । पितृघाती स विज्ञेयो वदत्येवं पितामहः । इति तत्सदाचारविरोधाच्चिन्त्यम् । अथवा सामगयजुःशाखिनां पूर्वं नित्यकर्म बह्वृचानां पश्चादिति व्यवस्थैत्यविरोधः । सामगा याजुषाः पूर्वं बह्वृचाश्च तथान्तक इति तेनैवोक्तत्वात् । अथवा एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते । इत्येकोद्दिष्टस्य नैमित्तिकत्वे नित्यान्नैमित्तिकं बलीय इति न्यायादेकोद्दिष्टमेव पूर्वं पश्चान्नित्यं न क्षयाहनिमित्तकपार्वणमपीति व्यवस्था । तथा च वृद्धयाज्ञवल्क्य एव—एकोद्दिष्टनिवृत्ते तु तथा विप्रविसर्जने । नित्यकर्म ततः कुर्यात्तर्पणं देवतार्चनम् । नित्यं नैमित्तिकं चैव द्वावेतौ परमार्थिनौ । नैमित्तिके व्यतीते तु ततो नित्यं समाचरेदिति । विश्वामित्रोऽपि—नैमित्तिकं यदा श्राद्धं पैतृकं कुरुते नरः । तदा नित्यं न कुर्वीत तीर्थश्राद्धं विना क्वचित् । नित्यनैमित्तिके प्राप्ते नित्यं न परिलङ्घयेत् । आदौ नैमित्तिकं कुर्यात्पश्चान्नित्यं समाचरेदिति । अपि च पठन्ति—प्रत्याब्दिकनिवृत्ते तु पश्चान्नित्यं समाचरेत् । अनयोर्भिन्नतन्त्रत्वात्स्थालीपाकाग्निहोत्रवदिति ॥ ४ ॥ ॥ * ॥

इति श्राद्धकाशिकाया सूत्रवृत्तौ एकोद्दिष्टश्राद्धं समाप्तम् ।

ततः संवत्सरे पूर्णे त्रिपक्षे द्वादशाहे वा यदहर्वा वृद्धिरापद्येत चत्वारि पात्राणि सतिलगन्धोदकानि पूरयित्वा त्रीणि पितॄणामेकं प्रेतस्य । प्रेतपात्रं पितृपात्रेष्वासिञ्चति, ये समाना इति द्वाभ्याम् । एतेनैव पिण्डो व्याख्यातः । अत ऊर्ध्वं संवत्सरे संवत्सरे प्रेतायान्नं दद्यात् यस्मिन्नहनि प्रेतः स्यात् ॥ ५ ॥

( कर्कः )—'ततः···प्रेतस्य' संवत्सरे पूर्णे सपिण्डीकरणङ्कर्तव्यम् । पूर्णग्रहणादूर्ध्वं नास्त्येव न प्राक्कर्तव्यम् । आहिताग्निना तु प्रागमावास्यायाः कर्तव्यम् । पिण्डपितृयज्ञाधिकारात् । अधिकारः प्रेतपितृकत्वात्, प्रेतेभ्यो ददातीति वचनात्, पितृप्रभृति ददातीति वचनात्, सपिण्डीकरणं कार्यं पूर्वमेव । असपिण्डीकृतानां दानाभावाच्च । कथमभाव इति चेत् । सपिण्डीकरणमित्यन्वर्थसंज्ञयैवायमर्थोऽवगम्यते । तस्मात्प्रागपि वत्सरात्सपिण्डीकरणमस्त्येव । तथाचान्यार्थदर्शनम्—अर्वाक् सपिण्डीकरणं यस्य संवत्सराद्भवेत् । तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजः । इति अन्नोदककुम्भविधिपरे वाक्ये अर्वाक् संवत्सरात्सपिण्डीकरणं दर्शयति । तथा च गृह्यकारः पिण्ड(प्र)करणे—प्रथमः पितृणां प्रेतः स्यात्पुत्रवांश्चेदिति । उक्तन्यायेनानाहिताग्निनाऽपि चाभ्युदयिकं कुर्वता इदं पूर्वमेव कर्तव्यमिति । तच्चैतत् पुत्रवतः स्यात्, पिण्डकरणे प्रथमः पितृणां प्रेतः स्यात्पुत्रवांश्चेदिति वचनात् । अपुत्रस्य प्रेतस्य पितृगणेन सह समानपिण्डतैव नोपपद्यते । तथाच स्मरन्ति—वर्षे वर्षे तु कर्तव्या बान्धवैरुदकक्रिया । अदैवं भोजयेच्छ्राद्धं पिण्डमेकन्तु निर्वपेत् । इत्यपुत्रस्य प्रेतस्य प्रतिसंवत्सरं बान्धवैः कर्तव्यमेकोद्दिष्टं स्मरन्ति । अतोऽपि न सपिण्डीकरणमपुत्रस्य । चत्वारि पात्राणि पूरयित्वेति चतुर्ग्रहणात् त्रिभ्य एव दानं न पञ्चभ्योऽपि । तत्र च त्रीणि पितृणामेकं प्रेतस्य भवति । 'प्रेतपात्रं··द्वाभ्याम्' येसमाना इति मन्त्रद्वयेन प्रेतपात्रात् पितृपात्रेषु उदकमासिञ्चतीति । 'एतेनैव पिण्डो व्याख्यातः' पिण्डेऽयमेव न्याय इति । 'अत···स्यात्' निगदमेतत् ॥ ५ ॥

( गदाधरः ) सपिण्डीकरणमाह 'ततः···प्रेतस्य' संवत्सरे पूर्णे सपिण्डीकरणङ्कार्यम् । अथवा त्रिपक्षे द्वादशाहे वा वृद्धिप्राप्तौ वा कुर्यात्, इति चत्वारः पक्षा दर्शितास्तत्रेयं व्यवस्था—द्वादशाहे पितुः सपिण्डीकरणमग्निमता कार्यम्, सपिण्डीकरणं विना पिण्डपितृयज्ञस्यासिद्धिः; साग्निकस्तु यदा कर्ता प्रेतो वाऽप्यग्निमान्भवेत् । द्वादशाहे तदा कार्यं सपिण्डीकरणं पितुरिति वचनात् । निरग्निकस्तु त्रिपक्षे वृद्धिप्राप्तौ संवत्सरे वा कुर्यात् । यदा प्राक्संवत्सरात्सपिण्डीकरणं तदा षोडश श्राद्धानि कृत्वा सपिण्डीकरणङ्कार्यम् उत सपिण्डीकरणं कृत्वा स्वकाले तानीति संशयः । उभयथा वचनदर्शनात् । श्राद्धानि षोडशादत्त्वा नतु कुर्यात्सपिण्डनम् । श्राद्धानि षोडशापाद्य विदधीत सपिण्डनमिति । षोडश श्राद्धानि च—द्वादशाहे त्रिपक्षे च षण्मासे मासि चाब्दिके । श्राद्धानि षोडशैतानि संस्मृतानि मनीषिभिरिति दर्शितानि । तथा, यस्यापि वत्सरादर्वाक् सपिण्डीकरणं भवेत् । मासिकञ्चोदकुम्भञ्च देयं तस्यापि वत्सरमिति । तत्र सपिण्डीकरणं कृत्वा स्वकाले तानि कर्तव्यानीति प्रथमः कल्पः । अप्राप्तकालत्वेन प्रागनधिकारात् । यदपि वचनं षोडशश्राद्धानि कृत्वैव सपिण्डीकरणं संवत्सरात्प्रागपि कर्तव्यमिति सोऽयमापत्कल्पः । यदा त्वापत्कल्पेन प्राक् स चेत्सपिण्डीकरणात् प्रेतश्राद्धानि करोति तदैकोद्दिष्टविधानेन कुर्यात् । यदातु मुख्यकल्पेन स्वकाल एव तानि करोति तदाऽऽब्दिकं यो यथा करोति पार्वणमेकोद्दिष्टं वा तथा मासिकानि कुर्यात् । सपिण्डीकरणादर्वाक् कुर्वञ्छ्राद्धानि षोडश । एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु । सपिण्डीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः । प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि, इति स्मरणात् । चत्वारि पात्राणि पूरयित्वेति चतुर्ग्रहणात्त्रिभ्यः प्रेतस्य पितृपितामहप्रपितामहेभ्य एव दानम् । नच पञ्चभ्योऽपि । तत्र च त्रीणि पात्राणि पितृणाम् एकं प्रेतस्य भवति । 'प्रेतपात्रं पितृपात्रेष्वासिञ्चति ये समाना इति द्वाभ्याम्' प्रेतसंबन्धि पात्रं गृहीत्वा पितृपितामहप्रपितामहपात्रेषु ये समाना इति द्वाभ्यां मन्त्राभ्यामासिञ्चति प्रत्यासेकं मन्त्रौ भवतः । आसेकप्रकारो ब्रह्मपुराणे—चतुर्थ्यश्चार्घपात्रेभ्य एकं वामेन पाणिना । गृहीत्वा दक्षिणेनैव पाणिना सतिलोदकम् । संसृजेच्च तथाऽन्येषु येसमाना इति स्मरन् । प्रेतं प्रेतस्य हस्तेषु चतुर्भागजलं क्षिपेत् । ततः पिताम्हादेस्तु तन्मन्त्रैश्च पृथक् पृथक् इति । वाजसने-

यिभिस्तु पूर्वं पितृभ्यो देयं पश्चात्प्रेताय दानम् । 'एतेनैव पिण्डो व्याख्यातः' यथा प्रेतार्घपात्रस्थं जलं ये समाना इति द्वाभ्यां मन्त्राभ्यां पात्रत्रये स्थापितम् एवमेव प्रेतपिण्डमपि त्रेधा कृत्वा पिण्डत्रितये निदध्यादित्यर्थः । तत्प्रकारश्च ब्रह्मपुराणे । दत्वा पिण्डमथाष्टाङ्गं ध्यात्वा तच्च सुभास्वरम् । सुवर्णरौप्यदर्भैस्तु तस्मिन्पिण्डं ततस्त्रिधा । कृत्वा पितामहादिभ्यः पितृभ्यः प्रेतमर्पयेत् । तथा, सुवर्तुलांस्ततस्तांस्तु पिण्डान्कृत्वा प्रपूजयेत् । अर्घैः पुष्पैस्तथा धूपैर्दीपैर्माल्यानुलेपनैरिति । एतच्च प्रेतश्राद्धसहितं सपिण्डीकरणं संविभक्तधनेषु बहुषु भ्रातृषु सत्स्वपि एकेनैव कृतेनालं न सर्वैः कर्तव्यम् । नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश । एकेनैव तु कार्याणि संविभक्तधनेष्वपीति स्मरणात् । मातुः पिण्डदानादौ गोत्रे विप्रतिपत्तिः । भर्तृगोत्रेण पितृगोत्रेण वा देयम् । उभयथा वचनदर्शनात् । मातुः सपिण्डीकरणे विरुद्धानि वाक्यानि दृश्यन्ते । तत्रापि पितामह्यादिभिः सह सपिण्डीकरणं स्मृतमिति । तथा भर्त्राऽपि भार्यायाः स्वमात्रादिभिः सह सपिण्डीकरणङ्कर्तव्यमिति । पैठीनसिराह— अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डताम् । श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेदिति । पत्या सह सपिण्डीकरणं यम आह—पत्या चैकेन कर्तव्यं सपिण्डीकरणं स्त्रियाः । सा मृतापि हि तेनैक्यं गता मन्त्राहुतिव्रतैरिति । उशनसा तु मातामहेन सह सपिण्डीकरणमुक्तम् । पितुः पितामहे यद्वत्पूर्णे संवत्सरे सुतैः । मातुर्मातामहे तद्वदेपा कार्या सपिण्डतेति । एवंविधेषु वचनेषु सत्सु अपुत्रायां भार्यायां प्रमीतायां भर्ता स्वमात्रैव सापिण्ड्यं कुर्यात् । अत्राचारादनुष्ठानम् । 'अत ऊर्ध्वं प्रेतायान्नं दद्याद्यस्मिन्नहनि प्रेतः स्यात्' अतः सपिण्डीकरणादूर्द्ध्वम्प्रेतायान्नं दद्याद्यस्मिन्नहनि यस्यान्तिथौ प्रेतः स्यादित्यर्थः । यद्यप्यत्र प्रेतायेत्येकवचननिर्देशस्तथाऽपि स्मृत्यन्तरात्त्रिभ्यो देयम् । मासश्चात्र चान्द्रो ग्राह्यः । यथा परमेष्ठी आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते । विवाहादौ स्मृतः सौरो यज्ञादौ सावनः स्मृत इति ॥ इति नवकण्डिकाभाष्ये पञ्चमी कण्डिका ॥ ५ ॥

अथ प्रयोगः । द्वादशाहे विधिवत्स्नात्वा विष्णुं सम्पूज्य ऊनमासिकमेकोद्दिष्टं कुर्यात् । ततः स्नानम् प्रेतोद्देशेन सान्नानां सजलानां द्वादशघटानां दानम् । एका वर्द्धनी पक्वान्नजलपूरिता विष्णवे देया । एको धर्मराजाय घटो देयः । एकश्चित्रगुप्ताय । ततो मासिकानि चतुर्दश श्राद्धान्येकतन्त्रेण । तत्र क्रमः । द्वितीयमासे त्रिपक्षे तृतीयमासे चतुर्थमासे पञ्चममासे षष्ठे ऊनषष्ठे सप्तमे अष्टमे नवमे दशमे एकादशे द्वादशे ऊनाब्दे चेति प्रेतैकोद्दिष्टवत्कार्याणि । ततः स्नात्वा सपिण्डीकरणं कुर्यात् । तत्र पूर्वं वैश्वदेवश्राद्धम् । देवपादप्रक्षालनम् । ततः पार्वणं प्रेतस्य पितृपितामहप्रपितामहानाम् । तदर्थं त्रयाणां पादप्रक्षालनम् । तत्र सर्वम्पार्वणे पार्वणवत् एकोद्दिष्टे एकोद्दिष्टवत्, अत्राद्य मासे पक्षे तिथौ अमुकगोत्रस्यामुकप्रेतस्य वसुरुद्रादित्यलोकप्राप्त्यर्थम्प्रेतत्वनिवृत्त्यर्थं च अमुकगोत्रस्यामुकप्रेतस्य अमुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणां वैश्वदेवपूर्वकं सैकोद्दिष्टं पार्वणविधिना सपिण्डीकरणश्राद्धं युष्मदनुज्ञयाऽहङ्करिष्ये । आसनम् । आवाहनम् । विश्वेषां देवानां पितॄणां प्रेतस्य चार्घपात्राणि पूरयित्वाऽभ्यर्च्य विश्वेभ्योदेवेभ्योऽर्घं दत्वा ततः प्रेताय जलम्, प्रेतपात्रे जलचतुर्थभागेनार्घन्दत्वाऽवशिष्टमर्घपात्रस्थितञ्जलं पित्रादिपात्रेषु विभज्य तृतीयांशन्निनयेत् । तत्र प्रेतपात्रं पितृपात्रेषु संयोजयिष्य इति पृष्ट्वा संयोजयेत्यनुज्ञातोऽर्घं संयोजयेत् । एवं पिण्डयोजनेऽप्यनुज्ञाप्रार्थनम् । तत्रेदं येसमाना इतिमन्त्रद्वयं पठित्वा अमुकगोत्रस्यामुकप्रेतस्यार्घः अमुकगोत्रस्य प्रेतस्य पितुरमुकशर्मणोऽर्घेण सह संयुज्यताम्, वसुलोकप्राप्तिरस्त्विति वदेत् । एवं पितामहपात्रे प्रपितामहपात्रे च । ततस्तेभ्योऽर्घन्दद्यात् । पार्वणे नियमेन विकिरः । पिण्डदाने पूर्वम्पार्वणसम्बन्धिनः पिण्डान्निरुप्य पश्चात्प्रेतपिण्डं त्रेधा विभज्य तत आद्यं भागमादाय ये समाना इति मन्त्रद्वयं पठित्वा अमुकगोत्रस्यामुकप्रेतस्य पिण्डः अमुकगोत्रस्य प्रेतस्य पितुरमुकशर्मणः पिण्डेन सह संयुज्यतामित्युक्त्वा प्रथमं

पिण्डं संयोज्य प्रथमम्पिण्डं वर्तुलं कुर्यात् । ततो वसुलोकप्राप्तिरस्त्विति वदेत् । एवमितराभ्यां पिण्डाभ्यां संयोजनम् । अनन्तरं रुद्रलोकप्राप्तिरस्तु, आदित्यलोकप्राप्तिरस्तु, इति यथाक्रमं वदेत् । अत ऊर्द्ध्वमत्र पितर इति जपादि । पूजनानन्तरं पिण्डानभिमृश्येदं वदेत् । एष वोऽनुगतः प्रेतः पितरस्तं ददामि वः । शिवमस्त्विति शेषाणां जायतांचिरजीवितम् । समानीव आकूतिः समाना हृदयानि वः । समानमस्तु वो मनो यथा वः सुसहासती । अत ऊर्ध्वं प्रेतशब्दो नोच्चार्योऽक्षय्यादिषु । श्राद्धं समाप्य मोक्षधेनुसङ्कल्पः ॥ ॥ ॥ ※ ॥ ॥ ※ ॥

इतिनवकण्डिकागदाधरभाष्ये सपिंडीकरणप्रयोग. ॥

( श्राद्धका० )—एवं पार्वणैकोद्दिष्टमुपदिश्येदानीं सपिण्डीकरणमुपक्रमते—'ततः संवत्सरे पूर्णे त्रिपक्षे द्वादशाहे वा यदहर्वा वृद्धिरापद्येत' ततःशब्दो हेतौ, यतः सपिण्डीकरणमुभयात्मकं तत उच्यत इत्यर्थः । अथवा तत इति दशाहात्परतः एकादशेऽहनीत्यर्थः । पार्वणैकोद्दिष्टानन्तरोपन्यासे त्वर्थस्य लब्धत्वात् (?) । एतच्च निरग्नौ प्रेते एकादशाहे दर्शसंभवे साग्निकर्तृविषयम् । एकादशाहे द्वादशाहे वेति बौधायनेन न चानग्नौ पितरि पुत्रस्य साग्नित्वाधिकाराभावादेव तद्व्याख्यानमयुक्तमिति वाच्यम् । भार्यामरणपक्षे वा देशान्तरगतेऽपि वा । अधिकारी भवेत्पुत्रो महापातकिनोऽपि वेति शङ्खेनाधिकारस्य प्रतिपादितत्वात् । तत्योपादानाच्छ्रौतस्मार्तदर्शानुरोधविषयत्वाच्च । तथा च कार्ष्णाजिनिः—सपिण्डीकरणं कुर्यात् पूर्वे दर्शेऽग्निमान् सुतः । परतो दश रात्राच्चेत्कुर्वन्तो पर्वणि इति । अग्निमान् साग्निः । दशरात्रात्परत एकादशे द्वादशे वा । एकादशे इत्याशौचान्तोपलक्षणम् । तथा च कात्यायनः—सर्वेषामेव वर्णानामाशौचान्ते सपिण्डनमिति । साग्नीनां द्विजातीनामिति शेषः । अग्न्युपरीव इत्युल्लेखात् । हनि कुर्वीत्यन्वयः । इतरो निरग्निः । वृद्धवसिष्ठः—अथ चेत्स्यादमावास्या मृताहाद्दशमेऽहनि । सपिण्डीकरणं तस्यां कुर्यादेव सुतोऽग्निमान् । मृताहादूर्ध्वदिनमारभ्य दशमेऽहनीत्येकादशाह इत्यर्थः । ननु चैकादशाहे वृषोत्सर्गादिकर्मबाहुल्यात्कथमेतच्छक्यते कर्तुम् । नैष दोषः, पुरुषप्रयत्नसाध्यत्वादस्यार्थस्य शक्यत्वात् । अथवा एकादशाहं निर्वर्त्य सपिण्डीकरणं कृत्वा प्रेतं सपिण्ड्य पिण्डपितृयज्ञानन्तरमुक्तकाले मासिकादीति क्रमः । मासिकानां सपिण्डीकरणादूर्ध्वमावित्वादपि । तथा च—श्राद्धानि षोडशाकृत्वा कुर्यादेव सपिण्डनम् । अपि च वृद्धिविषये रेणुः—कार्यव्यासंगतो वृत्त्यभावाद्वा देशविप्लवात् । राजदैवोपघाताद्वा मासिकान्यकृतानि चेत् । कृत्वा सपिण्डनं वृद्धिकर्मस्यान्मासिकान्यतः । इति । एकत्र निर्णीतः शास्त्रार्थोऽन्यत्राप्यनुतिष्ठत इति न्यायात् । संवत्सरे पूर्णे इति वृद्ध्यभावे स्मार्ताग्नौ प्रेते निरग्निकर्तृविषयम् । वृद्धिविषयस्य वक्ष्यमाणत्वात् । तथा च भविष्यत्पुराणम्—सपिण्डीकरणं कुर्याद्यजमानस्त्वनग्निमान् । अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ । पुलस्त्योऽपि—निरग्निकः सपिण्डत्वं पितुर्मातुश्च धर्मतः । पूर्णे संवत्सरे कुर्याद्वृद्धिर्वा यदहर्भवेत् । रेणुरपि, निरग्निश्चेद्यदा कर्ता प्रेत औपासनाग्निमान् । सपिण्डीकरणं तस्य पूर्णेऽब्दे नात्र संशयः । इति । त्रिपक्ष इत्ययं शब्दः प्रेतकर्त्रोराहिताग्निविषयत्वेन समाहारमध्यपदलोपाभ्यां द्वेधा विवक्षितः । तथा हि—त्रयः पक्षाः समाहृतास्त्रिपक्षं पात्रादित्वात् डीबभावः । अथवा त्रिभिर्दिनैरूनः पक्षो द्वादशाहः । ततश्चाहिताग्नौ प्रेते निरग्निः कर्ता, तृतीयपक्षे प्रेते वा निरग्नौ आहिताग्निः कर्ता द्वादशाहे सपिण्डीकरणं कुर्यादुभयोराहिताग्नित्वे साग्नित्वे वा द्वादशाहः । एवं व्यवस्थेत्यर्थः । अयं विषयो वाशब्दस्य व्यवस्थितत्वात्संभवे सति वर्तते । तथा च सुमन्तुः—प्रेतश्चेदाहिताग्निः स्यात्कर्तानग्निर्यदा भवेत् । सपिण्डीकरणं तस्य कुर्यात्पक्षे तृतीयके । गोभिलः—साग्निकस्तु यदा कर्ता प्रेतश्चानग्निमान् भवेत् । द्वादशाहे तदा कार्यं सपिण्डीकरणं सुतैः । साग्निकः आहिताग्निः । ननु च साग्निकशब्देन

कथमाहिताग्निः सामान्येनाग्निमद्वाचकत्वात् । उच्यते—यथाहिताग्नौ प्रेते निरग्निः कर्ता तथा निरग्नौ प्रेते आहिताग्निः कर्तेति शंकाया विद्यमानत्वात् । यजमानोऽग्निमान्राजन् प्रेतश्चानग्निमान् भवेत् । द्वादशाहे तदा कार्यं सपिण्डीकरणं सुतैः, इति भविष्यत्पुराणवचनेऽग्निमच्छब्दवभूग्निमनुपोशासना(?)-दाहिताग्निवाचकत्वसंभवाच्च । न चानग्निराहिताग्निश्च समानधर्मेत्युचितम् । किं च—सपिण्डी-करणं कुर्याद्यजमानस्त्वनग्निमान् । अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभेति भविष्यवचने स्मार्ताग्नेः प्रेतस्य कालान्तरेण विषयान्तरस्योपलब्धत्वात् । उभयोराग्नित्वे(?)साग्नित्वे वचनं—साग्निकस्तु यदा कर्ता प्रेतो वाऽप्यग्निमान्भवेत् । द्वादशाहे सदा कार्यं सपिण्डीकरणं पितुरिति । अत्रापि वाशब्दः आहिताग्न्यनाहिताग्निविषयत्वेन व्यवस्थितार्थः । ततश्च निरग्नौ प्रेते स्मार्ताग्निः कर्ताऽऽशौचान्ते, स्मार्ताग्नौ प्रेते निरग्निः कर्ता पूर्णेऽब्दे, आहिताग्नौ प्रेते निरग्निः कर्ता त्रिपक्षे, निरग्नौ प्रेते आहिताग्निः कर्ता द्वादशाह एव षोडशश्राद्धानि कृत्वा सपिण्डीकरणं कुर्यादिति मुख्योऽर्थः । तथा च बृहन्मनुः—द्वादशेऽहनि विप्राणामाशौचान्ते तु भूभृताम् । वैश्यानां च त्रिपक्षादावसथस्यात्सपिण्डनमिति । वाशब्दः स्मृत्यन्तरोक्तव्यवस्थायाम् । अतश्च साग्नीनामिति शेषः । अथवाहिताग्न्यनाहिताग्नि-शब्दावेतौ साग्निनिरग्निपरौ । तेन साग्निके कर्तरि वैकादशाहकालयोर्दर्शानुरोधेन नियमः । तथा च संग्रहकारः—द्वादशाहादिकालेषु सपिण्डीकरणेष्विमे । साग्न्यनग्नित्वविषयः कर्तुरेव नियामका इति । अतश्च पिण्डपितृयज्ञानुरोधात्साग्नेरेव द्वादशाहादिकालकर्तृत्वेन निरग्नेरित्युक्तं भवति । तथा च गालवः—सपिण्डीकरणात्प्रेते पैतृकं पदमास्थिते । आहिताग्नेः सिनीवाल्यां पितृयज्ञः प्रवर्तत इति । आहिताग्नेः सिनीवाल्यामिति च साग्निदर्शयोरुपलक्षणम् । प्रमादात्कालातिक्रमे तु गोभिलः—द्वादशाहादिकालेषु प्रमादादननुष्ठितम् । सपिण्डीकरणं कुर्यात्कालेषूत्तरभाविषु । उत्तरभाविषु त्रिपक्षा-दिषु । यदहर्वेत्युभयोरप्यनग्नित्वविषयम् । वृद्धेः पूर्वमित्यर्थः । असपिण्डितस्य वृद्धौ दानानर्हत्वात् । वाशब्दः स्मृत्यन्तरोक्तकालसमुच्चये । तथा च बौधायनः—अथ सपिण्डीकरणं संवत्सरे पूर्णे त्रिपक्षे वा तृतीये वा मासि षष्ठे वैकादशे वेति । भविष्येऽपि—द्वादशाहे त्रिपक्षे वा षण्मासे वा त्रिमासि च । एकादशे वाऽपि मासि मङ्गले वा उपस्थिते । इति । मङ्गल इति वृद्धौ । अत्रोत्तरोत्तरकाले वृद्धिसं-भवे पूर्वपूर्वकाले वृद्ध्यनुरोधेन सपिण्डीकरणं कुर्यादित्यर्थः । एवं च सत्युभयोरनग्नित्वे वृद्ध्यनुरोधे-नैव संवत्सरादर्वाक्सपिण्डीकरणापकर्षोऽन्यथा नेत्युक्तं भवति । तथा च शाट्यायनः—प्रेतश्राद्धानि सर्वाणि सपिण्डीकरणं तथा । अपि च नागरखण्डे—ततः सपिण्डीकरणं वत्सरादूर्ध्वतः स्थितम् । वृद्धिर्वागामिनीचेत्स्यात्तदार्वागपि कारयेत् । उशनाऽपि—पितुः सपिण्डीकरणं वार्षिकं मृतवत्सरे । आधानाद्युपसंप्राप्तावेतत्प्रागपि वत्सरादिति । आदिशब्दस्तीर्थलोभाद्यर्थः । वाराणस्यां कुरुक्षेत्रे गयायां तीर्थलोभतः । सपिण्डता द्वादशाहे मार्गे सार्थे तु निर्गते । इति वचनात् । ततः संवत्सरे पूर्णे इति सूत्रं केचिदन्यथैव व्याचख्युस्तत्र विषयव्यवस्थाभावान्नादरोऽस्माकम् । न च कात्यायनः अथातोऽधि-कार इत्यारभ्य श्रौतस्मार्तकर्माणि श्रौताग्निस्मार्ताग्निमद्विषयाण्यभिधाय सपिण्डीकरणमेव केवलं साग्निविषयमेवाह स्मेति संभावनीयम् । अतो मदुक्ताऽपि व्यवस्था सूत्रस्येति मामनुकंप्य विपश्चितः सहन्ताम् । न चेयं व्यवस्था सूत्रस्य न घटत इत्याशङ्कनीयम् । ऋषिप्रणीतत्वेन सूत्रस्य गहनार्थत्वात् । तस्मादाहिताग्न्यनाहिताग्निनिरग्निविषयत्वेनोक्तैव व्यवस्थेति सिद्धम् । अत्र कश्चिद्भाष्यकृदाह—वर्ष-पर्यन्तं सर्वकर्मलोपभयात्, आनन्त्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात् । अस्थितेश्च शरीरस्य द्वाद-शाहः प्रशस्यत इति वचनाच्चापकर्षपक्ष एव शोभन इति । तद्बहुस्मृतिवैयर्थ्यान्नादरणीयम् । अन्तरेणैव यो वृद्धिमित्यनेन प्रत्यवायोपलब्धे. । आनन्त्यात्कुलधर्माणां शरीरस्यास्थितेश्चेति हेतुद्वयोपन्यासादस्य वचनस्य कुलधर्मपरत्वादशक्तरोगिकर्तृविषयत्वात्वगमाच्च । किं च सति संभवेऽन्तिमपिण्डस्य वर्षान्त एव

समापनविधानात् । तथा च पूर्णे संवत्सरे पिण्डः षोडशः परिकीर्तित इति । पिण्डः श्राद्धोपलक्षकः । एवं कालमभिधाय प्रयोगमाह—'चत्वारि पात्राणि सतिलगन्धोदकानि पूरयित्वा त्रीणि पितृणामेकं प्रेतस्य' पात्राण्यर्घपात्राणि । त्रिभ्योऽत्र दानं न षड्भ्य इति चत्वारीत्युक्तम् । सतिलेत्यत्र बहुव्रीहिणैव तिलयुक्तत्वे लब्धे सदेशोपादानं (?) मन्त्रराहित्यद्योतनार्थम् । अथवा तिलोऽसि प्रेतदेवत्य इति प्रेतपात्रे मन्त्रविपरिणामार्थम् । तथा चैकादशाहश्राद्धे रेणुः—तिलोऽसि प्रेतदेवत्यः प्रेताल्लोकाह्निनोत्तकम् (?) । मन्त्रमुक्त्वा तिलानेव प्रक्षिपेदर्घपात्रतः । इति । त्रीणि पितृणामेकं प्रेतस्येति क्रमवृद्धिः । तेन वैश्वदेवकृत्यानन्तरं पित्र्यमुक्त्वा ततः प्रेतकृत्यमित्यर्थः । अत्रैके वर्णयन्ति—वैश्वदेवकृत्यानन्तरं प्रेतकृत्यं, ततः पितृकृत्यमिति । एकोद्दिष्टस्य सपिण्डीकरणान्तर्भावात् । तथा च बैजवापः—चत्वार्युदकपात्राणि प्रयुनक्ति, तत्रैकं प्रेताय त्रीणि पितृभ्य इति । तदयुक्तम्—सूत्रोक्तक्रमस्य वैयर्थ्यात् । न च बैजवापवचनं वाजसनेयिविषयम् । बह्वृचविषयत्वात् । तथा च तत्सूत्रम् । चत्वार्युदकपात्राण्येकं मृतस्य त्रीणीतरेषामिति । अतोऽत्र विषयानवबोधादयुक्तमित्युक्तम् । तथा च कठश्रुतिः-दत्त्वा पिण्डान्पितृभ्यस्तु पश्चात्प्रेताय पार्श्वतः । तन्तुपिण्डं त्रिधा कृत्वा चानुपूर्व्यां च संततम् । निदध्यात्रिषु पिण्डेषु एष संसर्जने विधिः । चतुर्थं पिण्डमुत्सृज्य, त्रिधा कृत्वा पिण्डेषु निदध्यादिति लौगाक्षिवचनेऽपि चतुर्थपिण्डस्य पश्चाद्दानप्रतीतेः । न चैकोद्दिष्टस्य दैवपूर्वत्वं युक्तम् । तथा च शातातपः-सपिण्डीकरणश्राद्धं दैवपूर्वं न योजयेत् । पितृनेवाशयेत्तत्र पुनः प्रेतं च निर्दिशेत् । इति । यत्तु प्रेतपूर्वकं पित्र्यश्राद्धमाचरन्ति तद्भ्रान्तिनिबन्धनमित्युपेक्षणीयम् । तथा च मार्कण्डेयपुराणम्—तिलगन्धोदकैर्युक्तं तत्र पात्रचतुष्टयम् । कुर्यात्पितॄणां त्रितयमेकं प्रेतस्य पुत्रक । धर्मप्रदीपेऽपि—श्राद्धद्वयमुपक्रम्य कुर्वीत सह पिण्डनम् । तयोस्त्रिपुरुषं पूर्वप्रेतश्राद्धानुष्ठानविषयं क्वचित्तथाचरणात् बह्वृचविषयं वा । तस्मात्पूर्वोक्त एव क्रम इति सिद्धम् । अत्र च पितृणामित्यत्रैकशेषसमासान्मात्रादीनामपीति गमयितव्यम् । व्युत्क्रममृतावपि पूर्वजत्रिकपूर्णेन सपिण्डनं कर्तव्यम् । तेनैवोत्तरश्राद्धार्हत्वात् । तथा च हारीतः—ततः प्रभृति वै प्रेतः पितृसामान्यमाप्नुयात् । विन्दते पितृलोकं च ततः श्राद्धं प्रवर्तते । तथा पितृलोकं गतश्चान्तं भुंक्ते श्राद्धं स्वधासमम् । पितृलोकगतस्यास्य तस्माच्छ्राद्धं प्रयच्छतेति । ब्रह्मपुराणेऽपि—मृते पितरि यस्याथ विद्यते च पितामहः । तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्वकाः । तेभ्यश्च पैतृकः पिण्डो नियोक्तव्यश्च पूर्ववत् । मातर्यथ मृतायां तु विद्यते च पितामही । प्रपितामहीपूर्वं तु कार्यस्तत्राप्ययं विधिरिति । यत्तु मनुनोक्तम्—व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्डतेति । तन्मात्रादित्रयव्यतिरिक्तविषयम् । तथा च स्कन्दपुराणम्—अक्रमेण मृतानां न सपिण्डीकृतिरिष्यते । यदि माता यदि पिता भर्ता नैष तदा विधिरिति । एष विधिर्व्युत्क्रममृतौ सपिण्डननिषेधविधिरित्यर्थः । सुमंतुः—त्रयाणामपि पिण्डानामेकेनापि सपिण्डने । पितृत्वमश्नुते प्रेत इति धर्मो व्यवस्थितः । इति । अत्रैतच्चिन्त्यते—किमपुत्रस्य सपिण्डीकरणं स्यादुत नेति । तत्रैके कर्कादय आहुर्नेति । तथा च गृह्यम्—पिण्डकरणे प्रथमः पितॄणां प्रेतः स्यात्पुत्रवांश्चेदिति । स्मृतिरपि—अपुत्रस्य परेतस्य नैव कुर्यात्सपिण्डनम् । अशौचमुदकं पिण्डमेकोद्दिष्टं न पार्वणमिति । अन्ये त्वपुत्रस्यापि भवतीत्याहुः । तथा च रेणुः—भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा । सपिण्डीकरणं कुर्यात्पुत्रहीने मृते सति । भ्रात्रादिभिरपुत्रस्य सपिण्डीकरणे कृते । एकोद्दिष्टं नियमतः कार्यं तस्यैव सर्वदेत्यादि । एवं द्वैधे सति करणे उपकारोऽकरणे प्रत्यवायो नेति केचित् । आपदनापद्विषयत्वेन व्यवस्थेत्यन्ये । एतदुभयमप्यविचारितरमणीयम् । कर्कादिपक्षे सापत्यापुत्रस्य असपिण्डने दौहित्रकर्तृकपार्वणादौ असपिण्डितस्य दानानर्हत्वापत्तेः । विधायकवचनैस्तस्य बाधितत्वाच्च । द्वितीयपक्षे तूक्तव्यवस्थापने सपिण्डनस्यानियतत्वेन प्राप्त्यानर्हत्वदोषसद्भावापत्तेः ।

तस्मादपुत्रशब्देनानपत्यस्य विवक्षितत्वात्करणं सापत्यविषयमकरणं चानपत्यविषयमिति व्यवस्थेत्यविरोधः । 'प्रेतपात्रं पितृपात्रेष्वासिञ्चति ये समाना इति द्वाभ्यां' पात्रं पात्रोदकम् । तेन कर्ता येसमाना इति ऋग्द्वयेन प्रेतार्घोदकं पितृपात्रेष्वासिञ्चति जलेन संस्कुर्यादित्यर्थः । अत्र संस्कारप्रयोजकत्वात्पूर्वमासिच्य पश्चात्पितृपूर्वं चतुर्भ्योऽर्घदानमिति क्रमः । अत्रैतत्संदिह्यते—प्रेतशब्देन किं चतुर्थः पुरुषोऽभिप्रेतः उताहो नवमृत इति । उभयथाऽपि वचनदर्शनात् । तथा हि वृद्धयाज्ञवल्क्यः—वृद्धस्यैव तु यत्पात्रं तत्सिञ्चेत्प्रपितामहे । तत्सुते सिञ्चयेत्पात्रं तत्सुते सिञ्चयेत्पुनः । वृद्धवसिष्ठश्च—नवातीतार्घपात्रं च पिण्डश्च परिकीर्यते । पितृपात्रेषु पिण्डेषु सपिण्डीकरणं तु तदिति । तथा निबन्धकृतोऽपि विश्वरूपप्रभृतयः केचित्प्रकर्षेणेतो मृतः प्रेत इति व्युत्पत्त्या चतुर्थस्यार्घपिण्डयोस्त्रिधाकरणेन सेकमेलनाभ्यामपि पिण्डत्रयस्यैकीकरणम्, नवमृतस्यापि अर्घपिण्डयोस्त्रिधाकरणेन पिण्डत्रयमेलनमित्येवं संशयः । अत्रैक आहुः—उभयशास्त्रत्वाच्च विकल्प एवेति । अत्र ते प्रष्टव्याः । किं विकल्पः साधीयानुत व्यवस्थेति । तत्र यदि विकल्पः साधीयानित्युच्यते तदाष्टदोषदुष्टत्वं संभवति । अथ व्यवस्था साधीयसी तर्हि संभवे दोषाभावात्सैव ग्राह्या । न च व्यवस्थासंभवेऽष्टदोषदुष्टो विकल्पो मीमांसकमृग्यः । तस्माद्व्यवस्थैव ग्राह्येति । तथा चाङ्गिराः—प्रमाणानि प्रमाणज्ञैः परिकल्प्यानि यत्नतः । सीदन्ति हि प्रमाणानि प्रमाणैरव्यवस्थितैः । वसिष्ठोऽपि—अव्यवस्था च सर्वत्र तद्विनाशनमात्मनः इति । अतश्च साग्निकः कर्ता चतुर्थपुरुषस्यैवार्घपिण्डे त्रिधा कृत्वा सपिण्डनं कुर्यान्निरग्निकः कर्ता तु मृतस्यैवार्घपिण्डे त्रिधाकृत्वेत्यविरोधः । तथा च काश्यपः—प्रपितामहवृद्धस्य अर्घपिण्डक्रिया त्रिधा । इतरेषु नियुञ्जीत सपिण्डीकरणेऽग्निमान् । वृद्धयाज्ञवल्क्योऽपि—वृद्धप्रपितामहपिण्डं तं त्रिधा कारयेद्बुधः । प्रकर्षेण गतः प्रेतो न पिता प्रेत उच्यते । स्मृत्यन्तरेऽपि—प्रेतपात्रोदकं पिण्डमितरेषु नियोजयेत् । त्रिधा कृत्वा क्रमेणैव सापिण्ड्ये तु निरग्निकः । इति । प्रेतपात्रोदकं नवमृतपात्रोदकम् । इतरेषु पितामहादिपात्रेषु । 'एतेनैव पिण्डो व्याख्यातः' एतेनेत्यर्घोदकन्यायेन पिण्डो व्याख्यातोऽर्घोदकवत्पिण्डोऽपि त्रिधा कृत्वा पितृपिण्डेषु योजनीय इत्यर्थः । एवकारो मेलनेनैव पङ्क्तिर्भवतीति नियमयति । एवं च सति व्युत्क्रममृतौ तत्पत्न्याः सहगमनमृतौ च यथार्हं प्रपितामहेन भर्तृसपिण्डने सत्यपि पार्वणान्वष्टक्यादौ पङ्क्तिसिद्ध्यर्थं पुनरपि पितामहीप्रपितामह्यादिभिर्यथायोगं सपिण्डीकरणं कर्तव्यमित्युक्तं भवति । तथाचरेणुः—व्युत्क्रमेण प्रमीता ये तद्विना प्रेतता ध्रुवम् । पुनः सपिण्डनात्तेषां कुर्यात्प्रेते पितामहे । अन्वष्टकासु वृद्ध्यादौ पितामह्यादिभि. सह । श्राद्धे सत्युपपन्नं स्यान्न च पित्रा सपिण्डनम् । उशनाः—अखण्डितो यदा पिण्डः पत्या चैकेन यो द्विजः । अन्वष्टक्येषु कर्षूणां तर्पणे च कथं पृथक् । पुनः सपिण्डनं कार्यं पितामह्यादिभिः सह । पठन्ति च—व्युत्क्रमेणापि सापिण्ड्यं कार्यमाचार्यसंमतम् । तथाऽप्यूर्ध्वस्य सापिण्ड्ये कृतेऽस्य पुनराचरेदिति । एवमन्यत्राप्यूहनीयम् । अत्रैतन्मीमांस्यते—किं सहगमने पत्न्या सापिण्ड्यं केवलं भर्त्रैव सह किंवा श्वशुरादिभिरपीति । अत्रैक आहुः—पत्या चैकेन कर्तव्यं सपिण्डीकरणं स्त्रियाः । सा मृतापि हि तेनैक्यं गता मन्त्राहुतिव्रतैः । इत्यत्रैकशब्दस्य मुख्यवाचकत्वादस्य श्राद्धस्य पार्वणत्वात् पत्येत्येकत्वं पितामहाद्युपलक्षणमिति । अन्ये तु पुनरेकशब्देन, जीवत्पिता पितामह्या मातुः कुर्यात्सपिण्डताम् । प्रमीतपितृकः पित्रा पितामह्याऽपि वा सुतः । तन्माता तत्पितामह्या तच्छ्वश्र्वा वा सपिण्डनम् । आसुरादिविवाहेषु विन्नानां योषितां स्मृतमिति वचनविहितस्य विकल्पचतुष्टयस्य निवर्तकत्वमिति व्याचक्षते । ततश्च पित्रादित्रयेणैव मातुः सपिण्डनमिति उभयेषामभिप्रायः । तदपरे न क्षमन्ते । पत्न्याः पिण्डस्य श्वशुरादिपिण्डेषु मेलनानुचितत्वापत्तेः । अतश्च सत्यपि पार्वणत्वेऽन्वारोहणे भर्त्रा केवलं पत्न्याः सपिण्डनमित्यन्ये-

पामभिप्रायः । एवं च सत्यन्वारोहणे भर्तृमात्रेणैव सापिण्ड्यं युक्तमित्याभाति । मृता यानुगता नाथं सा तेन सहपिण्डताम् । अर्हति स्वर्गवासं च यावदाभूतसंप्लवमित्यनेन विशिष्टविधानात् । पार्वणादावपि नासामंशभागित्वे पिण्डदानेष्वपि कुशैरेव शिरसो गोपनादिविधानोपपत्तेः । तथा च श्वशुरस्याग्रतो यस्माच्छिरःप्रच्छादनाक्रियेति प्रागुक्तम् । तथाच हेमाद्रिपद्धतौ—पत्या चैकेन कर्तव्यं सपिण्डीकरणं सुतैः । सहयाने तु मातॄणां वर्जयेत्तत्पितामहौ । वचनान्तराण्यपि । तत्र व्यासः—मातुः सपिण्डीकरणं क्रियते स्वामिना सह । मातृकं पैतृकं पिण्डमेकीकृत्य विधानतः । लौगाक्षिरपि—पितामह्यादिभिः स्त्रीभिर्मातरं तु सपिण्डयेत् । पितरि म्रियमाणे तु तेनैवोपरते सति । पुराणसमुच्चयेऽपि—पितामहादिभिः सार्धं पितुः कुर्यात्सपिण्डताम् । मातुर्भर्त्रा सहैकेन न त्वन्यैः श्वशुरैः सहेति । पङ्क्तिकरणं तु प्रागेवाभिहितमित्यलं बहुना । अत्रैके विवदन्ते—सहगमने भर्तुः सपिण्डनं विधाय पश्चात्पत्न्या अपि सपिण्डनमिति द्वयोः सपिण्डनं पृथक् पृथगिति । अन्ये पुनर्दंपत्योः परस्परममन्त्रकं पिण्डद्वयमेलनं कृत्वाऽनन्तरं त्रिभिः सह भर्तुः सपिण्डने पत्न्या अपि कृतं भवेदित्येकमेव सपिण्डीकरणमित्याहुः । तत्र सहगमनेऽनुगमने च भर्त्रैकेन सह सपिण्डनस्य विहितत्वादेकमेव सपिण्डीकरणं युक्तमित्याभाति । न चासंस्कृतेन पत्या सपिण्डनमयुक्तमिति वाच्यम् । असंस्कृतौ न संस्कार्यौ पुत्रपौत्रप्रपौत्रकैः पितरं तत्र संस्कुर्यादिति कात्यायनोऽब्रवीत् । पापिष्ठमपि शुद्धेन शुद्धं पापकृताऽपि वा । पितामहेन पितरं संस्कुर्यादिति निश्चयः ॥ इति कात्यायनवचनात् पापिष्ठमगतप्रेतभावं शुद्धेन प्रेतत्वरहितेन तथा शुद्धं गतप्रेतभावं पापकृता प्रेतेन पितरं संस्कुर्यादित्यर्थः । अनेन वचनेनासंस्कृतेनापि मेलनमभ्यनुज्ञातम् । तस्मादेकमेव सपिण्डीकरणमिति सिद्धम् । तथा च रेणुः—पृथक्चित्यां समारूढा म्रियते तु मृताऽपि वा । पत्या चैकेन कर्तव्यं तस्या अपि सपिण्डनम् । पृथक्चित्या समारूढा या नारी च पतिव्रता । स्वामिना सह पिण्डत्वं तस्या अपि कृतं भवेत् । दम्पत्यर्थं द्विजं चैकं भोजयेद्वाँस्तथोत्तरं । तयोः सपिण्डीकरणं तूष्णीं दम्पतिपिण्डयोरिति स्मृतिरपि । मृते पितरि मातुस्तु न कुर्यात्सहपिण्डनम् । पितुरेव सपिण्डत्वे तस्या अपि कृतं भवेत् । अन्यत्र देशकालद्रव्यदेवकर्त्रैक्यं तात्रिको विधिः । भेदेन पुनर्निमित्तानां कर्मावृत्तिरपीष्यते । स्मृत्यर्थसारेऽपि—अन्वारोहणे त्वेकचित्यारोहणे स्त्रियाः पृथक् सपिण्डीकरणं कार्यमिति । अत्रैके पुनराक्षिपन्ति—साप्रिण्ड्यश्राद्धे चतुर्भ्यः पिण्डदानं कृत्वाऽनन्तरं सपिण्डने कृते प्रत्यवनेजनादि सर्वं कर्म मृतमारभ्यैव कर्तव्यम् । पुनः प्रेतं न निर्दिशेदिति वचनात् । एवं सति प्रत्यवनेजनादिकर्मसु पितामहपिण्डे पितुर्देवतात्वं प्रपितामहपिण्डे पितामहस्य वृद्धप्रपितामहपिण्डे प्रपितामहस्येत्येवं चतुर्थस्य निवृत्तिरिति तेषामभिप्रायः । तदयुक्तम् । उपक्रमोपसंहारविरोधाद्येनैवारम्भस्तेनैव समाप्तिरिति न्यायबाधादेकस्मिन्पिण्डेऽन्यथानिर्देशेन द्विदेवताकत्वसंभवादुपक्रमस्यैव वैयर्थ्यापत्तेः । न च तथेष्टम्, स्मृत्यन्तरे श्राद्धसमाप्तावेव पिण्डमेलनस्य विहितत्वात् । यत्तु पुनः प्रेतं न निर्दिशेदित्युक्तं तदपि साप्रिण्ड्यश्राद्धोत्तरश्राद्धेषु प्रेतशब्दनिर्देशाभावप्रतिपादनपरम् । न पुनरुत्क्रमप्रयोगविधायकम् । तस्मात्प्रकृतोपक्रान्तक्रमेणैव श्राद्धं कृत्वाऽन्ते पिण्डसंमेलनं कर्तव्यमिति युक्तम् । तथा च ब्रह्मपुराणम् । सुवर्तुलांस्ततस्तांस्तु कृत्वा पिण्डान्प्रपूजयेत् । अर्घैः पुष्पैस्तथा धूपैर्दीपमाल्यानुलेपनैरिति । अत्रैके आहुः—पुत्रेणैव तु कर्तव्यं सपिण्डीकरणं स्त्रियाः । पुरुषस्य मृतस्यान्ये भ्रातृपुत्रादयोऽपि ये । अपुत्राया मृतायां तु पतिः कुर्यात्सपिण्डतामित्याभ्यां वचनाभ्यां पतिपुत्रयोरेवाधिकारात्तदभावे स्त्रीणां सपिण्डनं नास्तीति । अन्ये तु सर्वत्रसर्वस्य भवतीत्याहुः । एवं च सत्यकरणमनपत्यस्त्रीविषयं, करणं तु सापत्याविषयमित्यस्मन्मतिः । तथा च पठन्ति—कुर्वीन्न सत्यकरणमनपत्यस्त्रीविषयं, करणं तु सापत्याविषयमित्यस्मन्मतिः । तथा च पठन्ति—कुर्याद्भर्तृका यदि मृता पुत्रः स्वभर्त्रैव तत्साप्रिण्ड्यं सधवा मृता युवतिभिर्भर्तारमन्वेति या । तस्या

भर्तृसपिण्डनं सुतवती भर्तारमन्वेति या तस्याः स्त्रीभिरनुक्रमादिति ह षट्त्रिंशन्मते निर्णयः । अस्यार्थः—मृतभर्तृकायाः सपिण्डनं चेत्पुत्रः करोति तदा भर्त्रैव केवलं सपिण्डयेत् । जीवद्भर्तृकायास्तु पितामह्यादिभिरेव । यातु भर्तारमनुगच्छति तस्या अपुत्राया भर्त्रैव सपिण्डनं पुत्रिण्यास्त्वनुगमनेऽपि पितामह्यादिभिरेवेति । अनेन च पतिपुत्राभावे सपिण्डनमस्तीति गम्यते । अतश्चोक्तैव व्यवस्थेति । तथा च धर्मप्रदीपे—अपुत्रायोषितः पिण्डं भर्तृपिण्डेन योजयेत् । यदि जीवति भर्ता तु श्वश्र्वादिषु समाविशेदिति । अपुत्रा सापत्या मृता स्त्री । अनपत्यायाः सापिण्ड्यप्रयोजनानुपयुक्तेः । अत्रैतत्संदिह्यते—किं सपिण्डीकरणे श्राद्धद्वयमेकपाकेनोत पृथक्पाकेनेति । उभयथा वचनदर्शनात् । तथा ह्योदनं पृथक्पृथगिति । तथा—सपिण्डीकरणश्राद्धं पृथक्पाकेन शस्यत इति । रेणुस्तु पाकैक्यमाह—एवं श्राद्धद्वयं कुर्यात्कार्यैक्यादेकपाकतः । एकोद्दिष्टं पार्वणं च शेषं प्रकृतिवद्भवेदिति । अत्र व्यवस्थीयते—पृथक्पाकविधानमसपिण्डितविषयम् । पाकैक्यविधानं तु पुनः सपिण्डीकरणविषयमिति । अन्यथा विरोधापत्तेः । न च विकल्पः संभावनीयः अष्टदोषदुष्टत्वात् । पुत्रिकापुत्रविषये बौधायनः—आदिशेत्प्रथमे पिण्डे मातरं पुत्रिकासुतः । द्वितीये पितरं तस्यास्तृतीये च पितामहः । चशब्दश्चतुर्थे चतुर्थसमुच्चयार्थः । गोत्रविषये तु मार्कण्डेयः—ब्राह्मादिषु विवाहेषु या ऊढा कन्यका भवेत् । भर्तृगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया । आसुरादिविवाहेषु पितृगोत्रेण धर्मवदिति । लौगाक्षिः—मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाम् । कुर्वीत पुत्रिकापुत्र एवमाह प्रजापतिरिति । पत्नीकर्तृकसापिण्ड्ये विरोध आभासते । लौगाक्षिः—सर्वाभावे स्त्रियः कुर्युः स्वभर्तॄणाममन्त्रकम् । सपिण्डीकरणं श्राद्धमेकोद्दिष्टं च पार्वणम् । स्कान्दे तु—यज्ञेषु मन्त्रवत्पत्नी कर्म कुर्याद्यथाविधि । तदौर्ध्वदेहिके सा हि मन्त्रार्हा धर्मसंस्कृता । इति । अत्र विरोधे ह्यमन्त्रककरणमधर्म्यविवाहोढाविषयम् , समन्त्रककरणं तु मन्त्रोढाविषयमिति व्यवस्था । तथा च शातातपः—धर्म्यैर्विवाहैरूढा या सा पत्नी परिकीर्तिता । सहाधिकारिणी ह्येषा यज्ञादौ कर्मकारिणी । तथा मन्त्रार्हा धर्मसंस्कृतेत्युक्तम् । एतच्चानुज्ञाविषयम् । नारी या त्वननुज्ञाता पित्रा भर्त्रा सुतेन वा । विफलं तु भवेत्तस्या या करोत्यौर्ध्वदेहिकमित्यापस्तम्बोक्तेः । तदभावे विशेषमाह कात्यायनः—असंस्कृतेन पत्न्या च ह्यग्निदानं समन्त्रकम् । कर्तव्यमितरत्सर्वं कारयेदन्यमेव हि । तथा—सर्वबंधुविहीनस्य पत्नी कुर्यात्सपिण्डनम् । ऋत्विजं कारयेद्वापि पुरोहितमथापि वेति । पत्नीकर्तृत्वं साध्वीपरं वा । अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता । पत्न्येव दद्यात्तत्कृत्स्नं पिण्डमर्थं हरेदपि । इति वचनादिति । असंस्कृतः अनुपनीतः । स च कृतचूडस्त्रिवर्षः । तथा च सुमन्तुः—श्राद्धं कुर्यादवश्यं तु प्रमीतपितृको द्विजः । व्रतस्थो वाऽव्रतस्थो वा एक एव भवेद्यदीति । यत्तु मनुनोक्तं—नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते । न ह्यस्मिन्युज्यते कर्म किंचिदा मौञ्जिबन्धनादिति । तदत्रिवर्षकृतचूडविषयम् । तथा च सुमन्तुः—अनुपेतस्तु कुर्वीत मन्त्रवत्पैतृमेधिकम् । यद्यसौ कृतचूडः स्याद्यदि स्याच्च त्रिवत्सरः । नाभिव्याहारयेद्ब्रह्म यावन्मौञ्जीनिबन्धनम् । मन्त्राननुपनीतोऽपि पठेदेवैक एव यः । इति । तस्मात्त्रिवर्षकृतचूडः पित्रोरौर्ध्वदेहिकं मन्त्रवदेव कुर्वीतेत्यलं प्रसंगेन । 'अत ऊर्ध्व संवत्सरे संवत्सरे प्रेतायान्नं दद्याद्यस्मिन्नहनि प्रेतः स्यात्' अत इति सपिण्डनादूर्ध्वम् । वीप्सा नित्यत्वार्था । प्रेतायेत्येकत्वं निर्दिष्टपार्वणव्यतिरिक्तविषयम् । अहःशब्दस्तिथिवचनः । अन्नग्रहणं सति संभवे आमव्युदासार्थम् । तेन क्षयाहे पाकेनैव श्राद्धमिति ज्ञापितम् । अत्र च सपिण्डनादूर्ध्वं प्रेतशब्दोपादानं द्वादशाहादौ सपिण्डनेऽपि पुनर्मासिकावृत्तिज्ञापनार्थम् । तथा च गोभिलः—यस्य संवत्सरादर्वाग्विहिता तु सपिण्डता । विधिवत्तानि कुर्वीत पुनः श्राद्धानि षोडशेति । विधिवदिति यथाधिकारं पार्वणैकोद्दिष्टविधिनेत्यर्थः । तथा च पैठीनसिः—सपिण्डीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः । प्रत्यब्दं यो यथा

कुर्यात्तथ्यात्कुर्यात्सदा पुनः । सपिंडीकरणादूर्ध्वमित्युक्तेस्ततः प्रागेकोद्दिष्टविधिनेत्यर्थः। तथाच पेठीनसिः—सपिंडीकरणादूर्ध्वं यदा कुर्यात्तदापुनः । प्रत्यब्दं यो यथाकुर्यात्तथा सर्वाणि तानि त्विति तेनैवोक्तत्वात् । जातूकर्ण्योऽपि—पितुः पितृगणस्थस्य कुर्यात्पार्वणवत्सुतः । प्रत्यब्दं प्रतिमासं च विधिरेष सनातनः इति। पुनर्मासिककरणमाह कात्यायनः—सपिण्डीकरणादूर्ध्वं न दद्यात्प्रतिमासिकम् । एकोद्दिष्टविधानेन कुर्यादित्याह गौतमः। सपिण्डनादूर्ध्वमेकोद्दिष्टविधानेन प्रतिमासिकं न दद्यात्किं तु पार्वणविधानेनेति कात्यायनमतम् । गौतममते त्वेकोद्दिष्टविधानेनेति । अयं व्यवस्थितो विकल्पः । साग्निः पार्वणविधानेन निरग्निरेकोद्दिष्टविधिनेत्यर्थः । तथा च जाबालः—असपिण्डीकृतं प्रेतमेकोद्दिष्टेन तर्पयेत् । सपिण्डीकरणादूर्ध्वं त्रिभिः सामान्यमिष्यते । पुलस्त्योऽपि—एकोद्दिष्टं भवेत्तावद्यावत्पित्रोः सपिण्डनम् । सपिण्डीकरणादूर्ध्वमेकोद्दिष्टं निवर्तते । इति । साग्निविषयमेतत् । गौतममतोक्तमेकोद्दिष्टं तु निरग्निविषयमित्यविरोधः । शौनकोऽपि—तदूर्ध्वमेकोद्दिष्टविधानेन दद्यादिति । पार्वणत्वे विशेषमाह गौतमः—अदैवं पार्वणं श्राद्धं सोदकुम्भमधर्मकम् । दद्यात्प्रत्याब्दिकात्पूर्वं संकल्पविधिनान्वहम् । अधर्मकं दातृभोक्तृधर्मशून्यम् । प्रत्याब्दिकश्राद्धात्पूर्वं सपिण्डीकरणादूर्ध्वमित्यर्थः । अत्रैतत्संदिह्यते—सापिण्ड्यादूर्ध्वमासेषु किं प्रेतशब्दनिर्देश उत पितृशब्दस्येति । तत्रैक आहुः—सपिण्डीकरणादर्वाक्प्रेतशब्देन तं वदेत् । तदूर्ध्वं पितृशब्देन निर्दिशेदित्यनेन पितृशब्द इति । अन्येत्वाहुः—पितृशब्दोच्चारस्य मासिकादन्यश्राद्धविषयत्वात्प्रेतशब्द एवेति । तथा च—यस्य संवत्सरादर्वाक्सपिण्डीकरणं भवेत् । प्रेतत्वं च पितृत्वं च भवेत्तस्य द्विरूपतेति । मासिकेषु प्रेतत्वमष्टकादौ पितृत्वमित्यर्थः । अतो यदत्र युक्तं तद्ग्राह्यम् । पार्वणत्वेऽग्नौकरणमाह '''—पाणौ हुतं तु नाश्नीयात्प्रेतोद्देशेषु सर्वदा । तद्धोमं च न वा कुर्यादश्नीयात्तु सपिण्डने । अस्यार्थः—साग्निना प्रेतोद्देशेषु मासिकेषु प्रेताय स्वाहेत्युद्देशेन पाणौ हुतं नाश्नीयात्किं त्वग्नौ क्षिपेत्सपिण्डने तु प्रेतश्राद्धत्वेऽपि हुतमश्नीयात् । तद्धोमं च नवेति निरग्निविषयम् । वाशब्दस्य व्यवस्थार्थत्वात् । निरग्नेरेकोद्दिष्टत्वादग्नौकरणाभाव इति । तथा च कात्यायनः—हस्ते हुतं यदाश्नीयाद्ब्राह्मणो ज्ञानदुर्बलः । नष्टं भवति तच्छ्राद्धमिति शातातपोऽब्रवीत् । स्मृतिरपि—पितृविप्रकरे होमः साग्नेरपि भवेदिह । अग्नौकरणशेषं हि पित्र्यब्राह्मणभोजने । लौकिकेऽग्नौ क्षिपेदन्नं श्राद्धेष्वत्र करे हुतम् । पार्वणादौ तदश्नीयादिति । पठन्ति च—साग्निकेन तु विप्रेण यदन्नं हूयते करे । तदन्नं निक्षिपेदग्नौ भुक्त्वा चान्द्रायणं चरेदिति । अथवा सूत्रे प्रेतशब्दग्रहणं त्रिवर्षपर्यन्तमाब्दिकश्राद्धस्याशुद्धत्वज्ञापनार्थम् । तथा च वृद्धयाज्ञवल्क्यः—सपिण्डीकरणादूर्ध्वं यावदब्दत्रयं भवेत् । बहिः श्राद्धं प्रकर्तव्यं भूरिभोजनवर्जितम् । एतच्च द्वादशाहसपिण्डनविषयम् । तथा च स्मृतिः—सपिण्डीकरणादूर्ध्वं यावदब्दत्रयं भवेत् । तावदेव न भोक्तव्यं वर्जयित्वा क्षयेऽहनि । पठन्ति च—एकादशाहमारभ्य यावदब्दत्रयं भवेत् । तावच्छ्राद्धं न गृह्णीयादिति शातातपोऽब्रवीत् । इति । अत्रैक आहुः—त्रिवर्षपर्यन्तश्राद्धं गृहे कार्यमिति । तन्न । (न) कुर्यात्तद्गृहेष्विति । प्रेतमशुद्धश्राद्धम् । अत्रैके प्रत्यवतिष्ठन्ते—आब्दिके पादकृच्छ्रः स्यादेकाहः पुनराब्दिके । अत ऊर्ध्वं न दोषः स्यात्प्रमाणाभावात् बहिः श्राद्धं प्रकुर्वीतेति वचनात् च । पठन्ति च—त्रैवर्षिकं च प्रेतं स्याच्छुद्धस्य वचनं यथेति वचनात्त्रैवार्षिकमेव शुद्धमिति । तन्न । उक्तवचनविरोधात् । किं चैतद्वचनं प्रायश्चित्ताभावं बोधयति न शुद्धत्वं विदधाति वचनान्तरविरोधात् । तथा च भारद्वाजः—प्राणायामत्रयं वृद्धावहोरात्रं सपिण्डन इति । अतश्च सदाचारानुरोधादाब्दिके पादकृच्छ्रं स्यादित्येतद्वचनमेवं व्याख्येयम्—आब्दिके पूरकानन्तरं कर्तव्ये मासिके । सपिण्डीकरणे पुनरहोरात्रस्योक्तत्वात् पुनराब्दिकं सपिण्डीकरणम् । अतश्च वर्षान्ते मृताहे एव सपिण्डीकरणं कृत्वाब्दिकमिति क्रमः । तथा च

जाबालिः—पूर्णे संवत्सरे वृत्ते मृताहे पुनराब्दिकम्। सपिण्डीकरणं कृत्वा कुर्यात्पुत्रस्तु नेतरः। तथा च—पूर्णे संवत्सरे कुर्यात्सपिण्डीकरणं सुतः। एकोद्दिष्टं तु तत्रैव मृतेऽहनि समापयेत्। गालवः—ततः संवत्सरे पूर्णे द्वे श्राद्धे मृतवत्सरे। इति। तथा च पूर्णे संवत्सरे चान्द्रायणं नवे मिश्रके प्राजापत्यं पुराणेष्वेकाह इत्यर्थः। एषां लक्षणं त्वेकोद्दिष्टप्रकरणेऽभिहितम्। तथा च हारीतः—चान्द्रायणं नवश्राद्धे प्राजापत्यं तु मिश्रके। एकाहस्तु पुराणेषु प्रायश्चित्तं विधीयते। इति। पुराणेष्विति बहुत्वं त्रित्वपरम्। तत ऊर्ध्वं न दोष इत्यर्थः। चतुर्थस्य शुद्धत्वात्। तथा च मासिकान्युपक्रम्याह रेणुः—दशमैकादशे मासि द्वादशे न्यूनवत्सरे। ततो परेद्युरब्दान्तसपिण्डीकरणं भवेत्। ततोऽपरेऽब्दे द्वितीयवत्सरादौ तथाब्दिकम्। तृतीयवत्सरादौ स्यात्प्रत्याब्दिकमिति क्रम इति। अपि च पठन्ति—सपिण्डीकरणादूर्ध्वं यावदब्दत्रयं भवेत्। तावद्विप्रो न भोक्तव्यो यदि व्याससमोऽपि च। तथा सपिण्डीकरणादूर्ध्वं काम्यश्राद्धेषु भोजयेत्। संवत्सराश्च चत्वारो वर्जनीयाः क्षयेऽहनि। प्रथमेऽब्दे तु मांसानि द्वितीयेऽस्थीनि चैव हि। तृतीये रुधिरं प्रोक्तं चतुर्थेऽन्नं विशुध्यतीति। द्वादशाहसापिण्ड्यविषयमेतत्। कात्यायनः—अशुद्धेषु च श्राद्धेषु विप्रो भोक्ता न जायते। विप्रं कुशामयं कृत्वा पात्रे कव्यं निवेदयेत्। प्रेतोक्तपिण्डदानं च कर्तव्यमिति नान्यथेति। अत्र च प्रेतायान्नं दद्यादिति सूत्रयता अथोदककर्मेत्युपक्रम्यैकादश्यामयुग्मान् ब्राह्मणान् भोजयेदित्यादिना गृह्योक्तं प्रेतश्राद्धमत्रोपयुक्तमिति नात्र पुनरुक्तमिति ज्ञापितम्। तेन मासिकादिषोडशकं कृत्वा सपिण्डयेदित्युक्तं भवति। अन्यथा प्रेतश्राद्धान्यनुक्त्वा सपिण्डीकरणं कथमसूत्रयिष्यत्। मासिकान्याह याज्ञवल्क्यः—मृतेहनि तु कर्तव्यं प्रतिमासं तु वत्सरम्। प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि। अस्यार्थः—अब्दपर्यन्तं मासि मासि मृताहे स्यादुतैकादशाहेति। अत्रैक आहुः—आद्यमासिकमेकादशाहे द्वितीयादिकं तु प्रतिमासं मृताह इति। तथा च रेणुः—प्रतिमासं मृताहे स्युर्द्वादशैतानि वत्सरम्। उत्कृष्यते हि तत्राद्यं कुर्यादेकादशेऽह्नि तदिति। अन्ये त्वाहुः—एकादशाहे श्राद्धद्वयं कार्यमेकं प्रथममासिकत्वेनापरमेकादशाहिकत्वेनेति। तत्र नाद्यः, प्रथममासिकस्य द्वादशाहादिकालेषु विहितत्वात्। तथा च गोभिलः—मरणाद्द्वादशेऽह्नि स्यान्मास्यूने वोनमासिकमित्यादि। न द्वितीयः, नवैकादशाहश्राद्धाभ्यामेव श्राद्धद्वयोपलब्धेः। तयोरेवैकादशेऽह्नि नियमितत्वाच्च। तथा चात्रिः—प्रेतार्थं सूतकान्ते तु ब्राह्मणान्भोजयेद्दश। आद्यश्राद्धनिमित्तेन चैकमेकादशेऽहनीति। एकादशेऽह्नि दशैकं चेत्यन्वयः। तथा—प्रथमेऽह्नि तृतीये च पञ्चमे सप्तमेऽपि वा। नवमैकादशे चैव तन्नवश्राद्धमुच्यते। तस्मान्नवश्राद्धमाद्यं चैकादशाहे, प्रथममासिकं तु द्वादशाहादाविति युक्तम्। तथा च कार्ष्णाजिनिः—ऊनान्यूनेषु मासेषु विषमाहे समेऽपि वा। त्रैपक्षिकं त्रिपक्षे स्यान्मृताहेष्वितराणि तु। ऊनान्यूनमासिकोनषण्मासिकोनाब्दिकानि। अपि च पठन्ति—आद्यं त्रैपक्षिकं चैव ऊनषण्मासिकं विना। अन्यानि मासिकानि स्युः स्वस्वकाले यथाविधीति। आद्यमूनमासिकं प्रथममासिकमित्यर्थः। एषां कालमाह गालवः—ऊनषण्मासिकं षष्ठे मास्यन्यूनेन मासिकम्। त्रैपक्षिकं त्रिपक्षे स्यादूनाब्दं द्वादशे तथेति। एषां मृताहेष्वनियम इत्यर्थः। तथा च क्रतुः—सार्धे एकादशे मासे तथा सार्धे तु पञ्चमे। ऊनाब्दिकोनषण्मासे भवेतां श्राद्धकर्मणीति। पक्षान्तरमाह गौतमः—एकद्वित्रिदिनैर्न्यूने त्रिभागेनोन एव वा। श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौतमः—एकद्वित्रिदिनैर्न्यून इति एकोनत्रिंशदष्टाविंशतिसप्तविंशतिदिनेषु क्रमेणोनाब्दिकोनषण्मासिकाद्यमासिकानि कर्तव्यानीत्यर्थः। त्रिभागेनोन इत्येकविंशदिने वा तानि कार्याणीति यथाशक्ति विकल्पः, अनुकल्पो वा। द्वादशाहे यदाद्यमासिकविधानं तद्द्विजकर्तृविषयम्। क्षत्रियादीनां त्वाशौचान्ते शरीरपूरकपिण्डसमाप्तावेव मासिकश्राद्धस्य वक्ष्यमाणत्वात्। ऊनानां

वर्ज्यकालमाह गार्ग्यः—नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे । ऊनश्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् । मरीचिः—द्विपुष्करे च नंदासु सिनीवाल्यां भृगोर्दिने । चतुर्दश्यां च नोनानि कृत्तिकासु त्रिपुष्कर इति । अत्र केचिद्विवदन्ते—आद्यमेकादशेऽह्नीत्येकादशाहश्राद्धं क्षत्रियादीनामाशौचमध्ये भवतीति । आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि । कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः । एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम् । चतुर्णामपि वर्णानां सूतकं तु पृथक् पृथगिति वचनाभ्यामेकादशाहे विहितत्वादिति । अन्ये त्वाहुः—एकादशेऽह्नीत्यस्याशौचान्तदिनोपलक्षकत्वाच्चातुवर्ण्यस्याप्याशौचान्त एवेति । अन्यथा विप्रस्याशौचान्ते क्षत्रियादीनामाशौचमध्य इत्यर्धजरतीयन्यायापत्तेरिति । आद्यं श्राद्धमशुद्धोऽपीत्यस्य मासिकापेक्षया नवश्राद्धस्यैवाद्यत्वान्नवश्राद्धविषयत्वं, नवश्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनीति कार्ष्णाजिनिपाठादिति निबन्धकृतां विरोधः । तदेतद्विचारणीयम् । किमाशौचमध्ये करणं विचारसहं कि वाशौचान्त इति । उभयपक्षस्यापि वाचनिकत्वात् । तथा ह्याशौचमध्ये आह कात्यायनः—एकादशेऽह्नि यच्छ्राद्धं प्रत्येकं तत्समाचरेत् । आशौचेषु च श्राद्धेषु विप्रो भोक्ता न जायते । विप्रं कुशमयं कृत्वेति प्रागुक्तम् । गालवोऽपि—एकादशेऽह्नि यच्छ्राद्धं तदेकोद्दिष्टमाचरेत् । यदि कर्ता न कुर्वीत पुनः संस्कारमर्हति । अन्यच्च—एकादशेऽह्नि यच्छ्राद्धं तत्कुर्याद्वृषपूर्वकम् । सर्वेषामेव वर्णानां सूतकान्ते पृथक्पृथगिति । सापिण्ड्ये विष्णुरपि—मन्त्रवर्जं हि शूद्रस्य द्वादशेऽहनि कीर्तितम् । इति । आशौचान्ते त्वङ्गिराः—एकादशेह्नि विप्राणां क्षत्रियाणां त्रयोदशे । वैश्यानां षोडशे श्राद्धमेकत्रिंशे च शूद्रके । श्राद्धमेकादशाहिकं मासिकादन्यन्नवमाद्यं च । मात्स्योऽपि—क्षत्रादिः सूतकान्ते तु भोजयेदयुजो द्विजान् । द्वितीयेऽह्नि पुनस्तद्वदेकोद्दिष्टं समाचरेत् । तथा—अशौचानन्तरं पुत्रो वृषोत्सर्गादिपूर्वकम् । आरभेत शुचिर्भूत्वा श्राद्धमेकादशाहिकम् । अत्रिरपि—प्रेतार्थं सूतकान्ते तु ब्राह्मणान्भोजयेद्दश । आद्यश्राद्धनिमित्तेन एकं चैकादशेऽह्नीति । दशैकं चेत्यन्वयः । एवं वचनविप्रतिपत्तौ व्यवस्थीयते—एकादशाहे श्राद्धत्रयं प्राप्नोति । एकमन्त्यनवश्राद्धं द्वितीयमाद्यश्राद्धं तृतीयमपकर्षे मासिकम् । तत्रापकर्षे ब्राह्मण एकादशाहेऽन्त्यनवश्राद्धमाद्यं चेति द्वयं कृत्वा प्रथममासिकादिश्राद्धचतुर्दशकं च कृत्वा द्वादशाहे सपिण्डीकरणं कुर्यात् । अनपकर्षे त्वेकादशाहे नवमाद्यं चेति द्वयं कृत्वा द्वादशाहादौ विहितस्वस्वकाले मासिकादिषोडशकं कुर्यादिति । क्षत्रियादिभिस्त्वन्त्यनवश्राद्धमाद्यं श्राद्धं चेत्येकादशाहे नियमितत्वादाशौचमध्ये द्वयं कृत्वाऽऽशौचान्ते प्रथममासिकादिषोडशकमपकर्षे कर्तव्यम् । आशौचमध्ये पूरकपिण्डासमाप्तौ मासिकानामविहितत्वादाशौचान्तेऽन्तिमपिण्डदानस्य विहितत्वाच्च । तथा च मरीचिः—आशौचान्तेष्वतः सम्यक् पिण्डदानं समाप्यते । ततः श्राद्धं प्रदातव्यं सर्ववर्णेष्वयं विधिः । हरिनाथोऽपि—देयस्तु दशमः पिण्डो राज्ञां वै द्वादशेऽहनि । वैश्यानां पञ्चदशके देयस्तु दशमस्तथा । पिण्डः शूद्रेण दातव्यो दिनान्यष्टौ नवाथवा । संपूर्णे च ततो मासे पिण्डशेषं समापयेदिति । अनपकर्षे तु यथाकालं मासिकमिति । अतश्च येषु निबन्धेष्वेकादशाहे क्षत्रादीनां श्राद्धं विहितं तन्नवश्राद्धाद्यश्राद्धविषयम् । येष्वाशौचान्ते प्रतिपादितं तन्मासिकादिश्राद्धषोडशकविषयमित्येवं कल्पनेन निबन्धकृतामविरोधाद्देशाचारविषयत्वेन चेति सर्वमनवद्यम् ।

इति श्राद्धकाशिकायां सूत्रवृत्तौ सपिण्डीकरणम् ॥ ५ ॥

आभ्युदयिके प्रदक्षिणमुपचारः पूर्वाह्णे पित्र्यमन्त्रवर्जं जप ऋजवो दर्भा यवैस्तिलार्थाः संपन्नमिति तृप्तिप्रश्नः सुसंपन्नमितीतरे ब्रूयुर्दधिबदराक्षत-

मिश्राः पिण्डा नान्दीमुखान् पितॄनावाहयिष्य इति पृच्छत्यावाहयेत्यनुज्ञातो नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने नान्दीमुखान् पितॄन्वाचयिष्य इति पृच्छति वाच्यतामित्यनुज्ञातो नान्दीमुखाः पितरः पितामहाः प्रपितामहा मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयन्तामिति न स्वधां प्रयुञ्जीत युग्मानाशयेदत्र ॥ ६ ॥

(कर्कः)—'आभ्यु···चारः' इति। पुत्रजन्मादावभ्युदये यच्छ्राद्धं तदाभ्युदयिकमुच्यते तत्र प्रदक्षिणमुपचारः। प्रदक्षिणग्रहणात् यज्ञोपवीतिना प्राक्संस्थमुदक्संस्थं वा प्राङ्मुखेन वा कर्तव्यतादि भवेत्। 'पूर्वाह्णे' नापराह्णे। 'पित्र्य···जपः' स चायमश्नत्सु यः पितृमन्त्रजपः स प्रतिषिध्यते नत्वायन्तुन इत्ययम्, पित्र्यमन्त्र इति संज्ञाशब्दत्वात्। अस्य च जपा(?)वाहनार्थत्वात्। 'ऋजवो दर्भाः' पित्र्ये द्विगुणाः प्राप्नुवन्ति ते च प्रतिषिध्यन्ते ऋजवः प्रत्येतव्याः। 'यवैस्तिलार्थाः' यस्तिलार्थः स सर्वो यवैः कर्तव्यः। तदत्र द्रव्याभिधायकत्वात् तन्मन्त्रो यवोसीति यथार्थमूहितव्यः। 'संपन्नमिति तृप्तिप्रश्नः' तृप्ताः स्थेत्यस्य स्थाने संपन्नमित्ययं प्रश्नो भवति। 'दधिवदराक्षतमिश्राः पिण्डाः' दधिवदराक्षतमिश्रेणान्नेन पिण्डा देयाः। 'नान्दी···य्यस्थाने' अक्षय्योदकस्थाने नान्दीमुखाः पितरः प्रीयन्तामिति प्रयोगो भवति। 'नान्दी···प्रीयन्तामिति' नान्दीमुखान् पितॄन् वाचयिष्य इति पृच्छति वाच्यतामिति ब्राह्मणैरनुज्ञातो नान्दीमुखाः पितर इतीमं मन्त्रमुदाहरेत्। 'न स्वधां प्रयुञ्जीत' स्वधोदाहरणप्रतिषेधात्, तत्सारूप्यात् नान्दीमुखान् पितॄन् वाचयिष्य इति तत्स्थाने प्रयोगः कर्तव्यः। तत्र केचित्स्वधोदाहरणप्रतिषेधात् अस्तु स्वधेत्युच्यमान इति चोपदेशात्कुशेष्वपां निषेकं नेच्छन्ति। तदयुक्तम्। मन्त्रनिषेकयोः शेषशेषित्वाभावात्। तस्मात्तस्मिन् काले निषेक इति। 'युग्मानाशयेदत्र' आभ्युदयिके युग्मानाशयेदिति ॥ ६ ॥

(गदाधरः)—वृद्धिश्राद्धमाह 'आभ्युदयिके प्रदक्षिणमुपचारः' पुत्रजन्मविवाहादौ अभ्युदये यच्छ्राद्धं तदाभ्युदयिकशब्देनोच्यते। तत्र प्रदक्षिणमुपचारः। प्रदक्षिणग्रहणेन यज्ञोपवीतिना प्राक्संस्थमुदक्संस्थं वा प्राङ्मुखेन वा कार्यमिति लभ्यते। शातातपः, अनिष्ट्वा पितृयज्ञेन वैदिकङ्किंचिदाचरेत्। तत्रापि मातरः पूर्वं पूजनीयाः प्रयत्नतः ॥ अकृत्वा मातृयागन्तु वैदिकं यः समाचरेत्। तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातर इति। मातृगणस्तु भविष्यपुराणे निरूपितः—गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सहेति ॥ विष्णुपुराणे—कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः। शुभकर्मणि बालानां चूडाकर्मादिके तथा ॥ सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने। नान्दीमुखान्पितॄनादौ तर्पयेत्प्रयतो गृहीति ॥ जाबालिः—यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः। पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत्। मातृश्राद्धं तु पूर्वं स्यात्पितॄणान्तदनन्तरम्। ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतमिति। वैदिककर्मसु प्रतिप्रयोगं श्राद्धावृत्तिप्रसक्तावाह कात्यायनः—असकृद्यानि कर्माणि क्रियेरन्कर्मकारिभिः। प्रतिप्रयोगन्नैताः स्युर्मातरः श्राद्धमेव चेति। सत्यपि वैदिककर्मत्वेऽष्टकादिषु न श्राद्धं कर्तव्यमित्याह कात्यायनः—नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते। न सोष्यन्तीजातकर्मप्रोषितागतकर्मसु। 'पूर्वाह्णे' एतदाभ्युदयिकं पूर्वाह्णे भवति नापराह्णे। पुत्रजन्मादौ तु तत्काल एव। 'पित्र्यमन्त्रवर्जञ्जपः' अयञ्चाश्नत्सु यो जपः स निषिध्यते नत्वायन्तु न

इत्ययम्। उदीरतामिति त्रयोदशर्चं पित्र्यमिति पित्र्यमन्त्रसंज्ञा तस्यैव श्रवणात्। 'ऋजवो दर्भाः' अत्र ऋजवो दर्भा भवन्ति न द्विगुणाः 'यवैस्तिलार्थाः' अत्र तिलार्थाः सर्वे यवैः कार्याः। तत्र मन्त्रेऽपि यवोऽसीत्यूहः कार्यो मुख्यद्रव्याभिधायकत्वात्।' संपन्नमिति तृप्तिप्रश्नः' तृप्ताः स्थेति पृच्छतीत्यत्र तृप्ताः स्थेत्यस्य स्थाने संपन्नमित्ययं प्रश्नो भवति। तथा च छन्दोगपरिशिष्टे—संपन्नमिति तृप्ताःस्थप्रश्नस्थाने विधीयते। सुसंपन्नमिति प्रोक्ते शेषमन्नं निवेदयेत् इति। 'सुसम्प'''पिण्डाः' दध्ना बदरीफलैरक्षतैश्च मिश्राः पिण्डा अत्र देयाः। 'नान्दी''पृच्छति' क पितॄनावाहयिष्य इत्यस्य स्थाने नान्दीमुखान्पितॄनावाहयिष्यइत्ययं प्रश्नो भवति। 'आवा'''स्थाने' प्रयोगो भवतीति शेषः। 'नान्दी''पृच्छति' पितॄन्वाचयिष्यइत्यस्य स्थाने इत्यर्थः। 'वाच्यता'''प्रीयन्तामिति' द्विजैर्वाच्यतामित्यनुज्ञातो नान्दीमुखाः पितर इत्यादिप्रीयन्तामित्यन्तं पठेत्। 'न स्वधां प्रयुञ्जीत' स्वधोच्चारणन्न कुर्यादित्यर्थः। 'युग्मानाशयेदत्र' अत्रास्मिन्नाभ्युदयिके युग्मान्ब्राह्मणान्भोजयेत्। इति नवकण्डिकागदाधरभाष्ये षष्ठी कण्डिका ॥ ६ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

अथ प्रयोगः। तत्र पूर्वं देशकालौ स्मृत्वा अमुकनिमित्तं मातृपूजापूर्वकं वसोर्द्धारापूर्वकं च नान्दीश्राद्धमहं करिष्य इति संकल्पः। ततः क्षालितैः शुक्लतण्डुलैः पीठस्योपरि गौर्यादिषोडशमातृः स्थापयेत्। तद्यथा ॐ भूर्भुवः स्वः गणपतिं स्थापयामि। एवङ्गौरीं स्थापयामि, पद्मां, शचीं, मेधा, सावित्रीं, विजयां, जयां, देवसेनां; स्वधां, स्वहां, मातृः, लोकमातृः, धृतिं, पुष्टिं, तुष्टिम्, आत्मनः कुलदेवतां, स्थापयामि। तत आसां मनोजूतिरिति प्रतिष्ठापनं च। ततः पूजा, गणपतिसहितषोडशमातृभ्यो नमः गन्धं समर्पयामि। पुष्पं धूपं नैवेद्यं ताम्बूलं दक्षिणाः। गणपतिसहितानां षोडशमातॄणां पूजनविधेर्यन्न्यूनं यदतिरिक्तं तत्परिपूर्णमस्तु। इति मातृपूजनम्॥ ॥ अथ वसोर्द्धारापूजनम्। द्रवीभूतं घृतं गृहीत्वा कुड्यादिषु वसोः पवित्रमसीति धाराः पञ्च सप्त वा उदक्संस्थाः कुर्यात्। मनोजूतिरिति प्रतिष्ठापूर्वकं वसोर्द्धारादेवताभ्यो नम इति पञ्चोपचारैः पूजयेत्। इति वसोर्द्धाराकरणम्। अथ नान्दीश्राद्धम्। तत्र यथाकुलदेशाचारेण सपिण्डकमपिण्डकं वा कार्यम्। तदुक्तं भविष्यपुराणे, पिण्डनिर्वपणं कुर्यान्न वा कुर्याद्विचक्षणः। वृद्धिश्राद्धे कुलाचारो देशकालाद्यवेक्ष्य हि॥ अपिण्डकेऽग्नौकरणादीनामपि निषेधः। तथाहि, अग्नौकरणमर्घं चावाहनं चावनेजनम्। पिण्डश्राद्धे प्रकुर्वीत पिण्डहीने निवर्तते। पिण्डनिर्वापरहितं यत्र श्राद्धं विधीयते। स्वधावाचनलोपोऽस्ति विकिरस्तु न लुप्यते। अक्षय्यं दक्षिणा स्वस्ति सौमनस्यं यथास्थितमिति॥ ॥ तत्र सपिण्डकमाभ्युदयिकं लिख्यते। आचमनम् प्राणायामः वैश्वदेवार्थे मात्राद्यर्थे पित्राद्यर्थे सपत्नीकमातामहाद्यर्थे च द्वौ द्वौ विप्रौ युग्माः शक्तितो भोज्याः। अमूला ऋजवो दर्भाः। यज्ञोपवीती प्राङ्मुखो दद्यात्। तिलार्थे यवाः। नान्दीमुखाः सत्यवसुसंज्ञका विश्वेदेवा एतद्वः पाद्यम्पादावनेजनं पादप्रक्षालनम् एषोऽर्घः इदमत्र चन्दनं पुष्पं च। अमुकगोत्राः मातृपितामहीप्रपितामह्यः नान्दीमुख्यः एतद्वः पाद्यम् पादावनेजनं पादप्रक्षालनम्। एष वोऽर्घः इदमत्र चन्दनं पुष्पम्। अमुकगोत्राः पितृपितामहप्रपितामहाः नान्दीमुखाः युग्मरूपाः एतद्वः पाद्यं पादावनेजनं पादप्रक्षालनम्। एष वोऽर्घः इदमत्र चन्दनं पुष्पम्। अमुकगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः नान्दीमुखा युग्मरूपा एतद्वः पाद्यं पादावनेजनं पादप्रक्षालनम्। एष वोऽर्घः इ०। तत आचमनं दिग्बन्धनम्। अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम्। तथा बर्हिषदः पान्तु याम्यां ये पितरस्तथा। प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः। ऊर्ध्वतस्त्वर्यमा रक्षेत्कव्यवाडनलोऽप्यधः। रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः। सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे। तिला रक्षन्त्वसुरान्दर्भा रक्षन्तु राक्षसान्। पङ्क्तिं वै श्रोत्रियो रक्षेदतिथिः सर्वरक्षकः। निहन्मि सर्वं यदमेध्यवदित्यादि सर्वं इत्यन्तेन मन्त्रेण नीवीबन्धनम्। श्राद्धभूमौ गयामित्यारभ्य गयायै नमः

इत्यन्तं पठेत् । ततः कर्मार्थं जलाभिमन्त्रणं, यद्देवा इति तिसृभिर्ऋग्भिः । ततः पाकप्रोक्षणम् । दुष्टदृष्ट्यादिशूद्रसंपर्कदोषाः पाकादीनां पवित्रताऽस्त्विति । देशकालपाकपात्रद्रव्यश्राद्धसंपदस्तु । अद्येत्यादि देशकालौ स्मृत्वा अमुकगोत्राणां मातृपितामहीप्रपितामहीनां नान्दीमुखीनां, तथाऽमुकगोत्राणां पितृपितामहप्रपितामहानां नान्दीमुखानां युग्मरूपाणां तथाऽमुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानां सपत्नीकानां नान्दीमुखानां युग्मरूपाणां पार्वणत्रयविधिना आभ्युदयिकं श्राद्धमहं करिष्ये । सत्यवसुसंज्ञकानां विश्वेषां देवानामिदमासनम् । हस्तप्रक्षालनम् । उपग्रहविष्टः । गोत्राणां मातृपितामहीप्रपितामहीनां नान्दीमुखीनामिदमासनम् । हस्तप्रक्षालनमुपग्रहविष्टः । गोत्राणां पितृपितामहप्रपितामहानां नान्दीमुखानामिदमासनम् । हस्तप्रक्षालनमुपग्रहविष्टः । गोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानां नान्दीमुखानामित्यादि । सत्यवसुसंज्ञकान्विश्वान्देवानावाहयिष्ये । आवाहयेत्यनुज्ञातो 'विश्वेदेवास' इत्यावाहयेत् । ततो यवैरवकीर्य 'विश्वेदेवाः शृणुतेमम्' इति जपेत् ॥ 'आगच्छन्तु० भवन्तु ते' इति पठेत् । गोत्राः मातृपितामहीप्रपितामहीः नान्दीमुखीः आवाहयिष्ये । आवाहयेत्यनुज्ञातः 'उशन्तस्त्वा' इत्यनया आवाहयेत् । ततो यवैरवकीर्य 'आयन्तुनः' इति जपेत् । गोत्रान्पितृपितामहप्रपितामहान् नान्दीमुखानावाहयिष्ये । आवाहयेत्यनुज्ञात उशन्तस्त्वेत्यावाहयेत् । यवैरवकीर्य 'आयन्तुन' इति जपेत् । गोत्रान्मातामहप्रमातामहवृद्धप्रमातामहान्सपत्नीकान्नान्दीमुखानावाहयिष्ये । आवाहयेत्यनुज्ञात आवाहनावकिरणजपाः पूर्ववत् । ततोऽर्घपूरणम् 'शन्नोदेवीः' इत्यनेन । ततो यवावपनम् । यवोऽसि सोमदैवत्य इति । इदमत्र चन्दनं पुष्पं च । अर्घं गृहीत्वा "यादिव्या" इतिमन्त्रेण सत्यवसुसंज्ञका विश्वेदेवा एष वोऽर्घ इति दद्यात् । या दिव्या इति पठित्वा अमुकगोत्रा मातृपितामहीप्रपितामह्य एष वोऽर्घ इति । एवं सर्वत्र । प्रथमे पात्रे संस्रवान्समवनीय पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोति । ततो गन्धपुष्पधूपदीपवाससां च प्रदानम् । सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यः स्वाहेति दत्त्वा । गोत्राभ्यो मातृपितामहीप्रपितामहीभ्यो नान्दीमुखीभ्यो यथादत्तङ्गन्धाद्यर्चनम् । गोत्रेभ्यः पितृपितामहप्रपितामहेभ्यो नान्दीमुखेभ्यो यथादत्तं गन्धाद्यर्चनम् । गोत्रेभ्यो मातामहप्र० भ्यो० नान्दी० भ्यो यथाद० । आचमनम् । उद्धृत्य घृताक्तमन्नं पृच्छत्यग्नौ करिष्य इति । कुरुष्वेत्यनुज्ञातस्ततो मेक्षणेनाहुती जुहोति । अग्नये कव्यवाहनाय स्वाहा, सोमाय पितृमते स्वाहेति । निरग्निकस्तु विप्रपाणौ जले वा कुर्यात् । हुतशेषं दत्वा पात्रमालभ्य जपति "पृथिवी ते पात्रं० स्वाहेति । इदं विष्णुर्वि० सुरे इत्यङ्गुष्ठमन्नेऽवगाह्य "अपहता" इति यवान्विकीर्य । एवं सर्वत्र उष्णः स्विष्टमन्नं दद्याच्छक्त्या वा । ततः पित्र्यमन्त्रवर्जं जपः । अन्नप्रकिरणम् । आचमनम् । सकृत्सकृद्ब्राह्मणेभ्य उदकदानम् । ततः सप्रणवां गायत्रीं मधुव्वाता इति तृचं च पठेत् । ब्राह्मणाः संपन्नमिति तृप्तिप्रश्नः । सुसंपन्न मिति प्रतिवचनम् । शेषमन्नमप्यस्ति । इष्टैः सह भुज्यताम् । अपहता इत्युच्छिष्टसमीपे उल्लेखनम् । उदकोपस्पर्शनम् । साग्निकस्योल्मुकनिधानम् । अवनेजनम् । सकृदाच्छिन्नास्तरणम् । पिण्डदानम् । दधिबदराक्षतमिश्रं यथोक्तम् । अत्र पितर इत्युक्त्वोदङ्मुख आस्ते, आतमनात् । आवृत्त्यामीमदन्तेति जपः । ततोऽवनेजनम् । नीवीविसर्गः । नमोव इति षडञ्जलिकरणं घोरशोपवर्जम् । एतद्व इति सूत्रदानम् । पिण्डानामभ्यर्चनादिनैवेद्यान्तम् । आचमनम् । ततः सुप्रोक्षितादि ऊर्जमित्युदकनिषेकान्तम् । नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्योदकदानम् । तत ऊर्जमित्युदकनिषेकान्तं स्वधावाचनवर्जम् पात्रोत्तानकरणम् । ततो दक्षिणादानादिगृहप्रवेशनान्तम् ॥ ६ ॥

इति नवकण्डिकागदाधरभाष्ये आभ्युदयिकश्राद्धप्रयोगः ॥

( श्राद्धका० )—इत्थं पार्वणैकोद्दिष्टसपिण्डनश्राद्धेष्वप्रदक्षिणादिधर्मानुपदिश्येदानीं स्वीकृतत्वेन तद्विपरीतप्रदक्षिणादिधर्मान्प्रतिपिपादयिपुराभ्युदयिकश्राद्धमारभते ' आभ्युदयिके प्रदक्षिणमुपचारः' अभ्युदयो वृद्धिः इत्यनर्थान्तरम् । अग्न्याधानाभिपेकादाविष्टापूर्ते स्त्रिया ऋतौ । वृद्धिश्राद्धं प्रकुर्वीत आश्रमग्रहणे तथेति वृद्धगार्ग्यवचनात् । आदिशब्दः पुत्रजन्मविवाहाद्यर्थः । तथा च स एव—पुत्रोत्पत्तिप्रतिष्ठासु तन्मौञ्जीत्यागबन्धने । चूडायां च विवाहेपु वृद्धिश्राद्धं विधीयते । इति । ननु च नान्दीमुखं कर्माङ्गं चेति संज्ञाभेदात्कथमाभ्युदयिकं वृद्धिश्राद्धमिति । उच्यते—वृद्धिश्राद्धमेव नान्दीमुखमिति, संज्ञाभेदः प्रयोगविशेपणार्थः । तथा च वृद्धवसिष्ठः—पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम् । तत्र नान्दीमुखमिति विशेपः समुदाहृत इति । यत्तु कर्माङ्गमिति संज्ञान्तरं तदपि वृद्धिधर्मातिदेशेन तद्रूपमेव संज्ञाभेदेऽपीत्यविरोधः । तथा च पारस्करः—निपेककाले सोमे च सीमन्तोन्नयने तथा । ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम् । लौगाक्षिरपि—नामान्नचौलगोदानसोमोपनयपुंसवे । स्नानदानविवाहेपु नान्दीश्राद्धं विधीयते इति । अत्राभ्युदयिक इति वदता मातृस्थापनाद्यङ्गेपु प्रागुदक्संस्थतैवोक्ता दैविकत्वादिति गम्यते । अतएव प्राङ्मुखस्य कर्तुरुदक्संस्थतायामप्रादक्षिण्यमपि स्यादित्याहुः । तत्रापि प्रादक्षिण्यमेवेत्युदङ्मुखस्यैव कर्तृत्वमित्यन्ये । अत्रानूचानाः प्रमाणम् । अत्रैतच्चिन्त्यते—किं वृद्धिश्राद्धं दिनत्रये कार्यमुतैकदिन एवेति । तत्रैक आहुः—एकस्मिन्कर्माह एवेति । मातृभ्यः प्रथमं दद्यात्पितृभ्यस्तदनन्तरम् । ततो मातामहेभ्यश्च वृद्धौ श्राद्धत्रयं स्मृतम् । इति वचनादिति । तदयुक्तम् । अस्यापि त्रिदिनविधायकत्वप्रतिभानात् । तथा च स्मृतिः—मातृश्राद्धं तु पूर्वेद्युः कर्माहन्येव पैतृकम् । मातामह्यं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं भवेत् । वसिष्ठोऽपि—पूर्वेद्युर्मातृकं श्राद्धं कर्माहे पैतृकं तथा । उत्तरेद्युः प्रकुर्वीत मातामहगणस्य त्विति । नन्वेकदिनकरणं दिनत्रयाशक्तौ कर्माहे वेदितव्यमिति चेत्—तदपि न । तत्रापि पूर्वेद्युरेव विहितत्वात् । तथा च—पृथग्दिनेष्वशक्तश्चेदेकस्मिन्पूर्ववासरे । श्राद्धत्रयं प्रकुर्वीत वैश्वदेवं तु तांत्रिकमिति । तान्त्रिकमित्येकदिने विशिष्टविधिः । वृद्धमनुरपि—अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधैः। पूर्वेद्युरेव कर्तव्यं पूर्वाह्ने मातृपूर्वकमिति । यत्त्वेकदिन एवात्राचरन्ति तद्वचनादर्शननिबन्धनमित्यवधेयम् । जातकर्मादिविपयं वेत्यविरोधः । पठन्ति च—पुंसवने च सीमन्ते अन्नचौलोपनायने । गोदाने स्नान उद्वाहे नान्दीश्राद्धं पुरोहितम् । इति । अतश्चाविहितेपु पूर्वेद्युरेवेति । तत्राकृत्वा मातृयागं तु यः श्राद्धं परिवेषयेत् । तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः । इत्यादिवचनान्मातृपूजनस्य श्राद्धे पूर्वभागित्वात्तत्पूजने विरुद्धानीव वाक्यानि दृश्यन्ते । तत्र परिशिष्टम्—गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः । धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह । गणेशेनाधिका ह्येता वृद्धौ पूज्याश्चतुर्दशेति । चतुर्विंशतिमते तु—ब्रह्माण्याद्यास्तथा सप्त दुर्गाक्षेत्रगणाधिपाः । वृद्धौ वृद्धौ सदा पूज्याः पश्चान्नान्दीमुखान्पितॄन् । ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही च तथैन्द्री च चामुण्डा देवमातरः । तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा । इत्येता मातरः प्रोक्ता पितृष्वसाष्वमीति(?) । अत्र यथाशाखं यथाजातिकुलं वा व्यवस्थेत्यविरोधः । तथा चतुर्विंशतिमते—श्राद्ध आभ्युदये प्राप्ते देवतास्थापनं स्मृतम् । जातिधर्मकुलश्रेणि लोकानां वृद्धिकारकमिति । तत्र माध्यंदिनशाखायामनुक्तत्वात्किं छन्दोगोक्तं कार्यमुतान्यस्मृत्युक्तमिति संदेहः । तत्रैक आहुः—परोक्तत्वात् यत्किंचिदिच्छयेति । तथा च संग्रहकारः—सर्वेपामपि पक्षाणां स्वगृह्योक्तं विधीयते । स्वगृह्योक्तस्य चाभावे ग्रहणं स्वेच्छया भवेदिति । तदयुक्तम् । सूत्रपरिशिष्टयोरेककर्तृकत्वात्तस्यान्यशाखिविषयत्वात्पारस्करमतस्याश्रयणीयत्वाच्च । तथा च स्मृतिसंग्रहः—न गृह्यादिस्मृतिर्येपां श्राद्धादावुपलभ्यते ।

कर्तुमर्हन्ति ते सर्वे पारस्करमुनीरितमिति । परेषां करोतीति हि व्युत्पत्तेः । अतश्च गौर्यादय एवात्र शाखायामिति । तत्प्रकारमाह स एव—प्रतिमासु च शुद्धासु लिखित्वा वा पटादिषु । अपि चाक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैरिति । शुद्धासु रजतादिधातुमयीषु । अक्षतपुञ्जा यवमुष्टयः । यथासम्भवं यथाकुलं च विकल्पः । व्यवस्थितविकल्पो वा । जातकर्मणि बालानां नामाह्वयनकर्मणि । निरीक्षणे प्राशने च यवस्थं मातृपूजनमिति वचनात् । अत एव पृथग्विधैरित्युक्तम् । गन्धताम्बूलवस्त्रादिश्चशब्दार्थः । तथा कुड्यलग्नां वसोर्धारां सप्तधारां घृतेन तु । कारयेत्पंचधारां वा नातिनीचां न चोच्छ्रिताम् । कारयेदिति स्वार्थेणिच् । स्वकर्तृत्वानियमार्थो वा । नातिनीचां न चोच्छ्रितामिति मातृसंमितामेव न तासामध ऊर्ध्वं वाधिकामित्यर्थः । कालमाह—पूर्वाह्णे श्राद्धं कुर्यादिति शेषः । एतच्च सकलं दैवधर्मोपलक्षणम् । तेनोपवीतिप्रागुदङ्मुखदक्षिणजानुपातदेवतीर्थप्रागुदक्संस्थाननमस्कारादिदैवधर्मः सर्वोऽत्र प्राप्नोतीत्यर्थः । तथा च प्रचेताः—अपसव्यं न कुर्वीत न कुर्यादप्रदक्षिणम् । प्राङ्मुखो देवतीर्थेन क्षिप्रं देशविसर्जनम् । दक्षिणं पातयेज्जानु देवान्परिचरेत्सदा । निपातो नहि सव्यस्य जानुनो विद्यते क्वचित् । यथैवोपचरेद्देवांस्तथा वृद्धौ पितॄनपि । दध्यक्षतैः सबदरैः प्राङ्मुखोदङ्मुखोऽपि वा । तथा—पूर्वाह्णे दैविकं श्राद्धमपराह्णे तु पैतृकम् । एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् । इति । दैविकं द्वादश्यादिषु वैष्णवम् । तथा च विश्वामित्रः—देवानुद्दिश्य क्रियते यत्तु दैविकमुच्यते । तन्नित्यश्राद्धवत्कुर्याद्द्वादश्यादिषु यत्नतः । इति । ननु च प्रातर्वृद्धिनिमित्तकमित्यनेन प्रातरेवास्य विहितत्वात्कथं पूर्वाह्ण इति । उच्यते—प्रातःशब्देन पूर्वाह्णस्यैवोक्तत्वात् इति वक्ष्यमाणत्वात् । एवं च सति पूर्वाह्णः किं द्वेधा विभक्तेऽह्नि आद्यः किं त्रेधा विभागाद्वा । उच्यते—देवमानुषपित्र्यकालापेक्षया विभागौचित्यात्त्रिधा विभाग एव ग्राह्य इत्यदोषः । तथा च श्रुतिः—पूर्वाह्णो देवानां मध्यंदिनं मनुष्याणामपराह्णः पितॄणामिति । नन्वेवमपि श्रुतिरेव पुनरह्नः पूर्वाह्णो देवा अपराह्णः पितर इति द्विधैवाह, तत्कथं त्रिधा विभाग एवेति । मैवम् । सामान्येनास्याः श्रुतेराभ्युदयिकादन्यपित्र्यविषयत्वात् । यत्तु पितॄनप्यत्र देववदित्यतिदेशेन प्रागावर्तनादह्नः कालं विद्यादिति गोभिलसूत्रेण च द्विधा विभागेन मध्याह्नोऽभिहितः स पाकयज्ञादिदैवकर्मविषयः । अन्यथाऽपराह्णे पाकयज्ञसंभवात् । तस्मात्त्रिभाग एव ग्राह्य इति सिद्धम् । तथा च गार्ग्यः—ललाटसंमिते भानौ प्रथमः प्रहरः स्मृतः । 'स एवाद्ध्यर्धसंयुक्तः प्रातरित्यभिधीयते । अध्यर्धमधिकार्धं सार्धप्रहर इत्यर्थः । अग्न्याधानाभ्युदयिके तु गालवः—पार्वणं चापराह्णं तु वृद्धिश्राद्धं तथाग्निकमिति । अग्न्याधाननिमित्तमपराह्ण इत्यर्थः । 'पित्र्यमन्त्रवर्जं जपः' मधुमतीपितृसंहितयोरुपलक्षणं चैतत् । तथा च मनुकात्यायनौ—मधुव्वाते जपस्थाने कुर्यात्तत्र प्रयत्नतः । उपास्मै गायतेत्यादि ऋचः पञ्च जपेत्तथा । मधुमध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम् । गायत्र्यनन्तरं सोऽत्र मधुमन्त्रविवर्जितः । न चाश्नत्सु जपेदत्र कदाचित्पितृसंहिताम् । अन्य एव जपः कार्यः सोमसामादिकः शुभः । इति । पित्र्यमन्त्रा अश्नत्सु जपेदित्यत्रोक्तास्तान्वर्जयित्वा जपः कर्तव्य इत्यर्थः । अत्र जपत्वाविशेषादुशन्तस्त्वायन्तु न इत्यादीनामपि प्रतिषेध इति केचित् । आवाहनार्थत्वादनयोर्न प्रतिषेध इत्यन्ये । एवं च सति—ब्राह्मणानामग्निस्थानीयत्वात्तच्छरीरवर्तिपित्रावाहनस्य मन्त्रेणैवोचितत्वाच्च विधिरेव युक्तः । अन्यथा मन्त्रवत्क्रियाणाममन्त्रकत्वेनाफलत्वापत्तेः । अत्रैतच्चिन्त्यते—किं वस्त्रादिप्रयोगः कर्तव्य उत नेति । अत्र शेषं पार्वणवदित्यतिदेशेन प्राप्नोतीति । तदयुक्तम्—पितॄणामप्यत्र देवरूपत्वात् । तथा च स्मृतिः—पितॄणां रूपमास्थाय देवा अन्नमदन्ति ते । तस्मात्सव्येन दातव्यं वृद्धिपूर्वेषु दातृभिः । नान्दीमुखेति प्रयोगस्य तत्प्रतिनिधिरूपत्वाच्च । तथा ह्युक्तम्—तत्र नान्दीमुखमिति शेषः समुदाहृतः । अपि च चतुर्विंशतिमते—नान्दीमुखमिति शेषः संपादितो नान्य इत्यर्थः । 'ऋजवो दर्भाः' दर्भशब्दोऽत्र दूर्वा-

दिद्रव्योपलक्षको न समूलत्वज्ञापकः। तेनात्र दूर्वासाहचर्यादमूला ऋजुदर्भा भवन्तीत्यर्थः। तथा च पुराणसमुच्चये—दधिदूर्वाक्षतमधुरान्नमिश्रैः। अनुलेपनगन्धादि रक्तसूत्रं च शस्यते। वृद्धिश्राद्धमदैवतं स्यादुत सदैवतमिति। उभयथापि स्मृतिदर्शनात्। तथा हि—त्रिष्वप्येतेषु युग्मांस्तु भोजयेद्ब्राह्मणाञ्छुचिः। प्रदक्षिणं तु सव्येन प्रदद्याद्दैवपूर्वकमिति। मार्कण्डेयोऽपि—वैश्वदेवविहीनं तत्केचिदिच्छन्ति सूरयः। इति। तदाभ्युदयिकम्। अत्रैक आहुः—यथाशाखं व्यवस्थेति। एवं च सति तत्रापि किं श्राद्धत्रयेऽप्यविशेषेण दैवतविकल्पः किं वा श्राद्धविशेष इति संदेहः। अत्राविशेषेणैव श्राद्धत्रयेऽपीत्येके। तदहृद्यम्। श्राद्धविशेषे अदैवस्य विकल्पितत्वात्। तथा च शातातपः—नित्यश्राद्धमदैवं स्यादेकोद्दिष्टं तथैव च। मातृश्राद्धं तु युग्मे स्याददैवं प्राङ्मुखैः पृथक्। केवलमित्यर्थः। आचारतिलकेऽपि—पितरोऽन्वष्टकाश्राद्धं माता भुंक्ते सदैवतं। वृद्धावदैवतं माता पितरश्च सदैवतमिति। तस्मान्मातृश्राद्ध एवादैवत इति विकल्प इति सिद्धम्। तथा च—आन्वष्टक्ये पितृभ्यश्च तत्स्त्रीभ्यश्च सदैवतम्। ताभ्यस्त्वदैवतं वृद्धौ तेभ्यश्चैव सदैवतमिति। यत्तु त्रिष्वप्येतेष्विति वचनम् तद्द्वादशदैवत्यापेक्षयाऽन्यनवदैवत्येऽप्युपपद्यते इत्यविरोधः। 'यवैस्तिलार्थः' अर्थः प्रयोजनम्। प्रतिनिध्युपलक्षणं चैतत्। तेन यवैस्तिलप्रतिनिधिर्यथा तथा स्वधादिपदेषु स्वाहादिपदानि प्रतिनिधातव्यानीत्यर्थः। तथा चेश्वरः—कुर्यात्स्वाहा स्वधास्थाने वाचने प्रीयतामिति। वृद्धिश्राद्धेषु सर्वत्र नमो मे वृद्धिरिष्यत इति। न च यवैस्तिलार्था इति वदता यवप्रक्षेपमन्त्रोऽपि पितृपात्रेषु स्यादित्युक्तम्। तिलार्थस्यैव यवैरुपदिष्टत्वान्न मन्त्रस्येति। तिलोऽसीति प्रत्यक्षविरुद्धत्वाच्च। अतश्च तिलोऽसीति मन्त्रे एव यवोऽसीत्यादिपदक्षेपः पितृपात्रेष्वपीति। तथा चाश्वलायनः—यवोऽसि सोमदेवत्यो गोसवो देवनिर्मितः। प्रत्नमद्भिः पृक्तः पुष्टा नान्दीमुखाँल्लोकान्प्रीणाहि नः स्वाहेति। पुराणसमुच्चयेऽपि—अपसव्यं न कुर्वीत श्राद्धे नान्दीमुखे क्वचिदिति। अत्रैके वृद्धिश्राद्धे पित्र्यर्घपात्रं न्युब्जमित्याहुस्तद्विशेषवचनानवलोकननिबन्धनमित्युपेक्षणीयम्। तथा चेश्वरः—अपसव्यं पित्र्यमन्त्रा वामजानुनिपातनम्। न्युब्जपात्रं न कर्तव्यं वृद्धिश्राद्धेषु सर्वदा। वसिष्ठोऽपि—दत्त्वा पिण्डान्न कुर्वीत पिण्डपात्रमधोमुखमिति। तथा गुडधूपं प्रयत्नेन पुष्पाण्येवोत्तमानि चेति। 'संपन्नमिति तृप्तिप्रश्नः' तृप्ताः स्थेत्यत्र संपन्नमिति वदेदित्यर्थः। साकाङ्क्षत्वात्सुसंपन्नमिति प्रतिवचनम्। एतच्च पाकश्राद्ध एव नामे। तत्रैतदसम्भवात्। तथा च आमश्राद्धमनङ्गुष्ठमग्नौकरणवर्जितम्। तृप्तिप्रश्नविहीनं तु कर्तव्यं मानवैर्ध्रुवम्। इति। विहितं च विकल्पेनामश्राद्धम्। तथा च याज्ञवल्क्यः—आमश्राद्धं प्रकर्तव्यं वृद्धौ नान्दीमुखे सदा। पाकेन वा बहिःशाले सोदनं बदरं दधीति। अत्र यथाकुलं यथासम्भवं वा विकल्पः। अत्रैतच्चिन्त्यते—किमामश्राद्धे पिण्डदानमामेन कार्यमुत पाकेनेति। तत्रैक आहुः—आमश्राद्धं यदा कुर्याद्विधिज्ञः श्राद्धदस्तदा। तेनाग्नौ करणं कुर्यात्पिण्डांस्तेनैव निर्वपेत्। यत्प्रदद्याद्द्विजातिभ्यः शृतं वा यदि वाऽशृतम्। तेनाग्नौकरणं कुर्यात्पिण्डांस्तेनैव निर्वपेदिति मत्स्यपुराणव्यासवचनाभ्यामामेन विहितत्वादामेनैवेति। तदयुक्तम्। आमश्राद्धं यदा कुर्यात्पिण्डदानं कथं भवेत्। गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वेति पाकेन विहितत्वात्। एवं तर्हि विकल्पोऽस्त्विति। न। व्यवस्थासंभवेऽष्टदोषदुष्टत्वात्। तस्माद्द्विजकर्तृके पाकेन शूद्रकर्तृके आमेनेति व्यवस्थेत्यन्ये। तन्नातीव शोभते। साग्निनिरग्न्योर्विषयानन्यवसायापत्तेः। तस्मात्साग्नेः पाकेनाग्नौकरणं पिण्डं निरग्नेरामान्नेनेति व्यवस्था। अथवा यथाकुलमिति। यच्च आमेन पिण्डान्दद्यात् यो विप्रान्पक्वेन भोजयेत्। पक्वेन कुरुते पिण्डान्विप्रेष्वामं प्रयच्छति। तावुभौ मनुना प्रोक्तौ नरकार्हौ न संशयः। तस्माद्विपर्ययं विद्वान्न कुर्याच्छ्राद्धकर्मणीति। तच्छ्राद्धान्तरविषयम्। 'दधिबदराक्षतमिश्राः पिण्डाः' अक्षता यवाः। मिश्रणं मिश्रः दध्यादिभिर्मिश्रितोदनेन पिण्डा देया इत्यर्थः। बहुव्रीह्युपलब्धेः। अत्रैक आहुः—दध्यादित्रयमेव मे-

लयित्वा देया इति। तदयुक्तम्। शाल्यन्नस्य विहितत्वात्। तथा चाङ्गिराः—शाल्यन्नं मधुसंयुक्तं बदराणि यवास्तथा। मिश्राणि कृत्वा चत्वारि पिण्डाञ्छ्रीफलसंमितान्। दद्यादिति। कात्यायनोऽपि—सर्वस्मादन्नमुद्धृत्य व्यञ्जनैरुपसिच्य च। संयोज्य यवकर्कन्धुदधिभिः प्राङ्मुखस्ततः। इति। पिण्डग्रहणमपिण्डकव्युदासार्थम्। एतच्च साग्निविषयम्। तथा च निगमः—आहिताग्नेः पित्रर्चनं पिण्डैरेवेति। योऽग्नौ तु विद्यमाने हि वृद्धौ पिण्डान्न निर्वपेत्। पतन्ति पितरस्तस्य नरके स तु पच्यते। इति। यत्तु—पिण्डनिर्वपणं कुर्यान्न वा कुर्यान्नराधिपेति भविष्यवचनम् यच्च—वृद्धौ विकल्पेन पिण्डदानं बुधैः स्मृतमिति वचनम् तन्न निरग्निविषयम्। तथा च—यावत्यन्नाग्निसंबन्ध उत्पन्नाग्निस्तथैव च। तावद्वृद्धिषु सर्वासु संकल्पश्राद्धमाचरेत्। संकल्पश्राद्धमपिण्डकम्। अत्र विशेषः—पिण्डहीनेऽपि कर्तव्यं विकिरं पात्रपूरणम्। अग्नौकरणमर्घं चेत्येतच्छ्राद्धचतुष्टयम्। वर्जने पिण्डहीनेऽपि सर्वमर्घादिकं भवेत्। कुशान्स्थाप्य स्वधां कुर्यात्क्षिपेदग्नौ जलेऽपि वेति। यत्तु—संकल्पं तु यदा कुर्यान्न कुर्यात्पात्रपूरणमित्यादि तत् श्राद्धान्तरविषयमपिण्डकयथादेशकुलाचारविषयं वा। वृद्धिश्राद्धे कुलाचारदेशकालाद्यपेक्ष्य हीति भविष्यद्वाक्यशेषात्। अत्रैतच्चिन्त्यते—किमत्रावनेजनमुदकेन देयमुतान्यद्रव्येणेति। तत्रैक आहुः—तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेदित्यनेन पिण्डपात्रक्षालनजलेनैवेति। अन्ये त्वाहुः—क्षालनोदकस्य छन्दोगविषयत्वादुदकेनैवेति। तदुभयमपि विशेषवचनानुपलब्धिनिबन्धनमित्यवधेयम्। क्षालनोदकस्य प्रत्यवनेजनविषयत्वात्क्षीरेण विशिष्टविधानाच्चेति। तथा—प्राङ्मुखस्त्वथ दर्भेषु दद्यात्क्षीरावनेजनम्। दधिबदरयवमधुयुक्तं श्रीफलसंनिभम्। तथाऽक्षय्योदकस्थाने दद्यात्क्षीरयवोदकमिति ब्रह्मपुराणवचनात्। अतश्च क्षीरेणैवेति। पुनश्चिन्त्यते—पिण्डदानमपि किं देवतीर्थेनाहोस्वित्प्राजापत्येनेति। तत्रैक आहुः—दध्यक्षतैः सबदरैः प्राङ्मुखो वाऽप्युदङ्मुखः। देवतीर्थेन वा पिण्डान्दद्यात्कायेन वा नृपेत्यनेनोभयतीर्थस्य विहितत्वाद्विकल्प एवेति। अन्ये त्वाहुः—छन्दोगा देवतीर्थेन वाजसनेयिप्रभृतयः प्राजापत्येनेति। तथा च मार्कण्डेयः—नान्दीमुखानां कुर्वीत प्राज्ञः पिण्डोदकक्रियाम्। प्राजापत्येन तीर्थेन यच्च किंचित्प्रदीयते। इति अत्रानूचानाः प्रमाणम्। पिण्डोदकव्यतिरिक्तं देवतीर्थेन, पिण्डोदकं प्राजापत्येनेति व्यवस्था वा। अत्र विशेषमाह स्मृतिः—बहुमातृकपुत्रो यः श्राद्धेष्वन्वष्टकादिषु। सर्वासां नाम संकीर्त्य पिण्डमेकं स निर्वपेत्। पुराणसमुच्चये—एकस्य बहवो भार्या एकः पुत्रस्तथा यदि। एकेनापि सपुत्रास्ताः सर्वासां पिण्डदस्तु सः। बह्वीनामेकपत्नीनामेका चेत्पुत्रिणी भवेत्। तेन पुत्रेण पुत्रिण्यः सर्वास्ता मनुरब्रवीत्। इति। अत्रैतत्संदिह्यते—किमर्घदाने पिण्डवदेकस्मिन्सर्वासामुद्देशः किं वा पृथगिति। तत्रैक आहुः—अर्घपिण्डाङ्गत्वेदार्नीं प्रधानकर्मत्वानुरोधेन पिण्डवद्विधानमेवेति। तदयुक्तम्। अर्घदानस्य पृथक्त्वेनापदेशात्। तथा च गालवः—अनेका मातरो यस्य श्राद्धे चापरपाक्षिके। अर्घदानं पृथक्कुर्यात्पिण्डमेकं च निर्वपेदिति। अपरपाक्षिक इति श्राद्धान्तरोपलक्षणम्। अत्रैके दाक्षिणात्याः—वृद्धिश्राद्धेषु प्रपितामहमारभ्यार्वाचीनं पिण्डदानादि प्रयोगमाचरन्ति। नान्दीमुखे विवाहे च प्रपितामहपूर्वकम्। वाक्यं समुच्चरेद्विद्वानन्यत्र पितृपूर्वकमिति वचनादिति। तदनुचितम्। नान्दीमुखाः पितरः पितामहाः प्रपितामहाः श्राद्धकर्मणि। तस्माच्छ्राद्धेषु सर्वेषु वृद्धिमत्स्वितरेषु च। मूलमध्याग्रदेशेषु ईषत्सक्तांश्च निर्वपेदिति। उत्तरोत्तरपुत्रपौत्रादिभिः समृतः। अधराणामग्रमध्यमूलक्रमेणाधोदानेनाधरः पुत्रादिभिर्हीनो भवेदित्यर्थः। तस्मादत्र शाखायां तन्नोचितमिति। यत्तु नान्दीमुखे विवाहे चेति वचनं तदन्यशाखिविषयं देशकुलधर्मादिविषयं वेत्यर्थः। अत्रैतच्चिन्त्यते—वेदिकायां रेखात्रयं पिण्डदानं च किमुदक्संस्थं कर्तव्यमुत दक्षिणासंस्थमिति। अत्रैक आहुः—अप्रदक्षिणत्वेऽपि अस्य श्राद्धस्य दैविकत्वादुदक्संस्थमेवेति। तदयुक्तम्। आभ्यु-

दयिके प्रदक्षिणमुपचार इति विरोधात् । अप्रदक्षिणत्वे तु न प्रमाणमुपलब्धम् । दक्षिणासंस्थत्वे च प्रदक्षिणं प्रमाणमस्ति । तस्माद्दक्षिणसंस्थमेव रेखापिण्डदानादि । तथा च कात्यायन एव—द्वितीयं च तृतीयं च मध्यदेशाग्रदेशयोः । मातामहादिप्रभृतीनेतेषामेव वामतः । इति । एतेषां पित्रादित्रयाणां वाम इत्यर्थः । तत्र पित्रादीनां मध्ये देयत्वेन संबोध्यत्वेन च स्वसंमुखत्वाद्दक्षिणासंस्थत्वेन तेषां वामता । यत्त्वाशादित्येन पिण्डानामवयवाभावाद्वामतायां कर्तृगतोऽवयव इष्यत इत्युक्तम् । तदसंगतम् । एतेषामेव वामत इत्येतच्छब्देन पित्रादीनां परामृष्टत्वात् । कर्त्रवयवत्वे त्वेतेषामिति बहुत्वविरोधाच्च । तस्माद्दक्षिणासंस्थत्वेनैव तद्वामतासंभवः । अत्रार्थे वृद्धयाज्ञवल्क्यः—जीवद्भर्तरि दक्षिण इति । अपि च स्मृत्यन्तरम् । श्राद्धे सदैव वामाङ्के पत्नीनामुदकं हरेत् । वृद्धिश्राद्धेषु नारीणां दक्षिणाङ्के सदा भवेत् इति । श्राद्धे सदैव वामाङ्क इत्येतदापस्तम्बादिविषयम् । तेषां पित्रादिपिण्डपश्चिमत एव पत्नीपिण्डविधानात् । तथा चापस्तम्बगृह्यम्—द्विधाभूतं भवति तथा सदक्षिणाग्रान् दर्भान् लिखितदेशे संस्तीर्य तत्र पूर्वभागे पित्रादिवर्गार्थं स्तरणं पश्चाद्भागे तु मात्रादिवर्गार्थमिति । स्त्रीभ्यश्च पिण्डा इह पश्चिमाः स्युः इति तद्गृह्यभाष्यार्थसंग्रहकारः । वृद्धिश्राद्धेषु नारीणां दक्षिणाग्रे सदा भवेदिति तु सर्वविषयम् । तस्माद्रेखापिण्डदानादिकं प्राङ्मुखकर्तुर्दक्षिणासंस्थमेव वृद्धिश्राद्धेषु सर्वत्र कर्तव्यमिति सर्वमनवद्यम् । ब्राह्मणनिवेशोऽप्येवं प्रागारभ्य पश्चात्संस्थ एवेति । 'नान्दीमुखान्पितॄनावाहयिष्य इति पृच्छति' लिङर्थे लट् । अत्रैतद्वक्तव्यम्—किं पित्रादिकस्य नान्दीमुखत्वमाहोस्विद्वृद्धप्रपितामहादित्रिकस्येति । स्मृतिषूभयथा दर्शनात् । तथा च ब्रह्मपुराणम्—पिता पितामहश्चैव तथैव प्रपितामहः । त्रयो ह्यश्रुमुखा एते पितरः परिकीर्तिताः । तेभ्यः पूर्वतरा ये च प्रजावन्तः सुखैधिणः । ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते । प्रसन्नमुखसंसर्गान्मङ्गलीयास्ततस्तु ते । इति । अतश्च वृद्धप्रपितामहादिकस्यैव नान्दीमुखत्वेनाभ्युदयिकत्वं प्राप्नोतीति । अथवा—पिता पितामहश्चैव तथैव प्रपितामहः । पिण्डसंबन्धिनो ह्येते पितरः परिकीर्तिताः । इत्यादिवचनैरश्रुमुखानामेव पिण्डसंबन्धित्वात्पित्रादिकस्यापि नान्दीमुखत्वमिति । तथा च सूत्रम्—नान्दीमुखाः पितरः पितामहाः प्रपितामहा इति । मार्कण्डेयोऽपि—ये स्युः पितामहादूर्ध्वं ते स्युर्नान्दीमुखा अपीति प्रपितामहस्यापि नान्दीमुखत्वं न वृद्धादित्रिकस्यैवेति । एवं च सत्युभयेषामपि नान्दीमुखत्वमविरुद्धम् । यत्वाश्रुमुखादिसंज्ञाकीर्तनं तत्कारणपरम् । प्रसन्नमुखसंसर्गादित्यादिना नान्दीमुखा वंशवृद्धिमीहन्ते । अश्रुमुखास्तु पितॄनुद्धरणसमर्थाः सन्तमिति श्राद्धे निरूपितत्वात् । तस्माज्जीवत्पितृमातामहादिकस्य कर्तुरधिकारार्थं वृद्धप्रपितामहादिकस्य नान्दीमुखत्वोत्कीर्तनं मृतपितृमातृमातामहादिकस्य कर्तुरधिकारार्थमश्रुमुखानां नान्दीमुखत्वमिति व्यवस्थेत्यविरोधः । तथा च चतुर्विंशतिमतम्—नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् । वाक्यं समुच्चरेद्विद्वानन्यत्र पितृपूर्वकम् । जीवत्पितृकः प्रपितामहपूर्वकमन्यः मृतपितृकः पितृपूर्वकमित्यर्थः । दाक्षिणात्यास्तु—प्रपितामहपितामहपितरिति क्रमविध्यर्थमेतदित्याहुः । कात्यायनोऽपि—जीवन्तमति दद्याद्वा प्रेतायान्नोदके द्विजः । पितुः पितृभ्यो वा दद्यात्स पितेत्यपरा श्रुतिः । ब्राह्मेऽपि—उक्तमादाय पिण्डं तु कृत्वा बिल्वप्रमाणकम् । दद्यात्पितामहादिभ्यो दर्भमूले यथाक्रममिति । पठन्ति च—जनन्यां विद्यमानायां यजेद्यस्तु पितामहीम् । मातृघ्नः स च विज्ञेयो वृद्धिश्राद्धादृते क्वचिदिति । अतश्च जीवत्पित्रादिपङ्क्तित्रिकस्य वृद्धिश्राद्धेऽधिकार इति सिद्धम् । अत्रैक आहुः—त्रिषु पितृमातृमातामहानां मध्ये यो जीवति तद्वर्गं परित्यज्य पार्वणद्वयमेकं वा यथासंभवं कर्तव्यम् । त्रिषु जीवत्सु मातृपूजनमेव न श्राद्धमिति । तथा च—पितृवर्गे मातृवर्गे तथा मातामहस्य च । जीवेद्यदि च वर्गादिस्तं वर्गं तु परित्यजेदिति । तथा—सपितुः पितृकृत्येषु अधिकारो न विद्यते । न जीवन्तमतिक्रम्य किंचिद्दद्यादिति श्रुतिः । तथा—पित्र्यं जीवत्पितुर्नोक्तमग्नौ होमोऽपि पाक्षिकः । न जीवन्तमतिक्रम्य

किंचिद्दद्यादिति श्रुतिः। इति। जीवत्पितृकस्य होमान्तमनारम्भो वेत्यादिवचनेभ्य इति । यत्तु—उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे। तीर्थे ब्राह्मणमायाते षडेते जीवतः पितुरिति मैत्रायणीयपरिशिष्टं, तन्मैत्रायणीयशाखिनां साग्नीनामेव । न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः। येभ्य एव पिता दद्यात्तेभ्यः कुर्यात्तु साग्निकः। इति सुमन्तुवचनेन निरग्नेर्जीवत्पितृकस्य श्राद्धानधिकारादिति। अत्रोच्यते—यदुक्तं पितृवर्गे मातृवर्गे तथा मातामहस्य चेत्यादि। तन्न । जीवद्वर्गपरित्यागस्य तीर्थब्राह्मणसंपत्त्यादौ निरग्निजीवत्पितृकविषयत्वेन चरितार्थत्वात्। तथा चाधिकारमाह—महानदीषु सर्वासु तीर्थेषु च गयां विना। जीवत्पिताऽपि कुर्वीत श्राद्धं पार्वणधर्मवदिति। यच्चोक्तं—त्रिषु जीवत्सु मातृपूजनेनैव श्राद्धसिद्धिरिति तदप्यसंगतम्। अङ्गिनः श्राद्धस्य लोपेऽङ्गस्य मातृपूजनस्य प्रवृत्तावाश्रयोपपत्तेः। न च श्राद्धमन्तरेण मातृपूजायाः कर्मणोऽङ्गत्वम्। यच्चाभ्यधायि—सपितुः पितृकृत्येष्वित्यादिनिषेधस्तस्य वृद्धिश्राद्धादन्यश्राद्धविषयत्वात्। तथा च क्रतुः—अष्टकासु च संक्रान्तौ मन्वादिषु युगादिषु। चन्द्रसूर्यग्रहे पाते स्वेच्छया पुण्ययोगतः । जीवत्पिता नैव कुर्याच्छ्राद्धं काम्यं तथाऽखिलम्। अखिलमिति व्यतीपातो जन्मऋक्षं चन्द्रसूर्यग्रहौ तथा । तिथिनक्षत्रवारांश्च उद्दिश्याभ्युदयं तथा। एतांस्तु श्राद्धकालान्वै काम्यानाह प्रजापतिरित्यादिकम्। अभ्युदय आराममहादानाद्युत्सवः। यत्त्वाम्नातं—न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः। इत्यनेन निरग्निजीवत्पितृक इत्यनेन साग्निजीवत्पितृकस्य श्राद्धविधानम् । तस्याष्टकादिनियतश्राद्धविषयं न सामान्येन सर्वश्राद्धविषयम्। गयापरपक्षादिश्राद्धनिषेधानुपपत्तेः। यदप्युक्तं—जीवत्पितृकस्य होमान्तमनारम्भो वेति तत्साग्नेः पिण्डपितृयज्ञादिनिषेधविषयं नाभ्युदयिकस्येति। तेभ्यः पूर्वतरा ये वै इत्यादिनाभ्युदयिकस्य प्रतिप्रसवोपपत्तेः । तस्माज्जीवत्पित्रादित्रिकस्याभ्युदयिकं श्राद्धं कर्तुमुचितमिति सिद्धम्। 'नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने' अत्र नान्दीमुखान्पितृनावाहयिष्य इत्यनेनैव नान्दीमुखत्वप्राप्तौ पुनस्तद्ग्रहणं सर्वत्र प्रयोगार्थम्। तदुक्तम्—तत्र नान्दीमुखमिति विशेषः समुदाहृत इति। प्रकृतिश्राद्धेष्वक्षय्योदकदानं तु अर्घदानवदिष्यते । षष्ठ्यैव नित्यं तत्कुर्यान्न चतुर्थ्यां कदाचनेति कात्यायनेन षष्ठीतत्रयोर्विहितत्वादत्र तन्निषेधो वाचनिकः। तेन प्रथमाविभक्त्या तन्त्रेण चाक्षय्योदकदानमत्र क्षीरयवोदकैर्भवतीत्यर्थः । तथा च—तथाऽक्षय्योदकस्थाने दद्यात्क्षीरयवोदकमिति। पितृग्रहणं स्वपितृप्राप्त्यर्थम् । तेन जीवत्पित्रादिकोऽपि स्वमातृमातामहादिभ्य एव दद्यान्न पितृसंबन्धिभ्य इत्यर्थः। अत्रैक आहुः—अनग्निकोऽपि कुर्वीत जन्मादौ वृद्धिकर्मणि । येभ्य एव पिता दद्यात्तानेवोद्दिश्य पार्वणमित्यादिवचनेषु यत्तच्छब्दनिर्देशात्पितृभ्य एव दद्यान्न स्वपितृभ्य इति। तदयुक्तम् । स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मस्विति कात्यायनेन—प्रादुर्भावे पुत्रपुत्र्योर्ग्रहणे चन्द्रसूर्ययोः। स्नात्वाऽनन्तरमात्मीयान्पितॄन् श्राद्धेन तर्पयेदिति कार्ष्णाजिनिना च स्वपितृभ्य एव श्राद्धविधानात्। न च मातृमातामहादिकं परित्यज्य पितृसंबंधिभ्यो दातुमुचितम्। अतश्च स्वपितृभ्य एवेति सूक्तम्। 'नान्दीमुखान्पितॄन्वाचयिष्य इति पृच्छति' वाच्यतामित्यनुज्ञातो नान्दीमुखाः पितरः पितामहाः नान्दीमुखाः मातामहाः प्रमातामहाः वृद्धप्रमातामहाश्च प्रीयन्तामिति। अत्र च प्रथमोद्दिष्टनान्दीमुखशब्देन वृद्धप्रमातामहादित्रिकस्यैव नान्दीमुखत्वं मा भूदित्यश्रुमुखानामपि तत्प्राप्त्यर्थं पुनर्नान्दीमुखग्रहणम्। एवं मातामहेष्वपि। अत एव मन्त्रे पितरः पितामहा इति बहुत्वमुक्तम्। चकारो मातृवर्गप्राप्त्यर्थः। तथा च ब्रह्मपुराणम्—मातामहेभ्यश्च तथा नान्दीवक्त्रेभ्य एव च। अथ नान्दीमुखीभ्यश्च मातृभ्यः श्राद्धमुत्तममिति। ननु चाभ्युदयिके मातृश्राद्धस्य पूर्वभावित्वात्पितृग्रहणं किमर्थमुच्यते। अग्निहोत्रं जुहोति यवागूं पचतीति वत्पाठोऽर्थेन बाध्यत इत्यदोषः। तथा च शाट्यायनः—नान्दीमुखीभ्य इत्यादि । मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदनन्तरम्। ततो मातामहानां च वृद्धौ

श्राद्धत्रयं स्मृतमित्यादि च। अतश्च नान्दीमुख्यो मातरः प्रीयन्तामित्यादिक्रमेण यथालिङ्गं प्रयोगः। अत्रैतत्संदिह्यते—किमत्र नवदैवत्यं श्राद्धमुत द्वादशदैवत्यमिति। उभयथा च वचनदर्शनात्। तथा हि—मातृभ्यः प्रथमं दद्यात्पितृभ्यस्तदनन्तरम्। ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतमित्यादि। चतुर्विंशतिमते तु—मातृपूर्वान् पितॄन् पूज्य ततो मातामहीस्तथा। मातामहं ततः केचिदेव स्तु भोजयेत्। पुराणसमुच्चयेऽपि—शस्तं नान्दीमुखश्राद्धं पिण्डैर्द्वादशभिस्तदा। तथाऽपि दूर्वाक्षतयवैर्बदरेण विमिश्रितैः। पिण्डा नान्दीमुखे देया मातृपूर्वाश्च द्वादशेति। एवं विप्रतिपत्तौ यथाशाखं यथाकुलदेशं वा व्यवस्थेत्यविरोधः। तुल्यविकल्पो वा। अथवा—धनधान्यपुत्रपश्वादिवृद्ध्यर्थं क्रियमाणं वृद्धिश्राद्धम्। अग्न्याधानाद्यभ्युदयनिमित्तमाभ्युदयिकमिति भेदः। तत्र वृद्धिश्राद्धं द्वादशदैवत्यमाभ्युदयिकं नवदैवत्यमिति व्यवस्थेति। अन्वष्टकायां यच्छ्राद्धं यच्छ्राद्धं वृद्धिहेतुकम्। पित्रादीनां पृथग्दानं स्त्रीणां पिण्डः पृथक्पृथगित्यत्र वृद्धिहेतुकमित्यभिधानात्। तथा—शरीरोपचये श्राद्धमर्थोपचय एव च। पुष्ट्यर्थमिति विज्ञेयमौपचारिकमुच्यते। तथा—नक्षत्रग्रहपीडासु दुष्टस्वप्नावलोकने। इच्छाश्राद्धानि कुर्वीत नवसस्यागमे तथेति वचनादिति। 'न स्वधां प्रयुञ्जीत' निषेधान्तरोपलक्षणं चैतत्। तेन शर्मादिकमप्यत्र न प्रयुञ्जीतेत्यर्थः। तथा च पुराणसमुच्चये—न स्वधा शर्म वर्मेति पितृनाम न चोच्चरेत्। न कर्म पितृतीर्थेन न कुशा द्विगुणीकृताः। न तिलैर्नापसव्येन पित्र्यमन्त्रविवर्जितम्। अस्मच्छब्दं न कुर्वीत श्राद्धे नान्दीमुखे क्वचिदिति। अतश्च नान्दीमुखपितरमुकगोत्रेत्यादिप्रयोगः। अन्ये तु पार्वणवन्नामशर्मादिकमपि प्रयुञ्जते तन्निषेधदर्शनात्कथमिति वाच्यम्। पार्वणवदित्यतिदेशाद्वा तद्विधिः। प्रकृते स्वधावाचने स्वधां न प्रयुञ्जीतेति निषेध इति। तदयुक्तम्। सामान्येनाभ्युदयिके तन्निषेधात्। 'युग्मानाशयेदत्र' अत्राभ्युदयिके युग्मान् द्विचतुरादीन् विप्रानाशयेद्भोजयेदित्यर्थः। अस्य दैविकत्वाद्देवे युग्मान् यथाशक्तीति परिभाषयैव युग्मत्वप्राप्तौ विशिष्टविध्यर्थं युग्मग्रहणम्। तेन पित्र्येऽपि युग्मानेव प्रातर्निमन्त्र्याशयेदित्यर्थः। तथा च कात्यायनः—प्रातरामन्त्रितान्विप्रान्प्राङ्मुखानयतस्तथेति। अन्यच्च—ज्येष्ठोत्तरकारान्युग्मान्कराग्रप्रपवित्रकान्। कृत्वार्घं संप्रदातव्यं नैकैकस्यात्र दीयत इति। युग्मानिति पुंस्त्वमविवक्षितम्। तेन पुमभावे स्त्रियोऽपीत्यर्थः। तथा च—मातृश्राद्धे तु विप्राणामलाभे पूजयेदपि। पतिपुत्रान्विता भव्या योषितोऽष्टौ कुलोद्भवाः। इति वृद्धवसिष्ठवचनात्। शङ्खोऽपि—पित्रादित्रयपत्नीस्तु भोज्यामातृप्रतिद्विजैः। स्त्रीणामेव तु तद्यस्मान्मातृश्राद्धमतः स्मृतमिति। आशयेदित्यपि विशिष्टविध्यर्थम्। तृप्तिप्रश्नेनैव भोजनोपलब्धेः, अतश्च गुडशर्करादिना मधुरान्नं भोजयेदिति विशिष्टविधिरित्यर्थः। तथा च भविष्यत्पुराणम्—ब्राह्मणेभ्यस्ततो दद्याद्भोजनं मधुरं खग। गुडमिश्रं सितायुक्तं जवं चोदनोत्तरम्। सरलान्नोदकाश्चैव नवाम्लकटुकास्तथा। कृष्णात्रेयोऽपि—अत्र श्राद्धेषु दातव्यं न मांसं पितृपूजने। इति। अपि च—अपसव्यं जानुपातमम्लं मांसं च वारिजम्। रक्तं विवर्जयेत्समूलांश्च तिलानपीति। तथा द्राक्षामलकमूलानि यवान्चाथ निवेदयेत्। तानेव दक्षिणार्थं तु दद्याद्विप्रेषु सर्वदेति ब्रह्मपुराणम्। अतश्च—द्राक्षामलकमूलयवनिष्क्रयिणीं दक्षिणां युवाभ्यां संप्रदद इत्यादिप्रयोगः नैकैकस्यात्र दीयत इत्युक्तेः॥ ॥ अथाभ्युदयिकश्राद्धसंदेहो निरस्यते। तत्र कात्यायनः—स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु। पिण्डानोद्वहनात्तेषां तस्याभावे तु तत्क्रमात्। अस्यार्थः—पिण्डशब्दः श्राद्धं लक्षयति। आ उद्वहनादित्याङभिविधौ। ततश्च पुत्रस्य निषेकादिप्रथमविवाहपर्यन्तेषु संस्कारकर्मसु पिता स्वमातृस्वपितृस्वमातामहेभ्यः श्राद्धं दद्यान्न पुत्रमातृमातामहादिभ्यः। तस्य पितुरभावे तेषां पितुर्मात्रादीनामेव नवानां तत्क्रमाद्येन क्रमेण पित्रा दत्तं तेनैव क्रमेणाधिकारी ज्येष्ठभ्रात्रादिरपि दद्यादिति। नन्वेवं सति संस्कार्यस्य पुत्रादेर्मृतपित्रोः श्राद्धादौ मुख्याधिकारित्वात्तदतिक्रमो न युक्त इति। न च जीवत्पित्रोर्योऽनुष्ठानक्रमः स मृतपित्रोरप्युचित इति वाच्यम्। प्रेतेभ्यो दद्या-

दिति। न च जीवत्पित्रादिमारभ्यैव श्राद्धं भ्रात्रादिरप्यधिकारी कुर्यादित्येवार्थः। तस्याभावे सुतः क्रमादिति पाठेऽपि तदर्थस्य प्रतीयमानत्वाच्चेति। अत्रोच्यते—असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैरित्यादिना भ्रात्रादयः पित्रभावे प्रतिनिधित्वेन विधीयन्ते। प्रतिनिधेश्च स तद्धर्मा कर्मयोगादिति कात्यायनपरिभाषया पितृधर्मप्राप्तेर्भ्रात्रादिः पितृसमानधर्मेति। किं च-तस्याभाव इत्यभावः पञ्चविधः। प्रागभावः, प्रध्वंसाभावः, संनिध्यभावोऽधिकाराभावोऽत्यंताभावश्चेति। तत्र संस्कार्ये सति प्रागभावात्यन्ताभावयोरसंभव एव प्रध्वंसाभावसंनिध्यभावाधिकाराभावानां संभवोऽस्तीति तत्र सर्वत्रापि वचनबलात्पितुः पितृभ्यो दानं विधीयते न संस्कार्यपितृभ्यः। तथा च स्मृतिः-पितरो जनकस्येत्या यावद्व्रतमनाहितम्।। समाहितव्रतः पश्चात्स्वान्यजेत पितामहानिति। पितामहानिति पित्राद्युपलक्षणं। तथा—ब्राह्मणादिहते ताते पतितेऽसंगवर्जिते। व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसावित्यादि। यत्तु प्रेतेभ्यो दद्यादिति वचनं तदधिकारसंभवविषयम्। अधिकारश्च सहायत्वेन विवाहानन्तरं स्वपितृभ्यो दातुं भवतीति। तथा च ऋष्यश्रृङ्गः—नाश्नाति यो द्विजो मांसं यस्य नो दारसंग्रहः। तावेतौ मुनिभिः प्रोक्तावनर्हौ मन्त्र दूषकाविति। नाश्नाति मांसं श्राद्ध इति शेषः। ननु च समाहितव्रतः पश्चात्स्वान्यजेत पितामहानित्यनेनोपनयनादूर्ध्वमेव स्वपितृभ्यो दातुमधिकारस्तत्कथं विवाहानन्तरमिति। उच्यते—उपनयनादूर्ध्वं स्वपितृभ्यो दातुं कर्त्रन्तराभाव एकपुत्रविषयम्। कर्त्रन्तरसद्भावे तु प्रतिनिधिभूतः स एव तदाद्यविवाहपर्यन्तं संस्कार्यस्य पितृपितृभ्य एव दद्यादिति। तथा च सुमन्तुः—श्राद्धं कुर्यादवश्यं तु प्रमीतपितृको द्विजः। व्रतस्थो वाऽव्रतस्थो वा एक एव भवेद्यदीति। तस्माद्युक्तमुक्तं पित्रभावे प्रतिनिधेः पितृधर्मप्राप्त्या संस्कार्यस्य पितुर्मातृपितामहेभ्यः श्राद्धं दद्यादिति। तथा च स्मृतिः-नान्दीश्राद्धं पिता दद्यादाद्ये पाणिग्रहे बुधः। अत उर्ध्वं प्रकर्तव्यं स्वयमेव तु नान्दिकम्। अपरमपि—पित्रोस्तु जीवतः पुत्रः कुरुते दारसंग्रहम्। पितुर्नान्दीमुखं प्रोक्तं न पुत्रस्य कथंचनेति। ननु पित्रोर्जीवतोरेव तत्पित्रोर्नान्दीमुखत्वं प्रोक्तं मृतयोस्त्वन्यः करोतीति तत्कथं संस्कार्यस्य पितॄणामतिक्रमो युक्तः। सत्यम्, ओद्वहनादित्यवधिना पितृपितृभ्य एव विधानात्स तद्धर्मेति परिभाषया प्रतिषेधस्तदतिक्रमस्य वाचनिकत्वात्। अपि च वचनान्तरम्—कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः। नामकर्मणि बालानां चूडाकर्मादिके तथा। सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने। नान्दीमुखं पितृगणं पूजयेत्प्रयतो गृहीति गृहिण एवोपदेशात्। चूडाकर्मादिक इत्याद्यविवाहपर्यन्तं वेदितव्यम्। तदूर्ध्वं तु द्वितीयविवाहादावपि सर्वत्र जीवत्पितृकः पितृपितृभ्यो मृतपितृकः स्वपितृभ्य इति विवेकः। तथा चायमर्थः—पिता स्वपुत्रस्य निषेकादिविवाहपर्यन्तसंस्कारकर्मसु स्वमातृमातामहेभ्यः श्राद्धं कुर्यात्। पितुरभावेऽसंनिहिते वाधिकाराभावे वा तत्प्रतिनिधिर्ज्येष्ठभ्रात्रादिर्विवाहपर्यन्तकर्मसु संस्कार्यस्य (पितृ)पितृभ्य एवेति सर्वमनवद्यम्॥६॥

इति श्राद्धकाशिकायां सूत्रवृत्तौ आभ्युदयिकं श्राद्धम्।

---

अथ तृप्तिर्ग्राम्याभिरोषधीभिर्मांसं तृप्तिस्तदभाव आरण्याभिर्मूलफलैरोषधीभिर्वा सहान्नेनोत्तरास्तर्पयन्ति छागोस्रमेषानालभ्य क्रीत्वा लब्ध्वा वा न स्वयंमृतानाहृत्य पचेन्मासद्वयं तु मत्स्यैर्मासत्रयं तु हारिणेन चतुरऽऔरभ्रेण पञ्च शाकुनेन षट् छागेन सप्त कौर्मेणाष्टौ वाराहेण नव मेषमांसेन

**दश माहिषेणैकादश पार्षतेन संवत्सरं तु गव्येन पयसा पायसेन वा वार्ध्रीणसमाᳫंसेन द्वादश वर्षाणि ॥ ७ ॥**

( कर्कः )—अथ तृप्तिर्ग्राम्याभिरित्येवमादि अमावास्यायामित्येवमन्तं सूत्रं निगदव्याख्यातमिति ॥

इति कर्कोपाध्यायकृतं श्राद्धविधिभाष्यं समाप्तम् ॥

( गदाधरः )—'अथ तृप्तिः' उच्यत इति शेषः । 'ग्राम्या…तृप्तिः' पितृणामिति शेषः । ताश्च यवव्रीहिमाषतिलाद्याः । मनुः—तिलैर्व्रीहियवैर्माषैरद्भिर्मूलैः फलेन वा । दत्तेन मासं प्रीयन्ते विधिवत्पितरो नृणामिति । 'तद्…ण्याभिः' मासं तृप्तिरिति वर्तते । ग्राम्याणामभावे आरण्याभिः श्यामाकनीवाराद्याभिः । 'मूल…भिर्वा' स्पष्टमेतत् । 'सहा…यन्ति' उत्तरा अग्रेवक्ष्यमाणाः पदार्थाः छागादयः सर्वे अन्नेन मूलफलौषधीभिः सह दत्तास्तर्पयन्तीत्यर्थः । नतु केवलाः । 'छागोस्र…पचेत्' छागोस्रमेषाणां मध्येऽन्यतममन्येन हतं क्रयेण गृहीत्वा अथ लब्धं वाऽऽनीय पितॄंस्तर्पयेत् नतु स्वयंमृतानामाहरणम् । 'मासद्वयं तु…वर्षाणि' पाठीनादयो मत्स्याः हरिणादयो मृगाः उरभ्र आरण्यो मेषः शकुनिः पक्षी सोऽप्यनिषिद्धो ग्राह्यः, मेषश्चित्रमृगः वार्ध्रीणसो निगमोक्तः । त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् । वार्ध्रीणसं तु तं प्राहुर्याज्ञिकाः श्राद्धकर्मणि । त्रिपिबमित्युदकपानसमये मुखं कर्णद्वयं चोदकमध्ये पततीति त्रिपिबः ॥ इति सप्तमी कण्डिका ॥ ७ ॥

( श्राद्धका० )—इत्थं पार्वणादिसर्वश्राद्धमभिधायाधुना तृप्ताः स्थेत्यादिना तृप्तेरदृष्टार्थत्वात्तामन्तरेण चातृप्ताः पितरो यान्तीत्यादिदोषदर्शनादनेकविधद्रव्यैस्तां प्रतिपादयिपुः सूत्रमारभते 'अथ तृप्तिः' वक्ष्यत इति शेषः । अथ शब्दोऽधिकारार्थः । आनन्तर्यार्थस्य सूत्रादेव लब्धेः । तेन ग्राम्यारण्योषधिमूलफलमृगपक्षिमीनादिनानाविधद्रव्यैस्तृप्तिरधिक्रियते वक्तुमित्यर्थः । तथा चादित्यपुराणम्—विविधान्नानि मांसानि पितृणां तृप्तिकारणात् । दातव्यान्यनिषिद्धानि श्राद्धं चैवाक्षयं भवेदिति । ग्राम्याभिरौषधिभिर्मासं तृप्तिः । पितृणामिति शेषः । कालाध्वनोरिति द्वितीया । अत्र तृप्तिरित्यनुवृत्तौ पुनस्तद्ग्रहणमपां प्राशस्त्यर्थं तेनौषधिजलाभ्यामेव तृप्तिर्न केवलौषधिभिरित्यर्थः । तथा च श्रुतिः—आपो वा ओषधीनाᳫं रसस्तस्मादोषधयः खादितानधिन्वन्त्योषधय उपहापाᳫं रसस्तस्मादापः पीता केवल्यो न धिन्वंति यदैवोभय संसृष्टा भवन्त्यथैव धिन्वतीत्यन्वयव्यतिरेकार्थवाद इति । ओषध्यो धान्यानि तानि च श्वेतरक्तवर्णानि श्राद्धे देयानि । कृष्णधान्यानि सर्वाणि वर्जयेच्छ्राद्धकर्मणीति निषेधात् । प्रचेतास्त्वाह—कृष्णमाषास्तिलाश्चैव श्रेष्ठाः स्युर्यवशालयः । महायवा व्रीहियवास्तथैव च मधूलिकाः । कृष्णाः श्वेताश्च लोहाश्च ग्राह्या स्युः श्राद्धकर्मणि । एतद्व्याख्यानं माधवीये । यवाः शितशूकाः । महायवा व्रीहियवाश्च यवविशेषाः । मधूलिका धान्यभेदः । कृष्णाः स्थलजाः कृष्णव्रीहयः । लोहा रक्तशालयः । अन्यस्त्वाह—मधूलिका यावनालविशेषाः । तद्विशेषणम्—कृष्णाः श्वेता लोहिताः महायवा वेणुयवा इति । अत्र कृष्णधान्यानि सर्वाणीत्यनेन विरोधान्माधवीयव्याख्यानमनुचितम् । यवा द्विविधाः—महायवा व्रीहियवाश्च । तिलाः कृष्णाः । माषाः कृष्णा निस्तुषा माषाः । तथा च—कृष्णमाषास्तिलाश्चेति । अमेध्याः सतुषा माषा निस्तुषापि मसूरिकेति च । अणुः क्षुद्रसस्यम् । प्रियङ्गुः कङ्गुस्तद्बहुवचनं पृथक् ग्रहणं च भेदापेक्षम् । तथा च निघण्टुः—पीततन्दुलिका कङ्गुः कर्कुरीमता । सितकङ्गुस्तु मुसती रक्तकङ्गुस्तु साधिका । चणकः काककङ्गुः स्याच्छ्यामाकस्तृणबीजकः । इति । मसूराः सतुषा निस्तुषाश्च न श्राद्धे देयाः । निस्तुषापि मसूरि-

केत्युक्तेः । खल्वाः खलुकुलाख्याप्रसिद्धाः । कोद्रवचणकौ वाच्यौ वा ग्राम्यत्वात् । दशेति ग्राससंख्या न हविष्यसंख्या । तथा च विष्णुः—तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलैः शाकैः श्यामाकैः प्रियङ्गुनीवारैर्गोधूमैर्मासं प्रीयन्त इति । मसूरादिग्रहणाच्च । तथा मासं तृप्तिः पितॄणां तु हविष्यान्नेन जायते इति । क्षुद्रधान्यानि श्यामाकप्रियङ्गुतिलगोधूमरक्तसर्षपवर्जं सर्वाण्यश्राद्धार्हाणि । नीरसत्वात् । तथा च, वर्ज्या मर्कट्यः श्राद्धे राजमाषास्तथाणवः । विपूषिका मसूराश्च श्राद्धकर्मणि गर्हिताः । भारद्वाजोऽपि—नीरसान्यपि सर्वाणि भक्ष्यभोज्यानि यानि च । तानि स्युर्नैव देयानि सर्वत्र श्राद्धकर्मणीति । अणवः क्षुद्रान्नानि । वृद्धयाज्ञवल्क्योऽपि—मकुष्ठा राजमाषाश्च मसूराश्च चणास्तथा । कोद्रवा मूलका राजसर्षपाः श्राद्धघातकाः । इति । राजसर्षपो राजिका । तथा च निघण्टुः—आसुरी राजिका राजी कृष्णैका राजसर्षपाः । राजिका यव इत्यन्या राजिका कृष्णसर्षपा इति । चतुर्विंशतिमतेऽपि । कोद्रवान्राजमाषांश्च कुलत्थांस्तुरकास्तथा । निष्पावांस्तु विशेषेण पंचैतान्वर्जयेत्सदा ॥ यावनालानपि तथा वर्जयन्ति विपश्चितः । इति । राजमाषाः पीतगौरवर्णमाषाः । लोविआ गौरवाश्चस इति मध्यदेशप्रसिद्धाः । निष्पावा मकुष्ठकाः । निष्पावा चेल्लाः शिम्बिसदृशा दक्षिणापथप्रसिद्धाः इति कश्चित् । चरका वनमुद्गाः । यावनालो जोण्डरीति प्रसिद्धः । तथा च निघण्टुः—यावनालो देवधान्यं जुंदलिं जुन्नलोनलः । इति । अत्र निष्पावनिषेधः कृष्णविषयः कृष्णधान्यानि सर्वाणीति निषेधात् । यवव्रीही सगोधूमौ तिलमुद्गाः ससर्षपाः । प्रियङ्गवः कोविदारा निष्पावाश्चात्र शोभना इति मार्कण्डेयेन कृष्णेतरस्य विहितत्वात् । शोभनः कृष्णेतरः । स्मृत्यन्तरे—मुद्गाढकी माषवर्जं विदलानि दद्यादिति । विदलानि दलितुं योग्यानि । मुद्गः कृष्णः । हरितमुद्गकृष्णमाषश्यामाकेति ब्रह्मपुराणे हरितस्य विहितत्वात् । माषो राजमाषः । तद्ग्रहणं कुलत्थाद्युपलक्षणम् । तथा च मरीचिः—कुलत्थाश्चणकाः श्राद्धे न देयाश्चैव कोद्रवाः । कटुकानि च सर्वाणि विरसानि तथैव च । इति । आढकी तुवरीति प्रसिद्धा । एतान्वर्जयित्वा विदलानि दद्यादित्यर्थः । नेत्यनुवृत्तौ विष्णुपुराणे—मसूरक्षारवार्ताककुलत्थशणशिम्बयः इति । शणशिम्ब्रादिशाका शाकप्रकरणे प्रपंचयिष्यन्ते । क्षारो यवक्षारादिः । शेषं स्मृतिभ्यो विज्ञेयम् । एतानि धान्यानि निस्तुषानि गव्यदुग्धादिसहितानि च मासं तृप्तिकराणि । तथा च वृद्धयाज्ञवल्क्यः मत्स्यपुराणे—तुषहीनानि धान्यानि यान्ति सर्वाणि मेध्यताम् । वर्जयित्वा मसूरान्नं मकुष्ठान्राजमाषकान् ॥ मसूरादिधान्यत्रयं निस्तुषमप्यमेध्यमित्यर्थः । तथा—अन्नं तु सदधिक्षीरगोघृतं शर्करान्वितम् । मासं प्रीणाति वै सर्वान्पितॄनित्याह केशवः ॥ कलायाः सर्वेऽपि श्राद्धे देयाः । कलायाः सर्व एव चेति वक्ष्यमाणत्वात् । तदभाव आरण्याभिः ग्राम्याभाव आरण्याभिरौषधीभिर्मासं तृप्तिः पितॄणामित्यर्थः । आरण्या अरण्ये भवाः श्यामाकप्रभृतयः । अरण्याण्णो वक्तव्य इति णप्रत्ययः । तथा च मार्कण्डेयः—'राजश्यामाकश्यामाकौ तद्वच्चैव प्रसातिका । नीवाराः पौष्कलाश्चैव धान्यानि पितृतृप्तये ' इति । पौष्कला नीवारविशेषाः । विष्णुपुराणे—व्रीहयश्च यवाश्चैव गोधूमाः कङ्गुसर्षपाः । माषा मुद्गाः सप्तमाश्च अष्टमाश्च कुलत्थकाः । श्यामाकाश्चैव नीवारा जर्तिलाः सगवेधुकाः । कोविदारसमायुक्तास्तथा वेणुयवाश्च ये । ग्राम्यारण्याः स्मृता ह्येता औषध्यश्च चतुर्दश । इति । आद्याः सप्त ग्राम्याः । अष्टमाद्या आरण्याः । 'मूलफलैरोषधीभिर्वा' अत्रानुपूर्व्या ओषधीशब्दः प्रथमं व्याख्येयः । तथा चोक्तम्—अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेत् । विप्रकृष्टं तु संदध्यादानुपूर्व्या च कल्पयेत् । इति । वाशब्दोऽभावे । ओषध्यभावे फलमूलादिना मासं तृप्तिरित्यर्थः । तथा च वृद्धयाज्ञवल्क्यः—अन्नाभावे तु कर्तव्यं शाकमूलफलादिना । इति । अथ पुनरोषधिग्रहणम् अरण्यौषध्यभावे विहितप्रतिषिद्धौषधिप्राप्त्यर्थम् । तथा च मार्कण्डेयः—गोधूमैरिक्षुभिर्मुद्गैश्चीनकैश्चणकैरपि । श्राद्धेषु दत्तैः प्रीयन्ते मासमेकं पि-

तामहाः । इति । मुद्गा वन्याः । चीनकस्तृणधान्येषु कङ्गुभेदः । उशना अपि—नीवारमाषमुद्गाश्च गोधूमाः शालयस्तथा । यवाश्च चणकाश्चैव सर्वकङ्गुः प्रशस्यते । इति । ततश्च ग्राम्या आरण्या विहितप्रतिषिद्धाः । फलानि मूलानि पूर्वपूर्वाभावे उत्तरोत्तराणि क्रमेण ग्राह्याणीत्यर्थः । अथवा समुच्चयार्थमोषधिग्रहणम् । तेनौषधिसहितान्येव फलादीनि तृप्तिकराणीत्यर्थः । तथा ह्युत्तरं सूत्रं सहान्नेनेति । मनुरपि—भक्ष्यं भोज्यं च विविधं मूलानि च फलानि च । हृद्यानि चैव मांसानि सर्वं दद्यादमत्सरी । इति । मूलफलैरद्भिर्वेति वा पाठः । तथा च सूत्रान्तरम्—मूलफलैरद्भिर्वेति । सर्वाभावेऽद्भिस्तृप्तिरित्यर्थः । तथा च—पराधीनः प्रवासी च निर्धनो वापि मानवः । मनसा भावशुद्धेन श्राद्धं दद्यात्तिलोदकम् । अनुकल्पोपलक्षणं चैतत् । तेनोपवासादिकमपि ज्ञेयम् । आपो निषिद्धातिरिक्ताः । तथा च भरद्वाजः—नक्तोद्धृतं तु यत्तोयं पल्वलाम्बु तथैव च वर्जयेदिति शेषः । मार्कण्डेयोऽपि—दुर्गन्धि फेनिलं चाम्बु तथाल्पप्रदरोदकम् । यन्न सर्वार्थमुत्सृष्टं यच्चाभोज्यनियोजनम् । तद्वर्ज्यं सलिलं तात सदैव पितृकर्मणि । इति । मूलग्रहणं दशविधशाकोपलक्षणम् । तथा च—मूलपत्रकरीराग्रफलकाण्डाधिरूढकम् । त्वक्पुष्पं कवकं चेति शाकं दशविधं स्मृतम् । इति । मूलं मूलकादि । पत्रं पालक्यतण्डीवादि । करीरं वंशाङ्कुरादि । अग्रं प्लक्षवेत्रादीनाम् । फलं कूष्माण्डादि । काण्डं सार्षपवास्तूकादि । अधिरूढकं तालास्थिमज्जादि । त्वङ्मातुलुङ्गादि । पुष्पं तिन्तिडीककाञ्चनारादि । कवकं शिलीन्ध्रादि । मार्कण्डेयः—विदारीभिर्मुरुण्डैश्च बिसैः शृङ्गाटकैस्तथा । केचुकैश्च तथा कन्दैः कर्कन्धूबदरैरपि । पालेवतैरारुकैश्चाक्षोडैः पनसैस्तथा । काकोलैः क्षीरकाकोलैस्तथा पिण्डालकैः शुभैः । लाजाभिश्च शिलाभिश्च त्रपुसोर्वारुचिर्भटैः । सर्षपै राजशाकाभ्यामिङ्गुदै राजतन्तुभिः । पियालामलकैर्मुख्यैः फल्गुभिश्च तिलम्बकैः । वेत्राङ्कुरैस्तालकन्दैश्चुक्रकाक्षीरिकावचैः । मोचैः समोचैर्लकुचैस्तथा वै बीजपूरकैः । मुञ्जातकैः पद्मफलैर्भक्ष्यभोज्यैस्तु संस्कृतैः । रागखाण्डवचोष्यैश्च त्रिजातकसमन्वितैः । दत्तैस्तु मासं प्रीयन्ते विधिवत्पितरो नृणाम् । इति । अस्यार्थः—विदारी कृष्णवर्णभूकूष्माण्डफलमिति । माधवीये—विदारीति प्रसिद्धा विदारी तस्याः कन्दमिति शेष इत्यन्यः । मुरुण्डो जलप्रभवः कन्दविशेष इति मञ्जरीकारः । केचुकः कचूराख्यशाकः । जलप्रभवः कन्दविशेष इत्यन्यः । बिसं मृणालम् । शृङ्गाटकं जलजं त्रिकण्टकफलम् । सिघारा इति प्रसिद्धम् । कन्दः सूरणकन्दः । कर्कन्धूः स्वादु बदरीफलम् बदरमन्यद्बदरफलम् । पालेवतं जम्बीराकारं फलं काश्मीरप्रसिद्धम् । आरुकं आरुकन्दः । आक्षोडः पार्वतीयपीलुफलम् । पनसैः कण्टकिफलैः कटहर इति प्रसिद्धैः । काकोलैर्मधुराफलैः । क्षीरकाकोलस्तद्भेदः । पिण्डालुकैश्चतुर्भेदैः । तथा च मनुः—पिण्डालुकं कुगन्धं च मध्वालु स्यात्तु रोमशम् । शङ्खाशङ्खसंकाशं कष्टालु खरपकामिति । लाजा भ्रष्टधानाः । तथा च शङ्खः—लाजान्मधुयुतान्दद्यात्सक्तून्शर्करया सह । इति । शिला शैलेयम् । त्रपुसं त्रपुसीफलम् । उर्वारु स्वादुकर्कटी । चिर्भटः कटुकर्कटी । सर्षपो गौरसर्षपशाकम् । राजशाकं शाकविशेषः । कृष्णसर्षपशाकविशेषमिति माधवीये । तत्र तस्य प्रतिषेधात् । इङ्गुदस्तापसतरुः । राजतन्तुः···प्रियालो राजादनम् । निघण्टुके । प्रियाला द्राक्षा वा । फल्गु काकोदुम्बरिकाफलम् । अतिलम्बकैः ··तालकन्दैस्तालमूलीकन्दैः । चुक्रिकाम्लिकाफलं तिन्तिडीफलमित्यर्थः । नागरङ्गतिन्तिडीति स्मृत्यन्तरवचनात् । क्षीरिका फलाध्यक्षम् । मोचा कदलीफलम् । लकुचैर्लिकुचफलैः । बीजपुत्रकैर्मुञ्जातकैः । पद्मफलैर्वेदर इति प्रसिद्धैः । भक्ष्यं कटुकमोदकादि भोज्यं भोजनमोदनादिसूपयुक्तम् । रागषाडवाः रसालादिपानविशेषाः । तथाच निघण्टुः—मार्जिता शिखरिण्युक्ता रसाला सुरभिस्तथा । औषधी षाडवाख्या च चतुर्जातकसंयुता । इति । चतुर्जातकं वक्ष्यमाणम् । सुसंस्कृतैरिति मेलविशेषैः । तथा च सूपकारशास्त्रम्—अर्धाढकं सुचिरपर्युषितस्य दध्नः षण्डस्य षोडशपलानि शशिप्रभस्य । सर्पिः पलं मधु पलं मरिचं द्विकर्षं शुण्ठ्याः पलार्ध-

मथवार्धपलं चतुर्णाम् ॥ श्लक्ष्णं पटे ललनया मृदुपाणिघृष्टा कर्पूरधूलिसुरभीकृतभाण्डसंस्था । एषा वृकोदरकृता सरसा रसाला या खादिता भगवता मधुसूदनेन ॥ इति । चोष्यैराम्रादिकैः फलैः । त्रिजातकं त्वगेलागन्धपत्रमेलनम् । तथा च निघण्टुः—त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् । नागकेसरसंयुक्तं चातुर्जातकमुच्यते । इत्यादि । वायुपुराणे—बिल्वामलकमृद्वीकापनसाम्रातदाडिमम् । चव्यं पालेवताक्षोटखर्जूराम्रफलानि च । कसेरुः कोविदारश्च तालकन्दं तथा बिसम् । तमालं शतकन्दं च गन्धालु शीतकन्दकम् । कालेयं कालशाकं च सुनिषण्णं सुवर्चला । मांसं शाकं दधि क्षीरं चेचु वेत्राङ्कुरस्तथा । कधूलः किङ्किणी द्राक्षा लकुचं मोचमेव च । कर्कन्धू ग्रीवकं वारं तिन्दुकं मधुसाह्वयम् । वैकङ्कतं नालिकेरं शृङ्गाटकपरूपकम् । पिप्पली मरिचं चैव पटोलं बृहतीफलम् । सुगन्धि मत्स्यमांसं च कलायाः सर्व एव हि । एवमादीनि चान्यानि स्वादूनि मधुराणि च । नागरं चात्र वै देयं दीर्घमूलकमेव च । इति । अस्यार्थः । मृद्वीका गोस्तनी द्राक्षा । पनसो व्याख्यातः । आम्रातकः कपीतनः । चव्यं चविका । पालेवतमुक्तम् । आक्षोटोऽप्युक्तः । कसेरुर्भद्रमुस्ता । तालकं तालीति प्रसिद्धम् । शतकन्दं शतावरी । गन्धालुः कर्चूरशाकम् । शीतकन्दं शालूकम् । कालेयकं दारुहरिद्रा, करालाक्षं शाकमिति गोविन्दराजः । सुनिषण्णं वितुन्नशाकम् । सुरनुनीति ख्यातं जलभवं शाकमिति कश्चित् । सुनिषण्णं चाङ्गेरीसदृशशाकं वा । चाङ्गेरीसदृशैः पत्रैः सुनिषण्णकमुच्यते । शाकं जलाशये देशे चतुःपत्री निगद्यते । इति सुश्रुतोक्तेः । सुवर्चला ब्रह्मसुवर्चला । सूर्यावर्त इति गोविन्दराजः । कट्फलः श्रीकर्णिका । किङ्किणी द्राक्षा । लकुचो लिकुचः । मोचा कदलीफलम् । कर्कन्धूरुक्ता । ग्रीवकं वपुष्टा । वारं पियालविशेषः । तिन्दुकोऽसितसारः । शृङ्गाटकमुक्तम् । परूषकं फेरुस इति प्रसिद्धं फलम् । बृहती निदिग्धिकाफलम् । वरीकटाईति प्रसिद्धम् । दीर्घमूलं तुण्डिकेरीफलम् । मूलकमित्यन्यः । पटोलो दीर्घपटोलो राजीफलमित्यर्थः । चचेडा इति लोके । यत्तु—गन्धारिका पटोलानि श्राद्धकर्मणि वर्जयेत् । इति पटोलनिषेधः स क्षुद्रपटोलविषयः । तथा च निघण्टुः—पटोली स्याद्द्वितीयान्या स्वादुपत्रफला च सा । इति । शेषं प्रसिद्धम् । कुमारेश्वरसंवादेऽपि—पालेवतकमृद्वीकाखर्जूराम्रकसेरुका । बिल्वामलकमाक्षोटपनसाम्रातकानि च । चेचुवेत्राङ्कुराः शाकं'''लमोचमेव च । शीतकन्दं बिसं नालिकेरं कट्फलकं तथा । इत्याद्यमेध्यमन्यच्च प्रदेयं श्राद्धकर्मणि । चेचुः शणभेदः । इतरस्य निषेधात् । चेंचुमेढाकं शाकमित्यन्यः । वर्ज्यशाकान्याह विष्णुः—भूस्तृणशिग्रुसर्षपसुरसार्जककूष्माण्डालाबुवार्ताकपालाक्यतण्डुलीयककुसुम्भादि वर्जयेदिति । भूस्तृणो रोहिषः । गन्धचणाख्यं शाकमित्यर्थः । शिग्रु सुहिजन इति प्रसिद्धः । सर्षपो राजसर्षपः । इतरस्य विहितत्वात् । सुरसा श्वेतनिर्गुण्डी । अर्कजः श्वेतार्कजः । कुहेर इति प्रसिद्धः । पालाक्यः पलकीति प्रसिद्धा । तण्डुलीयकं चौराई इति प्रसिद्धः । वार्ताकं श्वेतवृन्ताकम् । उशनाः—नालिकाशणछत्राककुसुमानम्बुविद्धवान् । कुम्भीकम्बुकवृन्ताककोविदारांश्च वर्जयेत् । वर्जयेद्गृञ्जनं श्राद्धे काञ्जिकं पिण्डमूलकम् । करञ्जं येऽपि चान्ये वै रसगन्धोत्कटं तथा । नालिका प्रसिद्धा । दीर्घनालाग्रैलापल्लवेति माधवीये । छत्राकं शिलीन्ध्रः । कुम्भी श्रीपर्णिका । केबुकं वृत्तालाबु । वृन्ताकं श्वेतम् । कोविदारश्चमरकम् । गृञ्जनो हरिद्रवर्णः पलाण्डुविशेषः । काञ्जिकं प्रसिद्धम् । करञ्जं चिरिविल्वफलम् । पुराणेऽपि—वांशं करीरं सुरसं सर्जकं भूस्तृणानि च । अवेदोक्ताश्च निर्यासा लवणान्यौषधानि च । भरद्वाजोऽपि—स्वल्पाम्बुकूष्माण्डफलं वज्रकन्दं च पिप्पली । शिवेकानि करीराणि कोविदारगवेधुका । कुलत्थशणजम्बीरकरम्भाणि तथैव च । अब्जादन्यद्रक्तपुष्पं शिग्रुक्षारं तथैव च । एतानि नैव देयानि सर्वस्मिन् श्राद्धकर्मणि । इति । पैठीनसिः—वृन्ताकनालिकापोतकुसुम्भाश्मन्तकाश्चेति शाकानामभक्ष्या इति । स्मृत्यन्तरम्—पिण्डालुकं च शुण्डीरं

करमर्दं च नालिकम् । कूष्माण्डं बहुवीजानि श्राद्धे दत्वा व्रजत्यधः । भविष्येऽपि—लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च । वृन्ताकनालिकालावु जानीयाज्जातिदूषिकाः । तानिति(?) । एषामर्थः— वांशं करीरं वंशाङ्कुरः । सुरसं पर्णास इत्यन्यः । सर्जकं शालफलम् । पीतसार इत्यन्यः । अवेदोक्ता निषिद्धाः हिङ्ग्वादीनां विपयमेवाग्रे वक्ष्यामः । ऊपरणिकृतलवणानि वर्ज्यास्तिलमसूराश्च कोद्रवा लवणं कृतम् । इति वचनात् । सैन्धवसामुद्रादीनां विहितत्वात् । तथा च—लवणे सैन्धवसामुद्रे इति । अपि च—सैन्धवं लवणं यच्च यच्च मानससंभवम् । पवित्रे परमे ह्येते प्रत्यक्षे अपि नित्यशः । मानससंभवं सांभरीति प्रसिद्धमिति हलायुधः । करीरगूढपत्रं करील इति प्रसिद्धम् । कोविदार उक्तः वज्रकन्दं वनोद्भवः सूरणः । गवेधुका''' । शणं शणपत्राणि । जम्बीरो दन्तशठफलम् । करम्भाणि'''। क्षारं यवक्षारम् । सौवर्चलं सौवर्चकादिलवणानि । पोतं पोतिकाशाकम् । अश्मन्तको महोलीवृक्ष इति प्रसिद्धस्तच्छाकम् । वृन्ताकं श्वेतम् । तथा च देवः—कण्डूरं श्वेतवृन्ताकं कुंभाण्डं च विवर्जयेत् । इति । उपमन्युरपि—नाश्नीयाच्छ्वेतवृन्ताकं मातुलानीं तथाण्डकम् । अण्डकं छत्राकम् । मातुलानी भङ्गेति । कण्डूरं कपिकच्छूः । तत्फलं खर्जूरफलमित्यर्थः । कुंभाण्डं वृत्तालावुसदृशफलम् । पिण्डालु पेण्डारु इति प्रसिद्धम् । शुण्डीरः'''। करमर्दकः करवन्दाफलानि । वहुवीजानि वीजपूरकादीनि । पलाण्डुः श्वेतकन्दः पलाण्डुविशेपः । लशुनं दीर्घपत्रं च पिच्छगन्धो महौषधम् । करण्यश्च पलाण्डुश्च लतार्कश्च परालिका । गृञ्जनं पतनेष्टश्च पलाण्डोर्दशजातयः इति सुश्रुतोक्तेः । कवला शिलीन्ध्रः । कुमारेश्वरसंवादेऽपि—वर्ज्यास्तत्र मसूरास्तु कोद्रवा लवणं कृतम् । तन्दुलीयकमुद्दालं, भूस्तृणं सुरसां शिग्रुं पालक्या सुमकं तथा । पिण्डमूलं च वंशाग्रं लोहितव्रश्चनानि च । पलाण्डुं विड्वराहं च छत्राकं ग्रामकुक्कुटम् । लशुनं गृञ्जनं जम्बूफलानि कवकानि च । तन्दुलीयकमुद्दालराजमाषासु'''रपि । कृष्णाजाज्योतसीतैलं पयश्चाजाविकम् । इति । सुमकं खादिरीसंज्ञकं जलभवं शाकम् । मुद्दालः कोविदारः । आसुरी राजिका । कृष्णाजाजी कृष्णजीरकः करोंजीति प्रसिद्धश्च । अतसी क्षुमा । शेषं प्रसिद्धम् । हारीतः—न वटप्लक्षोदुम्बरदधित्थं नालमातुलुङ्गफलानि भक्षयेदिति । प्लक्षः पर्कटी । दधित्थः कपित्थः । मातुलुङ्गो बीजपूरकः । अत्रैतच्चिन्त्यते । किम् पिप्पलीमरिचहिङ्गूनां निषेध उत विधिः । उभयथा वचनदर्शनात् । तथाहि विष्णुः—पिप्पलीसुमकभूस्तृणेत्यादिः । शङ्खोऽपि— पिप्पली मरिचं चैव तथा वै पिण्डमूलकम् । कृतं च लवणं सर्वं शाग्रं च'''विवर्जयेत् । व्यासः— अश्राद्धेयानि धान्यानि कोद्रवाः पुलकास्तथा । हिङ्गुद्रव्येषु शाकेषु'''लङ्काला शुभास्तथा । द्रव्येषु हिङ्गुः । शाकेपु कालानः शुभा च निषेद्धेत्यर्थः । पुलकाः पुलकाह्वश्च छन्दसः । कालानः कृष्णाजेकः कुहेर इति प्रसिद्धः । शुभा शुभाख्यः शाकविशेषः इत्यादिनिषेधः । विधिस्तु—पिप्पली मरिचं चैव पटोलं वृहतीफलम् । इति वायुपुराणे । कुमारेश्वरसंवादेऽपि—पिप्पली मरिचं हिङ्गु पटोलं वृहतीफलम् । इत्यादि । आदिपुराणेऽपि—मधूकं रामठं चैव कर्पूरं मरिचं गुडम् । इत्यादि । रामठं हिङ्गुः । एवं वचनविप्रतिपत्तौ केचिदाहुः—पिप्पलीमरिचहिङ्गूनां संस्कारकत्वेन विधिः केवलानां प्रतिपेधः । अपरे तु संस्कारान्तराभावे विधिरन्यथा नेत्याहुः । षोडशिग्रहणवद्विकल्प इत्येके । एवं च संस्कारकत्वेन विधिर्युक्तः प्रतिभाति । वेसवारत्वेन स्वादूनि मधुराणि चेति स्वादुत्वविध्युपपत्तेः । तथा च—शुण्ठीमरिचपिप्पल्यो धान्यका वाहिकिङ्गुकम् । पिप्पलीमूलसंयुक्तं वेसवार इति स्मृतम् । इति । शङ्खः—कृष्णाजाजी विडं चैव सीतपाकी तथैव च । वर्जयेल्लवणं सर्वं तथा जम्बूफलानि च । कृष्णाजाजी कृष्णजीरकः । विडं विडाख्यम् । लवणं सर्वसैन्धवसमुद्रसांभरिव्यतिरिक्तम् । ब्रह्माण्डपुराणे—आसनागूढमन्नाद्यं पादोपहतमेव च । अमेध्यादागतैः स्पृष्टं शुक्तं पर्युषितं च यत् । द्विःस्विन्नं परिदग्धं च तथैवाग्रावलेहितम् । शर्कराकीटपापाणैः केशैर्यच्चाप्युपद्रुतम् । पिण्याकं

मथितं चैव तथातिलवर्णं च यत् । सिद्धाः कृताश्च ये भक्ष्याः प्रत्यक्षलवणीकृताः । वाग्भावदुष्टाश्च तथा दुष्टैश्चोपद्रुतास्तथा । वाससा चावधूतानि वर्ज्यानि श्राद्धकर्मणि । इति । आसनारूढमासनोपरि धृतम् । पादोपहतं पदा स्पृष्टम् । अमेध्यादागतैश्चर्मकाराद्यपवित्रस्थानादागतैरशुद्धैः स्पृष्टम् । द्विःस्विन्नं द्विःपक्वम् । परिदग्धमतिदग्धम् । अग्रावलेहितं श्राद्धात्पूर्वमास्वादितम् । पिण्याकं तिलकल्कः । मथितं करेण विलोलितं निर्जलं दधि । करेण मथितं दधीति निषेधात् । मथितं तक्रमित्यन्यः । सिद्धा भक्ष्या आमलकादयः प्रत्यक्षलवणेन मिश्रिताः । तथा—दधि शाकं तथाऽभक्ष्यं शुक्तं चौषधिवर्जितम् । वर्जयेत्तु तथान्यच्च सर्वानभिषवानपि । अभक्ष्यं दधि शाकं च वर्जयेदित्यन्वयः । अन्यन्निषिद्धमित्यर्थः । अभिषवाः संधानानि । शुक्तमनम्लवस्तु कालान्तरेण द्रव्यान्तरेण वा ह्यम्लं न स्वभावतोऽत्यम्लम् । तथा च बृहस्पतिः—अत्यम्लं शुक्तमाख्यातं निन्दितं ब्रह्मवादिभिः । इति । अत्रापवादः शङ्खेनोक्तः । दधि भक्ष्यं च शुक्तेषु सर्वं च दधिसंभवम् । ऋचीसपक्कं भक्ष्यं स्यात्सर्पिर्युक्तमिति स्थितिरिति । अनग्निक ऊष्मा ऋचीसं तेन पक्कमान्नादि घृतयुक्तं भक्ष्यमित्यर्थः । वायुपुराणेऽपि—भक्ष्याण्येव करंभाश्च इष्टका घृतपूरिका । कृशरो मधुसर्पिश्च पयः पायसमेव च । दधि गव्यमसंसृष्टान्भक्ष्यान्नानाविधानपि । शर्कराक्षीरसंयुक्ताः पृथुका नित्यमक्षयाः । सक्तून् लाजांस्तथापूपान्कुल्माषान्व्यञ्जनैः सह । सर्पिःस्निग्धानि सर्वाणि दध्ना संस्कृत्य भोजयेत् । श्राद्धेष्वेतानि यो दद्यात्पितरः प्रीणयन्ति तम् । इति । करम्भो दध्यक्ताः सक्तवः । इष्टकाः कासारखण्डानि । पृथुकश्चिपिटः । असंसृष्टभक्ष्याः स्वकीयभक्ष्याः । लाजा भ्रष्टव्रीहितण्डुलाः । अपूपा मण्डकाः । कुल्माषो यावकः । एतानि पर्युषितान्यपि घृतस्निग्धानि दध्नाम्बुना च संस्कृतानि भक्षयेदिति पर्युषितापवाद इत्यर्थः । यत्किंचिन्मधुना मिश्रं गोक्षीरघृतपायसैः । दत्तमक्षय्यमित्याहुः पितरः पूर्वदेवताः । इति मत्स्यपुराणवचनादित्यलं बहुना । शेषं स्मृतिभ्योऽनुसंधेयम् । अन्नाभावे फलमूलैस्तृप्तिरित्युक्तम् । तत्रोपायविधिमाह 'सहान्नेनेतरास्तर्पयन्ति' फलमूलैरन्नेन सहेतराः पितॄंस्तर्पयेयुर्न केवला इत्यर्थः । लटो लिङर्थत्वात् । अत्रान्नेनेति तृतीयैव सहार्थे लब्धे सहेति ग्रहणं विस्पष्टार्थं नान्नस्याप्राधान्यार्थम् । अथ सहयुक्तेऽप्रधान इति पाणिनिस्मरणविरोधादन्नस्य कथमप्राधान्यं नेति । उच्यते । अविवक्षितत्वेनास्य दोषस्य परिहृतत्वात् । तथा चाविवक्षैव हि शब्दस्य प्रधानं कारणं न वस्तुसत्तेति । न चान्नमन्तरेण तृप्तौ मूलफलादेः सामर्थ्यातिशयः । प्रधानगुणभावसंभवोपपत्तेः । तस्माद्विस्पष्टार्थमेव सहेत्युक्तम् । सहान्तेनोत्तरास्तर्पयन्ति इति क्वचित्पाठस्तत्रोत्तरा मूलफलादयस्तेनैव सह तर्पयन्ति तृप्तान्कुर्वन्ति न केवला इत्यर्थः । एवं न हिंस्यात्सर्वभूतानीत्यहिंसाधर्मेण तृप्तिमभिधायेदानीं हिंसाधर्मेणाह 'छागोस्रमेषानालभ्य' छागो वर्कः । उस्रस्तूपरः । स च शृङ्गहीनश्छागादिः । तथा च श्रुतिः । तूपरो वा अविषाण इति । मेषो मेढ्रः । एतान्पित्रुद्देशेन हत्वा पचेदित्यर्थः । तथा चात्रिः—मधुपर्के च सोमे च दैवे पित्र्ये च कर्मणि । अत्रैव पशवो हिंस्या नान्यत्रेति कथंचन । स्कन्दसंवादेऽपि—अर्थे देवपितॄणां हि यो हिनस्ति पशून्द्विजः । स यज्ञफलमाप्नोति ते च यान्ति परां गतिम् । जाबालोऽपि—हिनस्ति यत्पशून्स्वार्थमुद्दिश्यैव स पापभाक् । श्राद्धापदेशतो हिंसन्नपि स्वार्थे न दुष्यति । इति । अत्रैक आहुः—उस्रो बलीवर्दः । तथा च—महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेदिति । तदयुक्तम्, महोक्षशब्देन तूपरस्योक्तत्वात् । तथा च जाबालः—विषाणोद्भवकाले तु यो विषाणविवर्जितः । तं महोक्षं वदन्त्यार्यास्तूपरं चापि पावनम् । इति । महोक्षः पक्षी वा मनोक्ष इति प्रसिद्धः । तथा च जातूकर्ण्यः—किंचिल्लोहितवर्णो यो दीर्घपुच्छो गुरुस्वरः । ह्रस्वत्रोटिस्तु यः पक्षी स महोक्षोऽतिपावनः । इति । किंच वृषस्याभक्ष्यत्वमुक्तम् । तथा चेश्वरः—साक्षाद्धर्मो वृषः प्रोक्तो मन्मूर्तिमम

वाहनः । तं पदापि हि यो हन्ति तेनाहं स्कन्द ताडितः । वृद्धदेवलोऽपि—वेसरोऽस्रगजश्चाश्ववृषभा-न्करिमाचलम् । रासभं प्राश्य च भवेद्धिङ्गमिह्वा भवे भवे इति । करिमाचलः शृगालः । उस्रः शतवलिर्निमिः इत्यन्ये उस्रः शतवलादुम्नस्तु परे गभस्तिश्चित्यभिधानात् । तदपि न । पश्वालम्भ-प्रकरणात् । न हन्यान्मत्स्यसूकरौ । इति निषेधाच्च । अतश्चोस्रशब्देनात्र कलौ छागमेषावेव । पशुपं-चकमध्ये तयोरेव भक्ष्यत्वाद्वेदोक्तत्वाच्च । तथा च श्रुतिः—पुरुषोऽश्वो गौरविजो भवते तावता वै सर्वे पशव इति । गोभिलसूत्रं च—छागोऽस्रमेषा आलभ्या इति । ननु च छागमेषग्रहणेनैव तल्लब्धेः किमर्थमुस्रग्रहणम् । उच्यते—विशेषविध्यर्थत्वादित्यदोषः । तथा च स्कन्दसंवादे—वार्ध्रीनसं महाशल्को लोहाजस्तूपरं घृतम् । दद्यादेतद्भवेद्दत्तमानन्त्याय तिला मधु । अन्यच्च—अनन्वा खड्गमांसेन लोहच्छा-गेन तूपरात् । इति । अत्र कश्चिद्भाष्यकृदाह—छागोस्रमेषानिति पुंस्त्वमविवक्षितम् । उपादीयमान-त्वात्पशुना यजेतेतिवत् । सर्वासां पशुजातीनां मारणे भक्षणे तथा । विधाने न तु दोषः स्यादन्यथा नरकं व्रजेत् । इति । अन्ये त्वाहुः—पशुना यजेतेत्यत्रापि पुंस्त्वस्यैव विवक्षितत्वात् पुंव्यक्तिरेव वध्या न स्त्रीव्यक्तिरिति । अत्रानूचानाः प्रमाणम् । 'क्रीत्वा लब्ध्वा वास्वयंमृतानाहृत्य पचेत्' वाशब्दः पशुवधाभावे । अस्वयंमृतग्रहणं निषिद्धवर्जनोपलक्षणम् । तेन पश्वभावे विहितमृगपक्ष्यादिमांसानि क्रयलभ्यान्याहृत्य पचेन्न निषिद्धमित्यर्थः । विना मांसेन यच्छ्राद्धं कृतमप्यकृतं भवेत् । इति श्राद्धवै-कल्यापत्तेः । पद्मपुराणे—विना मांसेन यच्छ्राद्धं तन्न तृप्तिकरं भवेत् । क्रव्यादाः पितरो यस्मात्तस्मात्ते-नैव तान्यजेत् । इति । अत्रैकेऽकारविश्लेषमबुद्ध्वा स्वयं मृतानपि वेत्याहुः । तदयुक्तम् । तेषां निषिद्धत्वात् । तथा च स्मृतिः—उच्छिष्टस्य घृतादानं मृतमांसस्य भक्षणम् । अङ्गुल्या दन्तकाष्ठं च तुल्यं गोमांसभक्षणैः । इति । महाभारतेऽपि—विषच्छन्नहतं चैव व्याधितिर्यग्घतं तथा । न प्रशंसन्ति वै श्राद्धे यच्च शस्त्रविवर्जितम् । विषच्छन्नारण्ये पतितफलादौ विषप्रक्षेपस्तेन,हतं तिर्यग्घतं सिंहव्या-घ्रव्यतिरिक्तवृकादिहतम् । तयोरभ्यनुज्ञानात् । तथा च—सिंहव्याघ्रहतं च यत् । इति । प्रशस्त-मिति शेषः । अथवा श्राद्धे तस्य निषेधो विधिर्नित्यभोजनविषयः । एकमूलत्वात् । शस्त्रविवर्जितं स्वयं मृतम् । अनुपाकृतमांसानि सौनं वल्लूरमेव च । स्मृतिलोकनिषिद्धांश्च मृगमीनाण्डजानपि ॥ सौनं हिंसास्थानभवम् । अनुपाकृतं संस्कारहीनम् । वल्लूरं शुष्कं वर्जयेदिति । पृष्ठमांसं वृथामांसं वर्ज्यमांसं च पुत्रक । न भक्षयति सततं नरके रजनीचरेत् । इति । शेषमन्यतो ज्ञेयम् । ननु च फ-लमूलैरौषधीभिर्नित्यहिंसाधर्मेण तृप्तिमुक्त्वानन्तरं छागोस्रमेषानालभ्येति हिंसां विधायेदानीं क्रयलाभौ सूत्रयता वाशब्देन हिंसा निषिद्धेति । तथा च—कन्दमूलफलाभावे मांसान्याहुर्मनीषिणः । पुण्यानि मुनिगीतानि लब्धानि च वधं विना ॥ इति चतुर्विंशतिमते । महाभारतेऽपि—क्रीत्वा स्वयं ह्युत्-पाद्य परोपहृतमेव वा । देवान्पितॄनर्चयित्वा खादन्मांसं न दुष्यति ॥ एष उक्तो विधिर्ब्रह्मन् सर्वकाम-फलप्रदः । इति । तस्माद्वाशब्देन हिंसां निषिध्य क्रयलाभावेव सूत्रकाराभिमताविति । अत्रोच्यते—यदुक्तं हिंसानन्तरं क्रयलाभौ सूत्रयता हिंसा निषिद्धेति तन्न, पशुवधासंभवे क्रयलाभयोरुक्तत्वात् । तथा च स्कन्दसंवादे—मांसाभावे कृते श्राद्धे ध्यायन्ति पितृदेवताः । करिष्यति सुतो लब्ध्वा श्राद्धं पश्चात्तु सामिषम् ॥ ददाति लब्ध्वा मांसं न तं शपन्ति रुषा मुहुः । इति । मांसाभावे पश्वसंभवे । यत्त्वभिहितं कन्दमूलफलाभाव इत्यनेन हिंसा निषिद्धेति । तदप्ययुक्तम् । कन्दमूलफलाद्यभावे वधं विनेत्यहिंसाधर्मेण प्रतिपादकत्वान्न हिंसा निषिद्धेति । यच्चाभ्यधायि—क्रीत्वा स्वयं वाप्युत्पाद्येत्या-दिना ब्राह्मविधिरिति । तदपि मन्दमिव । तस्यापि मांसभुग्दाक्षिणात्यपरत्वेन तद्देशविषयत्वात् । दृश्यते च देशविषयो ह्याचारः । तथा च बृहस्पतिः—उद्वह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः । मध्यदेशे चर्मकाराः गिलिपतः खगवासिनः । मत्स्यादाश्च नराः सर्वे गम्या नृणां रजस्वलाः । पर्वते

मद्यपा नार्यो नैते दण्डस्य चार्हकाः । इत्यादि । पठन्ति च—पृथिव्याख्रिषु भागेषु मांसभक्षणमाचरेत् । पृथिव्या दक्षिणे भागे तन्निषेधं समाचरेत् । इति । यत्तु बृहत्प्रचेतोवचनं न देशानां न विप्राणां न युगानां द्विजोत्तमाः । धर्मशास्त्रेषु वै भेदो दृश्यते मांसभक्षणे । इति । तद्दक्षिणव्यतिरिक्तदेशविषयमित्यविरोधः । किं च यद्येवं नाभविष्यत्तर्ह्यग्नीषोमीयं पशुमालभते छागोऽस्त्रमेषानालभ्येत्यादिविहितहिंसाप्रतिपादकानि वाक्यान्यनर्थकान्यभविष्यन्निति । तस्मात्पशुवधासंभवे क्रीत्वा लब्ध्वा वेति सूक्तमिति सिद्धम् । इदानीं मृगोरभ्रकिरिच्छागपार्षतैणपतत्रिणाम् । मांसं विशारशशयोरुरोश्च क्रमतः सुरान् । धिनोति च पितॄंश्चैव मासान्पायसमेव च । इत्यादि वचनविहितां तृप्तिमुपक्रमते—'मासद्वयं तु मत्स्यैः' मत्स्याः पाठीनादयो विहिता न निषिद्धास्तैर्द्विमासं तृप्तिरित्यर्थः । तथा च मनुः—द्वौ मासौ मत्स्यमांसेनेति । तु शब्दो विशेषणार्थः । तेन मत्स्यविशेषे कालविशेष इत्यर्थः । तथा चापस्तम्बः—शतवलेर्मत्स्यस्य मांसेनाक्षया तृप्तिरिति । यत्तु मत्स्यैश्चतुरो मासानिति पैठीनसिवचनं तत्सशल्कविषयम् । तथा च यमः—सशल्काश्चतुरो मासानिति । प्रीणयन्तीति शेषः । ननु च—मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत् । इति प्रायश्चित्तस्योक्तत्वात्कथमिति । उच्यते—तस्य नित्यभोजनविषयत्वाद्देवपित्रनिवेदनविषयत्वाच्च । तथा चागस्त्यः—ऋते यो हव्यकव्याभ्यां मत्स्यमांसं समश्नुते । लभते पातकमसौ सर्वमांसाशिनां नृणाम् । काण्वोऽपि—कालशाकं च मत्स्यांश्च परमान्नं तिलोदनम् । अनिवेद्य न भुञ्जीत पितॄणां दैवतैः सह । इति । एवं तर्हि—एकतः सर्वमांसानि मत्स्यमांसानि चैकतः । एकतः सर्वपापानि ब्रह्महत्या तथैकतः । तथा—मत्स्यादः सर्वमांसादः । इत्यादि वचनवृन्दं निरर्थकमिति । मैवं वोचः । कार्तिकादिकालविशेषविषयत्वेन समर्थकत्वाद्दक्षिणादिदेशनिषेधकत्त्वाच्च । तथा च नारदीये—न मात्स्यं भक्षयेन्मांसं न कौर्मं नान्यदैवहि । इति कार्तिकादिवैष्णवकाल इति शेषः । मत्स्यादाश्च नराः सर्वे इति मध्यदेशे बृहस्पतिनोक्तम् । किंच एकत इत्यस्यार्थान्तरम् । सर्वमांसानि भक्ष्यमांसान्येकत्र तथा भक्ष्यमत्स्यमांसानि चैकत्र । तथा पापानि सर्वे यज्ञाः एकत्र हत्या ब्रह्मज्ञानं चैकत्रेति । पापं यज्ञादिकं कर्मेति शब्दरत्नावली । हत्या स्याद्गमने ज्ञान इति चन्द्रगोमी । एकत्र शशादिसर्वमांसान्येकत्र मत्स्या एकत्र सर्वे यज्ञा एकत्र ब्रह्मज्ञानमेकतुलायां समानमित्यर्थः । तथा च प्रचेताः—या हि तृप्तिः पितॄणां स्यादजवार्ध्रीणसादिभिः । सा भवेन्मत्स्यमांसेन दत्तेन श्राद्धकर्मणि । इति । तस्माच्छ्राद्धे मत्स्यैः पितॄंस्तर्पयित्वा स्वयमपि भुञ्जीतेति निरवद्यम् । तथा च ब्रह्मपुराणम्—हव्यकव्यार्थतो विप्रान्भोजयित्वा विधानतः । वैसारिणस्तु भुञ्जानो न लिप्येतैनसा द्विजः । इति । मत्स्यानाह याज्ञवल्क्यः—राजीवान्सिंहतुण्डांश्च सशल्कांश्चैव सर्वशः । शंखोऽपि—राजीवान्सिंहतुण्डांश्च सशल्कांश्च विशेषतः । पाठीनरोहितौ भक्ष्यौ मत्स्येष्वपि हि पावनौ । इति । राजीवाः पद्मवर्णाः । सिंहतुण्डाः सिंहमुखाः । सशल्काः शुक्त्याकारावयवयुक्ताः । जातूकर्ण्योऽपि—शशश्च मत्स्येष्वपि हि सिंहतुण्डकरोहिताः । क्षुद्रमत्स्येषु केङ्क्षोऽतिमेध्यो रोहितवन्मतः । इति । निषिद्धमत्स्यानाह स एव—गोमत्स्यो गुच्छमत्स्यश्च चर्मकाराह्वयस्तथा । नैते द्विजातिभिर्भक्ष्यास्तथा चिलिचिमाभिधः । श्रुद्धान्न केचिदिच्छन्ति प्रशस्ता हव्यकव्ययोः । अयं विकल्पो नित्यभोजने व्यवस्थितः—प्राघुणकादौ । तथा मत्स्यश्चिलिचिमो नाम न भक्ष्यो हि द्विजन्मभिः । चिलिचिमः पीतगौरो नरवाहुसदृशः समुद्रज इत्यायुर्वेदः । नान्द्यावर्तोलिमत्स्य इल्लिसइ चांग त्रिकण्टकग्राहिप्रभृतयः क्षुद्रमत्स्याश्च स्मृत्यन्तरेऽवगन्तव्याः । 'मासत्रयं तु हारिणेन' हरिणस्ताम्रमृगस्तन्मांसेन त्रिमासं तृप्तिरित्यर्थः । एणः कृष्णसारः प्रोक्तस्ताम्रो हरिण उच्यत इति सुश्रुतेनोक्तत्वात् । कृष्णसारेणाधिकतृप्तेः । तथा चोशनाः—चतुर्मासान्कृष्णसारेणेति । यत्त्वष्टावैणेयेनेति पैठीनसिनोक्तम् , अष्टावैणेयमांसेनेति च मनुना तत्तूपरकृष्णसारविषयं भवितुमर्हति । तूपरस्य विशिष्टोक्तेः । अन्यथोशनसा

विरोधात् । तथा चोक्तम्—स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक्पृथक् । इति । तुशब्दो विशेषार्थः । तेन मृगविशेषे कालविशेष इत्यर्थः । तथा च मार्कण्डेयः—करोति तृप्तिं नव वै रुरोर्मांसं नसंशयः । रुरुः शम्बरः । शरदि गलितशृङ्ग इत्यायुर्वेदः । मनुरपि—रौरवेण नवैव तु । यत्तु—रुरुः प्रीणाति पंच वै इति यमोक्तम्, यच्च पंचरौरवेणेति गोभिलसूत्रं तद्बहुशाखमृगरुरुविषयम् । यत्पुनर्देवलेनोक्तं—त्रीन्मासान्रुरुभिर्मृगैरिति तद्धरिणसदृशरुरुविषयम् । न च यथागृह्यविषयो विकल्पो भवितुमर्हति । मार्कण्डेयः—पुष्णाति चतुरो मासान् शशस्य पिशितं पितॄन् । इति । यत्तु देवलेनोक्तम्—शशैः षाण्मासिकी तृप्तिरिति, शशः प्रिणाति षण्मासानिति च यमेन तद्बृहच्छशविषयमिति अविरोधः । अन्यथा विरोधे धर्मस्य बाधापत्तेः । तथा च व्यासः—धर्मं यो बाधते धर्मो न स धर्मः कदाचन । अविरोधात्तु यो धर्मः स धर्मः सद्भिरुच्यते । तस्माद्विरोधे धर्मस्य निश्चित्य गुरुलाघवम् । तयोर्भूयस्तरं विद्वान्कुर्याद्धर्मविनिर्णयम् । तत्वे विप्रतिपन्नानां वाक्यानामितरेतरम् । विरोधपरिहारोऽत्र निर्णयस्तत्वदर्शिनः । इति । न च श्वापदजातेरनेकत्वादेवं न घटत इति वाच्यम् । तथा चामरः—कदलीकन्दलीचीनश्चमूरुप्रथकावपि । समूरुश्चेति हरिणा अमी अजिनयोनयः । कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः । गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः । गन्धर्वः शरभो रामः सृमरो गवयः शशः । इत्यादयो मृगेन्द्राद्या । इति । एवमन्यत्रापि । चतुर औरभ्रेण पितृणां तृप्तिरित्यर्थः । तथा च मनुः—उरभ्रेणाथ चतुर इति । उरभ्र आरण्यो मेषः । नव मेषमांसेनेति ग्राम्यस्य वक्ष्यमाणत्वात् । अन्ये त्वाहुर्मेष एवेति । तदयुक्तम् । श्रुतिविहितत्वात्पौनरुक्त्यदोषाच्च । तथा च श्रुतिः—वरुणायारण्यो मेष इति । यत्तु मेषेण पंचमासानिति पैठीनसिनोक्तं तदारण्यतूपरविषयम् । अत्रैतत्संदिह्यते—किं गवयमांसं भक्ष्यमभक्ष्यं वेति । तत्रैक आहुः—विहितत्वाद्भक्ष्यमिति । तथा च यमः—गावयं रुद्रसंमितान् । एकादशमासांस्तृप्यतीति शेषः । मार्कण्डेयोऽपि—गवयस्य तु मांसेन तृप्तिः स्याद्दशमासिकी । इति । तदयुक्तम् । श्रुतिविरुद्धत्वात् । तथा च श्रुतिः—स यं पुरुषमालभन्त स किं पुरुषो भव श्वां च गा च तौ गौश्च गवयश्चाभवन्तां यमविमालभंत स उष्ट्रोऽभवद्यमजमालभन्त स शरभोऽभवत्तस्मादेतेषां पशूनां नाशितव्यमपक्रान्तमेधा ह्येते पशव इति । श्रुतिस्मृतिविरोधे तु श्रुतिरेव बलीयसीति श्रुतेर्बलवत्त्वाच्च । न च श्रुतिविरुद्धा स्मृतिरादरणीया । तथा च चतुर्विंशतिमतम्—स्मृतिर्वेदविरोधेन परित्याज्या यथा भवेत् । तथैव लौकिकं वाक्यं स्मृतिबाधात्परित्यजेत् ॥इति॥ श्राद्धविषयत्वेन गवयस्याविधिरित्यन्ये । अत्रानूचानाः प्रमाणम् । 'पंच शाकुनेन' शकुनिर्भक्ष्यपक्षी । तन्मांसेनेत्यर्थः । तथा मनुः—शाकुनेनाथ पंच वै । इति । यत्तु शाकुनैश्चतुरो मासानिति देवलेनोक्तम्, यच्च चतुरः शाकुनेनेति च गोभिलेन, तद्विहितप्रतिषिद्धहारीतादिपक्षिविषयम् । यच्च शकुनेन सप्तेति पैठीनसिनोक्तं तदपि पवित्रकपिञ्जलादिपक्षिविषयम् । सोमपानोद्भवत्वेन पावित्र्यात् । तथा च श्रुतिः—स यत्सोमपानमासत्ततः कपिञ्जलः समभवदिति । जरत्कारुरपि—गौरः कपिञ्जलो मेध्यः कृकपाला च बर्हिणे । इति । बर्ही नीलकण्ठः । सुमेधार्किचिल्लोहितवर्णोऽतिदीर्घपुच्छो गुरुस्वरः । ह्रस्वत्रोटिस्तु यः पक्षी स महोक्षोऽतिपावनः ॥ इति । कोटिस्त्वुच्चः । भक्ष्यानाह शंखः—तित्तिरिं च मयूरं च लावकं च कपिञ्जलम् । वार्ध्रीनसं वर्तकं च भक्ष्यानाह यमः सदा । सदेति श्राद्धादेरन्यत्रापि । जाबालः—भक्ष्यः कपिञ्जलो नीलस्त्वाटी वन्यपदायुधः । भक्ष्याविति । नीलः कृष्णतित्तिरिः । कपिञ्जलो गौरः । वन्यपदायुधो वन्यकुक्कुटः । वने जले भवो जलकुक्कुट इत्यन्ये । तन्न । कलविङ्कं प्लवं हंसमिति मनुना प्लवशब्देन तस्य निषिद्धत्वात् । चक्रवाकं प्लवं कोकमिति शंखनिषेधाच्च । भारद्वाज्या मांसेनेति कात्यायनोक्तेर्भरद्वाजो भक्ष्यः । यत्तु, न खादेत्तु भरद्वाजमिति सुमन्तुनोक्तं तद्भरद्वाजोऽन्यस्तद्विप-

यम्। कौडि इति प्रसिद्धः। कुक्कुटहारीतभक्षणे द्वादशरात्रमनाहार इति शंखप्रतिषेधात्। अन्यत्स्मृतिभ्यो ज्ञेयम्। वर्ज्यानाह मनुः—क्रव्यादः शकुनीन्सर्वांस्तथा ग्रामनिवासिनः। अनिर्दिष्टांश्चैकशफं टिट्टिभं चैव वर्जयेत्। कलविंकं प्लवं हंसं चक्राह्वं ग्रामकुक्कुटम्। सारसं रज्जुदालं च दात्यूहं शुकसारिके। प्रतुदाञ्जालपादांश्च कोयष्टिनखविष्किरान्। निमज्जतश्च मत्स्यादान्सौनं वल्लूरमेव च। वकं चैव बलाकां च काकोलं खञ्जरीटकम्। मत्स्यादान्विड्वराहांश्च मत्स्यानेव च सर्वशः। इति। क्रव्यादा गृध्रादयः। ग्रामनिवासिनः पारावतादयः अनिर्दिष्टलक्ष्यत्वेनान्विताः। एकशफा अश्वादयः। टिट्टिभो निष्ठुरशब्दभाषी टिटिहिरीति प्रसिद्धः। कलविङ्को गृहचटकः। प्लवो जलकुक्कुटः। चक्राह्वश्चक्रवाकः। रज्जुदालो वृक्षकुक्कुटः। दात्यूहः कालकण्ठः। प्रतुदः श्येनः। जालपादा जालाकारपादाः। कोयष्टिः शिखरी। नखविष्किराश्चकोरादयः। निमज्जन्तो मत्स्यादा निमज्ज्यमत्स्यादाः। काकोलो गिरिकाकः। मत्स्यादा अनिमज्जन्तोऽपि। अन्ये प्रसिद्धाः। देवलः—उलूककुररश्येनगृध्रकुक्कुटवायसाः। चकोरः कोकिलो रज्जुदालकश्याम···ञ्जकौ। पारावतकपोतौ च न भक्ष्याः पक्षिणः स्मृताः। जरत्कारुः—कारायिकां कपोतं च स्तोकत्तं रक्ततुण्डकम्। सकृत्प्रजं सारिकां च कलविङ्कं च वर्जयेत्। कारायिका शकुनशास्त्रोक्ता। स्तोकतश्चातकः। रक्ततुण्डः शुकः। सकृत्प्रजः काकः। लोमशः—ग्रामकुक्कुटकाताथिमांसादानपि वर्जयेत्। अतायी चिल्लः। वेदनिधिः—काकारिपिङ्गलाक्रौञ्चवकोटौ टेह्वसारसौ। चाषभासौ भृङ्गराजं चान्द्रं जग्ध्वा व्रतं चरेत्। काकारिः उलूकः। पिङ्गला पूसर इति प्रसिद्धः। वकोटो वकः। चाषो नीलपक्षी स्वर्णपक्षीति प्रसिद्धः। जग्ध्वा प्राश्य चान्द्रं चान्द्रायणमित्यर्थः। शंखः—हंसं मद्गुं वकं काकं काकोलं खञ्जरीटकम्। मत्स्यादांश्च तथो मत्स्यान्बलाकां शुकसारिके। चक्रवाकं प्लवं कोकं मण्डूकं भुजगं कपिम्। मासमेकं व्रतं कुर्यादेतांश्चैव न भोजयेत्। मद्गुर्जलवायसः। व्रतं चान्द्रायणम्। मत्स्यव्यवस्था प्रागुक्ता। निषिद्धमत्स्याश्च। अत्रेत्यर्थः। धौम्यः—पारावतं रथाङ्गं च मरालं च कुलिङ्गकम्। जग्ध्वा हि कुक्कुटं ग्राम्यं व्रतेनापि न शुध्यति। रथाङ्गश्चक्रवाकः। मरालो हंसः। कुलिङ्गको···। व्रतेन चान्द्रायणेनेत्यर्थः। अन्यत्स्मृतिभ्यो ज्ञेयम्। 'षट् छागेन' पितॄणां तृप्तिरिति शेषः। तथा च मनुः—षण्मासांश्छागमांसेनेति। छागो महोक्षवार्ध्रीनसादन्यः। तद्विधेर्विशिष्टत्वात्। यत्तु, छागलं सप्त वै मासानिति मार्कण्डेयेनोक्तं तदारण्याजविषयम्। तमाह श्रुतिः—सोमाय कुलङ्ग आरण्योऽज इति। यच्च न च तृप्यंत्यजेन त्विति देवलेनोक्तं तद्वार्ध्रीनसव्यतिरिक्ताजविषयम्। यत्पुनर्द्वादश मासांश्छागेनेति पैठीनसिनोक्तं तत्तु न खादेत्कूर्मसूकराविति निषेधस्तद्विषयमग्रे वक्ष्यामः। 'अष्टौ वराहेण' वराह आरण्यसूकरस्तन्मांसेनेत्यर्थः। तथा च देवलः—अष्टौ मासान्वराहेणेति। यत्तु—दशमासांस्तु तृप्यन्ति वाराहमाहिषामिषैरिति मनुनोक्तं तन्मांसलवराहविषयम्। तस्य घृतसंभूतत्वेऽत्यौचित्यात्। तथा च श्रुतिः—अग्नौ ह वै देवा घृतकुम्भं प्रवेशयांचक्रुस्ततो वराहः संबभूव तस्माद्वाराहो मेदुरो घृताद्धिसंभूत इति। यत्तु—षण्मासाञ्छूकरामिषमिति मार्कण्डेयेनोक्तं तदमांसलविषयं भवितुमर्हति। अन्यथा विरोधात्। अत्रैक आहुः—न खादेत्कूर्मसूकराविति निषेधाद्वराहकूर्ममांसं न भक्ष्यमिति। तन्न। तस्य कार्तिकादिवैष्णवकालविषयत्वाच्छ्वेतवराहविषयत्वाद्वा। तथा च नारदीये—कार्तिके सूकरं मांसं यस्तु भुंक्तेऽतिदुर्मतिः। तन्मुक्तो जायते पापो विष्ठाशी ग्रामसूकरः॥ न मात्स्यं भक्षयेन्मांसं न कौर्मं नान्यदेव हि। इति। तन्मुक्तो रौरवान्मुक्तः। नेत्यनुवृत्तौ हारीतः—पारावतपाण्डुसूकरसारिकेति। उपमन्युरपि—ग्राम्यश्वेतवराहौ तु न भक्ष्यौ द्विजपुङ्गवैः। इति। 'नव मेषमांसेन' मेषो ग्राम्यभेदस्तन्मांसेनेत्यर्थः। तथा च यमः—प्रीणाति वै नवेति। यत्तु—तृप्यन्त्येकादशाविकैरिति देवलेनोक्तम्, यच्च, तथैकादशमासं वा औरभ्रं पितृसद्मिति (?) च मार्कण्डेयेन तत्तूपरविषयम्। अत्र विकारप्रत्यये प्रकृते तत्परिहारेण पुन-

मांसग्रहणं मांसविकारप्राप्त्यर्थम्। तेन तद्विकारा अपि कालान्तरसाधिता देया इत्यर्थः। तथा च स्कन्दसंवादे—अस्नेहा अपि गोधूमयवगोरसविक्रियाः। तथा मांसविकारांश्च दधिक्षीरगुडस्य च। इति। भक्षयेदिति शेषः। 'दश माहिषेण' तृप्तिरित्यर्थः। तथा च देवलः—दश माहिषमांसेनेति। यत्त्वेकादशमासान्माहिषेणेति पैठीनसिनोक्तं वदारण्यविषयं तूपरविषयं वा। महिषभक्षणं च देशविशेषे व्यवस्थितम्। तथा च यमः—कासारो हि गिरौ मेध्य इति प्राह प्रजापतिः। इति। कासारो महिषः। ननु च—अभक्ष्याः पशुजातानां गोश्वेभोष्ट्राः सकुञ्जराः। सिंहव्याघ्रर्क्षशरभाः सर्पाजगरकास्तथा॥ आखुमूषकमार्जारा नकुलग्राम्यसूकराः। श्वशृगालवृषद्वीपिगोलाङ्गूलकमर्कटाः॥ इति। तथा—वार्दमौर्दं च नारं च हारं च'''रासभम्। कौगं लौमसिकं मासं जग्ध्वा भवति विट्कृमिः। वेसरोष्ट्रगजश्वाश्ववृषभाल्करिमाचलम्॥ रासभं प्राश्य च भवे भवे इति (?) देवलव्याघ्रपादवृद्धदेवलादिवचनैरभक्ष्यमध्ये महिषानुक्तेः सार्वत्रिकं महिषभक्षणं किं न स्यादिति चेत्। मैवं भाणीः। गिरिमन्तरेण तद्भक्षणे महादोषापत्तेः। तथा च भारद्वाजः—शंखमूषकसर्पांस्तु सौरभं च गिरिं विना। जग्ध्वा द्विजा न शुध्यन्ति प्रायश्चित्तशतैरिति। तस्माद्देशविशेष एव तद्भक्षणं व्यवस्थितमिति सूक्तम्। वार्दं वार्षभम्। उर्दो जलपशुस्तस्य। जलमानुष इत्येके। नारं मानुषम्। हारं हरिशब्दवाच्यानां सिंहाश्वकप्यहिभेकादीनाम्। कारं करिणाम्। काको वन्यः श्वा तस्य। लोमसिका लोखरीति प्रसिद्धा तस्या लौमसिकम्। विट्कृमिर्विष्ठाकृमिः। द्वीपी व्याघ्रविशेषः। गोलाङ्गूलो वानरविशेषः। मर्कटग्रहणं श्वादिपञ्चनखोपलक्षणम्। एकादश पार्षतेन। पृषतश्चित्रमृगस्तन्मांसेनेत्यर्थः। तथा च गोभिलः—एकादश पार्षतेनेति। अत्रैतद्वक्तव्यम्—पृषच्छब्देन किं चित्रगुणो वाच्यः किंवा चित्रमृगजातिरिति। तत्र यदि चित्रगुणो वाच्यः स्यात्तर्हि रुरुवच्छागादीनामपि पृषत्त्वगुणे एकादशमासतृप्तिहेतुत्वं स्यात्। ततश्च विहिताः सर्वेऽपि पृषतः सन्त एकादशमासतृप्तिहेतव इत्यर्थः स्यात्। अथ च पृषच्छब्देन चित्रमृगजातिर्वाच्या न स्यात् तर्हि तज्जातेर्दैववशात्कथंचिदपृषत्त्वे एकादशमासतृप्तिहेतुत्वं न स्यात्। प्रत्युत विहितजातेः परित्यागश्चेत्यर्थः स्यात्। तस्मात्पृषच्छब्दस्य कथं गतिरित्याक्षेपः। उच्यते—व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायेन व्याख्यातचित्रमृगसंज्ञयैवेतरव्यावर्तकत्वाच्चित्रमृगस्यैव तावन्मासतृप्तिहेतुत्वं नान्यस्येति। एवं च सति मृगशब्दस्यान्वेषणार्थस्य छागादिवाचकत्वाभावात्पृषत्त्वे सत्यपि तस्यान्वयोऽयुक्तः। तस्माच्चित्रमृगेणैव तावन्मासतृप्तिरिति सिद्धम्। ततश्च पंच तृप्यन्ति पार्षतैः, पार्षतेणेह सप्त वै, नव मासान्पार्षतेन, एकादश पार्षतेनेति देवलमनुपैठीनसिकात्यायनवचनानां विषयानुपलब्धेर्विकल्पा एव शक्यन्ते वक्तुम् न विषयाः। अथवा मृगजातिषु पृषत्त्वं विशेषस्तेनैकादशेति सर्वेभ्यस्तृप्तिराधिक्यमित्यर्थः। ततश्चैवं विषयः—पंच तृप्यन्ति पार्षतैरिति देवलवचनं हरिणसदृशचित्ररुरुविषयम्। पार्षतेनेह सप्त च इति मनुनोक्तं बहुशाखशृङ्गचित्ररुरुविषयम्। नव मासान्पार्षतेनेति पैठीनसिनोक्तं शम्बरचित्ररुरुविषयम्। एकादश पार्षतेनेति चित्रतूपरविषयमित्यविरोधः। अयमाशयः—त्रीन्मासान्रुरुभिर्मृगैरिति त्रिमासतृप्तिविषयस्य रुरोः पृषतेन पंच तृप्यन्ति पार्षतैरिति तृप्तिविशेषः। रुरुः प्रीणाति पंचकैरिति पंचमासतृप्तिविषयस्य रुरोः पृषतत्वेन पार्षतेणेह सप्त वै इति तृप्तिविशेषः। रौरवेण नव त्विति नवमासतृप्तिविषयत्वेन एकादशपार्षतेणेति तृप्तिविशेषः। सर्वपृषतानां तूपरत्वे सति अनन्ता तृप्तिरिति। अनन्ता खड्गमांसेन लोहच्छागाच्च तूपरादिति वचनादेवं विषयविभागः। हरिणमेषवराहमहिषशशानां पृषत्त्वासंभवात् एवं कल्पनागौरवमप्यविरुद्धम्। प्रमाणकल्पने दोषाभावात्। तथा चाङ्गिराः—प्रमाणानि प्रमाणज्ञैः परिकल्प्यानि यत्नतः। सीदन्ति हि प्रमाणानि प्रमाणैरव्यवस्थितैः। भट्टोऽपि—प्रमाणवन्ति कल्प्यानि सामान्यानि बहून्यपि। अदृष्टशतभागोऽपि न कल्प्यो निष्प्रमाणत इति। 'संवत्सरं तु गव्येन पयसा' गव्यग्रहणमितर-

व्युदासार्थम् । तुशब्दो विशेषे । इतरपयोनिषेधेऽप्यारण्यमहिषीक्षीरं प्रशस्तमिति विशेष इत्यर्थः । तथा च ब्रह्मपुराणम्—आरण्यमहिषीक्षीरं शर्कराशुण्ठिसंयुतम् । मधुयुक्तं तनुहितं दद्यादमृतमेव तत् । इति । निषिद्धमाह याज्ञवल्क्यः—संधिन्यनिर्दशाऽवत्सागोपयः परिवर्जयेत् । अष्टमैकशफं स्त्रैणमारण्यकमथाधिकम् । संधिनी वृषाक्रान्ता कामुकी । अनिर्दशानतिक्रान्तदशाहा । अवत्सा वत्सरहितान्यवत्सा च । स्त्रैणं स्त्रीभवम् । द्विस्तन्युपलक्षणमेतत् । यच्च सर्वासां द्विस्तनीनां क्षीरमभोज्यमजावर्जमिति शंखेनाजाक्षीरस्य भक्ष्यत्वमुक्तं तच्छ्राद्धेतरविषयम् । कृष्णाजाज्यतसीतैलं पयश्चाजाविकादिकम् । माहिषं चामरक्षीरं जलमल्पजलाशयात् । इति स्कन्दसंवादोक्तत्वात् । वर्ज्यमिति शेषः । माहिषं ग्राम्यम् । आरण्यानां च सर्वेषां मृगाणां महिषीं विना । इति मनूक्तेः । गौतमोऽपि—यमसूस्यन्दिनीनां चेति । पयो वर्ज्यमिति शेषः । यमसूर्युग्मप्रसूः । स्यन्दिनी स्रवत्पयस्तनी । क्षीरमपेयं विवत्सायान्यवत्सायाश्चेति बौधायनः । 'पायसेन वा' पयसि शृतं पायसम् । पयोविकारश्च । तेन वा संवत्सरं तृप्तिरित्यर्थः । तथा च विष्णुः—संवत्सरं तु पयसा तद्विकारैश्चेति । अपि च मार्कण्डेयः—संवत्सरं तथा गव्यं पयः पायसमेवचेति । आदित्यपुराणे—विविधं पायसं दद्यादिति। तथा मांसविकारांश्च दधिक्षीरगुडस्य चेति वचनात् । पयोविकाराः कूर्चिकाक्षीरवटकादयः । 'वार्ध्रीनसमांसेन द्वादशवर्षाणि' तृप्तिरिति शेषः । वार्ध्रीनसस्त्रिविधः । तथा च विष्णुधर्मोत्तरम्—त्रिपिबं त्विन्द्रियक्षीणं यूथस्याग्रहरं तथा । रक्तवर्णं तु राजेन्द्र छागं वार्ध्रीनसं विदुः । इति । मुखकर्णौ जलपाने पतन्तौ जले त्रिपिब इत्यर्थः । त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् । वार्ध्रीनसं तु तं प्राहुर्याज्ञिकाः पितृकर्मणि । इत्यन्यत्र । निगमेऽपि—कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः । स वै वार्ध्रीनसः प्रोक्त इत्येषा नैगमी श्रुतिः ॥ इति । अत्रानूचानाः प्रमाणम् । रक्तवर्णो वार्ध्रीनसोऽक्षयतृप्तिविषयो वेत्यविरोधः । वार्ध्रीनसो महाशल्को लोहाजस्तूपरो घृतम् । आनन्त्याय भवेद्दत्त इति वचनात् । लोहामिषं कालशाकं मांसं वार्ध्रीनसस्य चेति याज्ञवल्क्यवचनाच्च । वार्ध्रीनसशब्दे णत्वोच्चारणमनालोचितम् । उष्ट्रो वीणीवान्वार्ध्रीनसस्ते मंत्वा आरण्याय सृमर इति श्रुतौ तवर्गीयपाठात् । श्राद्धशिष्टस्यावश्यभक्षणत्वमवगन्तव्यम् । तथा च विश्वामित्रः—धर्मशास्त्रं तु विज्ञाय भक्ष्यं चाभक्ष्यमेव च । प्रदाय पितृदेवेभ्यो भुञ्जीतातिथिपूर्वकम् ॥ इति । अत्र रागप्राप्ते भोजने भुञ्जीतेति नियमार्थम् । तथा चोपमन्युः—मृगाजाविकभक्ष्याणां मांसं शाकादिमेध्यवत् । इति पवित्राभिधानादिति ॥ ७ ॥

इति श्राद्धकाशिकायां सूत्रवृत्तौ तृप्तिप्रकरणं सामान्यम् ॥

अथाक्षय्यतृप्तिः खड्गमाᳬंसं कालशाकं लोहच्छागमाᳬंसं मधु महाशल्को वर्षासु मघाश्राद्धᳬहस्तिच्छायायाञ्च, मन्त्राध्यायिनः पूताः शाखाध्यायी षडङ्गविज्ज्येष्ठसामगो गायत्रीसारमात्रोऽपि पञ्चाग्निः स्नातकस्त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णी द्रोणपाठको ब्रह्मोढापुत्रो वागीश्वरो याज्ञिकश्च नियोज्या अभावेऽप्येकं वेदविदं पङ्क्तिमूर्धनि नियुञ्ज्यात्, आसहस्रात्पङ्क्तिं पुनातीति वचनात् ॥ ८ ॥

( गदाधरः )—'अथाक्षय्यतृप्तिः' उच्यत इति शेषः । किमक्षय्यकं द्रव्यमित्यत आह—'खड्ग'''सम्' ललाटे शृङ्गवान्पशुः खड्गः । रक्तच्छागो लोहच्छागः । मधु, महाशल्कः मत्स्यविशेषः । 'वर्षासु'''यायां च' श्राद्धं तृप्तिकरमिति शेषः 'मन्त्रा'''नियोज्याः' एते मन्त्राध्यायीमुख्या

याज्ञिकान्तास्ते सर्वे पङ्क्तिपावनाः श्राद्धे नियोज्याः । एतेषां नियोजनेन पितॄणामक्षय्यतृप्तिरित्यर्थः। मन्त्राध्यायिनः संहिताध्यायिनः । पूता आचरणेन पूताः । षडङ्गवित् शिक्षाकल्पादीनामर्थतो ग्रन्थतश्च वेत्ता । ज्येष्ठसाम्नः संततगाता ज्येष्ठसामगः । अथ ज्येष्ठसाम छन्दोगानां व्रतं साम च तद्योगाज्ज्येष्ठसामगः । गार्हपत्याहवनीयदक्षिणाग्निसभ्यावसथ्याग्निमान् पञ्चाग्निः । त्रिणाचिकेतः यजुर्वेदभागस्तद्व्रतं च तदुभयं योऽधीते यश्च करोति सोऽपि तद्योगात्त्रिणाचिकेतः । त्रिमधुः ऋग्वेदैकदेशः तदधीते तद्व्रतं चरति यः स त्रिमधुः । त्रिसुपर्णी अध्वर्युवेदभागस्यार्थतो ग्रन्थस्याध्येता । द्रोणपाठको धर्मशास्त्रपाठकः । ब्राह्मोढापुत्रो ब्राह्मविवाहपरिणीतापुत्रः । वागीश्वरो विद्वान् । 'अभावे···वचनात्। इति नवकण्डिकागदाधरभाष्ये अष्टमी कण्डिका ॥ ८ ॥

( श्राद्धका० ) इत्थं ग्राम्यारण्यौषधिमूलफलैरनेकमत्स्यमांसैश्च तृप्तिमभिधायाधुनाक्षयतृप्तिं विवक्षुः सूत्रमारभते । 'अथाक्षयतृप्तिः' अथ शब्दः प्रश्ने कार्त्स्न्ये वा । अक्षयतृप्तिः कथं किंवाक्षयतृप्तिकरं द्रव्यमिति प्रश्नमित्यर्थः । कार्त्स्न्येनाक्षयतृप्तिरुच्यत इति वार्थः । अक्षयोऽनन्तता । तथा च मनुः—कालशाकं महाशल्कः खड्गो लोहामिषं मधु । आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्वशः ॥ इति । प्रश्नोत्तरमाह—' खड्गमांसं कालशाकं लोहच्छागमांसम् ' खड्गस्तूपरः खड्गमृगस्तन्मांसं निषिद्धपृष्ठादिव्यतिरिक्तम् । तथा च विष्णुः—कालशाकं महाशल्को मांसं वार्ध्रीनसस्य च । सर्वलोहच्छागेनानन्त्यमिति । लोहितशब्दोऽत्रावयववृत्तिः । एवमादिद्रव्यमक्षयतृप्तिकरमिति पूर्वप्रश्नस्योत्तरमित्यर्थः। खड्गलोहितयोर्मध्ये कालशाकोक्तिस्तत्तुल्यफलार्था । ' मधु महाशल्कः ' मधु माक्षिकम् । महाशल्को मत्स्यभेदः । महसेन इति मध्यदेशप्रसिद्धः । महाशल्का महाकालिनो मत्स्या इति यमस्मृतिः । बृहच्छिवल इति यस्य रूढिरिति हलायुधः । ढेकायीति प्रसिद्ध इति कल्पतरुः । कलम्बाख्य इति कश्चित्। शल्केकेत्यन्ये। एवमनेकविप्रतिपत्तौ पुलस्त्योक्तो वादर्तव्यः। एकशल्कोऽर्धचन्द्रश्च ललाटे खड्गसंयुतः । शुक्लवर्णस्तु मत्स्यो हि महाशल्कः स उच्यते इति । अत्रैक आहुः—कलौ श्राद्धे मधु निषिद्धमिति । तथा च श्राद्धे मांसं तथा मध्विति लिखितं प्राक् तन्न विचारसहम्। निबन्धकृद्भिर्मूलाप्रतिपादनादित्युक्तम्। कलौ विधायकवचनोपलब्धेश्च । तथा च पैठीनसिः—परमान्नं कालशाकं मधु मांसं घृतं पयः। मुन्यन्नानि तिला विप्राः प्रकृत्या हविरष्टधा । शस्तान्यष्टौ तु सर्वेषु युगेषु मुनिसत्तमाः । पितॄणां देवतानां च दुर्लभानि कलौ युगे । इति । परमान्नं पायसम्। देवलोऽपि—दर्भास्तिला गजच्छाया दौहित्रं मधुसर्पिषी । कुतपो नीलशण्डश्च पवित्राणीह पैतृके । इह कलौ । तथा—तुलसी मधु दर्भाश्च तिलाः सर्पिर्मृगामिषम् । एतन्मेध्यतमं नित्यं सदाचाराश्च ये द्विजाः । इति । सुमेधा अपि—विमांसं विमधु श्राद्धं विघृतं प्रीतिभोजनम्। विना समस्तं कामो व्योमालिङ्गनवत्रयम्। इति । 'वर्षासु महाश्राद्धम्' वर्षर्तौ मघानक्षत्रे श्राद्धमक्षयतृप्तिकृदित्यर्थः । एतच्चापिण्डकं ज्येष्ठपुत्रिणापि कर्तव्यम्। तथा च देवीपुराणम्—तत्रापि महती पूजा कर्तव्या पितृदैवते । ऋक्षे पिण्डप्रदानं तु ज्येष्ठपुत्री विवर्जयेत् । इति । तथा—मघायां पिण्डदानेन ज्येष्ठः पुत्रो विनश्यति । इति । अत्रैक आहुः—ज्येष्ठ आद्यगर्भोद्भव इति । तदयुक्तम् । तद्व्यतिरिक्तस्यापि ज्येष्ठत्वात् । तथा च शातातपः—अनाद्यपुत्रो ज्येष्ठोऽपि भ्राता पुत्रो निगद्यते । इति । अतश्च ज्येष्ठपुत्ररहितेन मघायां सपिण्डमेव कर्तव्यमिति गम्यते । महाफलत्वात् । एतच्च मघान्वितदिनान्तरे, न त्रयोदश्याम् । मघायां पिण्डदानेन ज्येष्ठः पुत्रो विनश्यति । कनीयांस्तु त्रयोदश्यां क्षयादभ्युदयादृत इत्युभययोगे पुत्रिमात्रस्य पिण्डनिषेधात्। अत्र चाविभक्तभ्रातॄणां पौत्रस्य च पुत्राभावे महाफलत्वात् पृथक् पृथगधिकारः । तथा च पैठीनसिःअत्र पितृगाथा—छागेन सर्वलोहेन वर्षासु च मघासु च । पुत्रो वा यदि वा पौत्रो यो नो दद्यात्त्रयोदशीमिति । तथा—विभक्ता वाविभक्ता वा कुर्युः श्राद्धमदैवतम् । मघासु च ततोऽन्यत्र ना-

धिकारः पृथग्विना । अदैवतं क्षयाहैकोद्दिष्टं पृथक्पदमुभयत्र विभक्ता अविभक्ता वाऽदैवतं मघासु च श्राद्धं पृथक्कुर्युः । ततोऽन्यत्र पृथग्विना नाधिकार इत्यन्वयः । अथवा तत इति सार्वविभक्तिकस्तस् । ततो विनाऽदैवतं मघाश्राद्धं च विनाऽन्यत्र पृथग्नाधिकार इत्यन्वयः । उभयान्वयेऽपि क्षयाहमघाश्राद्धयोरेव विभक्ताविभक्तयोः पृथक् पृथगधिकारोऽन्यत्र न किंत्वविभक्तैरेकेनैवैकं श्राद्धं कर्तव्यं न पृथगित्यर्थः । तथा च प्रचेताः—अर्वाक्संवत्सरात्सर्वे कुर्युः श्राद्धं समेत्य वै । संवत्सरे व्यतीते तु कुर्युः श्राद्धं पृथक् पृथक् । पठन्ति च—एकादश्याद्यामशो(?) ज्येष्ठस्य विधिवत्क्रियाः । कुर्युर्नैकैकशः श्राद्धमाब्दिकं तु पृथक् पृथगिति । किं च—नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश । एकेनैव तु कार्याणि संविभक्तधनेष्वपि । अपिशब्दाद्विभक्तेष्विति परिगणनात् । यत्तु—विभक्तास्तु पृथक्कुर्युः प्रतिसंवत्सरादिकम् । एकेनैवाविभक्तेषु कृते सर्वैस्तु तत्कृतम् । यच्च—भ्रातृणामविभक्तानामेको धर्मः प्रवर्तते । विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक् इति वचनादविभक्ता मध्यदेशादावेकमेव कुर्वन्ति तदशक्तविषयमित्यविरोधः । वर्षास्विति चांद्रमासाभिप्रायम् । ननु च वर्षास्वित्यभिधानान्मासद्वयात्मकस्यर्तोः क मासे मघाश्राद्धमिति संदेहः । मैवम् । अपरपक्षे श्राद्धमित्युपक्रमादित्यदोषः । अतश्चापरपक्षमघायामिति । तथा च वृद्धयाज्ञवल्क्यः—यास्यं वा पैतृकं वापि पितृपक्षे विशेषतः । तत्र संकल्पनं कुर्यात्पितृणां पुष्टिदः सदेति । 'हस्तिच्छायायां च' श्राद्धमक्षयतृप्तिकृदिति शेषः । सा चात्र गजस्यैव या पूर्वं वर्तते सा मुख्या । तथा च विश्वामित्रः—परमान्नं च यो दद्यात्पितृणां मधुना सहेति । छायायां तु गजेन्द्रस्य पूर्वस्यां दक्षिणामुखः । इति । पारिभाषिकी तु सा गजस्य छायेव गजच्छायेति व्युत्पत्त्या गौणी । तथा च नानावचनानि ब्राह्मादिषु—सैंहिकेयो यदा भानुं ग्रसते पर्वसंधिषु । हस्तिच्छाया तु सा प्रोक्ता तत्र श्राद्धं प्रकल्पयेत् । प्रचेताः—हंसे हस्तस्थिते या तु मघायुक्ता त्रयोदशी । तिथिर्वै श्रावणीया तु सा छाया कुंजरस्य तु । तथा—हंसे हस्तस्थिते या स्यादमावास्या करान्विता । सा ज्ञेया कुञ्जरच्छाया इति बोधायनी स्मृतिः । वायवीये—वनस्पतिगते सोमे छाया या प्राङ्मुखी भवेत् । गजच्छाया तु सा प्रोक्तेति चकारोक्ता । वार्ध्रीनस आरक्तः । तथा च मार्कण्डेयः—वार्ध्रीनसामिषं लोहं कालशाकं तथा मधु । अनन्तां च प्रयच्छन्ति तृप्तिं गौरसुतस्तथा । अष्टवर्षा विवाहिता गौरी तत्सुतो गौरः । वर्धमानतिलं श्राद्धमक्षयं मनुरब्रवीत् । सर्वकामैः स यजते यस्तिलैर्यजते पितॄन् । न चाकामेन दातव्यं तिलश्राद्धं कथंचनेति । वर्धमानतिलं तिलबहुलम् । स्कंदसंवादेऽपि—कालशाकं महाशल्को लोहाजस्तूपरो घृतम् । आनन्त्यायैव भवति तथा पैठीनरोहिताविति । घृतं घृतबहुलम् । घृतेन भोजयेद्विप्रान्घृतं भूमौ समुत्सृजेदिति वायवीयवचनात् । भूमौ समुत्सृजेदिति तथा पात्रं पूरणीयम् यथा घृतं भुवि पततीति, घृतबहुलमित्यर्थः । एवमक्षयतृप्तिकृद्द्रव्यमुक्त्वा तत्तृप्तिहेतून्पङ्क्तिपावनानाह 'मन्त्राध्यायिनः पूताः' पङ्क्तिपावना इति शेषः । मन्त्रशब्दः संहितावचनः । बहुवचनमेकद्वित्रियथापेक्षमृग्वेदाद्यनेकसंहितापेक्षं वा । मन्त्राध्यायित्वमात्रेणैव केवलं पङ्क्तिपात्रत्वं नेति पूता इति विशेषणम् । तच्चौचित्यादुत्तरत्रापि सार्वत्रिकम् । मनोवाक्कायकर्मभिः शास्त्रोक्तव्रतातिशयेन निषिद्धवर्जनेन च बाह्याभ्यन्तरशुद्धियुक्ताः पूता इत्युच्यन्ते । अथवा पूतः पञ्चविधः । तथा च विष्णुः—तीर्थपूतो यज्ञपूतस्तपःपूतः सत्यपूतो मन्त्रपूत इति । 'शाखाध्यायी' पूतः पङ्क्तिपावन इति शेषः । शाखाशब्दो मन्त्रब्राह्मणात्मकवेदापेक्षः अङ्गानां वक्ष्यमाणत्वात् । तथा च शङ्खः—यजुषां पारगो यश्च ऋचां साम्नां च पारगः । अथर्वशिरसोऽध्येता ब्राह्मणः पङ्क्तिपावनः । इति । 'षडङ्गवित्' षडङ्गो वेद उक्तस्तमर्थतः पाठतश्च यो वेत्ति स पूतस्तादृश इति शेषः । अनूचान इत्यर्थः । तथा च स्कन्दसंवादे—अनूचानाः श्रोत्रियाश्च ब्राह्मणाः पङ्क्तिपावनाः । इति । शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः । छन्दो विचितिरित्येतैः

षडङ्गो वेद उच्यते। अत्र मन्त्राध्यायिप्रभृत्येतावत्पर्यन्तं गुणाधिक्योपक्रमादुत्तरोत्तरं प्राशस्त्यं सूचितम्। अत्र कश्चिदाह—षडङ्गानि तेषामेकं वापि यो वेत्ति स एवेति। तन्नोचितं, बहुव्रीह्युपलब्धेः। अनूचानोक्तिपरित्यागप्रसक्तेश्च। एवं वेदाध्ययनेन पङ्क्तिपावनत्वमुक्त्वा तदसंभवेऽप्याह 'ज्येष्ठसामगः' ज्येष्ठसामशब्दो द्वेधा विवक्षितः। तथा हि—ज्येष्ठसामसंज्ञकं सामत्रयं यो गायति स तथा। अथवा ज्येष्ठसामसंज्ञकं व्रतं तद्यो गच्छत्याचरितुं जानाति स ज्येष्ठसामगः। ज्ञानार्थस्य गमेर्डप्रत्ययः। ततश्च ज्येष्ठसामत्रयं गायता येन तद्व्रतं चीर्णं स ज्येष्ठसामगश्च तन्मार्गेणैव पावन इत्यर्थः। 'गायत्रीसारमात्रोऽपि' गायन्तं त्रायत इति गायत्रा सैव गायत्री तां वेद सारत्वेनोपादाय तज्जपादिमात्रपरो गायत्रीसारमात्रः। तथा च विष्णुः—गायत्रीजपनिरत इति। अथवा गयाः प्राणास्तांस्त्रायते गयत्रा सैव गायत्री, सारमात्रं सर्वमन्त्रमूलं यस्य, न मन्त्रान्तरं स गायत्रीसारमात्रः। तथा च श्रुतिः—साहैषा गयांस्तत्रे प्राणा वै गयास्तत्प्राणांस्तत्रे तद्यद्गयांस्तत्रे तस्माद्गायत्री नामेति। मनुरपि—गायत्रीसारमात्रोऽपि वरं विप्रः सुयन्त्रितः। नायंत्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयीति। गायत्रीव्रतचारीति कश्चित्। अपिशब्दादन्ये शास्त्रोक्ताः। तथा च यमः—ये सोमपा विरजसो धर्मज्ञाः शान्तबुद्धयः। व्रतिनो नियमस्थाश्च ऋ[illegible]लाभिगामिनः। अथर्वशिरसोऽध्येता सर्वे ते पङ्क्तिपावनाः। इत्यादि। 'पञ्चाग्निः' पूतस्तादृश इति शेषः। सभ्यावसथ्यौ त्रेता च यस्य स्युः स एवाग्निहोत्री। अथवा, पञ्चाग्नयो मनुष्येण प्रयत्नतः (?)। माता पिता चाग्निरात्मा गुरुश्च भरतर्षभेति महाभारतोक्तः पंचाग्निः। पञ्चाग्निव्रतचारीति कश्चित्। उपनिषत्पठ्यमानपञ्चाग्निविद्यावेत्तेत्यन्यः। पञ्चाग्निरेकाग्नेरुपलक्षणम्। तथा च मनुः—त्रिणाचिकेत एकाग्निरिति। 'स्नातकः' व्याख्यातचरः। इह पुनस्तद्ग्रहणं चान्द्रायणादिव्रतचारिप्राप्त्यर्थम्। तथा च यमः—चान्द्रायणव्रतचरः सत्यवादी पुराणवित्। निष्णातः सर्वविद्यासु शान्तो विगतकल्मषः। गुरुवेदाग्निपूजासु प्रसक्तो ज्ञानतत्परः। विमुक्तः सर्वदा धीरो ब्रह्मभूतो द्विजोत्तमः। अनमित्रो न वाऽमित्रो मैत्र आत्मविदेव च। स्नातको जप्यनिरतः सदा पुष्पबलिप्रियः। ऋजुर्मृदुः क्षमी दान्तः शान्तः सत्यव्रतः शुचिः। वेदज्ञः सर्वशास्त्रज्ञः उपवासपरायणः। गृहस्थो ब्रह्मचारी च चतुर्वेदविदेव च। वेदविद्याव्रतस्नाता ब्राह्मणाः पङ्क्तिपावनाः। इति। 'त्रिणाचिकेतः' पङ्क्तिपावन इति शेषः। अत्राहुः—उशन्ह वै वाजश्रवसः सर्ववेदसं ददावित्यादावनुवाके कठश्रुतौ पठ्यमाने त्रिणाचिकेतनाम्नो मुनिपुत्रस्य प्रश्नत्रयविषयोऽत्रोच्यत इति व्युत्पत्त्या त्रिनाचिकेतस्तत्पाठतदर्थाभ्यां ब्राह्मणोऽपि त्रिनाचिकेत इति। त्रिश्चितो नाचिकेतोऽग्निर्येन स इत्यन्यः। तन्नोचितम्। त्रिणाचिकेतशब्दस्य यौगिकस्य पारिभाषिकस्य वात्र विवक्षितत्वात्। तथा हि कित ज्ञाने धातुः। वृत्तातिशयेन तपोविशेषेण च तृणवत्सर्वमाचिकेति जानातीति त्रिणाचिकेतः। तथा च ब्रह्मपुराणम्—आचिकेत्तीति विश्वं यस्तृणवत्सर्वनिस्पृहः। तृणाचिकेतः स गृही रागद्वेषविमत्सरः। इति। पठन्ति च—फलमूलदधिक्षीरगोमयाम्बुघृताशनः। त्रिणाचिकेत उक्तोऽसौ योऽन्नं त्यजति नित्यशः। इति। अथवा अध्वर्युर्वेदभागज्ञस्तद्व्रती नियतो द्विजः। तृणाचिकेतः स ज्ञेयस्तद्योगात्पुरुषोऽपि यः। इति ब्रह्मपुराणोक्तो वा। 'त्रिमधुः' तादृश इति शेषः। त्रिमधु ऋग्वेदैकदेशस्तद्व्रतं च तदाचरणेन तदध्यायीत्येके। त्रिमधुरथर्ववेदस्य (?) तच्चारीत्यन्ये। अपरेऽन्यथा पेठुः। त्रीणि त्रीणि विशुद्धानि विद्या योनिश्च कर्म च। पुरुषत्रयविख्यातस्त्रिमधुः परिकीर्तितः। इति। 'त्रिसुपर्णी' पङ्क्तिपावन इति शेषः। त्रिसुपर्णमृग्यजुषयोरेकदेशस्तद्व्रतं च तदाचरणेन तद्व्रताध्यायी त्रिसुपर्णीत्येके। तैत्तिरीयशाखापठितस्य ब्रह्म मेतुमामित्यादि ये ब्राह्मणास्त्रिसुपर्णं पठन्त्यासहस्रात्पङ्क्तिं पुनन्ति ते सोमं प्राप्नुवन्तीत्यनुवाकत्रयस्यार्थतो ग्रन्थतश्चाध्येता त्रिसुपर्ण इत्यन्ये। अपरेऽन्यथा पेठुः। पितरः सप्तपूर्वे च यज्वानो भूरिदक्षिणाः। यस्येदृशो मातृ-

वंशस्त्रिसुपर्णीति स स्मृतः इति। 'द्रोणपाठकः' पूतस्तादृश इति शेषः। द्रोणशब्दोऽवयववृत्तिः। धर्मद्रोण इत्यर्थः। तथा च गोभिलसूत्रम्—धर्मद्रोणपाठक इति। धर्मद्रोणो धर्मशास्त्रम्। तथा च स्कन्दसंवादे—पुराणस्मृतिवेत्तारः कृतव्याकरणश्रमाः। अनूचानाः श्रोत्रियाश्च ब्राह्मणाः पङ्क्तिपावनाः। यमोऽपि—मन्त्रब्राह्मणविच्चैव यश्च स्याद्धर्मपाठकः। इति। 'ब्राह्मोढापुत्रश्चेति' पङ्क्तिपावनाः। ब्राह्मविवाहेनोढा ब्राह्मोढा। तत्पुत्रः पूतः पङ्क्तिपावन इत्यर्थः। चकारो ब्राह्मोढापत्यादिसमुच्चयार्थः। तथा च शङ्खः—ब्रह्मदेयानुसंतानो ब्रह्मदेयाप्रदायकः। ब्रह्मदेयापतिश्चैव ब्राह्मणाः पङ्क्तिपावनाः। इति। ब्रह्मदेया ब्राह्मविवाहेन दत्ता। तदनुसंतानस्तत्संततिः। इतिशब्द आद्यर्थो न समाप्तौ। इत्याद्यर्थेऽपीत्यर्थः। तथा च मनुः—वेदार्थवित्प्रवक्ता च ब्रह्मचारी सहस्रदः। शतायुश्चेति विज्ञेया ब्राह्मणाः पङ्क्तिपावनाः। इत्यादि। ब्रह्मचार्यधीयानः। जटिलं वेत्यनधीयानस्य तेनैव प्रतिषिद्धत्वात्। यमोऽपि—गृहस्थो ब्रह्मचारी च चतुर्वेदविदेव च। चतुर्वेदविदेव चेति ब्रह्मचारिविशेषणत्वात्। सहस्रदो गवां सुवर्णस्य वा। स्कन्दसंवादेऽपि—अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च। ज्ञानयज्ञतपःसत्यतीर्थपूताः कुलान्विताः। श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः। इति। 'वागीश्वरो याज्ञिकश्च' पावनाः। उच्यते सर्वमनयेति वाक् व्याकरणम्। ईश्वरशब्दः समर्थव्याख्यातृपरः। यज्ञं वेत्तीति याज्ञिकः। क्रतूक्थादित्वाट्ठक्। पुनः पावनग्रहणं पङ्क्तिपावनेष्वपि पावनत्वज्ञापनार्थम्। तथा चोक्तम्—यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम्। उभौ तौ पुण्यकर्माणौ पङ्क्तिपावनपावनाविति। चकारोऽन्यसमुच्चयार्थः। तथा च बृहस्पतिः—यद्येकं भोजयेच्छ्राद्धे छन्दोगं तत्र भोजयेत्। ऋचो यजूंषि सामानि त्रितयं तत्र विद्यते। अटेत पृथिवीं सर्वां सशैलवनकाननाम्। यदि लभ्येत पित्रर्थे साम्नामक्षरचिन्तकः। ऋचाऽनुतृप्यति पिता यजुषा तु पितामहः। पितुःपितामहः साम्ना छन्दोगोऽभ्यधिको ह्यतः। इति। अक्षरचिन्तकः सामविभागज्ञः। तथा च गोभिलः—आमन्त्रिते जपेद्दोहान्नियुक्तस्त्वृषभाञ्जपेत्। अतीषङ्गांश्च तत्रैव जप्त्वाश्नीयात्समन्ततः। भुक्त्वाचम्य पदस्तोभाञ्जपेत्तत्र समाहितः। गोसूक्तं चाश्वसूक्तं च इन्द्रसूक्तं च सामनी। तरत्समस्य यत्साम तच्च जप्त्वैकधीर्बुधः। गीत्वाऽऽसीनः शुचौ देशे वामदेव्यं ततो जपेत्। एवं सामभिराच्छन्नो भुञ्जानस्तु द्विजोत्तमः। श्राद्धभोजनदोषैश्च महद्भिर्नोपलिप्यते। अन्यथैव हि भुञ्जानो हव्यकव्येष्वमन्त्रवित्। आत्मानमन्नं दातृंश्च गमयत्यासुरीं गतिमिति। आज्यदोह इत्याद्याज्यदोहाः सुरूपकृत्नु मूतये, पिबा सोममिन्द्र, मन्दन्तुत्वा, स्वादोरित्था विषूवत इत्यृगुत्पन्नानि सामानि ऋषभाः स्त्रियः पुराजिती चान्धस इति। असर्जि चकारथ्ये यथाजाविति अमीनवत्ते अद्रुह इति अश्वान्तर्गादितासूत्पन्नानि सामानि अतिषङ्गाश्चत्वारः। घर्तोदिवः पचते रथ्योत्तरस इत्यादि ऋगुत्पन्नानि समानि पदस्तोभाः। गोसूक्तानि सर्वसामगप्रसिद्धानि। अश्वसूक्तं प्रसिद्धम्। यदिन्द्राहं यदात्वमस्यां गीतिभेदेनेन्द्रशुद्धे सामनी। एतोन्विन्द्रं स्तवामेत्यस्यं(?)सामद्वयं तरत्समंदीधावतीत्येकम्। कयानश्चित्र आभुवेत्यादि वामदेव्यम्। एवं सामभिराच्छन्नो रक्षितः श्राद्धदोषैर्न लिप्यते मन्त्रविदित्यर्थः। 'नियोज्याभावेऽप्येकं वेदविदं पङ्क्तिमूर्धनि नियुञ्ज्यात्' नियोज्याः पूर्वोक्ताः स्मृत्युक्ताश्च। तेषामभावेऽप्राप्तौ एकं वेदविदं वेदार्थज्ञमेव मुखपङ्क्त्यादौ नियुञ्ज्यादुपवेशयेत्। तेनैवेतरपङ्क्त्युपविष्टाः अमुख्याः पूता भवन्तीत्यर्थः। अथवा वेदविद्वेदपारगः। तल्लक्षणं च—उत्पत्तिप्रलयौ चैव भूतानामागतिं गतिम्। वेत्ति विद्यामविद्यां च स भवेद्वेदपारगः। इति। अपिशब्दोऽभावेऽनुकल्पविशेषसमुच्चयार्थः। तथा चापस्तम्बः—ब्राह्मणान्भोजयेद्ब्रह्मविदो योनिगोत्रमन्त्रान्तेवास्यसंबन्धानिति। योनिसंबन्धा मातुलश्वशुरादयः। गोत्रसंबन्धाः सपिण्डसगोत्रादयः। मन्त्रसंबन्धा वेदमन्त्रादि अनुशिष्टाः(?)। अन्तेवासिसंबन्धाः शिष्यानुशिष्यादयः। एवंविधसंबन्धरहितानभावे भोजयेदित्यर्थः। ननु चाभावेऽपि शिष्यानित्यत्रापिशब्देनानुकल्पः सं-

गृहीतस्तत्कथं पुनरिहापिशब्देनानुकल्पविशेषाभिधानमिति । उच्यते—अनुकल्पेऽपि विशिष्टविध्यर्थ-मित्यदोषः । तेन मातामहं मातुलं च स्वस्रीयं श्वशुरं गुरुम् । दौहित्रं विट्पतिं बन्धुमृत्विग्याजौ च भोजयेदित्यत्र मन्वादिवचनेऽविशेषेण बन्धुमातुलशिष्याणामनुकल्प उक्तस्तत्र विशेषविधिः पुनरपिशब्देन गृहीत इत्यर्थः । तथा च पाराशरः—पञ्चभिः पुरुषैर्युक्ता अश्राद्धेयाश्च गोत्रिणः । षड्भ्यस्तु परतः पुंभ्यः श्राद्धे भोज्याः स्वगोत्रिणः । पञ्चभिर्युक्ता पञ्चपुरुषपर्यन्तमश्राद्धेया इत्यन्वयः । मातुले तु स्कन्दसंवादः—स्वसा हि मातुलसुता यस्तामुद्वहते द्विजः । गुरुतल्पग एवासौ स च स्यात्पङ्क्तिदूषकः । इति । स चेति मातुलः । शिष्यस्त्वधनहारीति विशिष्टविधिरिति । श्वशुरस्वस्रीयादीनां गुणित्वे विधिर्निर्गुणत्वे योनिसंबन्धत्वेन निषेध इत्यविरोधः । नियोज्याभावे वेदविदैकेनैव सिद्धिरित्यत्र हेतुमाह 'आसहस्रात्पङ्क्तिं पुनातीति वचनात्' यतः सहस्रविप्रयुतां पङ्क्तिमेको वेदवित्पुनातीति वचनम् तस्मादेकमपि तादृशं पङ्क्तिमूर्धन्युपवेशयेदित्यर्थः । वचनं चात्र भवति—तेषामेकः पङ्क्तिमूर्धनि नियुक्तोऽवेदवित्सहस्रैरप्यपहृतां पङ्क्तिं पुनातीति । नित्यं योगपरो विद्वान् समलोष्टाश्मकाञ्चनः । ध्यानशीलो यतिः शान्तो ब्राह्मणः पङ्क्तिपावनः । इति । वर्ज्यानाह मनुः—ये स्तेनपतितक्लीबा ये च नास्तिकवृत्तयः । तान्हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत् । जटिलं चानधीयानं दुर्बालं कितवं तथा । याजयन्ति च ये पूगांस्तांश्च श्राद्धे न भोजयेत् । चिकित्सकान्देवलकान्मांसविक्रयिणस्तथा । विपणेन च जीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः । प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः । प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्वार्धुषिस्तथा । यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः । ब्रह्मद्विट्परिवित्तिश्च गणाभ्यन्तर एव च । कुशीलवोऽवकीर्णी च वृषलीपतिरेव च । पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे । भृतकाध्यापकश्चैव भृतकाध्यापितस्तथा । शूद्रशिष्यो गुरुश्चैव वाग्दुष्टः कुण्डगोलकौ । अकारणपरित्यागी मातापित्रोर्गुरोस्तथा । ब्राह्मैर्यौनैश्च संबन्धैः संयोगं पतितैर्गतः । अगारदाही गरदः कुण्डाशी सोमविक्रयी । समुद्रयायी बन्दी च तैलिकः कूटकारकः । पित्रा विवदमानश्च केकरो मद्यपस्तथा । पापरोग्यभिशस्तश्च दाम्भिको रसविक्रयी । धनुःशराणां कर्ता च यश्चाग्रेदिधिषूपतिः । मित्रध्रुग्द्यूतवृत्तिश्च पुत्राचार्यस्तथैव च । भ्रामरी गण्डमाली च श्वित्र्यथो पिशुनस्तथा । उन्मत्तोऽन्धश्च वर्ज्याः स्युर्वेदनिन्दक एव च । हस्तिगोश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति । पक्षिणां पोषको यश्च युद्धाचार्यस्तथैव च । स्रोतसां भेदकश्चैव तेषां चावरणे रतः । गृहसंवेशको दूतो वृक्षारोपक एव च । श्वक्रीडी श्येनजीवी च कन्यादूषक एव च । हिंस्रो वृषलपुत्रश्च गणानां चैव याजकः । आचारहीनः क्लीबश्च नित्यं याचनकस्तथा । कृषिजीवी शिल्पजीवी सद्भिर्निन्दित एव च । औरभ्रको माहिषिकः परपूर्वापतिस्तथा । प्रेतनिर्यातकश्चैव वर्जनीयाः प्रयत्नतः । एतान्विगर्हिताचारानश्राद्धेयान्नराधमान् । द्विजातिप्रवरो विद्वानुभयत्र विवर्जयेत् । इति । एषामर्थः—स्तेनो ब्रह्मस्वान्यद्रव्यहारी । तस्य पतितत्वेनोपादानात् । नास्तिका नास्ति कर्मफलमित्यभिमानिनस्तेभ्यो वृत्तिर्येषां ते । जटिलो ब्रह्मचारी । अनधीयानस्तद्विशेषणम् । अधीयानस्य श्राद्धेयत्वात् । दुर्बालः खल्वाटः कपिलकेशो वा । दुश्चर्मेति केचित् । कितवो द्यूतासक्तः । पूगयाजकाः गणयाजकाः । चिकित्सकाः भिषजः । देवलकाः धनार्थं देवार्चकाः । देवार्चनपरो विप्रो वित्तार्थी वत्सरत्रयम् । असौ देवलको नाम हव्यकव्येषु गर्हितः । इति वचनात् । मांसविक्रयिण आपद्यपि, विपणेन च जीवन्त इत्यनेनैवानापदि निषेधसिद्धेः । प्रेष्यो धनार्थमादेशकारी । प्रतिरोद्धा विरोधी । त्यक्ताग्निर्विहितत्यागं विनैवोभयाग्नित्यागी । वार्धुषिर्द्रव्यवृद्ध्युपजीवी । यथा समर्घं धान्यमुद्दिश्य महार्घं यः प्रयच्छति । स वै वार्धुषिको नामेति । यक्ष्मी क्षयी । पशुपालो नाम पित्र्यर्थम् (?) । परिवेत्ता अकृतविवाहाधाने ज्येष्ठे भ्रातरि कृतदाराग्निसंग्रहः । निराकृतिरधीतनष्टवेदः । अधीत्य विस्मृते वेदे भवेद्विप्रो

निराकृतिरिति देवलोक्तेः । यस्त्वाधायाग्निमालस्याद्देवादीन्नैभिरिष्टवान् । निराकर्ताऽमरादीनां स विज्ञेयो निराकृतिः । इति वा । ब्रह्मद्विट् ब्राह्मणद्वेषी । नानाजातीया अनियमवृत्तयो गणास्तन्मध्यवर्ती गणाभ्यन्तरः । ग्रामीण इति कश्चित् । कुशीलवो नटवृत्तिः । अवकीर्णी स्खलितब्रह्मचर्यः । वृषल्यनेकविधा तत्पतिः । तथा च—वन्ध्या तु वृषली ज्ञेया वृषली च मृतप्रजा । चण्डाली च तृतीया च कुमारी याऽरजस्वला । इति स्कन्दसंवादोक्ता । यस्य गृहे भार्यायाः उपपतिर्जारः । वाग्दुष्टो निष्ठुरः । पुनर्भूरनेकविधा तत्पुत्रः पौनर्भवः । भृतको भृत्या परिक्रीतोऽध्यापकः । तेनैवाध्यापितश्च शिष्यः गुरुश्चेति शूद्रस्येत्यनुषङ्गः । अकारणमपातित्यं तेन पित्रोर्गुरोश्च त्यागी । ब्राह्मैरध्ययनाध्यापनैर्यौनैर्वैवाहिकैः संबन्धैः पतितैः सावित्रीपतितैर्व्रात्यैश्च यः संयोगं गतः स विवक्षितः । गरदो विषदो विप्रादन्येषां तस्य दाने महापातकित्वेन संग्रहात् । कुण्डं षष्टिः फलानि तावत्परिमितान्नभोजी । जारजान्नभक्षीत्यन्यः । समुद्रयायी नौकया । वन्दी स्तावकः । तैलिकस्तिलयन्त्रप्रवर्तको विप्रः । कूटकारको मानतुलाकूटकारी । पित्रा धनार्थं विवदमानः । केकरोऽध्यर्धदृष्टिर्वक्रदृष्टिरिति यावत् । मद्यपो द्राक्षादिमद्यपः । पापरोगी कुष्ठादिनिन्द्यरोगी । अभिशस्तो वाच्ययुक्तः । दाम्भिकः पाखण्डः कूटधर्मचारी । रसविक्रयी गुडलवणादिविक्रेता । अग्रेदिधिषूपतिर्ज्येष्ठायामनूढायां कनिष्ठोढा तत्पतिर्द्यूतवृत्तिजीवकः । पुत्राचार्योऽक्षरपाठकः । पुत्रानुशिष्ट इति केचित् । भ्रामरी भ्रमरवदर्थार्जकः । अपस्मारीति कश्चित् । गृहसंवेशको वार्धकिधर्मे वर्तमानः । मूल्यगृहकारीत्यन्यः । हस्तिगोष्ट्रोष्ट्रदमको दमनेन जीवनः । नक्षत्रैर्ज्योतिषवृत्त्या जीवकः । युद्धाचार्यो युद्धापदेष्टा तदुपायी । स्रोतसां भेदकः स्रोतोनिरोद्धा । तेषामावरणे रतः । सेतुकृत् । दूतो दूत्यवृत्तिः । वृक्षारोपको वृत्त्यर्थम् । श्वक्रीडी श्वभिः क्रीडी । कन्यादूषकोऽङ्गुल्यादिना योनिविदारकः । वृषलपुत्रो वृषल एव पुत्रोऽस्य नान्यः । क्लीबो धर्मोद्यमशून्यः । षण्डस्योक्तत्वात् । सद्भिर्निन्दितोऽकारणेऽपि । अथवा कृषिजीविविशेषणम् । चीर्णव्रता गुणैर्युक्ता भवेयुर्येऽपि कर्षकाः । सावित्रीज्ञाः क्रियावन्तस्ते राजन्केतनक्षमाः । इति धार्मिककर्षकाभ्यनुज्ञानात् । औरभ्रिको मेषपोषकः । माहिषो महिषीपालः, व्यभिचारिणीपुत्रश्च । 'महिषीत्युच्यते भार्या सा चैव व्यभिचारिणी । तस्यां यो जायते गर्भः स वै माहिषकः स्मृतः । इति वचनात् । परपूर्वा, प्रागन्यस्मै दत्ता तस्याः पतिः परिणेता । द्वितीयविवाहेन संस्कृतेभ्यः पौनरुक्त्यं पुनर्भ्वाः । प्रेतनिर्यातको मूल्येन प्रेतहारकः । राष्ट्रकामास्तथोन्मत्ताः पशुविक्रयिणश्च ये । मानकूटास्तुलाकूटाः शिल्पिनो ग्रामयाजकाः । राजभृत्यान्धबधिरामूकखल्वाटपुङ्गवाः । वणिजो मधुहर्तारो गरदा गृहदाहकाः । समयानां च भेत्तारः प्रदाने ये निवारकाः । प्रव्रज्योपनिवृत्ताश्च वृथा प्रव्रजिताश्च ये । यश्च प्रव्रजिताज्जातः प्रव्रज्यावासितश्च यः । समुद्रयायी वान्ताशी केशविक्रयिणश्च ये । अवकीर्णी च वीरघ्नो गुरुघ्नः पितृदूषकः । इति । अस्यार्थः—गुरुतल्पगः, गुरुराजसुहृद्बन्धुभृत्यात्मजजनस्त्रियः । सुतास्वसृसखीर्गच्छन् गुरुतल्पग उच्यते । इत्येवंलक्षणः । राष्ट्रका मातृधर्माभिलाषुकः । मानकूटा धान्यादिमानपात्रवञ्चकाः । मधुहर्तारो माक्षिकचोराः । प्रव्रज्योपनिवृत्ताः संन्यासिनः । वृथाप्रव्रजितः पुत्राननुत्पाद्यैव संन्यासी । प्रव्रज्यावसितो नवविधप्रत्यवसितोपलक्षकः । वान्ताशी भुक्तं वमित्वा लालसया पुनर्भोजी । केशविक्रयी चामरादिविक्रेता । वीरघ्नस्त्यक्ताग्निः पुत्रहा वा । पाठयतः शासतः प्रमादान्मृतपुत्रस्य स्मृतिष्वदोषात् । स्कन्दसंवादे—वर्जयेत्कुण्डगोलौ तु नास्तिकं रङ्गजीविनम् । जपहोमविरक्तं च शाकुनं राजसेवकम् । चिकित्सकं गानकं च कितवं हेतुवादिनम् । वृथाऽऽमिषपरित्यागी वृथापाकरुचिर्द्विजौ । ब्राह्मणा ये विकर्मस्था वैडालव्रतिकाः शठाः । रोरही नातिरिक्ताङ्गः क्रूरो धूर्तपुरोहितौ । अनध्यायेष्वधीयानाः सूचकश्च नियामकाः । स्त्रीजितश्च कदर्यश्च सुदुष्टश्चाहितुण्डकः । ग्रामयाजी शूद्रयाजी वेदसोमोपजीविकः । इत्यादि । अस्यार्थः—कुण्डगोलौ प्रसिद्धौ । रङ्गजीवी नक्षा-

दिकः। शाकुनः पक्ष्युपजीवी। हेतुवादी तर्कबलेन सर्वत्र संशयकृत्। वृथेति श्राद्धादौ मांसत्यागी। एवं पाकरुचिः। विकर्मस्थो निषिद्धकर्मा। बैडालव्रतिकः पारिभाषिकः। तथा च यस्य धर्मध्वजो नित्यं सुसाराध्वज इवोच्छ्रितः। प्रच्छन्नानि च पापानि बैडालं नाम तद्व्रतम्। तदस्यास्तीति बैडालव्रतिको लोकदम्भक इत्यर्थः। तथा च धर्मध्वजी सदालुब्धः छाद्मिको लोकदाम्भिकः। बैडालव्रतिको ज्ञेयो हिंस्रः सर्वातिसंधकः। इति। शठो वञ्चकः। अनध्यायेष्वपूर्वपाठी। सूचको राजकर्णेजपः। नियामको विवादद्रष्टा। कदर्यः पारिभाषिकः। यथा—आत्मानं धर्मकृत्यं च पुत्रान्दारांश्च पीडयेत्। लोभाद्यः पितरो भृत्यान्स कदर्य इति स्मृतः। इति। सुदूष्यः कुत्सितचारः। आहितुण्डकः सर्पहन्तेत्यादि। वृद्धयाज्ञवल्क्योऽपि—सदासवी च खल्वाटः कुप्रतिग्रहकारकः। अज्ञातकुलगोत्रो यो द्विर्नग्नः शिल्पिकर्मकृत्। अव्रतानामुपध्यायः काण्डपृष्ठैश्च ये द्विजाः। अयतिर्मोक्षवादी च चतुर्थाश्रमवर्जितः। कुणपायुधजीवी च पुत्रप्रतिनिधिश्च यः। धर्माचारविहीना ये श्राद्धेष्वेतान्विवर्जयेत्। अस्यार्थः—अव्रतानामुपाध्यायः इत्यक्षरादिशिक्षकः। काण्डपृष्ठो मातुलस्य सुतोद्वाही च विप्रोऽन्त्यश्राद्धजीविकः। काण्डपृष्ठस्तु विज्ञेयः श्राद्धे यश्चात्ति नामिषमित्युक्तः। तथा द्विजशायनिका ये च पुत्रप्रतिनिधिस्तथा। सर्वे ते ह्यत्रिणा प्रोक्ताः काण्डपृष्ठा नराधमाः। हारीतोऽपि—शूद्रापुत्रश्च यत्नश्च ये तथा क्रीतकाः सुताः। सर्वे ते मनुना प्रोक्ताः काण्डपृष्ठा द्विजाधमाः। इति। अयतिर्गृहस्थः। मोक्षवादी मुक्तिवादे रतः। तथा च ब्रह्माण्डे—श्राद्धार्हगुणयोगेऽपि नैते जातु कथंचन। निमन्त्रणीयाः श्राद्धेषु सम्यक्फलमभीप्सतेति। अत्र श्राद्धार्हा गुणा वेदाध्ययनादयः। शेषं स्मृतिभ्यो विज्ञेयमित्यलं प्रपञ्चेन।

इति कृष्णमिश्रकृतौ श्राद्धकाशिकायां सूत्रवृत्तौ अक्षयतृप्तिप्रकरणम्।

अथ काम्यानि भवन्ति स्त्रियोऽप्रतिरूपाः प्रतिपदि द्वितीयायाᳬ स्त्रीजन्माश्चास्तृतीयायां चतुर्थ्यां क्षुद्रपशवः पुत्राः पञ्चम्यां द्यूतर्द्धिः षष्ठ्यां कृषिः सप्तम्यां वाणिज्यमष्टम्यामेकशफं नवम्यां दशम्यां गावः परिचारका एकादश्यां धनधान्यानि द्वादश्यां कुप्यᳬ हिरण्यं ज्ञातिश्रैष्ठ्यं च त्रयोदश्यां युवानस्तत्र म्रियन्ते शस्त्रहतस्य चतुर्दश्याममावास्यायाᳬ सर्वमित्यमावास्यायाᳬ सर्वमिति ॥ ९ ॥

( गदाधरः )—'अथ''सर्वमिति' प्रतिपदादयश्च कृष्णपक्षजाः। स्त्रीजन्म कन्योदयः। क्षुद्रपशव अजादयः। कृषिः कृषिफलम्। वाणिज्यं वाणिज्यफलम्। परिचारका दासादयः। कुप्यं सुवर्णरूप्यव्यतिरिक्तं ताम्रादि। यूनां मृतानां त्रयोदश्यां श्राद्धं देयम्। शस्त्रहतस्येति जलादिव्रात्रिशद्दुर्मरणेन मृतानामुपलक्षणम्। प्रतिपदादितिथिष्वभिहितानि यानि फलानि तेषु स्वीयमनसोऽभीष्टान्सर्वान्कामानमावास्यायां श्राद्धदः प्राप्नोति। अत्र यद्यपि सर्वकामप्राप्तिरविशेषेण कथिता, तथापि न युगपत्सर्वकामनाप्राप्तिः, अपितु अमावास्यायामनुष्ठितेन श्राद्धेनैकैकैककामनाप्राप्तिः। एवममावास्यान्तानुष्ठितेनान्येन श्राद्धेनान्यः काम इति ॥

इति श्रीत्रिरमिचित्सम्राट्स्थपतिश्रीमहायाज्ञिकवामनात्मजदीक्षितगदाधरकृते कातीयश्राद्धसूत्रभाष्ये नवमी कण्डिका ॥ ९ ॥

(श्राद्धका० ) इत्थं श्राद्धोपयोगि सर्वमभिधायेदानीं गृहस्थस्य काम्यकर्मौचित्याच्छ्राद्धेषु काम्यकालानुपचिक्रंसुः सूत्रमारभते—'अथ काम्यानि भवन्ति' श्राद्धानीति शेषः । तत्राथशब्दः कार्त्स्न्यार्थः । न केवलं तिथय एव काम्यकालाः, किं त्वन्येऽपि स्मृत्युक्ता ज्ञेयाः इत्यर्थः । तथा च—संक्रान्तिर्विषुवच्चैव विशेषेणायनद्वयम् । व्यतीपातो जन्मनक्षं चन्द्रसूर्यग्रहौ तथा । तिथिनक्षत्रवारश्च उद्दिश्याभ्युदयं तथा । एतांस्तु श्राद्धकालान्वै काम्यानाह प्रजापतिरिति । संक्रान्तिविषुवायनादिन्यातयोः पुण्यातिशयेन विशेषोपादानात् । व्यतीपातस्त्रिविधः—महाल्पनित्यभेदेन । तथा च सिंहस्थो गुरुभौमे च मेषस्थो च रवौ सिता । द्वादशी हस्तसंयुक्ता व्यतीपातो महांस्तु सः । अल्पस्तु श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके । यद्यमा रविवारेण व्यतीपातः स उच्यते । ननु चाथशब्देन स्मृत्युक्तकालस्य संगृहीतत्वादत्र भाद्रपदीमारभ्य किमिति श्राद्धं शूद्रकृता वुद्धिस्थ एवेत्यविरोधः (?) । तस्माद्पौर्णमास्यामेवोपक्रमः । श्राद्धषोडशकस्येति प्रागुक्तम् । तथा च वायुपुराणम्—पुष्टिं प्रजां स्मृतिं मेधां पुत्रानैश्वर्यमेव च । कुर्वाणः पौर्णमास्यां तु संपूर्णफलमश्नुते । प्रतिपद्धनलाभायेत्युपक्रम्य अमावास्यां प्रयत्नेन श्राद्धं कुर्याच्छुचिः सदा । सर्वान्कामानवाप्नोति स्वर्गेस्थानंत्यमश्नुते । इति श्राद्धषोडशकं प्रतीतम् । प्रपञ्चितं चास्माभिरादिसूत्र इत्यलं पौनरुक्त्येनेति । फलानि तिथिष्वाह—'स्त्रियोऽप्रतिरूपाः प्रतिपदि' श्राद्धकृल्लभत इति शेषः । अप्रतिरूपाः अद्वितीयरूपाः स्त्रियो भार्याः । एतच्च कामनान्तरोपलक्षणम् । तथा च मनुः—कुर्वन्प्रतिपदि श्राद्धं सुरूपान् लभते सुतानिति । वायुपुराणे—प्रतिपद्धनलाभाय लब्धं चास्य न नश्यतीति । कन्यामिति याज्ञवल्क्य इत्यादि । अत्रैतच्चिन्त्यते—मृतपितृको जीवन्मातामहः किं षट्पिण्डकश्राद्धं कुर्यादुत त्रिपिण्डकमिति । अत्रैक आहुः—द्विपार्वणस्य विहितत्वाज्जीवन्मातामहमतिक्रम्यापि कुर्वीतेति । तथा च मनुः—ध्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत् । विप्रवद्वापि तं श्राद्धे स्वकं पितरमाशयेत् । पिता यस्य तु वृत्तः स्याज्जीवेद्वाऽपि पितामहः । पितुः स नाम संकीर्त्य कीर्तयेत्प्रपितामहम् । पितामहो वा तच्छ्राद्धं भुञ्जीतेत्यब्रवीन्मनुः । इति तदविचारितरमणीयम् । अस्य सार्धश्लोकद्वयस्य साग्नेरन्वाहार्यादिनियतश्राद्धविषयत्वात् । तथा च निगमः—यो वा जीवति पितॄणां तं पिण्डस्थान इत्येके । जीवतो जीवतां वा देयमिति हिरण्यकेतुः । कस्माद्यज्ञविधित्वाद्दर्शांगत्वादिति । नन्वेवं जीवत्पितृकस्य होमान्तमनारम्भो वेति कात्यायनेनान्वाहार्यादिनिषेधात्कथमेवमिति । सत्यम् । कात्यायनोक्तेर्वाजसनेयिमात्रनिषेधविषयत्वादितरसाग्नीनां मनुवचनैः जीवदतिक्रमस्य विहितत्वात् । किं चार्थान्तरं सूत्रस्य । वाजसनेयिमात्रस्य पिता स्वस्थशो (?) जीवति तदा होमान्तमनारम्भो वा विकल्पितः । यदि संन्यासी पतितो वा जीवति तदा वाजसनेयिनोऽपि जीवदतिक्रमः सूत्रकृतोऽभिप्रेत इति । तथा च कात्यायनः—ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते । व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसाविति । किं च—न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः । येभ्य एव पिता दद्यात्तेभ्यो दद्याच्च साग्निकः । इत्यनेन साग्निजीवत्पितृकस्यैवातिक्रमो विहितो न निरग्नेरिति । अपि च—दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षकम् । न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणमित्यादौ पितृग्रहणं जीवन्मातामहाद्युपलक्षणम् । तेनापि जीवन्मातामहस्य निषेधः । अन्यच्च—उद्वाहे पुत्रजनने इत्यत्रापि षड्ग्रहणेनापरपाक्षिकं न विहितम् । यत्तु, जीवत्पितरि वै पुत्रः श्राद्धकालं विवर्जयेत् । येषां वाऽपि पिता दद्यात्तेषामेके प्रचक्षते । इति हारीतोक्तम् । यच्च पितुः पितृभ्यो वा दद्यात्सपितेत्यपरा श्रुतिः । इति कात्यायनादिभिरुक्तं तत्सपिण्डीकरणविषयमाभ्युदयिकम् । तथा च वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति । येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः । इति । यत्पुनः—पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम् । अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेदिति । यच्च—" पिण्डाः स्युः षडितिस्थितिः " इत्यादिवचन-

-वृन्दं मातामहश्राद्धविधायकं तन्मृतवर्गद्वयमित्यविरोधः । तस्माज्जीवन्मातामहकर्तृ ? पितृवर्गोद्देशेनैव त्रिपिण्डकं श्राद्धमित्युचितम् । तथा च स्मृतिः— पितृवर्गे मातृवर्गे तथा मातामहस्य च । जीवेत्स यदि वर्गादौ तद्वर्गं तु परित्यजेत् । चशब्दो मातामहीसंग्रहार्थः । प्रजापतिरपि—संक्रान्तावुपरागे च पर्वोत्सवमहालये । निर्वपेदत्र पिण्डांस्त्रीनिति प्राह प्रजापतिरिति । अत एव प्राप्तैकवर्गश्राद्धस्य त्रयोदश्यां निषेधः । श्राद्धं नैकस्य वर्गस्य त्रयोदश्यामुपक्रमेदिति । एवमन्यपक्षान्तरपि । अत्र च जीवेत्स यदि वर्गादावित्यनेन न वर्गादावेव जीवतो नातिक्रमो न जीवत्पितामहादेरपीत्यर्थादुक्तम् । तेन मृतपितृको जीवत्पितामहादिकमतिक्रम्यापि दद्यादित्यर्थः । तस्मान्निरग्निजीवत्पितृकस्य सपिण्डनाभ्युदयिकश्राद्धयोरेव सर्वश्राद्धेषु जीवदतिक्रमेण श्राद्धं नेतरत्रेति चतुरस्रम् । 'द्वितीयायाᳪ स्त्रीजन्म' श्राद्धकर्तुः स्यादिति शेषः । स्त्रीजन्मेति कन्याजन्मेत्यर्थः । तथा च मनुः—कन्यकां तु द्वितीयायामिति । उपलक्षणं चैतत् । तथा च वायुपुराणम् । द्वितीयायां तु यः कुर्याद्द्विपदाधिपतिर्भवेत् । मार्कण्डेयोऽपि—द्वितीया हि प्रजाप्रदेति । कन्यावेदिन इति याज्ञवल्क्य इत्यादि । कन्यावेदी जामाता । अत्रैतच्चिन्त्यते—किमत्र पितामहादितिथौ पौत्रेण श्राद्धं कार्यमुत नेति । अत्रैके अधिकाराभावान्नेत्याहुः । तदयुक्तम् । विहितत्वात् । तथा च स्वल्पमात्स्यम्—नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ । पौर्णमास्यां च कर्तव्यं वाराहवचनं यथेति । नान्दीमुखाः पितामहादयः । चकारादन्यतिथावपि । तथा च वृद्धयाज्ञवल्क्यः—कुहूपूर्णेन्दुपञ्चम्यां यः श्राद्धं कुरुते नरः । कामिकं तु वरं पुत्रं लभते नात्र संशयः । तथा—काङ्क्षन्ति पुत्रपौत्रेभ्यः पायसं मधुसंयुतम् । तस्य त्रींस्तत्र विधिना तर्पयेत्पायसेन त्विति । पूर्णेन्दु···पदी । अयं तु विशेषः—पितृपूर्वकमिति । 'अश्वास्तृतीयायाम्' श्राद्धकर्तुरिति शेषः । उपलक्षणं चैतत् । तथा च मनुः—तृतीयायां तु वंदनति । वायुपुराणेऽपि—वरार्थिनां तृतीया च शत्रुघ्नी पापनाशिनीति । अत्रैतदुच्यते—भरण्यादावत्र किमपिण्डकं स्यादुत नेति । तत्र निषेधादपिण्डकमित्येके । तन्न । तिथिनिमित्तकत्वात् । तथा च ऋक्षयोगादिपूक्तोऽपि तद्दिने पिण्डपातनम् । तथा—तिथिनक्षत्रयोगेषु प्राधान्यं तु तिथेः स्मृतम् । तिथिमूलानि सर्वाणि यथा द्रव्ये गुणादिकमिति । यत्तु भरण्यादौ तन्निषेधः स नक्षत्रादिनिमित्तकविषयः । प्रपञ्चितं चैतदादिसूत्रे । 'चतुर्थ्यां क्षुद्रपशवः' कर्तुः स्युरिति शेषः । क्षुद्रा अजादयः । उपलक्षणं चैतत् । तथा च वायुः, श्राद्धं चतुर्थ्यां कुर्वाणः शत्रोश्छिद्राणि पश्यतीत्यादि । अत्रैतच्चिन्त्यते—किमत्र मातृतिथौ मातृश्राद्धं पृथक् स्यादुत नेति । तत्रैक आहुः—अन्वष्टका च वृद्धौ च गयायां च क्षयेऽहनि । मातृश्राद्धं पृथक्कुर्यादन्यत्र पतिना सहेत्यादिवचनेभ्यो न पृथगिति । तन्नोचितम् पृथक् श्राद्धस्य वाचनिकत्वात्प्रेतपक्षतिथेर्विहितत्वाच्च । तथा हेमाद्रिपद्धतौ—अन्वष्टकासु वृद्धौ च प्रतिसंवत्सरं तथा । महालये गयायां च सपिण्डीकरणात्पुरा । मातुःश्राद्धं पृथक्कुर्यादन्यत्र पतिना सहेति । स्मृतिरपि—महालये गयाश्राद्धे वृद्धावन्वष्टकासु च । नवदैवतमत्रस्याच्छेषं पाट्पौरुषं विदुः । चतुर्विंशतिमतेऽपि । सर्वेभ्यश्च पितृभ्यश्च तत्पत्नीभ्यस्तथैव च । पिण्डांस्तेभ्यः पृथग्दद्यात्सदा भाद्रपदे द्विजः । इति । स्मृतिसमुच्चयेऽपि—पृथक् श्राद्धं तु मातॄणां प्रकर्तव्यं विचक्षणैः । नवम्यां पितृपक्षे तु वृद्धौ तीर्थे महालये । स्मृत्यर्थसारेऽपि—तत्र मातुः श्राद्धं पृथक् शस्तमिति । रेणुरपि—मातुर्गयाष्टकौ वृद्धौ मृताहे च महालये । तैश्च श्राद्धं पृथग्देयं तन्त्रं वानुगता यदीति । अयं विशेषः—मृते पितरि मूर्धकं जीवितु मृतवर्गस्यैवेति । पृथक्श्राद्धं जीवत्पितृकस्य नेत्येके । नवमीविषयमेनेत्यन्ये । 'पुत्राः पञ्चम्यां' कर्तुः स्युरिति शेषः । पुत्रशब्दः पुन्नामनरकत्राणहेतुः । पूर्णातिथित्वात् । तथा च मनुः—पञ्चम्यां शोभनान्सुतानिति । उपलक्षणं चैतत् । तथा च वायुः—पञ्चम्यां चैव कुर्वाणः प्राप्नोति महतीं श्रियम् । मार्कण्डेयोऽपि—श्रियं प्राप्नोति पञ्चम्यामिति । अत्रैके मातुः क्षयाहे पार्वणं स्यादित्याहुः । तथा च

याज्ञवल्क्यः—पितृपक्षे त्वमायां वा पितृमातृक्षयो यदि। पितुस्तु पार्वणं कुर्यादेकोद्दिष्टं तु मातृकम्। तथा—पितुस्तु पार्वणं कुर्यात्प्रेतपक्षे मृतस्य तु। पितृव्यभ्रातृमातॄणामेकोद्दिष्टं सदैव हि। प्रेतपक्षे तिथिर्यस्य पितुरेकस्य पार्वणम्। मातृभ्रातृपितृव्याणामेकोद्दिष्टं सदैव हीत्यादिवचनेभ्यः। तद्युक्तम्। एकोद्दिष्टस्य सपत्नमातृविषयत्वेनाविरोधात्। तथा च पुराणसमुच्चये—अमायां वा क्षयो यस्य प्रेतपक्षे तथा भवेत्। निरग्निरपि कुर्वीत मातापित्रोस्तु पार्वणम्। अनग्निः पार्वणं यो न मातापित्रोः क्षयेऽहनि। करोति बुद्धिमोहेन स भवेत्पितृघातकः। जमदग्निरपि—आपाद्य सहपिण्डत्वमौरसो विधिवत्सुतः। कुर्वीत दर्शवच्छ्राद्धं मातापित्रोः क्षयेऽहनि। गौतमोऽपि—आषाढ्याः पञ्चमे पक्षे प्रेताख्ये तु क्षयो यदि। पार्वणं तत्र कुर्वीत वर्जयित्वा चतुर्दशीम्। हेमाद्रावपि—सपिण्डीकरणादूर्ध्वं पित्रोरेव हि पार्वणम्। पितृव्यभ्रातृमातॄणामेकोद्दिष्टं सदैव हीत्यलं बहुना।'षष्ठ्यां द्यूतर्द्धिः' कर्तुः स्यादिति शेषः। ऋद्धिर्द्यूतविजयः। उपलक्षणं चैतत्। तथा च वायुः—षष्ठ्यां श्राद्धं तु कुर्वाणो द्विजांस्तान्पूजयन्ति हि। मार्कण्डेयोऽपि—षष्ठ्यां पूज्यो भवेन्नरः। इति। अत्र विशेषः पुराणसमुच्चये—एकमातृद्विपितृकौ भ्रातरावन्यगोत्रजौ। मातुः श्राद्धं तु कुर्यातां षष्ठ्यां पुत्रावुभावपि। स्मृतिसमुच्चयेऽपि—देयं श्राद्धं तु षष्ठ्यां तैर्येै द्विरंशायना सुता। क्षेत्रिणश्च पितुश्चादौ दद्युः पश्चात्तु बीजिनः। अनेकमातृकस्य विशेषो गालवेनोक्तः। अनेका मातरो यस्य श्राद्धे चापरपक्षके। अर्घदानं पृथक्कुर्यात्पिण्डमेकं स निर्वपेदिति। 'कृषिः सप्तम्याम्' कर्तुः स्यादिति शेषः। उपलक्षणं चैतत्। तथा च वायुः—कुरुते यस्तु सप्तम्यां श्राद्धानि सततं नरः। महामत्रमवाप्नोति गणानां चाधिपो भवेत्। मार्कण्डेयोऽपि—गणाधिपत्यं सप्तम्यामिति। अत्रैतच्चिन्त्यते—रजस्वलायां पत्न्यामत्र श्राद्धं कार्यं न वा तत्रैक आहुः नेति। तथा च—श्राद्धीयाहनि संप्राप्ते यस्य भार्या रजस्वला। श्राद्धं तत्र न कर्तव्यं कर्तव्यं पञ्चमेऽहनि। इति। तन्न। अस्य मृताहेऽपुत्रपत्न्याः स्वयंकर्तृत्वनिषेधात्। तथाच गौतमः—अपुत्रा तु यदा भार्या संप्राप्ते भर्तुराब्दिके। रजस्वला भवेत्सा तु कुर्यात्तत्पञ्चमेऽहनि। इति। 'वाणिज्यमष्टम्याम्' कर्तुः स्यादिति शेषः। वाणिज्यशब्देन यथा वणिजोऽनेकलाभस्तथाऽष्टमीश्राद्धेनानेकफलमित्यर्थः। तथा च वायुः—संपूर्णां वृद्धिमाप्नोति योऽष्टम्यां कुरुते नरः। मार्कण्डेयोऽपि—अष्टम्यां वृद्धिमुत्तमामिति। उपलक्षणं चैतत्—तेन गयाफलमपीत्यर्थः। तथा च ब्रह्माण्डे—आषाढ्याः पञ्चमे पक्षे गयामध्याष्टमी स्मृता। त्रयोदशी गजच्छाया गयातुल्यं तु पैतृकम्। इति। अत्रैतदुच्यते—किमपरपाक्षिकं श्राद्धं सूतकान्ते स्यादुत नेति। तत्रैक आहुः—मासिकेऽब्दे तु संप्राप्ते अन्तरा मृतसूतके। वदन्ति शुद्धौ तत्कार्यं दर्शे वाऽपि विचक्षणाः। इत्यादिवचनान्मासिकाब्दिकयोरेवाशौचान्ते विहितत्वादापरपाक्षिकं नेति। तद्युक्तम्। अस्यापि विहितत्वात्। तथा च पुराणसमुच्चये—पक्षश्राद्धे समारब्धे सूतकं निपतेद्यदि। समाहूता हि पितरः सूतकान्ते विसर्जयेत्। यदि नैवं नरः कुर्यात्सूतकान्ते क्षमापनम्। प्रागदत्तानि मनुष्येण श्राद्धान्यासुरतृप्तये। इति। पक्षश्राद्ध इत्यापरपाक्षिकोपलक्षणम्। ऋष्यशृङ्गोऽपि—शुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते। सा तिथिस्तस्य कर्तव्या न त्वन्या वै कदाचन। इति। 'एकशफं नवम्याम्' कर्तुः स्यादिति शेषः। एकशफा अश्ववेसरादयस्तेषां वृन्दमेकशफसमूहः। उपलक्षणं चैतत्। तथा च वायुः—श्राद्धं नवम्यां कर्तव्यमैश्वर्यं स्त्रीषु काङ्क्षतेति, स्त्रियो नवम्यां प्राप्नोतीति मार्कण्डेयः। अत्रेतत्संदिह्यते—जीवत्पितृकः किं मातृश्राद्धं नवम्यां कुर्यादुत नेति। तत्रैक आहुः—अमाश्राद्धं गयाश्राद्धं श्राद्धं चापरपाक्षिकम्। न जीवत्पितृकः कुर्यात् पितृहा ह्युपजायते। इत्यादिवचनान्निरग्निर्नेति। अन्ये त्वाहुः—आन्वष्टक्यस्य विहितत्वात् कुर्वीतेति। तदेतद्विचारणीयम्। न जीवत्पितृक इत्यत्र जीवत्पितृकशब्देन किं मुख्यया जीवत्पितृमात्रविवक्षयाऽपरपाक्षिकश्राद्धस्यैव निषेध आहोस्विज्जीवत्पितृकशब्देन जीवन्मातामहाद्युपलक्षकेन

जीवद्वर्गनिषेधः । तत्र यदि जीवत्पितरि मुख्याधिकारिण्येदानभावा(?)च्छ्राद्धमात्रस्यैव निषेध इत्युच्यते तदा जीवेत्स यदि वर्गादौ तद्वर्गं तु परित्यजेत् इत्यस्य मृतवर्गश्राद्धविधायकस्य वैयर्थ्यं स्याद्न्नत्यक्षयाहे पितृमातृश्राद्धस्याकरणप्रसंगश्च स्यात् । अथ क्षयाहत्वेन तत्कर्तव्यं तर्हि मृतवर्गविधायकवचनस्य वैयर्थ्यं तदवस्थमेव । यदि जीवत्पितृकशब्देन जीवद्वर्गश्राद्धनिषेध इत्युच्यते, तर्हि मृतमातृके सदाचारप्राप्ताकरणस्य परित्यागः स्यादिति तस्मात्कथमत्र समाधिः । उच्यते—यद्यपि, धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः । द्वितीयं धर्मशास्त्रं तु तृतीयं लोकसंग्रहः । इति । पराशरेण लोकसंग्रहस्य प्रामाण्यमुक्तम् । तथाऽपि स्मृतिसदाचारयोर्विरोधे श्रुतिविरोधं विना स्मृतिबाधस्यान्याय्यत्वात् स्मृतिविरुद्धाचारस्य बाधो न्याय्य इत्युक्तम् । तथा च चतुर्विंशतिमतम्—स्मृतेर्वेदविरोधेन परित्याज्या यथा भवेत् । तथैव लौकिकं वाक्यं स्मृतिबाधात्परित्यजेत् । वसिष्ठोऽपि—श्रुतिस्मृतिविहितो धर्मस्तदविरोधिशिष्टाचारः प्रमाणम् । इति । तस्मात्सर्वोऽपि जीवत्पितृको मृतमातृवर्गो नवमीश्राद्धं कुर्यादित्यर्थः । तथा वचनमपि—अन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च मृतेऽहनि । मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति । गयाप्राप्तिः प्रासङ्गिकी न तूद्देशतः । न चैवं मन्वाद्यादौ सर्वत्र जीवत्पितृकः कुर्यादिति वाच्यम् । अन्वष्टकादिकालत्रयस्यैव विशेषविधेरितरत्र निषेधसिद्धेः । यत्त्वन्वष्टकासु नवभिः पिण्डैः श्राद्धमुदाहृतमिति नवदैवत्यमुक्तम्, तत्साग्नेरन्वष्टकात्रयविषयम् । जीवन्मातामहीविषयं वा । न नवम्यां त्रिपिण्डकादिनिवारकम् । अतश्चात्र त्रिदैवत्यादिकं यथाधिकारं कर्तव्यमिति सिद्धम् । अन्यथा जीवत्पितृकोऽत्र क्षयाहादिकं कुर्यान्मृतमातृको नवम्यां नेत्यनुचितापत्तेः । एवमेकादशाहादावपि नियतश्राद्धेष्ववगन्तव्यमिति सर्वं समञ्जसम् । द्वादशदैवत्यं चात्र प्रपञ्चितमस्माभिरादिसूत्र इति नात्र पुनरुक्तम् । निमित्तबहुत्वे त्वत्र प्रतिनिमित्तं श्राद्धानि कुर्यात् । तथा च कात्यायनः—द्वे बहूनि निमित्तानि जायेरन्नेकवासरे । नैमित्तिकानि कार्याणि निमित्तोत्पत्त्यनुक्रमात् । यत्तु—नैकः श्राद्धद्वयं कुर्यात्समानेऽहनि कुत्रचिदिति प्रचेतसोक्तो निषेधः स एकनिमित्तेनैव पुनः करणविषयः । तथा च जाबालः—श्राद्धं कृत्वा तु तत्रैव पुनः श्राद्धं न तद्दिने । नैमित्तिकं तु कर्तव्यं निमित्तानां क्रमेण त्विति । 'दशम्यां गावः' गावो द्विशफाद्युपलक्षणम् । तथा च मनुः—दशम्यां द्विखुरं बहु । वायुरपि—कुर्वन्दशम्यां तु नरो ब्राह्मीं श्रियमवाप्नुयादिति । अत्र गवां सर्वसंपत्तिमूलत्वात्तद्विधानेन दशम्यां प्राशस्त्यं सूचितम् । तथा च पुराणसमुच्चये—प्रशस्ताः पूर्णिमामुख्यास्तिथयः षोडशैव वाः । तासां श्रेष्ठतमा प्रोक्ता दशमी श्राद्धदायिनामिति । दशम्यां पूर्णकामतामिति मार्कण्डेयः । गवां संपत्तिमूलत्वं श्रुतिराह—गौर्वा इदꣳ सर्वं बिभर्तीति । दुग्धाज्यादिना देवादितृप्तेरित्यर्थः । तदुक्तम्—अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः । इति । पार्वणैकोद्दिष्टयोरेकदिनसंभवे किं पार्वणं पूर्वं कर्तव्यमुतैकोद्दिष्टमिति । तत्रैक आहुः—यद्येकत्र भवेत्तावदेकोद्दिष्टं तु पार्वणम् । पार्वणं त्वभिनिर्वर्त्य एकोद्दिष्टं समाचरेदिति जाबालोक्तत्वात्पूर्वं पार्वणमिति । तन्न । पाठादर्थस्य बलवत्त्वात् । अतश्चैकोद्दिष्टं निर्वर्त्य पार्वणं समाचरेदिति तत्रान्वयः । तथाच वृद्धयाज्ञवल्क्यः—एकाहिके समुत्पन्ने पार्वणे च क्षयाहिके । प्राक् क्षयाहं प्रकुर्वीत पश्चात्पाकेन पार्वणम् । अन्यच्च—दर्शे क्षयाह आपन्ने कथं कुर्वन्ति याज्ञिकाः । पूर्वं क्षयाहं निर्वर्त्य पश्चाद्दर्शं समाचरेत् । अथवा पार्वणस्य पूर्वमुक्तिः पित्रोः पार्वणविषया । एकोद्दिष्टस्य पश्चादुक्तिः सपिण्डैकोद्दिष्टविषयेति युक्तमेव । न चैकपाकेन श्राद्धद्वयमाशङ्कनीयम् । एकपाकेन यः कुर्यादेकोद्दिष्टं च पार्वणम् । स भवेद्ग्राम्यवाराहो विष्ठाशी सप्तजन्मसु । इति तेनैवोक्तत्वात् । 'परिचारका एकादश्यां' भवन्तीति शेषः । परिचारका दासाद्यनुजीविनः । उपलक्षणं चैतत् । तथा च मनुः—एकादश्यां तथा रूप्यं ब्रह्मवर्चस्विनः सुतानिति । वायुरपि—वेदां-

श्चैवाप्नुयात्सर्वान्विप्राणां संपदं तथा । एकादश्यां परं स्थानमैश्वर्यं सन्ततिं तथा । इति । अत्रैतच्चिन्त्यते—अपुत्रादीनामेकोद्दिष्टेऽत्र किं तिथिनियमोऽस्ति न वा इति । तत्रैक आहुः—संबन्धिबान्धवादीनामेकोद्दिष्टं सदैव हि । अपुत्रा ये मृताः केचित्पुरुषा वा स्त्रियोऽपि वा । तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम् । सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रमीयते । भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च । पित्राद्यगुरवे श्राद्धमेकोद्दिष्टं महालये । इति कात्यायनापस्तम्बादिवचनं महालये यत्र तत्रापीति । तदयुक्तम् । तिथिनियमस्योक्तत्वात् । तथा च पुराणसमुच्चये—अपुत्राणां च बन्धूनामृत्विगाचार्ययोर्गुरोः । एकोद्दिष्टं सदा कार्यं पितृपक्षे विशेषतः । न पार्वणाधिकारोऽस्ति येषां कन्यागते रवौ । एकादश्यां तु कृष्णायां तेषां श्राद्धं समाचरेत् । अन्यच्च एकादश्यां न कुर्वीत एकोद्दिष्टानि कृत्स्नशः । यद्वा द्विदैवतो विष्णुः पितृवर्गस्य नित्यशः । वृद्धशातातपोऽपि—पितृष्वसृमातृष्वसृपितृव्यभ्रातृमातुलैः । अनपत्यासु भार्यासु एकोद्दिष्टं समाचरेत् । मातुलो भागिनेयश्च स्वस्रीयो भ्रातृजस्तथा । श्वशुरश्च गुरुश्चैव सखा मातामहस्तथा । एतेषां चैव भार्याणां स्वसुर्मातुः पितुस्तथा । श्राद्धमात्रं तु कर्तव्यमिति वेदविदां स्थितिः । इति । भागिनेयः पितृव्यपुत्रीपुत्र इत्यपौनरुक्त्यम् । मातामहः सपत्नमातृपिता । साग्नेरप्यत्रैकोद्दिष्टमेव । तथा च पुराणसमुच्चये—अग्निमन्तो द्विजा ये तु तेषां कन्यागते रवौ । पितृव्यभ्रातृबन्धूनामेकोद्दिष्टं प्रशस्यते । इति । 'धनं धान्य९ हिरण्यं द्वादश्यां' कर्तुः स्यादिति । धनं रजतादि । तथा च मनुः—द्वादश्यां जातरूपं तु रजतं कुप्यमेव चेति । उपलक्षणं चैतत्—तथा च वायुः—द्वादश्यां जनलाभं च राज्यमाहुर्वसूनि चेति । अत्रैतदुच्यते—दैववशात्पित्रोः क्षयाहैक्ये कथं क्रम इति । तत्र कार्ष्णाजिनिः । पित्रोः श्राद्धे समं प्राप्ते नवे पर्युषितेऽपि वा । पितृपूर्वं सुतः कुर्यादन्यत्रासन्नियोगतः । अन्यत्र सपिण्डश्राद्धेषु आसत्तिः संबन्धासत्तिः संबन्धनैकट्यक्रमेणेत्यर्थः । तथा च ऋष्यशृङ्गः—भवे यदि सता'''ण तथा । संबन्धासत्तिमालोच्य तत्क्रमाच्छ्राद्धमाचरेदिति । ननु च पित्रोः क्षयाहैक्ये किमेकपाकेनोत पृथक्पाकेन श्राद्धद्वयमिति । तत्रैके एककाले गतासूनां बहूनामथवा द्वयोरित्यादिना एकपाकेनेत्याहुः । तदयुक्तम् । तस्य एकदैवेति कालविषयत्वात् । अन्यदैकदिने तु पृथग्विधः । तथा च पठन्ति—मातापितृमृताहैकं कालेनापि भवेद्यदि । पृथक्पाकं पितृश्राद्धं मातुश्च तदनन्तरम् । इति । सपिण्डानां तु नृसिंहपुराणे—एकेनैव तु पाकेन सपिण्डानां महालये । तन्त्रेण अपणं कुर्याच्छ्राद्धं कुर्यात् पृथक् पृथक् । विष्णुधर्मोत्तरे च—प्रेतपक्षे गयायां च गतासूनां समेऽहनि । तन्त्रेण अपणं कुर्याच्छ्राद्धं दद्यात्पृथक् पृथक् इति । 'कुप्यं ज्ञातिश्रैष्ठ्यं त्रयोदश्यां' कर्तुः स्यादिति । कुप्यं हेमरजताभ्यामन्यधातुजम् । उपलक्षणं चैतत्—तथा च मार्कण्डेयः—प्रजां मेधां पशुं पुष्टिं स्वातन्त्र्यं वृद्धिमुत्तमाम् । दीर्घमायुरथैश्वर्यं कुर्वाणस्तु त्रयोदशीमिति । ननु च—त्रयोदश्यां कृष्णपक्षे यः श्राद्धं कुरुते नरः । पञ्चत्वं तस्य जानीयाज्ज्येष्ठपुत्रस्य निश्चितम् । इति अङ्गिरसा श्राद्धस्यैव प्रतिषिद्धत्वात्कथं फलश्रुतिरिति । उच्यते—तस्यैकवर्गश्राद्धविषयत्वात् इत्यदोषः । तथा च कार्ष्णाजिनिः—श्राद्धं नैकस्य वर्गस्य त्रयोदश्यामुपक्रमेत् । अतृप्ता अस्य येऽत्र स्युः प्रजां हिंसन्ति तत्र ते । इति । अत्रैतच्चिन्त्यते—किमनुगमनमृतानां स्वमृताहे श्राद्धं स्यादुत भर्तृमृताहे इति । तत्रैक आहुः—मासक्षयतिथिस्पृष्टे यस्मिन् यो म्रियतेऽहनि । प्रत्यब्दं तत्तथाभूतं क्षयाहं तस्य तद्विदुरित्यादिवचनात्स्वमृताह एवेति । तदयुक्तं—भर्तृक्षयाहे विहितत्वात् । तथा च पुराणसमुच्चये—अग्रतः पृष्ठतो वाऽपि तद्भक्त्या म्रियते तु या । तस्याः श्राद्धं प्रदातव्यं भर्तुरेव क्षयेऽहनि—रेणुरपि एकचित्यां समारूढा द्वितीयेऽह्नि पतिव्रता । तस्याः पिण्डोदकं पुत्रः प्रकुर्यात्पितृवासरे । पठन्ति च—प्रत्यक्षे वा परोक्षे वा तद्भक्त्या म्रियते तु या । तस्याः श्राद्धं प्रकुर्वीत भर्तुरेव क्षयेऽहनि । अत्रैतत्संदिह्यते—भर्तृक्षयाहे किं तस्याः पृथक्पिण्ड उतैकपिण्डे

द्वयोरुद्देशः । तत्र लौगाक्षिः—मृताहनि समासेन पिण्डनिर्वपणं पृथक्। नवश्राद्धं तु दंपत्योरन्वारोहण एव तु । अस्यार्थः—दंपत्योरन्वारोहणे मृताहे समासेन पिण्डनिर्वपणम् । नवश्राद्धं पृथगित्यन्वयः। नवश्राद्धं श्राद्धषोडशोपलक्षणम् । समासः पाकाद्यैक्यम् । तुशब्दो विशेषे । ततश्च दंपत्योरेकचित्यन्वारोहणे षोडशश्राद्धेष्वेव पृथक्पृथक्पाकपिण्डौ अन्यत्र पाकैकेनैक पिण्डे द्वयोरुद्देशः । मृततिथौ भिन्ने त्वाब्दिकप्रेतश्राद्धयोः पृथक्पिण्ड एवेति । निश्चितमेतदित्येवशब्दार्थः । तथा च—एकचित्यां समारूढौ दम्पती निधनं गतौ । पृथक् श्राद्धं तयोः कुर्यादोदनं च पृथक् पृथगिति । तथा—एकचित्यधिरोहे चेत्ति तिथिरेकैव जायते । एकपाकेनैकपिण्डे द्वयोर्गृहीत नामनी । इति देशकालद्रव्यदेवकर्त्रैक्ये तान्त्रिको विधिरिति च । अत्रैके भर्तुः क्षयाहे सर्वासामेव पृथक्पिण्ड इत्याहुः । तन्न । तस्य पतिव्रताविषयत्वात् । तथा च भृगुः—या समारोहणं कुर्याद्भर्तुश्चित्यां पतिव्रता । तां मृताहनि संप्राप्ते पृथक्पिण्डे नियोजयेत् । प्रत्यब्दं च नवश्राद्धं युगपत्तु समापयेत् । अपि च पुराणसमुच्चये—या काचिन्म्रियते नारी पत्या सह पतिव्रता । तस्याः श्राद्धं पृथक्कुर्यादेकोद्दिष्टं विधानतः । विधानत इति युगपत्समापयेदिति, चतुर्भिः क्षयाहे पूर्वं भर्तृद्विजोपवेशनं पश्चात् स्त्रिया इत्येवं क्रमेणैकदैव सर्वं श्राद्धमित्यर्थः । पतिव्रतात्वात् । तथा अथ केचिन्न चेच्छन्ति पृथक् श्राद्धं तु योषिताम् । वदन्ति पतिना सार्धं मूढास्ते मे मतेन तु । सपिण्डीकरणादूर्ध्वं पृथक्त्वं न विधीयते । ते बालिशा न तेषां वै ग्राह्यं वाक्यमजानताम् । पृथक् श्राद्धं च मातॄणां कर्तव्यं वा प्रदक्षिणमिति । पठन्ति च—परदेशे मृतो भर्ता श्रुत्वा नारी पतिव्रता । तिथिरेका विशुद्धौ स्यात्पिण्डं दद्या ( त्पृथक्पृथ ) गिति । अत्र विशेषः—अनेकस्त्रीभिरनेकभृत्यैर्वा स्वामिना सह स्नेहान्मरणे पाक्यादौ नैव स्वामिगोत्रेण वा पृथक्पिण्डदानं कर्तव्यम् । तथा च पुराणसमुच्चये—मृतानामथ भृत्यानां भार्याणां पतिना सह । तन्त्रेण श्रपणं कृत्वा श्राद्धं स्वामिक्षयेऽहनि । श्राद्धं पृथक्पृथक्कुर्यात्स्वामिगोत्रेण कृत्स्नशः । स्वामिचित्यवरोहेण भृत्यो भ्रश्येत् स्वगोत्रतः । इति । भृगुरपि—एककालगतासूनां बहूनामथवा द्वयोः । तन्त्रेण श्रपणं कृत्वा श्राद्धं कुर्यात्पृथक्पृथक् । पूर्वकस्य मृतस्यादौ द्वितीयस्य ततः पुनः । तृतीयस्य ततः कुर्यात्संनिपातेष्वयं क्रमः । पूर्वकस्य मृतस्येति ज्येष्ठानुक्रमेण लघूनामुत्तमाधमक्रमेणेत्यर्थः । यत्त्वेकचित्यां समारूढौ चेति वचने पृथक्पृथगादानमुक्तं तदेकपतिव्रतस्त्रीविषयमित्यविरोधः । स्मृत्यर्थसारे—सहदहने तु पिण्डश्राद्धादौ पाकैक्यं कालैक्यं कर्त्रैक्यमिति । 'युवानस्तत्र म्रियते शस्त्रहतश्चतुर्दश्याम्' युवानो ये म्रियन्ते शस्त्रहतश्च तत्रापरपक्षे चतुर्दश्यामेकोद्दिष्टं प्राप्नुवन्तीत्यर्थः । तथा च स्मृतिचन्द्रिकायां—चतुर्दश्यां तु यच्छ्राद्धे सपिण्डीकरणे कृते । एकोद्दिष्टविधानेन तत्कुर्याच्छस्त्रघातिनः । इत्यादि । मार्कण्डेयोऽपि—युवानः पितरो यस्य मृताः शस्त्रेण वा हताः । तेन कार्यं चतुर्दश्यां तेषामृद्धिमभीप्सतेति । ननु चात्र शस्त्रहतस्यैव नान्यस्येति मिताक्षरादिनिबन्धकृद्भिर्नियमितत्वात्कथं युवान इत्युक्तम् । तत्र च वृद्धयाज्ञवल्क्यः—श्राद्धदाने चतुर्दश्या विनाशस्त्रहतं मृतम् । ज्येष्ठपुत्रो विनश्येत पितॄणां चाप्यधोगतिरिति । अतो युवान इति त्रयोदश्या योजनीयमिति चेत्, नैवम् । युवशब्दस्य विशेषादिना सर्पहताद्युपलक्षकत्वात् । तथा च वृद्धयाज्ञवल्क्यः—मृत्काष्ठपललोहेषु विद्युद्व्यालविषादिभिः । नखिदंष्ट्रिविपन्ना ये विप्रशापहताश्च ये । शीतवातविपन्ना ये शस्त्रघातहतास्तथा । पापमृत्युहता ये वै तेषां शस्ता चतुर्दशीति । अथवा युवानस्तत्र म्रियन्त इति पाठस्तत्र । यतस्त्रयोदश्यां श्राद्धं प्रशस्तं तस्मात्तद्गृहे युवानो न म्रियन्त इत्यर्थः । त्रयोदश्यामेव । तथा च महाभारते—ज्ञातीनां तूत्तरे श्रेष्ठः कुर्याच्छ्राद्धं त्रयोदशी । नवम्यां तु युवानोऽस्य प्रमायतमिगृह इति । शस्त्रहत इत्येकत्वं तत्रये पार्वणं सूचयति । तेन पित्रादित्रये शस्त्रहते पार्वणमित्यर्थः । अत्रैक आहुः—त्रयाणामपि शस्त्रहतत्वे पृथक् पृथगेकोद्दिष्टमेवेति । तदयुक्तम् । पार्वणस्यैवातित्

देशात् । तथा च स्मृतिदर्पणे—एकस्मिन् वा द्वयोर्वापि विद्युच्छस्त्रेण वा मृतौ । एकोद्दिष्टं सुतः कुर्यात्त्रयाणां दर्शवद्भवेत् । तथा पित्रादयस्त्रयो यस्य शस्त्रघाता अनुक्रमात् । स सुतः पार्वणं कुर्यात्पित्रादेर्न पृथक् पृथगिति । एकोद्दिष्टमिति शेषः । स्मृतिचन्द्रिकायामपि—एकस्मिन् द्वयोर्वैकोद्दिष्टविधिरिति । त्रयाणां पार्वणमित्यर्थः । अत्रैक आहुः—रणे संमुखप्रहारैर्हतशूराणामपि शस्त्रहतत्वाच्चतुर्दश्यामेवेति । तदयुक्तम् । तेषां परमगतित्वात् । तथा च पुराणसमुच्चये—वितत्य रणयज्ञं ये गोब्राह्मणहितैषिणः । स्वामिपादाग्रसंलग्ना यन्त्रिशस्त्रैश्च खण्डशः । न ते शस्त्रहतैस्तुल्या पुराणज्ञैरुदाहृताः । न च तिर्यत् (?)क्रामयन्ति सुरमन्दिरम् । श्रूयते चात्र गाथेयं भार्गवाङ्गिरसे मतम् । द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः । इति । यत्तु प्रीयन्ते पितरश्चास्य ये शस्त्रेण रणे हताः । इति मनुना चतुर्दश्यामुक्तं तत्पराङ्मुखहतादिविषयमित्यविरोधः । न च संमुखपराङ्मुखादिशस्त्रहतयोः साम्यमुचितम् । तस्मात्संमुखरणहतानां चतुर्दश्यां श्राद्धं नेति । अत्रान्येऽप्यपवादाः पुराणसमुच्चये—मृताश्चान्याश्च बहुशो ब्रह्मक्षत्रविशां स्त्रियः । गताश्च पतिभिः सार्धं सतीलोकं सनातनम् । नैता शस्त्रहतैस्तुल्याः याश्चान्याः पतिना सह । म्रियन्ते पतिभक्त्या तु द्युलोकं प्राप्नुवन्ति ताः । न च संन्यासिनां श्राद्धं कर्तव्यं च चतुर्दशीम् । तपःसंन्यासयोगेन ते यान्ति परां गतिम् । ये म्रियन्त्यातुरत्वेन भृग्वग्न्यनशनाम्बुभिः । नैव शस्त्रहतास्तेऽपि अवस्थान्तरगर्हिताः । न शस्त्रहतभिस्तुल्या आतुरत्वान्मृता यतः । एतेषां नापमृत्युं तं पुराणज्ञा वदन्ति हि । अत्यातुरत्वात्संन्यासिनोऽत्र श्रुतिविरोधनम् । यथाऽत्र श्रूयते गीतं पुराणज्ञैः पुरातनैः । न देववचनात्तात न लोकवचनादपि । मतिरुत्क्रमणीया ते प्रयागमरणं प्रतीति । एतद्व्यतिरिक्तेभ्यश्चतुर्दश्यां श्राद्धाकरणे तत्रैवोक्तम् । जन्मान्धपङ्गुविकला वाग्जडा लुप्तचूचुकाः । न कुर्वन्ति च ये श्राद्धं कृष्णपक्षे चतुर्दशीम् । दद्याच्छस्त्रहतेभ्यश्च इति प्राह पुरा श्रुतिरिति । चतुर्दश्याः पूर्वमष्टम्यादौ पश्चादमायामित्यर्थः । कात्यायनोऽपि—शस्त्रादिभिर्हतस्यापि कुर्यात्प्रतिदिनं सुतः । पार्वणं कृष्णपक्षे तु वर्जयित्वा चतुर्दशीम् । उशनाः—यदि कालान्तरे वाऽपि यदा शस्त्राद्विपद्यते । सोऽपि शस्त्रहतो ज्ञेयस्तस्य शस्ता चतुर्दशी । वृहन्मनुः—महालये चतुर्दश्यां मघायां पुत्रवानपि । पिण्डनिर्वपणं कुर्यात्तु तृप्त्यर्थं शस्त्रघातिनः । इति । अत्र विशेषो वृद्धयाज्ञवल्क्येनोक्तः—स्वस्थमृत्युः पिता यस्य शस्त्रघाती पितामहः । पार्वणं तस्य विज्ञेयं त्रयस्ते शस्त्रघातकाः । यथा विहङ्गः पक्षाभ्यामङ्गमाश्रित्य तिष्ठति । तथा पिता च वृद्धश्च पितामहसमाश्रिताविति तत्सदाचाराभावाच्चिन्त्यम् । यदि त्वस्यामेव चतुर्दश्यां पित्रोः क्षयाहस्तदापि प्रेतपक्षमृतत्वात्पार्वणमेवेति चेत् तन्न । आषाढ्याः पञ्चमे पक्षे प्रेताख्ये तु क्षयो यदि । पार्वणं तत्र कुर्वीत वर्जयित्वा चतुर्दशीमिति गौतमोक्तेः । साग्निविषयं पार्वणं चेत्यविरोधः । 'अमावास्यायाᳫं सर्वमित्यमावास्यायाᳫंसर्वमिति' सर्वं सर्वे कामाः । अमावास्यायां श्राद्धकरणेन सर्वकामाल्लभत इत्यर्थः । तथा च पुराणसमुच्चये—श्राद्धं कुर्वन्नमावास्यां यत्नेन पुरुषः शुचिः । सर्वान्कामानवाप्नोति''तिथ्यामुदायतः । इति । अस्य निरुक्तिस्तत्रैव । कलानामाप्यायनार्थं रविर्विंशतिचन्द्रमाः । सुषुम्नाख्या कला यासौ सूर्यस्यास्यचमा स्मृताः । विंशतिद्वौ लवौ तस्यां चन्द्रमाः सूर्यमण्डले । अमाचन्द्रस्य संयोगादमावास्यां विदुर्बुधाः । इति । अपरपक्षे श्राद्धमाह यमः—हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन् । पञ्चम्योरन्तरे दद्यादुभयोरपि पक्षयोः । सुमन्तुः—कन्याराशौ महाराज यावत्तिष्ठेद्विभावसुः । तावत्कालं भवेद्देयं वृश्चिकं यावदागतम् । येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि । तस्यां देयं न चेद्दत्तं पितॄणां वै महालय इति । अत्र शुक्लपञ्चमी तुलसंक्रान्तिर्दीपामावास्या वृश्चिकसंक्रान्तिश्चेति पूर्वपूर्वासंभवे उत्तरोत्तरं श्राद्धकाला इत्यर्थ. । द्विरुक्तिर्मङ्गलार्था । इतिशब्दः समाप्तौ । अत्रैतच्चिन्त्यते—त्रिर्यैव कर्ता चेत्तदा किमपरपक्षे श्राद्धं त्रिपिण्डकं कुर्यादुत षट्पिण्डकमिति ।

तत्रैक आहुः—स्वपित्रादिभ्यो दातुमनधिकारात्त्रिपिण्डकमेवेति। तदयुक्तम्। क्षयाहश्राद्धं विना षट्पिण्डकस्य विहितत्वात्। तथा च स्वभर्तृप्रभृतित्रिभ्यः पितृभ्यश्च तथैव च। विधिं वा कारयेच्छ्राद्धं यथाकालमतन्द्रिते। षट्पिण्डकमित्यर्थः। कारयेदिति स्वार्थे णिच्। अधिकाराविषयो वा। अपर आहुः—मृताहश्राद्धं सपत्नीकर्तृकं सर्वत्र पार्वणमेवेति। तथा च लौगाक्षिः—सर्वाभावे स्वयं पत्न्यः स्वभर्तृणाममन्त्रकम्। सपिण्डीकरणं कुर्युस्ततः पार्वणमेव च। सुमन्तुरपि—अपुत्रे प्रस्थिते कर्ता नास्ति चेच्छ्राद्धकर्मणि। तत्र पत्न्यपि कुर्वीत सपिण्ड्यं पार्वणं तथेति। तदप्ययुक्तम्। अनयोर्वचनयोः क्षयाहव्यतिरिक्तविषयत्वाद्दर्शापरपक्षमृतिविषयत्वाद्वा। तथा च—भर्तुः श्राद्धं च या नारी मौढ्यात्पार्वणमाचरेत्। न तेनाप्यायते भर्ता कृत्वा च नरकं व्रजेदिति पार्वणनिषेधस्य क्षयाहविषयत्वावगमात्। दर्शपरपक्षमृतौ तु पार्वणस्य तुल्यन्यायेनोचितत्वादित्यलमतिविस्तरेणेति भद्रम्॥

स्मृतेरनेकविषयादनन्तत्वाच्च सर्वथा।
तत्त्वं ज्ञातुमशक्यं तदलं वाऽनल्पजल्पितैः॥ १॥
स्वबुद्धिकल्पितं नेह वचनं लिखितं मया।
दृष्टं श्रुतममूलं वा समूलं मे न दूषणम्॥ २॥
दृष्टं यत्स्वल्पदीर्घेषु निबन्धेषु तदाहृतम्।
श्रुतं स्मृत्यविरुद्धं यत्तत्पठन्तीत्युदाहृतम्॥ ३॥
प्रमाणमप्रमाणं वा सर्वज्ञः कर्तुमर्हति।
दृष्टे श्रुते च विश्वासो मादृशैः कर्तुमिष्यते॥ ४॥
कर्ता चेन्न चिरंतनः किमिति यात्ता दोषो निबन्धे भवेत्
सूक्तिश्चेदधुनातनैरपि कृते ग्रन्थे कथं नादरः।
इत्थं ये कृपयन्त्यनल्पमतयस्तान् प्रदोष्य ज्ञपी
क्षन्तासन्तमिमं निबन्धमखिलं किं चाद्रियन्तां हृदि (?)॥
बाणव्योमेषुनिष्वंके वर्षे कार्तिकमासके।
कृष्णमिश्रोऽकरोद्ग्रन्थं शुक्लपक्ष इमं शुभम्॥

इत्यावसथिकश्रीमदतिसुखात्मजश्रीविष्णुमिश्रतनूजात्मजः कृष्णमिश्रस्य कृतौ श्राद्धकाशिकाया सूत्रवृत्तौ काम्यश्राद्धप्रकरणम्।

समाप्ता चेयं काशिका सूत्रवृत्तिरिति।

---

## ॥ भोजनसूत्रम् ॥

वन्दे श्रीदक्षिणामूर्त्तिं सच्चिदानन्दविग्रहम्॥
सर्वार्थानां प्रदातारं शिवादेहार्धधारिणम्॥ १॥

अथातः श्रुतिस्मृतीरनुसृत्य भोजनविधिं व्याख्यास्यामः॥ आचान्तो धृतोत्तरीयवस्त्रो धृतश्रीखण्डगन्धपुण्ड्रो भोजनशालामागत्य गोमयेनोपलिप्य शुचौ देशे विहितपीठाधिष्ठितो नित्यं प्राङ्मुखो न दक्षिणामुखो न प्रत्य-

ङ्मुखो न विदिङ्मुखः । श्रीकामश्चेत्प्रत्यङ्मुखः सत्यकामश्चेदुदङ्मुखो यशस्कामश्चेद्दक्षिणामुखो जीवन्मातृकवर्जं हस्तपादास्येषु पञ्चस्वार्द्रो नीवारचूर्णैर्गोमृदा भस्मनोदकेन वा मण्डलं कुर्यात् । चतुष्कोणं ब्राह्मणस्य त्रिकोणं क्षत्रियस्य मण्डलाकृति वैश्यस्याभ्युक्षणꣳ शूद्रस्य, यथा चक्रायुधो विष्णुस्त्रैलोक्यं परिरक्षति । एवं मण्डलभस्मैतत्सर्वभूतानि रक्षत्विति । तत्र भूमौ निहितपात्रेऽन्ने परिविष्टे पितुन्नुस्तोषमित्यन्नꣳ स्तुत्वा मानस्तोके नमोवः किरिकेभ्यो नमः शंभवायेत्यभिमन्त्र्य प्रोक्षयेत्, सत्यंत्वर्तेन परिषिञ्चामीति प्रातर्ऋतं त्वा सत्येन परिषिञ्चामीति सायम् । तेजोऽसि शुक्रमस्यमृतमसीति यजुषाऽन्नमभिमृश्याग्निरस्मीत्यात्मानमग्निं ध्यात्वा भूपतये भुवनपतये भूतानां पतय इति चित्राय चित्रगुप्ताय सर्वेभ्यो भूतेभ्यो नम इति दिवा प्रणवादिकैः स्वाहानमोन्तैर्मन्त्रैः प्रतिमन्त्रं बलीन् हरेत्, अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ॥ त्वं ब्रह्म त्वं यज्ञस्त्वं वषट्कारस्त्वमोंकारस्त्वं विष्णोः परमं पदम् । अमृतोपस्तरणमसि स्वाहेति विष्णुमन्त्रमभिध्यायन्नाचम्यान्नममृतं ध्यायन् मौनी हस्तचापल्यादिरहितो मुखे पञ्च प्राणाहुतीर्जुहोति ॥ १ ॥ प्राणाय स्वाहा ऽपानाय स्वाहा व्यानाय स्वाहा समानाय स्वाहोदानाय स्वाहेति क्रमं याज्ञवल्क्यो मन्यत उदानाय स्वाहेति शौनकबौधायनौ । याज्ञवल्क्योदितक्रमो वाजसनेयिनाम् । दन्तैर्नोपस्पृशेत् । जिह्वया ग्रसेदङ्गुष्ठप्रदेशिनीमध्यमाभिः प्रथमामङ्गुष्ठमध्यमानामिकाभिर्द्वितीयामङ्गुष्ठानामिकाकनिष्ठिकाभिस्तृतीयां कनिष्ठिकातर्जन्यङ्गुष्ठैश्चतुर्थीꣳ सर्वाभिरङ्गुलीभिः साङ्गुष्ठाभिः पञ्चमीम् । अङ्गुष्ठानामिकाग्राह्यान्नैता आहुतय इति हारीतव्याख्यातारः । सर्वाभिरेता इति बौधायनः । मौनं त्यक्त्वा प्राग्द्रवरूपमश्नीयान्मध्ये कठिनमन्ते पुनर्द्रवाशी स्यान्मधुरं पूर्वं लवणाम्लौ मध्ये कटुतिक्तादिकान् पश्चाद्यथासुखं भुञ्जीत भुञ्जानो वामहस्तेनान्नं न स्पृशेन्न पादौ न शिरो न बस्तिं न पराभोजनꣳ स्पृशेदेवं यथारुचि भुक्त्वा भुक्तशेषमन्नमादाय " मद्भुक्तोच्छिष्टशेषं ये भुञ्जते पितरोऽ-

धमाः । तेषामन्नं मया दत्तमक्षय्यमुपतिष्ठतु, इति पितृतीर्थेन दत्वाऽमृता-
पिधानमसि स्वाहेति हस्तगृहीतानामपामर्धं पीत्वाऽर्धं भूमौ निक्षिपेत् ।
रौरवे पूयनिलये पद्मार्बुदनिवासिनाम् । अर्थिनाꣳ सर्वभूतानामक्षय्यमुप-
तिष्ठत्विति, तस्माद्देशादपसृत्य गण्डूषशलाकादिभिस्तर्जनीवर्जमास्यꣳ शो-
धयेत् ॥ २ ॥ न भार्यादर्शनेऽश्नीयान्न भार्यया सह न संध्ययोर्न मध्यान्हे
नार्धरात्रे नायज्ञोपवीती नाऽऽर्द्रशिरा नार्द्रवासा नैकवासा न शयानो न
ताम्रभाजने न भिन्ने न राजतसौवर्णशङ्खस्फाटिककाँस्यभाजनवर्जं न लौहे
न मृन्मये न संधिसꣳस्थिते न भुवि न पाणौ न सर्वभोजी स्यात्किंचिन्नो-
ऽयं परित्यजेदन्यत्र घृतपायसदधिसक्तुपललमधुभ्यः, साध्वाचान्तो दक्षिणपा-
दाङ्गुष्ठे पाणिं निःस्रावयेदङ्गुष्ठमात्रः पुरुषो अङ्गुष्ठं च समाश्रितः । ईशः
सर्वस्य जगतः प्रभुः प्रीणातु विश्वभुगिति श्वात्राः पीता इति नाभिमा-
लभेत, अमृता इत्यतः प्रागगस्त्यं वैनतेयं च शनिं च वडवानलम् ॥
आहारपरिणामार्थं स्मरेद्भीमं च पञ्चममित्युदरमालभ्य ' शर्यातिं च सुकन्यां
च च्यवनं शक्रमश्विनौ । भोजनान्ते स्मरेन्नित्यं तस्य चक्षुर्न हीयत ' इति
स्मृत्वा मुखशुद्धिं कुर्यान्नमो भगवते वाजसनेयाय याज्ञवल्क्याय नमो भग-
वते वाजसनेयाय याज्ञवल्क्याय ॥ ॥ ३ ॥

॥ अथ श्रीदयोगीश्वरद्वादशनामानि ॥

वन्देऽहं मङ्गलात्मानं भास्वन्तं वेदविग्रहम् ॥
याज्ञवल्क्यं मुनिश्रेष्ठं जिष्णुं हरिहरप्रभम् ॥ १ ॥
जितेन्द्रियं जितक्रोधं सदा ध्यानपरायणम् ॥
आनन्दनिलयं वन्दे योगानन्दं मुनीश्वरम् ॥ २ ॥
एवं द्वादश नामानि त्रिसंध्यं यः पठेन्नरः ॥
योगीश्वरप्रसादेन विद्यावान्धनवान् भवेत् ॥ ३ ॥

## 'गुजराती' मुद्रणालयस्थानि क्रय्यसंस्कृतपुस्तकानि।

| | मूल्यं | मार्गव्ययः |
|---|---|---|
| १ श्रीमद्भगवद्गीता प्रथमो गुच्छः **Bhagavat-Geeta with 7 commentaries** श्रीमच्छङ्कराचार्यविरचित भाष्यम्, आनन्दगिरिकृतं शाङ्करभाष्यव्याख्यानम्, आनन्दतीर्थीय (माध्व) भाष्यम्, जयतीर्थविरचिता प्रमेयदीपिका टीका, रामानुजभाष्यम्, पुरुषोत्तमजीप्रकाशिता अमृततरङ्गिणी, नीलकण्ठविरचितो भावप्रदीपः, एतैः समेता मञ्जुलैरायसाक्षरैर्मुद्रिता पृष्ठान्यष्टशतपरिमितानि सुचिक्कणानि। मूल्यम् रू. ... ... ... ... ... | ६-०-० | ०-७-० |
| २ श्रीमद्भगवद्गीता द्वितीयो गुच्छः **Bhagavat-Geeta with 8 other commentaries**—निम्बार्कमतानुयायिश्रीकेशवकाश्मीरिभट्टाचार्यपादप्रणीता—'तत्त्वप्रकाशिका,' श्रीमधुसूदनसरस्वतीकृता—'गूढार्थदीपिका,' श्रीशङ्करानन्दप्रणीता—'तात्पर्यबोधिनी,' श्रीधरस्वामिकृता—'सुबोधिनी,' श्रीसदानन्दविरचितः—'भावप्रकाशः,' श्रीवनमालिसूरिविरचिता—'भाष्योत्कर्षदीपिका,' दैवज्ञपण्डितश्रीसूर्यविरचिता—'परमार्थप्रपा,' पूर्णप्रज्ञमतानुसारिश्रीराघवेन्द्रकृत—'अर्थसंग्रहः' इत्येताभिर्व्याख्याभिः सहिता। अत्र श्लोकाः स्थूलतमाक्षरैष्टीकाश्च स्थूलाक्षरैर्मुद्रिता., वृद्धा मा क्लेशिषतेति। मू. रू. ... ... ... | १०-०-० | ०-१५-० |
| ३ उत्तरगीता **Uttara-Geeta with Gaudpadiya commentary**—गौडपादीयदीपिकाख्यव्याख्यायुता। भगवत्पादश्रीशंकराचार्याणां परमगुरुभिः श्रीशुकाचार्याणां च शिष्यैः श्रीगौडपादाचार्यैः प्रणीतेयं व्याख्येत्येतावत्कथनमलमस्या महिमानमवगमयितुम्। मूल्यम् रू. ... ... ... ... ... | ०-३-० | ०-०-६ |
| ४ श्रीमद्वाल्मीकिरामायणम्। **Valmiki Ramayana with 3 well-known commentaries,** सर्वतन्त्रस्वतन्त्रप्रतिभेन शब्देन्दुशेखरादिनानानिबन्धप्रणेत्रा श्रीमन्नागेशभट्टेन स्वशिष्यस्य सतो जीविकाप्रदातुः शृङ्गवेरपुराधीशस्य वीरमणेः श्रीरामराजस्य नाम्ना प्रणीतया रामायणतिलकाख्यया टीकया, पण्डितश्रीवंशीधर–शिवसहायाभ्यां प्रणीतया रामायणशिरोमण्याख्यया टीकया, श्रीगोविन्दराजप्रणीतया भूषणाख्यया टीकया च सह मुद्रयितुमारब्धमस्माभिः। तच्च सप्तभिः खण्डैः समापयिष्यामः। | | |
| बालकाण्डम्। प्रथमखण्डम् **Bal Kand** उपरिनिर्दिष्टटीकात्रयोपेतम्। मूल्यम् रू. | ३-०-० | ०-५-० |
| अयोध्याकाण्डम्। द्वितीयखण्डम् **Ayodhya Kand** उर्ध्वनिर्दिष्टटीकात्रयोपेतम्। मू. रू. ... ... ... ... ... ... ... | ५-०-० | ०-७-० |
| अरण्यकाण्डम्। तृतीयखण्डम्। **Aranya Kand** उपरिनिर्दिष्टटीकात्रयोपेतम्। मू. रू. ... ... ... ... ... ... ... | २-१२-० | ०-४-० |
| किष्किन्धाकाण्डम्। चतुर्थखण्डम्। **Kishkindha Kand** उपरिनिर्दिष्टटीकात्रयोपेतम्। मू. रू. ... ... ... ... ... ... | २-१०-० | ०-४-० |
| सुन्दरकाण्डम्। पञ्चमखण्डम्। **Sundar Kand** उपरिनिर्दिष्टटीकात्रयोपेतम्। मू. रू. ... ... ... ... ... ... ... | ३-०-० | ०-४-० |
| ५ स्तोत्रमुक्ताहारः—**Stotra-muktahar containing 256 Stotras** अस्मिन् २५६ स्तोत्राणि सङ्गृहीतानि। यद्यपि सन्ति भूरीणि स्तोत्रपुस्तकानि मुद्रितानि भूरिभिस्तथापि न तेष्वियतां स्तोत्ररत्नानां सङ्ग्रहः। अस्माभिः | | |

पूर्वमसुद्रितानां स्तोत्राणां पुस्तकानि काश्यादिक्षेत्रेभ्यो भूयसा प्रयासेन द्रविणव्ययेन च समासाद्य तेभ्यश्च प्रसादगुणयुक्तानि स्तोत्राणि संकलय्य संशोध्य च तानि भाविकजनानां कृतेऽत्र समावेशितानि तदाशास्महे श्रद्धावन्तो जनाः सफलयिष्यन्ति प्रयत्नमस्माकममुमिति । मूल्यम् रू. ... ... ... ... ... ... ०–८–० ०–२–०

| | | मूल्यं | मार्गव्ययः |
|---|---|---|---|
| ६ | स्तोत्रमुक्ताहारः—द्वितीयोभागः । स्तोत्रसंख्या २५७—४१६ मूल्यम् रू. ... | ०–८–० | ०–२–० |
| ७ | संस्कारमयूखः—**Samskar Mayukha** मीमांसकनीलकण्ठभट्टसुतशंकरभट्टकृतः । अत्र संस्काराणां स्वरूप कालः इतिकर्तव्यता वर्णधर्मा आश्रमधर्माश्च विस्तरतो मूलवचनोपन्यासपुरःसरं निरूपिताः । मूलवचनानि चाप्रतिपत्तिविप्रतिपत्तिसंभावनास्थलेषु क्रमेण पर्यायशब्दप्रदर्शनेन मीमांसकाभिमतन्यायानुसरणेन च व्याख्यातानि । अन्ते कातीयसूत्रानुसारिप्रयोगाश्च दत्ताः । पूर्वं वाराणस्यादिषु मुद्रितोऽप्ययं वर्णपदवाक्यभ्रंशविपर्ययादिदोषप्रचुरतयाऽप्रविभक्तविषयतया च भृशं दुर्बोधो विपरीतबोधकरश्चासीत् । अस्माभिस्तु ग्रन्थकृतैव पुनः शोधितस्य वर्धितस्य चास्य ग्रन्थस्य पुस्तकमासाद्य विषयाश्च प्रविभज्य शोधने च महान्तमायासमास्थाय मुद्रितः । मू. रू. ... | ०–१२–० | ०–१–० |
| ८ | आचारमयूखः—**Achara Mayukha** नीलकण्ठभट्टकृतः । प्रातःस्मरणादिशयनान्तस्याह्निकक्रियाकलापस्य निरूपणपरो ग्रन्थः मूल्यम् रू. ... ... | ०–८–० | ०–१–० |
| ९ | मनुस्मृतिः—**Manu Smriti** कुल्लूकभट्टकृतटीकया, ग्रन्थान्तरेषु मनुनाम्नोल्लिखितैरिदानींतनमनुस्मृतिपुस्तकेष्वनुपलभ्यमानैः श्लोकैः, पद्यानां वर्णानुक्रमकोशेन, विषयानुक्रमेण च सहिता । सूक्ष्मेक्षिकया संशोधिता च । मू. रू. ... ... | १–८–० | ०–३–० |
| १० | विदुरनीतिः—**Vidura-Niti with a commentary** संस्कृतटीकोपेता नीतिशास्त्राभ्यासिनां विद्यार्थिनामतीवोपयोगिनी । मू. रू. ... ... | ०–४–० | ०–१–० |
| ११ | वेदान्तरहस्यम्—**Vedanta Rahasya** वेदान्तवागीशभट्टाचार्यविरचितम् । अत्राद्वैतमतसिद्धान्तो निरूपितः । उपपत्तिश्च प्रदर्शिता । भाषाऽतिसरला प्रौढा च । मूल्यम् रू.... ... ... ... ... ... ... | ०–१–० | ०–०–६ |
| १२ | विशिष्टाद्वैतमतविजयवादः—**Vishishtadvaita-Mata-Vijaya-Vada** नरहरिपण्डितकृतः । अत्र विशिष्टाद्वैतमते परेषामाक्षेपान्निराकृत्य विशिष्टाद्वैत एवोपनिषदां तात्पर्यं व्यवस्थापितम् । मू. रू. ... ... ... | ०–१–० | ०–६–० |
| १३ | रघुवंशमहाकाव्यम्—**Raghuvamsha With Mallinatha's commentary** श्रीकालिदासकृतम् मल्लिनाथकृतसजीविन्याख्यटीकासहितम् । मू. रू. ... ... ... ... ... ... ... | ०–१०–० | ०–३–० |
| १४ | रघुवंशमहाकाव्यं—Only First Five Sargas of the Same with Commentary मल्लिनाथकृतटीकोपेतम् । सर्गाः १–५ मूल्यम् रू. ... ... | ०–४–० | ०–१–० |
| १५ | कुमारसंभवं महाकाव्यम्—**Kumar Sambhav with 3 known commentaries** कविवरश्रीकालिदासविरचितमिदं सप्तमसर्गपर्यन्तं मल्लिनाथकृतसंजीविन्या चारित्र्यवर्धनकृतशिशुहितैषिण्या च संवलितं, तत आसमाप्ति सीतारामकृतसंजीविन्याऽलंकृतं सुललितैरायसाक्षरैर्मुद्रितमतीव दर्शनीयमस्ति । मू. रू. ... ... ... ... ... ... ... | १–४–० | ०–२–० |
| १६ | कारिकावली सिद्धान्तमुक्तावलीसहिता—**Karikavalee with SiddhantaMuktavali and other notes** न्यायवैशेषिकदर्शनयोर्व्युत्पित्सूनां कृते प्रणीतेषु प्रकरणग्रन्थेषु सिद्धान्तमुक्तावलीसमुद्भासिता कारिकावली मूर्धाभिषिक्तेत्यत्र न विदुषा वैमत्यं किंतु तत्र दीधितिकृदुपसृतया विवेकसरण्या | | |

मूल्यं मार्गव्ययः

संक्षेपतः सूक्ष्मतमानामर्थानामुपनिबद्धतया प्रायः खिद्यन्ति नव्याश्छात्राः, इति तेषामुपकारायास्माभिः प्रायः सर्वेषु विषमस्थलेष्वतिविस्तृतां सरलां सुबोधां च टिप्पनीं पण्डित—जीवरामशास्त्रिभिः कारयित्वा तया सहेयं दृढतरेषु सुचिक्कणेषु पत्रेषु स्थूलाक्षरैर्मुद्रिता। सार्धशताभ्यधिकपत्रयुतामपीमां सर्वसौलभ्यायाल्पीयसा मूल्येन वितरामः। मू. रू. ... ०—७—० ०—१—०

१७ वैशेषिकदर्शनम्—**Vaisheshika Darshana with several commentaries** श्रीशंकरमिश्रकृत—**वैशेषिकसूत्रोपस्कार**—जयनारायणतर्कपञ्चाननभट्टाचार्यप्रणीत—**विवृति**—चन्द्रकान्तभट्टाचार्यप्रणीत—भाष्यसहितम्। मू. रू. ... ... ... ... ... ... ... २—०—० ०—३—०

१८ वादार्थसंग्रहः (प्रथमो भागः)—**Vadartha Samgraha** First Part अत्र शेषकृष्णकृतं स्फोटतत्त्वनिरूपणं, श्रीकृष्णमौनिकृता स्फोटचन्द्रिका, गोडबोलेकृतः प्रातिपदिकसंज्ञावादः, वाक्यवादः, हरियशोमिश्रकृता वाक्यदीपिकेति पञ्च ग्रन्थाः सकलिताः। पण्डितानां प्रौढच्छात्राणां च बहुतरमुपकारकः। मू. रू. ... ०—६—० ०—०—६

१९ वादार्थसंग्रहः (द्वितीयो भागः)—Second Part अत्र भवानन्दसिद्धान्तवागीशकृतं षट्कारकविवेचनम्, जयरामभट्टाचार्यकृतः कारकवादः समासवादश्च, एवकारवादश्चेति चत्वारो ग्रन्थाः सन्ति। मू. रू. ... ... ... ... ... ०—६—० ०—०—६

२० वादार्थसंग्रहः (तृतीयो भागः)—Third Part अत्र कृष्णाचार्यकृतः '**वादसुधाकरः**' मौनिश्रीकृष्णकृतः '**लघुविभक्त्यर्थनिर्णयः**' रामकिशोरकृता—'**शाब्दबोधप्रकाशिका**' चेति शाब्दिकानां त्रयो ग्रन्थाः सन्ति। मू. रू.... ... ... ०—८—० ०—१—०

२१ न्यायबिन्दुः—**Nyayabindu** पूर्वमीमांसायाः अधिकरणार्थसंग्राहको ग्रन्थः। तत्सदुपाख्यभट्टवैद्यनाथकृतः। टिप्पनीसहितः। मू. रू. ... ... ... १—४—० ०—२—०

२२ महाभागवतम्—**Maha Bhagavata** देवीपुराणम्। अस्मिन् भगवत्या ब्रह्मस्वरूपिण्या महाकाल्या दाक्षायणी—गङ्गा—पार्वती—श्रीकृष्णेत्यवतारचतुष्टयचरितानि, महाकाल्या मूलस्थानं च प्रधानतयोपवर्णितानि। प्रसङ्गाद्रामचरितं स्कन्दचरितं पाण्डवचरितं गणेशोत्पत्तिर्गङ्गावतरणं भगवतीगीता ललितासहस्रनाम शिवसहस्रनामादयश्च विषया निरूपिताः। सार्धपञ्चसाहस्री संहितेयम्। मू. रू. ... ... ... २—०—० ०—३—०

२३ तैत्तिरीयोपनिषत्—**Taittiriya-Upanishat** श्रीमच्छंकरभगवत्पादकृतभाष्येणानन्दगिरिकृतटीकायुतेन तैत्तिरीयविद्याप्रकाशेन च सहिता। मू. रू. ... १—०—० ०—२—०

२४ दशरूपकम्—**Dasha Rupaka** नाट्यशास्त्रं धनंजयविरचितमवलोकसहितं पञ्चनदीयपण्डितसुदर्शनाचार्यप्रणीतप्रभाख्यव्याख्यासहितं च। मू. रू. ... ... १—०—० ०—२—०

२५ ब्रह्मसूत्रवृत्तिः—**Brahma Sutra Vritti** अद्वैतमञ्जरी। भगवत्पाद(आद्यशंकराचार्य) शिष्यकृता। मू. रू. ... ... ... ... ०—१२—० ०—२—०

२६ चन्द्रालोकः—**Chandraloka with a commentary** श्रीपीयूषवर्षजयदेवकविविरचितोऽलंकारग्रन्थः। पायगुण्डोपाह्ववैद्यनाथ(बाळंभट्ट)विरचितरमाख्यव्याख्यासहित.। मू. रू. ... ... ... ... ... ०—८—० ०—१—०

२७ महाभारतविराटपर्व—**Mahabharata-Virata Parva with eight commentaries** नीलकण्ठकृत**भारतभावदीप**—अर्जुनमिश्रकृत**दीपिका**—चतुर्भुजमिश्रकृत**प्रकाश**—सर्वज्ञनारायणकृत**भारतार्थप्रकाश**—विमलबोधकृत**दुर्घटार्थप्रकाशिनी**—रामकृष्णकृत**विरोधार्थभञ्जनी**—**विषमपदविवरण**—वादिराजतीर्थविरचित**लक्षाभरण**ेत्यष्टटीकोपेतं विपुलपाठभेदसहितं च। मू. रू. ... २—८—० ०—६—०

२८ चम्पूभारतम्—**Champubharata** श्रीखण्डेइत्युपाह्वनारायणसूरिविरचितटीकासहितम्। मू. रू. ... ... ... ... ... ... २—०—० ०—३—०

| | | मूल्यं | मार्गव्ययः |
|---|---|---|---|
| २९ | **उपदेशसाहस्री–Updeshasahastri** श्रीमच्छंकराचार्यकृता रामतीर्थकृत-पदयोजनिकाटीकासहिता। विषयानुक्रमणिकया, श्लोकानुक्रमणिकया, नैष्कर्म्यसिद्धिधृतश्लोकप्रदर्शनेन, अत्रोदाहृतग्रन्थान्तरस्थवाक्यानुक्रमणिकया, शुद्धिवृद्धिभ्यां च सहिता। मू. रु. | १–८–० | ०–२–० |
| ३० | **चन्द्रकान्त—Chandrakanta** (Hindi) ( वेदान्त ज्ञानका मुखग्रन्थ ) प्रथम भाग. यह वह ग्रन्थ है कि, जो नितान्त निर्भ्रान्त वेदान्त सिद्धान्तका एकात प्रतिपादक **"चन्द्रकान्त"** मणि वम्बई प्रान्तके प्रसिद्ध साप्ताहिक **'गुजराती'** पत्रके मुख्य—आद्य सपादक गुजराती भाषाके सुविख्यात लेखक, अनेक ग्रन्थोंके निर्माता देशभक्तधुरीण, सारासारविवेकप्रवीण, वैश्यकुलभूषण श्रीमान् शेठ **इच्छाराम सूर्यराम** देसाईके शुद्ध हृदयमें देदीप्यमान प्रबोधरत्नभाण्डागारका चमचमाता हुआ एक अमूल्य रत्न है. किं. रु. ... ... ... ... ... | २–८–० | ०–४–० |
| ३१ | **युक्तिप्रकाश–Yukti Prakasha** (Hindi) विचारसागरका कर्ता साधु श्रीनिश्चलदासजीने किया हुआ यह ग्रन्थ हिन्दुस्तानी भाषामें है. इसमें वेदान्तके ३९ सिद्धांन्त वहुत अच्छीतरहसे सिद्ध किये गये है. निश्चलदासकी वाणी सब जिज्ञासुलोकोंको ज्ञात होनेसे विशेष निरूपणकी कुछ जरूरत है नहीं. और जिज्ञासुलोकोंको ये ग्रन्थ बहुत उपयुक्त है. पक्की जिल्द और अच्छा कागज. ... ... ... | १–०–० | ०–२–० |

**नोंध**—व्ही. पी. खरच जूदा पडेगा.

**'गुजराती'** मुद्रणालयाधिपतिः।

कोट सर्कल सासून बिल्डिंग–**मुंबई**